# ऋक्संहिता

पदपाठसहिता

श्रीस्कन्दस्वामिविरचितं भाष्यम् - वेङ्कटमाधवाचार्यविरचितं भाष्यम् -
मुद्गलविरचितं भाष्यम् - श्रीमत्सायणाचार्यविरचितं भाष्यम् - कपालिशास्त्रिविरचितं
ऋक्संहिताव्याख्यानं सिद्धाञ्जनम् - श्रीयादेवविरचिता नीतिमञ्जरी इत्येताभिः व्याख्याभिः सहिता

## पञ्चमं सम्पुटम्

### प्रथमाष्टके षष्ठोऽध्यायः सप्तमोऽध्यायश्च

(एकाशीतितः द्वादशोत्तरशत पर्यन्तानि सूक्तानि)


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्गट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

डा. वादिराजाचार्य एल्.एस्.

उपनिर्देशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

# ऋक्संहिता

पदपाठसहिता

श्रीस्कन्दस्वामिविरचितं भाष्यम् - वेङ्कटमाधवाचार्यविरचितं भाष्यम् - मुद्गलविरचितं भाष्यम्
- श्रीमत्सायणाचार्यविरचितं भाष्यम् - कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम्
- श्रीचादेवविरचिता नीतिमञ्जरी इत्येताभिः व्याख्याभिः सहिता

## पञ्चमं सम्पुटम्

### षष्ठोऽध्यायः सप्तमोऽध्यायश्च

(एकाशीतितः द्वादशोत्तरशत पर्यन्तानि सूक्तानि)


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्गट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

डा. वादिराजाचार्य एल्.एस्.

उपनिर्देशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



*This Volume is published with the grant from the Govt. of Karnataka*





प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

**Ṛk Samhitā** Vol.5 - Śrī Skandhaswāmy, Śrī Venkatamādhava, Śrī Mudgala, Śrī Sāyaṇāchārya, Siddhāñjana by Śrī Kapāliśāstry, Nītimañjari by Śrīdyādeva

*Chief Editor*
**Dr. Satyadhyanacharya Katti,**

*Editor*
**Dr. Vadirajacharya L.S.**

*Published by :*
**Vidyadhisha Post-Graduate Sanskrit Research Centre,**
No.11, Uttaradi Matha Road, Basavanagudi, Bangalore-04.
Phone: 080-79689974. email : vidyadheeshashodha@gmail.com

No. of Pages : xvi+620

No. of Copies : 500

Year of Publication : 2022

Price : Rs.400



Printed at : **Vāgartha,** Hanumanthnagar, Bangalore-560 019.

।। श्रीदिग्विजयरामो विजयते ।।

श्रीमत्परमहंसपारिव्राजकाचार्यत्वाद्यनेकगुणगणालङ्कृत
श्रीमन्मूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासादिपादपद्माराधक
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्यजगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान
श्रीमदुत्तरादिमठाधीश
श्री श्री १००८ श्रीसत्याभिज्ञतीर्थकरकमलसञ्जात श्री श्री १००८ श्रीसत्यप्रमोदतीर्थवरकुमार
श्री श्री १००८ श्रीसत्यात्मतीर्थश्रीपादानां

## अनुग्रहसन्देशः

"अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः । तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते" इत्युद्धोषयत्याम्नायः स्वप्रवृत्तिप्रयोजनम् । दुःखं जिहासमानानां सुखं प्रेप्समानानां साधूनाम् अधिकारिणां दुःखहानसुखप्राप्तिसाधनानि समुपदेष्टुं प्रववृतिरे निगमा इति निश्चप्रचम् ।

"यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण", "बन्धको भवपाशेन भवपाशाच्च मोचकः", "त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो" इत्यादिप्रमाणपर्यालोचनया प्रसन्नः परमेश्वरो नारायण एव संसारान्मोचकः इत्यपि सुद्रढिम्ना समसैत्सीत् ।

सत्येवं, यथा प्रतिपादने भगवान्नारायणः प्रसन्नः स्यात्तथैव श्रुतयः प्रतिपादयन्तीत्येवाङ्गीक्रियेत । "न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्" इति भाव[1]भावबोधकप्रमाणचरणशरणीकरणेन तु गुणभृद्गु[2]णोत्कर्ष एव सकलनिगममहातात्पर्यगोचर इत्यत्र नास्ति संशीतिगन्धः ।

यथाहुष्टीकाकृत्पादा जयतीर्थश्रीमच्चरणाः – सर्वाण्यपि हि वेदवाक्यान्यसङ्ख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति । किन्तु कानिचित् सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसौन्दर्यौदार्यवीर्यादिगुणविशिष्टतया, कानिचिदपहतपाप्मात्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभावविशिष्टतया, कानिचिदतिगहनताज्ञापनाय वाङ्मनसाद्यगोचरत्वाद्याकारेण, कानिचित् सर्वपरिहारेण तस्यैवोपादानायाद्वितीयत्वेन, कानिचित् सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्ततप्रतिपत्त्यर्थं सर्वात्मकत्वेनेत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति ।

---

१. भावः - विष्णुः । २. गुणभृद् - विष्णुः ।

ततो व्याकुलबुद्धयो गुरुसम्प्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं छिन्दन्ती''त्यादि ।

तथा अन्यत्रापि– ''यो हि सात्त्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः इति'' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् । अतः सकलवेदाध्ययनप्रक्रमप्रदर्शनाय ऋग्वेदसंहिताया प्रथमाष्टकस्य षष्ठसप्तमाध्यायौ प्रकाश्यमानौ स्तः । समग्रापि संहिता सविमर्शतौलनिकाध्ययनसौकर्याय स्कन्दस्वामि-वेङ्कटमाधव-मुद्गल-सायणभाष्य-सिद्धाञ्जन-नीतिमञ्जर्यादियुता प्रकाश्यते । तदिदं प्रकाशनं सुप्रसिद्धनाम्ना विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण क्रियत इति महान् सन्तोषपारावारः । विद्याधीशस्नातकोत्तरशोधकेन्द्रस्य धर्मदर्शिनां मार्गदर्शकानां डा. पं. कट्टि सत्यध्यानाचार्याणां मार्गदर्शने उपनिर्देशकाः डा. पं. एल्.एस्. वादिराजाचार्याः प्रथमाष्टकस्य षष्ठसप्तम अध्याययोः संशोधने सम्पादने च कृतभूरिपरिश्रमाः । वैदिकग्रन्थसंशोधनं नाल्पस्य तपसः फलम् । सम्यग्व्याख्यानयोजनां विधाय मुद्राराक्षसान् परिहृत्य यथा पिपठिषवः पठेयुः सपटिम, तथा समपाद्येतैरिति महानानन्दथुः । अस्याः संस्थायाः स्थापकान् दि. प्रो. कृष्णाचार्यान् पाण्डुरङ्ग्युपनामधेयानपि साभिमानं संस्मरामः । तथा अन्येऽपि अस्याः संस्थायाः विश्वस्ताः धर्मदर्शिनः अस्य ग्रन्थस्य प्रकाशने महतीं सेवां व्यधुः । सर्वानेतान् अस्मदुपास्याः श्रीमूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासवंशरामप्रसन्नविठ्ठलाः ज्ञानभक्तिवैराग्यादिदानेन सच्छास्त्रपाठप्रवचनसंशोधनसम्पादनादिवाङ्मयसेवासौभाग्यदानेन च समनुगृह्णन्त्विति सम्प्रार्थयामहे ।

श्रीमत्सत्यात्मतीर्थ (signature)

## प्राक्को वाचः

"वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।" इति वचनानुसारेण वेदानां सर्वेषां अन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यम् । एकवेदपक्षे पितृपितामहादिपरम्पराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य "स्वाध्यायोऽध्येतव्यः" इति श्रुतिरस्मान् श्रावयत्यध्ययनाय स्वशब्दाम्नानेन । तच्चाध्ययनं न काम्यं किन्तु नित्यम् । अन्यथा पातित्यं स्यात् । "वेदस्याध्ययनं नित्यमनध्ययने पातात्" इति हि पुरुषार्थानुशासने सूत्रम् ।

यद्यप्ययमुपनीतो वटुः काव्यनाटकादिकं शृणोति तथापि निरर्थकमेव तच्छ्रवणम् । तेन सुकृतमार्गज्ञानाभावात् । अत एव मनुरप्यनुमन्यते–

**योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।** इति ।

अत एव स्वाध्यायोऽवश्यमध्येतव्यः । परं भारतभणितिरेवं श्रूयते–

**चतुर्वेद्यपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति ।**
**वेदभारभराक्रान्तः सवै ब्राह्मणगार्दभः ।।** इति ।

केवलं वेदाध्ययनेन यो भारं बिभर्ति स भारवाही गार्दभः एव । वेदार्थभूतस्य ब्रह्मणोऽविज्ञानेनेति निन्दैव कृता महाभारते । अतो वेदार्थज्ञानमावश्यकम् । तच्चार्थज्ञानं व्याख्यानसापेक्षम् । वेदार्थस्तु विना सर्वज्ञोपदेशं देवानामपि दुरधिगम इति परमदयालुभिः श्रीमदानन्दतीर्थभगवत्पादैः तज्ज्ञापनाय ऋग्भाष्यं निरमायि । तच्च श्रीहरेरतितुष्टिकरं परममाङ्गलिकमिति तन्मङ्गलपद्य एव व्यक्तम् । ऋक्संहितार्थकथनमुखेन तत्र सर्वोऽपि वेदार्थो निर्णीयते । तदिदमुक्तं श्रीमच्चन्द्रिकाचार्यैः–

**ऋग्भाष्यं च चकारासौ सर्ववेदार्थनिर्णयम् ।**

शब्दसंक्षेपेऽपि बह्वर्थपरस्यास्य भाष्यस्य टीका श्रीमज्जतीर्थश्रीचरणैर्विनिर्मिता । तस्या अपि दुरधिगमत्वात् श्रीराघवेन्द्रश्रीचरणैः मन्त्रार्थमञ्जरी व्यरचि । सायणपूर्वा नैके व्याचक्रिरे ऋग्वेदम् । सायणाचार्योऽपि व्याचकार ऋक्संहिताम् । परं सम्पूर्णं व्याख्यानं सायणाचार्यवेङ्कटमाधवाचार्ययोरेव विराजते । परमेता व्याख्याः विशकलिततया नैकाः संस्थाः मुद्रापयामासुः । इदानीं अध्ययन-

विमर्शनसौकर्याय विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण ऋग्भाष्यं, जयतीर्थीया टीका मन्त्रार्थमञ्जरी, स्कन्दस्वामिभाष्यं, वेङ्कटमाधवीयं भाष्यं, मुद्गलभाष्यं, सायणभाष्यं, कपालिशास्त्रिभाष्यं, नीतिमञ्जरीति नव व्याख्याः एकत्रैव क्रोडीकृत्य मुद्राप्यन्ते इत्येतन्महन्मोदावहमस्माकम् ।

तदिदं भाष्यं मुद्रापयितुं अनुज्ञाय सन्देशं वितीर्य महदनुग्रहं चक्रुर्मान्याः धन्याः संस्थायाः प्रधानपोषकाः श्रीमदुत्तरादिमठाधीशाः **श्रीश्रीमत्सत्यात्मतीर्थश्रीचरणाः** । तेभ्यो नतिशत-ततीरर्पयामि ।

**प्रो. के.टि. पाण्डुरङ्गि** महोदयानां आशयः आसीत् यद्वेदव्याख्यानं शोधकेन्द्रेण प्रकाशनीयमिति । तदिदं वेदव्याख्यानं शोधकेन्द्रेण कृतमस्ति । तेषामाशयः पूरितः तेभ्यः प्रणमाञ्जलिं समर्पयामि ।

मुद्रणमिदं यथाशोभं पठनानुकूलं समपीपदत् कोविदः अस्याः संस्थाया उपनिदेशकः डा. एल्.एस्. वादिराजाचार्यः । अयञ्च विद्वान् नैकग्रन्थान् समपादयत् । ते च मुद्रापिता विद्याधीशशोधकेन्द्रेण द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानेन च । तमेनं बुधवरमभिनन्दामः । इतोऽपि नैके ग्रन्थाः अनेन विदुषा सम्पाद्यन्तामित्याशास्महे ।

अस्या ऋक्संहिताया मुद्रापणे नैकसंस्थानां ग्रन्था उपायुज्यन्त । ताभ्यः संस्थाभ्यः, संस्थाधिकारिभ्यश्च हार्दान्यभिनन्दनानि संसूचयामः ।

तामेतां संहितां अल्पीयसि काले व्यमुद्रापयन् वागर्थमुद्रणालयाधिकारिणः । तान् सर्वान् अभिनन्दामः ।

सैषा संहिता अध्येतृणां विदुषां विद्यार्थिनाञ्चोपकृतये भूयादित्याशास्महे ।

डा. कट्टि सत्यध्यानाचार्यः
*म्यानेजिङ्गट्रस्टी*
विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः
बेङ्गलूरु-४.

# निदेशकवचांसि

## वेदः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । भारते धर्मव्यवस्था वेदायत्तैव । वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया । श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी । न केवलं धर्ममूलतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि । प्राचीनानि धर्मसमाजव्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते ।

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च । मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव । स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः । ब्राह्मणग्रन्थोऽपि त्रिधा विभक्तो भवति– ब्राह्मणम्, आरण्यकम्, उपनिषदश्च । यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः । अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि । उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते । ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते । न केवलं सन्यासिनां किन्तु सर्वेषां साधकानामपि उपयोगी ।

### वेदशब्दार्थः

वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः, इति बह्वृचप्रातिशाख्यम् । सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम्–

> **'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
> **एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।'**

आम्नायः, आगमः, श्रुतिः वेदः, इति सर्वे शब्दाः पर्यायाः ।

यथोक्तं 'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः । आम्नायोऽनन्यथापाठात्' इति । नित्यं विद्यमानत्वात् नाम नित्यत्वात् वेदाः इति कथ्यन्ते । अनादिकालादारभ्य सर्वैः पुरुषैः श्रुता एव । न तु कृताः । अतः श्रुतय इत्यच्यन्ते । एकयैव रीत्या निरन्तरं आम्नातत्वात् पठितत्वात् आम्नाय

इत्युच्यन्ते । ''पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः'' इत्युक्तेः परतत्वस्य ज्ञानमापाद्य निरन्तरं पालनात् सुखसाधनत्वाच्च वेदाः पशवः इतीर्यन्ते ।

सोऽयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते । या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते. तदुक्तं जैमिनिना–

'तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुः शब्दः' इति । द्वितीयाध्याये प्रथमपादे ३२–३३–३४ सूत्राणि ।

यास्कस्तु– 'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधाः । ऋक्-शब्दोऽत्र मन्त्रवचनः । यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति ।

अतः यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम् ।

यत्तु 'ऋग्यजुः सामाख्यास्त्रय एव वेदाः पूर्वमासन्'

तद्यथा–

**'अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात् ।' छा.ब्रा.६.१७**

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।'**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ।। मनु.१.१३**

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः' इति तदयुक्तम्, ऋग्वेदेऽपि अथर्ववेदनामोल्लेखदर्शनात् । भगवता पतञ्जलिनाऽपि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकः सामवेद इति त्रित्वमेवोक्तम्, एवं परत्रापि । जैमिनिस्तु मन्त्राणां त्रिप्रकारकतामेव लक्षितवान्, न वेदसङ्ख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः । अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम् ।

## ऋग्वेदः

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः । स ऋग्वेदः सूक्तमण्डलभेदेन द्विधा विभक्तः । तत्र सूक्तं चतुर्विधम्– ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताक-मन्त्राणां समूहो देवतासूक्तम् । समानच्छन्दसां मन्त्राणां समूहो नाम च्छन्दःसूक्तम् । यावदर्थ-समाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते ।

ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा । वालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः इति प्रथमो भेदः । अष्टौ अष्टकानि, चतुष्षष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि इति द्वितीयो भेदः । सर्वेऽपि मन्त्राः चतुर्दशसु छन्दस्सु विभक्ता बोध्याः । ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समदविश्वामित्र वामदेव अत्रिभरद्वाजवसिष्ठादयः सन्ति ।

ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम् । तत्र हि सोमविषयक-मन्त्राणां सङ्कलनं कृतम् । पवमानः–सोमः । पूर्वोक्ताः सप्तापि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तममण्डलपर्यन्तगताभिः ऋग्भिः सम्बद्धाः, दशममण्डले मन्त्रा नानर्षिसम्बद्धाः । दशमे मण्डले न केवलं देवतास्तुतय एव, अन्यप्रकारका अपि मन्त्रा दृश्यन्ते ।

वेदार्थहीनस्य भारवाहत्वमुक्तं वेदाङ्गे निरुक्ते–

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ।।**

स्वयं ऋग्वेदेऽपि श्रूयते अर्थज्ञानस्य प्राशस्त्यम् ।

**उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः ।। १०.७१.४ ।।**

अविज्ञातवागर्थ एकः मनसा पर्यालोचयन्नपि ऋग्यजुस्सामादिलक्षणां वाचं न ददर्श । उत अविज्ञातार्थ एकः सुमुखेनोच्चार्यमाणं वाचं शृण्वन्नपि न शृणोत्येव । कुतः? श्रवणफलं अर्थमानमेव । तन्नास्ति अतो न शृणोति ।

अप्येकस्मै विज्ञातवागर्थाय सबाह्याभ्यन्तरं तन्वं स्वशरीरं प्रकाशयति । कथम्? यथा भार्या सम्भोगं, अपत्यं भर्तारं च कामयमाना शोभनवासाः ऋतुकाले चतुर्थेऽहनि निर्णिक्तवस्त्रा सती सम्भोगकाले भर्त्रे स्वशरीरं सबाह्याभ्यन्तरं दर्शयति एवम् ।

वाक्सख्ये वाचा क्रियमाणे सखिकर्मणि विद्वत्सखिसंकथनलक्षणे स्थिरपीतं स्थिरज्ञानं परिनिष्ठितविद्यं प्रशंसन्ति विद्वांसः । सारभूतेषु निरूपणीयेष्वर्थेषु नैनमर्थज्ञं बहिष्कुर्वन्ति ।

यथा वन्ध्या पीना गौः किमियं द्रोणदुघेति मायामुत्पादयन्ती चरति एवं वेदपाठं ब्रुवाणश्चरतीत्यपि वेदो निगदति ।

वेदमधीत्य वेदार्थो ज्ञातव्यः । श्रौतस्मार्तकर्म कर्तव्यं फलत्यागपूर्वकम् । कृतेन स्वशाखोक्तकर्मणा चित्तशुद्धिर्भविष्यति । तत्कारणात् वेदार्थज्ञानमवश्यं साधयितव्यम् ।

**वेदैश्च सर्वैरहमेव वेद्यः**

वेदार्थस्तु भगवानेव । भगवानेव परममुख्यवृत्या वेदप्रतिपाद्यः । मुख्यवृत्या यज्ञादिरपि प्रतिपाद्यो भवति । तदेतत् आथर्वणोपनिषदि उक्तम्–

''तस्मै स होवाच द्वे विद्ये वेदितव्ये परा चैवापरा च ।

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते'' इति ।

वेदानां भगवतो बोधकत्वे परविद्यात्वम् । अन्यदा अपरविद्यात्वम् ।

''ता एव परमा विद्या यदा विष्णोस्तु वाचकाः'' ।।

श्रुतिस्मृतीतिहासपुराणेषु दरीदृश्यते भगवान् सर्ववेदप्रतिपाद्य इति ।

१) काठके श्रूयते– ''सर्वे वेदा यत्पदमामनन्ति'' इति ।

२) ऐतरेये च– ''ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एवे''ति ।

गीतायां– “वेदैश्च सर्वैरहमेव वेद्यः” श्रीकृष्णेनाप्युक्तम् ।

“वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते” ।

**सर्वे शब्दा विष्णुबोधकाः**

नामवाचिनः अग्न्यादिशब्दा अपि हरिमेव प्रतिपादयन्ति ।

यो देवानां नामधा एक एव ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।

सर्वनामा सर्वकर्मा सर्वलिङ्गः ।

सर्वच्छन्दोभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।

बृंहणाद् ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते

आसमन्तात् काशते यदाकाशो मुख्यतो हरिः

बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ।
आप आपालनाच्चैव पृथिवी प्रथितो यतः ।।
एवं नानाविधैः शब्दैः एक एव त्रिविक्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ।।

सर्वे वेदाः परममुख्यवृत्या विष्णुं बोधयन्ति । तच्चेत्थम्–

ओङ्कारो ब्रह्मवाचकः । ओमिति ब्रह्मेति श्रुतेः । ओङ्कारस्यार्थः गुणपूर्णत्वम् । ब्रह्मशब्दस्यापि स एवार्थः । अतः ओंकारो गुणपूर्णस्य ब्रह्मणो वाचकः ।

ओंकारार्थः एव व्याहृतयः । तिस्रो व्याहृतयः अ, उ, म, इति वर्णत्रयस्य व्याख्यान-रूपाः । व्याहृतयश्चेमाः भूः भुवः सुवः । गुणपूर्णाभिधायकाः । अतो भगवद्वाचिकाः । प्रणवार्था व्याहृतयः । व्याहृतेर्व्याख्यानं त्रिपदा गायत्री । त्रिपदाया गायत्रेर्व्याख्यानं वर्गत्रयात्मकं पुरुषसूक्तम् । वर्गत्रयात्मकस्य पुरुषसूक्तस्य व्याख्यानं त्रयो वेदाः । सर्वो वेदः ओङ्कारार्थरूपः । ओङ्कारार्थश्च ब्रह्म, विष्णुः । ओङ्कारेणै सर्वा वाक् सन्तृण्णा । वेदाः विष्णुपराः विष्णपरोङ्कार-

व्याख्यानत्वात् इति सर्वो वेदः विष्णुपर इति बोधयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः स्वीये ऋग्भाष्ये ।

**अङ्गीचकार सायणाचार्यो न व्याचकार**

सायणोऽप्याचार्यो मनुते सर्वो वेदः परमेश्वरस्य भगवतो हरेः प्रतिपादक इति । तथा हि तस्य वाक्यानि आदावेवोपाद्घाते–

अत्र केचिदाहुः ऋग्वेदस्यैव प्राथम्येन सर्वत्राम्नानात्, अभ्यर्हितं पूर्वं इति न्यायेनाभ्यर्हिततत्वात् तद्व्याख्यानमादौ युक्तम् । प्राथम्यञ्च पुरुषसूक्ते स्पष्टम्–

तस्माद्यज्ञात् सर्वहुतः ऋचःसामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।। इति ।

तस्मात् ''सहस्रशीर्षा पुरुषः'' इत्युक्तात् परमेश्वरात् यज्ञात् यजनीयात् पूजनीयात् सर्वहुतः सर्वैः हूयमानात् । यद्यपि इन्द्रादयः तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेण अवस्थानादविरोधः । तथा च मन्त्रवर्णः–

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।। ऋ.१.१६४.४६

वाजसनेयिनश्चामनन्ति–

तत्तदिदमाहुरमुं यजामुं यजेत्येकैकं देवम् ।
एकस्यैव सा विसृष्टिः एष उ ह्येव सर्वे देवाः ।।
तस्मात् सर्वैरपि परमेश्वर एव हूयते ।

इत्येव सर्ववेदप्रतिपाद्यो भगवान्नारायण इत्याह परं न व्याचख्यौ तत्परतया । केवलं कर्मपरतया रचयामास व्याख्याम् ।

**ऋषिच्छन्दोदेवताः–**

अविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण यजनयाजनादिकं अध्ययनाध्यापनञ्च अनर्थनिदानम् । अतो ऋष्यादिज्ञानमावश्यकम् । तच्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः । सर्वविद्यानां

मुनिः भगवान् पुरुषोत्तमः । अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवेतानि निःश्वसितानीति श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह । निश्वसितमिति हि निश्वसितमिव अनायासेन आदिकाले तेनोच्चरितमिति । हयग्रीवादिमा विद्या निश्वासिताः उपदिष्टाः स एव प्रथमदृष्टा ।

परमेश्वरेण युगपत्समुदीरितं अखिलं विद्याजातं सकृन्निगदमात्रेण ब्रह्मा चतुर्मुखो जग्राह । रुद्रशेषविपाः ब्रह्मणो जगृहुः । तेभ्यो शक्राद्याः । तेभ्यः दक्षाद्याः । तेभ्यः सनकादयः मनवश्च । सनकादयश्च जगति उपदिदिशुः ।

१. हयग्रीवरूपी परमात्मा श्रीः
२. चतुर्मुखब्रह्मा वायुः ब्रह्माणी भारती च
३. रुद्रशेषविपाः तेषां पत्न्यः
४. शक्राद्याः एतेषां पत्न्यः
५. दक्षाद्याः
६. सनकाद्याः
७. मनवः । इतीयमृषिपरम्परा ।

**हयग्रीवादिमा विद्या श्वसितत्वेन निःसृताः ।**
**ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।**
**दक्षाद्या सनकाद्याश्च शक्राद्या मनवस्तथा ।**
**जगृहुस्ते च विश्वस्मिन् चक्रुर्व्याप्तास्ततोऽखिलाः ।**
**सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम्**
**अन्तर्गतस्य व्याप्तस्य प्रसादान्नित्यशक्तितः ।**

वेदाः परममुख्यवृत्त्या भगवद्बोधकाः मुख्यवृत्त्या अग्न्यादिबोधकाः । तदिदं मनसि निधाय श्रीमदानन्दतीर्थभगवत्पादाचार्याः अग्न्यदिदेवतापरत्वेन, तदन्तर्गतविष्णुपरत्वेन, अध्यात्मपरत्वेनार्थं प्रदर्शयामासुः । पुराणञ्च इदं रीतित्रयं प्रदर्शयति ।

**त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**विष्णोः सहस्रनामाऽपि निरन्तरशतार्थकम् ।।**

देवताश्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः सर्वस्यापि वेदस्य ।

नारायणः साक्षात् सर्ववेदप्रतिपाद्यः ।

भगवति प्रसिद्धाः पुरुषसूक्तादिविद्या वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता ।

श्रीदेव्यां प्रसिद्धाः अम्भृणीसूक्ताद्या वर्जयित्वा अन्यासां ब्रह्मैव देवता ।

पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वा अन्यासां विद्यानां तारतम्यक्रमेणैव शक्रान्ता देवता मताः ।

**देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ।।**

एतत्सर्वं विव्रियते श्रीमज्जयतीर्थश्रीचरणैः भाष्यटीकायाम् ।

छन्दांसि छन्दोऽभिमानिदेवताश्च प्रदर्श्यन्ते भाष्यकारैः ।

१) गायत्री, बृहती– श्रीः, ब्रह्माणी, भारती गरुडः, स्वाहा, तारा,
२) अनुष्टुप्– ब्रह्माणी, रोहिणी,
३) त्रिष्टुप्– इन्द्राणी
४) जगती– वारुणी
५) पङ्क्तिः– शची
६) उष्णिक्– सौरी ।
७) जगती– सर्वदेवस्त्रियः
८) विराट्– मित्रावरुणभार्ये

नात्र देवतानां छन्दसामैक्यमुच्यते किन्तु तदभिमानितया तत्तन्नामवत्त्वम् । तच्च बह्वीनां देवतानामेकच्छन्दोऽभिमानित्वेन एकनामवत्त्वं न विरुध्यते । इत्येवमादिरूपेण बहवो विषया निरूपिताः स्वीये ऋग्भाष्ये ।

तदिदं श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं प्रथममण्डले चत्वरिंशत्सूक्त-पर्यन्तमस्ति ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं, श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्य-टीका, श्रीराघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरीटीका, श्रीस्कन्दस्वामिविरचितं भाष्यं, वेङ्कट-माधवाचार्यभाष्यं, मुद्गलभाष्यं, सायणभाष्यं द्यादेवविरचिता नीतिमञ्जरी, कपालिशास्त्रिविरचितं सिद्धाञ्जनं इति उद्गीथ इति च नैका ऋग्वेदस्य व्याख्याः सन्ति । स्कन्दस्वामिभाष्यं, मुद्गलभाष्यं, सिद्धाञ्जनञ्च प्रथमाष्टकपर्यन्तमस्ति । वेङ्कटमाधवभाष्यं पूर्णतया उपलभ्यते । सायणञ्च सम्पूर्णं वर्तते । दशममण्डले उद्गीथभाष्यमस्ति ।

इतःपूर्वमेता व्याख्या विशकलिततया नैकाभिः संस्थाभिः मुद्रापिताः । ता व्याख्या इदानीं एकस्मिन् सम्पुटे विद्याधीशशोधकेन्द्रद्वारा मुद्राप्यते इत्येतन्मोदावहम् अस्माकम् । नैकेषु सम्पुटेषु वरीवर्ति इयं ऋक्संहिता पदपाठसहिता सव्याख्या च । ऋक्संहितायाः पञ्चमसम्पुटत्वेन प्रथमाष्टकस्य षष्ठ-सप्तमाध्यायौ मुद्राप्येते । अनयोः अध्याययोः एकाशीतितः आरभ्य द्वादशोत्तर शत पर्यान्तानि सूक्तानि सन्ति ।

अस्या ऋक्संहिताया मुद्रापणे धृतमनस्काः जितमनस्काः अस्य शोधकेन्द्रस्य प्रधानसम्पोषकाः गाढावगाढसुधादिनैकग्रन्थाः पाठपीठाः श्रीपद्मनाभतीर्थादिश्रीमज्जयतीर्थाद्यधिष्ठितश्रीमदुत्तरादि-मठपीठाः वृष्टिखेटाधिष्ठितश्रीमज्जयतीर्थश्रीचरणनलिनचञ्चरीकायिताः श्रीमत्सत्यात्मतीर्थाः । तेषामादेशेन अनुग्रहेण च सम्पादितेयम् । तेभ्यो गुरुवर्येभ्यः नतिशततततीरर्प्यन्ते ।

जयतीर्थविद्यापीठस्य कुलपतयः सुधाविशारदाः, सच्छास्त्रपाठप्रवचनेषु रताः सर्वेषां छात्राणां सुधादिग्रन्थम् उपदिश्य भगवन्मार्गोपदेशकाः पूज्या गुरवः श्रीगुत्तलाचार्याः । तेभ्यो गुरुवर्येभ्यः नमनानि अर्पयामि ।

विद्याधीशशोधकेन्द्रप्रवर्तकाः अभिवर्धकाश्च मान्याः यशःशरीराः प्रो. के.टि. पाण्डुरङ्गी-महोदयाः । तेषमपि भूयांसि नमांसि निवेदयामि ।

मुद्रापणे सम्पादने च दत्तावकाशेभ्यः द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानाध्यक्षेभ्यः विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रधर्मदर्शिभ्यो जनादरणीयपाठप्रवचनदीक्षेभ्यः संस्थायाः सर्वविधकार्येषु अनवरतमनितरसाधारण्येन प्रोत्साहकेभ्यो मान्येभ्यः डा. सत्यध्यानाचार्यकट्टिमहाभागेभ्यः मम हार्दानि नमनानि निवेदयामि ।

पञ्चमं सम्पुटं उपनिदेशकः डा. एल्.एस्. वादिराजाचार्यः समपिपदत् । अयं च विद्वान् नैकान् ग्रन्थान् समपादयत् । युवा विद्वान् कार्यकुशलः पाठप्रवचनदीक्षश्च । तस्यापि हार्दानि अभिनन्दनानि संसूचयामि ।

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रविश्वस्थधर्मदर्शिभ्यश्च हार्दानि अभिनन्दनानि । इतः पूर्वं विशकलिततया मुद्रापिताभ्यो नैकाभ्यः संस्थाभ्यश्च हार्दानि अभिनन्दनानि आवेदयामि ।

संहितामिमां सश्रद्धं अल्पीयसि काले सुष्ठु मुद्रापकेभ्यो वागर्थमुद्रणालयाधिकारिभ्यः धन्यवादान् वितरामि ।

सव्याख्यासपदपाठऋक्संहितासम्पादनं मुद्रापणञ्च विदुषां विद्यार्थिनाञ्चोपकृतये भवतीति विश्वासिमि । विद्वद्भिः सम्पादितं इदं कृतिकुसुमं भगवच्चरणनलिनार्पणाय गुरुणां श्रीमत्सत्यात्मश्रीचरणानां करकमलयोरर्पयामि । अध्येतृकरकमलयोश्चोपहारीकरोमि । अनेन कर्मणा गुरुहृद्गो भगवान् प्रीतोऽस्तु दिग्विजयरामाभिन्नो श्रीमन्मूलसीतासमेतः श्रीमन्मूलरामः श्रीमत्सत्यात्मतीर्थाराधितः ।

सुधीजनविधेयः

**डा. कृष्णाचार्य उपाध्यायः**

निदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सव्याख्या सपदपाठा

# ऋक्संहिता

## अथ षष्ठाध्यायः

### ।। प्रथमो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

(सूक्तम् ८१)

(९ गोतमो राहुगणः । इन्द्रः । पङ्क्तिः)

**इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।**
**तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ।। १ ।।**
इन्द्रः । मदाय । ववृधे । शवसे । वृत्रऽहा । नृऽभिः । तम् । इत् । महत्ऽसु । आजिषु । उत । ईम् । अर्भे । हवामहे । सः । वाजेषु । प्र । नः । अविषत् ।। १ ।।

### श्रीस्कन्दस्वामिविरचितं ऋग्भाष्यम्

चत्वार्यैन्द्राणि सूक्तानि चत्वार्येतानीन्द्रदेवत्यानि । तमिन्महत्सु इति तच्छब्द-श्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यः **इन्द्रः मदाय ववृधे** स्तोमेन स्तुतिभिश्च वर्धते । **शवसे** बलाय च । **वृत्रहा नृभिः** यष्टृभिर्मनुष्यैः । **तम्** वयम् **महत्सु आजिषु** सङ्ग्रामेषु **उत अर्भे** अल्पे । **हवामहे** सङ्ग्रामे आह्वयाम । आहूतश्च सन् **सः वाजेषु** सङ्ग्रामेषु **प्र नः** अविषत् प्रकर्षेण अस्मान् रक्षतु ।। १ ।।

### वेङ्कटमाधवाचार्यविरचितं ऋग्भाष्यम्

'इन्द्रो मदाय वावृधे' माधवो व्याचिकीर्षति ।
सर्वानुदात्तशब्दानाम् आदावर्थं प्रदर्शयन् ।। १ ।।

भवन्ति सर्वानुदात्ता आदेशा युष्मदस्मदोः ।
भवन्ति चेद्वाक्यमध्ये वाम्नौ वो नश्च तेमयौ ।। २ ।।

'ऋचा त्वः पोषम्' इत्यादौ त्वशब्दश्च निहन्यते ।
चादीनां वाक्यमध्यस्थाश् चवाहस्मादयस्तथा ।। ३ ।।

उदाहरणमेतेषां बाहुल्यान्न प्रदर्श्यते ।
'हिरण्यकर्णम्' इत्यस्मात् 'मणिग्रीवं' निहन्यते ।। ४ ।।

लौकिकाः कथयन्त्यर्थान् म्लेच्छैः शब्दैश्च साधुभिः ।
उच्चैः प्रयुञ्जते कांश्चित् पदार्थानन्यथाऽपरान् ।। ५ ।।

यथा घटश्च रज्जुश्च चार्थो नीचैः प्रयुज्यते ।
स्थाणुर्वा पुरुषो वेति वार्थश्चैव तथाविधः ।। ६ ।।

अर्थस्वभावात्सर्वेषां शब्दानामुच्चनीचता ।
स्वभावं तं विजानन्ति लौकिका न त्वलौकिकाः ।। ७ ।।

य उदात्ता निपातेषु नूनं ह्येवकिलादयः ।
उच्चैः प्रदर्शनीयोऽर्थस्तेषामिति विनिश्चयः ।। ८ ।।

उदात्तेषूपसर्गेषु तदर्थः प्रस्फुटो भवेत् ।
समस्तेष्वनुदात्तानां नीचैरर्थं प्रदर्शयेत् ।। ९ ।।

विस्पष्टमुक्तमेतच्च प्रागाख्यातार्थनिर्णये ।
'हिरण्यवर्णम्' इत्यत्र कारणं तत्र वक्ष्यते ।। १० ।। इति ।

गोतमः । **इन्द्रः** सोमाय **ववृधे** । बलाय च शत्रुहा मरुद्भिः । तम् एव महत्सु सङ्ग्रामेषु अपि चाल्पे सङ्ग्रामे **हवामहे** । सः सस्मान् युद्धेषु प्ररक्षतु ।। १ ।।

## मुद्गलविरचितभाष्यम्

'इन्द्रो मदाय' इति नवर्चमष्टमं सूक्तम् । रहूगणपुत्रः गोतम ऋषिः । पङ्क्तिश्छन्दः । इन्द्रो देवता ।

**वृत्रहा** वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्य हन्ता **इन्द्रः मदाय** हर्षार्थम् **शवसे** बलार्थं च **नृभिः** यज्ञस्य नेतृभिर्ऋत्विग्भिः **ववृधे** स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या

हि देवता प्राप्तबला सती प्रवर्धते । **तम् इत्** तमेवेन्द्रम् **महत्सु** प्रभूतेषु **आजिषु** सङ्ग्रामेषु **हवामहे** अस्माकं रक्षणायाऽऽह्वयामहे । **उत** अपि च **ईम्** एनम् **अर्भे** अल्पे सङ्ग्रामे हवामहे । अस्माभिराहूतः **सः** च इन्द्रः **वाजेषु** सङ्ग्रामेषु **नः** अस्मान् **प्र आविषत्** प्रावतु प्रकर्षेण रक्षतु ।।

## श्रीमत्सायणाचार्यविरचितं ऋग्भाष्यम्

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।<br>
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।<br>
दशतय्याः पञ्चमोऽयमध्यायो व्याकृतः पुरा ।<br>
धीमता सायणार्येण षष्ठोऽध्यायोऽथ वर्ण्यते ।।

प्रथमे मण्डले त्रयोदशानुवाके सप्त सूक्तानि व्याकृतानि । 'इन्द्रो मदाय' इति नवर्चमष्टमं सूक्तम् । अत्रानुक्रम्यते– 'इन्द्रो नव' इति । 'ऋषिश्चान्यस्मादृषेः' (अनु.१२.२) इति परिभाषया रहूगणपुत्रस्य गोतमस्य अनुवृत्तेः अस्य सूक्तस्य स ऋषिः । पूर्वसूक्ते 'पाङ्क्तं हि' इत्युक्तत्वात् तुह्यादिपरिभाषयेदमुत्तरं च सूक्तं पाङ्क्तम् । अनादेशपरिभाषयेन्द्रो देवता । पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्यशास्त्रे इदं सूक्तम् । सूत्रितं च– 'प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यम्' (आश्व.श्रौ.७.१२) इति । आरम्भणीये चातुर्विंशिकेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे 'इन्द्रो मदाय' इति आद्यस्तृचो वैकल्पिकः स्तोत्रियः । 'होत्रकाणाम्' इति खण्डे सूत्रितम्– 'इन्द्रो मदाय वावृधे मदे मदे हि नो ददिः' (आश्व.श्रौ.७.४) इति । महाव्रते निष्केवल्ये उत्तरपक्षे 'इन्द्रो मदाय' इत्येका शंसनीया । तथैव पञ्चमारण्यके सूत्रितम्–'इन्द्रो मदाय वावृध इति पङ्क्तिः सूददोहाः' (ऐ.आ.५.२.२) इति ।।

**वृत्रहा** वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता । यद्वा आवरकाणां शत्रूणां हन्ता **इन्द्रो मदाय** हर्षार्थं **शवसे** । बलनामैतत् । बलार्थं च **नृभिः** यज्ञस्य नेतृभिर्ऋत्विग्भिः **ववृधे** स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या हि देवता प्राप्तबला सती प्रवर्धते । **तमित्** तमेवेन्द्रं **महत्सु** प्रभूतेषु **आजिषु** संग्रामेषु **हवामहे** अस्माकं रक्षणायाह्वयामहे । **उत** अपि च **ईम्** एनम् **अर्भे** अल्पे सङ्ग्रामे हवामहे । अस्माभिराहूतः **सः** च इन्द्रः **वाजेषु** सङ्ग्रामेषु **नः** अस्मान् **प्र अविषत्** प्रावतु प्रकर्षेण रक्षतु ।

ववृधे । वृधेः कर्मणि लिट् । संहितायामभ्यासस्य 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । तुजादित्वे हि तूतुजान इतिवत् पदकाले दीर्घः श्रूयेत । नृभिः । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'नृ चान्यतरस्याम्' इति प्रतिषेधः । हवामहे । ह्वयतेर्लेटि 'ह्वः' इति अनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । शपि गुणावादेशौ । अविषत् । 'अव रक्षणे' । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । 'सिब्बहुलं लेटि' इति सिप् । तस्य आर्धधातुकत्वात् वलादिलक्षण इट् ।। १ ।।

## कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम्

इन्द्रो मदायेति नवर्चमष्टमं सूक्तम् । रहूगणपुत्रस्य गोतमस्यार्षं पङ्क्तिच्छन्दस्कम्, इन्द्रो देवता ।

**वृत्रहा** आवरकस्यासुरस्य वृत्रस्य हन्ता **इन्द्रः, मदाय** हर्षाय **शवसे** ज्वलते बलाय च **नृभिः** बलिभिः पुरुषैः **ववृधे** वर्धितः । बलाढ्यैः यजमानैः अर्प्यमाणैः सोमैः गीयमानैः स्तोत्रैः इन्द्रो वर्धते, यजमाने देवतायाः प्रवेशः प्रवर्धनं च रहस्यार्थपक्षे बोद्धव्ये । **तम् इत्** तमेव इन्द्रं **महत्सु** प्रभूतेषु **आजिषु** सङ्ग्रामेषु **हवामहे** आह्वयामः । यात्रात्मको यज्ञोऽध्वर इति भूमिकायां सूक्तव्याख्यानेषु च प्रागवोचाम, भुवः प्रस्थाय यावद्दिवं उत्तमस्थानं ज्योतिरुद्दिश्य यज्ञप्रयाणे चलति सति, अध्वनि विघ्नकराः राक्षसा असुरा अन्ये च तद्राजानुचराः तमसस्पुत्राः प्रत्यवतिष्ठन्ते । तैः सह सङ्ग्रामे यजमानस्य साहाय्यं देवेभ्यो लब्धव्यं, नालं तत्र पुरुषकारः । इदमन्तर्यागे सङ्ग्रामरहस्यम् । **उत** अपि च **ईम्** एनं **अर्भे** अल्पे सङ्ग्रामेऽपि 'हवामहे,' महत्यल्पे वा कार्ये इन्द्र एव शरणं, तमेवाह्वयामः । **सः** स चाहूतः **वाजेषु** आजिषु जित्वा वैरिभ्यः प्राप्तव्यासु समृद्धिषु दिव्यासु निमित्तभूतासु **नः** अस्मान् **प्राविषत्** प्रावतु प्रकर्षेण वर्धयतु ।

ववृधे-वृधेः कर्मणि लिट्, संहितायामभ्यासस्य दीर्घत्वम् । अविषत्– अवतेः लेटि अडागमः, सिप् बहुलमिति सिप् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**असि हि वीर सेन्योऽसि भूरि परादुदिः ।**
**असि दभ्रस्य चित् वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ।। २ ।।**

**असि । हि । वीर । सेन्यः । असि । भूरि । पराऽददिः । असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥ २ ॥**

**स्कन्द–** हिशब्दः पदपूरणः । **असि** भवसि त्वं हे **वीर! सेन्यः** स्वामिन्ययमिदमर्थे यत्प्रत्ययो द्रष्टव्यः । मरुदादिसेनानां पतिः । अथवा सैन्यशब्दोऽत्र सेव्यवचनः । 'असेन्या वः पणयो वचांसि' (ऋ.१०.१०८,६) इति यथा । सेव्यः सर्वस्य असि न कस्यचित्सेवक इत्यर्थः । **असि भूरि परादादिः** पराशब्दोऽत्र सु इत्येतस्य स्थाने । 'यो अर्यो मर्तभोजनं पराददाति (ऋ.१.१८.१) इति यथा । बहुधनस्य सुष्ठु शोभनं वा दाता असि । अथवा 'मा नो मघेव निष्षपी परा दाः' इत्यादिषु दर्शनात् परादादातिः विनाशार्थः । बहुनोऽपि शत्रुबलस्य विनाशयिताऽसीत्यर्थः । **असि दभ्रस्य चित् वृधः** अल्पस्यापि च स्वाश्रितस्य वर्धयिताऽसि । **यजमानाय शिक्षसि** ददासि धनानि **सुन्वते** सोमाभिषवं कुर्वते । **भूरि ते वसु** बहु ते धनम् । प्रभूतधनश्चासीत्यर्थः ॥ २ ॥

**वेङ्कटमाधव– असि हि वीर!** सेनार्हः । **असि** च भूरेर्धनस्य परादाता । **असि** क्षुद्रस्य वर्धयिता । यजमानाय वसु प्रयच्छसि सुन्वते । **भूरि** च **ते** धनम् इति ॥ २ ॥

**मुद्गल–** हे **वीर!** शत्रुक्षेपणकुशलेन्द्र! त्वम् **सेन्यः** सेनार्हः **असि** भवसि । त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः । **हि** यस्मादेवं तस्मात् **भूरि** प्रभूतं धनम् **परादादिः** परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता असि भवसि । **दभ्रस्य चित्** अल्पस्यापि तव स्तोतुः **वृधः** वर्धयिता असि । तथा यजमानाय **सुन्वते** यागं कुर्वते पुरुषाय **शिक्षसि** अपेक्षितं धनं ददासि । यस्मात् **ते** तव **वसु** धनम् **भूरि** बहुलमक्षयं विद्यते, तस्मात् ददासीति भावः ॥

**सायण–** हे **वीर** शत्रुक्षेपणकुशलेन्द्र त्वं **सेन्यः** असि सेनार्हो भवसि । त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः । **हि** यस्मादेवं तस्मात् **भूरि** प्रभूतं शत्रूणां धनं **परादादिः** परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता **असि** भवसि । **दभ्रस्य चित्** अल्पनामैतत् । अल्पस्यापि तव स्तोतुः **वृधः** वर्धयिता असि । तथा **यजमानाय** यागं कुर्वते सुन्वते सोमाभिषवं कुर्वते पुरुषाय **शिक्षसि** अपेक्षितं धनं ददासि । शिक्षतिर्दानकर्मा । यस्मात् **ते** तव **वसु** धनं **भूरि** बहुलमक्षयं धनं विद्यते तस्मात् ददासीति भावः ।

परादर्दिः । 'डुदाञ् दाने' । 'आदृगमहनजनः' इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचने ह्रस्वत्वम् । 'आतो लोप इटि च' इति आकारलोपः । वृधः । वृधेरन्तर्भावितण्यर्थात् इगुपध-लक्षणः कः । सुन्वते । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** हे **वीर!** विक्रान्त पराक्रमशालिन्, **सेव्योऽसि** त्वं सेनार्हो भवसि, एकोऽपि सैन्यभूत इत्यर्थः । **हि** यस्मादेवं तस्मात् यजवैरिभ्योऽपहृत्य जितं **भूरि** प्रभूतं दिव्यं धनं **परादर्दिः असि** परादाता तेषां पराङ्मुखं यथा तथा आदातासि । **दभ्रस्य चित्** अल्पस्यापि त्वामाश्रितस्य **वृधः असि** त्वं वर्धयिता भवसि । **यजमानाय** यजनं कुर्वते **सुन्वते** सोमाभिषवं कुर्वते भक्ताय **शिक्षसि** ददासि अपेक्षितं आवश्यकं च । यतः **ते** तव **वसु** धनं **भूरि** प्रभूतम् ।

परादर्दिः–आदृगमहनजन इति किप्रत्ययः । वृधः–वृधे रन्तर्भावितण्यर्थात् इगुपधलक्षणः कप्रत्ययः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**यदुदीरत आजयो धृष्णवे धीयते धना ।**
**युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ।। ३ ।।**
**यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना । युक्ष्व । मदऽच्युता । हरी इति । कम् । हनः । कम् । वसौ । दधः । अस्मात् । इन्द्र । वसौ । दधः ।। ३ ।।**

**स्कन्द–** यत् **यदा** उदीरते प्रेरयन्ति । उच्चारयन्ति तव स्तुतीरित्यर्थः । के । **आजयः** आजिशब्दः सङ्ग्रामवचनः (निघ.२.१७) तात्स्थ्याच्चात्र ताच्छब्द्यं द्रष्टव्यम् । मञ्चाः क्रोशन्तीति यथा । सङ्ग्रामस्था योद्धारः । **धृष्णवे** अभिभवित्रे च योद्ध्रे । **धीयते धना** द्वितीयैकवचनस्यायम् आकार आदेशः । धनम् । अथवैवमन्यथास्यार्धर्चस्यार्थयोजना । यदोदीरते उदीर्यन्ते उच्चार्यन्ते इत्यर्थः । आजयः । अजेर्गत्यर्थस्येदं रूपम् । त्वं प्रति गन्त्र्यः स्तुतयः । धृष्णवे च तुभ्यम् धीयते धना । धिनोतेः प्रीणनार्थस्य रूपम् । धना आहुतिरिहाभिप्रेता । प्रीणयित्री सोमाहुतिरित्यर्थः । यदेति वचनात् तदेत्यध्याहार्यम् । तदा युक्ष्व स्वरथे नियुङ्क्ष्व **मदच्युता** च्ववतिर्गतिकर्मा । (निघ १.१४) मदकरं सोमं प्रति गन्तारौ **हरी** । युक्त्वा च आगत्य **कम् हन कम् वसौ दधः** कञ्चिज्जहि कञ्चिद्धने स्थापय । यो हन्तव्यस्तं जहि, यस्मै धनं दातव्यं तस्मै धनं देहीत्यर्थः । तव च **अस्मान् इन्द्र! वसौ दधः** ।। ३ ।।

**वेङ्कटमाधव–** यदा उत्तिष्ठन्ति सङ्ग्रामाः तदानीम् **धृष्णवे** योद्ध्रे धनानि दीयन्ते, तुभ्यं हवींषि । स त्वम् योजय सोमं प्रति गन्तारौ स्वाश्वौ । योजयित्वा च **कम् च न जहि** कम् चन अर्थे स्थापय । तत्रास्मान् इन्द्र! धने स्थापयेति ।। ३ ।।

**मुद्गल–** अत्रेदमाख्यानम्- रहूगणपुत्रो गोतमः कुरुसृञ्जयानां राज्ञां पुरोहित आसीत् । तेषां राज्ञां परैः सह युद्धे सति स ऋषिः अनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति । **यत्** यदा **आजयः** सङ्ग्रामाः **उदीरते** उद्गच्छन्ति उत्पद्यन्ते, तदानीम् **धना** धनम् **धृष्णवे** यो धृष्णुर्धर्षयिता शत्रूणां जेता भवति तस्मै **धीयते** निधीयते । जयतो धनं भवतीत्यर्थः । हे **इन्द्र!** त्वं तादृशेषु युद्धेषु प्रवृत्तेषु **मदच्युता** शत्रूणां मदस्य गर्वस्य च्यावतितारौ **हरी** त्वदीयावश्वौ **युक्ष्व** रथे योजय । योजयित्वा च **कम्** कञ्चित् राजानं तव परिचरणमकुर्वन्तम् **हनः** हन्याः । **कम्** कश्चन त्वां परिचरन्तम् **वसौ** वसुनि धने **दधः** स्थापयसि । अतो जयपराजययोस्त्वमेव कारयिताऽसि । तस्मात् हे **इन्द्र! अस्मात्** अस्मदीयान् राज्ञः वसौ धने **दधः** स्थापय ।। ३ ।।

**सायण–** अत्रेदमाख्यानम् । रहूगणपुत्रो गोतमः कुरुसृञ्जयानां राज्ञां पुरोहित आसीत् । तेषां राज्ञां परैः सह युद्धे सति स ऋषिरनेन सूक्तेनेन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति । तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नानम्– 'गोतमो ह वै राहूगण उभयेषां कुरुसृञ्जयानां पुरोहित आसीत्' इति । **यत्** यदा **आजयः** सङ्ग्रामाः **उदीरते** उद्गच्छन्ति उत्पद्यन्ते तदानीं **धना** धनं **धृष्णवे** यो धृष्णुर्धर्पयिता शत्रूणां जेता भवति तस्मै **धीयते** निधीयते । जयतो धनं भवतीत्यर्थः । हे **इन्द्र!** त्वं तादृशेषु युद्धेषु प्रवृत्तेषु **मदच्युता** शत्रूणां मदस्य गर्वस्य च्यावयितारौ **हरी** त्वदीयावश्वौ **युक्ष्व** रथे योजय । योजयित्वा च **कं** कञ्चित् राजानं तव परिचरणमकुर्वन्तं **हनः** हन्याः । कञ्चन त्वां परिचरन्तं **वसौ** वसुनि धने **दधः** स्थापयसि । अतो जयपराजययोस्त्वमेव कारयितासि । तस्मात् हे इन्द्र! **अस्मान्** अस्मदीयान् राज्ञः **वसौ** धने **दधः** स्थापय ।

उदीरते । 'ईर गतौ' । आदादिकः । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । यद्वृत्तयोगादनिघातः' । धना । 'सुपां सुलुक्' इति ढादेशः । युक्ष्व । 'युजिर् योगे' । अन्तर्भावितण्यर्थात् लोटि 'बहुलं चन्दसि' इति विकरणस्य लुक् । 'द्व्यचोऽतस्तिङः' इति

संहितायां दीर्घत्वम् । हनः । हन्तेर्लेटि सिपि अडागमः । हनश्च दधश्चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेः निघातप्रतिषेधः । वसौ । लिङ्गव्यत्ययः । दधः । 'दध धारणे' । लेटि व्यत्ययेन परस्मैपदम् ।। ३ ।।

**सिद्धाञ्जनम्– यत्** यदा **आजयः** सङ्ग्रामाः **उदीरते** उद्गच्छन्ति, प्रारभन्ते, तदा **घृष्णवे** यो धर्षयिता तस्मै शत्रुजिते **धना** धनानि, धनं, वचनव्यत्ययः, **धीयते** निहितं भवति, जेतृवशंवदं भवति जितस्य धनमित्यर्थः । अत्र जयापजययोर्विधाता त्वमेवेति प्राह । हे इन्द्र, त्वं तथाविधेषु सङ्ग्रामेषु प्रवृत्तेषु **मदच्युता** शत्रुदर्पस्य च्यावयितारौ **हरी** तवाश्वौ **युक्ष्व** योजय, योजयसीत्यर्थः । इन्द्राश्वयोः स्वरूपं सङ्केतात्मतया स्थितं प्राग्विचारितम् (१.१६, १-२, १.६.२, १.२०.२) । तथा योजनात्परं **कम् हनः** कञ्चिदयुक्तपक्षपातिनं ध्वंसयसीत्यर्थः **कम्** कञ्चन युक्तं त्वदधीनं **वसौ** धने **दधः** स्थापयसि । त्वदायत्तौ जयपराजयौ । हे **इन्द्र, अस्मान्** त्वदेकशरणान् **वसौ** त्वदीये धने **दधः** स्थापय ।

उदीरते–ईर गतौ, अदादिः । धना–सुपां सुलुगिति डादेशः । युक्ष्व–युजिर् योगे, अन्तर्भावितण्यर्थः । हनः–हन्तेर्लेटि सिपि अडागमः । दधः–दध धारणे, लेटि व्यत्ययेन परस्मैपदम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**क्रत्वा॑ म॒हाँ अ॑नुष्व॒धं भी॒म आ वा॑वृधे॒ शवः॑ ।**
**श्रि॒य ऋ॒ष्व उ॑पा॒कयो॒र्नि शि॒प्री हरि॑वान् दधे॒ हस्त॑योर्वज्र॒माय॒सम् ।। ४ ।।**
**क्रत्वा॑ । म॒हान् । अ॒नु॒ऽस्व॒धम् । भी॒मः । आ । व॒वृ॒धे॒ । शवः॑ । श्रि॒ये । ऋ॒ष्वः । उ॒पा॒कयोः॑ । नि । शि॒प्री । हरि॑ऽवान् । द॒धे॒ । हस्त॑योः । वज्र॑म् । आ॒य॒सम् ।। ४ ।।**

**स्कन्द– क्रत्वा** कर्मणा **महान् अनुष्वधम्** अन्विति पश्चाद्भावे । 'स्वधा' (निघ २,७) इत्यन्ननाम । सोमलक्षणस्यान्नस्य पश्चात् । सोमपानानन्तरमित्यर्थः । **भीमः** भयानकः । **आ ववृधे** आभिमुख्येन वर्धयति । आत्मीयम् **शवः** । सोमं पीत्वा बलवान् भवतीत्यर्थः । **श्रिये** श्र्यर्थं च । **ऋष्वः** वीर्येण शरीरेण वा महान् । कस्य श्र्यर्थम् । उच्यते । **उपाकयोः** 'उपाके' (निध.२,९६) इत्यन्तिकनाम । अत्र तु तात्स्थ्यात् द्यावापृथिव्योर्वर्तते । अन्तिकस्थयोः

द्यावापृथिव्योः । कस्य पुनः द्यावापृथिव्यावन्तिकस्थे । इन्द्रस्य । तथाह्यसौ ते उभे अपि क्षणेनैकेन सञ्चरते । अथवा परस्परस्यान्तिकस्थे द्यावापृथिव्यौ । यावद्धि मक्षिकायाः पत्रं तावत् द्यावपृथिव्योरन्तरम् इत्युपनिषद्विदः पौराणिकाश्चाचक्षते । तेनोपपन्नमनयोः परस्परान्तिकस्थानत्वम् । **शिप्री** 'शिप्रे हनू नासिके वा'(या ६.१७) । तद्वान् । अथवा 'शिप्राः शीर्षसु वितताः' (ऋ.५, ५४,१३) इति प्रयोगदर्शनात् शिप्राशब्दः शिरस्त्राणवचनः । सद्वान् शिप्री । **हरिवान्** इन्द्रः **नि दधे** निधत्ते स्थापयति **हस्तयोः वज्रम् आयसम्** । इन्द्रो हि वृष्ट्यर्थं हस्ताभ्यां वज्रं गृह्णाति । वृष्ट्युत्तरकालं हि द्यौर्विमला सम्पन्नसस्या च पृथिवी श्रीमत्यौ भवतः । अत एतदुच्यते- श्रिय ऋष्व उपाकयोः इति ।। ४ ।।

**वेङ्कटमाधव–** कर्मणा **महान्** सोमपानानन्तरम् **भीमः** वर्धयति बालम् श्र्यर्थं दर्शनीयः । अन्तिकयोरुभयोः पार्श्वस्थयोः **हस्तयोः आयसम्** आयुधम् **नि दधे** हनूमान् **हरिवान्** ।।४।।

**मुद्गल– क्रत्वा** कर्मणा **महान्** सर्वाधिकः **भीमः** शत्रूणां भयङ्कर इन्द्रः **अनुष्वधम्** स्वधा इत्यन्ननाम । स्वधायाम् । विभक्त्यर्थेऽव्ययीभावः । सोमलक्षणान्नस्य पाने सतीत्यर्थः । **शवः** आत्मीयं बलम् **आ ववृधे** आभिमुख्येन प्रावर्धयत् । तदनन्तरम् ऋष्वः दर्शनीयः **शिप्री** शिप्रे हनू तद्युक्तः **हरिवान्** अश्वोपेत इन्द्रः **उपाकयोः** समीपवर्तिनोः **हस्तयोः** बाह्वोः **आयसम्** अयोमयम् **वज्रम् श्रिये** सम्पदर्थम् **नि दधे** निदधाति स्थापयति । सोमपानेन हृष्टः प्रबल इन्द्रः शश्रूणां हननाय हस्ते वज्रं गृह्णातीति तात्पर्यार्थः ।। ४ ।।

**सायण– ऋत्वा** कर्मणा प्रज्ञया वा **महान्** सर्वाधिकः **भीमः** शत्रूणां भयङ्करः इन्द्रः **अनुष्वधम्** । स्वधा इति अन्ननाम । स्वधायाम् । विभक्त्यर्थे अव्ययीभावः । सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः । **शवः** आत्मीयं बलम् **आ ववृधे** आभिमुख्येन प्रावर्धयत् । तदनन्तरम् **ऋष्वः** दर्शनीयः **शिप्री** । शिप्रे हनू नासिके वा । तद्युक्तः **हरिवान्** हरिनामकाश्वोपेत इन्द्रः **उपाकयोः** अन्तिकनामैतत् । समीपवर्तिनोः **हस्तयोः** बाह्वोः **आयसम्** अयोमयं **व्रजं श्रिये** सम्पदर्थं **नि दधे** निदधाति स्थापयति । सोमपानेन हृष्टः प्रबल इन्द्रः शत्रूणां हननाय हस्ते वज्रं गृह्णातीति तात्पर्यार्थः ।

ऋत्वा । 'जसादिषु च्छब्दसि वावचनम्' इति नाभावस्य विकल्पितत्वादभावः । आयसम् । 'तस्य विकारः' इति अण्प्रत्ययः ।। ४ ।।

**सिद्धाञ्जनम्– ऋत्वा** ऋतुना प्राज्ञेन कर्मणा **महान्** सर्वाधिकः **भीमः** भयङ्करो वैरिवर्गस्य, इन्द्रः **अनुस्वधम्** स्वधया, विभक्त्यर्थे अव्ययीभावः, स्वधा स्वधारणसामर्थ्यं, स्वधर्मः स्वभाव इति यावत्, तेन सामर्थ्येन **शवः** स्वीयं ज्वलद्बलं **आववृधे** आवर्धयत् स्वाभिमुखं प्रवर्धितवान् । अथ **ऋष्वः** उत्कृष्टः महन्नामैतत्, **शिप्री** शिप्रे हनू नासिके वा, मुखोपलक्षणमेतत् दृढाध्यवसायबलद्योतके शिप्रे हनू तद्युक्तः **हरिवान्** अश्वोपेतः **उपाकयोः** समीपवर्तिनोः **हस्तयोः** बाह्वो **आयसम्** अयोमयं **वज्रम्** । आयुधं **श्रिये** सम्पदे **नि दधे** निदधाति स्थापयति, युद्धे शत्रुजयेन सम्पल्लाभाय सर्वं सन्नाहं करोति ।

कृत्वा-छन्दसि नाभावस्य विकल्पः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**आ प॑प्रौ॒ पार्थि॑वं॒ रजो॑ बद्ब॒धे रो॑च॒ना दि॒वि ।**
**न त्वावाँ॑ इन्द्र॒ कश्च॒न न जा॒तो न ज॑निष्य॒तेऽति॒ विश्वं॑ ववक्षिथ ।। ५ ।।**
**आ । प॒प्रौ॒ । पार्थि॑वम् । रजः॑ । ब॒द्ब॒धे । रो॒च॒ना । दि॒वि । न । त्वाऽवा॑न् । इ॒न्द्र॒ । कः॑ । च॒न । न । जा॒तः । न । ज॒नि॒ष्य॒ते॒ । अति॑ । विश्व॑म् । व॒व॒क्षि॒थ ।। ५ ।।**

**स्कन्द– आ पप्रौ** आपूरयति **पार्थिवम् रजः** लोकम् । केन । सामर्थ्याद् वृष्टिद्वारेण । **बद्बधे** बध्नाति । **रोचना** दीप्तानि नक्षत्रादीनि । क्व । **दिवि** द्युलोके । नक्षत्रादीनां हि दिवि व्यवस्थितानां धर्मो मूलम् । स च वृष्टिमूलम् । अत इन्द्रमुच्यते । बद्बधे रोचना दिवीति । तदेतत् गोषूक्ती चाश्वसूक्ती च वक्ष्यतः । 'इन्द्रेण रोचना दिवो दृळ्हानि (ऋ ८,१४,९) इति । अथवा बद्बधे रोचनेति आदित्योऽत्र रोचनोऽभिप्रेतः । द्वितीयैकवचनस्यायमाकारादेशः । महत्तमस्तन्वन्तं वृत्रं हत्वा दर्शनार्थं दिवि सूर्यमारोपितवानित्यर्थः । तदेतत् सव्येनाप्युक्तम् । 'वृत्रं यदिन्द्र (ऋ.१.५१,४) इत्यादिना । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । न त्वावान् त्वत्सदृश इदानीं तावत् हे **इन्द्र! न कः चन** कश्चिदपि । **न** पूर्वस्मिन् काले **जातः** । **न** अप्यागामिकाले **जनिष्यते** । किं तर्हि । **अति विश्वम्** ववक्षिथ अतीत्युपसर्गात् विश्वमिति कर्मश्रुतेर्योग्यक्रियापदाध्याहारः । ववक्षिथेत्यपि च यद्यपि वक्तेर्वा वहतेर्वा साभ्यासस्य रूपम् । तथापि 'ववक्षिथ, विवक्षस' (निघ.३,१) इति महन्नामसु पाठात् वचनवहनयोश्चासम्भवा-

दनेकार्थतायाश्च धात्वन्तराणामपि प्रसिद्धत्वात् ववक्षतिर्महद्भावार्थः । अतीत्य सर्वास्त्वं महान् भवसीत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** आपूरयामास **पार्थिवम्** लोकं कामैः । बबन्ध **दिवि** नक्षत्राणि । **न** त्वत्सदृशः इन्द्र! **न कः** चिदपि **जातः** । **न** अपि **जनिष्यते** । अतिवहसि स त्वं सर्वम् ।।

**मुद्गल–** इन्द्रः स्वतेजसा **पार्थिवम्** पृथिव्याः सम्बन्धि वस्तुजातम् **रजः** अन्तरिक्षलोकश्च **आ पप्रौ** आपूरयति । तथा **दिवि** द्युलोके **रोचना** रोचमानानि दीप्तानि नक्षत्राणि **बद्धधे** बबन्ध स्थापितवान् । अतो हे **इन्द्र!** न त्वावान् त्वत्सदृशः **कः चन** नास्ति । **न जातः** नोत्पन्नोऽस्ति । **न** च **जनिष्यते** । उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वम् **विश्वम्** सर्वं रक्षितव्यं जगत् **अति ववक्षिथ** अतिशयेन वोढुमिच्छसि । सर्वस्य जगतो निर्वाहको भवसीत्यर्थः ।। ५ ।।

**सायण–** इन्द्रः स्वतेजसा **पार्थिवं** पृथिव्याः सम्बन्धि वस्तुजातं **रजः** अन्तरिक्षलोकं च **आ पप्रौ** आपूरयति । तथा **दिवि** द्युलोके **रोचना** रोचमानानि दीप्तानि नक्षत्राणि **बद्धधे** बबन्ध स्थापितवान् । अतो हे **इन्द्र! त्वावान्** त्वत्सदृशः **कश्चन न जातः** नोऽत्पन्नोऽस्ति । न च जनिष्यते । उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वं **विश्वं** सर्वं रक्षितव्यं जगत् **अति ववक्षिथ** अतिशयेन वोढुमिच्छसि । सर्वस्य जगतो निर्वाहको भवसीत्यर्थः ।

पप्रौ । 'प्रा पूरणे' । लिटि 'आत औ णरः' (पा.सू.७.१.३४) इति औकारादेशः । पार्थिवम् । 'पृथिव्या ञाञौ' (पा.सू.४.१.८५.२) इति अञ्प्रत्ययः । ञित्त्वादाद्युदात्तत्वम् । रजः । रजन्त्यस्मिन्' गन्धर्वादय इति रजः अन्तरिक्षम् । 'रञ्ज रागे' । असुनि 'रजकरजन-रजःसूपसङ्ख्यानम्' (का.६.४.२४.४) इति नलोपः । बद्धधे । 'बध बन्धने' । लिटि व्यत्ययेन हलादिशेषाभावः । एकहल्मध्यगतत्वाभावात् एत्वाभ्यासलोपावपि न स्तः । पादादित्वात् निघाताभावः । त्वावान् । 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' इति वतुप् । 'आ सर्वनाम्नः' इति आत्वम् । ववक्षिथ । 'वह प्रापणे' । अस्मात् इच्छासनि 'सन्यतः' इति इत्वस्य 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति अभावः । सनन्तात् लिटि 'अमन्त्रे' इति निषेधात् आम्प्रत्ययाभावः ।। ५ ।।

**सिद्धाञ्जनम्–** इन्द्रः स्वविभवेन **पार्थिवम्** पृथिव्याः सम्बन्धि सर्वं **रजः** अन्तरिक्षं च **आ पप्रौ** आपूरयति । **दिवि** द्युलोके **रोचना** रोचमानानि ज्योतींषि **बद्धधे** बबन्ध स्थापितवान् । अतः हे **इन्द्र! त्वावान्** त्वत्सदृशः **कश्चन न** न कोऽप्यस्ति **न जातः** न कोऽप्युत्पन्नोऽस्ति, **न जनिष्यते** इतः परं उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वं **विश्वम्** सर्वं जगत् **अति ववक्षिथ** अत्यन्तं वोढुमिच्छसि, सर्वजगन्निर्वाही त्वमित्यर्थः ।

पप्रौ–प्रा पूरणे, लिट् । बद्धधे–बध बन्धने, गतम् । त्वावान्–छन्दसि वतुप्, तादृश्ये । ववक्षिथ वह प्रापणे, अस्मादिच्छासनि इत्वस्य छन्दसि विकल्पितत्वात् अभावः ।। ५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये प्रथमो वर्गः ।।

## ।। अथ द्वितीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**यो अर्यो मर्तभोजनं परादर्दाति दाशुषे ।**
**इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ।। ६ ।।**
**यः । अर्यः । मर्तऽभोजनम् । पराऽददाति । दाशुषे । इन्द्रः । अस्मभ्यम् । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ।। ६ ।।**

**स्कन्द– यः अर्यः** ईश्वरः मर्तभोजनम् 'भोजनम्' (निघ.२,१०) इति धननाम । उपभोग्यशब्दपर्यायो वा । मनुष्योपभोग्यं धनं मनुष्योपभोग्यं वान्नादि । **पराददाति** परेत्येष सु इत्येतस्य स्थाने । सुष्ठु ददाति । **दाशुषे** यजमानाय । यच्छब्दाद् तच्छब्दश्चाध्याहार्यः । सः **इन्द्रः अस्मभ्यम्** अपि **शिक्षतु** ददातु । वयमपि हि दाश्वांस एवेत्यर्थः । परस्तु ऋक्शेषः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । विभजाऽऽत्मीयं धनं स्तोतृभ्यो यष्टृभ्यश्च । कस्मात् । उच्यते । यस्मात् **भूरि ते वसु** प्रभूतं तव धनम् । तस्मिंश्च विभागेऽहमपि **भक्षीय** भजेय । लभेयेत्यर्थः । **तव** स्वभूतस्य **राधसः** । षष्ठीनिर्देशादेकदेशमिति शेषः । विभजमानो मह्यमपि भागं देहीत्यर्थः ।।

**वेङ्कटमाधव– यः** उदारः मनुष्याणां भोजनमन्नं प्रयच्छति यजमानाय । **सः इन्द्रः अस्मभ्यम्** ददातु । **वि भज इन्द्र!** बहु हि ते धनम् । अहं **तव** धनम् भजेय ।। ६ ।।

**मुद्गल– अर्थः** स्वामी **यः इन्द्रः मर्तभोजनम्** सर्वैर्मनुष्यैरुपभोग्यमन्नम् **दाशुषे** चरुपुरोडाशादीनि दत्तवते यजमानाय **पराददाति** प्रयच्छति सः **इन्द्रः अस्मभ्यम् शिक्षतु** यादृशमन्नं ददातु । अवशिष्टपादद्वयं प्रत्यक्षकृतम् । हे इन्द्र! अस्मभ्यं दातुं धनम् **वि भज** विभक्तं कुरु । यतः **ते** तव **वसु** धनम् **भूरि** बहुलमसंख्यातमतः **तव राधसः** धनस्यैकदेशम् **भक्षीय** भजेय प्राप्नुयाम् ।। ६ ।।

**सायण– अर्थः** स्वामी पालयिता **यः** इन्द्रः **मर्तभोजनं** सर्वैर्मनुष्यैरुपभोज्यमन्नं **दाशुषे** चरुपुरोडाशादीनि दत्तवते यजमानाय **पराददाति** प्रयच्छति सः **इन्द्रः अस्मभ्यं शिक्षतु** तादृशमन्नं ददातु । अवशिष्टपादद्वयं प्रत्यक्षकृतम् । हे इन्द्र! अस्मभ्यं दातुं धनं **वि भज** विभक्तं कुरु । यतः **ते** तव **वसु** धनं **भूरि** बहुलमसङ्ख्यातं अतः **तव राधसः** धनस्यैकदेशं **भक्षीय** भजेय प्राप्नुयाम् ।

परााददाति । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । 'तिङि चोदात्तवति' इति गतेः अनुदात्तत्वम् । दाशुषे । 'दाशृ दाने' । 'दाश्वान् साह्वान्' इति क्वसुप्रत्ययान्तो निपात्यते । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । भक्षीय । 'भज सेवायाम्' । प्रार्थनायां लिङि तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् शबभावः सलोपाभावश्च । 'एकाचः' इति इटप्रतिषेधः । आगमानुदात्तत्वे प्रत्ययस्वर एव शिष्यते । पूर्वपदस्यासमानवाक्यगतत्वात् निघाताभावः 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वचनात् ।। ६ ।।

**सिद्धाञ्जनम्– यः अर्थः** स्वामी य इन्द्रः **मर्तभोजनम्** मर्त्यैरुपभोज्यं, दिव्यमपि मनुष्योपभोगक्षमं धनं **दाशुषे** दत्तवते यजमानाय **परााददाति** यज्ञविरोधिभ्योऽपहृत्य तेषां पराङ्मुखं यथा भवति तथा प्रयच्छति, स **इन्द्रः अस्मभ्यम् शिक्षतु** ददातु अस्मदर्हं धनम् । शिष्टं प्रत्यक्षकृतम् । हे इन्द्र, **विभज** विभागं कुरु यद्यपि सर्वं धनं त्वदीयमेव, तथापि मानुषोपभोगक्षमो भागः दीयतां नः । **ते** तव **वसु** धनं **भूरि** अत्यधिकं भवति । **तव राधसः** दिव्यस्य धनस्य एकदेशं कमप्यंशं **भक्षीय** भजेय लभेयेत्यर्थः ।

दाशुषे–दाशृ दाने । भक्षीय-भज सेवायाम्, प्रार्थनायां लिङ, आर्धधातुकत्वात् छन्दसि शबभावः सलोपाभावश्च ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।**
**सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ।। ७ ।।**
**मदेऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः । सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ।। ७ ।।**

**स्कन्द–** मद इति 'यस्य च भावेन' (पा.२,३,३७) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षण भूतयोग्यक्रियाध्याहारः । **मदेमदे** प्राप्ते । सोमेन मत्तो मत्तस्सन्नित्यर्थः । हिशब्दस्तु पदपूरणः। **नः** अस्मभ्यम् **ददिः** दाता । **यूथा** यूथानि **गवाम्** बह्वीर्गा इत्यर्थः । **ऋजुक्रतुः** ऋजुकर्मा ऋजुप्रज्ञो वा इन्द्रः । परोऽर्धर्चो भिन्नं वाक्यम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता योज्या । यस्त्वं ददिः यूथा गवां सः **सम् गृभाय** सम्यक् गृहाण । **पुरु शता** बहूनि शतानि । **उभयाहस्त्या** उभाभ्यां हस्ताभ्याम् । कस्य पुरु शया । उच्यते । वसु षष्ठ्यर्थे प्रथमैषा । वसूनां धनानाम् । गृहीत्वा च **शिशीहि** श्यतिः संस्कारार्थः । संस्कुरु । दानयोग्यानि कुर्वित्यर्थः । संस्कृत्य च रायः धनानि **आ भर** आहर । देह्यस्मभ्यमित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** सोमस्य **मदेमदे हि** अस्मभ्यं दाता गोयूथानाम् ऋजुकर्मा । स त्वं पुरूणि शतानि धनानि सङ्गृहाण । सङ्गृह्य चोभाभ्यां हस्ताभ्याम् **आ भर** वसूनि । धनेन चास्मान् तीक्ष्णीकुरु ।। ७ ।।

**मुद्गल–** **मदेमदे** सोमपानेन हर्षेहर्षे सति **ऋजुक्रतुः** ऋजुकर्मा स इन्द्रः **नः** अस्मभ्यम् **गवाम् यूथा ददिः हि** गोयूथानां दाता खलु । हे इन्द्र! स त्वम् **पुरु** पुरूणि प्रभूतानि **शता** शतसंख्याकानि । अपरिमितानीत्यर्थः । **वसु** वसूनि धनानि **उभयाहस्त्या** उभाभ्यां हस्ताभ्याम् **सम् गृभाय** अस्मभ्यं दातुं सम्यक् गृहाण । **शिशीहि** अस्मान् तीक्ष्णीकुरु । निशितबुद्धियुक्तान् कुर्वित्यर्थः । **रायः** धनानि हस्तयोः स्थितानि **आ भर** आहर प्रयच्छ ।। ७ ।।

**सायण–** चातुर्विंशिकेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनो 'मदेमदे हि नो ददिः' इति वैकल्पिकोऽनुरूपस्तृचः । 'होत्रकाणाम्' इति खण्डे सूत्रितम्– 'मदेमदे हि नो ददिः सुरूपकृत्नुमूतये' (आश्व.श्रौ.७.४) इति ।

**मदेमदे** सोमपानेन हर्षेहर्षे सति **ऋजुक्रतुः** ऋजुकर्मा स इन्द्रः **नः** अस्मभ्यं **गवां यूथा** यूथानि **ददिः हि** गोयूथानां दाता खलु । हे इन्द्र! स त्वं **पुरु** पुरूणि प्रभूतानि **शता** शतसङ्ख्याकानि अपरिमितानीत्यर्थः । **वसु** वसूनि धनानि **उभयाहस्त्या** उभाभ्यां हस्ताभ्यां **सं गृभाय** अस्मभ्यं दातुं सम्यग्गृहाण । **शिशीहि** अस्मांस्तीक्ष्णीकुरु । निशितबुद्धियुक्तान् कुर्वित्यर्थः । **रायः** धनानि हस्तयोः स्थितानि **आ भर** आहर प्रयच्छ ।

ददिः । 'डुदाञ् दाने' । 'आदृगमहनजनः' इति किप्रत्ययः । यूथा । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । गवाम् । 'सावेकाचः' इति प्राप्तस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः । गृभाय । 'ग्रह उपादाने' । लोटि हौ 'छन्दसि शायजपि' (पा.सू.३.१.८४) इति श्नाप्रत्ययस्य शायजादेशः । 'हृग्रहोर्भः' इति भत्वम् । उभयाहस्त्या । उभयहस्तशब्दादुत्तरस्य तृतीयाद्विवचनस्य 'सुपां सुलुक्' इति ड्यादेशः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । समासान्तोदात्तत्वे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । वसु । 'सुपां सुलुक्' इति विभक्तेर्लुक् । शिशीहि । 'शो तनूकरणे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'आदेचः' इति आत्वम् । 'इत्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । 'ई हल्यघोः' इति धातोः ईत्वम् । पादादित्वात् निघाताभावः । रायः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– मदेऽमदे** पुनः पुनः हर्षे प्रवर्तमाने सति सोमस्वीकरणाद्धेतोः, **ऋजुक्रतुः** ऋजुकर्मा अकुटिलक्रियासम्पन्नः स इन्द्रः **नः** अस्मभ्यं **गवाम् यूथा** गोयूथानि चित्किरण-समूहानित्यर्थः । **ददिः हि** तेषां दाता खलु । हे इन्द्र! **पुरू** पुरूणि बहूनि **शता** शतानि **वसु** वसूनि **उभयाहस्त्या** उभाभ्यां हस्ताभ्यां **संगृभाय** सम्यक् गृहाण अस्मभ्यं दातुम् । **शिशीहि** तीक्ष्णीकुरु 'निशितबुद्धियुक्तान् कुरु' इति साधूक्तं सायणीये । गवां चिद्रश्मिरूपत्वात्, वसुनश्च दिव्यसत्त्वरूपत्वात्, तस्य सर्वस्यादातुं धारयितुं च निशिता बुद्धिरुपयुक्ता आवश्यकी च । साधारणगोधनादेरादानाय निशिता बुद्धिर्नावश्यकी, लोभो दारिद्र्यं वा अलम् । **रायः** धनानि **आभर** आहर अस्मदर्थम् ।

ददिः–डुदाञ् दाने, किप्रत्ययः । यूथा–शेर्लोपश्छन्दसि । गृभाय–ग्रह उपादाने. लोट्, श्नाप्रत्ययस्य शायजादेशः छन्दसि, हृग्रहोर्भ इति भत्वम् । उभयाहस्त्या–उभयहस्तशब्दात् तृतीयाद्विवचनस्य सुपां सुलुगिति ड्यादेशः, पूर्वपदस्य दीर्घत्वम् । शिशीहि–शो तनूकरणे, विकरणस्य श्लुः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**मादयस्व सुते सचा शवसे शूर राधसे ।**
**विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ।। ८ ।।**
**मादयस्व । सुते । सचा । शवसे । शूर । राधसे । विद्म । हि । त्वा । पुरुऽवसुम् ।**
**उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ।। ८ ।।**

**स्कन्द– मादयस्व** तृप्यस्व **सुते सचा** सह सर्वैर्ऋत्विग्भिरभिषुतेऽस्मिन् सोमे । अथवा सचेत्येतन्मादयस्वेत्येतेन सम्बध्यते । सह तृप्यस्व । केन । सामर्थ्यात् स्वसखैर्मरुद्भिः । किमर्थम् । उच्यते । **शवसे** हे **शूर! राधसे** च । आत्मनो बलं प्राप्तुमस्मभ्यं च धनं दातुमित्यर्थः । किञ्च **विद्म हि त्वा** हिशब्दो यस्मादर्थे । यस्माज्जानीमः त्वाम् । **पुरुवसुम्** बहुधनम् । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्मात् **कामान् उप ससृज्महे** उपसृजामः त्वयि निक्षिपामः । यावत्किञ्चिद् याच्यं तत् सर्वं त्वां याचामह इत्यर्थः । यतश्चैतदेवम् अथ एतस्मात्कारणात् **नः** अस्माकम् **अविता** तैस्तैर्धनैस्तर्पयिता भव । तानि धनानि देहीत्यर्थः ।।

**वेङ्कटमाधव– मादयस्व** अस्मान् **सुते** सोमे सहायभूतः बलेन च धनेन च । **विद्म हि** त्वाम् बहुधनम् अतस्त्वयि **कामान्** अभिलषितान् उपसृजामः । **अथ** अस्माकम् **अविता भव** ।।

**मुद्गल–** हे **शूर!** शौर्यवन्निन्द्र! **सुते** सोमेऽभिषुते सति आगत्य **सचा** अस्माकं सखा सन् **मादयस्व** तेन सोमेन तृप्तो भव । किमर्थम् । **शवसे** बलार्थम् **राधसे** अस्माकं धनार्थं च । **त्वा** त्वाम् **पुरुवसुम्** बहुधनम् **विद्म हि** वचं जानीमः खलु । अतः अस्मदीयान् **कामान्** मात्रा गवा वत्सानिव त्वया **उप ससृज्महे** हि । त्वया खल्वेकीकुर्मः । **अथ** अनन्तरम् **नः** अस्माकम् **अविता** अभिलषितफलप्रदानेन रक्षिता भव ।। ८ ।।

**सायण–** हे **शूर!** शौर्यवन्निन्द्र! **सुते** सोमेऽभिषुते सति आगत्य **सचा** अस्माकं सखा सन् **मादयस्व** तेन सोमेन तृप्तो भव । किमर्थम् । **शवसे** बलार्थं **राधसे** अस्माकं धनार्थं च । **त्वा** त्वां **पुरूवसुं** बहुधनं **विद्म हि** वयं जानीमः खलु । अतः अस्मदीयान् **कामान्** मात्रा गवा वत्सानिव त्वया **उप ससृज्महे** हि त्वया खल्वेकीकुर्मः । **अथ** अनन्तरं **नः** अस्माकम् **अविता** अभिलषितफलप्रदानेन रक्षिता भव ।

मादयस्व । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । ससृज्महे । 'सृज विसर्गे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । प्रत्ययाद्युदात्तत्वम् । अत्रापि हिशब्दानुषङ्गात् 'छन्दस्यनेकमपि साकाङ्क्षम्' (पा.सू.७.१.३५) इति निघातप्रतिषेधः ।। ८ ।।

**सिद्धाञ्जनम्–** हे **शूर**! शौर्योपेत, इन्द्र, **सुते** सोमे अभिषुते सति **सचा** सह, अस्माभिः सङ्गतः सन् **मादयस्व** तर्पय, स्वयं **मोदस्व** हर्षय च नः । किमर्थम् ? **शवसे** बलाय **राधसे** धनाय च, सोमस्वीकारेण इन्द्रस्तुष्टः स्वीयं बलं धनं च प्रकटयति । **त्वा** त्वाम् **पुरुवसुम्** बहुधनशालिनं **विद्म हि** जानीमः खलु वयम् । तस्मात् **कामान्** अस्मदीयान् कामान् **उप ससृज्महे** त्वया खल्वेकीकुर्मः, त्वदेकायनाः वयमस्मत्कामान् त्वदधीनान् कुर्मः । अथ ततः परं **नः** अस्माकं **अविता भव** रक्षिता भव त्वम् ।

मादयस्व–मद तृप्तियोगे, चुरादिरात्मनेपदी । ससृज्महे–सृज विसर्गे, विकरणस्य श्लुः ।।

## ऋक्संहिता पदपाठसहिता

**एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।**
**अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ।। ९ ।।**
**एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् । अन्तः । हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः । वेदः । आ । भर ।। ९ ।।**

**स्कन्द– एते ते** तव । साकाङ्क्षत्वात् प्रसादेनेति वाक्यशेषः । तव वा स्वभूताः हे **इन्द्र! जन्तवः** मनुष्याः **विश्वम् पुष्यन्ति वार्यम्** 'वारि' (निघ.१,१२) इत्युदकनाम । तत्र भवम् । यावत् किञ्चिदुदकभवं तत् सर्वं त्वत्प्रभवया वृष्ट्या पुष्णन्तीत्यर्थः । किञ्च **अन्तः हि** अन्तःशब्दोऽत्र तात्स्थ्यात् अन्तस्थे मनसि वर्तते । हिशब्दो यस्मादर्थे । **ख्यः** इति चष्टेः पश्यतिकर्मणः ख्यादेशः । यस्मादत्यन्तभक्तं मनः अन्तस्थं पश्यसि । भक्ततां जानासीत्यर्थः । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्मात् तेषाम् **अदाशुषाम्** स्वभूतम् **नः** अस्माकम् अर्थाय **वेदः** धनम् **आ भर** आहर । अभक्तानां धनमाहृत्य भक्तेभ्यः अस्मभ्यं देहीत्यर्थः ।।

**वेङ्कटमाधव–** अमी तव स्वभूताः मनुष्याः **विश्वम्** धनम् **पुष्यन्ति** । त्वम् **हि** अयजमानानां धनम् ईश्वरः **अन्तः ख्यः** । अन्तःपूर्वः ख्यातिस्तिरोधानार्थः । तेषाम् धनम् अस्मभ्यम् **आ भर** ।। ९ ।।

**मुद्गल–** हे **इन्द्र! ते** तव स्वभूताः एते **जन्तवः** यजमानलक्षणा जनाः **विश्वम्** सर्वम् **वार्यम्** सर्वैर्भजनीयं हविः **पुष्यन्ति** वर्धयन्ति । **अदाशुषाम्** हविषामदातॄणाम् **जनानाम् अन्तः** मध्ये विद्यमानम् **वेदः** धनम् **अर्यः** सर्वेषां स्वामी त्वम् **ख्यः हि** पश्यसि हि । जानासीत्यर्थः । **तेषाम्** अयजमानानाम् **वेदः** धनम् **नः** अस्मभ्यम् **आ भर** आहर, प्रयच्छेति यावत् । अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वात् व्यर्थमेव भवेत् । अतस्तस्य धनस्य सार्थकत्वाय तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः ।। ९ ।।

**सायण–** हे **इन्द्र! ते** तव स्वभूताः **एते जन्तवः** यजमानलक्षणा जनाः **विश्वं** सर्वं **वार्यं** सर्वैः सम्भजनीयं हविः **पुष्यन्ति** वर्धयन्ति । **अदाशुषां** हविषामदातॄणां जनानाम् **अन्तः** मध्ये विद्यमानं **वेदः** धनम् **अर्यः** सर्वेषां स्वामी त्वं **ख्यः हि** पश्यसि हि जानासीत्यर्थः । तेषाम् अयजमानानां **वेदः** धनं **नः** अस्मभ्यम् **आ भर** आहर प्रयच्छेति यावत् । अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वात् व्यर्थमेव भवेत् । अतस्तस्य धनस्य सार्थकत्वाय तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः ।

ख्यः । 'ख्या प्रकथने' । 'अयं दर्शनार्थोऽपि । वर्तमाने छान्दसो लुङ् । 'अस्यतिवक्ति' इत्यादिना च्लेः अङादेशः । 'आतोलोप इटि च' निघातप्रतिषेधः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! ते** तव **एते जन्तवः** इमे जन्मिनः यजमानाः **विश्वम्** सर्वं (उद्देश्यम्) **वार्यम्** वरणीयं (विधेयम्) सम्भजनीयं तव भोग्यं यथा भवति तथा **पुष्यन्ति** वर्धयन्ति । **अर्यः** स्वामी, ईशः सर्वेषां त्वं **जनानाम्** सर्वेषां जन्मिनां **अन्तः** अन्तरं **ख्यो हि** पश्यसि हि जानास्येव । अतः **अदाशुषाम्** अदातॄणां, यजनमकुर्वतां **तेषाम्** अदैव्यानां देवस्वं देवेभ्योऽददतां **वेदः** ज्ञानं कीदृशमिति वेत्सि । **नः** अस्मभ्यं **वेदः** ज्ञानं **आभर** आहर, देहि । स्थूलपक्षे वेदो धनं भवति । अस्मत्पक्षेऽपि धनार्थेऽत्र नानुपपत्तिः । किं तु, तद्धनं

न लौकिकं मानुषं धनम्, यागशत्रुगतं दिव्यं धनम् तत्रापि, देवेभ्योऽर्पणायैव याच्यते, सर्वस्यापि देवस्वतत्, 'कामान् उपससृज्महे' इति हि पूर्वमुक्तम् । तस्मात् न कामचोदनया शत्रुधनप्रार्थना ।

ख्यः–ख्या प्रकथने, दर्शनार्थेऽपि प्रसिद्धः, वर्तमाने छान्दसो लुङ्, अडभावः ।। ९ ।।

।। इति प्रथमाष्टके षष्ठाध्याये द्वितीयो वर्गः ।।

## ।। अथ तृतीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८२)

(६ गोतमो राहुगणः । इन्द्रः । पङ्क्तिः । ६ जगती)

**उपो षु शृणुही गिरो मघवन् मातथा इव ।**
**यदा नः सूनृतावतः कर आदर्थयास इद् योजा न्विन्द्र ते हरी ।। १ ।।**
उपो इति । सु । शृणुहि । गिरः । मघऽवन् । मा । अतथाःऽइव । यदा । नः । सूनृताऽवतः । करः । आत् । अर्थयासे । इत् । योज । नु । इन्द्र । ते । हरी इति ।।

**स्कन्द-** उप इत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । उपगम्य सुष्ठु **शृणुहि** अस्मदीया **गिरः** । हे **मघवन्! मा अतथाः इव** तनु विस्तारे । आगमनविषयश्चात्र विस्तारोऽभिप्रेतः, नान्यः । मा गमनविस्तारं कार्षीः । शीघ्रमागच्छ मा विलम्बिष्ठा इत्यर्थः । इवशब्दस्तु अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः (या.७.१३) इति पदपूरणः । **यदा नः** अस्मान् **सूनृतावतः** 'सूनृता' (निघ.२,७) इत्यन्ननाम । अन्नवतः । **करः** करिष्यसि । यदाऽस्मभ्यमन्नं दास्यसीत्यर्थः । **आत्** तदा । इत्शब्दस्तु पदपूरणः । **अर्थयासे** प्रार्थयेयाः । किम् । सामर्थ्याद्धविः । इदानीं तु निर्धनानामस्माकं स्तुतीरेव केवलाः शृण्वित्यर्थः । तदर्थम् **योज** रथे नियुङ्क्ष्व । **नु** क्षिप्रं हे **इन्द्र! ते** तव स्वभूतौ योग्यो वा **हरी** ।। १ ।।

**वेङ्कटमाधव–** उप एव **शृणुहि** स्तुतीः । **मघवन्!** मा भूस्त्वससत्य इव । **यदा** त्वम् अस्मान् स्तुतिमतः करोषि, अनन्तरमेय त्वं स्तुतीः प्रार्थयसे । एवं तत् तव व्रतम् । **मा** इदानीम् **अतथाः इव** भूः । योजय शीघ्रमश्वाविहाऽऽगमनाय ।। १ ।।

**मुद्गल**– 'उपो षु' इति षड्चं नवमं सूक्तम् । गोतम ऋषिः । अन्त्या जगती । आद्याः पङ्क्त्यः । इन्द्रो देवता ।

हे **मगवन्!** धनवन्निन्द्र । **गिरः** अस्मादीयाः स्तुतीः **उपो** उपैव **सु शृणुहि** उपगत्य सम्यक् शृणु । **अतथाः इव** पूर्वं यथाविधस्त्वं तद्विपरीतः मा भूः । अस्मासु पूर्वं यथाऽनुग्रहबुद्धियुक्तस्तथाविध एव भवेत्यर्थः । अपि च **नः** अस्मान् **सूनृतावतः** प्रियसत्यात्मिका वाक् सूनृता । तथा स्तुतिरूपया वाचा युक्तान् **यदा करः** करोषि । **आत्** अनन्तरं त्वमपि **अर्थयासे इत्** अर्थयस एव याचयस एव न तूदास्से । अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः । अतो हे **इन्द्र! ते हरी** त्वदीयावश्वौ **नु** क्षिप्रम् **योज** रथे योजय ॥ १ ॥

**सायण**– 'उपो षु' इति षढृचं नवमं सूक्तं गोतमस्यार्षमैन्द्रम् । अन्त्या जगती । आद्याः पङ्क्तयः । अनुक्रान्तं च– 'उपो षु षड् जगत्यन्तम्' इति । सूक्तविनियोगो लैङ्गिकः । षोडशिशस्रे आद्या 'सुसंदृशम्' इत्यादिके द्वे ऋचौ च विनियुज्यन्ते । 'अथ षोडशी' इति खण्डे सूत्रितम्– 'उपो षु शृणुही गिरः सुसंदृशं त्वा वयं मघवन्नित्येका द्वे च पङ्क्ती' (आश्व.श्रौ.६.२) इति ।

हे **मघवन्!** धनवन्निन्द्र! **गिरः** अस्मदीयाः स्तुतीः **उपो** उपैव **सु शृणुहि** उपगत्य सम्यक् शृणु । **अतथाइव** पूर्वं यथाविधस्त्वं तद्विपरीतः **मा** भूः । अस्मासु पूर्वं यथानुग्रहबुद्धियुक्तस्तथाविध एव भवेत्यर्थः । अपि च **नः** अस्मान् **सूनृतावतः** । प्रियसत्यात्मिका वाक् सूनृता । तया स्तुतिरूपया वाचा युक्तान् **यदा करः** करोषि **आत्** अनन्तरं त्वमपि **अर्थयासे इत्** अर्थयसे एव याचयसे एव न तूदास्से । अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः । अतो हे **इन्द्र! ते हरी** त्वदीयावश्वौ **नु** क्षिप्रं रथे योजय ।

शृणुहि । 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' इति वचनात् 'उतश्च प्रत्ययात्' इति हेः लुगभावः । अतथाइव । तथेवाचरति तथाति । 'सर्वप्रातिपदिकेभ्य इत्येके' (का.३.१.११.२) इति क्विप् । तथातेः अप्रत्ययः । न तथा इव अतथा इव । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । करः । 'डुकृञ् करणे' । लुङि 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेः अङादेशः । ननु अङः सतिशिष्टत्वात् चित्स्वरेण अन्तोदात्तेन भवितव्यम् । तर्हि लङि व्यत्ययेन शप् । ननु 'डुकृञ्

करणे' इति भूवादौ पठ्यते । अतो व्यत्ययः कस्मात् क्रियते इति चेत् । नैवम् । यस्मादस्य धातोस्तत्र पाठः अनार्षः । तथा हि– 'कः करत्करति' इत्यत्र यदाहतुः न्यासकारहरदत्तौ व्यत्ययेन शप् इति तस्मादस्य धातोर्भूवादौ पाठो नास्तीति गम्यते । किञ्च यद्ययं पठ्येत करत् इत्येवमादिरूपसिद्ध्यर्थं 'कृमृदृरुहिभ्यश्छन्दसि' इति करोतेः अङ्विधानमनर्थकं स्यात् । अस्मात् लङि शपि अस्य रूपस्य सिद्धिः । लङ्लुङोरर्थभेदात् लुङि एतद्रूपसिद्धये कर्तव्यम् अङ्विधानमिति चेन्न । 'छन्दसि लुङ्लङ्लिटः' इति लुङादीनामेकत्र विधानेन अर्थभेदाभावात् इत्यनेन प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः । अतो व्यत्ययेन इति सिद्धम् । अर्थयासे । 'अर्थ याच्ञायाम्' । चुरादिरात्मनेपदी । लेटि आडागमः । योज । 'युजिर् योगे' । ण्यन्तात् लोटि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'अपो ष्वि'ति षड्चं नवमं सूक्तं गोतमस्यार्षं ऐन्द्रम् । पङ्क्तिश्छन्दः पञ्चानाम्, अन्त्यायाः जगती ।

हे **मघवन्!** धनवन्निन्द्र, **गिरः** स्तुतिवाचः अस्मदीयाः **उपो सु शृणुहि** उपगत्य सम्यक् शृणु । **अतथाः** इव अन्यथाभूतः **मा** मा भूः पूर्वविध एव अस्मासु प्रसन्नो वर्तस्व । अपि च **नः** अस्मान् **सूनृतावतः** शुभसत्यवाग्युक्तान् **यदा करः** यदा करोषि **आत्** अनन्तरमेव **अर्थयासे इत्** याचस एव अस्मदीयान्यर्पणानि स्तोत्राणि च प्रतीक्ष्य स्वीकुरुषे । शुभसत्य-वागात्मको मन्त्रवर्णः देवतानुग्रहादृषौ प्रादुर्भवति, इन्द्रादीनां प्रार्थनीयश्च । तस्मात् हे **इन्द्र! ते** तव **हरी** अश्वौ **नु** क्षिप्रं **योज** रथे योजय ।

अतथाःऽइव– अत्र सायणः 'तथेव आचरति, सर्वप्रातिपदिकेभ्य इति क्विप्, तथातेरप्रत्ययः, न तथा इव अतथा इव' । करः– डुकृञ् करणे, लुङि च्लेरङादेशः । अर्थयासे–अर्थ याञ्चायां, चुरादिरात्मनेपदी, लेट्याडागमः । योज–युजिर् योगे, ण्यन्तात् लोटि णिलोपः छन्दसि ।।

## ऋक्संहिता पदपाठसहिता

**अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।**
**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ।। २ ।।**

**अक्षन् । अमीमदन्त । हि । अव । प्रियाः । अधूषत । अस्तोषत । स्वऽभानवः । विप्राः । नविष्ठया । मती । योज । नु । इन्द्र । ते । हरी इति ।। २ ।।**

**स्कन्द–** वृद्धिश्राद्धिकश्रावणेऽस्या ऋचो विनियोगः । **अक्षन्** इति अदेर्भक्षणार्थस्यायं लुङि घस्लादेशः । वृद्धिश्राद्धान्नं भक्षितवन्तः **अमीमदन्त हि** । मादयतिस्तृप्त्यर्थः । हिशब्दस्तु पदपूरणः चार्थे वा । तृप्ताश्च । के । सामर्थ्यात् पितर । कीदृशाः । **प्रियाः** इष्टाः । कस्य । सामर्थ्यादस्माकं भवतो वेन्द्रस्य वा । **अव अधूषत** धूञ् कम्पने । कम्पितवन्तश्च । किम् । अतितृप्त्या वा स्वगात्रमस्मान् वा । परिचर्यविगुण्यभयेन सुष्ठ्वाध्याताः यत्नेन पाऽस्माभिः पारिचरिता इत्यर्थः । **अस्तोषत** स्तुताश्चास्माभिः **स्वभानवः** स्वदीप्तयः । अपराश्रयविभूतय इत्यर्थः । **विप्राः** मेधाविनः । **नविष्ठया मती** मन्यतिरर्चतिकर्मा (निघ.३,१४) । नवतमया स्तुत्या । कृतवृद्धिश्राद्धा यागयोग्या इति समस्तार्थः । एतत् ज्ञात्वाऽस्मद्यज्ञमागन्तुम् **योज** । अथवैव-मन्यथास्या ऋचोऽर्थयोजना । अक्षन्नमीमदन्त च प्रियाः तव । के । सामर्थ्यात्त्वदनुचरा मरुदादयः । मादयित्वा च **अवाधूषत** भयेन कम्पितवन्तः शत्रून् । **अस्तोषत** स्तुताश्चास्माभिः स्वभानवः विप्राश्च । अथवा अयमात्मन एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । स्तुतवन्तश्च वयं भवन्तमित्यर्थः । स्वभानवः भवत्प्रसादादपराश्रयविभूतयः विप्राश्च । सानुचरस्य भवतो वयं यागं स्तुतीश्च कृतवन्त इति समस्तार्थम् । एतत् ज्ञात्वा स्वगृहं गन्तुं योज ।। २ ।।

**वेङ्कटमाधव–** भुक्तवन्त तृप्ताश्चासन् । भुक्तशिष्टाश्च इषः अवधूतवन्तः । **अस्तोषत** त्वाश्च स्वदीप्तयः मेधाविनः नवतरया स्तुत्या तव स्तोतार इति ।। २ ।।

**मुद्गल–** हे **इन्द्र!** त्वया दत्तान्यन्नानि **अक्षन्** यजमाना भुक्तवन्तः । भुक्त्वा च **अमीमदन्त हि** तृप्ताश्चासन् । **प्रियाः** स्वकीयास्तनूः **अव अधूषत** अकम्पयन् आस्वादनहर्षेण । तदनन्तरम् **स्वभानवः** स्वायत्तदीप्तयः **विप्राः** मेधाविनस्ते **नविष्ठया** नवितृतमया **मती** मत्या स्तुत्या **अस्तोषत** अस्तुवन् । अन्यत् पूर्ववत् ।। २ ।।

**सायण–** हे **इन्द्र!** त्वया दत्तानि अन्नानि **अक्षन्** यजमाना भुक्तवन्तः । भुक्त्वा च **अमीमदन्त हि** तृप्ताश्चासन् । **प्रियाः** स्वकीयास्तनूः **अव अधूषत** अकम्पयन् । अतिशयित-रसास्वादनेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन् । तदनन्तरं **स्वभानवः** स्वायत्तदीप्तयः **विप्राः** मेधाविनस्ते **नविष्ठया** नवितृतमया **मती** मत्या स्तुत्या **अस्तोषत** अस्तुवन् । अन्यत्पूर्ववद्योज्यम् ।

अक्षन् । अदेर्लुङि 'लुङ्सनोर्घस्लृ' (पा.सू.२.४.३७) इति घस्लादेशः । 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । 'गमहन' इत्यादिना उपधालोपः । 'खरि च' इति चर्त्वम् । 'शासिवसिघसीनां च' इति षत्वम् । अडागम उदात्तः । अमीमदन्त । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी । लुङिच्लेः चङि णिलोपोपधाह्रस्वत्वद्विर्भावसन्वद्भावेत्वदीर्घाः । अधूषत । 'धूञ् कम्पने' । लुङि सिचि व्यत्ययेन गुणाभावः । यद्वा 'छन्दस्युभयथा' इति सिचः सार्वधातुकत्वेन ङित्त्वात् 'क्ङिति च' इति प्रतिषेधः । अथवा 'धू विधूनने' । तौदादिकः । कुटादिः । अस्मात् कर्मणि लुङि 'गाङ्कुटादिभ्यः' इति सिचो ङित्त्वात् गुणाभावः । नविष्ठया । 'णु स्तुतौ' । करणभूताया अपि स्तुतेः स्वव्यापारे कर्तृत्वात् तृच् । तदन्तात् 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः । मती । 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । 'मन्त्रे वृषेपपचमनः' इति क्तिनः उदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **प्रियाः** देवानां प्रीतिप्रदाः ऋषयः **अक्षन्** भुक्तवन्तः, त्वया प्रसन्नेन अनुगृहीतं दिव्यमन्नं स्वीकृतवन्त इत्यर्थः, अथ **अमीमदन्त हि** तृप्ताश्चाभवन् हि । तृप्ताश्च ते **अवाधूयत** अकम्पयन्, हर्षोद्रेकात् परिस्पन्दयुक्तात्मान आसन् । अथ च ते **स्वभानवः** स्वे स्वीया भानवः रश्मयः येषां ते स्वप्रकाशाः (इदं दिव्यान्नभोजनं इन्द्रदत्तं, न साधारणान्नभोजनं इति बोद्धुं इदमेकं विप्रविशेषणं अलम्) **विप्राः** विपश्चितः **नविष्ठया** नवितृतमया **मती** मत्या **अस्तोषत** अस्तुवन् । अन्यत् पूर्ववत् ।

अक्षन्–अद भक्षणे, लुङि घस्लादेशः, मन्त्रे घसेत्यादिना च्लेर्लुक्, गमहनेत्यादिनोपधालोपः । अमीमदन्त–मद तृप्तियोगे चुरादिरात्मनेपदी । अधूषत–धूञ् कम्पने, लुङ् । नविष्ठया–णु स्तुतौ, ततस्तृच्, तुश्छन्दसीति इष्ठन् । मती–सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि ।**
**प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ।। ३ ।।**
सुऽसंदृशम् । त्वा । वयम् । मघऽवन् । वन्दिषीमहि । प्र । नूनम् । पूर्णऽवन्धुरः । स्तुतः । याहि । वशान् । अनु । योज । नु । इन्द्र । ते । हरी इति ।। ३ ।।

**स्कन्द–** सुखं शोभनो वा यः संदृश्यते स सुसंदृक् तम् **सुसंदृशम् त्वा** त्वाम् **वयम्** हे **मघवन्! वन्दिषीमहि** । स्तुतवन्त इत्यर्थः । एतत् ज्ञात्वा **नूनम्** निश्चयेन । पदपूरणो वा नूनंशब्दः । **पूर्णवन्धुरः** रथस्य सारथिस्थानं वन्धुर इत्युच्यते । तत् पूर्णं यस्य स पूर्णवन्धुरः । मातलिना स्वसारथिनाधिष्ठितरथ इत्यर्थः । **स्तुतः** सन् अस्माभि **प्र याहि वशान् अनु** 'वश कान्तौ' । कान्तान् देशान् प्रति । यत्रेष्टं तत्रेत्यर्थः । मा विलम्बिष्ठाः । किं तर्हि । योज ।।

**वेङ्कटमाधव–** सुष्ठु स्तोतॄन् संपश्यन्तम् **त्वा वयम् मघवन्!** स्तुमः । **प्र याहि** क्षिप्रम् **पूर्णवन्धुरः स्तुतः** स्तोतृभिः मनुष्यान् प्रति । रथः पूर्णवन्धुरो भवति स्थित इन्द्र इति ।।

**मुद्गल–** हे **मघवन्!** इन्द्र! **सुसंदृशम्** सुष्ठु अनुग्रहदृष्ट्या सर्वस्य द्रष्टारम् **त्वा** त्वाम् **वयम् वन्दिषीमहि** स्तुवीमहि स्तुतिकर्तारो भूयास्मेत्याशास्यते । अस्माभिर्वन्दिभिः **स्तुतः** त्वम् **पूर्णवन्धुरः** स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन् **वशान्** अनुकामयमानान् यजमानान् प्रति नूनम् **प्र याहि** अवश्यं प्रतिष्ठस्व । योज इत्यादि पूर्ववत् ।। ३ ।।

**सायण–** महापितृयज्ञे 'सुसंदृशम्' इत्येषाहवनीयोपस्थाने विनियुक्ता । सूत्रितं च– 'आहवनीयं सुसंदृशं त्वेति पङ्क्त्या' (आश्व.श्रौ.२.१९) इति ।

हे **मघवन्!** इन्द्र! **सुसंदृशं** सुष्ठु अनुग्रहदृष्ट्या सर्वस्य द्रष्टारं **त्वा** त्वां **वयं वन्दिषीमहि** स्तवीमहि । स्तुतिकर्तारो भूयास्मेत्याशास्यते । अस्माभिर्वन्दिभिः **स्तुतः** त्वं **पूर्णबन्धुरः** स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन् **वशान्** कामयमानानन्यान् यजमानान्प्रति **नूनं प्रयाहि** अवश्यं प्रतिष्ठस्व । योजेत्यादि पूर्ववत् ।

वन्दिषीमहि । 'वदि अभिवादनस्तुत्योः' । आशीर्लिङ् । 'लिङाशिषि' (पा.सू.३.४.११६) इति तस्य आर्धधातुकत्वेन लसार्वधातुकस्वराभावे प्रत्ययाद्युदात्तत्वम् । मघवन् इत्यस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वे सति पादादित्वात् निघाताभावः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **मघवन्!** इन्द्र, **सुसंदृशम्** सुष्ठु सर्वस्य द्रष्टारं **त्वा** त्वाम् **वयम् वन्दिषीमहि** स्तुतवन्तो भूयास्म । **स्तुतः** तथाऽस्माभिः स्तुतस्त्वं **पूर्णबन्धुरः** सम्पत्पूर्णेन रथेन युक्तो भूत्वा **वशान् अनु** त्वां कामयमानान् ऋषीनन्यान्वा भक्ताननुलक्ष्य **नूनं** अवश्यम्

**प्र याहि** प्रस्थानं कुरु । अस्मादृशस्तुतिभिरभिवर्धितज्योतिर्बलादिसम्पत्कः सन् अन्यान् त्वत्कामाननुग्रहीतुं प्रभवसीत्यर्थः । अन्यत् पूर्ववत् ।

वन्दिषीमहि–वदि अभिवादनस्तुत्योः, आशीर्लिङः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।**
**यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ।। ४ ।।**
सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति । गोऽविदम् । यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति । योज । नु । इन्द्र । ते । हरी इति ।।४।।

**स्कन्द– घ** इति पदपूरणः, एवार्थे वा । **सः** एव **तम्** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यस्तवात्मन आरोहणः तम् । **वृषणम्** वर्षितारम् **रथम् अधि तिष्ठाति** त्वत्प्रसादात्त्वदनुचरभूतः सन् आरोहति । **गोविदम्** सास्नादिमतीनां गवामुदकानां वा लब्धारम् । यः किं करोति । उच्यते । **यः पात्रम् हारियोजनम्** हरी योजनौ यस्य स हरियोजनः इन्द्रः । तद्देवत्यं हारियोजनम् । सोमस्य पूर्णम् हे **इन्द्र! चिकेतति** जानाति । ज्ञानेन चात्र तत्पूर्वकं करणं लक्ष्यते । ज्ञात्वा करोतीत्यर्थः । त्वमपि च तस्यैव यागेषु गन्तुम् योज ।। ४ ।।

**वेङ्कटमाधव– सः** खलु **तम्** त्वदीयम् **रथम्** कामानां वार्षितारं पशूनां लम्भयितारम् अधितिष्ठति । **यः पात्रम्** हारियोजनाख्यं सोमपूर्णं तव हरिवतः प्रज्ञापयति ।। ४ ।।

**मुद्गल– सः घ** स खल्विन्द्रः **वृषणम्** कामाभिवर्षकम् **गोविदम्** गवां लम्भायितारम् **तम् रथम् अधि तिष्ठाति** ईदृशे रथेऽधितिष्ठतु आरुढो भवतु । हे **इन्द्र! यः** रथः **हरियोजनम्** एतत्संज्ञकं धानामिश्रितम् **पूर्णम्** सोमेन पूर्णम् **पानम् चिकेतति** ज्ञापयति, तं रथमधितिष्ठेति पूर्वेणान्वयः । अधिष्ठाय हे **इन्द्र! ते हरी** त्वदीयावश्वौ **नु** क्षिप्रम् **योज** योजय ।। ४ ।।

**सायण– स घ** स खल्विन्द्रः **वृषणं** कामाभिवर्षकं **गोविदं** गवां लम्भयितारं **तं रथम् अधि तिष्ठाति** ईदृशे रथेऽधितिष्ठतु आरूढो भवतु । हे **इन्द्र! यः** रथः **हारियोजनम्** एतत्संज्ञकं धानामिश्रितं **पूर्णं** सोमेन पूर्णं **पात्रं चिकेतति** ज्ञापयति । तं रथमधितिष्ठेति पूर्वेणान्वयः । अधिष्ठाय च त्वदीयावश्वौ क्षिप्रं योजय ।

घ । 'ऋचि तुनुघ' इति दीर्घः । रथम् । 'अधिशीङ्स्तासां कर्म' (पा.सू.१.४.४६) इति अधिकरणस्य कर्मसंज्ञा । तिष्ठतेर्लेटि आडागमः । चिकेतति । 'कित ज्ञाने' । लेटि अडागमः । जुहोत्यादित्वात् शपः श्लुः । 'बहुलं छन्दसीति वक्तव्यम्' (का.७.३.८७.१) इति वचनात् 'नाभ्यस्तस्याचि पिति' इति लघूपधगुणप्रतिषेधो न भवति ।। ४ ।।

**सिद्धाञ्जनम्–** रथो हरी चेन्द्रस्य माधुच्छन्दसे युञ्जन्तीति सूक्ते विचारिताः । 'रथो गतिविशेष' इत्यारभ्य 'इन्द्राधिष्ठानभूते रथे युक्तौ भवतः । अत एव बहुषु मन्त्रवर्णेषु ब्रह्मयुजौ हरी इन्द्रस्य गीतौ' इत्यन्तैर्वाक्यैः मन्त्रवर्णोदाहरणपूर्वकं इन्द्राश्वस्वरूपं उपपादितम् । तत्सर्वमवधेयमत्र रथाश्वप्रसङ्गात् । विशेषतो द्रष्टव्यानि (१.५.४,१०.३, १६.२, २०.२) आसां ऋचां व्याख्यानानि इन्द्राश्वस्वरूपं विवृण्वन्ति । **स घ** स खल्विन्द्रः **वृषणम्** वर्षितारं अभीष्टतेजोबलादेः **गोविदम्** गवां चिद्रश्मिसमूहानां लम्भयितारं **तम्** तथाविधं **रथम्** गति-विशेषसाधनं स्थिरासनस्येन्द्रस्य **अधितिष्ठाति** अधितिष्ठतु अधिरूढो भवतु । हे **इन्द्र! यः** यो रथः **हारियोजनम्** हारि कान्तं योजनं युक्ततया ऐन्द्रविभवानां संमिश्रणं यस्मिन् पात्रे तत् **पूर्णम्** अनूनं **पात्रम्** ऐन्द्रस्य ऐश्वर्यस्य भोग्यस्य निधानभूतं आधारपात्रं **चिकेतति** ज्ञापयति, तं रथमधितिष्ठातीति पूर्वेणान्वयः । अधिष्ठाय क्षिप्रं तवाश्वौ योजय । इन्द्ररथः ऐन्द्रस्य विभवजालस्य निधानं आवहन् द्रष्टॄन् इतरान् ज्ञापयति, रथदर्शनमात्रेण ऐन्द्रविभवनिधानपूर्णपात्रमित आगतं भवतीति जायते ज्ञानमृषेर्द्रष्टुः । 'हारियोजनम्' क्वचिदेव प्रयुक्तोऽयं शब्द ऋक्संहितायाम् । विविधानां इन्द्रस्यैश्वर्याणां संयोजने तेषां साङ्गत्यं इतरेतराविरोधेन निष्पन्नं अत एव 'हारि' तत् कमनीयं (हर्यतिः कान्तिकर्मा) । सायणीयाशयस्तु इन्द्ररथो यजमानस्य गोलाभायागच्छति, तस्मिन् रथे धानामिश्रितं सोमेन पूर्णं पात्रं वर्तते । हारियोजनमिति संज्ञा उक्तलक्षणस्य भोज्यस्तेति ।

अत्रेदं वक्तव्यम् । 'अक्षन्नमीमदन्त' इत्यत्र इन्द्रदत्तमन्नं भुक्तवन्तो यजमानाः सन्तृप्तिभरेण शरीराण्यकम्पयन् 'अधूषत, अस्तोषत' किल सायणव्याख्यानुसारेण । तदनुसारेण पुनरिन्द्रो रथमारुह्य ब्राह्मणानां समाराधनाय 'हारियोजनं पात्रं' आहरति इति कर्मठव्याख्याधोरणी । स्थूलधियामपि दुर्ग्रहेयं स्थूलता ।

घ–ऋचि तु-नु-घेति दीर्घः । चिकेतति–कित ज्ञाने, लेट्याडागमः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।**
**तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ॥ ५ ॥**
युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतो इति शतऽक्रतो । तेन । जायाम् । उप । प्रियाम् । मन्दानः । याहि । अन्धसः । योज । नु । इन्द्र । ते । हरी इति ॥

**स्कन्द–** **युक्त ते अरतु** रथस्य **दक्षिणः** दक्षिणपार्श्वस्थो हरिः, **उत सव्यः** हे **शतकतो** । **तेन** सव्येन दक्षिणेन च हरिणा तद्युक्तेन वा रथेनात्मीयाम् **जायाम्** प्रियाम् **उप याहि मन्दानः** भूतेऽयं वर्तमानकालप्रत्ययो द्रष्टव्यः । तृप्तः । केन । उच्यते । **अन्धसः** तृतीयार्थे षष्ठ्येषा । सोमलक्षणेनान्नेन । मा च विलम्बिष्ठाः । किं तर्हि । योज ॥ ५ ॥

**वेङ्कटमाधव–** **युक्तः ते अस्तु** दक्षिणपाश्र्वस्थोऽश्वः, अपि च सव्यपाश्र्वस्थः । **तेन** रथेनेहागतः पीतसोमः सन् अभिमताम् इन्द्राणीं सोमेन तृप्यन् उपगच्छ ॥ ५ ॥

**मुद्गल–** हे **शतक्रतो** । बहुकर्मन्निन्द्र! **ते** त्वदीये रथे **दक्षिणः** दक्षिणपाश्र्वस्थोऽश्वः **युक्तः अस्तु** । **उत** अपि च **सव्यः** वामपाश्र्वस्थोऽपि युक्तोऽस्तु । **तेन** रथेन **अन्धसः** सोमलक्षणस्यान्नस्य पानेन **मन्दानः** मत्तस्त्वम् **प्रियाम्** प्रीणयित्रीम् **जायाम् उप याहि** । सा यत्र वर्तते तत्र गच्छेत्यर्थः । तदर्थं हे **इन्द्र!** त्वदीयावश्वौ रथे क्षिप्रं योजय । अनयोत्तरया च पीतसोमस्येन्द्रस्य गृहं प्रति प्रस्थानं प्रतिपाद्यते ॥ ५ ॥

**सायण–** हे **शतक्रतो!** बहुकर्मवन्निन्द्र! **ते** त्वदीये रथे **दक्षिणः** दक्षिणपार्श्वस्थोऽश्वः **युक्तः अस्तु** । **उत** अपि च **सव्यः** वामपार्श्वस्थोऽपि युक्तः अस्तु । **तेन** रथेन **अन्धसः** सोमलक्षणस्यान्नस्य पानेन **मन्दानः** मत्तस्त्वं **प्रियां** प्रीणयित्रीं **जायाम् उप याहि** । सा यत्र वर्तते तत्र गच्छेत्यर्थः । तदर्थं हे इन्द्र! त्वदीयावश्वौ रते क्षिप्रं योजय । अनयोत्तरया च पीतसोमस्येन्द्रस्य स्वगृहं प्रति प्रस्थानं प्रतिपाद्यते ।

मन्दानः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । लिटः कानच् । द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यम्' इति द्विर्वचनाभावः । अन्धसः । 'अद भक्षणे' । 'अदेर्नुम् धश्च' (उ.सू.४.६४५) इति असुन्, धातोः नुमागमो धकारान्तादेशश्च ॥ ५ ॥

**सिद्धाञ्जनम्**– हे **शतक्रतो!** बहुकर्मकारिन्निन्द्र, **ते** तव **दक्षिणः** दक्षिणपक्षः **युक्तः अस्तु** रथाश्वयोगवान् भवतु । **उत** अपि च **सव्यः** वामभागोऽपि तथा रथाश्वयुक्तो भवतु, प्रयाणाय सन्नद्धो भवेत्यर्थः । **तेन** रथेन **अन्धसः** सोमस्य पानेन **मन्दानः** मोदमानः सन् **प्रियाम्** प्रीणयित्रीं **जायां उप याहि** उपेत्य गच्छ । इन्द्रस्य शक्तिरिन्द्राणीति प्रसिद्धा वेदे । तथा वरुणस्य वरुणानी अग्नेरग्नायीति च । एताः स्त्रियः पृथगात्मतया निर्दिष्टाः क्वचित् (१.२२.१२), सर्वत्रेमाः स्वभर्तृकार्यनिर्वाहिण्य इति बोध्यम् । अत्र स्वशक्त्या रन्तुं युक्तो भवेतीन्द्रमाह ऋषिः । अन्यत् पूर्ववत् ।

मन्दानः–मदि स्तुतिमोदेत्यादिषु, लिटः कानच् । अन्धसः–अद भक्षणे, अदेर्नुम् धश्चेत्यसुन् ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः ।**
**उत् त्वा सुतासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदः ।। ६ ।।**
**युनज्मि । ते । ब्रह्मणा । केशिना । हरी इति । उप । प्र । याहि । दधिषे । गभस्त्योः । उत् । त्वा । सुतासः । रभसाः । अमन्दिषुः । पूषण्ऽवान् । वज्रिन् । सम् । ऊँ इति । पत्न्या । अमदः ।।**

**स्कन्द**– **युनज्मि ते** तव स्वभूतेन स्तुतिलक्षणेन ब्रह्मणा तृतीयानिर्देशात् स्तुवन्निति वाक्यशेषः । **केशिना** केशवन्तौ हरी । ताभ्यां युक्ताभ्यां स्वगृहं प्रति **उप प्र याहि** । कस्मात् । उच्यते । यस्मात् **दधिषे** धारयसि । किम् । सामर्थ्यात् 'नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम्' (ऋ.१,८१,४) इत्यादिषु दर्शनाच्च वज्रम् । क । **गभस्त्योः** बाहुनामैतत् (निघ.२,४) । इह तु तत्सम्बन्धात् हस्तयोर्वर्तते । यस्माद्वज्रहस्तोऽसि । वज्रहस्तत्वाच्च न ते कश्चिद्गमनप्रतिबन्धे वर्तितुं शक्नोतीत्यर्थः । यस्माच्च **त्वा** त्वाम् **सुतासः** अभिषुताः अस्मदीयाः सोमाः **रभसाः** । महन्नामैतत् (निघ.३,३) महान्तः । **उत् अमन्दिषुः** उन्मदितवन्तः । स्त्रीसम्भोगाभिलाषिणं कृतवन्त इत्यर्थः । गत्वा च **पूषण्वान्** पूषन्शब्दोऽत्र पुष्टिवचनः । अस्मदीयैः सोमैरुत्पादितबलः सन्नित्यर्थः । हे **वज्रिन्! सम् उ पत्न्या अमदः** उकारः पदपूरणः । पत्नीशब्दोऽपि भार्या-वचनः । स्वभार्यया सह सममदः सम्मोदस्व । क्रीडेत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** 'उपो षु शृणुहि' (ऋ.१,८२,१) इत्यादिना मन्त्रेण तव अश्वौ रथे योजयामि प्रशस्तकेशौ । ताभ्यां त्वम् **उप प्र याहि** । त्वं हि स्वहस्तयोः धारयसि धनम् । त्वाम् सुताः सोमा तीव्राः **उत् अमन्दिषुः** । स त्वं पूष्णा **पत्न्या** सह माद्येति । ६ ॥

**मुद्गल–** हे **इन्द्र! केशिना** केशयुक्तौ शिखवन्तौ **ते हरी** त्वदीयावश्वौ **ब्रह्मणा** स्तोत्ररूपेण मन्त्रेण **युनज्मि** रथे संयोजयामि । **तेन** रथेन **उप प्र याहि** त्वद्गृहमुपगच्छ । **गभस्त्योः** बाह्वोरश्वबन्धकान् रश्मीन् **दधिषे** धारयस्व । **त्वा** त्वाम् **सुतासः** यज्ञेऽभिषुताः सोमाः **रभसाः** वेगवन्तः । तीव्राः क्षिप्रं मदकारिण इत्यर्थः । **उत् अमन्दिषुः** उत्कृष्टमदयुक्तमकार्षुः । हे **वज्रिन्!** अतस्त्वं स्वगृहं गत्वा **पूषण्वान्** सोमपानजनितया पुष्ट्या युक्तः सन् **पत्न्या** स्वभार्यया सह **सम् अमदः** सम्यगेव तृप्तो भव ॥ ६ ॥

**सायण–** अन्त्येष्वहः सु हारियोजनस्य 'युनज्मि' इत्येषा याज्या । सूत्रितं च– 'युनज्मि ते ब्रह्मणा केशिना हरी सति याज्यानुवाक्ये अन्त्येष्वहः सु' (आश्व.श्रौ.६.११) इति ॥

हे इन्द्र! **केशिना** केशयुक्तौ शिखावन्तौ **ते हरी** त्वदीयावश्वौ **ब्रह्मणा** स्तोत्ररूपेण मन्त्रेण **युनज्मि** रथे संयोजयामि । तेन रथेन **उप प्र याहि** त्वद्गृहमुपगच्छ । **गभस्त्योः** । बाहुनामैतत् । बाह्वोरश्वबन्धकान् रश्मीन् **दधिषे** धारयस्व । **त्वा** त्वां **सुतासः** यज्ञेऽभिषुताः सोमाः **रभसाः** वेगवन्तः । तीव्राः क्षिप्रं मदकारिण इत्यर्थः । **उत् अमन्दिषुः** उत्कृष्टमदयुक्तमकार्षुः । हे **वज्रिन्!** अतस्त्वं स्वगृहं गत्वा **पूषण्वान्** । अत्र पूषन्शब्दः पुष्टौ वर्तते । 'पुष्टिर्वै पूषा पुष्टिमेवावरुन्धे' (तै.ब्रा.२.७.२.१) इति श्रुतेः । सोमपानजनितया पुष्ट्या युक्तः सन् **पत्न्या** स्वभार्यया सह **समु अमदः** सम्यगेव तृप्तो भव ।

केशिना । केशशब्दात् मत्वर्थीय इनिः । 'सुपां सुलुक्' इति विभक्तेः आकारः । रभसाः । अर्शआदित्वात् अच् । अमन्दिषुः । व्यत्ययेन परस्मैपदम् । पूषण्वान् । 'पुष पुष्टौ' । 'श्वनुक्षन्' इत्यादौ पूषन्निति निपात्यते । तच्चात्र भावसाधनं द्रष्टव्यम् । पूषास्यास्तीति पूषण्वान् । 'मादुपधायाः' इति मतुपो वत्वम् । नलोपे 'अनो नुट्' (पा.सू.८.२.१६) इति नुट् । 'ह्रस्व-नुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । अमदः 'मदी हर्षे' । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लङ् । श्यनि प्राप्ते व्यत्ययेन शप् ॥ ६ ॥

**सिद्धाञ्जनम्–** हे इन्द्र! **केशिना** केशवन्तौ शिखावन्तौ ज्वलितौ, अन्यत्र स्थूलकृत्यापेक्षया एवं व्याख्यातम्– 'केशिनौ केशैः मशकमक्षिकादयः तामस्यः शक्तयो विधूयन्ते'' इति । अत्रापि ज्वलितैस्तामस्यश्शक्तयो विधूयन्त इति उपपद्यते । **ते हरी** तवाश्वौ **ब्रह्मणा** मन्त्रेण हार्दवागात्मना स्तोत्रेण **युनज्मि** योजयामि, ऋषिभिः मन्त्रवाचा रथाश्वयोगो निरुह्यत इति मन्त्रवर्णाः प्रथयन्ति । ते च प्रागुदाहृताः, तथा आर्भवसूक्ते (१.२०.२) 'वचोयुजा ततक्षुर्मनसा हरी' इत्यत्र व्याख्याऽवधेया । **गभस्त्योः** बाह्वोः **दधिषे** धारयस्व, अत्र कर्मपदं नोक्तं स्थूलार्थस्यावकाशाय । अतः 'अश्वबन्धकान् रश्मीन्' इति सायणः, ज्योतिर्मयस्येन्द्रस्य बाहू अपि तैजसौ, गभस्तिः रश्मिवाचकोऽपि भवति वेदे भाषायामिव । **अप प्र याहि** उपेत्य प्रस्थानं कुरु तव प्रियां प्रति । **त्वा** त्वाम् **सुतासः** अभिषुताः सोमाः **रभसाः** वेगेन तीव्रा इत्यर्थः उत् **अमन्दिषुः** मदयुक्तमकार्षुः । हे **वज्रिन्!** वज्रवन्निन्द्र, **पूषण्वान्** पूषा पुष्टिः पुष्ट्या सोमस्वीकारेण जनितया युक्तः सन् **पत्न्या** तव प्रियया शच्या सह **सम् उ अमदः** सम्यगेव तृप्तो भव ।

रभसाः–अर्शआदित्वादच् । अमन्दिषुः–व्यत्ययेन परस्मैपदम् । पूषण्वान्–पूषात्र भावसाधनं, पुष पुष्टौ, श्वन्नुक्षन् पूषन् इति निपात्यते, तद्वान् । अमदः–मदी हर्षे, लङ् प्रार्थनायां छन्दसि, श्यनि प्राप्ते शप् ।। ६ ।।

।। इति प्रथमाष्टके षष्ठाध्याये तृतीयो वर्गः ।।

।। अथ चतुर्थो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८३)

(६ गोतमो राहुगणः । इन्द्रः । जगती)

**अश्वा॑वति प्रथ॒मो गोषु॑ गच्छति सुप्रा॒वीरि॑न्द्र॒ मर्त्य॒स्तवो॒तिभिः॑ ।**
**तमित् पृ॑णक्षि॒ वसु॑ना॒ भवी॑यसा॒ सिन्धु॒मापो॒ यथा॒भितो॒ विचे॑तसः ।। १ ।।**
अश्व॑ऽवति । प्र॒थमः॑ । गोषु॑ । ग॒च्छ॒ति॒ । सु॒प्र॒ऽअ॒वीः । इ॒न्द्र॒ । मर्त्यः॑ । तव॑ । ऊ॒तिऽभिः॑ । तम् । इत् । पृ॒ण॒क्षि॒ । वसु॑ना । भवी॑यसा । सिन्धु॑म् । आपः॑ । यथा॑ । अ॒भितः॑ । विऽचे॑तसः ।। १ ।।

**स्कन्द– अश्वावति** अश्वसहिते । क्व । सामर्थ्यात् अन्ने । प्रथमः अग्र्यः । **गोषु च गच्छति** प्राप्नोति । अश्वसहितमन्नं गाश्च सर्वप्रथमं लभत इत्यर्थः । **सुप्राचीः** शोभनः **प्राविता** रक्षिता त्वं यस्य स सुप्रावीः । हे **इन्द्र! मर्त्यः** मनुष्यः **तव ऊतिभिः** पालनैः । तृतीयानिर्देशात् पाल्यमान इति वाक्यशेषः । यस्त्वयाऽऽत्मीयैः पालनैः पाल्यत इत्यर्थः । **तम्** एव त्वम् **पृणक्षि** पृची सम्पर्केऽन्यत्र । इह तु सामर्थ्यात् पूरणार्थः । पूरयसि । **वसुना** धनेन । **भवीयसा** भूयसा बहुतरेण । **सिन्धुम् आपः यथा** सिन्धुर्नदी, तां यथा आपः **अभितः विचेतसः** विविधप्रज्ञानाः पूरयन्ति तद्वत् ।। १ ।।

**वेङ्कटमाधव– अश्वावति** गृहे प्रथममेव **गोषु गच्छति** सुष्ठु प्ररक्ष्यमाणः **इन्द्र! मर्त्यः तव** रक्षणैः । **तम्** एव त्वं पूरयसि धनेन बहुतरेण । **सिन्धुम् आपः यथा** विविधं ज्ञायमाना नानादिग्भ्यः समागताः **अभितः** परयन्ति ।। १ ।।

**मुद्गल–** 'अश्वावति' इति षड्टचं दशमं सक्तम् । गोतम ऋषिः । जगती छन्दः । इन्द्रो देवता ।

हे **इन्द्र!** यः **मर्त्यः** मनुष्यः **तव ऊतिभिः** त्वदीयैः रक्षणैः **सुप्रावीः** सुष्ठु प्ररक्षितो भवति । स मर्त्यः **अश्वावति** बहुभिरश्वैर्युक्ते गृहे वर्तमानः **गोषु** प्राप्तव्येषु **प्रथमः गच्छति** । सर्वेभ्यो यजमानेभ्यः पूर्वमेव गोमान् भवतीत्यर्थः । त्वम् **तम् इत्** तमेव पुरुषम् **भवीयसा** बहुतरेण शतसहस्रादिसंख्यायुक्तेन **वसुना** धनेन **पृणक्षि** सम्पृक्तं सम्पूर्णं करोषि । दृष्टान्तः **विचेतसः** विशिष्टज्ञानहेतुभूताः **आपः यथा अभितः** सर्वासु दिक्षु **सिन्धुम्** समुद्रं पूरयन्ति तद्वत् ।।

**सायण–** 'अश्वावति' इति षड्टचं दशमं सूक्तं गोतमस्यार्षमैन्द्रं जागतम् । तथा चानुक्रान्तम्– 'अश्वावति जागतम्' इति । अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिशस्त्रे इदं सूक्तम् । सूत्रितं च– 'अश्वावति प्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या' (आश्व.श्रौ.६.४) इति ।।

हे **इन्द्र!** यः **मर्त्यः** मनुष्यः तवोतिभिः त्वदीयैः रक्षणैः **सुप्रावीः** सुष्ठु प्ररक्षितो भवति स मर्त्यः **अश्वावति** बहुभिरश्वैर्युक्ते गृहे वर्तमानः **गोषु** प्राप्तव्येषु **प्रथमः गच्छति** । सर्वेभ्यो यजमानेभ्यः पूर्वमेव गोमान् भवतीत्यर्थः । त्वं **तमित्** तमेव पुरुषं **भवीयसा** बहुतरेण भवितृतमेन वा शतसहस्रादिसङ्ख्यायुक्तेन **वसुना** धनेन **पृणक्षि** संपृक्तं सम्पूर्णं करोषि । तत्र दृष्टान्तः । **विचेतसः** विशिष्टज्ञानहेतुभूताः **आपः यथा अभितः** सर्वासु दिक्षु **सिन्धुं** समुद्रं पूरयन्ति तद्वत् ।

अश्वावति । 'मन्त्रे सोमाश्व' इति मतौ दीर्घत्वम् । सुप्रावीः । 'अवितृस्तृतन्त्रिभ्य ईः' (उ.सू.३.४३८) इति अवतेः ईकारप्रत्ययः । ऊतिभिः । 'ऊतियूति' इत्यादिना क्तिनः उदात्तत्वम् । पृणक्षि । 'पृची सम्पर्के' । रौधादिकः । भवीयसा । बहुशब्दात् ईयसुनि 'बहोर्लोपो भू च बहोः' इति बहुशब्दस्य भूभावः ईयसुनः ईकारलोपश्च । अत्र तु छान्दसत्वात् ईकारलोपो न क्रियते भूभावश्च क्रियते । अथवा भवितृशब्दात् 'तुश्छन्दसि' इति ईयसुन् । 'तुरिष्ठेमेयःसु' इति तृलोपः ।। १ ।।

**सिद्धाञ्जनम्–** 'अश्वावती'ति षडृचं दशमं सूक्तम्, गोतमस्यार्षं ऐन्द्रं जागतम् ।

हे **इन्द्र!** यो **मर्त्यः** मनुष्यः **तव ऊतिभिः** त्वदीयैर्वर्धनैः **सुप्रावीः** सुष्ठु प्रवर्धितो भवति स **अश्वावति** बह्वश्वयुक्ते स्थाने प्राणबलभूयिष्ठे पदे वर्तमानः सन् **गोषु प्रथमो** गच्छति चिद्रश्मिसम्पन्नानामग्रेसरो भवतीत्यर्थः । अश्वः प्राणबलक्रियावेगभोगादिकं सङ्केतयति, गौः ज्ञानकिरणम् । यस्य शरीरे प्राणबलसमृद्धिः तस्य विशिष्टा योग्यता ज्ञानकिरणादानाय । **तमिन्** तमेव क्रियाबलज्ञानबलसम्पन्नं पुरुषं **भवीयसा** बहुतरेण (बहोर्भूभावः) **वसुना** धनेन दिव्येन **पृणक्षि** पूरयसि, सम्पृक्तं करोषीति सायणः, तादृशे पुरुषे त्वदीयधनवृष्टिं कुरुषे । तत्र दृष्टान्तः– **यथा आपः अभितः** सर्वतः सिन्धुम् नदीं पूरयन्ति तद्वत् । कीदृश्य आपः? **विचेतसः** विशिष्टज्ञानहेतुभूता इति सायणः । अत्र सङ्केतार्थो दृष्टान्ते नोपपद्यते, अयं साङ्केतिकश्चेत् अप्छब्दप्रयोगः सम्मतः स्यादस्माकमयमर्थः । कथं भौतिकोदकानां ज्ञानहेतुभूतत्वमुच्यते? विस्पष्टं ज्ञाताः, प्रत्यक्षं दृश्यमाना आपः इति कस्यचिदूहः । कथं कर्मण्यर्थे शब्दरूपनिष्पत्तिरिति कष्टम् । अत्रैके नव्याः 'विचेतसः' ज्ञानशून्याः विगतचेतस्त्वात् इति व्याचक्षते । तर्हि यथा कथञ्चित् समर्थयितव्यमेवम्– यथा 'विचेतसः' जडा अपि सिन्धुमभितः पूरयन्ति, तथा अजडानि प्रज्ञाविशेषशालीनि ऐन्द्राणि वसूनि इन्द्रः उपयुज्य तैर्मर्त्यं पृणक्ति इति । एवं 'विचेतसः' इति विशेषणस्य प्रयोजनमुन्नेयमित्यस्माकमूहमात्रम् ।

अश्वावति–मन्त्रे सोमाश्वेति मतौ दीर्घत्वम् । सुप्रावीः–अवितृस्तृतन्त्रिभ्य ईरिति अवतेरीकारप्रत्ययः । भवीयसा–बहुशब्दादीयसुनि बहुशब्दस्य भूभावः, ईयसुन ईकारलोपाभावः छान्दसः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः ।**
**प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इव ।। २ ।।**
आपः । न । देवीः । उप । यन्ति । होत्रियम् । अवः । पश्यन्ति । विऽततम् । यथा । रजः । प्राचैः । देवासः । प्र । नयन्ति । देवऽयुम् । ब्रह्मऽयुम् । ब्रह्मऽप्रियम् । जोषयन्ते । वराःऽइव ।। २ ।।

**स्कन्द–** 'तमित् पृणक्षि' इति तच्छब्दः पूर्वस्या ऋच इहानुषक्तव्यः । तमेव **आपः न देवीः** यथा एकधनालक्षणा आपो देव्यः **होत्रियम्** होतुः स्वभूतं चमसमुपगच्छन्ति तद्वत् **उप यन्ति** सेवार्थमुपगच्छन्ति । के । सामर्थ्यात् सर्वमनुष्याः । अथवा 'तस्मिन् पृणक्षि' इत्यनुषक्तव्यः तं शब्द इहार्थात् षष्ठ्यन्तो विपरिणमयितव्यः । आपो नेति नशब्द उपरिष्टादुपचार उपमार्थीयत्वात्, अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः (या.७.३१) इति पदपूरणः। तस्यैव एकधनालक्षणा आपो होतृचमसमुपगच्छन्ति । स एव सोमेन यजत इत्यर्थः । तमेव च **अवः** अधस्तात् स्थिताः सर्वमनुष्या उपरि वर्तमानम् **पश्यन्ति** । कथम् । **विततम् यथा रजः** ज्योती रज उच्यते । यथेदमादित्याख्यं विततं ज्योतिः पश्यन्ति तद्वत् । तमेव आदित्यसदृशं सर्वमनुष्याः पश्यन्तीत्यर्थः । तमेव **प्राचैः** प्रगमनैः **देवासः प्र नयन्ति** प्रकर्षेण नयन्ति । क । स्वर्गे वा इष्टेषु वा धनादिषु । स्वर्गं धनानि वा प्रापयन्तीत्यर्थः । **देवयुम्** देवकामिनम् । **ब्रह्मप्रियम्** स्तुतिप्रियम् । नित्यं स्तोतारमित्यर्थः । **जोषयन्ते** सेवन्ते च । **वराः इव** यथा वराः परया प्रीत्या वधूः सेवन्ते तद्वत् ।। २ ।।

**वेङ्कटमाधव–** **आपः** इव देव्यः प्रवणम् **होत्रियम्** धिष्ण्यं देवाः स्तोत्रश्रवणार्थमुपगच्छन्ति । अधस्तात् **पश्यन्ति विततम् यथा** तेजोऽधोमुखं भवति । प्राचीनश्च **प्र नयन्ति** देवकामं देवाः, स्तोत्रप्रियं मनुष्यं तं सेवन्ते **वराः** इव कन्याः ।। २ ।।

**मुद्गल–** **होत्रियम्** होतुः स्वभूतं चमसम् **देवीः** देव्यो द्योतमानाः **आपः न** यथा आपः **उप यन्ति** उपगच्छन्ति तद्वदुपरि वर्तमाना देवा एतमेव चमसम् **अवः** अवस्तात् **पश्यन्ति** । होतृचमसे अस्माकं सोमाभिषवाय आपः पूरिता इति तेषां दृष्टिरप्यस्मिन् संलग्नाऽभूत् । दृष्टान्तः । **विततम्** विस्तीर्णम् **रजः** ज्योतिः सूर्यसम्बन्धि **यथा** निरन्तरं **अवः** अवस्तात् पतति तद्वत् ।

**देवयुम्** देवान् कामयमानमेतं चमसम् **प्राचैः** प्राचीनम् उत्तरवेद्यभिमुखं होमकाले **प्र नयन्ति** होमर्थे प्रणीतम् **ब्रह्मप्रियम्** ब्रह्मणा सोमलक्षणेनान्नेन प्रीतं सन्तृप्तम्, पूरितमित्यर्थः । **जोषयन्ते देवासः** सर्वे देवास्तं चमसं सेवन्ते । **वराः इव** कन्यकाम् । यथा वराः ममेयं भविष्यति ममेयं भविष्यतीति कन्यकां सेवन्ते, एवं देवा अपि ममायं सोमो ममायं सोम इत्यस्य पार्श्वे वर्तन्त इत्यर्थः । एवमपोनप्त्रीयविनियोगानुसारेण योजितं मन्त्रस्यानुष्ठेयार्थप्रकाशकत्वात् । यदा तु रात्रिपर्यायेऽस्य विनियोगस्तदा त्वेवं व्याख्येयम् । हे **इन्द्र!** देव्यः आपो यथा निम्नदेशमुपगच्छन्त्येवं देवास्त्वदीयं स्तोत्रं शुश्रूषमाणा होत्रियं होतृसम्बन्धि धिष्ण्यस्थानमुपगच्छन्ति । उपगत्य चावस्ताद् यथावत् पश्यन्ति विततं ज्योतिः । देवयुं देवानात्मन इच्छन्तमेनं शंसितारमागताः सर्वे देवाः प्राचीनं प्रणयन्ति अग्रतो धारयन्ति । ब्रह्मप्रियं स्तोत्रप्रियं त्वां शंसन्तं वराः कन्यका इव सेवन्ते ।। २ ।।

**सायण–** अपोनप्त्रीये होतृचमसेऽद्भिः पूर्यमाणे 'आपो न देवीः' इत्येषानुवक्तव्या । सूत्रितं च– 'आपो न देवीरुप यन्ति होत्रियमिति समाप्य' (आश्व.श्रौ.५.१) इति । ब्राह्मणं च भवति– 'आपो न देवीरुप यन्ति होत्रियमिति होतृचमसे समवनीयमानास्वन्वाह' (ऐ.ब्रा.२.२०) इति ।

**होत्रियं** होतुः स्वभूतं चमसं **देवीः** देव्यो द्योतमानाः **आपो न** यथा आपः **उप यन्ति** उपगच्छन्ति तद्वदुपरि वर्तमाना देवा एतमेव चमसम् **अवः** अवस्तात् **पश्यन्ति** । होतृचमसे अस्माकं सोमाभिषवाय आपः पूरिता इति तेषां दृष्टिरप्यस्मिन् संलग्नाभूत् । तत्र दृष्टान्तः । **विततं** विस्तीर्णं **रजः** ज्योतिः सूर्यसम्बन्धि यथा निरन्तरमवस्तात् पतति तद्वत् । **देवयुं** देवान् कामयमानमेतं चमसं **प्राचैः** प्राचीनं यद्वा प्राञ्चैः प्रगमनैः उत्तरवेद्यभिमुखं होमकाले **प्र नयन्ति** । होमार्थे प्रणीतं **ब्रह्मप्रियं** ब्रह्मणा सोमलक्षणेनान्नेन प्रीतं संतृप्तं पूरितमित्यर्थः । **जोषयन्ते** सर्वे देवास्तं चमसं सेवन्ते । **वराइव** कन्यकाम् । यथा वरा ममेयं भविष्यति ममेयं भविष्यतीति कन्यकां सेवन्ते एवं देवा अपि ममायं सोमो ममायं सोम इत्यस्य पार्श्वे वर्तन्ते इत्यर्थः । एवम् अपोनप्त्रीयविनियोगानुसारेण योजितं मन्त्रस्यानुष्ठेयार्थप्रकाशकत्वात् । यदा तु रात्रिपर्यायेऽस्या विनियोगः तदा त्वेवं व्याख्येयम् । हे इन्द्र! देव्य आपो यथा निम्नदेशमुपगच्छन्ति एवं देवासवदीयं स्तोत्रं शुश्रूषमाणाः होत्रियं होतृसम्बन्धि धिष्ण्यस्थानमुपगच्छन्ति । उपगत्य च अवस्तात् पश्यन्ति विततं ज्योतिरिव । देवयुं देवानात्मन इच्छन्तमेतं शंसितारमागताः सर्वे देवाः प्राचीनं प्र णयन्ति अग्रतो धारयन्ति । ब्रह्मप्रियं स्तोत्रप्रियं त्वां शंसन्तं वराः कन्यका इव सेवन्ते ।

होत्रियम् । होतृशब्दात् तस्येदमर्थे घप्रत्ययः । अवः । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इति असिप्रत्ययान्तोऽन्तोदात्तः । प्राचैः । उच्चैर्नीचैरितिवदव्ययम् । यद्वा प्रपूर्वात् अञ्चतेः 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति परिगणनस्योपलक्षणार्थत्वात् भावे कप्रत्ययः । 'अनिदिताम्' इति नलोपः । जोषयन्ते । 'जुषी प्रीतिसेवनयोः' । स्वात्मनः प्रयोज्यत्वात् हेतुमति णिच् ।। २ ।।

**सिद्धाञ्जनम्–** अस्यामृचि, विशेषत उत्तरस्यामृचि च विशेष्यमनुक्त्वा विशेषणमात्रं उक्तं तत्र तत्र । रहस्यरक्षणाय कथञ्चित् स्थूलार्थोपपादनाय च ऋषिभिरेव बहुषु मन्त्रेषु सूक्तेष्वपि गीतम् । **होत्रियम्** होतृसम्बन्धि स्थानं, चमसमिति स्थूलं, तर्हि शरीरमेव सङ्केतितम् । **देवीः** देव्यः दिव्याः शक्तयः **उप यन्ति** उपगच्छन्ति । का इव? **आपो न** यथा निम्नदेशं आप उन्नतप्रदेशादुपगच्छन्ति तद्वत् देव्यः शक्तयो होतुः आह्वातुरन्तर्याजिनः शरीरमुपयन्ति । **यथा विततम् रजः** यथा विस्तृतं अन्तरिक्षं ऊर्ध्वं निरन्तरं अधस्तात् पृथिवीं पश्यति, तथा ता देव्यः होत्रियं निरन्तरं **अवः पश्यन्ति** अधस्तात् अवलोकयन्ति । **देवासः** देवाः **देवयुम्** देवान् कामयमानं यजमानं **प्राचैः** प्रथमं, यद्वा प्रकृष्टगमनैः **प्रणयन्ति** प्रकर्षेण प्राप्तव्यं दिव्यं स्थानं प्रापयन्ति । कीदृशम् देवयुम् ? **ब्रह्मप्रियम्** मन्त्रात्मकस्तोत्रप्रियं, मन्त्रप्रयुक्ते देवतास्तोत्रे नित्या हि प्रीतिर्देवकामस्य पुरुषस्य । अपि च देवास्तं **वराःइव जोषयन्ते** वराः पुरुषाः यथा कन्यकाः वरयित्वा सेवन्ते तथा देवास्तं ब्रह्मप्रियं जनं सेवन्ते ।

प्राचैः– उच्चैः नीचैरितिवदव्ययं प्रथममित्यर्थे, अन्यथा प्रपूर्वादञ्चतेः घञर्थे कविधानम् । जोषयन्ते– जुषी प्रीतिसेवनयोः, स्वात्मनः प्रयोज्यत्वात् हेतुमति णिच् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अधि द्वयोरदधा उक्थ्यं१ वचो यतस्रुचा मिथुना या सपर्यतः ।**
**असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ।। ३ ।।**

अधि । द्वयोः । अदधाः । उक्थ्यम् । वचः । यतऽस्रुचा । मिथुना । या । सपर्यतः । असम्ऽयत्तः । व्रते । ते । क्षेति । पुष्यति । भद्रा । शक्तिः । यजमानाय । सुन्वते ।।

**स्कन्द–** अधिः उपरिभावे । **द्वयो अदधाः** शुद्धोऽप्ययं दधातिः निपूर्वार्थे द्रष्टव्यः । व्यत्ययेन

**च मध्यमः प्रथमपुरुषस्य** । **न्यदधात्** । कः । सामर्थ्यात् अध्वर्युः । कयोः पुनरुपरि किं वा **यदधात्** । हविर्धानाच्छादनार्थयोश्छदिषोरुपरि तृतीयच्छदिः । कुत एतत् । हविर्धानप्रवहणानुवचनस्य **उपान्ते अस्या ऋचो विनियोगात्** । तत्र च हविर्धानाच्छादनार्थानां त्रयाणां छदिषां क्रमेण **निधानात्** । **तथाहि तैत्तिरीयाणां वचनम्**- 'विष्णो रराटमसि' (तै.१,१,१३,३) इति मध्यमं छदिरभिनिदधाति, 'विष्णोः श्न्यप्त्रे स्थः' (तै.१,२,१३,३) इति अन्ये अभितो भवतः' इति । तथा चैतरेयब्राह्मणम् - 'अधि द्वयोरदधा उक्थ्यम् वचः इति । द्वयोर्ह्येतन् तृतीयं छदिरधिनिधीयते (ऐ.ब्रा.१,१९) इति । अथवा द्वयोरिति द्वे अत्र हविर्धानस्य ये द्वार्ये स्थूणे ते उच्येते । तयोर्ह्युपरि रराटी निधीयते । ब्राह्मणे च सैव तृतीयाच्छादकत्वात्तृतीयं छदिरुच्यते । केन न्यदधात् । उच्यते । **उक्थ्यम् वचः** उक्थ्यमिति प्रशास्यनाम (निय ३,८) । तृतीयार्थे चोभयत्र द्वितीया । प्रशस्येन 'विष्णोः श्न्यप्त्रे स्थः' इत्यादिना मन्त्रेण । कस्य स्वभूतम् । उच्यते । **यतस्रुचा मिथुना या** इत्यादि । कथं पुनरस्यार्धर्चस्य ऐन्द्रत्वम् । इन्द्रार्थमध्वर्युः न्यदधात् इत्येवमिन्द्रस्य प्राधान्यश्रवणात् । अथवा अदधाः इति इन्द्र एवोच्यते, नाध्वर्युः । एवं चार्थयोजना कार्या । अधिशब्द 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । द्वयोः स्वभूतमदधाः आत्मीये च मनसि दधासि धेहि वा । शृणोषि शृणु वेत्यर्थः । उक्थ्यं प्रशस्यं स्तुतिलक्षणं वचः । यौ द्वौ किं कुरुत । उच्यते । यतस्त्रुचा यागार्थमुद्यतस्रुचौ । मिथुना स्त्रीपुंसौ । दम्पती इत्यर्थः । या यौ । **सपर्यतः** भवन्तं परिचरतः । किञ्च असंयत्तः सयत्नवान् संयत्तः । कृतप्रयत्न इत्यर्थः । न संयत्तः असंयत्तः । विनैव क्लेशेनेत्यर्थः । **व्रते** यागाख्ये कर्मणि । सप्तमीनिर्देशात् वर्तमानः इति शेष । **ते** तव स्वभूते त्वां यजन्नित्यर्थः । **क्षेति** निवसति स्वस्मिन् स्थाने । **पुष्यति** च सर्वाभिः पुष्टिभिः । यस्तव यागं करोति सोऽक्लिश्यन् स्वस्थाने निवसति, सर्वपुष्टिभिश्च पुष्यतीत्यर्थः । किञ्च भद्रा शोभना शक्तिः शग्धि पूर्धि इति याच्ञाकर्मसु पाठात् शक्तिर्याच्ञाकर्मा (निघ ३,१९) । याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते । त्वदीयं दानमित्यर्थः । कस्मै । उच्यते । यजमानाय सुन्वते सोमाभिषवं कुर्वते यजमानाय । प्रभूतमुत्कृष्टं च धनं त्वं ददासीत्यर्थः ।। ३ ।।

**वेङ्कटमाधव**– द्यावापृथिव्योः प्रशस्यम् **वचः अधि अदधाः** । यतस्रुचौ ये मिथुनभूते त्वाम् पूजयतो यज्ञप्रवर्तनात् । तव **व्रते** शत्रुभिः **असंयत्तः** सुखमेव निवसति, **पुष्यति** च प्रजया पशुभिः । कल्याणं भवति बलम् सुन्वते यजमानाय ।। ३ ।।

**मुद्गल**– हे **इन्द्र! द्वयोः** हविर्धातयोः **उक्थ्यम्** उक्थं शस्त्रम्, तद्योग्यम् वचः 'युजे वाम्' (ऋ.१०,१३,१) इत्यादिमन्त्ररूपं वचनम् **अधि उदधाः** निहितवानसि । कीदृशयोर्हविर्धानयोः । **यतस्रुचा** यताः संबद्धाः स्रुचो ग्रहचमसादिलक्षणानि पात्राणि ययोस्ते । **मिथुना** युगलरूपेण वर्तमाने **या** ये हविर्धाने त्वाम् **सपर्यतः** पूजयतः, तयोरित्यर्थः । किञ्च ईदृग्रूपहविर्धानयुक्तो यजमानः **असंयत्तः** शत्रुभिः सह युद्धार्थमनभिगतः सन् **ते व्रते** त्वदीये कर्मणि **क्षेति** निवसति । **पुष्यति** च प्रजया पशुभिश्च पुष्टो भवति च । **सुन्वते** त्वद्देवत्ये यागे सोमाभिषवं कुर्वतो **यजमानाय** यजमानस्य **भद्रा** कल्याणी शक्तिः उत्कृष्टं बलं भवति । एतत्सर्वं हविर्धानयोरुक्थ्यस्य वचसोऽधिनिधानेन त्वया कृतमित्यर्थः ।। ३ ।।

**सायण**– प्रवर्ग्याभिष्टवे 'अधि द्वयोः' इत्येषा । 'स्पृष्ट्वोदकम्' इति खण्डे सूत्रितम्– 'अधि द्वयोरदधा उक्थ्यं वचः शुक्रं ते अन्यद्यजतं ते अन्यत्' (आश्व.श्रौ.४.६) इति ।। हविर्धान-प्रवर्तनेऽप्येषा । सूत्रितं च– 'यमे इव यतमाने यदैतमधि द्वयोरदधा उक्थ्यं वच इत्यर्धर्च आरमेत्' (आश्व.श्रौ.४.९) इति ।।

हे इन्द्र! **द्वयोः** हविर्धानयोः **उक्थ्यम्** । उक्थं शस्त्रम् । तद्योग्यं **वचः** 'युजे वाम्' इत्यादिमन्त्ररूपं वचनम् **अधि अदधाः** निहितवानसि । ननु हविर्धानयोर्द्वयोः कथमेकमेव वचोऽधिनिधीयते इत्याशङ्क्य ब्राह्मणेनैवं व्याख्यातम्– 'अधि द्वयोरदधा उक्थ्यं वच इति द्वयोर्ह्येतत्तृतीयं छदिरधिनिधीयत उक्थ्यं वच इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञमेवैतेन समर्धयति' (ऐ.ब्रा.१.२९) इति । तत्र यथा हविर्धानद्वये एकमेव तृतीयं छदिरधिनिधीयते एवं स्तोत्रमप्युभयोरेकं युक्तम् । उक्थं नाम यज्ञसम्बन्धि शस्त्रं तद्योग्यं वचनमपि यज्ञियं कर्म । तस्य यज्ञरूपयोर्हविर्धानयोर्यज्ञत्वसम्पादनाय अधिनिधानात् यज्ञोऽपि समृद्धो भवति । कीदृशयोर्हविर्धानयोः । **यतस्रुचा** । यताः सम्बद्धाः स्रुचो ग्रहचमसादिलक्षणानि पात्राणि ययोस्ते । **मिथुना** युगलरूपेण वर्तमाने **या** ये हविर्धाने त्वां **सपर्यतः** पूजयतस्तयोरित्यर्थः । किञ्च ईदृग्रूप-हविर्धानयुक्तो यजमानः **असंयत्तः** शत्रुभिः सह युद्धार्थमनभिगतः सन् **ते व्रते** त्वदीये कर्मणि **क्षेति** निवसति **पुष्यति** च । प्रजया पशुभिश्च पुष्टो भवति च । **सुन्वते** त्वद्देवत्ये यागे सोमाभिषवं कुर्वतो यजमानस्य **भद्रा** कल्याणी **शक्तिः** उत्कृष्टं बलं भवति । एतत्सर्वं हविर्धानयोरुक्थ्यस्य वचसोऽधिनिधानेन त्वया कृतमित्यर्थः ।

यतस्रुचा । 'यम उपरमे' । निष्ठायाम् 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । इदमादिषु त्रिषु पदेषु 'सुपां सुलुक्' इति विभक्तेः आकारः । सपर्यतः । 'सपर पूजायाम्' 'कण्ड्वादिभ्यो यक्' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे तस्यैव स्वरः शिष्यते । क्षेति । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । सुन्वते । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे इन्द्रः! **द्वयोः** कयोरिति नोक्तं, हविर्धानयोरिति कर्मठाः । द्यौः पृथिवी च मिथुनं द्वन्द्वम् । एका शुद्धभास्वरमनोभूमिष्ठा द्युस्थाना प्रज्ञा, द्वितीया पृथिवीस्थाना जागरित-प्रज्ञा स्थूला । उभे च मिथुनं भवतः । एवं उभयोः प्रज्ञयोः **उक्थ्यम्** उक्थं शस्त्रं तद्योग्यं वचः स्तोत्रात्मकं वचनं **अधि अदधाः** निहितवानसि त्वम्, देवानुग्रहादेव हि ऋषेः उभयो-रुक्तलक्षणयोः प्रज्ञास्थानयोः मन्त्रवाक् स्थितिपदं लभते । स्रुक् यज्ञपात्रविशेषः दर्विवत् भवति, सा सङ्केतो भवति तीव्रकाङ्क्षायाः, दिव्यभावमभिमुखं आप्तुं इच्छा भवति सा । तस्मात् 'अभीप्सा' इति तामुत्काङ्क्षां ब्रूमः । अथ पूर्वोक्तस्य द्वन्द्वस्य विशेषणं 'यतस्रुचा' इति भवति । **यतस्रुचा** यता उद्यता मुहुर्मुहुरुद्गतो स्रुक् तल्लक्षितोत्काङ्क्षा ययोरुभयस्थानप्रज्ञयोः ते, तथाभूते **या** ये **मिथुना** युगलरूपेण वर्तमाने द्वन्द्वभूते **सपर्यतः** पूजयतस्त्वाम् । अथ तादृशप्रज्ञासम्पन्नस्य ऋषेर्माहाभाग्यमाह । **असंयत्तः** विरोधिभिर्योद्धुमनभिगतः स यजमानः **ते** तव **व्रते** ध्रुवे कर्मणि, तव धर्मे **क्षेति** निवसति **पुष्यति** पुष्टो भवति सर्वथा । **सुन्वते** सोमाभिषवं कुर्वते **यजमानाय** तस्य पुण्यपुरुषस्येति षष्ठ्यर्थः **भद्रा शक्तिः** कल्याणी शक्तिः उत्कृष्टं बलं भवति ।

यतस्रुचा– यम उपरमे । सपर्यतः–सपर पूजायाम्, कण्ड्वादिभ्यो यक् । क्षेति–क्षि निवासगत्योः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।**
**सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ।। ४ ।।**
आत् । अङ्गिराः । प्रथमम् । दधिरे । वयः । इद्धऽअग्नयः । शम्या । ये । सुऽकृत्यया । सर्वम् । पणेः । सम् । अविन्दन्त । भोजनम् । अश्वऽवन्तम् । गोऽमन्तम् । आ । पशुम् । नरः ।।

**स्कन्द– आत्** इति पदपूरणः । अङ्गिरा इति बहुवचनस्य स्थाने एकवचनम् । अङ्गिरसः ऋषयः । **प्रथमम् दधिरे** दत्तवन्तः तुभ्यम् । **वयः** हविर्लक्षणमन्नम् । **इद्धाग्नयः** प्रज्वलिताहवनीयादिकाः । अङ्गिरसोऽपि त्वां प्रथममिष्टवन्तः, किं पुनरन्य ऋषय इत्यर्थः । ये किं लब्धवन्तोऽङ्गिरसः । उच्यते । **शम्या ये सुकृत्यया** 'शमी' (निघ.२,१) इति कर्मनाम । शोभना क्रिया अनुष्ठानं यस्याः सा सुकृत्या । ये त्वद्यागकर्मणा शोभनानुष्ठानेन । **सर्वम् पणेः** पणिनाम्नोऽसुरस्य स्वभूतम् । **समविन्दत** सम्यग्लब्धवन्तः । **भोजनम्** धनम् **अश्वावन्तम्** अश्वैस्सहितम् । **गोमन्तम्** गोभिस्सहितम् । **पशुम्** जात्यपेक्षमेतदेकवचनम् । पशुजातं च । आकारस्तु पदपूरणः मर्यादायां वा । मर्यादया लब्धवन्तः । नरः मनुष्याः सन्तः ॥ ४ ॥

**वेङ्कटमाधव– आ दधिरे** अङ्गिरसः **प्रथमम्** हविः **सम्** इद्धाग्नयः कर्मणा **ये** शोभनकरणेन, ते **सर्वम्** एव असुरात् **भोजनम्** त्वया सहायेन **अविन्दन्त अश्वावन्तम् गोमन्तम्** च पशुसङ्घं नेतारोऽङ्गिरसः ॥ ४ ॥

**मुद्गल–** यदा पणिभिर्गावोऽपहृतास्तदानीम् **अङ्गिराः** अङ्गिरसः **प्रथमम्** पूर्वमग्रतः **वयः** हविर्लक्षणमन्नम् **दधिरे** इन्द्रार्थं सम्पादितवन्तः । **आत्** अनन्तरं तादृशाः **ये** अङ्गिरसः **इद्धाग्नयः** प्रज्वलिताग्नियुक्ताः सन्तः **सुकृत्यया** शोभनकरणोपेतया **शम्या** कर्मणा शोभनेन यागेन इन्द्रमयजन्निति शेषः । ते **नरः** यज्ञस्य नेतारोऽङ्गिरसः **पणेः** एतन्नाम्नोऽसुरस्य सम्बन्धि **सर्वम् भोजनम्** धनम् **सम् अविन्दत** समलभन्त । कीदृशम् । **अश्वावन्तम्** अश्वैर्युक्तम् **गोमन्तम्** गोभिर्युक्तम् । **आ** समुच्चय । गवाश्वव्यतिरिक्तम् **पशुम्** अन्यत्पशुजातं च समविन्दन्त ॥४॥

**सायण–** यदा पणिभिर्गावोऽपहृतास्तदानीम् **अङ्गिराः** अङ्गिरसः **प्रथमं** पूर्वमग्रतः **वयः** हविर्लक्षणमन्नं **दधिरे** इन्द्रार्थं सम्पादितवन्तः । **आत्** अनन्तरं तादृशाः **ये** अङ्गिरसः **इद्धाग्नयः** प्रज्वलिताग्नियुक्ताः सन्तः **सुकृत्यया** शोभनकरणोपेतया **शम्या** कर्मणा शोभनेन यागेनेन्द्रमयजन्निति शेषः । ते **नरः** यज्ञस्य नेतारोऽङ्गिरसः **पणेः** एतन्नाम्नोऽसुरस्य सम्बन्धि **सर्वं भोजनं** धनं **समविन्दन्त** समलभन्त । कीदृशम् । **अश्वावन्तं** अश्वैर्युक्तं **गोमन्तं** गोभिर्युक्तम् । आकारः समुच्चये । गवाश्वव्यतिरिक्तमन्यतपशुजातं च समविन्दन्त ।

अङ्गिराः । 'सुपां सुलुक्' इति जसः सुः । शम्या । शमी इति कर्मनाम । शाम्यत्यनया

क्रियया दोषजातमिति शमी । करणे घञ् । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (पा.सू.७.३.३४) इति वृद्धिप्रतिषेधः । गौरादित्वात् ङीष् । व्यत्ययेनाद्युदात्तत्वम् । सुकृत्यया । शोभनं कृत्यं करणं यस्यां सा तथोक्ता । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** अस्यामुत्तरस्यां च अङ्गिरोवृत्तमनुस्मृत्य मन्त्रवर्णः प्रवर्तते । अङ्गिरसां स्वरूपं द्वात्रिंशसूक्तान्ते यद्विचारितं तदवधेयम् । पूर्वोक्तप्रकारेण यदा यजमान ऋषिः इन्द्रस्य व्रते 'क्षेति' निवसति, तदनन्तरमेव अङ्गिरसां कर्मणा तस्य सर्वं धनं गवाश्वादिकं प्राप्यं भवतीत्याह । **आत्** अनन्तरं **अङ्गिराः** अङ्गिरसः **प्रथमं** पूर्वं **वयः** बलं **दधिरे** धारयन्ते प्रथमं तस्मिन् बलं प्रतिष्ठापयन्तीत्यर्थः । कीदृशः? **इद्धाग्नयः** प्रज्वलिताग्नयः, **ये** अङ्गिरसः **नरः** नेतारो बलिनः सन्तः **सुकृत्यया** शोभनकरणोपेतया **शम्या** कर्मणा **पणेः** व्यवहारिणः कृत्रिमादेतन्नामकासुरात् **सर्वम्** समस्तं **भोजनम्** भोगयोग्यं वस्तु **समविन्दन्त** समलभन्त । कीदृशम्? **अश्वावन्तम्** अश्वयुक्तं प्राणबलोपलक्षणमेतत् **गोमन्तम्** ज्ञानकिरणोपेतम् **पशुम्** अन्यत् पशुजातं, भोग्यसामान्यस्य सङ्केतोऽयम् । **आ** इति 'समुच्चये' इति सायणः । अथवा 'आ' सर्वतः पणिवशं गतं यद्यद्भोग्यं वर्तते तत्सर्वमिति ग्राह्यम् ।

अङ्गिराः–अत्र अकारान्तबहुवचनम्, सकारान्तश्चेत् सुपां सुलुगिति जसः सुः । शम्या–शमीति कर्मनाम । सुकृत्यया–शोभनं कृत्यं करणं यस्यां सा, तया ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।**
**आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ।। ५ ।।**

यज्ञैः । अथर्वा । प्रथमः । पथः । तते । ततः । सूर्यः । व्रतऽपाः । वेनः । आ । अजनि ।
आ । गाः । आजत् । उशना । काव्यः । सचा । यमस्य । जातम् । अमृतम् । यजामहे ।।

**स्कन्द– यज्ञैः** इन्द्रदेवत्यैः **अथर्वा** नाम ऋषिः **प्रथमः** सर्वत उत्कृष्टः अग्रो वा **पथः** प्रज्ञागमनमार्गान् इन्द्रस्यात्मनो वा स्वर्गगमनमार्गान् **तते** विस्तीर्णान् चकार । **ततः** तेभ्य एव यज्ञेभ्यः **सूर्यः** आदित्यः **व्रतपाः** प्रकाशकरणद्वारेण सर्वकर्मणां पालयिता **वेनः** मेधावी कान्तो वा **आ अजनि** आजात उत्पन्नः । धर्मायत्तत्वात् कृत्स्नस्य जगत उत्पत्तेः यज्ञानां च

धर्मत्वादिदमुच्यते ततः सूर्यो व्रतपा वेन आजनीति । तैरेव च यज्ञैरिन्द्रदेवत्यैः **आ गाः आजत्** 'अज गतिक्षेपणयोः' । आगतवान् प्राप्तवान् । लब्धवानित्यर्थः । किम् । गाः । कः । **उशना** नाम ऋषिः **काव्यः** कविपुत्रः । सचा सह । केन । सामर्थ्यात् पुत्रैः पौत्रैश्च । एतत् ज्ञात्वा वयमपि **यमस्य जातम् अमृतम् यजामहे** यम इति यज्ञनाम शाकपूणिना पठितम् । षष्ठी चात्र 'यजेश्च करणे' (पा.२,३,६३) इत्येवं तृतीयार्थे द्रष्टव्या । यज्ञेन यजामहे इत्यर्थः । कम् । प्रकरणाद् इन्द्रम् । कीदृशम् । जातममृतं जन्मवन्तं मरणवर्जितमित्यर्थः । अथवा यमोऽप्राऽऽदित्य एव । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । आदित्यसकाशाज्जातममृतं यजामह इति । इन्द्रो हि वर्षासु रसादानेनाऽनुगृह्यमाणः कर्मात्मना आदित्याज्यायते ।। ५ ।।

**वेङ्कटमाधव–** पणिभिरपहृतासु गोषु **यज्ञैः कृतैः अथर्वा** पूर्वं मार्गान् कृतवान् । **ततः** अन्धकारविनाशार्थं कर्मणां पालयिता कान्तः **सूर्यः** प्रादुरभूत् । ततोऽन्धकारे विनष्टे कविपुत्रः **उशना** सह सर्वा एव गाः **आ आजत्** । असुरनियमनार्थं प्रादुर्भूतमिन्द्रम् यजामहे ।। ५ ।।

**मुद्गल–** पणिभिरपहृतासु गोषु **अथर्वा** एतत्संज्ञः ऋषिः **यज्ञैः** इन्द्रदेवत्यैरनुष्ठितैर्यागैः **पथः** गोसम्बन्धिनी मार्गान् **प्रथमः तते** तनुते । सर्वेभ्य ऋषिभ्यः पूर्वमेव कृतवानित्यर्थः । **ततः** तदनन्तरम् **व्रतपाः** व्रतानां कर्मणां पालयिता **वेनः** कान्तः **सूर्यः** सूर्यरूप इन्द्रः **आ अजनि** गवां प्रदर्शनाय आविरभूत् । ततोऽथर्वा ताः **गाः आ आजत्** आभिमुख्येन प्राप्नोत् । तादृशस्येन्द्रस्य **काव्यः** कवेः पुत्रः **उशना** भृगुः **सचा** असुरनिरसनाय सहायोऽभूत् । **यमस्य** असुराणां नियमनार्थम् **जातम्** प्रातुर्भूतम् **अमृतम्** मरणरहितं तमिन्द्रम् **यजामहे** हविर्भिः पूजयामः ।।

**सायण–** पणिभिरपहृतासु गोषु **अथर्वा** एतत्संज्ञः ऋषिः **यज्ञैः** इन्द्रदेवत्यैरनुष्ठितैर्यागैः **पथः** गोसम्बन्धिनो मार्गान् **प्रथमः तते** तनुते । सर्वेभ्य ऋषिभ्यः पूर्वमेव कृतवानित्यर्थः । **ततः** तदनन्तरं **व्रतपाः** व्रतानां कर्मणां पालयिता **वेनः** कान्तः **सूर्यः** सूर्यरूप इन्द्रः **आ अजनि** गवां प्रदर्शनाय आविरभूत् । ततोऽथर्वा ताः **गाः आ आजत्** आभिमुख्येन प्राप्नोत् । तादृशस्येन्द्रस्य **काव्यः** कवेः पुत्रः **उशना** भृगुः **सचा** असुरनिरसनाय सहायोऽभूत् । **यमस्य** असुराणां नियमनार्थं **जातं** प्रादुर्भूतम् **अमृतं** मरणरहितं तमिन्द्रं **यजामहे** हविर्भिः पूजयामः ।

पथः । शसि 'भस्य टेर्लोपः' इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ।

तते । 'तनु विस्तारे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । अजनि । 'जनी प्रादुर्भावे' । 'दीपजनबुध' (पा.सू.३.१.६१) इत्यादिना कर्तरि लुङि च्लेः चिण् । आजत् । 'अजगतिक्षेपणयोः' ।। ५ ।।

**सिद्धाञ्जनम्–** आङ्गिरसप्रस्तावे वृत्रवधादपां निर्मोचनं गवां लाभः सूर्यस्योद्गम इत्यादीनां युगपत्सम्भवस्य रहस्यमुक्तम्, तदत्र स्मार्यम् । अथर्वणः स्वरूपं रहस्यार्थविचारे पुरस्तात् काक्षीवते आश्विने सूक्ते दध्यङ्शब्दे विचार्यमाणे प्रोच्यते (१.११६.१२) । **अथर्वा** अङ्गिरसां मुख्यः, अग्रेर्देव्यो विभवः मनुष्यभावं प्राप्त एतत्संज्ञक ऋषिर्वा **यज्ञैः** यजनैः **पथः** मार्गान्, गोशब्दसङ्केतितदिव्यरश्मिप्रापकान् **प्रथमः** सर्वेभ्यः पूर्वं **तते** तनुते, यागैः साधनैः कृतवानध्वनः । **ततः** अनन्तरं **व्रतपाः** व्रतानां नियतानां कर्मणां पाता पालयिता **वेनः** कान्तः **सूर्यः** सत्यज्योतिषो लक्षकः सूर्यः **आजनि** आविरभूत् । ततः परमेव **उशना** शुक्र इति प्रसिद्धिः, सोऽत्र भृगुर्भवति, कुतः? **काव्यः** कवेः पुत्रः, द्रष्टुः दृष्टिसम्पत्तेः सौरज्योतिष्किरणानां लाभः । भृगवः सौरकिरणानां अङ्गिरसः आग्नेयरोचिषां द्रष्टार आहर्तारश्च पूर्वे ऋषय इति प्रागुक्तमवधेयम् । अत एव इद्धाग्नीनां अङ्गिरसां प्रथमेन अथर्वणा मार्गतननात्परं उशना कान्तिमान् काव्यो भृगुः **सचा** सह अन्यैः ऋषिभिः, देवैश्च ताः **गाः आ आजत्** आभिमुख्येन प्राप्नोत् । एवंप्रकारेण **जातम्** आविर्भूतं **यमस्य** सर्वनियामकस्य व्रतपतेः सूर्यस्य, इन्द्रात्मना स्थितस्य सत्यज्योतिषः **अमृतम्** मरणरहितं नित्यं वस्तु यजामहे पूजयामः ।

तते–तनु विस्तारे, विकरणस्य लुक् । आजत्–अज गतिक्षेपणयोः ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**बर्हिर्वा यत् स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।**
**ग्रावा यत्र वदति कारुरुक्थ्य१स्तस्येदिन्द्रो अभिपित्वेषु रण्यति ।। ६ ।।**

बर्हिः । वा । यत् । सुऽअपत्याय । वृज्यते । अर्कः । वा । श्लोकम् । आऽघोषते । दिवि । ग्रावा । यत्र । वदति । कारुः । उक्थ्यः । तस्य । इत् । इन्द्रः । अभिऽपित्वेषु । रण्यति ।। ६ ।।

**स्कन्द–** **यत् स्वपत्याय** इति षष्ठ्यर्थे एते प्रथमाचतुर्थ्यौ । **बर्हिः वा** यस्य यजमानस्य

स्वपत्यस्य **वृज्यते** वृजिरत्र सामर्थ्यात् स्तरणार्थः । स्तीर्यते नित्यम् । **अर्कः वा** स्तोताऽत्राऽर्क उच्यते । 'अर्को यद्वो मरुतो हविष्मान्' । (ऋ.१,१६७,६) इति यथा । स्तोता वा । **श्लोकम्** स्तुतिशब्दम् **आघोषते** आघोषयति । श्रावयतीत्यर्थः । **दिवि** द्युलोके । अत्यन्तमुच्चैः स्तौतीत्यर्थः । **ग्रावा** अभिषवग्रावा **यत्र** षष्ठ्यर्थे एषा सप्तमी । यस्य स्वभूतः । **वदति** अभिषवकाले शब्दं करोति । कीदृशः । **कारुः** स्तोता । यावदत्राभिषवग्रावा अभिषवं करोति, तावत् स्तुतयः प्रवर्तन्त इति तदायत्तत्वात् स्तुतीनामभिषवग्रावैव स्तोतेत्युच्यते, स्तोतृसादृश्याद्वा । **उक्थ्यः** प्रशस्यः । **तस्य** एव **इन्द्रः** । अभिषित्वेषु च पतत्रेर्गतिकर्मण इदं रूपम् । अभिगमन-कालेषु । **रण्यति** रमते । तमेवाभिगच्छन्निन्द्रः प्रतीयते, नाऽन्यमित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** यस्मिन् मनुष्ये शोभनाय कर्मणे **बर्हिः वा वृज्यते** । होता वा स्तुतिशब्दम् उच्चैर्घोषयति अन्तरिक्षे । तत्र हि वाचमुच्चारयति । **यत्र वा** सोमाभिषवकृत् **ग्रावा** प्रशस्यः शब्दं करोति । **तस्य** एव अभिगमनेषु **इन्द्रः** रमते ।। ६ ।।

**मुद्गल– स्वपत्याय** शोभनाऽपतनहेतुभूताय कर्मणे **बर्हिः वा यत्** यदा **वृज्यते** छिद्यते । अध्वर्युणा यागार्थमाह्रियते । **अर्कः वा** स्तोत्रनिष्पादको होता वा **श्लोकम्** स्तुतिरूपां वाचम् **दिवि** द्योतमाने यज्ञे **यत्** यदा **आघोषते** उच्चारयति । **यत्र** यस्मिन् काले **ग्रावा** अभिषवार्थे प्रवृत्त उपलः **वदति** शब्दं करोति । दृष्टान्तः । **कारुः उक्थ्यः** लुप्तोपममेतत् । उक्थस्य शस्त्रस्य शंसिता कारुः स्तोता यथाऽभिमतशब्दं करोति, तद्वत् **तस्य इत्** पूर्वोक्तस्य सर्वस्य अभिषित्वेषु अभिप्राप्तिषु **इन्द्रः रण्यति** रमते । अस्मदीयो यागो भविष्यतीति शब्दं करोति ।। ६ ।।

**सायण– स्वपत्याय** शोभनापतनहेतुभूताय कर्मणे **बर्हिर्वा यत्** यदा **वृज्यते** छिद्यते अध्वर्युणा यागार्थमाह्रियते **अर्को वा** स्तोत्रनिष्पादको होता वा **श्लोकं** स्तुतिरूपां वाचं **दिवि** द्योतमाने यज्ञे यदा **आघोषते** उच्चारयति । **यत्र** यस्मिन् काले **ग्रावा** अभिषवार्थं प्रवृत्तः उपलः **वदति** शब्दं करोति । तत्र दृष्टान्तः । **कारुरुक्थ्यः** । लुप्तोपममेतत् । उक्थ्यस्य शस्त्रस्य शंसिता कारुः स्तोता यथाभिमतशब्दं करोति तद्वत् । **तस्य** पूर्वोक्तस्य सर्वस्य **अभिपित्वेषु** अभिप्राप्तिषु **इन्द्रः रण्यति** रमते । यद्वा । पूर्वोक्तानां बर्हिरादीनामभिप्राप्तिषु सतीष्विन्द्रो रण्यति अस्मदीयो यागो भविष्यतीति हर्षशब्दं करोति ।

वृज्यते । 'वृजी वर्जने' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । 'निपातैर्यद्यदिहन्त' इति निघातप्रतिषेधः । आघोषते । 'घुषिर् विशब्दने' । भौवादिकः । अत्रापि 'यत्' इत्यस्य निपातस्यानुषङ्गात् निघाताभावः । रण्यति । 'रमु क्रीडायाम्' । व्यत्ययेन श्यन् परस्मैपदं च । अन्त्यविकारश्छान्दसः । यद्वा रणशब्दार्थः । व्यत्ययेन श्यन् ।। ६ ।।

**सिद्धाञ्जनम्– स्वपत्याय** शोभनाय सन्तानाय विस्ताराय, यजमानस्यान्तर्वेद्यां देवानामागमने आसनं विस्तीर्णं स्यात् तदर्थं **यत्** यदा **बर्हिर्वा** आस्तीर्णं वा **वृज्यते** वृक्तं भवति शुद्धे मृदुलं परिष्कृतं भवति । **अर्को वा** दीप्तो मन्त्रो वा तन्निष्पादकः स्तोता **दिवि** द्योतमाने ऊर्ध्वमानसप्रजास्थाने **श्लोकम्** स्तोत्रं **आघोषते** उच्चारयति । **यत्र** यस्मिन् देशे काले वा **ग्रावा** सोमाभिषवर्णार्थक उपलः इति बहिर्यागे, रहस्यं तु विचारितम् (१.२८) प्रज्वलितवागात्मकः सर्वानुभूतिरसनिष्पादकः तादृशो यजमानहृदयोद्गत वाग्रूपः **उक्थ्यः** उक्थस्य शस्त्रस्य शंसिता **कारुः** स्तोता वदति नादं करोति, **तस्य इत्** पूर्वोक्तस्य सर्वस्य **अभिपित्वेषु** आभिमुख्येन प्राप्तिषु **इन्द्रः रण्यति** रमते ।

वृज्यते–वृजी वर्जने । अभिपित्वेषु–अभिषित्वशब्दः आसत्तिवाची प्रपित्वशब्दवत्, प्रपित्वे अभीक इत्यासन्नस्येति यास्कः, उपसर्गभेदेऽप्यर्थाभेद इति सायणः । आघोषते–घुषिर् विशब्दने । रण्यति–रमु क्रीडायाम् ।। ६ ।।

।। इति प्रथमाष्टके षष्ठाध्याये चतुर्थो वर्गः ।।

## ।। अथ पञ्चमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८४)

(२० गोतमो राहूगणः । इन्द्रः । १-६ अनुष्टुप् । ७-९ उष्णिक् । १०-१२ पङ्क्तिः । १३-१५ गायत्री । १६-१८ त्रिष्टुप् । (प्रगाथः=) १९ बृहती । २० सतोबृहती)

**असा॑वि॒ सोम॑ इन्द्र ते॒ शवि॑ष्ठ धृष्ण॒वा ग॑हि ।**
**आ त्वा॑ पृणक्त्विन्द्रि॒यं रजः॒ सूर्यो॒ न र॒श्मिभिः॑ ।। १ ।।**

असा॑वि । सोमः॑ । इ॒न्द्र॒ । ते॒ । शवि॑ष्ठ । धृ॒ष्णो॒ इति॑ । आ ग॒हि॒ । आ । त्वा॒ । पृ॒ण॒क्तु॒ । इ॒न्द्रि॒यम् । रजः॑ । सूर्यः॑ । न । र॒श्मिऽभिः॑ ।। १ ।।

**स्कन्द–** **असावि** अभिषुतः **सोमः** अस्माभिः हे **इन्द्र! ते** त्वदर्थम् । एतत् ज्ञात्वा हे **शविष्ठ!** बलवत्तम! **धृष्णो!** अभिभवितः । शत्रूणाम् **आ गहि** आगच्छ । आगतं च **त्वा पृणक्तु इन्द्रियम्** पृचिरत्र पूरणार्थः । 'तमित् पृणक्षि' (ऋ.६,१५,११) इति यथा । इन्द्रियमित्यत्रापि स्वार्थे घच्प्रत्ययः । आपूरयतु त्वामिन्द्रमस्मदीयः सोम इत्यर्थः । अथवा इन्द्रियं वीर्यमुच्यते । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः इन्द्रियशब्दः । आपूरयतु त्वां वीर्यवदस्मदीयं सोमादिहविरित्यर्थः । कथं पुनरापूरयतु । उच्यते । **रजः सूर्यः न रश्मिभिः** रजःशब्दः अत्र लोकवचनः । यथा सूर्यः पार्थिवलोकम् अन्तरिक्षं वा निरन्तरं रश्मिना पूरयति तद्वत् ।। १ ।।

**वेङ्कटमाधव–** सुतः **सोमः इन्द्र!** तुभ्यम्, बलवत्तम! अभिभवितः! आगच्छ । आपूरयतु त्वां बलम् अन्तरिक्षम् इव **सूर्यः रश्मिभिः** ।। १ ।।

**मुद्गल–** 'असावि' इति विंशत्यृचमेकादशं सूक्तम् । गोतम ऋषिः । आदितः षडनुष्टुभः । सप्तम्याद्यास्तिस्र उष्णिहः । दशम्याद्यास्तिस्रः पङ्क्तयः । त्रयोदश्याद्यास्तिस्रो गायत्र्यः । षोडशाद्यास्तिस्रस्त्रिष्टुभः । एकोनविंशी बृहती । विंशी सतोबृहती । इन्द्रो देवता ।

हे **इन्द्र! ते** त्वदर्थम् **सोमः असावि** अभिषुतोऽभूत् । हे **शविष्ठ!** अतिशयेन बलवन्! अत एव **धृष्णो!** शत्रूणां घर्षयितः! इन्द्र! **आ गहि** देवयजनदेशमागच्छ । आगतश्च **त्वा** त्वाम् **इन्द्रियम्** सोमपानोत्थं प्रभूतं सामर्थ्यम् **आ पृणक्तु** आ पूरयतु । **रजः** अन्तरिक्षम् **रश्मिभिः** किरणैः **सूर्यः न** यथा सूर्यः पूरयति तद्वत् ।। १ ।।

**सायण–** 'असावि' इति विंशत्यृचमेकादशं सूक्तम् । अत्रानुक्रम्यते– 'असावि विंशतिः षळनुष्टुभ औष्णिहपाङ्क्तगायत्रत्रैष्टुभास्तृचाः प्रगाथः' इति । आदितः षडनुष्टुभः सप्तम्याद्यास्तिस्र उष्णिहः । दशम्याद्यास्तिस्रः पङ्क्तयः त्रयोदश्याद्यास्तिस्रो गायत्र्यः । षोडशाद्यास्तिस्रस्त्रिष्टुभः । एकोनविंशी बृहती विंशी सतोबृहती । अनुवर्तनात् गोतम ऋषिः । अनादेशपरिभाषया इन्द्रो देवता । सूक्तविनियोगो लिङ्गादवगन्तव्यः । अविहृतषोडशिशस्त्रे आद्यौ तृचौ स्तोत्रियानुरूपौ । सूत्रितं च– 'अथ षोडश्यसावि सोम इन्द्र त इति स्तोत्रियानुरूपौ' (आश्व.श्रौ.६.२) इति । आभिप्लविकेषूक्थ्येषु तृतीयसवनेऽच्छावाकस्येमावेव तृचौ वैकल्पिकौ स्तोत्रियानुरूपौ । 'एह्यू षु' इति खण्डे सूत्रितम्– 'असावि सोम इन्द्र त इममिन्द्र सुतं पिब' (आश्व.श्रौ.७.८) इति ।।

हे **इन्द्र! ते** त्वदर्थं **सोमः असावि** अभिषुतोऽभूत् । हे **शविष्ठ!** अतिशयेन बलवन्! अत एव **घृष्णो** शत्रूणां घर्षयितरिन्द्र **आ गहि** देवयजनदेशमागच्छ । आगतं च त्वाम् **इन्द्रियं** सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् **आ पृणक्तु** आपूरयतु । **रजः** अन्तरिक्षं **रश्मिभिः** किरणैः **सूर्यो न** यथा सूर्यः पूरयति तद्वत् ।

शविष्ठ । शवस्विञ्शब्दात् इष्ठनि 'विन्मतोर्लुक्' । 'टेः' इति टिलोपः । पादादित्वात् निघाताभावः । गहि । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । तस्य 'असिद्धवदत्रा भात्' इति असिद्धवत्त्वात् हेः लुगभावः ।। १ ।।

**सिद्धाञ्जनम्–** 'असावी'ति विंशत्यृचं एकादशं सूक्तम् । आदितः षडनुष्टुभः, सप्तम्याद्यास्तिस्र उष्णिहः, दशम्याद्यास्तिस्रः पङ्क्तयः, त्रयोदश्याद्यास्तिस्रो गायत्र्यः, षोडश्याद्यास्तिस्रस्त्रिष्टुभः, एकोनविंशी बृहती, विंशी सतोबृहती । अनुवर्तनादृषिर्गोतमः इन्द्रो देवता ।

हे **इन्द्र! ते** तुभ्यं **सोमः असावि** अभिषुतो भवति । हे **शविष्ठ!** ज्वलद्वल, **घृष्णो,** घर्षयितः शत्रूणां, **आ गहि** आगच्छ । **त्वा** त्वां **इन्द्रियम्** इन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमित्यादिना पाणिनिसूत्रेण इन्द्रसम्बन्धि सर्वं तव सामर्थ्यादिलक्षणं **आपृणक्तु** आपूरयतु । **रजः** अन्तरिक्षं **रश्मिभिः** किरणैः **सूर्यो न** सूर्यो यथा पूरयति तद्वत् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।**
**ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ।। २ ।।**
इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्टऽशवसम् । ऋषीणाम् । च । स्तुतीः । उप । यज्ञम् । च । मानुषाणाम् ।। २ ।।

**स्कन्द– इन्द्रम् इत् हरी वहत अप्रतिघृष्टशवसम्** अप्रत्यभिभूतपूर्वबलम् **ऋषीणाम् च स्तुतीः** उप उपशब्दोऽत्र प्रतिशब्दस्यार्थे । ऋषीणां च स्तुतीः प्रति । **यज्ञम् च मानुषाणम्** मनुष्याणां स्वभूतम् ।। २ ।।

**वेङ्कटमाधव– इन्द्रम्** अश्वौ **वहतः** अप्रत्यभिभूतबलम् **ऋषीणाम् च स्तुतीः मनुष्याणाम् च यज्ञम्** प्रति ।। २ ।।

**मुद्गल– अप्रतिघृष्टशवसम्** केनाप्यप्रतिघर्षितबलम् । अहिंसितबलमित्यर्थः । **इन्द्रम् इत्** इन्द्रमेव **ऋषीणाम्** वसिष्टादीनाम् **मानुषाणाम्** अन्येषां मनुष्याणाम् **च स्तुतीः यज्ञम् च हरी** अश्वौ **उप वहतः** समीपं प्रापयतः । यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र तत्र सर्वत्रेन्द्रमश्वौ प्रापयत इत्यर्थः ।। २ ।।

**सायण– अप्रतिघृष्टशवसं** केनाप्यप्रतिघर्षितबलम् । अहिंसितबलमित्यर्थः । **इन्द्रमित्** इन्द्रमेव ऋषीणां वसिष्ठादीनां **मानुषाणाम्** अन्येषां मनुष्याणां **च स्तुतीः यज्ञं च हरी** अश्वौ **उप वहतः** समीपं प्रापयतः । यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र सर्वत्रेन्द्रमश्वौ प्रापयतः इत्यर्थः ।

मानुषाणाम् । 'मनोर्जातौ' इति मनुशब्दात् अञ् पुगागमश्च ।। २ ।।

**सिद्धाञ्जनम्– अप्रतिधृष्टशवसम्** अप्रतिधर्षितबलं **इन्द्रमित्** इन्द्रमेव **ऋषीणाम्** मधुच्छन्दःप्रभृतीनां दृष्टिसम्पन्नानां **मानुषाणाम् च** इतरेषां मनुष्याणां च **स्तुतीः** स्तोत्राणि **यज्ञम् च** देवेभ्यः सर्वसमर्पणात्मकं यागं च **हरी** इन्द्राश्वौ **उप वहतः** समीपं प्रापयतः ।।

## ऋक्संहिता पदपाठसहिता

**आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी ।**
**अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ।। ३ ।।**
**आ । तिष्ठ । वृत्रऽहन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इति । अर्वाचीनम् । सु । ते । मनः । ग्रावा । कृणोतु । वग्नुना ।। ३ ।।**

**स्कन्द– आ तिष्ठ** आरोह हे **वृत्रहन्! रथम् युक्ता** युक्तेन **ते** अस्माभिः **ब्रह्मणा** तृतीयानिर्देशात् स्तुवद्भिरिति । वाक्यशेषः । कौ । **हरी** । आस्थितस्य च **अर्वाचीनम्** अस्मद्यज्ञगमनाभिमुखं **सुष्ठु ते** तव **मनः** अयमभिषवग्रावा **कृणोतु वग्नुना** स्वेनाभिषवशब्देन ।।३।।

**वेङ्कटमाधव–** आतिष्ठ **वृत्रहन्! रथम्** । युक्तौ **ते ब्रह्मणा** अश्वौ । तव **मनः** अभिषवग्रावा घोषशब्देन अस्मदभिमुखं सुष्ठु करोतु ।। ३ ।।

**मुद्गल–** हे **वृत्रहन्!** शत्रूणां हन्तरिन्द्र! **रथम् आ तिष्ठ** आरोह । यस्मात् **ते हरी**

त्वदीयावश्वौ **ब्रह्मणा** स्तोत्रलक्षणेन मन्त्रेण **युक्ता** रथेऽस्माभिर्योजितौ तस्मात् त्वं रथमातिष्ठ । **ते मनः** त्वदीयं मनश्च **ग्रावा** अभिषवार्थे प्रवृत्तः पाषाणः **वग्नुना** वचनीयेनाभिषवशब्देन **अर्वाचीनम्** अस्मदभिमुखम् **सु कृणोतु** सुष्ठु करोतु ।। ३ ।।

**सायण–** हे **वृत्रहन्!** शत्रूणां हन्तरिन्द्र! **रथम् आ तिष्ठ** आरोह । यस्मात् **ते हरी** त्वदीयावश्वौ **ब्रह्मणा** स्तोत्रलक्षणेन मन्त्रेण **युक्ता** रथेऽस्माभिर्योजितौ तस्मात् त्वं रथमातिष्ठ । **ते मनः** त्वदीयं मनश्च **ग्रावा** अभिषवार्थं प्रवृत्तः पाषाणः **वग्नुना** वचनीयेनाभिषवशब्देन **अर्वाचीनम्** अस्मदभिमुखं **सु कृणोतु** सुष्ठु करोतु ।

युक्ता । 'सुपां सुलुक्' इति आकारः । वग्नुना । 'वचेर्गश्च' (उ.सू.३.३१३) इति नुप्रत्ययो गकारश्चान्तादेशः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **वृत्रहन्!** इन्द्र, **रथम् आतिष्ठ** रथमारोह । **ते** तव **हरी** अश्वौ **ब्रह्मणा** अस्मत्प्रयुक्तेन मन्त्रेण **युक्ता** योजितौ रथ इति शेषः । **ते मनः** त्वदीयं मनश्च **ग्रावा अयं** पूर्वोक्तः सङ्केतः, रसाविष्कारहेतुभूतः हार्दवागात्मा **वग्नुना** वचनशब्देन **अर्वाचीनम्** अस्मदभिमुखं **सु कृणोतु** सुष्ठु करोतु ।

वग्नुना–वचेश्चेति नुप्रत्ययः गकारश्चान्तादेशः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादने ।।**
इमम् । इन्द्र । सुतम् । पिब । ज्येष्ठम् । अमर्त्यम् । मदम् । शुक्रस्य । त्वा । अभि । अक्षरन् । धाराः । ऋतस्य । सदने ।। ४ ।।

**स्कन्द– इमम्** हे **इन्द्र! सुतम्** सोमम् **पिब ज्येष्ठम्** प्रशस्यतमम् **अमर्त्यम्** अमरणधर्माणम् । नित्यमित्यर्थः । मदम् मदकरमित्यर्थः । **शुक्रस्य** शुक्राख्यग्रहस्य शुक्लवर्णस्य वा सोमस्य । **त्वा अभि अक्षरन्** । अभिशब्दः 'अभिरभागे' (पा.१,४,९१) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । त्वां प्रति अक्षरन् क्षरितवत्य इत्यर्थः । **धाराः ऋतस्य** यज्ञस्य सम्बन्धिनि **सादने** स्थाने वेद्याख्ये ।। ४ ।।

**वेङ्कटमाधव– इमम् इन्द्र! सुतम् पिबः** । प्रशस्यम् अमरणसाधनं सोमम् । सोमस्य **धाराः** त्वाम् **अभि अक्षरन्** यज्ञगृहे ।। ४ ।।

**मुद्गल–** हे **इन्द्र! सुतम्** अभिषुतम् **इमम् सोमम् पिब** । कीदृशम् । **ज्येष्ठम्** अतिशयेन प्रशस्यम् **मदम्** मदकरम् **अमर्त्यम्** अमारकम् । सोमपानजन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः । तथा **ऋतस्य** यज्ञस्य सम्बन्धिनि **सदने** गृहे वर्तमानाः **शुक्रस्य** दीप्तस्यास्य सोमस्य **धाराः त्वा** त्वाम् **अभि अक्षरन्** आभिमुख्येन सञ्चलन्ति त्वां प्राप्नुवन्ति । स्वयमेवागच्छन्तीत्यर्थः ।। ४ ।।

**सायण–** हे **इन्द्र! सुतम्** अभिषुतम् **इमं सोमं पिब** । कीदृशम् । **ज्येष्ठम्** अतिशयेन प्रशस्यं **मदं** मदकरं **अमर्त्यम्** अमारकम् । सोमपानजन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः । तथा **ऋतस्य** यज्ञस्य सम्बन्धिनि **सदने** गृहे वर्तमानाः **शुक्रस्य** दीप्तस्यास्य सोमस्य **धाराः** त्वाम् **अभ्यक्षरन्** आभिमुख्येन सञ्चलन्ति त्वां प्राप्नुवन्ति स्वयमेवागच्छन्तीत्यर्थः ।

ज्येष्ठम् । प्रशस्यशब्दात् इष्ठनि 'ज्य च' (पा.सू.५.३.६१) इति ज्यादेशः । अक्षरन् । 'क्षर सञ्चलने' । छान्दसो लङ् ।। ४ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! सुतम्** अभिषुतं **इमं** सोमं **पिब** । कीदृशम्? **ज्येष्ठम्** अत्यन्तं प्रशस्यं **मदम्** मदकरं **अमर्त्यम्** मृतिरहितनित्यवस्तूपहितत्वात् अमृतम् । **ऋतस्य सदने** सत्यस्य गृहे **शुक्रस्य** दीप्तस्यास्य सोमस्य **धाराः त्वा** त्वां **अभि अक्षरन्** आभिमुख्येन सञ्चलन्ति । 'ऋतस्य सदनं' उत्तमे स्थाने परं ज्योतिः । तस्मात् तपस्यया भक्त्या सम्पादितस्य ज्वलत आनन्दस्य धाराः देवानां पत्युः स्वीकाराय तस्मै समर्प्यन्ते महर्षिभिः ।

ज्येष्ठम्–प्रशस्यशब्दात् इष्ठति ज्यादेशः । अक्षरन्–छान्दसो लङ् लडर्थे ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन । सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ।।**
इन्द्राय । नूनम् । अर्चत । उक्थानि । च । ब्रवीतन । सुताः । अमत्सु । इन्दवः । ज्येष्ठम् । नमस्यत । सहः ।। ५ ।।

**स्कन्द– नूनम्** इति पदपूरणः क्षिप्रार्थो वा, सामर्थ्यात् । इन्द्रार्थं क्षिप्रम् **अर्चत** उच्चारयत याज्यानुवाक्यादिलक्षणा स्तुतीः हे मदीयाः पुत्राः पौत्राः च ऋत्विजो वा । **उक्थानि च** शस्त्राणि च **ब्रवीतन** । किं कारणम् । उच्यते । यस्मात् **सुताः** अभिषुताः **अमत्सुः** तर्पितवन्तः **इन्दवः** सोमाः **ज्येष्ठम्** प्रशस्यतममिन्द्रम् **नमस्यत** नमस्कारैश्च पूजयत । सहः बलनामैतत् (निघ. २,९) । अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम् । सहस्विनं बलवन्तम् इन्द्रम् ।। ५ ।।

**वेङ्कटमाधव– इन्द्राय** क्षिप्रं स्तुत, शस्त्राणि च ब्रूत । **सुताः** सोमा एनम् **अमत्सुः** । तमिमं मत्तं **ज्येष्ठम्** सहस्वन्तं स्तोत्रैः शस्त्रैश्च **नमस्यत** इति । ५ ।।

**मुद्गल–** हे **ऋत्विजः! इन्द्राय नूनम्** क्षिप्रम् **अर्चत** पूजनं कुरुत । एतदेव स्पष्टीक्रियते । **उक्थानि** अप्रगीतमन्त्रसाध्यानि स्तोत्राणि च **ब्रवीतन** ब्रूत । **सुताः** अभिषुताः इन्दवः सोमाश्च **अमत्सुः** आगतमेनमिन्द्रं मत्तं कुर्वन्तु । अनन्तरम् **ज्येष्ठम्** प्रशस्यतमम् सह सहस्विनं बलवन्तं तमिन्द्रम् **नमस्यत** नमस्कुरुत ।। ५ ।।

**सायण–** हे ऋत्विजः! **इन्द्राय नूनं** क्षिप्रम् **अर्चत** पूजनं कुरुत । एतदेव स्पष्टीक्रियते । **उक्थानि** अप्रगीतमन्त्रसाध्यानि स्तोत्राणि **च ब्रवीतन** ब्रूत । **सुताः** अभिषुताः **इन्दवः** सोमाः च **अमत्सुः** आगतमेनमिन्द्रं मत्तं कुर्वन्तु । अनन्तरं **ज्येष्ठं** प्रशस्यतमं **सहः** सहस्विनं बलवन्तं तमिन्द्रं **नमस्यत** नमस्कुरुत ।

ब्रवीतन । ब्रवीतेर्लोटि 'तप्तनप्तनथनाश्च' इति तनबादेशः । अमत्सुः । 'मदी हर्षे' । छान्दसः प्रार्थनायां लुङ् । आगमानुशासनस्यानित्यत्वात् इडभावः । नमस्यत । 'नमोवरिवश्चित्रङः' इति क्यच् । सहः । 'लुगकारेकाररेफाश्च वक्तव्याः' (पा.सू.४.४.१२८.२) इति मत्वर्थीयस्य लुक् ।। ५ ।।

**सिद्धाञ्जनम्–** देवयजने प्रवृत्तानन्यान् सखीन् प्रति सम्बोधनम् । हे सखायः! **इन्द्राय नूनम्** क्षिप्रं **अर्चत** पूजनं कुरुत । **उक्थानि च** शस्त्रस्तोत्राणि च **ब्रवीतन** ब्रूत । **सुताः** अभिषुताः **इन्दवः** सोमाश्च **अमत्सुः** मत्तं मदयुक्तं संहृष्टं कुर्वन्तु । ततः **ज्येष्ठम्** प्रशस्यतमं **सहः** सहस्विनं बलिनं **नमस्यत** नमस्कुरुत ।

ब्रवीतन–लेटि तनबादेशः । अमत्सुः–मदी हर्षे, छान्दसः प्रार्थनायां लुङ् । नमस्यत–नमोवरिवश्चित्रङः इति क्यच् । सहः–मत्वर्थीयस्य लुक् ।। ५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये पञ्चमो वर्गः ।।

## ।। अथ षष्ठो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**नकिष्ट्वद् रथीतरो हरी यदिन्द्र यच्छसे । नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ।। ६ ।।**

**नकिः । त्वत् । रथिऽतरः । हरी इति । यत् । इन्द्र । यच्छसे । नकिः । त्वा । अनु । मज्मना । नकिः । सुऽअश्वः । आनशे ।। ६ ।।**

**स्कन्द– नकिः** इति निपातो न कश्चिदित्यस्यार्थे । न कश्चित् त्वत्तो **रथीतरः** प्रकृष्टतरो रथी । कस्मात् । उच्यते । **हरी यत्** यस्मात् हे **इन्द्र! यच्छसे** अत्यन्तप्रवृद्धवेगावपि नियच्छसि । निरोद्धुं शक्नोषीत्यर्थः । किञ्च **नकिः त्वा अनु मज्मना** अनुशब्दोऽत्र 'उपोऽधिके च' (पा.१,४,८७) इत्यनेन कर्मप्रवचनीयेन समानार्थं आधिक्यवचनः । 'मज्मना' (निघ.२,९) इति बलनाम । न कश्चित्त्वत्तोऽधिको बलेनेत्यर्थः । नापि कश्चित् शोभनाश्वयुक्तोऽपि आनशे व्याप्तिकर्मायम् (निघ.२,१८) । भवन्तं बलेन व्याप्नोति । सदृशोऽपि न कश्चित् बलेनास्तीत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** न कश्चित् त्वत्तः **रथीतरः** भवति । यदि त्वम् **इन्द्र!** अश्वौ नियच्छसि, न कश्चित् त्वाम् **अनु** बलेनाभिभवति, न कश्चन स्वश्वः गच्छन्तं व्याप्नोति ।। ६ ।।

**मुद्गल–** हे **इन्द्र!** त्वम् **यत्** यस्मात् **हरी** एतत्संज्ञावश्वौ **यच्छसे** रथे योजयसि । तस्मात् **त्वत्** त्वत्तोऽन्यः कश्चित् **रथीतरः** अतिशयेन रथवान् **नकिः** नास्ति । अन्येषामीदृग-श्वयुक्तरथाभावात् । **त्वा अनु** त्वामनुलक्ष्य मज्मना बलेन सदृशोऽपि **नकिः** नह्यस्ति । **स्वश्वः** शोभनाश्वोऽन्यश्च त्वाम् । **नकिः आनशे** न प्राप । इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशो बलवानश्ववान् लोके कश्चिदपि नास्तीत्यर्थः ।। ६ ।।

**सायण–** हे **इन्द्रः! यत्** यस्मात् त्वं **हरी** एतत्संज्ञावश्वौ **यच्छसे** रथे योजयसि तस्मात् त्वत्तोऽन्यः कश्चित् **रथीतरः** अतिशयेन रथवान् **नकिः** नास्ति । अन्येषामीदृगश्वयुक्तस्याभावात् । **त्वा** त्वामनुलक्ष्य **मज्मना** । बलनामैतत् । बलेन सदृशोऽपि **नकिः** न ह्यस्ति । **स्वश्वः** शोभनाश्वोऽन्यश्च त्वां **नकिः आनशे** न प्राप । इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशो बलवानश्ववान् लोके कश्चिदपि नास्तीत्यर्थः ।

नकिष्ट्वत् । 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' इति परत्वम् । रथीतरः । अतिशयेन रथी । तरपि 'ईद्रथिनः' (पा.सू.८.२.१७.१) इति ईकारान्तादेशः । अवग्रहसमये छान्दसं ह्रस्वत्वम् । यच्छसे । यमेर्व्यत्ययेन आत्मनेपदम् । स्वश्वः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तर-पदाद्युदात्तत्वम् । आनशे । 'अश्नोतेश्च' इति अभ्यासादुत्तरस्य नुट् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! हरी** प्रसिद्धौ अश्वौ **यच्छसे** नियामयसि रथे योजयित्वा । **यत्** यस्मात् **त्वत्** त्वत्तोऽन्यः कश्चित् **रथीतरः** अतिशयेन रथवान् **नकिः** नास्ति, तस्मात् प्रबलाश्वरथयुक्तोऽसि हि त्वम्, **त्वा अनु** त्वामनुलक्ष्य **मज्मना** बलेन तुल्योऽपि **नकिः** नास्ति । **स्वश्वः** शोभनाश्वोऽन्योऽपि त्वां **नकिः आनशे** न प्राप ।

नकिष्टवत्–युष्मत्तत्ततक्षुषु अन्तःपादमिति षत्वम् । रथीतरः–अतिशयेन रथी, तरपि ईद्रथिन इति ईकारान्तादेशः, अवग्रहसमये छान्दसो ह्रस्वः । यच्छसे–यमेः व्यत्ययेन आत्मनेपदम् । आनशे–अश्नोतेर्लिट् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**य एक इद् विदयते वसु मर्ताय दाशुषे । ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ।। ७ ।।**
यः । एकः । इत् । विऽदयते । वसु । मर्ताय । दाशुषे । ईशानः । अप्रतिऽस्कुतः । इन्द्रः । अङ्ग ।। ७ ।।

**स्कन्द– य एकः** इत् एव **विदयते** विविधं ददाति । **वसु मर्ताय दाशुषे** यजमानाय । **ईशानः** सर्वस्येश्वरः । **अप्रतिष्कुतः** 'स्कुञ् आ प्रवणे' । आप्रवणमागमनं प्रवतेर्गत्यर्थत्वात् । अन्येनाप्रतिगतः अप्रतिष्कुतः । युद्धे अभियुञ्जानः अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः । कोऽसौ । उच्यते । **इन्द्रः** । **अङ्ग** इति तु निपातः पदपूरणो वा क्षिप्रार्थो वा । सामर्थ्याद् **विदयत**

इत्येतेन सम्बन्धयितव्यः । क्षिप्रं विदयत इति । यच्छब्दश्रुतेश्चास्या ऋचः तच्छब्दमध्याहृत्य उत्तरयचैकवाक्यता योज्या । य इन्द्रो विदयते वसु सः ।। ७ ।।

**वेङ्कट–** **यः एकः** एव विविधं प्रयच्छति धनम् **मर्ताय दाशुषे**, ईश्वरः शत्रुभिरप्रतिशब्दितः सः **इन्द्रः** । **अङ्ग** इति कश्चन सम्बोधयति ।। ७ ।।

**मुद्गल– यः इन्द्रः एकः इत्** एक एव **दाशुषे** हविर्दत्तवते **मर्ताय** मनुष्याय यजमानाय **वसु** धनम् **विदयते** विशेषेण ददाति । **अङ्ग** क्षिप्रम् **अप्रतिष्कुतः** परैरप्रतिशब्दितः । प्रतिकूलशब्दरहित इत्यर्थः । एवम्भूतः सः **इन्द्रः** क्षिप्रम् **ईशानः** सर्वस्य जगतः स्वामी भवति ।।

**सायण–** आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः 'य एक इद्विदयते' इति वैकल्पिकः स्तोत्रियस्तृचः । 'एह्यू षु' इति खण्डे सूत्रितम्– 'सखाय आशिषामहि य एक इद्विदयते' (आश्व.श्रौ.७.८) इति । महाव्रतेऽपि निष्केवल्ये औष्णिहतृचाशीतावयं तृचो विनियुक्तः । तथैव पञ्चमारण्यके सूत्र्यते– 'य एक इद्विदयत आ याह्यद्रिभिः सुतम्' (ऐ.आ. ५.२.५) इति ।।

**यः** इन्द्रः **एकः इत्** एक एव **दाशुषे** हविर्दत्तवते **मर्ताय** मनुष्याय यजमानाय **वसु** धनं **विदयते** विशेषेण ददाति । **अङ्ग** इति क्षिप्रनाम । **अप्रतिष्कुतः** परैरप्रतिशब्दितः प्रतिकूल-शब्दरहित इत्यर्थः । एवम्भूतः सः **इन्द्रः** क्षिप्रम् **ईशानः** सर्वस्य जगतः स्वामी भवति ।

विदयते । 'दय दानगतिरक्षणहिंसादानेषु' । शपः पित्त्वात् अनुदात्तत्वम् । तिङश्च लसार्व-धातुकस्वरेण धातुस्वरः एव शिष्यते । यद्वृत्तयोगादनिघातः । अप्रतिष्कुतः । 'कु शब्दे' प्रतिकूलं कूयते शब्द्यते इति प्रतिष्कृतः । पारस्करादेराकृतिगणत्वात् सुट् । सुषामादित्वात् षत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– यः एक इत्** एक एव, अद्वितीयः **दाशुषे** दत्तवते **मर्ताय** मनुष्याय यजमानाय **वसु** धनं **विदयते** विशेषेण ददाति, सः **इन्द्रः** देवराट् **ईशानः** स्वामी सर्वस्य जगतः, **अप्रतिष्कृतः** न केनापि छादयितुं शक्यः, निराच्छादनः नित्यप्रकाश इति यावत् (१.७.६,८) तत्र प्राग्विवृतोऽयम् । **अङ्ग**! भो इति सम्बोधनम्, बाढं साधु इति वा वक्तव्ये अयं प्रयोगः । क्षिप्रार्थकोऽयमिति मन्यते सायणः, नैतद्युक्तं दृश्यते ।

विदयते–दय दानगत्यादिषु ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद् गिर इन्द्रो अङ्ग ।। ८ ।।**
कदा । मर्तम् । अराधसम् । पदा । क्षुम्पम्ऽइव । स्फुरत् । कदा । नः । शुश्रवत् । गिरः । इन्द्रः । अङ्ग ।। ८ ।।

**स्कन्द– कदा मर्तम् अराधसम्** 'राधः' (निघ.१०) इति धननाम । अधनम् । दारिद्र्यात् यष्टुमसमर्थमित्यर्थः । **पदा** पदेन । **क्षुम्पमिव स्फुरत्** क्षुम्पमहिच्छत्रकमुच्यते । स्फुर 'स्फुल सञ्चलने' । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । यथा वायुरन्यो वा कश्चित् सर्पच्छत्रकं चालयति तद्वच्चालयति । न कदाचिदपीत्यर्थः । निरादरत्वाद्धैतदनेन प्रकारेणाख्यायते । अधनस्योपरि अत्यन्तनिरादर इन्द्र इत्यर्थः । यत एवमतः सधनत्वात् कृतयागा वयं ब्रूमः । **कदा नः शुश्रुवत्** श्रोष्यति स्तुतिलक्षणा **गिरः इन्द्रः अङ्ग** । अयवैवं पूर्वोक्तयोरर्धर्चयोरेकवाक्यता । न कदाचिदप्यधनं पादेन चालयतीन्द्रः । वयश्चाधनाः, अतो भीता ब्रूमः । कदा नः शुश्रुवत् गिर इन्द्रो अङ्ग इति । अथवैवमन्यथास्या ऋचः अर्थयोजना । कदा मर्तमराधसं हविर्लक्षणेन धनेन रहितं अयष्टारमित्यर्थः । पदा क्षुम्पमिव स्फुरत् । स्फुरति स्फुलतीति वधकर्मसु पाठात् (निघ.३,१९) स्फुरतिरिह वधार्थः । यथा कश्चित् क्षुम्पं पादेनाक्रम्य हन्ति तद्वद्धनिष्यति । चूर्णयिष्यतीत्यर्थः । कदा वाऽस्माकं यष्टॄणां श्रोष्यति गिर इन्द्रो अङ्गेति । अयष्टॄन् कदा निग्रहीष्यति यष्टॄंश्चास्मान् स्तुतिश्रवणे न अनुग्रहीष्यतीत्यर्थः ।। ८ ।।

**वेङ्कटमाधव– कदा** मनुष्यम् अनाराधयन्तं पादेन अहिच्छत्रमिवानायासेन अवस्फुरति । वधकर्मा स्फुरतिः । **कदा नः** शृणोति गिरः ।। ८ ।।

**मुद्गल– अराधसम्** हविर्लक्षणेन राधसा धनेन रहितम् अयष्टारमित्यर्थः । एवंविधम् **मर्तम्** मनुष्यम् इन्द्रः **पदा** पादेन **क्षुम्पमिव** अहिच्छत्रकमिव **कदा स्फुरत्** स्फुरिष्यति । यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति । एवमिन्द्रोऽपि कदा अस्मच्छत्रून् हनिष्यतीत्यर्थः । स्फुरतिर्वधकर्मा । **नः** अस्माकं यष्टॄणां **गिरः** स्तुतिलक्षणा वाचः **इन्द्रः कदा** कस्मिन् काले **अङ्ग** क्षिप्रम् **शुश्रुवन्** श्रोष्यतीति वितर्क्यते ।। ८ ।।

**सायण– अराधसं** हविर्लक्षणा राधसा धनेन रहितम् । अयष्टारमित्यर्थः । एवंविधं **मर्तं** मनुष्यम् इन्द्रः **पदा** पादेन **क्षुम्पमिव** अहिच्छत्रकमिव **कदा स्फुरत्** स्फुरिष्यति वधिष्यति । यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदा अस्मच्छत्रून् हनिष्यतीत्यर्थः । स्फुरतिर्वधकर्मा । 'स्फुरति स्फुलति' (नि.२.१९.१५) इति वधकर्मसु पठितत्वात् । **नः** अस्माकं यष्टॄणां **गिरः** स्तुतिलक्षणा वाचः **इन्द्रः कदा** कस्मिन्काले **अङ्ग** क्षिप्रं **शुश्रवत्** श्रोष्यतीति वितर्क्यते । अत्र निरुक्तम्– 'क्षुम्पमहिच्छत्रकं भवति यत् क्षुभ्यते । कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति । कदा नः श्रोष्यति गिर इन्द्रोऽङ्ग । अङ्गेति क्षिप्रनाम' (निरु.५.१७) इति ।

पदा । पादशब्दस्य 'पद्दन्' इत्यादिना पदादेशः । 'ऊडिदम्' इति विभक्तेः उदात्तत्वम् । क्षुम्पमिव । 'क्षुभ सञ्चलने' । अस्मात् कर्मणि घञि बहुलवचनात् धातोर्नुमागमः । वर्णव्यापत्त्या भकारस्य पकारः । स्फुरत् । 'स्फुर सञ्चलने' । 'छन्दसि लुङ्लङ्लिटः' इति लुडर्थे लङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शुश्रवत् । 'श्रु श्रवणे' । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः ।। ८ ।।

**सिद्धाञ्जनम्– अराधसम्** अनाराधकं **मर्तम्** मनुष्यं **इन्द्रः पदा** पादेन **क्षुम्पम्** इव छत्राख्यं अल्पजीविनं क्षुद्रभूरुहमिव **कदा स्फुरत्** वधिष्यति । **नः** अस्माकं **गिरः** स्तुतीः **कदा** सः **शुश्रवत्** श्रोष्यति । अङ्ग भो । अराधसम्–अत्र धनरहितमिति सायणः, नैतत्साधु । अन्यत्र स एव अनाराधना इति व्याचष्टे । तदेवात्राप्युपपद्यते ''उत्तरार्धर्चस्यैकदेशः 'अप श्वानं अराधसं हत' राधककर्मरहितं तं श्वानं अपहत' (९.१०१.१३) 'नि अक्रमीः अभि विश्वान् अराधसः' सर्वान् अनाराधयतः अयजमानान् पणीन् वणिजो लुब्धकान् निकृष्टं अभिभव' (१०.६०.६) इति । क्षुम्पम्–मण्डलाकारेण शयानमिति सायणः । क्षुप एव क्षुम्पः, स च ह्रस्वशाखाखिफः क्षुद्रः क्षणविध्वंसी वनस्पतिविशेषः छत्राख्यः ।

स्फुरत्–स्फुर सञ्चलने, छन्दसि लडर्थे लङ् । शुश्रुवत्–श्रु श्रवणे, लेटि अडभावः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति । उग्रं तत् पत्यते शव इन्द्रो अङ्ग ।।**

**यः । चित् । हि । त्वा । बहुऽभ्यः । आ । सुतऽवान् । आऽविवासति । उग्रम् । तत् । पत्यते । शवः । इन्द्रः । अङ्ग ॥ ९ ॥**

**स्कन्द– चित् हि** इति पदपूरणौ । **यः** यजमानः **त्वा** त्वाम् **बहुभ्यः आ** बहुभ्य इत्यापादानश्रुतेरा इति च उपसर्गाद्योग्यक्रियापदाध्याहारः । बहुभ्योऽन्येभ्यो यजमानेभ्य आकृष्य । आत्मीयसकाशमानीयेत्यर्थः । **सुतवान्** सुतेन सोमेन तद्वान् । **आविवासति** मर्यादया परिचरति । **उग्रम् तत्** चतुर्थ्यर्थे प्रथमैषा । तस्मै **पत्यते** ऐश्वर्यकर्मायं पठितः (निघ.२,२१) । इह तु दानैश्वर्ययोः परस्परेण सम्बन्धादैश्वर्येण दानं प्रतिपद्यते । दानार्थं एव वा सामर्थ्यात् पत्यतिः । ददातीत्यर्थः । किम् । **शवः** बलम् । कः । उच्यते । भवान् **इन्द्रः** अङ्ग क्षिप्रम् । पदपूरणो वा अङ्गशब्दः । अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना । तदिति षष्ठ्यर्थे प्रथमा । पत्यत इत्यस्यैश्वर्यार्थ एव । इदम् उग्रं तस्य स्वभूतं शवः पत्यते यावतः कस्यचित् ईशितव्यं तस्य सर्वस्येष्टे इन्द्रः । व्यत्ययेन इमं सम्बोधनप्रथमास्थाने अव्यतिरिक्तप्रातिपदिकार्थे प्रथमा । हे इन्द्रेत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव– यः चित् हि त्वा बहुभ्यः** मनुष्येभ्यः एकः सुतसोमः परिचरति । तस्य उद्गूर्णं बलं सर्वेषामीष्टे । सः **इन्द्रः** इति अवगच्छेति ॥ ९ ॥

**मुद्गल– बहुभ्यः** मनुष्येभ्यः सकाशात् **यः चित् हि** य एव खलु यजमानः **आ सुतावान्** अभिषुतसोमयुक्तः सन् हे इन्द्र! **त्वा** त्वाम् **आविवासति** परिचरति । **तत्** तस्मै यजमानाय यत् **उग्रम्** उद्गूर्णम् **शवः** बलम् **इन्द्रः अङ्ग** क्षिप्रम् **पत्यते** पातयति प्रापयति ॥ ९ ॥

**सायण– बहुभ्यः** मनुष्येभ्यः सकाशात् **यश्चिद्धि** य एव खलु यजमानः **सुतावान्** अभिषुतसोमयुक्तः सन् हे इन्द्र! **त्वा** त्वाम् **आविवासति** परिचरति । विवासतिः परिचरणकर्मा । **तत्** तस्मै यजमानाय यत् **उग्रम्** उद्गूर्णं **शवः** बलम् **इन्द्रः अङ्ग** क्षिप्रं **पत्यते** पातयति प्रापयति ।

तत् । 'सुपां सुलुक्' इति चतुर्थ्याः लुक् । पत्यते । 'पत्लृ गतौ' । अस्मात् अन्तर्भावितण्यर्थात् व्यत्ययेन श्यन् ॥ ९ ॥

**सिद्धाञ्जनम्– यश्चिद्धि** य एव कलु यजमान एकः **आ** सर्वतः **सुतवान्** अभिषुतसोमयुक्तः सन् **त्वा** त्वां **बहुभ्यः** बहुमनुष्यकृते **आविवासति** सर्वतः प्रकाशयति, **तत्** तस्मै बहूनां

उपकारिणे यजमानाय **उग्रम्** उद्गूर्णं **शवः** बलं **इन्द्रः पत्यते** पातयति प्रापयति **अङ्ग!** आविवासति–यद्यपि परिचरणकर्मा प्रसिद्धः, प्रकाशार्थोऽयं प्रायशः, विचारितश्च प्राक् ।

पत्यते–पत्लृ गतौ, अन्तर्भावितण्यर्थात् व्यत्ययेन श्यन् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।**
**या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ।। १० ।।**
**स्वादोः । इत्था । विषुऽवतः । मध्वः । पिबन्ति । गौर्यः । याः । इन्द्रेण । सऽयावरीः । वृष्णा । मदन्ति । शोभसे । वस्वीः । अनु । स्वऽराज्यम् ।। १० ।।**

**स्कन्द– स्वादोः** मृडस्य । **इत्था** अमुत्र देवलोके । **विषुवतः** 'विषु व्याप्तौ' इत्यस्य विषुशब्दो व्याप्तिवचनः । व्याप्तिमतः । प्रभूतस्येत्यर्थः अथवा विषुशब्दः वैषम्यपर्यायः, वैषम्यवतः दुरवगतस्येत्यर्थः । **मध्वः** मधुसदृशस्वादुकस्य । सामर्थ्यादुदकस्य । षष्ठीनिर्देशाच्चैकदेशमिति शेषः । द्वितीयार्थे वा सर्वत्र षष्ठी । स्वादु विषुवत् मधुसदृशस्वादु चोदकं **पिबन्ति गौर्यः** । याः इत्येतत् पिबन्तीत्येतेन सम्बद्ध्यते । कुत्र एतत् । उत्तरस्यामृचि धेनुशब्देन प्रत्यवमर्शनात् । याः गावः पिबन्ति गौर्यः गौरवर्णाः **इन्द्रेण** सह **सयावरीः** सह गन्त्र्यः । कीदृशेन । उच्यते । **वृष्णा** वर्षित्रा । यत्र यत्रेन्द्रो गच्छति तत्र तत्र तस्य पश्चात् गन्त्र्यः । न केवलममुत्रैव देवलोके **मदन्ति** च किं तर्हि । **अनु स्वराज्यम्** स्वराज्यं प्रति । यत्र यत्र देशे इन्द्रस्याधिपत्यं तत्र सर्वत्रेत्यर्थः । यच्छब्दश्रुतेः च अस्या ऋचः उत्तरयर्चैकवाक्यता ।। १० ।।

**वेङ्कटमाधव–** स्वादुरसस्य इत्थं व्याप्तिमतः सोमस्य **पिबन्ति** गौरवर्णा गावः याः **इन्द्रेण वृष्णा** सह गच्छन्त्यः पीत्वा सोमम् **मदन्ति** शोभार्थम् । ताः वसुमत्यः **अनु** आसते **स्वराज्यम्** ।।

**मुद्गल– स्वादोः** स्वादुभूतस्य रसयुक्तस्य **इत्था विषूवतः** इत्थमनेन प्रकारेण सर्वेषु यज्ञेषु व्याप्तियुक्तस्य **मध्वः** मधुररसस्य सोमस्य । 'क्रियाग्रहणं कर्तव्यम्' (पाम.१,४,३२) इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । एवंविधं सोमम् **गौर्यः** गौरवर्णा गावः **पिबन्ति** । **याः** गावः **शोभसे** शोभार्थम् **वृष्णा** कामाभिवर्षकेण **इन्द्रेण सयावरीः** सह यान्त्यो गच्छन्त्यः सत्यः **मदन्ति** हृष्टा भवन्ति । ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः । **वस्वीः** पयःप्रदानेन

निवासकारिण्यस्ता गावः **स्वराज्यम्** स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वं तदनुलक्ष्यावस्थिता इति शेषः ।। १० ।।

**सायण–** चातुर्विंशिकेऽहनि माध्यन्दिने सवने अच्छावाकस्य 'स्वादोरित्था विषूवतः' इति वैकल्पिकः स्तोत्रियस्तृचः । 'होत्रकाणाम्' इति खण्डे सूत्रितम्– 'यः सत्राहा विचर्षणिः स्वादोरित्था विषूवतः' (आश्व.श्रौ.७.४) इति । पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्येऽप्ययं तृचोऽनुरूपः । 'स्तोमे वर्धमाने' इति खण्डे सूत्रितम्– 'स्वादोरित्था विषूवत उप नो हरिभिः सुतम्' (आश्व.श्रौ.७.१२) इति ।।

**स्वादोः** स्वादुभूतस्य रसयुक्तस्य **इत्था विषूवतः** इत्थमनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य **मध्वः** मधुररसस्य सोमस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । एवंविधं सोमं **गौर्यः** गौरवर्णा गावः **पिबन्ति** । **याः** गावः **शोभसे** शोभार्थं **वृष्णा** कामाभिवर्षकेण **इन्द्रेण सयावरीः** सह यान्त्यो गच्छन्त्यः सत्यः **मदन्ति** हृष्टा भवन्ति । ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः । **वस्वीः** पयःप्रदानेन निवासकारिण्यस्ता गावः **स्वराज्यं** स्वस्य स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वं तदनुलक्ष्यावस्थिता इति शेषः ।

विषूवतः । 'विष्लृ व्याप्तौ' । अस्मात् औणादिकः कुप्रत्ययः । ततो मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुपः उदात्तत्वम् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । व्यत्ययेन मतोर्वत्वम् । मध्वः । 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । गौर्यः । 'षिद्गौरादिभ्यश्च' इति ङीप् । जसि यणादेशे 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । सयावरीः । 'या प्रापणे' । 'आतो मनिन्' इति वनिप् । 'वनो र च' इति ङीब्रेफौ । मदन्ति । 'मदी हर्षे' । श्यनि प्राप्ते व्यत्ययेन शप् । वस्वीः । 'वस निवासे' । शृस्वृस्निहि' इत्यादिना वसेः उप्रत्ययः । 'धान्ये नित्' इत्यनुवृत्तेः आद्युदात्तत्वम् । 'वोतो गुणवचनात्' इत्यत्र 'गुणवचनात् ङीबाद्युदात्तार्थम्' (का.४.१.४४.१) इति वचनात् वसुशब्दात् ङीषि यणादेशः । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । स्वस्य राज्यं स्वराज्यम् । 'अकर्मधारये राज्यम्' (पा.सू.६.२.१३०) इत्युत्तरपदाद्युदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्– स्वादोः** स्वादुभूतस्य रसोपेतस्य **इत्था** इत्थं **विषूवतः** व्याप्तिमतः **मध्वः**

मधुरस्य सोमस्य, कर्मण्यर्थे षष्ठी, एवंविधं सोमं **गौर्यः** गौरवर्णाः गावः **पिबन्ति** । गौरवर्णः सौवर्णत्वद्योतनाय । गावश्चिद्रश्मयः उत्तमज्योतिर्विभवं प्रकटयन्ति इन्द्रेण सह, तस्मात् हिरण्मयप्रभास्ताः सोमरसं इन्द्रायार्पितं आददते, तेन तुष्टाः पुष्टाश्च इन्द्रेण युक्तास्तस्य यजमाने सर्वाधिकारप्रतिष्ठां अनुलक्ष्य अवतिष्ठन्त इति प्राह । **याः** गावः **शोभसे** शोभार्थं **वृष्णा** वर्षकेण ज्योतिर्बलादीनां, **इन्द्रेण सयावरीः** सह यान्त्यः गच्छन्त्यः सत्यः **मदन्ति** हृष्यन्ति । कीदृश्यस्ताः? **वस्वीः** वासकारिण्यः, **स्वराज्यम् अनु** स्वस्य इन्द्रस्य राज्यं राजत्वं अनुलक्ष्य तेन सह वासं कुर्वाणा अवतिष्ठन्त इत्यर्थः ।

विषूवतः–विष्लृ व्याप्तौ, औणादिकः कुप्रत्ययः, ततो मतुप्, व्यत्ययेन मतोर्वत्वम् । सयावरीः–या प्रापणे, आतो मनिन्निति वनिप्, वनो र चेति ङीब्रेफौ । मदन्ति– मदी हर्षे, श्यनः व्यत्ययेन शप् । वस्वीः–वस निवासे, वसेरुप्रत्ययः, वसुशब्दाद् गुणवचनात् ङीष्, ङीषि यणादेशः, जसि वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ।। १० ।।

।। इति प्रथमाष्टके षष्ठाध्याये षष्ठो वर्गः ।।

## ।। अथ सप्तमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**ता अ॒स्य पृश॒नायु॑वः॒ सोमं॑ श्रीणन्ति॒ पृश्न॑यः ।**
**प्रि॒या इन्द्र॑स्य धे॒नवो॒ वज्रं॑ हिन्वन्ति॒ साय॑कं॒ वस्वी॒रनु॑ स्व॒राज्य॑म् ।। ११ ।।**
**ता । अ॒स्य । पृ॒शन॒ऽयुवः॑ । सोम॑म् । श्री॒णन्ति॒ । पृश्न॑यः । प्रि॒या । इन्द्र॑स्य । धे॒नवः॑ । वज्र॑म् । हि॒न्व॒न्ति॒ । साय॑कम् । वस्वीः॑ । अनु॑ । स्व॒ऽराज्य॑म् ।। ११ ।।**

**स्कन्द–** या गौरवर्णाः गावः अमुत्र देवलोके यत्र चेन्द्रस्याधिपत्यं तत्र सर्वत्र पिबन्ति मदन्ति च । **ताः अस्य पृशनायुवः** पृशनाशब्दः अमृतरूपरसवचनः । युशब्दोऽपि तद्वदर्थे । अमृतरूपपयोलक्षणरसवत्यः । **सोमम् श्रीणन्ति पृश्नयः** पृश्निशब्दो वर्णविशेषवचनः । पुरस्तात् च गौर्य इति वर्णोपादानाद् इहान्तर्णीतमत्वर्थो द्रष्टव्यः । गौरवर्णाः । **प्रियाः इन्द्रस्य धेनवः** । दुह्यन्ते या गावः ता धेनव उच्यन्ते । न च सोममेव केवलम् श्रीणन्ति । किं तर्हि । **वज्रम् हिन्वन्ति** हिनोतिः वृद्ध्यर्थः । वज्रं चेन्द्रस्य स्वभूतं वर्धयन्ति । कीदृशम् । **सायकम्** षो अन्तकर्मणि । शत्रूणाम् अन्तकरम् । **अनु स्वराज्यम्** । यत्रयत्रेन्दस्याधिपत्यं तत्रतत्र सर्वत्र ।।

**वेङ्कटमाधव– ताः** धेनवः इन्द्रस्य स्पर्शनकामाः स्वपयसा **सोमम् श्रीणन्ति** गावः । **प्रियाः इन्द्रस्य धेनवः** शत्रूणामन्तकरम् आयुधं च प्रेरयन्ति ।। ११ ।।

**मुद्गल– ताः** पूर्वोक्ताः **अस्य** इन्द्रस्य **पृशनायुवः** स्पर्शनकामा **पृश्नयः** नानावर्णा गाव इन्द्रेण पातव्यम् सोमम् पयसा **श्रीणन्ति** मिश्रीकुर्वन्ति । **इन्द्रस्य प्रियाः** प्रीतिहेतुभूतास्ताः **धेनवः सायकम्** शत्रूणामन्तकरम् वज्रम् आयुधम् **हिन्वन्ति** शत्रुषु प्रेरयन्ति । इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः । अन्यत् पूर्ववत् ।। ११ ।।

**सायण– ताः** पूर्वोक्ताः **अस्य** इन्द्रस्य **पृशनायुवः** स्पर्शनकामाः **पृश्नयः** नानावर्णा गावः इन्द्रेण पातव्यं **सोमं** पयसा **श्रीणन्ति** मिश्रीकुर्वन्ति । **इन्द्रस्य प्रियाः** प्रीतिहेतुभूतास्ताः **धेनवः सायकं** शत्रूणामन्तकारकं **वज्रम्** आयुधं **हिन्वन्ति** शत्रुषु प्रेरयन्ति । इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पादयन्तीत्यर्थः । अन्यत् पूर्ववत् ।

हिन्वन्ति । हिविः प्रीणनार्थः । इदित्त्वात् नुम् । सायकम् । 'षो अन्तकर्मणि' । ण्वुलि आत्वे युगागमः ।। ११ ।।

**सिद्धाञ्जनम्– ताः** पूर्वोक्ताः **अस्य** इन्द्रस्य **पृशनयुवः** स्पर्शनकामाः **पृश्नयः** चित्रवर्णाः गावः, पूर्वं गौर्य इत्युक्ताः, अधुना चित्रवर्णत्वं तासामुक्तम् । अनेन तृतीयात् इन्द्रस्थानादुपरि परमज्योतिषः आगत्य इन्द्रेण सम्पृक्ता अवस्थातुं प्रारभन्त इति ग्राह्यम् । ताः **सोमम्** इन्द्रपेयं **श्रीणन्ति** मिश्रीकुर्वन्ति स्वीयेन पयसा सारेण चिद्विलामृतेन । **इन्द्रस्य प्रियाः** प्रीतिकारिण्यः **धेनवः** ता गावः **सायकम्** देवद्वेषिणां अवसायकं अन्तकारकं **वज्रम्** आयुधं **हिन्वन्ति** प्रेरयन्ति । शत्रुप्रध्वंसनं मदं इन्द्रस्योत्पादयन्ति । अन्यत्पूर्ववत् ।

हिन्वन्ति–हिविः प्रेरणार्थः । सायकम्–षो अन्तकर्मणि ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**ता अ॒स्य॒ नम॑सा॒ सहः॑ सप॒र्यन्ति॒ प्रचे॑तसः ।**
**व्र॒तान्य॑स्य सश्चिरे पु॒रूणि॑ पू॒र्वचि॑त्तये॒ वस्वी॒रनु॑ स्व॒राज्य॑म् ।। १२ ।।**
ताः । अ॒स्य॒ । नम॑सा । सहः॑ । स॒प॒र्यन्ति॑ । प्रऽचे॑तसः । व्र॒तानि॑ । अ॒स्य॒ । स॒श्चि॒रे॒ । पु॒रूणि॑ । पू॒र्वऽचि॑त्तये । वस्वीः॑ । अनु॑ । स्व॒ऽराज्य॑म् ।। १२ ।।

**स्कन्द–** **ताः** एव **अस्य** इन्द्रस्य स्वभूतम् **नमसा** पयोलक्षणेनान्नेन सहः सेनालक्षणं बलम् **सपर्यन्ति** परिचरन्ति । सेनामप्यस्य पयः पाययतीत्यर्थः । **प्रवेतसः** इन्द्रस्य गवां वा इदं विशेषणम् । प्रवृद्धप्रज्ञानस्येन्द्रस्य प्रवृद्धप्रज्ञाना वा गावः । किम् । **व्रतानि** कर्माणि वृत्रवधादीनि **अस्य** इन्द्रस्य सम्बन्धीनि । **सश्चिरे** सश्चतिर्गतिकर्मा (निघ.२,१४) । गच्छन्ति प्राप्नुवन्ति । कुर्वन्तीत्यर्थः । **पुरूणि** बहूनि । कीदृशस्य । उच्यते । **पूर्वचित्तये** पूर्वा प्रथमा अत्यन्तोत्कृष्टा वित्तिर्ज्ञानं यस्य स पूर्वचित्तिः । षष्ठ्यर्थे चात्र चतर्थी । अत्यन्तोत्कृष्टज्ञानस्येन्द्रस्येत्यर्थः । कर्माणि वृत्रप्रधादीनि यानीन्द्रस्य तान्यपि तस्य सहायभूता गावः कुर्वन्तीत्यर्थः । **वस्वीः अनु स्वराज्यम्** इत्युक्तार्थः ।। १२ ।।

**वेङ्कटमाधव–** **ताः अस्य** अन्नेन बलम् परिचरन्ति **प्रचेतसः** । **व्रतानि** च **अस्य** वृत्रवधादीनि बहूनि अभ्यगच्छन् पूर्वमेव ज्ञातुम् ।। १२ ।।

**मुद्गल–** **प्रचेतसः** प्रकृष्टज्ञानाः **ताः** गावः **अस्य** इन्द्रस्य **सहः** बलम् **नमसा** स्वकीयेन पयोरूपेणान्नेन **सपर्यन्ति** परिचरन्ति । **पुरूणि** बहूनि **अस्य** इन्द्रस्य **व्रतानि** शत्रुवधादिरूपाणि वीर्यकर्माणि **सश्चिरे** सेचिरे । ज्ञायन्ते इत्यर्थः । किमर्थम् । **पूर्वचित्तये** युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय । अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यज्यन्त इति तेषां बोधनायेत्यर्थः । अन्यत् पूर्ववत् ।। १२ ।।

**सायण–** **प्रचेतसः** प्रकृष्टज्ञानाः **ताः** गावः **अस्य** इन्द्रस्य **सहः** बलं **नमसा** स्वकीयेन पयोरूपेणान्नेन **सपर्यन्ति** परिचरन्ति । **पुरूणि** बहूनि **अस्य** इन्द्रस्य **व्रतानि** शत्रुवधादिरूपाणि वीर्यकर्माणि **सश्चिरे** सिषेविरे ज्ञायन्ते इत्यर्थः । किमर्थम् । **पूर्वचित्तये** युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय । अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यज्यन्ते इति तेषां बोधनायेत्यर्थः । अन्यत् पूर्ववत् ।

सश्चिरे । 'सश्च गतौ' । व्यत्ययेनात्मनेपदम् । पूर्वचित्तये । 'चिती संज्ञाने' । भावे क्तिन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ।। १२ ।।

**सिद्धाञ्जनम्–** अस्य तृचस्यान्तेऽस्मिन् मन्त्रे गवां स्वरूपं सङ्केतभाषया संवृतं 'प्रचेतसः' 'पूर्वचित्तये' इति प्रयोगेण किञ्चिद्वा विवृतं भवति, **प्रचेतसः** प्रकृष्टज्ञानाः ऋतुज्योतिस्सम्भूतत्वात्,

**ताः** गावः चिद्रश्मयः **अस्य** इन्दस्य **सहः** बलं **नमसा** प्रपदनेन, सर्वथा प्रह्वीभूय स्वात्मनां इन्द्रायत्तीकरणेनेत्यर्थः **सपर्यन्ति** परिचरन्ति । **अस्य** इन्द्रस्य **पुरूणि** बहूनि **व्रतानि** नियतानि कर्मविधानानि **सश्चिरे** सिषेविरे । नियतं कर्मविधानं तु धर्म एव भवति । इन्द्रस्य स्वभावकृत्यानि सर्वाणि तद्धर्मा एव भवन्ति । गोभिः कृतं तेषां सेवनं किमर्थम्? **पूर्वचित्तये** पूर्वबोधाय, यजमानस्य ऋषेः इन्द्रव्रतानुसारेण किमतः परमागच्छति तस्यानुभवप्रपञ्च इति बोधनाय, ते चिद्रश्मयः इन्द्रकर्मज्ञापितान् तद्धर्मान् प्रथमं भजन्ते । तेन ऋषेः पूर्वदृष्टिरागामिविषयिका सम्पद्यते । अन्यत्पूर्ववत् ।

सश्चिरे–सश्च गतौ, व्यत्ययेनात्मनेपदम् । पूर्वचित्तये–चिती संज्ञाने, भावे क्तिन् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ।। १३ ।।**

**इन्द्रः । दधीचः । अस्थऽभिः । वृत्राणि । अप्रतिऽष्कुतः । जघान । नवतीः । नव ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'कालकञ्जा नामासुराः । तैर्वध्यमाना देवा भगवन्तं ब्रह्माणं प्रणम्योचुः । वधोपायमेषां विधत्स्वेति । तान् ब्रह्मा प्रत्युवाच । दध्यङ्नामा ऋषिः । तमुपगच्छत । स चोपायं विधास्यते इति । ते तमुपगम्योचुः । ब्रह्मणा वयं प्रहिता इति । स योगैश्वर्यध्यानेनागमनप्रयोजनमवेत्य प्राणानुत्ससर्ज । ततस्तदस्थिभिरिन्द्रस्तानसुराञ्जघान' इति । तदैतदुच्यते । **इन्द्रः दधीचः अस्थभिः वृत्राणि** शत्रूनसुरान् **अप्रतिष्कुतः** अप्रतिगतः । केनचिदप्रतियोध्यमान इत्यर्थः । **जघान नवतीः नव** नवनवतिसङ्ख्याकान् । दशोत्तराण्यष्टौ शतानीत्यर्थः ।। १३ ।।

**वेङ्कटमाधव– इन्द्रः दधीचः** ऋषेः **अस्थभिः जघान नवतीः नव** चासुरान् अप्रतिकृतः ।।

**मुद्गल**– अत्र शाट्यायनिन इतिहासमाचक्षते– 'आथर्वणस्य दधीचो जीवतो दर्शनेनाऽसुराः पराबभूवुः । अथ तस्मिन् स्वर्गतेऽसुरैः पूर्णा पृथिव्यभवत् । अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ पप्रच्छ तत्रत्यान् नेह किमस्य

किञ्चित्परिशिष्टमङ्गमस्तीति । तस्मा अवोचन् अस्त्येतदाश्वं शीर्षं येन शिरसाऽश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् । तदन्विच्छतेति । तद्धान्वैषिषुः । तच्छर्यणावत्यनुविद्याजहुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुराञ्जघान' इति । **अप्रतिष्कुतः** परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः **इन्द्रः** आथर्वणस्य **दधीचः** एतत्संज्ञकस्यर्षेः **अस्थभिः** अश्वशिरसम्बन्धिभिरस्थिभिः **नवतीः नव** नवसङ्ख्याका नवतीर्दशोत्तराष्टशतसङ्ख्याकाः । तथाहि । लोकत्रयवर्तिनो दैवाञ्जेतुमादावासुरी माया त्रिधा सम्पद्यते । त्रिविधा अतीताऽनागतवर्तमानकालभेदेन तत्कालवर्तिनो देवान् जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति । एवं नव सम्पद्यते । पुनरप्युत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते । पुनः सात्विकादिगुणत्रयभेदेन त्रैगुण्ये सत्येकोत्तराशीतिः सम्पद्यते । एवं चतुर्भिस्त्रिकैर्गुणिताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः सम्पद्यन्ते । एवंविधानि मायारूपाणि **वृत्राणि** आवरकाण्यसुरजातानि **जघान** हतवान् ॥ १३ ॥

**सायण–** चातुर्विंशिकेऽहनि प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे 'इन्द्रो दधीचः' इति षढहस्तोत्रियसंज्ञकस्तृचः । सूत्रितं च– 'आदह स्वधामन्वित्येका द्वे चेन्द्रो दधीचो अस्थभिः' (आश्व.श्रौ.७.२) इति ॥

अत्र शाट्यायनिन इतिहासमाचक्षते– 'आथर्वणस्य दधीचो जीवतो दर्शनेनासुराः पराबभूवुः । अथ तस्मिन् स्वर्गतेऽसुरैः पूर्णा पृथिव्यभवत् । अथेन्द्रः तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ पप्रच्छ तत्रत्यान् नेह किमस्य किञ्चित्परिशिष्टमङ्गमस्तीति । तस्मा अवोचन् अस्त्येतदाश्वं शीर्षं येन शिरसाश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् । तदन्विच्छतेति । तद्धान्वैषिषुः । तच्छर्यणावत्यनुविद्याजहुः । शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुराञ्जघान' इति । **अप्रतिष्कुतः** परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः **इन्द्रः** आथर्वणस्य **दधीचः** एतत्संज्ञ-कस्य ऋषेः **अस्थभिः** अश्वशिरःसम्बन्धिभिरस्थिभिः **नवतीर्नव** नवसङ्ख्याका नवतीर्दशोत्तराष्ट-शतसङ्ख्याकाः । तथा हि । लोकत्रयवर्तिनो देवाञ्जेतुमादावासुरी माया त्रिधा सम्पद्यते । त्रिविधा अतीतानागतवर्तमानकालभेदेन तत्कालवर्तिनो देवाञ्जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति । एवं नव सम्पद्यते । पुनरप्युत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते । पुनः

सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सत्येकोत्तराशीतिः सम्पद्यते । एवं चतुर्भिस्त्रिकैर्गुणिताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः सम्पद्यन्ते । एवंविधमायारूपाणि वृत्राणि आवरकाण्यसुरजातानि जघान हतवान् ।

दधिचः । दधि अञ्चतीति दध्यङ् । अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । षष्ठ्येकवचने 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वे प्राप्ते तदपवादतया 'चौ' इति पूर्वपदस्य अन्तोदात्तत्वं प्राप्तम् 'अञ्चेश्छन्दस्य-सर्वनामस्थानम्' (पा.सू.६.१.१७०) इति पुनर्विभक्त्युदात्तत्वविधानेन तद्बाध्यते । अस्थभिः । 'छन्दस्यपि दृश्यते' (पा.सू.७.१.७६) इति अनजादावपि अस्थिशब्दस्य अनङादेशः स चोदात्तः ।। १३ ।।

**सिद्धाञ्जनम्– अप्रतिष्कुतः** अनाच्छादितः अनावृतः अनिरुद्धस्वप्रकाशः सन् **इन्द्रः वृत्राणि** आवरकाणि मायारूपाणि असुरजातानि **जघान** हतवान् । कति वृत्राणि? **नव नवतीः** दशोत्तराष्टशतसङ्ख्याकानि । कालत्रयभेदेन दशदिग्भेदेन च गुणत्रयगुणितेन एतां सङ्ख्यां निष्पादयति सायणः । भवत्वेवं, मा वा । नवेति नवतिरिति वा सङ्ख्यया विवक्षितं तु ग्राह्यम् । प्रायशः पूर्णं न तु सम्पूर्णमिति द्योतयति नव नवतिर्वा सङ्ख्या, सम्पूर्णं चेत् दश वा शतं वा उच्यते । अत्र न सर्वाणि वृत्राणि हतानि, हतशेषाणि क्वचित् निलीनानि पुनरुज्जीवनसम्भवानि स्युरिति आवेदितं अपूर्णसङ्ख्योल्लेखनेन । केन साधनेन ज़घान? **दधीचः अस्थभिः** दध्यङ्नामकस्य आंथर्वणस्यर्षेः अस्थिभिः इति पूर्वे व्याख्यातारः । अत्र ब्राह्मणोपाख्यानानि पुराणकथाश्चोदाहरन्ति । ईदृश ऐतिहासिकः पक्षो नोपपद्यते मन्त्रवर्णव्याख्यानेषु । अपि च स प्रत्युक्तः शबरस्वामिभिः 'गुणवादस्तु' इति सूत्रस्य भाष्ये । रहस्यार्थपक्षे–दध्यङ् इत्यत्र दधि अञ्चति गच्छति प्राप्नोतीति दध्यङ् । पयसा तत्प्रकृतिभूता गावो लक्ष्यन्ते । ताश्च चिद्रश्मयः प्रज्ञाप्रकाशाः । तत्परिणामेन दध्ना धारणात्मिका सूक्ष्मा बुद्धिः सङ्केतिता भवति । तथाविधं दधि अञ्चतीति दध्यङ्, तस्य स्थिराधारभूताः मूलधातवः अस्थीनि भवन्ति । अस्य दधीचः प्रस्तावः पुनरपि काक्षीवते सूक्ते सरहस्यं विचार्यते । अस्थभिः–अस्थिशब्दस्य छन्दसि अनङादेशः ।।

**नीतिमञ्जरी–** महान्मृतोप्युपकरोतीत्याह–

**महान्पतितकायोऽपि करोति सुखिनं परम् ।**
**दधीचोऽश्वशिरोऽस्थ्नेन्द्रो हत्त्वा वृत्राण्यभूत्सुखी ।। २३ ।।**

महान्नरः पतितकायोऽपि मृतोऽपि परं पुत्रपौत्रादिकम् अन्यं वा जनं सुखिनं सुखयुक्तं करोति । क इव । दध्यङ्ङिव । यथा दध्यङ् इन्द्रं सुखिनमकरोत् । कुतः । दधीचऋषेर्मृतस्य अश्वशिरः अश्वसम्बन्धि यच्छिरः तस्यास्थ्ना वृत्राणि पापरूपाणि हत्त्वा सुखी अभूदिन्द्रः ।

तत्र ऋक्– (१.८४.१३)

**इन्द्रो॑ दधी॒चो अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः । ज॒घान॑ नव॒तीर्नव॑ ।**

तत्रेतिहासः– आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः परिबभूवुः । अथ तस्मिन्स्वर्गते असुरैः परिपूर्णा पृथिव्यभवत् । अथेन्द्रः तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ तत्रत्यान् पप्रच्छ नेह किमस्य किञ्चित्परिशिष्टमङ्गमस्तीति । तस्मै अवोचद् अस्त्येतदाश्वं शीर्षं– येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्मो यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् तदन्विच्छतेति । तद्धान्वैषिषुः तच्छर्यणावत्यनुविद्याजहुः । शर्यणाबद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते तस्य शिरसोऽस्थिभिरिन्द्रोऽसुराञ्जघानेति इममर्थमनयोत्तरया च ऋचाऽऽह–

गोतमो गायत्र्येन्द्रं स्तौति । षोडश्यां विनियोगः । षोडशिन इति खण्डे 'इन्द्रो दधीच' इति सूत्रितम् । (सां.श्रौ.सू.९।३।११)

अस्या ऋचोऽयमर्थः । **अस्थभिः** । छन्दस्यपि दृश्यते– (पा.७।१।७६) इति अनजादावप्यस्थिशब्दस्यानङादेशः । स चोदात्तः । **दधीचो** अश्वशिरसः । **इन्द्रः** । **अप्रतिष्कुतः** परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः । **नवतीर्नव** । नवसङ्ख्याका नवतीः । दशोत्तराष्टशतसङ्ख्याकाः । वृत्राण्यावरकाणि असुरजातानि । **जघान** हतवान् ।

अप्रतिष्कृत इति अन्यपूर्वैरिति (ऋ.प्रा.५।२१) षत्वम् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**इ॒च्छन्नश्व॑स्य॒ यच्छिरः॒ पर्व॑ते॒ष्वप॑श्रितम् । तद् वि॑दच्छर्य॒णाव॑ति ॥ १४ ॥**
**इ॒च्छन् । अश्व॑स्य । यत् । शिरः॑ । पर्व॑तेषु । अप॑ऽश्रितम् । तत् । वि॒दत् । श॒र्य॒णाऽव॑ति ॥**

**स्कन्द–** अत्रापीतिहासमाचक्षते– 'इन्द्र आथर्वणाय दधीचे मध्वाख्यं परं ब्रह्म प्रोवाच । प्रोच्य चैनमुवाच । नेदं कस्मैचिद् वक्तव्यमिति । यदि वक्ष्यसि शिरस्ते पतिष्यतीति । तमश्विनौ मध्वर्थिनावागम्योचतुः । प्रब्रूहि नौ परं ब्रह्मेति । स तौ प्रत्युवाच । शिरःपातभयान्न प्रब्रवीमीति । तौ तं प्रत्यूचतुः । अन्यत् ते आवां शिरः प्रतिदध्वहे । तेन प्रब्रूहीति । स तथेति प्रतिपेदे । ततोऽस्याश्विनौ शिरश्छित्वा अश्वशिर आदधाते । तेनासौ तावध्यापयाञ्चकार' इति । तदेतत् कक्षीवान् वक्ष्यति– 'आथर्वणायश्विना' (ऋ १,१३७,२२) इति । तथा च 'दध्यङ् ह यत्' (ऋ.१,११६,१२) इति । ततोऽस्य तदश्वशिरः पपात । अथाश्विनौ स्वमेव शिरः प्रत्याधायाश्वशिर इन्द्रभयात् शर्यणावति पर्वते निदधाते । तदन्वेषमाण इन्द्रोऽलभत । **अश्वस्य** अवयवभूतम् **यत् शिरः** मधुनो ब्रह्मणः प्रवक्तुः **पर्वतेषु अपश्रितम्** आश्रितम् । इन्द्रभयादश्विभ्यां स्थापितमित्यर्थः । **तत् विदत्** तद्रूपं ज्ञातवान् लब्धवान् । क । **शर्यणावति** पर्वते ॥ १४ ॥

**वेङ्कटमाधव– अन्विच्छन्नभवत् यत् अश्वस्य शिरः पर्वतेषु** अवगूढम्, **तत्** अविन्दत् **शर्यणावति** सरसि । अत्र शाट्यायनकम्– 'दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास । तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते । स ह स्वर्गं लोकमुच्चक्राम । स हेन्द्रोऽसुरैः अभिबाढ उवाच । क नु स दध्यङ्ङभवदिति । तस्मै होचुः । स्वर्गं वै भगवः स लोकमुदक्रामदिति । स होवाच नह्यस्येह किञ्चित् परिशिष्टमस्तीति । तस्मै होचुः आसीदेतदाश्वं शीर्षं येनाश्विभ्यां देव! वेदं प्राब्रवीत् । तत्तु न विद्म यत्राभवदिति । तद्वा अन्विच्छतेति । तद्वान्वैषिषुः । इच्छन्नश्वस्येत्यादिकमुक्त्वाह– 'शर्यणावद्ध नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते । तदनुविद्याऽऽजह्रुः । तदस्मै प्रायच्छन् । तद्ध स्मासुराणां प्रकाशेऽधारयन् । तद्ध स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते । स ह तैरेवास्थिभिः नव नवतीः जघानासुराणाम्' (जैब्रा ३,६४; ६५) इति ॥ १४ ॥

**मुद्गल– पर्वतेषु** पर्ववत्सु गिरिषु **अपश्रितम्** अपगत्य स्थितम् **अश्वस्य** अश्वसम्बन्धि दधीचः

**यत् शिरः इच्छन् इन्द्रो** वर्तते । **शर्यणावति** एतत्संज्ञे सरसि **तत्** शिरः **विदत्** अज्ञासीत् । ज्ञात्वा तदाहृत्य तदीयैरस्थिभिर्वृत्राणि जघानेति पूर्वस्यामृषि सम्बन्धः ।। १४ ।।

**सायण– पर्वतेषु** पर्ववत्सु गिरिषु **अपश्रितम्** अपगत्य स्थितम् **अश्वस्य** अश्वसम्बन्धि दधीचः **यच्छिरः इच्छन्** इन्द्रो वर्तते **शर्यणावति** एतत्संज्ञे सरसि **तत्** शिरः **विदत्** अज्ञासीत् । ज्ञात्वा तदाहृत्य तदीयैरस्थिभिर्वृत्राणि जघानेति पूर्वस्यामृचि सम्बन्धः ।

इच्छन् । 'इषु इच्छायाम्' । तुदादित्वात् शप्रत्ययः । विदत् । वेत्तेर्लुङि व्यत्ययेन च्लेः अङादेशः । शर्यणावति । शर्यणा नाम देशाः । तेषामदूरभवं सरः शर्यणावत् । मध्वादिषु शर्यणशब्दस्य पाठात् 'मध्वादिभ्यश्च' (पा.सू.४.२.८६) इति चातुरर्थिको मतुप् । 'संज्ञायाम्' इति मतुपो वत्वम् । 'मतौ बह्वचोऽनजिरादीनाम्' (पा.सू.६.३.११९) इति दीर्घः ।। १४ ।।

**सिद्धाञ्जनम्– पर्वतेषु** पर्ववत्सु गिरिषु, विश्वसत्ता बहुप्रस्थोपेतेन पर्वतेन सङ्केत्यते । तादृशेषु उपर्युपरि अन्नमयप्राणमयादिसानुमत्सु **अपश्रितम्** अपगत्य आश्रितं **अश्वस्य** सर्वभोगसमर्थस्य प्राणस्य **यत् शिरः** यदुत्तमाङ्गं ऊर्ध्वं अवस्थितं **इच्छन्** अन्विच्छन्निन्द्रो **वर्तते तत्** तच्छिरः **विदत्** अवेदीत् अज्ञासीत् । कुत्र? **शर्यणावति** शर्यणावत् इति संज्ञके कुरुक्षेत्रप्रान्ते इति सायणः । अन्यत्र शर्यणावच्छब्दप्रयोगस्थलपरीक्षणेन सोमरसादानपात्रं इति ज्ञायते । तर्हि रहस्यं पुरुषस्यान्तर्हृदयस्थानमेव तत् । अथवा किमपि दिव्यं सूक्ष्मं स्थानम् तदेव ऋजुत्वयुक्तं रसयुक्तं रसग्रहणयोग्यं च भवति 'आर्जीकीये शर्यणावति' इति प्रयोगात् । 'अयं ते शर्यणावति सुषोमायां अधि प्रियः । आर्जीकीये मदिन्तमः ।।' (८.५३.११) 'सुषोमे शर्यणावति आर्जीकीये पस्त्यावति' (८.७.२९) 'मन्दस्व स्वर्णरे शर्यणावति विवस्वतः' (८.३.३९) 'ये सोमासः परावति ये अर्वावति सुन्विरे ये वा अदः शर्यणावति' (९.६५.२२) । अथ च सर्वसंशयच्छेदकं अन्यत्सूक्तं नवमे मण्डले वर्तते, तत्र 'यत्र ज्योतिरजस्रं यस्मिन् लोके स्वर्हितम्' इति विस्पष्टं नित्यसत्यज्योतिः प्रस्तुतम् । अत्र 'शर्यणावति सोममिन्द्रः पिबतु वृत्रहा' (९.११३.१) इत्येवं प्रारम्भः । कथमिदं कुरुक्षेत्रं इति व्याख्या असङ्गता न भवति? पूजनीयबहुजनभोजनपङ्क्तौ अपरिज्ञातः अनाहूतः स्वयमुपविष्टः पश्चादभिज्ञातः कथं न लज्जादौर्मनस्यानौचित्यानि आदधीत? एवमेव भवति व्याख्यातः कुरुक्षेत्रदेशः मन्त्रवर्णेषु मध्ये पातितः ।। १४ ।।

**नीतिमञ्जरी–** एषाऽपरा–(ऋ.१.८४.१४)

**इ॒च्छन्नश्व॑स्य॒ यच्छिरः॒ पर्व॑ते॒ष्वप॑श्रितम् । तद्वि॑दच्छर्य॒णाव॑ति ॥**

गायत्री छन्दः । दधीच ऋषिः । इन्द्रो देवता । **पर्वतेषु** पर्ववत्सु गिरिषु **अपश्रितं** अपगत्य स्थितम् । **अश्वस्य** अश्वसम्बन्धि **यच्छिरः** दधीचः **इच्छन्** इन्द्रः वर्तते । 'इष इच्छायां' तुदादित्वाच्छः (पा.३।१।७७) **शर्यणावति** एतत्संज्ञके सरसि तच्छिरोऽ**विदत्** अविन्दत् । इत्यमुना मृतेनापि दधीचा इन्द्रः सुखीकृत इत्यर्थः ।

शर्यणावति– शर्यणा नाम देशाः तेषामदूरभवं सरः शर्यणावत् । मध्वादिषु शर्यणाशब्दस्य पाठात् । 'मध्वादिभ्यश्च' (पा.४।२।८६) इति चातुरर्थिको मतुप् । संज्ञायामिति (पा.८।२।११) मतुपो वत्वम् । 'मतौ बह्वचोऽनजिरादीनाम्' (पा.६।३।११९) इति दीर्घः ॥ १४ ॥

## ऋक्संहिता पदपाठसहिता

**अत्राह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म् । इ॒त्था च॒न्द्रम॑सो गृ॒हे ॥ १५ ॥**
**अत्र॑ । अह॑ । गोः । अ॒म॒न्व॒त॒ । नाम॑ । त्वष्टुः॑ । अ॒पी॒च्य॑म् । इ॒त्था । च॒न्द्रम॑सः । गृ॒हे ॥**

**स्कन्द– अत्र अह** इति विनिग्रहार्थीय एवार्थे । गोः वाङ्नामात्र (निघ.१,११) । गोशब्दः स्तुतिवचतो वा (निघ.३।१६) । 'गोभिर्यदीमन्ये अस्मत्' (ऋ.८,२,६) इति यथा । स्तुतिलक्षणायाः वाचः स्तुतेर्वा । **अमन्वत** मनु अवबोधने । अवबुध्यन्ते । के । सामर्थ्यात् ऋषयः । किम् । **नाम** स्थानम् । यावती काचित् स्तुतिः सर्वाऽत्रैवेन्द्रे व्यवस्थितेत्येवमृषयो मन्यन्त इत्यर्थः । **त्वष्टुः** पञ्चमीनिर्देशादपेत्येति वाक्यशेषः । देवमात्रोपलक्षणार्थं चात्र त्वष्टृग्रहणं द्रष्टव्यम् । सर्वेभ्यो देवेभ्योऽपेत्येत्यर्थः । कीदृशं नाम । उच्यते । **अपीच्यम्** अन्तर्हितनामधेयमेतत् । (निघ.३,२५) अन्तर्हितम् । तत्सम्बन्धिहरिरथवज्रमरुदादिस्तुतिद्वारेणेत्यर्थः । **क** स्थिते इन्द्रे । उच्यते । **इत्था** अमुत्र । **चन्द्रमसः गृहे** स्थाने । अन्तरिक्षे द्युलोके वेत्यर्थः । सप्तमीनिर्देशात् स्थित इति वाक्यशेषः । यास्कस्तु मन्यते । अत्राहेत्यत्र अत्रशब्देन ऋगन्त्यं चन्द्रमसो गृहं प्रतिनिर्दिश्यते । चन्द्रमसश्च गृहं चन्द्रमण्डलम् । गौरित्यपि सुषुम्णो नाम सूर्यरश्मिश्चन्द्रमसं गतः अम्मयत्वात् चन्द्रमण्डलस्य ततः प्रतिहतः सन् परावृत्य ज्योत्स्नारूपेण

पृथिव्यां दीप्यते, स उच्यत इति । एवमेकवाक्यता– अत्र चन्द्रमसो गृहे चन्द्रमण्डले गोः सुषुम्नाख्यस्य सूर्यरश्मेरमन्वत ज्ञातवन्त इत्यर्थः । के । सामर्थ्यात् रश्मयः । नमनं नाम व्यवस्थानम् । त्वष्टुरादित्यादपेत्य अपीच्यमन्तर्हितं परित्यज्यादित्याश्मितां चन्द्ररश्मिरूपेणा-वस्थितस्येत्यर्थः । एतदयोग्यम् । न तावदत्रशब्देन चन्द्रमसो गृहं प्रतिनिर्देष्टुं शक्यम् । इत्थाशब्देन तस्य प्रतिनिर्देशादित्याशब्दस्य चामुत्रशब्दपर्यायत्वात् अत्रामुत्रेत्येतयोश्च सन्निकृष्टविप्रकृष्ट-प्रतिनिर्देशार्थयोरेकत्रार्थे विरुद्धत्वात् । नापि गोशब्दन सुषुम्नः शक्यो वक्तुम्, अनैन्द्रत्वप्रसङ्गात् । गोशब्देन हि सुषुम्नस्य प्रतिनिर्देशे सुषुम्नदेवतोऽयं मन्त्रः स्यात् । गुणप्रधानभावविपर्ययाद्वा चन्द्रदेवतः । न कथञ्चिदप्यैन्द्रः । ऐन्द्राणि चैतानि सूक्तानि । तत्र प्रकरणं बाध्येत । तस्मात् पूर्व एवार्थः ।। १५ ।।

**वेङ्कटमाधव–** अत्र यास्कः– 'अथाप्यस्यैको रश्मिश्चन्दमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम् । आदित्यतोऽस्य दीप्तिर्भवतीति । 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' (तै.३,४,७,१) इत्यपि निगमो भवति । सोऽपि गौरुच्यते । 'अत्राह गोरमन्वत' इति (या.२,६) अत्र ह गोः सममंसतादित्यरश्मयः स्वं नाम । **अपीच्यम्** अपचितमपगतमपिहितमन्तर्हितं वा । अमुत्र चन्द्रमसो गृहे'' (या.४,२५) इति । **अत्र चन्द्रमसः गृहे** मण्डले **गोः** सुषुम्णाख्यादित्यरश्मेः सकाशात् तदेकदेशभूता रश्मयः अन्तर्हितं नमनं कर्तुम् **अमन्वत** । गूढं तत्र वसन्ति । त्वष्टा त्विषेर्दीप्तिकर्मण इति । तच्चैतदिन्द्रकृतम् इत्यैन्द्रत्वम् ।। १५ ।।

**मुद्गल– अत्र अह** अस्मिन्नेव **गोः** गन्तुः **चन्द्रमसः गृहे** मण्डले **त्वष्टुः** दीप्तस्यादित्यस्य सम्बन्धि **अपीच्यम्** रात्रावन्तर्हितं स्वकीयं यत् **नाम** तेजस्तदादित्यस्य रश्मयः **इत्था** इत्थमनेन प्रकारेण **अमन्वत** अजानन् । उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति । तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्त इत्यर्थः । एतदुक्तं भवति । यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्याऽहनीव नैशं तमो निवार्य सर्वं प्रकाशयति । ईदृग्भूततेजोयुक्तः सूर्यश्चेन्द्र एव, द्वादशस्वादित्येषु चेन्द्रस्यापि परिगणितत्वात् । अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेति इन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रो देवतेत्येतदुपपन्नं भवति । ईदृग्भूतस्य तेजस आश्रयत्वेन चन्द्रमसः प्राधान्यविवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते ।।

**सायण–** अतिमूर्तिनाम्न्येकाहे कर्तव्ये पूर्वमेवैकं मासं सौर्याचान्द्रमसीभ्यामिष्टिभ्यां यष्टव्यम् । तत्र पूर्वपक्षे चान्द्रमसीष्टिः । 'अत्राह गोः' इति तस्यां प्रधानस्यानुवाक्या । 'अतिमूर्तिना' इति खण्डे सूत्रितम्– 'अत्राह गोरमन्वत नवोनवो भवति जायमानः' (आश्व.श्रौ.९.८) इति ।।

**अत्राह** अस्मिन्नेव **गोः** गन्तुः **चन्द्रमसो गृहे** मण्डले **त्वष्टुः** दीप्तस्यादित्यस्य सम्बन्धि **अपीच्यं** रात्रावन्तर्हितं स्वकीयं यत् **नाम** तेजः तदादित्यस्य रश्मयः **इत्था** इत्थमनेन प्रकारेण **अमन्वत** अजानन् । उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति । तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्ते इत्यर्थः । एतदुक्तं भवति । यद्रात्रावन्तर्हित सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्य अहनीव नैशं तमो निवार्य सर्वं प्रकाशयति । ईदृग्भूततेजसा युक्तः सूर्यश्च इन्द्र एव द्वादशेस्वादित्येष्विन्द्रस्यापि परिगणितत्वात् । अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेतीन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रो देवतेत्येतदुपपन्नं भवति । ईदृग्भूतस्य तेजस आश्रयत्वेन चन्द्रमसः प्राधान्यविवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते । अत्र निरुक्तम्– 'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति । सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति । सोऽपि गौरुच्यते । अत्राह गौरमन्वतेति' (निरु.२.६), 'अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वा' (निरु.४.२५) इति ।

अमन्वत । 'मनु अवबोधने' । अपीच्यम् । अपपूर्वात् चिनोतेः 'अघ्न्यादयश्च' (उ.सू.४.५५१) इति निपातनात् यत् । अत एवाभिमतरूपसिद्धिः । यद्वा । अपिपूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । अपिगते निगते भवमपीच्यम् । 'भवे छन्दसि' इति यत् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । तित्स्वरितः । 'अपीच्योऽप्रकाशः' इति भट्टभास्करमिश्रः । इत्था । इदंशब्दात् 'था हेतौ च च्छन्दसि' इति प्रकारवचने थाप्रत्ययः । यदि तत्रेदंशब्दो नानुवर्तते तदानीम् 'इदमस्थमुः' (पा.सू.५.३.२४) इति थमुप्रत्ययः । 'अव्ययादाप्सुपः' (पा.सू.२.४.८२) इति सुब्लुकं बाधित्वा 'सुपां सुलुक्' इति डादेशः । चन्द्रमसः । चन्द्रमाह्लादनं मिमीते निर्मिमीते इति चन्द्रमाः । 'चन्द्रे माङो डित्' (उ.सू.४.६६७) इति असिप्रत्ययः । दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदं च 'स्फायितञ्चि' इत्यादिना स्वप्रत्ययान्तमन्तोदात्तम् ।। १५ ।।

**सिद्धाञ्जनम्– अत्र अह** अस्मिन्नेव स्थाने पूर्वोक्ते 'आर्जीकीये पस्त्यावति सुषोमे शर्यणावति' इति बोध्यम् । तदेव विस्पष्टमाह प्रकारान्तरेण **इत्था** सत्यमिदं, **चन्द्रमसः** आह्लादकस्य रसमयस्य सोमस्य **गृहे** स्वस्थाने 'गन्धर्वस्य ध्रुवे पदे' (१.२२.१४) इति वर्णिते ध्रुवे स्थाने **त्वष्टुः** विश्वकर्मणः आदित्यस्य ऋतजातस्य सौरज्योतिषः **गोः** रश्मेः विश्वप्रकाशकस्य **अपीच्यम्** अन्तर्हितं गुप्तं **नाम** विशिष्टलक्षणज्ञापकं नमनसाधनं च तत्त्वं **अमन्वत** अजानन् विपश्चित इति शेषः । जानन्तीति लडर्थे लङ छन्दसि ।

अपीच्यम्–अपिपूर्वादञ्चतेः क्विन्, भवे छन्दसीति यत् । चन्द्रमसः–चन्द्रं आह्लादनं मिमीते निर्मिमीत इति चन्द्रमाः ।। १५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये सप्तमो वर्गः ।।

## ।। अथ अष्टमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।**
**आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ।। १६ ।।**
कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःहृणायून् । आसन्ऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषाम् । भृत्याम् । ऋणधत् । सः । जीवात् ।। १६ ।।

**स्कन्द– कः** पुण्यवान् **अद्य युङ्क्ते धुरि** धुरायां नियुङ्क्ते **गाः** गोशब्दोऽत्र वाजिवचनः । 'एतौ मे गावौ प्रमरस्य युक्तौ (ऋ.१०,२७,२०) इति यथा । वाजिनः **ऋतस्य** सत्यस्य सर्वगामिनो वेन्द्रस्य स्वभूतानि । कस्य । पुण्यवतः अद्य हरीन् रथे नियुज्येन्द्रो यज्ञमागच्छति । उपालम्भो वा । कीदृशान् हरीन् । उच्यते । **शिमीवतः** 'शिमी' (निघ.२,१) इति कर्मनाम । कर्मवतः । **भामिनः** शत्रूणामुपरि क्रोधवतः । अथवा शिमीवतः भामिनः इत्येते षष्ठ्येकवचनान्ते इन्द्रस्य विशेषणे । पराणि तु हरीणाम् । **दुर्हृणायून्** पापक्रोधान् । निर्मूलशत्रूच्छेदकरक्रोधा-नित्यर्थः । **आसन्निषून्** आस्ये इषवो येषां ते आसन्निषवः । हरयो हि सङ्ग्रामकाले शत्रूणामुपरि वेगवत इषून् वमन्ति । ते आसन्निषव उच्यन्ते तान् आसन्निषून् । **हृत्स्वसः** हृदयेषु ये अस्यन्ति

क्षिपन्तीषून् ते **हृत्स्वसः** तान् हृत्स्वसः । हृदयवेधिन इत्यर्थः । **मयोभून्** स्तोतृणां सुखस्य भावयितॄन् । **यः एषाम् भृत्याम्** भृतिम् ऋजीषलक्षणां धानालक्षणां च **ऋणधत्** ऋद्धिं करोति **सः जीवात्** सुजीवितं जीवति । स एव पुण्यकर्मेत्यर्थः ।। १६ ।।

**वेङ्कटमाधव– कः** इदानीम् **युङ्क्ते** इन्द्रस्य रथस्य **धुरि** अश्वान् कर्मवतः क्रोधवतः हिंसामिच्छतः निरस्यमानेषून् हृदयेषु च विध्यतः । सुखस्य भावयितॄन् । **यः एषाम्** अश्वानां यवसैः भरणं समर्धयति । सः जीवति लब्धान्नः ।। १६ ।।

**मुद्गल– अद्य** अस्मिन् कर्मणि **ऋतस्य** गच्छत इन्द्रसम्बन्धिनो रथस्य **धुरि** अश्ववहनप्रदेशे **गाः** गतिमतोऽश्वान् **कः युङ्क्ते** को नाम नियोक्तुं शक्नोति । न कोऽपीत्यर्थः । कीदृशानश्वान् । **शिमीवतः** वीर्यकर्मोपेतान् **भामिनः** तेजसा युक्तान् **दुर्हृणायून्** परैर्दुःसहेन क्रोधेन युक्तान् । हृणीयतिः क्रुध्यतिकर्मा । **आसन्निषून्** आसनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान् । **हृत्स्वसः** हृत्सु शत्रूणां हृदयेष्वस्यन्ति स्वकीयपादं क्षिपन्तीति हृत्स्वसः । **मयोभून्** मयसः सुखस्य भावयितॄन् । स्वकीयानां सुखप्रदानित्यर्थः । **यः** यजमानः **एषाम्** ईदृशानामश्वानाम् **भृत्याम्** भरणक्रियां रथवाहनक्रियाम् **ऋणधत्** समर्धयति स्तौतीति यावत् । **सः** यजमानः **जीवात्** जीवनवान्भवेत् ।। १६ ।।

**सायण–** सर्वपृष्ठायामिष्टौ कायस्य हविषः 'को अद्य' इति द्वे ऋचौ याज्यानुवाक्ये । सूत्रितं च– 'कायं दशमं को अद्य युङ्क्ते धुरि गा ऋतस्येति द्वे' (आश्व.श्रौ.४.१२) इति ।।

**अद्य** अस्मिन् कर्मणि **ऋतस्य** गच्छतः इन्द्रसम्बन्धिनो रथस्य **धुरि** अश्ववहनप्रदेशे **गाः** गतिमतोऽश्वान् **कः युङ्क्ते** को नाम नियोक्तुं शक्नोति । न कोऽपीत्यर्थः । कीदृशानश्वान् । **शिमीवतः** वीर्यकर्मोपेतान् **भामिनः** तेजसा युक्तान् **दुर्हृणायून्** परैर्दुःसहेन क्रोधेन युक्तान् । हृणीयतिः क्रुध्यति कर्मा । **आसन्निपून्** येषामासनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान् **हृत्स्वसः** । हृत्सु शत्रूणां हृदयेष्वस्यन्ति स्वकीयं पादं क्षिपन्तीति हृत्स्वसः । **मयोभून्** मयसः सुखस्य भावयितॄन् । स्वकीयानां सुखप्रदानित्यर्थः । **यः** यजमानः **एषाम्** ईदृशानामश्वानां **भृत्यां** भरणक्रियां रथवाहनक्रियाम् **ऋणधत्** समर्धयति स्तौतीति यावत् । **सः** यजमानः **जीवात्** जीवनवान्भवेत् । यद्वा क इति प्रजापतिरुच्यते । 'को वै नाम प्रजापतिः'

इति श्रुतेः । ऋतस्य यज्ञस्य धुरि निवहि गा वेदरूपान् वाग्विशेषान् अद्येदानीं युङ्क्ते संयोजयति । कीदृशान् । शिमीवतः प्रतिपाद्यैः कर्मभिर्युक्तान् भामिनः उज्ज्वलान् दुर्हृणायून् । हृणीयतिर्हानिकर्मा । हातुमशक्यान् वेदाध्ययनस्य नित्यत्वात् । आसन्निषून् आसनि आस्ये इषुरेषणं गमनमुच्चारणं येषां तान् हृत्स्वसो हृत्सु हृदयेषु दीप्यमानान् । प्रकाशमानानित्यर्थः । मयोभून् मयसोऽध्ययनप्रभवस्य सुखसाधनस्यादृष्टस्य भावयितॄन् । यो यजमान एषां वचसां भृत्यां भरणक्रियाम् ऋणधत् ऋद्धिमतीं करोति स जीवात् स एव जीवति । अन्ये जीवन्मृता इत्यर्थः ।

दुर्हृणायून् । 'हृणीङ् लज्जायाम्' । कण्ड्वादित्वात् यक् । बहुलवचनात् अस्मात् उण्प्रत्ययः । अतो लोपे सति वर्णव्यापत्त्या आकारः । मृगय्वादिर्वा द्रष्टव्यः । आसन्निषून् । 'पद्दन्' इत्यादिना आस्यशब्दस्य आसन्नादेशः । 'इष गतौ' इत्यस्मात् 'इषेः किच्च' (उ.सू.१.१३) इति उप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हृत्स्वसः । 'असु क्षेपणे' । 'अस गतिदीपयादानेषु' । 'क्विप् च' इति क्विप् । 'तत्पुरुषे कृति बहुलम्' इति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । मयोभून् । व्यत्ययेन ह्रस्वत्वम् । यद्वा । 'मितद्र्वादिभ्य उपसङ्ख्यानम्' (पा.सू.३.२.१८०.१) इति डुप्रत्ययः । भृत्याम् । 'भृञ् भरणे' । 'संज्ञायां समजनिषद' (पा.सू.३.३.९९) इति क्यप् । 'उदात्तः' इत्यनुवृत्तेः प्रत्ययस्योदात्तत्वम् । ऋणधत् । 'ऋधु वृद्धौ' । लेटि व्यत्ययेन श्नम् । 'लोटोऽडाटौ' इति अडागमः । 'इतश्च लोपः' इति इकारलोपः । जीवात् । 'जीव प्राणधारणे' । पूर्ववत् लेटि आडागमः ।। १६ ।।

**सिद्धाञ्जनम्– अद्य** इदादीं **ऋतस्य** सत्यस्य ज्योतिष इन्द्रात्मनावस्थितस्य, इन्द्रस्यैवात्र प्रस्तुतत्वात्, **धुरि** अग्रे **गाः** वाचः मन्त्रात्मिकाः **कः युङ्क्ते** संयोजयति । इतः प्रत्यक्षं भगवति इन्द्रे प्रसन्ने को वा धन्यः तस्य पुरः मन्त्रानुच्चारयतीत्यर्थः । अत्र 'युङ्क्ते' इति श्रवणात् 'गाः अश्वान्' इति 'ऋतस्य ऐन्द्रस्य रथस्ये'ति च उपपादनार्थं व्याचक्षते व्याख्यातारः । गौरत्र न रश्मिपर्यायः, वाक्पर्यायो ग्राह्यः 'गौरीर्मिमाय....... सहस्राक्षरा परमे व्योमन्' इत्यादाविव । अथ गवां वाग्विशेषाणां विशेषणानि । **शिमीवतः** वीर्यवत्कर्मयुक्तान् **भामिनः** तेजस्विनः प्रभावशालिन इत्यर्थः **दुर्हृणायून्** परैर्दुस्सहेन क्रोधेन युक्तान्, **आसन्निषून्** आसन् आस्ये मुखे इषवः, एषणानि येषां तान्, इषुर्बाणवाचकोऽपि एषणार्थादेव निष्पन्नः । एषणा च प्रेरणायां पर्यवस्यति, मन्त्रात्मकवाग्विशेषाणां अग्रे दुष्टनिवृत्ति-शिष्टप्रवृत्तिसाधिका एषणा वर्तते, तादृशं

हि मन्त्रवाग्वीर्यम् । **हत्सुऽअसः** हृदयेषु दीप्यमानान्, अस गतिदीप्त्यादानेषु, अथवा अस्यन्ति क्षिपन्ति प्रहरन्ति शत्रून् **मयोभून्** मयसः सुखस्य भावयितृन् । **यः** यो यजमानः **एषाम्** उक्तलक्षणानां वाग्विशेषाणां **भृत्याम्** भरणक्रियां **ऋणधत्** समर्धयति, ऋद्धिमतीं करोतीत्यर्थः **सः** तादृशः पुण्यपुरुषः **जीवात्** जीवेत्, अन्यस्तु जीवन्मृत एव ।

शिमीवतः–शिमीति कर्मनाम । दुर्हणायुः–हृणिः क्रुध्यतिकर्मा । आसन्निषून्–आस्यशब्दस्य आसन्नादेशः, इषुः–इष गतावित्यस्मादिषेः किच्चेत्युप्रत्ययः । हृत्स्वसः–तत्पुरुषे कृति बहुलमिति अलुक् । भृत्याम्–भृञ् भरणे, क्यप् । ऋणधत्–ऋधु वृद्धौ, लेटि अडागमः, व्यत्ययेन श्नम् । जीवात्–जीव प्राणधारणे, लेट्याडागमः ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति ।**
**कस्तोकाय क इभायोत रायेऽधि ब्रवत् तन्वे३ को जनाय ।। १७ ।।**
**कः । ईषते । तुज्यते । कः । बिभाय । कः । मंसते । सन्तम् । इन्द्रम् । कः । अन्ति ।**
**कः । तोकाय । कः । इभाय । उत । राये । अधि । ब्रवत् । तन्वे । कः । जनाय ।।**

**स्कन्द– कः ईषते** ईषतिः गतिकर्मा (निघ.२,१४) । प्रायेण च सर्वत्र भयपूर्वके गमने वर्तते । कोऽत्रेन्द्रात् भीतस्तच्छत्रुः पलायते । **तुज्यते** हिंस्यते इन्द्रेण । **कः बिभाय** बिभेतीन्द्रात् । न किञ्चिदागतस्येन्द्रस्य लिङ्गं दृश्यते, येनात्रेन्द्र आगत इत्यनुमीयेतेत्यर्थः । **कः** वा **मंसते** मन्यते । पश्यत्येवेत्यर्थः । **सन्तम्** तिरः सतः इति प्राप्तस्य नामनी (वा.३,२०) । तेनात्र सच्छब्द प्राप्तवचनः । प्राप्तम् **इन्द्रम् कः** वा **अन्ति** अन्तिके । सन्निकृष्टस्थमित्यर्थः । प्रत्यक्षेणाप्यागत इन्द्रो नैवात्रोपलभ्यते इत्यर्थः । **कः** वा **तोकाय** अपत्यार्थम् । **कः** वा **इभाय** हस्त्यर्थम् । **उत राये** धनार्थम् । **अधि ब्रवत्** । अधिशब्द 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येव कर्मप्रवचनीयः पदपूरणः । ब्रवीति । ज्ञापयतीन्द्रमित्यर्थः । **तन्वे कः** आरोग्यादियुक्तशरीरार्थम् । को वा विज्ञापयति परिचारकजनार्थं वा । आगते इन्द्रे योऽनुरूपो व्यवहारः अपत्यप्रार्थनादिः तं कुर्वन् अन्योऽपि न दृश्यते, येन आगत इन्द्र इत्येतत् अर्थात् परिकल्प्येतेरयर्थः । एवमियमप्यागमनविलम्बनात् परिदेवना वा उपालम्भो वा ।। १७ ।।

**वेङ्कटमाधव–** **कः** इह भीतः पलायते । कः वा हिंस्यते । **कः** बिभेति । **कः** वा अन्तिके तिष्ठन्तम् **इन्द्रम्** भीतो जानाति । पूरण एकः किंशब्दः । कः पुत्रार्थम्, कः गजार्थं को वा धनार्थम् अधिब्रवीति । पुत्रादिकं मदीयं रक्षेति वचनमधिवचनम् । कः वा शरीरार्थं भटार्थं च । आगते सति इन्द्रे एतानि चिह्नानि भवन्ति, आगतः किमिहेन्द्र इति प्रश्नः ।। १७ ।।

**मुद्गल–** अनुग्रहीतरि इन्द्रे आगते सति **कः ईषते** शत्रोर्भीतः सन् को निर्गच्छति न कोऽपीत्यर्थः । **कः तुज्यते** को हिंस्यते शत्रुभिर्हिंस्योऽपि कश्चिन्नास्तीत्यर्थः । **कः** यजमानः **बिभाय** बिभेति । इन्द्रे रक्षके सति भयमपि नोत्पद्यते, दूरे तस्य शत्रुकृता हिंसा । **अन्ति** अन्तिके समीपे **सन्तम्** अस्माकं रक्षकत्वेन वर्तमानम् **इन्द्रम् कः** पुरुषः मंसते जानाति । वयमेव जानीमो नान्य इत्यर्थः । युद्धे सहायार्थमिन्द्र आगते सति **कः** यजमानः **तोकाय** पुत्राय **अधि ब्रवत्** हे **इन्द्र!** अस्मदीयं पुत्रं रक्षत्येवंरूपम् अधिवचनं पक्षपातेन वचनम् । ब्राह्मणाय अधिब्रूयादिति यथा । एवंरूपमधिवचनं को यजमानः कुर्यात् । स्वयमेवेन्द्रो रक्षतीति भावः । **इभाय** गजाय **कः** अधिब्रवत् । **उत** अपि च **राये** शत्रुभिरपह्रियमाणाय धनाय कोऽधिब्रवत् । अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात् । न कोऽपीत्यर्थः । अपि च **तन्वे** स्वकीयाय शरीराय **जनाय** परिजनाय च **कः** अधिब्रवत् । शरीररक्षार्थश्चेन्द्रस्याधिवचनं नापेक्षितम् । स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः ।। १७ ।।

**सायण–** अनुग्रहीतरि इन्द्रे आगते सति **क ईषते** शत्रोर्भीतः सन् को निर्गच्छति न कोऽपीत्यर्थः । **कः तुज्यते** को हिंस्यते शत्रुभिर्हिंस्योऽपि कश्चिन्नास्तीत्यर्थः । **कः** यजमानः **बिभाय** बिभेति । इन्द्रे रक्षके सति भयमपि नोत्पद्यते दूरे तस्य शत्रुकृता हिंसा । **अन्ति** अन्तिके समीपे **सन्तम्** अस्माकं रक्षकत्वेन वर्तमानम् **इन्द्रं कः** पुरुषः **मंसते** जानाति । वयमेव जानीमो नान्यः इत्यर्थः । एकः कः पूरकः । युद्धे सहायार्थमिन्द्रे आगते सति **कः** यजमानः **तोकाय** पुत्राय **अधि ब्रवत्** । हे इन्द्र! अस्मदीयं पुत्रं रक्षेत्येवंरूपमधिवचनं पक्षपातेन वचनम् । 'ब्राह्मणायाधिब्रूयात्' इति यथा । एवंरूपमधिवचनं को यजमानः कुर्यात् । स्वयमेवेन्द्रो रक्षतीति भावः । **इभाय** गजाय **कः** अधि ब्रवत् । **उत** अपि च **राये** शत्रुभिरपह्रियमाणाय धनाय कः अधि ब्रवत् । अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात् । न कोऽपीत्यर्थः । अपि च **तन्वे** स्वकीयाय शरीराय **जनाय** परिजनाय च **कः** अधि ब्रवत् ।

**स्वशरीररक्षार्थं परिजनरक्षार्थं चेन्द्रस्याधिवचनं नापेक्षितम् । स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः। यदा तु कशब्दाभिधेयस्य प्रजापतेः सम्बन्धिनि कर्मणि विनियोगः तदानीं परमैश्वर्ययोगादिन्द्रशब्देन प्रजापतिरेवाभिधीयते । यथा 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति विनियोगानुसारेण 'कदाचन' इत्यस्यामृचि विद्यमान इन्द्रो गार्हपत्यपरतया नीयते तद्वत् ।**

**ईषते । 'ईष गतिहिंसादर्शनेषु' । भौवादिक आत्मनेपदी । तुज्यते । 'तुज हिंसायाम्' । कर्मणि यक् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । 'अतिङः' इति पर्युदासात् निघाताभावः । मंसते । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । अन्ति । अन्तिकस्य 'कादिलोपो बहुलम्' सति कलोपः । ब्रवत् । ब्रवीतेर्लेटि अडागमः । तन्वे । तनुशब्दाच्चतुर्थ्येकवचने 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । 'उदात्तस्वरितयोर्यणः' इति विभक्तेः स्वरितत्वम् ।। १७ ।।**

**सिद्धाञ्जनम्–** पूर्वोक्तविधया इन्द्रे प्रसन्ने सति, **कः ईषते** गच्छति, सङ्कटे समुपस्थिते को भीतोऽपगच्छति? **कः तुज्यते** को वा हिंस्यते? **को विभाय** को वा बिभेति? **अन्ति** अन्तिके समीपे **सन्तम्** वर्तमानं, सर्वस्य भक्तस्य यजमानस्य सन्निहितो हि सः, तथाभूतं **इन्द्रम् कः मंसते** को जानाति? इन्द्रे सन्निहिते प्रत्यक्षे सति, **कः** को वा मनीषी भक्तः **तोकाय** पुत्रार्थं **अधि ब्रवत्** अधिवचनं ब्रूयात्? 'भगवन्निन्द्र मह्यं पुत्ररक्षां देहि गजादिकं धनं देहि शरीररक्षां परिजनं वा देहि' इति प्रार्थनां न कोऽपि भक्तः कुरुते । तादृशं वचनं अधिकवचनं भवति । इन्द्रः स्वयं करोति कर्तव्यं, यद्युक्तमिष्टं वा तत्प्रापयति, यदयुक्तमनिष्टं तत्परिहरति । तस्मादधिवचनं परमार्थभक्तियुक्तो यजमानो न ब्रूते, स भजमानो यजत एव । तदाह । **कः इभाय** गजाय 'अधि ब्रवत्'? **उत** अपि च **राये** धनाय, **तन्वे** शरीराय **कः जनाय** परिजनाय 'अधिब्रवत्' । एकः 'कः' पूरकः ।

ईषते–ईष गतिहिंसादर्शनेषु । तुज्यते–तुज हिंसायाम् । मंसते–लेट्यडागमः, सिप् बहुलं लेटीति सिप् । ब्रवत्–ब्रवीतेर्लेट् । तन्वे–तनुशब्दाच्चतुर्थ्येकवचनं, घेर्ङितीति छन्दसि गुणाभावे यणादेशः ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**को अ॒ग्निमी॑ट्टे ह॒विषा॑ घृ॒तेन॑ स्रु॒चा य॑जाता ऋ॒तुभि॑र्ध्रु॒वेभि॑: ।**
**कस्मै॑ दे॒वा आ व॑हाना॒शु होम॒ को मं॑सते वी॒तिहो॑त्रः सु॒दे॒वः ॥ १८ ॥**
कः । अ॒ग्निम् । ई॒ट्टे । ह॒विषा॑ । घृ॒तेन॑ । स्रु॒चा । य॒जा॒तै॒ । ऋ॒तु॒ऽभि॑ । ध्रु॒वेभि॑: । कस्मै॑ ।
दे॒वाः । आ । व॒हा॒न् । आ॒शु । होम॑ । कः । मं॒स॒ते॒ । वी॒तिऽहो॑त्रः । सु॒ऽदे॒वः ॥ १८ ॥

**स्कन्द– कः अग्निम् ईट्टे** । ईडिरत्र सामर्थ्यात् पूजार्थः । पूजयति । **हविषा घृतेन** घृताख्येन **स्रुचा यजातै** चरुपुरोडाशादिहविःपूर्णया स्रुचा यजातै **ऋतुभिः ध्रुवेभिः** सप्तम्यर्थे तृतीया । ऋतुषु ध्रुवेषु । नियतेषु यागकालेष्वित्यर्थः । **कस्मै देवाः** इन्द्रादयः **आ वहान्** आवहन्ति प्रापयन्ति आत्मानम् । आगच्छन्तीत्यर्थः । **आशु** क्षिप्रम् **होम** हूयते यस्मिंस्तद्धोम । यागस्थानमित्यर्थः । अथवा होमेति तादर्थ्यचतुर्थ्या लुक् । होमाय । होमार्थमित्यर्थः । **कः** वा **मंसते** कर्मण्ययं व्यत्ययेन कर्तृशब्दो द्रष्टव्यः । ज्ञायते लोकेन । कीदृशः । **वीतिहोत्र** वेति इति कान्तिकर्मसु पाठात् वेतिरिह कान्त्यर्थः (निघ.२,६)। शोभना देवा यस्य सः **सुदेवः** । अविलम्बितयज्ञत्वादेव प्रिययज्ञं देवानाश्चानुग्राह्यं लोकोऽवगच्छतीत्यर्थः । एवमियमप्यागमनविलम्बनात् परिदेवना वा उपालम्भो वा ॥ १८ ॥

**वेङ्कटमाधव–** हविः सम्भृत्य इन्द्रयागार्थम् **कः अग्निम्** सामिधेनीभिः स्तौति । को वा **घृतेन हविषा स्रुचा** करणभूतया ध्रुवैः **ऋतुभिः** सह प्रयाजदेवताभिरग्निं यजते । कस्मै देवाः शीघ्रमावहन्ति हूयमानं हविः । **कः** वा प्रियमन्त्रः कल्याणदेवः देवेभ्यः कामान् वाञ्छति ॥

**मुद्गल– कः** यजमानः **अग्निम् ईट्टे** इन्द्रार्थं हविर्निरूप्याग्निं स्तौति । इन्द्राय हविर्निर्वापोऽपि सम्यक् कर्तुं न शक्यते इन्द्रस्य दुर्विज्ञानत्वात् । को वेन्द्रयागार्थमग्निम् **स्रुचा** जुह्वा **ध्रुवेभिः** ध्रुवैर्नित्यैः **ऋतुभिः** वसन्तादिकालैरुपलक्षितेन **घृतेन हविषा यजातै** यजेत् । **कस्मै** यजमानाय **होम** ह्वातव्यं प्रशस्यं धनम् **आशु** शीघ्रम् देवाः **आ वहान्** आवहन्ति प्रयच्छन्ति । न कस्मा अपीत्यर्थः । इन्द्र एव धनस्य दाता नान्ये देवा इतीन्द्रः स्तूयते । **वीतिहोत्रः** प्राप्तयज्ञः **सुदेवः** शोभनदेवताकः **कः** यजमानः **मंसते** इन्द्रं सम्यग् जानाति । न कोऽपीत्यर्थः । बहुविधेन स्तोत्रेण चिरकालोपासनेन चेन्द्रः प्रत्यक्षो भवति, नान्येन प्रकारेणेति तात्पर्यार्थः ॥ १८ ॥

**सायण– कः** यजमानः **अग्निम् ईट्टे** इन्द्रार्थं हविर्निरुप्याग्निं स्तौति । इन्द्राय हविर्निर्वापोऽपि सम्यक्कर्तुं न शक्यते । इन्द्रस्य दुर्विज्ञानत्वात् । को वा इन्द्रयागार्थमग्निं **स्रुचा** जुह्वा **ध्रुवेभिः** ध्रुवैर्नित्यैः **ऋतुभिः** वसन्तादिकालैरुपलक्षितेन **घृतेन** हविषा **यजातै** यजेत् । यद्वा । ऋतवः प्रयाजदेवताः । 'ऋतवो वै प्रयाजाः' (तै.सं.१.६.११.५) इति श्रुतेः । ताभिः ध्रुवैः प्रकृतौ विकृतौ च अनुष्टेयतया निश्चलैर्ऋतुभिः सह अग्निमाज्यभागदेवतां घृतेन हविषा को यजेत् । न कोऽपीत्यर्थः । **कस्मै** यजमानाय **होम** ह्वातव्यं प्रशस्यं धनम् **आशु** शीघ्रं **देवाः आ वहान्** आवहन्ति प्रयच्छन्ति । न कस्मा अपीत्यर्थः । इन्द्र एव धनस्य दाता नान्ये देवा इति इन्द्रः स्तूयते । **वीतिहोत्रः** प्राप्तयज्ञः **सुदेवः** शोभनदेवताकः **कः** यजमानः **मंसते** इन्द्रं सम्यग्जानाति । न कोऽपीत्यर्थः । बहुविधेन स्तोत्रेण चिरकालोपासनेन चेन्द्रः प्रत्यक्षो भवति नान्येन प्रकारेणेति तात्पर्यार्थः ।

ईट्टे । 'ईड स्तुतौ' । अदादित्वात् शपो लुक् । स्रुचा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । यजातै । यजतेर्लेटि आडागमः । 'वैतोऽन्यत्र' इति ऐकारः । वहान् । वहतेर्लेटि आडागमः । 'इतश्च लोपः' इति इकारलोपः । 'संयोगान्तस्य' इति तकारलोपः । होम । ह्वयतेः कृतात्वस्य 'आतो मनिन्' इति मनिन् । 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । यद्वा । 'नामन्सीमन्' (उ.सू.४.५९०) इत्यादौ होमञ्शब्दो मनिन्प्रत्ययान्तो निपात्यते । मंसते । 'मन ज्ञाने' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । वीतिहोत्रः । वी गत्वादिषु । अस्मात् कर्मणि 'मन्त्रे वृष' इत्यादिना क्तिन् स चोदात्तः । होत्रं होमः । 'हुयामाश्रुभसिभ्यस्त्रन्' (उ.सू.४.६०७) इति त्रन्प्रत्ययः । वीतिः प्राप्तो होमो येन । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सुदेवः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।। १८ ।।

**सिद्धाञ्जनम्–** अस्यामृचि हविर्घृतस्रुचः कर्मानुष्ठानसामग्र्यः रहस्यपक्षे सङ्केताः बोध्याः । हविरर्पणद्रव्यं, यद्यत् कर्म क्रियमाणं देवार्थमर्प्यते, तत्सर्वम् । घृतम् दीप्तिः, प्रसन्नता । स्रुक् यजनपात्रविशेषो दर्विः, तीव्रेच्छा मुहुर्मुहुरुद्गता उज्ज्वलाभीप्सा सर्वार्पणरूपे सूक्ष्मकर्मणि वैदिके योगे मुख्योपकरणं भवति । **कः** को यजमानः **अग्निम् ईट्टे** सर्वदेव होतारं प्रमुखं देवानां इन्द्रादीनां, स्तौति? इन्द्रस्य आगमनाय तदाराधनाय तत्प्रसादप्राप्तये च अग्निरेव प्रथमं पूजयितव्यः । तदाह, **हविषा** हविर्निरूपणेन **घृतेन** ज्वलनसाधनेन दीपनेन **स्रुचा** उद्दीपनसाधनेन जुह्वाख्येन,

**ध्रुवेभिः** स्थिरैः नित्यैरप्रमत्तैः **ऋतुभिः** नियतदैव्यविधिक्रमानुसारिभिः कालविशेषैः, दैव्येषु नियतकालेष्वित्यर्थः **यजातै** यजेत् । **कस्मै** यजमानाय **देवाः** इन्द्रादयः **होम** आह्वातव्यं प्रशस्यं बलं सामर्थ्यमिति यावत् **आशु** शीघ्रं **आ वहान्** आवहन्ति प्रापयन्ति? **वीतिहोत्रः** वीतये आगतये देवानामाविष्कृतये होत्रं होतृकर्म आह्वानं यस्य सः **सुदेवः** शोभनदेवताकः **कः** को यजमानः **मंसते** जानातीन्द्रम्? बहुविधेनोपासनेन देवतासान्निध्यं लभ्यते, इन्द्रः प्रत्यक्षो भवति, नान्यथेति तात्पर्यम् ।

ईट्टे–ईड स्तुतौ । यजातै–यजतेः लेटि आडागमः, वैतोऽन्यत्रेति ऐकारः । वहान्–वहतेर्लेटि आडागमः । होम–ह्वयतेः, नामनूसीमन् इत्यादौ होमन्शब्दो मनिन्प्रत्ययान्तो निपात्यते । मंसते–मन ज्ञाने, लेट्यडागमः, सिप् छन्दसि बहुलम् । अन्यत् गतम् ।। १८ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।**
**न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ।। १९ ।।**
**त्वम् । अङ्ग । प्र । शंसिषः । देवः । शविष्ठ । मर्त्यम् । न । त्वत् । अन्यः । मघऽवन् । अस्ति । मर्डिता । इन्द्र । ब्रवीमि । ते । वचः ।। १९ ।।**

**स्कन्द–** **अङ्ग** 'अङ्ग इति क्षिप्रनाम' (या.५,१७) । क्षिप्रं **त्वम् प्र शंसिषः** प्रशंस **देवः!** हे **शविष्ठ! मर्त्यम्** स्तोतारं मनुष्यम् । **न** च **त्वत्** त्वत्तः अन्यः **मघवन्! अस्ति मर्डिता** सुखयिता स्तोतृणाम् । यत एवमतः हे **इन्द्र! ब्रवोमि ते** स्तुतिलक्षणं **वचः** । स्तौमि त्वामित्यर्थः ।। १९ ।।

**वेङ्कटमाधव–** **त्वम् अङ्ग प्र शंसिषः** सुष्टुतमिति **देवः** बलवत्तम! मनुष्यम् । **न** त्वत्तः अन्यः सुखयिता **मघवन्! अस्ति** । ततः तुभ्यमहम् **ब्रवीमि** स्तोत्रं इति ।। १९ ।।

**मुद्गल–** **अङ्ग शविष्ठ!** हे बलवत्तमेन्द्र! **देवः** द्योतमानः **त्वम् मर्त्यम्** मरणधर्माणं त्वां स्तुतवन्तं पुरुषम् **प्र शंसिषः** सम्यगनेन स्तुतमिति प्रशंस । हे **मघवन्!** धनवन्! **इन्द्र! त्वदन्यः** त्वत्तोऽन्यः कश्चित् **मर्डिता** सुखयिता **न अस्ति** । अतः कारणात् **ते** तुभ्यमिदं रतुतिलक्षणम् **वचः ब्रवीमि** उच्चारयामि ।। १९ ।।

**सायण–** अङ्ग इति अभिमुखीकरणे । **अङ्ग शविष्ठ!** हे बलवत्तमेन्द्र! **देवः** द्योतमानः **त्वं मर्त्यं** मरणधर्माणं त्वां स्तुतवन्तं पुरुषं **प्र शंसिषः** । सम्यगनेन स्तुतम् इति प्रशंस । हे **मघवन्!** धनवन् इन्द्र! **त्वदन्यः** त्वत्तोऽन्यः कश्चित् **मर्डिता** सुखयिता **न अस्ति** । अतः कारणात् **ते** तुभ्यमिदं स्तुतिलक्षणं **वचः ब्रवीमि** उच्चारयामि ।

शंसिषः । 'शंसु स्तुतौ' । लेटि सिषि अडागमः । 'सिब्बहुलं लेटि' इति विकरणश्च सिप् । तस्य आर्धधातुकत्वात् इडागमः । शविष्ठ । अतिशयेन शवस्वी शविष्ठः । इष्ठनि 'विन्मतोर्लुक्' । 'टेः' इति टिलोपः । मर्डिता । 'मृड सुखने' । तृचः इडागमः ।। १९ ।।

**सिद्धाञ्जनम्–** **अङ्ग** अभिमुखीकरणे अङ्गेतिवचनं **शविष्ठ** भो बलवत्तम, देवः द्योतमानः **त्वं मर्त्यम्** मरणधर्माणं पुरुषं त्वां स्तुतवन्तं मादृशं **प्रशंसिषः** प्रशंस, साधु साधु त्वद्वचनमिति प्रशंस । हे **मघवन्! इन्द्र** धनवन्निन्द्र, **त्वदन्यः** त्वत्तोऽन्यः **मर्डिता** सुखयिता **न अस्ति** न वर्तते । तस्मात् इदम् स्तोत्रलक्षणं वचः वचनं ते तुभ्यं **ब्रवीमि** उच्चारयामि ।

प्रशंसिषः–शंसु स्तुतौ, लेटि सिप्यडागमः । मर्डिता–मृड सुखने, तृच इडागमः ।। १९ ।।

## ऋक्संहिता पदपाठसहिता

**मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदा चना दभन् ।**
**विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ।। २० ।।**
मा । ते । राधांसि । मा । ते । ऊतयः । वसो इति । अस्मान् । कदा । चन । दभन् ।
विश्वा । च । नः । उपऽमिमीहि । मानुष । वसूनि । चर्षणिऽभ्यः । आ ।। २० ।।

**स्कन्द–**.......... ।। २० ।।

**वेङ्कटमाधव–** वासयित इन्द्र! तव धनानि पालनानि च कदाचिदपि **मा अस्मान् दभन्,** विश्वानि **उपमिमीहि** अस्मभ्यम् मनुष्यहित! **वसूनि** द्रष्टृभ्यः ।। २० ।।

**मुद्गल–** हे **वसो!** निवासयित इन्द्र! **ते** तव सम्बन्धीनि **राधांसि** भूतानि **अस्मान् कदा चन** कदाचिदपि **मा दभन्** मा विनाशयन्तु । तथा **ऊतयः** गन्तारः **ते** त्वदीया मरुतश्च मा दभन् । हे **मानुष!** मनुष्यहितेन्द्र! **चर्षणिभ्यः** मन्त्रद्रष्टृभ्यः **नः** अस्मभ्यम् **विश्वा** विश्वानि

सर्वाणि **वसूनि** धनानि च **आ उपमिमीहि** सर्वतोऽपहृत्यास्मात्समीपे कुरु । सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छेत्यर्थः ।। २० ।।

**सायण–** हे **वसो!** निवासयितरिन्द्र! **ते** तव सम्बन्धीनि राध्नोत्येभिरिति **राधांसि** भूतानि **अस्मान् कदा चन** कदाचिदपि **मा दभन् मा** विनाशयन्तु । तथा **ऊतयः** गन्तारः । यद्वा । धृतयः इत्यत्र वर्णलोपः । धूतयः कम्पयितारः **ते** त्वदीया मरुतश्च मा दभन् । हे **मानुष!** मनुष्यहितेन्द्र! **चर्षणिभ्यः** मन्त्रद्रष्टृभ्यः **नः** अस्मभ्यं **विश्वा** विश्वानि सर्वाणि **वसूनि** धनानि **च आ उपमिमीहि** सर्वत आहृत्यास्मत्समीपे कुरु । सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छेत्यर्थः ।

कदा । किं शब्दात् 'सर्वैकान्य किंयत्तदः काले दा' (पा.सू.५.३.१५) इति दाप्रत्ययः । 'किमः कः' इति कादेशः । व्यत्ययेन आद्युदात्तत्वम् । दभन् । 'दम्भु दम्भे' । लोडर्थे छान्दसे लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'न माङ्योगे' इति अडभावः । मिमीहि । 'माङ् माने शब्दे च' । व्यत्ययेन परस्मैपदम् । जुहोत्यादित्वात् श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । हेर्ङित्त्वात् 'घुमास्था' इति ईत्वम् ।। २० ।।

**सिद्धाञ्जनम्–** हे **वसो** निवासहेतुभूत, सर्वत्र सत्वे वसतीति वसुः, तथा वर्तमानेन्द्र, **ते** तव **राधांसि** धनानि **अस्मान्** आराधकान् त्वदीयान् **कदाचन** कदाचिदपि **मा दभन्** मा कार्षुर्दब्धान् मा विनाशयन्तु, अस्माकं धनदर्पात् कापथप्रवृत्तिसम्भवात् विनाशहेतुभूतानि मा भूवन् 'ते राधांसि' इत्यर्थः । तथा **ते ऊतयः** त्वदीयान्यस्मदभिवर्धनानि 'मा दभन्' । हे **मानुष!** मनुष्यहितेन्द्र, **चर्षणिभ्यः** मन्त्रद्रष्टृभ्यः **नः** अस्मभ्यं **विश्वा** सर्वाणि **वसूनि** सारभूतानि सत्त्वानि, (सत्तैव सत्त्वं) अत एव धनपर्यायो वसु । **आ उप मिमीहि च** आहृत्य, सर्वतः समाहृत्य अस्मत्समीपे कुरु ।

दभन्-दभु दम्भे, लोडर्थे छान्दसे लङि विकरणस्य लुक्, अडभावः छन्दसि, 'न माङ्योगे' इति वा । मिमीहि–माङ् माने शब्दे च, व्यत्ययेन परस्मैपदम् ।।

**।। इति प्रथमाष्टके षष्ठोऽध्याये अष्टमो वर्गः ।।**

**।। इति प्रथमे मण्डले त्रयोदशोऽनुवाकः समाप्तः ।।**

## ।। अथ नवमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८५)

(१२ गोतमो राहुगणः । मरुतः । जगती । ५,१२ त्रिष्टुप्)

**प्र ये शुम्भन्ते जनयो न सप्तयो यामन् रुद्रस्य सूनवः सुदंससः ।**
**रोदसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः ।। १ ।।**

**प्र । ये । शुम्भन्ते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः । रोदसी इति । हि । मरुतः । चक्रिरे । वृधे । मदन्ति । वीराः । विदथेषु । घृष्वयः ।।**

**स्कन्द–** ........ ।। १ ।।

**वेङ्कटमाधव–** प्रकर्षेण अलङ्कुर्वते ये जायाः इव, अश्वाः इव च गमने रुद्रस्य पुत्राः सुकर्माणः । द्यावापृथिवी **हि मरुतः चाकेरे** वर्धनाय । **मदन्ति** च **वीराः** यज्ञेषु घर्षणशीला वृक्षाणाम् इति ।। १ ।।

**मुद्गल–** चतुर्दशेऽनुवाके नव सूक्तानि । तत्र 'प्र ये' इति द्वादशर्चं प्रथमं सूक्तम् । गोतम ऋषिः । पञ्चमीद्वादश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । मरुतो देवताः ।

**ये** मरुतः **यामन्** यामनि गमने निमित्तभूते सति **प्र शुम्भन्ते** प्रकर्षेण स्वकीयानि अङ्गान्यलङ्कुर्वन्ति **जनयः** न जाया इव । यथा योषितः स्वाङ्गान्यलङ्कुर्वन्ति तद्वत् । कीदृशाः मरुतः । **सप्तयः** सर्पणशीलाः **रुद्रस्य सूनवः** रोदयति सर्वमन्तकाल इति रुद्रः परमेश्वरः, तस्य पुत्राः । **सुदंससः** शोभनकर्माणः । एतदेवोपपादयति । **हि** यस्मात् **मरुतः रोदसी** द्यावापृथिव्यौ **वृधे** वृष्टिप्रदानादिना वर्धनाय **चक्रिरे** कृतवन्तः । अतः सुदंसस इत्यर्थः । **वीराः** विशेषेण शत्रुक्षेपणशीलाः । **घृष्वयः** घर्षणशीलाः । महीरुहशिलोच्चयादेर्भञ्जका इत्यर्थः । एवम्भूतास्ते मरुतः **विदथेषु** यज्ञेषु **मदन्ति** सोमपानेन हृष्यन्ति ।। १ ।।

**सायण–** चतुर्दशेऽनुवाके नव सूक्तानि । तत्र 'प्र ये' इति द्वादशर्चं प्रथमं सूक्तं गोतमस्यार्षम् । पञ्चमीद्वादश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । मरुतो देवता । तथा चानुक्रान्तम्–

'प्र ये द्वादश मारुतं ह पञ्चम्यन्त्ये त्रिष्टुभौ' इति । हशब्दप्रयोगादिदमादीनि चत्वारि सूक्तानि मरुद्देवत्यानि । अभिप्लवषडहस्य चतुर्थेऽहनि आग्निमारुते एतत्सूक्तं मारुतनिविद्धानीयम् । सूत्रितं च– 'प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम्' (आश्व.श्रौ.७.७) इति ।

**ये मरुतः यामन्** यामनि गमने निमित्तभूते सति **प्र शुम्भन्ते** प्रकर्षेण स्वकीयान्यङ्गानि अलङ्कुर्वन्ति **जनयो न** जाया इव । यथा योषितः स्वकीयान्यङ्गान्यलङ्कुर्वन्ति तद्वत् । कीदृशा मरुतः । **सप्तयः** सर्पणशीलाः **रुद्रस्य सूनवः** । रोदयति सर्वमन्तकाले इति रुद्रः परमेश्वरः । तस्य पुत्राः । **सुदंससः** शोभनकर्माणः । एतदेवोपपादयति । **हि** यस्मात् मरुतः **रोदसी** द्यावा-पृथिव्यौ **वृधे** वृष्टिप्रदानादिना वर्धनाय **चक्रिरे** कृतवन्तः । अतः सुदंसस इत्यर्थः । **वीराः** विशेषेण शत्रुक्षेपणशीला **घृष्वयः** घर्षणशीलाः । महीरुहशिलोच्चयादेर्भञ्जका इत्यर्थः । एवम्भूतास्ते मरुतः **विदथेषु** । विदन्त्येषु यष्टव्यतया देवानिति विदथा यज्ञाः । ते **मदन्ति** सोमपानेन हृष्यन्ति ।

शुम्भन्ते । 'शुभशुम्भ दीप्तौ' । भौवादिकः । जनयः । जायन्ते आस्वपत्यानीति जनयो जायाः । 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । यामन् । 'या प्रापणे' । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् 'आतो मनिन्' इति भावे मनिन् । 'सुपां सुलुक्' इति सप्तम्याः लुक् । सुदंससः । दंसः इति कर्मनाम । शोभनं दंसो येषाम् । 'सोर्मनसी अलोमोपसी' इत्युत्तर-पदाद्युदात्तत्वम् । चक्रिरे । 'हि च' इति निघातप्रतिषेधः । वृधे । 'वृधु वृद्धौ' । सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । मदन्ति । 'मदी हर्षे' । श्यनि प्राप्ते व्यत्ययेन शप् । पादादित्वात् निघाताभावः । विदथेषु । 'विद ज्ञाने' । 'रुविदिभ्यां कित्' इति अथप्रत्ययः । घृष्वयः । 'घृषु सङ्घर्षे' । 'कृविघृष्वि' इत्यादिना विन्प्रत्ययान्तो निपात्यते ।।

**सिद्धाञ्जनम्–** चतुर्दशानुवाके नव सूक्तानि, तत्र 'प्रय'' इति द्वादशर्चं प्रथमं सूक्तं गोतमस्यार्षम् । पञ्चमीद्वादश्यौ त्रिष्टुभौ, शिष्टा जगत्यः, मरुतो देवताः ।

मरुतां स्वरूपं, प्रचण्डवेगानां तेषां कर्माणि, पृश्निमातृत्वं, इन्द्रभ्रातृत्वं इत्येतानि सर्वाणि सरहस्यं प्राग्विवृतानि कण्वसूक्तेषु (१.३७,३८,३९), ततः प्राक् च शुनःशेपसूक्ते क्वचित् (१.२३.१०) । तदत्र मारुतेषु सूक्तेषु सङ्केतार्थविवरणं न पुनर्दीयते । **ये** ये मरुतः **यामन्** यामनि

गमने प्रत्यासन्ने **प्र शुम्भन्ते** दीप्यन्ते, उज्ज्वला भवन्ति । तत्र दृष्टान्तः **जनयो न** जाया इव, यथा जायाः भर्तॄन् वशयित्वा स्वयं तद्वशं यान्ति, तथा प्राणभूसमुत्पन्नाः ऐन्द्र-ज्योतिर्बलज्वलिताः धीवृत्तयः यजमानानृषीन् वशयित्वा स्वयं तद्वशं गच्छन्ति, कीदृशाः मरुतः? **सप्तयः** सर्पणशीलाः गमनस्वभावाः **रुद्रस्य सूनवः** रुद्रपुत्राः मध्यमस्थानाः, अत एव चण्डबलाः **सुदंससः** शोभनकर्माणः । चण्डवेगा अपि ते साधु कृत्यं देवप्रीतिकरं कर्म निर्वहन्ति, तदेवोपपादयति । **हि** यस्मात् **मरुतः** उक्तलक्षणाः **रोदसी** द्यावापृथिव्यौ **चक्रिरे** कृतवन्तः । द्विविधां ऊर्ध्वां तृतीयस्थानां अधरां पृथिवीस्थानां च चितिं इति सङ्केतरहस्यम् । नेमे मरुतः स्थूला वायवः, रोदस्योः कर्तारो भवन्ति । उज्ज्वलानां धीवृत्तीनां प्रभावादेव दिवि ऊर्ध्वमधः पृथिव्यां च चिद्विकासो द्विधा सम्पद्यते । किमर्थं रोदसी चक्रिरे? **वृधे** वर्धनाय, यजमाने उक्तलक्षणयोः रोदस्योरिति बोध्यम् । पुनः कीदृशाः? **वीराः** विशेषेण शत्रुक्षेपणशीलाः **घृष्वयः** घर्षणशीलाः बलाढ्यत्वात्, ईदृशाः मरुतः **विदथेषु** ज्ञानप्राप्तिस्थानेषु यज्ञेषु **मदन्ति** हृष्यन्ति सोमरसस्वीकारेण ।

शुम्भन्ते–शुभ शुम्भ दीप्तौ । जनयः–जनी प्रादुर्भावे, जायन्ते आसु । यामन्–या प्रापणे, भावे आतो मनिन्, सप्तम्या लुक् । सुदंससः–शोभनं दंसः कर्म येषां ते । वृधे–वृधु वृद्धौ, सम्पदादिलक्षणो भावे क्विप् । विदथेषु–विदन्त्येषु देवान्, रुदिविदिभ्यां किदिति अथप्रत्ययः । घृष्वयः–घृषु सङ्घर्षे, विन्प्रत्ययान्तो निपातितः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**त उ॒क्षि॒तासो॑ महि॒मान॑माशत दि॒वि रु॒द्रासो॒ अधि॑ चक्रि॒रे सद॑ः ।**
**अर्च॑न्तो अ॒र्कं ज॒नय॑न्त इन्द्रि॒यमधि॒ श्रियो॑ दधिरे॒ पृश्नि॑मातरः ॥ २ ॥**
ते । उ॒क्षि॒तास॑ः । म॒हि॒मान॑म् । आ॒श॒त॒ । दि॒वि । रु॒द्रास॑ः । अधि॑ । च॒क्रि॒रे । सद॑ः ।
अर्च॑न्तः । अ॒र्कम् । ज॒नय॑न्तः । इ॒न्द्रि॒यम् । अधि॑ । श्रिय॑ः । द॒धि॒रे । पृश्नि॑ऽमातरः ॥

**स्कन्द–** ...... ॥ २ ॥

**वेङ्कटमाधव– ते** वर्षबिन्दुभिः सिक्ता महत्त्वं प्रापन् **दिवि** च **अधि** सदनम् अकुर्वन् **अर्चन्तः** अर्चनीयमिन्द्रम् **जनयन्तः** च बलम् **श्रियः अधि दधिरे** ॥ २ ॥

**मुद्गल–** ये पूर्वोक्तगुणविशिष्टाः **ते** मरुतः **उक्षितासः** देवैरभिषिक्ताः सन्तः **महिमानम्** महत्त्वम् **आशत** आप्नुवन् । **रुद्रासः** रुद्रस्य पुत्रा मरुतः **दिवि** द्योतमाने नभसि **सदः** सदनं स्थानम् **अधि चक्रिरे** अधिकं सर्वोत्कृष्टं कृतवन्तः । **अर्कम्** अर्चनीयमिन्द्रम् **अर्चन्तः** पूजयन्तः **इन्द्रियम्** इन्द्रस्य लिङ्गं वीर्यम् **जनयन्तः** । 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३,२०) इत्येवंरूपेण वाक्येनोत्पादयन्तः । **पृश्निमातरः** पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः **श्रियः** ऐश्वर्याणि **अधि दधिरे** आधिक्येनाऽधारयन् ।। २ ।।

**सायण–** ये पूर्वोक्तगुणविशिष्टाः **ते** मरुतः **उक्षितासः** देवैरभिषिक्ताः सन्तः **महिमानं** महत्त्वम् **आशत** आप्नुवन् । **रुद्रासः** रुद्रस्य पुत्राः । उपचाराज्जन्ये जनकशब्दः । ते रुद्रपुत्रा मरुतः **दिवि** द्योतमाने नभसि **सदः** सदनं स्थानम् **अधि चक्रिरे** अधिकं सर्वोत्कृष्टं कृतवन्तः । **अर्कम्** अर्चनीयमिन्द्रम् **अर्चन्तः** पूजयन्तः **इन्द्रियम्** इन्द्रस्य लिङ्गं वीर्यं **जनयन्तः** । 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३.२०) इत्येवंरूपेण वाक्येनोत्पादयन्तः । **पृश्निमातरः** पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः **श्रियः** ऐश्वर्याणि **अधि दधिरे** आधिक्येनाधारयन् ।

उक्षितासः । 'उक्ष सेचने' । कर्मणि निष्ठा । 'आज्जसेरसुक्' । महिमानम् । महच्छब्दात् पृथ्वादिलक्षण इमनिच् । 'टेः' इति टिलोपः । आशत । 'अशू व्याप्तौ' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । इन्द्रियम् । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टम्' (पा.सू.५.२९३) इति घच्प्रत्ययान्तो निपात्यते । पृश्निमातरः । प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः । श्रूयते च– 'इयं वै पृश्निः' (तै.ब्रा.१.४.१.५) इति । 'घृणिः पृश्निः' इत्यादौ निपातनात् अभिमतरूप-सिद्धिः । पृश्निर्माता येषां ते तथोक्ताः । 'ऋतश्छन्दसि' (पा.सू.५.४.१५८) इति समासान्तस्य कपः प्रतिषेधः ।। २ ।।

**सिद्धाञ्जनम्– ते** पूर्वोक्ता मरुतः **उक्षितासः** सिक्ताः, यजने सुतेन सोमरसेन तृप्ताः सरसा आर्द्रचित्ता इति रहस्यम् । तथाभूताः सन्तः **महिमानम्** महत्त्वं **आशत** आप्नुवन् । **रुद्रासः** रुद्रपुत्राः जन्ये जनकांशवर्तनात्, ते मरुतः **दिवि** द्योतमाने तृतीये इन्द्रस्थाने **सदः** सदनं शुद्धमनश्चैतन्यस्थानं ऐन्द्रं धाम **अधि चक्रिरे** अधिकं उत्कृष्टं चक्रुः, मध्यमस्थानोद्भवा मरुतः ऊर्ध्वभुवमारुह्य ऐन्द्रं ज्योतिर्भजन्ते, तदेव स्पष्टयति । **अर्कम्** दीप्तमर्चनीयं इन्द्रं **अर्चन्तः** पूजयन्तः **इन्द्रियम्** इन्द्रलिङ्गं इन्द्रसम्बन्धि सर्वं वैभवं **जनयन्तः** आविष्कुर्वन्तः **पृश्निमातरः**

**गमने** प्रत्यासन्ने **प्र शुम्भन्ते** दीप्यन्ते, उज्ज्वला भवन्ति । तत्र दृष्टान्तः **जनयो न** जाया इव, यथा जायाः भर्तॄन् वशयित्वा स्वयं तद्वशं यान्ति, तथा प्राणभूसमुत्पन्नाः ऐन्द्र-ज्योतिर्बलज्वलिताः धीवृत्तयः यजमानानृषीन् वशयित्वा स्वयं तद्वशं गच्छन्ति, कीदृशाः मरुतः? **सप्तयः** सर्पणशीलाः गमनस्वभावाः **रुद्रस्य सूनवः** रुद्रपुत्राः मध्यमस्थानाः, अत एव चण्डबलाः **सुदंससः** शोभनकर्माणः । चण्डवेगा अपि ते साधु कृत्यं देवप्रीतिकरं कर्म निर्वहन्ति, तदेवोपपादयति । **हि** यस्मात् **मरुतः** उक्तलक्षणाः **रोदसी** द्यावापृथिव्यौ **चक्रिरे** कृतवन्तः । द्विविधां ऊर्ध्वां तृतीयस्थानां अधरां पृथिवीस्थानां च चितिं इति सङ्केतरहस्यम् । नेमे मरुतः स्थूला वायवः, रोदस्योः कर्तारो भवन्ति । उज्ज्वलानां धीवृत्तीनां प्रभावादेव दिवि ऊर्ध्वमधः पृथिव्यां च चिद्विकासो द्विधा सम्पद्यते । किमर्थं रोदसी चक्रिरे? **वृधे** वर्धनाय, यजमाने उक्तलक्षणयोः रोदस्योरिति बोध्यम् । पुनः कीदृशाः? **वीराः** विशेषेण शत्रुक्षेपणशीलाः **घृष्वयः** घर्षणशीलाः बलाढ्यत्वात्, ईदृशाः मरुतः **विदथेषु** ज्ञानप्राप्तिस्थानेषु यज्ञेषु **मदन्ति** हृष्यन्ति सोमरसस्वीकारेण ।

शुम्भन्ते–शुभ शुम्भ दीप्तौ । जनयः–जनी प्रादुर्भावे, जायन्ते आसु । यामन्–या प्रापणे, भावे आतो मनिन्, सप्तम्या लुक् । सुदंससः–शोभनं दंसः कर्म येषां ते । वृधे–वृधू वृद्धौ, सम्पदादिलक्षणो भावे क्विप् । विदथेषु–विदन्त्येषु देवान्, रुदिविदिभ्यां किदिति अथप्रत्ययः । घृष्वयः–घृषु सङ्घर्षे, विन्प्रत्ययान्तो निपातितः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**त उ॒क्षिता॑सो महि॒मान॑माशत दि॒वि रु॒द्रासो॒ अधि॑ चक्रि॒रे सदः॑ ।**
**अर्च॑न्तो अ॒र्कं ज॒नय॑न्त इन्द्रि॒यमधि॒ श्रियो॑ दधिरे॒ पृश्नि॑मातरः ।। २ ।।**
ते । उ॒क्षिता॑सः । म॒हि॒मान॑म् । आ॒श॒त । दि॒वि । रु॒द्रासः॑ । अधि॑ । च॒क्रि॒रे । सदः॑ ।
अर्च॑न्तः । अ॒र्कम् । ज॒नय॑न्तः । इ॒न्द्रि॒यम् । अधि॑ । श्रियः॑ । द॒धि॒रे । पृश्नि॑ऽमातरः ।।

**स्कन्द–** ...... ।। २ ।।

**वेङ्कटमाधव– ते** वर्षबिन्दुभिः सिक्ता महत्त्वं प्रापन् **दिवि** च **अधि** सदनम् अकुर्वन् **अर्चन्तः** अर्चनीयमिन्द्रम् **जनयन्तः** च बलम् **श्रियः अधि दधिरे** ।। २ ।।

**मुद्गल–** ये पूर्वोक्तगुणविशिष्टाः **ते** मरुतः **उक्षितासः** देवैरभिषिक्ताः सन्तः **महिमानम्** महत्त्वम् **आशत** आप्नुवन् । **रुद्रासः** रुद्रस्य पुत्रा मरुतः **दिवि** द्योतमाने नभसि **सदः** सदनं स्थानम् **अधि चक्रिरे** अधिकं सर्वोत्कृष्टं कृतवन्तः । **अर्कम्** अर्चनीयमिन्द्रम् **अर्चन्तः** पूजयन्तः **इन्द्रियम्** इन्द्रस्य लिङ्गं वीर्यम् **जनयन्तः** । 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३,२०) इत्येवंरूपेण वाक्येनोत्पादयन्तः । **पृश्निमातरः** पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः **श्रियः** ऐश्वर्याणि **अधि दधिरे** आधिक्येनाऽधारयन् ।। २ ।।

**सायण–** ये पूर्वोक्तगुणविशिष्टाः **ते** मरुतः **उक्षितासः** देवैरभिषिक्ताः सन्तः **महिमानं** महत्त्वम् **आशत** आप्नुवन् । **रुद्रासः** रुद्रस्य पुत्राः । उपचाराज्जन्ये जनकशब्दः । ते रुद्रपुत्रा मरुतः **दिवि** द्योतमाने नभसि **सदः** सदनं स्थानम् **अधि चक्रिरे** अधिकं सर्वोत्कृष्टं कृतवन्तः । **अर्कम्** अर्चनीयमिन्द्रम् **अर्चन्तः** पूजयन्तः **इन्द्रियम्** इन्द्रस्य लिङ्गं वीर्यं **जनयन्तः** । 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३.२०) इत्येवंरूपेण वाक्येनोत्पादयन्तः । **पृश्निमातरः** पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः **श्रियः** ऐश्वर्याणि **अधि दधिरे** आधिक्येनाधारयन् ।

उक्षितासः । 'उक्ष सेचने' । कर्मणि निष्ठा । 'आज्जसेरसुक्' । महिमानम् । महच्छब्दात् पृथ्वादिलक्षण इमनिच् । 'टेः' इति टिलोपः । आशत । 'अशू व्याप्तौ' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । इन्द्रियम् । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टम्' (पा.सू.५.२९३) इति घच्प्रत्ययान्तो निपात्यते । पृश्निमातरः । प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः । श्रूयते च– 'इयं वै पृश्निः' (तै.ब्रा.१.४.१.५) इति । 'घृणिः पृश्निः' इत्यादौ निपातनात् अभिमतरूप-सिद्धिः । पृश्निर्माता येषां ते तथोक्ताः । 'ऋतश्छन्दसि' (पा.सू.५.४.१५८) इति समासान्तस्य कपः प्रतिषेधः ।। २ ।।

**सिद्धाञ्जनम्– ते** पूर्वोक्ता मरुतः **उक्षितासः** सिक्ताः, यजने सुतेन सोमरसेन तृप्ताः सरसा आर्द्रचित्ता इति रहस्यम् । तथाभूताः सन्तः **महिमानम्** महत्त्वं **आशत** आप्नुवन् । **रुद्रासः** रुद्रपुत्राः जन्ये जनकांशवर्तनात्, ते मरुतः **दिवि** द्योतमाने तृतीये इन्द्रस्थाने **सदः** सदनं शुद्धमनश्चैतन्यस्थानं ऐन्द्रं धाम **अधि चक्रिरे** अधिकं उत्कृष्टं चक्रुः, मध्यमस्थानोद्भवा मरुतः ऊर्ध्वभुवमारुह्य ऐन्द्रं ज्योतिर्भजन्ते, तदेव स्पष्टयति । **अर्कम्** दीप्तमर्चनीयं इन्द्रं **अर्चन्तः** पूजयन्तः **इन्द्रियम्** इन्द्रलिङ्गं इन्द्रसम्बन्धि सर्वं वैभवं **जनयन्तः** आविष्कुर्वन्तः **पृश्निमातरः**

पृश्निः चित्रवर्णा गौः माता येषां ते, गौरदितिः तत्प्रसूतयः, अन्तरिक्षात्मिका अदितिः, प्राग्विवृतम् । **श्रियः** ऐश्वर्याणि **अधि** अधिकं **दधिरे** अधारयन् । उक्षितार इत्यादयः गताः ॥

## ऋक्संहिता पदपाठसहिता

**गोमा॑तरो॒ यच्छु॒भय॑न्ते अ॒ञ्जिभि॑स्त॒नूषु॑ शु॒भ्रा द॑धिरे वि॒रुक्म॑तः ।**
**बाध॑न्ते॒ विश्व॑मभिमा॒तिन॒मप॒ वर्त्मा॑न्येषा॒मनु॑ रीयते घृ॒तम् ॥ ३ ॥**
**गोऽमा॑तरः । यत् । शु॒भय॑न्ते । अ॒ञ्जिऽभिः॑ । त॒नूषु॑ । शु॒भ्राः । द॒धि॒रे । वि॒रुक्म॑तः । बाध॑न्ते । विश्व॑म् । अ॒भि॒ऽमा॒तिन॑म् । अप॑ । वर्त्मा॑नि । ए॒षा॒म् । अनु॑ । री॒य॒ते॒ । घृ॒तम् ॥**

**स्कन्द–** ..... ..... ॥ ३ ॥

**वेङ्कटमाधव– गोमातरः** 'पृश्निये वै पयसो महतो जाताः' (तै.२,२,११,३) इति ब्राह्मणम् । यदा ते आत्मानम् मरुतः आभरणैः अलङ्कुर्वते तदा अङ्गेषु कल्याणा मरुतः विशिष्टदीप्तिमतः सुवर्णमयान् कवचान् **दधिरे** । सर्वम् शत्रुम् **अप बाधन्ते** । तथा **एषाम्** मार्गान् उदकम् अनुगच्छति । यत्र गच्छन्ति भवति तत्रोदकम् इति ॥ ३ ॥

**मुद्गल– गोमातरः** गोरूपा भूमिर्माता येषां ते मरतः **अञ्जिभिः** रूपाभिव्यञ्जकैराभरणैः **यत्** यदा **शुभयन्ते** स्वकीयान्यङ्गानि शोभायुक्तानि कुर्वन्ति तदानीम् **शुभ्राः** दीप्ता मरुतः **तनूषु** स्वकीयेषु शरीरेषु **विरुक्मतः** विशेषेण रोचमानानलङ्कारान् **दधिरे** धारयन्ति । अपि च **विश्वम्** सर्वम् **अभिमातिनम्** शत्रुम् **अप बाधन्ते** हिंसन्ति । **एषाम्** मरुताम् **वर्त्मानि** मार्गान् अनुसृत्य **घृतम्** क्षरणशीलमुदकम् **रीयते** स्रवति । यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः ॥ ३ ॥

**सायण– गोमातरः** गोरूपा भूमिर्माता येषां ते मरुतः **अञ्जिभिः** रूपाभिव्यञ्जकैराभरणैः **यत्** यदा **शुभयन्ते** स्वकीयान्यङ्गानि शोभायुक्तानि कुर्वन्ति तदानीं **शुभ्राः** दीप्ता मरुतः **तनूषु** स्वकीयेषु शरीरेषु **विरुक्मतः** विशेषेण रोचमानानलङ्कारान् **दधिरे** धारयन्ति । अपि च विश्वं सर्वम् **अभिमातिनं** शत्रुम् **अप बाधन्ते** हिंसन्ति । **एषां** मरुतां **वर्त्मानि** मार्गाननुसृत्य **घृतं** क्षरणशीलमुदकं **रीयते** स्रवति । यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः ।

शुभयन्ते । संज्ञापूर्वकस्य विधेरनित्यत्वात् लघूपधगुणाभावः । अञ्जिभिः । 'अञ्जू

व्यक्तिम्रक्षणकान्तिगतिषु' । 'खनिकषिकस्यञ्ज्यसिवसिध्वनिस्तनिवनिसनिग्रन्थिचरिभ्यश्च' (उ.सू. ४.५७९) इति इप्रत्ययः । शुभ्राः । 'शुभदीप्तौ' । 'स्फायितञ्चि' इत्यादिना रक् । विरुक्मतः । विशिष्टा रुक् विरुक् । तद्वन्तो विरुक्मन्तः । मतुपि अयस्मयादित्वेन पदत्वात् कुत्वम् । भत्वात् जश्त्वाभावः । रीयते । 'रीङ् स्रवणे' । दैवादिकः ।। ३ ।।

**सिद्धाञ्जनम्– गोमातरः** गौः चित्रवर्णाः पृश्निः माता येषां ते मरुतः, अत्र गौः पृश्निरित्युपपद्यते, गोरूपा भूमिरिति सायणः । **अञ्जिभिः** अभिव्यञ्जकैर्विभवैः, आभरणैरिति स्थूलोऽर्थः । **यत्** यदा **शुभयन्ते** स्वीयं दिव्यं रूपं दीप्तं कुर्वन्ति तदानीं ते मरुतः **शुभ्राः** स्वच्छाः ज्वलिताः सन्तः **तनूषु** शरीरेषु स्वीयेषु **विरुक्मतः** विशेषेण रोचमानान् प्रभावान् **दधिरे** धारयन्ति । अपि च **विश्वम्** सर्वं **अभिमातिनम्** शत्रुं **अप बाधन्ते** हिंसन्ति । **एषाम्** मरुतां **वर्त्मानि** मार्गान् **अनु** अनुसृत्य **घृतम्** दीप्तिः, धीप्रकाश इति बोध्यम्, **रीयते** स्रवति । ऐन्द्रतेजोबलिदीपिता धीवृत्तयो हि मरुतः ।

शुभयन्ते– संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः । अञ्जिभिः–अञ्जू व्यक्तिम्रक्षणादिषु । विरुक्मतः–विशिष्टा रुक्, विरुक् तद्वन्तः । रीयते–रीङ स्रवणे दैवादिकः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।**
**मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ।। ४ ।।**
वि । ये । भ्राजन्ते । सुऽमखासः । ऋष्टिऽभिः । प्रऽच्यवयन्तः । अच्युता । चित् । ओजसा । मनःऽजुवः । यत् । मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वम् ।।

**स्कन्द–** ....... ....... ।। ४ ।।

**वेङ्कटमाधव– वि भ्राजन्ते ये** सुयज्ञाः आयुधैः **प्रच्यावयन्तः** अच्युतानि अपि पर्वतादीनि बलेन । मनोवेगाः यदा यूयं पृषद्वर्णा अश्वाः रथेषु आयुङ्ग्ध्वम् । वर्षिता गणो येषां ते वृषव्राताः । तदा तेषां मार्गमनुगच्छति इति ।। ४ ।।

**मुद्गल– सुमखासः** शोभनयज्ञाः ये मरुतः **ऋष्टिभिः** आयुधैः **वि भ्राजन्ते** विशेषेण

दीप्यन्ते । ते **मरुतः अच्युता चित्** च्यावयितुमशक्यानि दृढानि पर्वतादीन्यपि **ओजसा** स्वकीयेन बलेन **प्रच्यावयन्तः** प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति । उत्तरार्धः प्रत्यक्षकृतः । हे **मरुतः! मनोजुवः** मनोवद्वेगगतयः **वृषव्रातासः** वृष्ट्युदकसेचनसमर्थसप्तसङ्घात्मकाः यूयम् रथेषु आत्मीयेषु **पृषतीः** पृषद्भिः श्वेतबिन्दुभिर्युक्ताः मृगीः यत् यदा आ अयुग्ध्वम् आभिमुख्येन नियुक्ता अकृदव्रम् । तदानीं पर्वतादिकं प्रच्यवते इत्यर्थः ।। ४ ।।

**सायण– सुमखासः** शोभनयज्ञाः **ये** मरुतः **ऋष्टिभिः** आयुधैः **वि भ्राजन्ते** विशेषेण दीप्यन्ते ते मरुतः **अच्युता चित्** च्यावयितुमशक्यानि दृढानि पर्वतादीन्यपि **ओजसा** स्वकीयेन बलेन **प्रच्यावयन्तः** प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति । उत्तरार्धः प्रत्यक्षकृतः । हे **मरुतः! मनोजुवः!** मनोवद्वेगगतयः **वृषव्रातासः** वृष्ट्युदकसेचनसमर्थसप्तसङ्घात्मका यूयं **रथेषु** आत्मीयेषु **पृषतीः** । पृषत्यः इति मरुद्वाहनानां संज्ञा 'पृषत्यो मरुताम्' (नि.१.१५.६) इत्युक्तत्वात् । पृषद्भिः श्वेतबिन्दुभिर्युक्ताः मृगीः **यत्** यदा **आ अयुग्ध्वं** आभिमुख्येन नियुक्ता अकृद्वम् । तदानीं पर्वतादिकं प्रच्यवते इत्यर्थः ।

सुमखासः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'नञ्सुभ्याम्' इत्यस्य प्रवृत्त्यभावे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अच्युता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । मनोजुवः । जु इति सौत्रो धातुर्गत्यर्थः । 'क्विब्वचि' इत्यादिना क्विब्दीर्घौ । अयुग्ध्वम् । 'युजिर् योगे' लुङि 'धि च' (पा.सू.८.२.२५) इति सकारलोपः ।। ४ ।।

**सिद्धाञ्जनम्– सुमखासः** शोभनयज्ञाः **ये** मरुतः **ऋष्टिभिः** आयुधैः, मरुतां दृष्टय एव ऋष्टय इति प्रागुपपादितम् । **विभ्राजन्ते** विशेषेण दीप्यन्ते ते मरुतः **अच्युता चित्** च्यावयितु-मशक्यानि पर्वतादीनीति स्थूलदृष्ट्या अचित्तिस्थानानि जडघनानि अपि **ओजसा** स्वीयबलेन **प्रच्यावयन्तः** प्रकर्षेण च्यावयितारो भवन्ति । अथ प्रत्यक्षकृतो मन्त्रवर्णः । हे **मरुतः! मनोजुवः** मनोगतयः, मनोवद्वेगगमनाः **वृषव्रातासः** वृष्णां बलवेगवर्षकाणां व्राताः सङ्घभूताः यूयं **रथेषु** आत्मीयेषु **पृषतीः** वाहनभूताः श्वेतबिन्दुमृगीः, गतिवेगलक्षकः सङ्केतोऽयं प्राग्विवृतः, **यत्** यदा **आ अयुग्ध्वम्** नियुक्ता अकृद्वं तदा अच्युतान्यपि च्युतानि भवन्तीति भावः ।

मनोजुवः–जु इति सौत्रो धातुः मत्यर्थकः । अयुग्ध्वम्–युजिर् योगे ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्र यद् रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः ।**
**उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम ॥ ५ ॥**

**प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वम् । वाजे । अद्रिम् । मरुतः । रंहयन्तः ।**
**उत । अरुषस्य । वि । स्यन्ति । धाराः । चर्मऽइव । उदऽभिः । वि । उन्दन्ति । भूम ॥**

**स्कन्द–** ...... ...... ॥ ५ ॥

**वेङ्कटमाधव– प्र** अयुङ्ग्ध्वम् यदा **रथेषु** अश्वाः बले सति **अद्रिम्** अपि । **मरुतः** उत्क्षिपन्तः । तदानीं दीप्तस्य मारुतस्य गणस्य सकाशात् **धाराः** पतन्ति । तेऽमी सर्वां भूमिं खल्वल्पपरिमाणम् **चर्म इव** उदकैः विविधं क्लेदयन्ति ॥ ५ ॥

**मुद्गल–** हे **मरुतः! पृषतीः यत्** यदा **रथेषु प्र अयुग्ध्वम्** प्रायूयुजत । किं कुर्वन्त । वाते अव निमित्तभूते सति अद्रिम् मेघम् रहयन्त वर्षणार्थं प्रेरयन्त । **उत** तदानीम् **अरुषस्य** आरोचमानस्य सूर्यस्य सकाशात् वृष्ट्युदकधाराः भवन्तः **वि स्यन्ति** विमुश्चन्ति । विमुक्तास्ताश्च **धाराः उदभिः** उदकैः **चर्म इव** परिमितमत्य चर्म यथा अप्रयत्नेन क्लेशते एवम् भूम सर्वां भूमिम् वि उन्दन्ति विशेषेण आर्द्रीं कुर्वन्ति ॥ ५ ॥

**सायण–** हे **मरुतः! पृषतीः यत्** यदा **रथेषु प्र अयुग्ध्वं** प्रायूयुजत । किं कुर्वन्तः । **वाजे** अन्ने निमित्तभूते सति **अद्रिं** मेघं **रंहयन्तः** वर्षणार्थं प्रेरयन्तः । **उत** तदानीम् **अरुषस्य** आरोचमानस्य सूर्यस्य वैद्युताग्नेर्वा सकाशात् वृष्ट्युदकधाराः भवन्तः **वि ष्य(स्य)न्ति** विमुश्चन्ति । विमुक्तास्ताश्च **धाराः उदभिः** उदकैः **चर्मेव** परिमितमल्पं चर्म यथा अप्रयानेन क्लेद्यते एवं **भूम** सर्वा भूमिं **व्युन्दन्ति** विशेषेणार्द्रां कुर्वन्ति ।

रंहयन्तः । 'रहि गतौ' । विष्यन्ति । 'यो अन्तकर्मणि' दैवादिकः । 'औतः श्यनि' (पा.सू.७.३.७१) इति ओकारलोपः । 'उपसर्गात्सुनोति' इति षत्वम् । उदभिः । 'पद्दन्' इत्यादिना उदकशब्दस्य उदन्नादेशः । व्युन्दन्ति । 'उन्दी क्लेदने' । भूम । 'सुपां सुलुक्' इति भूमिशब्दात् उत्तरस्य अमः डादेशः । छान्दसं ह्रस्वत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्**– हे **मरुतः! पृषतीः यत्** यदा **रथेषु प्र अयुग्ध्वम्** भवन्तः प्रायूयुजन्, किं कुर्वन्तः? **वाजे** निमित्तभूते सति, समृद्धिप्रतिपादको वाजशब्दः । **अद्रिम्** मेघं अन्तर्निहित-तेजोबलादिकं तमोघनं **रंहयन्तः** वर्षणार्थं प्रेरयन्तः । **उत** तदानीं **अरुषस्य** आरोचमानस्य इन्द्रात्मनः सौरज्योतिषः सकाशात् **धाराः** ज्योतिर्बलादिधाराः **विष्यन्ति** विमुञ्चन्ति भवन्तः । ताश्च धाराः विमुक्ताः सत्यः, **उदभिः** उदकैः **चर्मेव** यथा चर्म निष्प्रतिरोधं क्लेद्यते तथा **भूम** सर्वां भूमिं **व्युन्दन्ति** विशेषतः क्लेदयन्ति । भूमिः स्थूलशरीरं स्थूलप्रज्ञाभूमिश्चेत्यवधेयम् ।

रंहयन्तः– इति गतौ । विष्यन्ति–षो अन्तकर्मणि दैवादिकः । व्युन्दन्ति–उन्दी क्लेदने ।।

## ऋक्संहिता पदपाठसहिता

**आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।**
**सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ।। ६ ।।**
**आ । वः । वहन्तु । सप्तयः । रघुऽस्यदः । रघुऽपत्वानः । प्र । जिगात । बाहुऽभिः ।**
**सीदत । आ । बर्हिः । उरु । वः । सदः । कृतम् । मादयध्वम् । मरुतः । मध्वः । अन्धसः ।।**

**स्कन्द**– ...... । **सीदत बर्हिः** । कस्मात् । उच्यते । यस्मात् **उरु** विस्तीर्णम् **वः** युष्माकम् **सदः** स्थानम् अस्माभिः **कृतम्** । आसद्य च **मादयध्वम्** तर्पयतास्मान् हे **मरुतः! मध्वः अन्धसः** तृतीयार्थे चात्र षष्ठी । षष्ठी निर्देशाद्वैकदेशेनेति शेषः । मधुस्वादेन सोमलक्षणेनान्नेन मधुस्वादस्य वा सोमलक्षणस्यान्नस्यैकदेशेनेत्यर्थः ।। ६ ।।

**वेङ्कटमाधव– आ वहन्तु** युष्मान् अश्वा लघुगामिनः लघुपातिनः **प्र जिगात** च शत्रून् **बाहुभिः आ सीदत** च **बर्हिः** । विस्तीर्णं स्थानं युष्माकम् **कृतम्** मधुसदृशेन सोमेन **मादयध्वम्** ।।६

**मुद्गल**– हे **मरुतः!** वः युष्मान् **सप्तयः** सर्पणशीला अश्वाः **आ वहन्तु** अस्मद्यज्ञं प्रापयन्तु । कीदृशाः सप्तयः । **रघुष्यदः** लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छत इत्यर्थः । **रघुपत्वानः** शीघ्रं पतन्तो यूयम् **बाहुभिः** स्वकीयैर्हस्तैरस्मभ्यं दातव्यं धनमाहृत्य **प्र जिगात** प्रकर्षेण गच्छत । हे **मरुतः!** वः युष्माकम् **सदः** सदनं वेदिलक्षणं स्थानम् **उरु** विस्तीर्णम् **कृतम्** यत्र यदास्तीर्णम् **बर्हिः तत् आ सीदत** तस्मिन् बर्हिष्युपविशत । उपविश्य च **मध्वः** मधुरस्य **अन्धसः** सोमलक्षणस्यान्नस्य पानेन **मादयध्वम्** तृप्ता भवत ।। ६ ।।

**सायण–** तृतीयसवने 'आ–वो वहन्तु' इति पोतुः प्रस्थितयाज्या । सूचितं च– 'आ वो वहन्तु सप्तयो रघुष्यदोऽमेव नः सुहवा आ हि गन्तन' (आश्व श्रौ. ५.५) इति ।।

हे मरुतः! **वः** युष्मान् **सप्तयः** सर्पणशीला अश्वाः **आ वहन्तु** अस्मद्यज्ञं प्रापयन्तु । कीदृशाः सप्तयः । **रघुष्यदः** लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छन्त इत्यर्थः । **रघुपत्वानः** लघु शीघ्रं पतन्तो गच्छन्तो यूयं **बाहुभिः** स्वकीयैर्हस्तैः अस्मभ्यं दातव्यं धनमाहृत्य **प्र जिगात** प्रकर्षेण गच्छत । हे **मरुतः! वः** युष्माकं **सदः** सदनं वेदिलक्षणं स्थानम् उरु विस्तीर्णं **कृतम्** । तत्र यदास्तीर्णं **बर्हिः** तत् **आ सीदत** तस्मिन्बर्हिष्युपविशात । उपविश्य च **मध्वः** मधुरस्य **अन्धसः** सोमलक्षणस्यान्नस्य पानेन **मादयध्वं** तृप्ता भवत ।

रघुष्यदः । रघु स्यन्तन्ते इति रघुष्यदः । 'स्यन्दू प्रस्रवणे' । 'क्विप् च' इति क्विप् । 'अनिदिताम्' इति नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रघुपत्वानः । 'पत्लृ गतौ' 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । जिगात । 'गा स्तुतौ' । जौहोत्यादिकः । 'जिगाति' (नि.२. १४.११३) इति गतिकर्मसु पाठादत्र गत्यर्थः । लोण्मध्यमबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । तस्य पित्त्वेन ङित्त्वाभावात् 'ई हल्यघोः' इति ईत्वाभावः । सदः । 'अतः कृकमि' (पा.सू.८.३.४६) इति विसर्जनीयस्य सत्वम् । मादयध्वम् । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी ।।

**सिद्धाञ्जनम्–** हे **मरुतः! वः** युष्मान् **सप्तयः** सर्पणशीलाः अश्वस्थानीयाः पृषत्यः **आ वहन्तु** अस्मद्यजनं प्रापयन्तु । कीदृशाः सप्तयः? **रघुष्यदः** लघु शीघ्रं स्यन्दमानाः गच्छन्त इत्यर्थः । **रघुपत्वानः** लघु पतन्तो गच्छन्तो यूयं बाहुभिः वीरकर्मलक्षकबलद्योतनाय **बाहुभिः** सहेत्युक्तम् । **प्र जिगात** प्रकर्षेण गच्छत । हे **मरुतः! वः** युष्माकं **सदः** सदनं **उरु** विस्तीर्णं **कृतम्** । यजमानस्यान्तर्वेदिः सिद्धा । तत्र **बर्हिः** आस्तीर्णं आसनं **आ सीदत** तत्रोपविशात । उपविश्य च **मध्वः** मधुरस्य **अन्धसः** अन्नभूतस्य सोमस्य पानेन **मादयध्वम्** तृप्ता भवत ।

रघुष्यदः–रघु स्यन्दन्ते, स्यन्दू प्रस्रवणे । रघुपत्वानः–पत्लृ गतौ । जिगात–जिगातीति गतिकर्मसु पठितम् ।। ६ ।।

**।। इति प्रथमाष्टके षष्ठाध्याये नवमो वर्गः ।।**

**सिद्धाञ्जनम्–** हे **मरुतः! पृषतीः यत्** यदा **रथेषु प्र अयुग्ध्वम्** भवन्तः प्रायूयुजन्, किं कुर्वन्तः? **वाजे** निमित्तभूते सति, समृद्धिप्रतिपादको वाजशब्दः । **अद्रिम्** मेघं अन्तर्निहित-तेजोबलादिकं तमोघनं **रंहयन्तः** वर्षणार्थं प्रेरयन्तः । **उत** तदानीं **अरुषस्य** आरोचमानस्य इन्द्रात्मनः सौरज्योतिषः सकाशात् **धाराः** ज्योतिर्बलादिधाराः **विष्यन्ति** विमुञ्चन्ति भवन्तः । ताश्च धाराः विमुक्ताः सत्यः, **उदभिः** उदकैः **चर्मेव** यथा चर्म निष्प्रतिरोधं क्लेद्यते तथा **भूम** सर्वां भूमिं **व्युन्दन्ति** विशेषतः क्लेदयन्ति । भूमिः स्थूलशरीरं स्थूलप्रज्ञाभूमिश्चेत्यवधेयम् ।

रंहयन्तः– इति गतौ । विष्यन्ति–षो अन्तकर्मणि दैवादिकः । व्युन्दन्ति–उन्दी क्लेदने ।।

## ऋक्संहिता पदपाठसहिता

**आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।**
**सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ।। ६ ।।**
**आ । वः । वहन्तु । सप्तयः । रघुऽस्यदः । रघुऽपत्वानः । प्र । जिगात । बाहुऽभिः ।**
**सीदत । आ । बर्हिः । उरु । वः । सदः । कृतम् । मादयध्वम् । मरुतः । मध्वः । अन्धसः ।।**

**स्कन्द–** ...... । **सीदत बर्हिः** । कस्मात् । उच्यते । यस्मात् **उरु** विस्तीर्णम् **वः** युष्माकम् **सदः** स्थानम् अस्माभिः **कृतम्** । आसद्य च **मादयध्वम्** तर्पयतास्मान् हे **मरुतः! मध्वः अन्धसः** तृतीयार्थे चात्र षष्ठी । षष्ठी निर्देशाद्वैकदेशेनेति शेषः । मधुस्वादेन सोमलक्षणेनान्नेन मधुस्वादस्य वा सोमलक्षणस्यान्नस्यैकदेशेनेत्यर्थः ।। ६ ।।

**वेङ्कटमाधव– आ वहन्तु** युष्मान् अश्वा लघुगामिनः लघुपातिनः **प्र जिगात** च शत्रून् **बाहुभिः आ सीदत** च **बर्हिः** । विस्तीर्णं स्थानं युष्माकम् **कृतम्** मधुसदृशेन सोमेन **मादयध्वम्** ।।६

**मुद्गल–** हे **मरुतः! वः** युष्मान् **सप्तयः** सर्पणशीला अश्वाः **आ वहन्तु** अस्मद्यज्ञं प्रापयन्तु । कीदृशाः सप्तयः । **रघुष्यदः** लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छत इत्यर्थः । **रघुपत्वानः** शीघ्रं पतन्तो यूयम् **बाहुभिः** स्वकीयैर्हस्तैरस्मभ्यं दातव्यं धनमाहृत्य **प्र जिगात** प्रकर्षेण गच्छत । हे **मरुतः! वः** युष्माकम् **सदः** सदनं वेदिलक्षणं स्थानम् **उरु** विस्तीर्णम् **कृतम्** यत्र यदास्तीर्णम् **बर्हिः तत् आ सीदत** तस्मिन् बर्हिष्युपविशत । उपविश्य च **मध्वः** मधुरस्य **अन्धसः** सोमलक्षणस्यान्नस्य पानेन **मादयध्वम्** तृप्ता भवत ।। ६ ।।

**सायण–** तृतीयसवने 'आ–वो वहन्तु' इति पोतुः प्रस्थितयाज्या । सूचितं च– 'आ वो वहन्तु सप्तयो रघुष्यदोऽमेव नः सुहवा आ हि गन्तन' (आश्व श्रौ. ५.५) इति ।।

हे मरुतः! **वः** युष्मान् **सप्तयः** सर्पणशीला अश्वाः **आ वहन्तु** अस्मद्यज्ञं प्रापयन्तु । कीदृशाः सप्तयः । **रघुष्यदः** लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छन्त इत्यर्थः । **रघुपत्वानः** लघु शीघ्रं पतन्तो गच्छन्तो यूयं **बाहुभिः** स्वकीयैर्हस्तैः अस्मभ्यं दातव्यं धनमाहृत्य **प्र जिगात** प्रकर्षेण गच्छत । हे **मरुतः! वः** युष्माकं **सदः** सदनं वेदिलक्षणं स्थानम् **उरु** विस्तीर्णं **कृतम्** । तत्र यदास्तीर्णं **बर्हिः** तत् **आ सीदत** तस्मिन्बर्हिष्युपविशात । उपविश्य च **मध्वः** मधुरस्य **अन्धसः** सोमलक्षणस्यान्नस्य पानेन **मादयध्वं** तृप्ता भवत ।

रघुष्यदः । रघु स्यन्तन्ते इति रघुष्यदः । 'स्यन्दू प्रस्रवणे' । 'क्विप् च' इति क्विप् । 'अनिदिताम्' इति नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रघुपत्वानः । 'पत्लृ गतौ' 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । जिगात । 'गा स्तुतौ' । जौहोत्यादिकः । 'जिगाति' (नि.२. १४.११३) इति गतिकर्मसु पाठादत्र गत्यर्थः । लोण्मध्यमबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । तस्य पित्त्वेन ङित्त्वाभावात् 'ई हल्यघोः' इति ईत्वाभावः । सदः । 'अतः कृकमि' (पा.सू.८.३.४६) इति विसर्जनीयस्य सत्वम् । मादयध्वम् । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी ।।

**सिद्धाञ्जनम्–** हे **मरुतः! वः** युष्मान् **सप्तयः** सर्पणशीलाः अश्वस्थानीयाः पृषत्यः **आ वहन्तु** अस्मद्यजनं प्रापयन्तु । कीदृशाः सप्तयः? **रघुष्यदः** लघु शीघ्रं स्यन्दमानाः गच्छन्त इत्यर्थः । **रघुपत्वानः** लघु पतन्तो गच्छन्तो यूयं बाहुभिः वीरकर्मलक्षकबलद्योतनाय **बाहुभिः** सहेत्युक्तम् । **प्र जिगात** प्रकर्षेण गच्छत । हे **मरुतः! वः** युष्माकं **सदः** सदनं **उरु** विस्तीर्णं **कृतम्** । यजमानस्यान्तर्वेदिः सिद्धा । तत्र **बर्हिः** आस्तीर्णं आसनं **आ सीदत** तत्रोपविशात । उपविश्य च **मध्वः** मधुरस्य **अन्धसः** अन्नभूतस्य सोमस्य पानेन **मादयध्वम्** तृप्ता भवत ।

रघुष्यदः–रघु स्यन्दन्ते, स्यन्दू प्रस्रवणे । रघुपत्वानः–पत्लृ गतौ । जिगात–जिगातीति गतिकर्मसु पठितम् ।। ६ ।।

**।। इति प्रथमाष्टके षष्ठाध्याये नवमो वर्गः ।।**

## ।। अथ दशमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।**
**विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ।। ७ ।।**
**ते । अवर्धन्त । स्वऽतवसः । महिऽत्वना । आ । नाकम् । तस्थुः । उरु । चक्रिरे । सदः । विष्णुः । यत् । ह । आवत् । वृषणम् । मदऽच्युतम् । वयः । नः । सीदन् । अधि । बर्हिषि । प्रिये ।।**

**स्कन्द–** **ते** मरुतः **अवर्धन्त** सर्वप्रकारां वृद्धिं प्राप्ताः । **स्वतवसः** आत्मबलाः । **महित्वना** स्वेन माहात्म्येन । **आ नाकम् तस्थुः** दिवं चाऽऽस्थिताः । तत्र **उरु चक्रिरे सदः** स्थानमात्मनः । किञ्च **विष्णुः** इयनामैतत् (निघ.३,१७)। सप्तम्यर्थे चात्र प्रथमा । अन्तर्णीतमत्वर्थो वा विष्णुशब्दः । यज्ञे यज्ञवान् वा यजमानः । **यत्** यदा । ह-शब्दस्तु पदपूरणः । **आवत्** तर्पयति । **वृषणम् मदच्युतम्** बहुवचनस्य स्थाने उभयत्र एकवचनं गणापेक्षं वा । मदच्युतम् इति च्यपतिर्गतिकर्मा (निघ.२,१४) वर्षितॄन् सोमलक्षणश्च मदं प्रति गन्तॄन् मरुतः मरुद्गणं वेत्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा **वयः** न पक्षिण इव **सीदन्** सीदन्ति मरुतः । **अधि बर्हिषि प्रिये** प्रियस्य वेद्यां विस्तीर्णस्य बर्हिष उपरि । यज्ञे यदा यजमानो मरुतः तर्पयति तदा पक्षिण इव शीघ्रमागत्य मरुतो वेद्यां बर्हिषि निषीदन्तीत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** **ते अवर्धन्त** स्वबलाः माहात्म्येन । दिवश्चास्थिताः विस्तीर्णमासनम् **चक्रिरे** । यज्ञः यदा रक्षति वर्षितारं शत्रुमदस्य च्यावकं मरुद्गणम् । तदा सोमं पातुं मरुतः **प्रिये बर्हिषि** पक्षिण इव शीघ्रमागत्य सीदन्ति ।। ७ ।।

**मुद्गल–** **ते** मरुतः **अवर्धन्त** वृद्धिं गताः । कीदृशाः । **स्वतवसः** स्वाश्रयबलाः । नान्यस्य कस्यचिद्बलमपेक्षन्ते । वृद्धिं प्राप्य च **महित्वना** महिम्ना महत्वेन **नाकम्** स्वर्गम् **आ तस्थुः** आस्थितवन्तः । **सदः** सदनं नभोलक्षणं स्थानं च स्वकीयनिवासाय **उरु** विस्तीर्णम् **चक्रिरे** । **यत्** येभ्यो मरुद्भ्यो यदर्थम् **वृषणम्** कामाभिवर्षकम् **मदच्युतम्** मदस्य हर्षस्य आ सेक्तारम् यज्ञम् **विष्णुः ह आवत्** विष्णुरेवागत्य रक्षति ते मरुतः **वयः** न पक्षिणो यथा शीघ्रमागच्छन्ति एवं शीघ्रमागत्य **बर्हिषि अधि** अस्मदीये यज्ञे **प्रिये** प्रीतिकरे **सीदन्** सीदन्तु उपविशन्तु ।।

**सायण– ते** मरुतः **अवर्धन्त** वृद्धिं गताः । कीदृशाः । **स्वतवसः** स्वाश्रयबलाः । नान्यस्य कस्यचिद्बलमपेक्षन्ते । वृद्धिं प्राप्य च **महित्वना** महिम्ना महत्त्वेन **नाकं** स्वर्गम् **आ तस्थुः** आस्थितवन्तः **सदः** सदनं नभोलक्षणं स्थानं च स्वकीयनिवासाय **उरु** विस्तीर्णं **चक्रिरे** । **यत्** येभ्यो मरुद्भ्यो यदर्थं **वृषणं** कामाभिवर्षकं **मदच्युतं** मदस्य हर्षस्य आसेक्तारं यज्ञं **विष्णुः ह आवत्** विष्णुरेवागत्य रक्षति ते मरुतः **वयो न** पक्षिणो यथा शीघ्रमागच्छन्ति एवं शीघ्रमागत्य **बर्हिषि अधि** अस्मदीये यज्ञे **प्रिये** प्रीतिकरे **सीदन्** सीदन्तु उपविशन्तु ॥

तेऽवर्धन्त । 'स्वरितो वानुदात्ते पदादौ' (पा.सू.८.२.६) इति एकादेशस्य स्वरितत्वम् । महित्वना । भावप्रत्ययादुत्तरस्य आङः व्यत्ययेन नाभावः उदात्तत्वं च । यद्वा । 'सुपां सुलुक्' इति आजादेशो नकारोपजनश्च । तस्थुः । नाकमातस्थुश्च सदश्च विस्तीर्णं चक्रिरे इति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । यत् । 'सुपां सुलुक्' इति चतुर्थ्या लुक् । आवत् । छान्दसो वर्तमाने लङ् । वृषणम् । 'वा षपूर्वस्य निगमे' इति उपधा-दीर्घाभावः । मदच्युतम् । मदं च्योततीति मदच्युत् । 'च्युतिर् आसेचने' । 'क्विप् च' इति क्विप् । सीदन् । लिङर्थे लेटि अडागमः ॥ ७ ॥

**सिद्धाञ्जनम्–** ते मरुतः **अवर्धन्त** वृद्धिं प्राप्ताः । कीदृशाः? **स्वतवसः** स्वाधीनबलाः, अन्यबलनिरपेक्षं प्रवर्तन्ते । अत एव वृद्धिं प्राप्य **महित्वना** महत्त्वेन **नाकम्** द्युलोकं **आ तस्थुः** आस्थितवन्तः **सदः** सदनं यजमानकृते स्वनिवासस्थानं **उरु** विस्तीर्णं **चक्रिरे** चक्रुः । **यत्** यदर्थं, मरुतां कृते **वृषणम्** वर्षकं दिव्यसम्पदां **मदच्युतम्** हर्षस्य आसेक्तारं सोमं **विष्णुर्ह** विष्णुरेव **आवत्** रक्षति, ते मरुतः **वयो न** पक्षिण इव शीघ्रपतनाः आगत्य **प्रिये** प्रीतिकरे अस्मदीये आस्तीर्णे **बर्हिषि अधि** अन्तर्यजनवेदिस्थाने सीदन् सीदन्तु । अत्र मन्त्रे विष्णुर्मरुतां रक्षक इत्युक्तम् । यद्यपि घोरकर्मणां मरुतां पिता प्रचण्डो रुद्रः सर्वत्र प्रसिद्धः, तथापि विष्णुरेतान् रक्षतीति कथने वेदरहस्यमिदमवधेयम् । यथा रुद्रस्य मरुतां पितुर्घोरव्यापारत्वेऽपि शिवङ्करत्वं सौम्यांशद्योतकलक्षणानि च घोषयन्ति मन्त्रवर्णाः, यथा च मरुतां प्रचण्डत्वेऽपि 'शुभयन्ते अञ्जिभिस्तनूषु शुभ्राः दधिरे विरुक्मतः' इत्यादि सौम्यत्वं च वर्णयन्ति मन्त्राः, तथा विष्णोः सर्वथा सौम्यस्यापि रुद्रकर्मत्वं कीर्त्यते, मरुतां स परम आधार इति च । 'मृगो न भीमः कुचरो गिरिष्ठाः' इति दीर्घतमाः (१.१५४.२) । आत्रेयमण्डलेऽन्तिमसूक्ते विष्णुः 'एवयामरुत्'

इति वर्णितः । रुद्र इव मरुत इव विष्णुरतिशीघ्रचण्डगतिक इति विवक्षा व्यञ्जिता 'एवया' शब्दप्रयोगेण ।

यत्– चतुर्थ्या लुक् । आवत्–छान्दसो वर्तमाने लङ् । मदच्युतम्–मदं च्योतति इति मदच्युत् । सीदन्–लिङर्थे लेट्यडागमः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**शूरा इवेद् युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे ।**
**भयन्ते विश्वा भुवना मरुद्भ्यो राजान इव त्वेषसंदृशो नरः ।। ८ ।।**
**शूराःऽइव । इत् । युयुधयः । न । जग्मयः । श्रवस्यवः । न । पृतनासु । येतिरे ।**
**भयन्ते । विश्वा । भुवना । मरुत्ऽभ्यः । राजानःऽइव । त्वेषऽसंदृशः । नरः ।। ८ ।।**

**स्कन्द– शूराः इव** इति इवशब्दः 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (या.७,२१) इति पदपूरणः । शूरा मरुतः । अथवा शूरा इत्युपमानश्रुतेरुपमानोपमेयसाधारणधर्माध्याहारः । शूरा इव जेतारः । यथा शूरा मनुष्या नियमेन शत्रूणां जेतार एवं मरुत इत्यर्थः । **युयुधयः न जग्मयः** यथा च युद्धशीला मनुष्याः शत्रून् प्रति गमनशीला एवं मरुतः । **श्रवस्यवः न** श्रवोऽन्नं धनं कीर्तिर्वा, तत्कामाः श्रवस्यवः । यथा च श्रवस्यवो मनुष्या एवं मरुतः । **पृतनासु** सङ्ग्रामेषु **येतिरे** प्रयत्नं कुर्वन्ति । किञ्च **भयन्ते** बिभ्यति **विश्वा भुवना** सर्वाणि भूतानि **मरुद्भ्यः** । किञ्च **राजानः इव** यथा नित्यालङ्कृतशरीरत्वाद्राजान एवं मरुतः । **त्वेषसंदृशः** दीप्तदर्शनाः । उज्ज्वलरूपा इत्यर्थः । **नरः** मनुष्याकाराः ।। ८ ।।

**वेङ्कटमाधव– शूराः इव** योद्धारः गच्छन्त शत्रुभ्योऽन्नम् इच्छमानः इव युद्धेषु गच्छन्ति । द्वितीयो नकारः पूरणः । बिभ्यति च विश्वानि भुवनानि **मरुद्भ्यः** । **राजानः इव** अलङ्कृताः दीप्तसन्दर्शनाः नेतारः ।। ८ ।।

**मुद्गल– इत्** समुच्चये । **शूराः इव इत्** शौर्योपेता युयुत्सवः पुरुषा इव च **युयुधयः** न शत्रुभिर्युध्यमानाः पुरुषा इव च **जग्मयः** शीघ्रं गच्छन्तो मरुतः **श्रवस्यवः न** श्रवोऽन्नमात्मन इच्छन्तः पुरुषा इव **पृतनासु** सङ्ग्रामेषु **येतिरे** प्रयतन्ते वृत्रादिभिर्युद्धे व्याप्रियन्ते । तादृशेभ्यः **मरुद्भ्यः विश्वा भुवना** सर्वाणि भूतानि **भयन्ते** बिभ्यति । ये **नरः** वृष्ट्यादेर्नेतारो मरुतः **राजानः**

**इव** राजमाना नृपतय इव **त्वेषसंदृशः** दीप्तसन्दर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति । तेभ्य इत्यर्थः ॥ ८ ॥

**सायण–** इत् इत्येतत्समुच्चये । **शूराइवेत्** शौर्योपेता युयुत्सवः पुरुषा इव च **युयुधयः** शत्रुभिर्युध्यमानाः पुरुषा इव च **जग्मयः** शीघ्रं गच्छन्तो मरुतः **श्रवस्यवो न** श्रवोऽन्नमात्मन इच्छन्तः पुरुषा इव **पृतनासु** सङ्ग्रामेषु **येतिरे** प्रयतन्ते वृत्रादिभिर्युद्धे व्याप्रियन्ते । तादृशेभ्यः **मरुद्भ्यः विश्वा भुवना** सर्वाणि भूतजातानि **भयन्ते** बिभ्यति । ये **नरः** वृष्ट्यादेर्नेतारो मरुतः **राजानइव** राजमाना नृपतय इव **त्वेषसंदृशः** दीप्तसन्दर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति तेभ्य इत्यर्थः ।

युयुधयः । 'युध संप्रहारे' । 'आदृगमहनजनः' इत्यत्र 'उत्सर्गश्छन्दसि' (पा.सू.३.२.१७१.२) इति वचनात् किन्प्रत्ययः । लिड्वद्भावात् द्विर्भावादि । कित्त्वात् गुणाभावः । नित्त्वादाद्युदात्तत्वम् । जग्मयः । तेनैव सूत्रेण किन्प्रत्ययः । 'गमहन' इत्यादिना उपधालोपः । स्थानिवद्भावात् द्विर्भावादि । श्रवस्यवः । श्रव इच्छति श्रवस्यति । 'क्याच्छन्दसि' इति उप्रत्ययः । येतिरे । 'यती प्रयत्ने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । भयन्ते । 'ञिभी भये' । 'बहुलं छन्दसि' इति शपः श्लोरभावः । त्वेषसंदृशः । 'त्विष दीप्तौ' । पचाद्यच् । 'दृशिर् प्रेक्षणे' । सम्पूर्वादस्मात् सम्पदादिलक्षणो भावे क्विप् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्– शूरा इव इत्** शौर्ययुक्ताः पुरुषा इवैव **युयुधयो न** युध्यमाना इव च **जग्मयः** सत्वरं गच्छन्तः मरुतः **श्रवस्यवो न** श्रवः दिव्यमान्तरं च आत्मन इच्छन्तः पुरुषा इव **पृतनासु** सङ्ग्रामेषु **येतिरे** प्रयतन्ते । देवविरोधिभिर्वृत्रादिभिर्युद्धे व्याप्रियन्ते यजमानस्योपकाराय । तथाविधेभ्यः **मरुद्भ्यः विश्वा** सर्वाणि **भुवना** भूतजातानि **भयन्ते** बिभ्यति । **नरः** नेतारः बलिनस्ते मरुतः **राजानः** इव राजमानाः नृपतय इव **त्वेषसन्दृशः** उज्ज्वलसन्दर्शनाः अत एव सर्वे यज्ञयात्राविघातकाः बिभ्यति । मरुतो न केवलं चण्डकर्माणः क्रियादक्षाः, अपि तु 'त्वेषसन्दृशश्च ज्ञानशक्तिप्रकाशकाश्चेति बोद्धव्यम् ।

युयुधयः–युध सम्प्रहारे, छन्दसि किन् प्रत्ययः । जग्मयः–पूर्ववत् किन्प्रत्ययः । भयन्ते–ञिभी भये, बहुलं छन्दसीति शपः श्लोरभावः । त्वेषसंदृशः–त्विष दीप्तौ, पचाद्यच्, दृशिर् प्रेक्षणे, सम्पूर्वादस्मात् सम्पादादिलक्षणो भावे क्विप् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**त्वष्टा यद् वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।**
**धत्त इन्द्रो नर्यपांसि कर्तवेऽहन् वृत्रं निरपामौब्जदर्णवम् ।। ९ ।।**
**त्वष्टा । यत् । वज्रम् । सुऽकृतम् । हिरण्ययम् । सहस्रऽभृष्टिम् । सुऽअपाः । अवर्तयत् । धत्ते । इन्द्रः । नरि । अपांसि । कर्तवे । अहन् । वृत्रम् । निः । अपाम् । औब्जत् । अर्णवम् ।। ९ ।।**

**स्कन्द– त्वष्टा** देवशिल्पी । **यत्** व्यत्ययेनात्र नपुंसकता । यम् **वज्रम् सुकृतम्** सुकरणम् । **हिरण्ययम्** हिरण्मयम् । **सहस्रभृष्टिम्** भृष्टयोऽत्राश्रय उच्यन्ते । सहस्राश्रिम् । **स्वपाः** सुकर्मा **अवर्तयत्** शुद्धोऽप्ययं सोपसर्गार्थो द्रष्टव्यः । निरवर्तयत् । कृतवानित्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तत् **धत्ते इन्द्रः नरि** गणापेक्षं चैकवचनम् । नराकारे मरुद्गणे । मनुष्याकाराणां मरुतां गणस्य वज्रमिन्द्रोऽर्पयतीत्यर्थः । किमर्थम् । उच्यते । **अपांसि कर्तवे** वृत्रवधादीनि कर्माणि कर्तुम् । अर्पितेन च तेन **अहन् वृत्रम्** हन्ति मेघं मरुद्गणः । हत्वा च **निः अपाम् औब्जत्** निरित्येषु नि इत्यस्य स्थाने । उब्जतिः न्यग्भावार्थः । अपां सङ्घं नियमेन न्यग्भावयतीत्यर्थः । निर्गमनार्थे अपां सङ्घं निरपातयदित्यर्थः । अथवाऽपामिति द्वितीयार्थे षष्ठी । उब्ज आर्जवे । वृत्रोदरान्तर्गता अपो भुवं प्रति गमनाय नियमेन ऋजूकरोतीत्यर्थः । **अर्णवम्** वृत्रस्येदं विशेषणम् । उदकवन्तं मेघम् इति ।। ९ ।।

**वेङ्कटमाधव– त्वष्टा यत्** आयुधम् **सुकृतम्** हिरण्यालङ्कृतं सहस्रधारं सुकर्मा इन्द्राय समर्पयामास, तं वज्रमधारयत् **इन्द्रः** नेतरि मरुद्गणे सहायभूते सति कर्माणि कर्तुम् । अथ **वृत्रम् अहन्** । हत्वा च **अपाम् अर्णवम्** मेघं निर्जघान ।। ९ ।।

**मुद्गल– स्वपाः** शोभनकर्मा **त्वष्टा** विश्वनिर्माता **यत् वज्रम् अवर्तयत्** इन्द्रं प्रत्यागमयत् । दत्तवानित्यर्थः । कीदृशम् । **सुकृतम्** सम्यङ् निष्पादितम् **हिरण्ययम्** सुवर्णमयम् **सहस्रभृष्टिम्** अनेकाभिर्धाराभिर्युक्तम् । तद्वज्रम् **इन्द्रः धत्ते** धारयति । किमर्थम् । **नरि** सङ्ग्रामे **अपांसि** शत्रुहननादिलक्षणानि कर्माणि **कर्तवे** कर्तुम् । एवं वज्रं धृत्वा तेन वज्रेण **वृत्रम्** वृष्ट्युदकस्यावरकम् **अर्णवम्** अर्णसोदकेन युक्तं मेघम् **अहन्** अवधीत् । **अपाम्** तेन निरुद्धा अपश्च **निः औब्जत्** निःशेषेणाधोमुखमपातयत् । प्रवृष्टा अकरोदित्यर्थः ।। ९ ।।

**सायण– स्वपाः** शोभनकर्मा **त्वष्टा** विश्वनिर्माता **यद्वज्रम् अवर्तयत्** इन्द्रं प्रत्यगमयत् दत्तवानित्यर्थः । कीदृशम् । **सुकृतं** सम्यङ्निष्पादितं **हिरण्ययं** सुवर्णमयं **सहस्रभृष्टिम्** । अनेकाभिर्धाराभिर्युक्तम् । तद्वज्रम् **इन्द्रः धत्ते** धारयति । किमर्थम् । **नरि** । अत्र नृसम्बन्धात् नृशब्देन सङ्ग्रामोऽभिधीयते । सङ्ग्रामे **अपांसि** शत्रुहननादिलक्षणानि कर्माणि **कर्तवे** कर्तुम् । एवं वज्रं धृत्वा तेन वज्रेण **वृत्रं** वृष्ट्युदकस्यावरकम् **अर्णवम्** अर्णसोदकेन युक्तं मेघम् **अहन्** अवधीत् । **अपां** तेन निरुद्धा अपश्च सः **निः औब्जत्** निःशेषेणाधोमुखमपातयत् प्रवृष्टा अकरोदित्यर्थः ।

सुकृतम् । सुपूर्वात् करोतेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । हिरण्ययम् । हिरण्यशब्दादुत्तरस्य मयटो मकारस्य लोपः 'ऋत्व्यवास्त्व्यवास्त्व' इत्यादौ निपात्यते । स्वपाः । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । कर्तवे । 'तुमर्थे सेसेन्' इति करोतेः तवेन्प्रत्ययः । अपाम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । औब्जत् । 'उब्ज आर्जवे' । अर्णवम् । 'अर्णसो लोपश्च' (का.५.२.१०९.२) इति मत्वर्थीयो वः सलोपश्च ॥ ९ ॥

**सिद्धाञ्जनम्– स्वपाः** शोभनकर्मा **त्वष्टा** विश्वकर्मा **यद्वज्रम् अवर्तयत्** अगमयत् इन्द्रं प्रति, तस्मै दत्तवानित्यर्थः । कीदृशम्? **सुकृतम्** सुष्ठु निष्पादितं **हिरण्ययम्** हिरण्यविकारं **सहस्रभृष्टिम्** सहस्रधाराभिर्युक्तं, अनेकार्थकः सहस्रशब्दः । तद्वज्रं **इन्द्रो धत्ते** धारयति । कस्मिन्? **नरि** नेतरि, बलिनि पुरुषे, बलाढ्ये यजमाने, 'नृसम्बन्धात् नृशब्देन सङ्ग्रामोऽभिधीयते' इति सायणीयम् । स्थूलपक्षेऽपि नेदमावश्यकम् । मरुतां प्रकृतत्वात् नरि बलिनि मरुद्गणे इति विवरणं वरम् । न चेत् सूक्तमध्ये ऋगियं पूर्वोत्तरसम्बन्धरहिता मरुत्सम्बन्धशून्या च भवति । किमर्थम्? **अपांसि कर्तवे** कर्माणि कर्तुम् । इन्द्रार्थं मारुतं प्रबलं कर्म बहुधा कीर्त्यते वेदे । इन्द्र एवं तेन वज्रेण **वृत्रम् अहन्** वृत्रवधं कृतवान् । **अपाम् अर्णवम्** अपां राशिं निरौब्जत् निर्गमय्य अधोमुखमपातयत् । यथा क्षीराब्धिरित्यादौ अब्धिपदाभिधेयसमुद्रमात्रस्य विवक्षा, तथेह अर्णवशब्देन अपरिमितराशित्वं ग्राह्यम् । इमाश्च दिव्या आपः तेजोबलादिलक्षणाः रहस्यार्थे बोध्याः ।

हिरण्ययम्–हिरण्यशब्दान्मयटो मकारस्य लोपः । कर्तवे–तुमर्थे तवेन्प्रत्ययः । अर्णवम्–मत्वर्थीयो वः सलोपश्च ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद् बिभिदुर्वि पर्वतम् ।**
**धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ।। १० ।।**
**ऊर्ध्वम् । नुनुद्रे । अवतम् । ते । ओजसा । ददृहाणम् । चित् । बिभिदुः । वि । पर्वतम् ।**
**धमन्तः । वाणम् । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ।।१०।।**

**स्कन्द–** **ऊर्ध्वम्** सन्तं मेघम् **नुनुद्रे** नुदन्ति प्रेरयन्ति । **अवतम्** अवपतितम् अधोगतम् । अधोमुखमित्यर्थः । अथवा 'अवतः' (निघ,३,२३) इति कूपनाम । तत्सादृश्याच्चात्र तद्व्यपदेशः । बहूदकत्वादिना सादृश्येन कूपसदृशं मेघमूर्ध्वं प्रेरयन्ति, क्षिपन्तीत्यर्थः । **ते** मरुतः **ओजसा** स्वेन बलेन । **दादृहाणम् चित्** अत्यन्तं दृढीभवन्तमपि । अत्यन्तं दृढमपीत्यर्थः । **बिभिदुः वि** विभिन्दन्ति । **पर्वतम्** मेघं शिलोच्चयं वा । धमन्तः ध्मा शब्दाग्निसंयोगयोः । शब्दयन्तः । उच्चारयन्त इत्यर्थः । **वाणम्** शब्दम् । महान्तं शब्दं कुर्वन्त इत्यर्थः । **मरुतः सुदानवः** शोभनदातारः । ईदृशान्यन्यान्यपि **मदे** सोमस्य मदे इति 'यस्य च भावेन भावलक्षणम्' (पा.२,३,३७) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । मदे सोमस्य प्राप्ते । सोमेन मत्ताः सन्त इत्यर्थः । **रण्यानि** रमणीयानि कर्माणि **चक्रिरे** कुर्वन्ति ।। १० ।।

**वेङ्कटमाधव–** गोतमो मरुभूमिष्ठस्तुष्टाव मरुतस्तृषा ।
तस्मा उच्चिक्षिपुः कूपं दूरस्थं मरुतो बलात् ।। १ ।।

शिलोच्चयं च बिभिदुः यो मार्गस्य निरोधकः ।
आत्मीयं वाणवाद्यं च धमन्तो मरुतस्त्वमी ।। २ ।।

सुदानाः सोममत्ताश्च रमणीयानि चक्रिरे ।
एवंविधानि कर्माणि शेषमुत्तरया वद ।। ३ ।। १० ।।

**मुद्गल–** अत्रेयमाख्यायिका । गोतम ऋषिः पिपासया पीडितः सन् मरुत उदकं ययाचे । तदनन्तरं मरुतोऽदूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषिसमीपे

कूपमवस्थाप्य तत्पार्श्वे आहावञ्च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयाञ्चक्रुः । अयमर्थोऽनयोत्तरया च प्रतिपाद्यते । **ते** मरुतः **अवतम्** कूपम् **ऊर्ध्वम्** उपरि यथा भवति तथा **ओजसा** स्वकीयेन बलेन **नुनुद्रे** प्रेरितवन्तः, उत्खातवन्त इत्यर्थः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो मरुतः मार्गमध्ये **ददृहाणम्** प्रवृद्धं गतिनिरोधकम् **पर्वतम् चित्** पर्ववन्तं शिलोच्चयमपि **वि बिभिदुः** विशेषेण बभञ्जुः । **सुदानवः** शोभनदानास्ते **मरुतः वाणम्** शतसङ्ख्याभिस्तन्त्रीभिर्युक्तं वीणाविशेषम् **धमन्तः** वादयन्तः । **सोमस्य मदे** सोमपानेन हर्षे सति **रण्यानि** स्तुत्यानि रमणीयानि धनानि **चक्रिरे** स्तोतृभ्यः कुर्वन्ति ।। १० ।।

**सायण–** अत्रेयमाख्यायिका । गोतम ऋषिः पिपासया पीडितः सन् मरुत उदकं ययाचे । तदनन्तरं मरुतोऽदूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषिसमीपे कूपमवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयांचक्रुः । अयमर्थोऽनयोत्तरया च प्रतिपाद्यते ।

**ते** मरुतः **अवतम्** । अवस्तात्ततो भवतीति अवतः कूपः । कूपनामसु च 'अवतः अवटः' (नि.३.२३.७) इति पठितम् । तम् **ऊर्ध्वम्** उपरि यथा भवति तथा **ओजसा** स्वकीयेन बलेन **नुनुद्रे** प्रेरितवन्तः उत्खातवन्त इत्यर्थः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तः मरुतः मार्गमध्ये **ददृहाणं** प्रवृद्धं गतिनिरोधकं **पर्वतं चित्** पर्ववन्तं शिलोच्चयमपि **वि बिभिदुः** विशेषेण बभञ्जुः । **सुदानवः** शोभनदानास्ते मरुतः **वाणं** शतसङ्ख्याभिः तन्त्रीभिर्युक्तं वीणाविशेषं **धमन्तः** वादयन्तः **सोमस्य मदे** सोमपानेन हर्षे सति **रण्यानि** स्तुत्यानि रमणीयानि धनानि **चक्रिरे** स्तोतृभ्यः कुर्वन्ति ।

नुनुद्रे । 'णुद प्रेरणे' । लिटि 'इरयो रे' इति रेआदेशः । ददृहाणम् । 'दृह दृहि वृद्धौ' । लिटः कानच् । धमन्तः । 'ध्मा शब्दाग्निसंयोगयोः' । 'पाघ्रा' इत्यादिना धमादेशः । वाणम् । 'अण रण वण शब्दार्थाः' । कर्मणि घञ् । 'कषात्वतः' इत्यन्तोदात्तत्वम् । रण्यानि । रणतेभवि 'वशिरण्योरुपसङ्ख्यानम्' (पा.सू.३.३.५८.३) इति अप् । ततः 'भवे चन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्–** इयमुत्तरा च काञ्चनाख्यायिकामाधारीकृत्य व्याख्याते सायणीये । मरुतः दूरस्थं कूपमुत्खाय तृषितस्य ऋषेर्गोतमस्यान्तिकं प्रापय्य तमासिच्य तर्पयामासुरिति सा कथा ।

वेदार्थरहस्यजिज्ञासूनां तथा नास्ति प्रयोजनम् । तत्त्वग्रहणे सा भ्रमहेतुरेव भवति । **ते** मरुतः **अवतम्** कूपं, कूपनाम, अधस्ताद्भवति । **ऊर्ध्वम्** उपरि **ओजसा** स्वीयबलेन **नुनुद्रे** प्रेरितवन्तः । मरुतां कर्मणामिदमेकम्, यत् अधस्तात् जडे अन्नमये शरीरे (लोके च) निलीय वर्तमानानां अपां ज्योतिश्शक्तिविशेषाणां ऊर्ध्वं प्राणमनोमयेषु स्थानेषु प्रापणं भवति । तथा उपरि प्रापणे जाड्यादिघनप्रतिबन्धकं च भञ्जयन्तीत्याह । **दादृहाणम्** प्रवृद्धं दृढं **पर्वतम् चित्** बहुपर्वयुक्तं शिलामयं जडघनमपि **वि विभिदुः** बभञ्जुः । **सुदानवः** शोभनदानाः ते **मरुतः बाणम्** वीणाविशेषमित्येके, वाद्यविशेषं धमन्तः वादयन्तः (स्वनिर्वर्तितकर्मजन्योल्लासद्योतकमिदम्) **सोमस्य मदे** सोमपानेन हर्षे सति **रण्यानि** रमणीयानि विविधानि रतियोग्यानि यजमानायर्षये **चक्रिरे** कुर्वन्ति, लडर्थे लिट् ।

नुनुद्रे–णुद प्रेरणे, लिटि इरयो रे इति रे आदेशः । ददृहाणम्–दृह दृहि वृद्धौ, लिटि कानच् । बाणम्–अण रण वण शब्दार्थाः । रण्यानि–रथतेर्भावे छन्दसि यत् ।। १० ।।

**नीतिमञ्जरी–** सतामुपकाराय श्रमस्तत्सुखमित्याह–

**सतां परतृषां हन्तुं यः श्रमस्तत्सुखं भवेत् ।**
**मरुतः कूपमुत्क्षिप्य गोतमायाम्बु शं ददुः ।। २३ ।।**

सतां सुखं किम् । परतृषां परपीडां हन्तुं य एव श्रमः तदेव सतां सत्पुरुषाणां सुखम् । अन्यथा मरुतः सन्तो गोतमाय ऋषये अम्बु उदकं ददुः । किं कृत्वा– शं सुखेन कूपम् अन्यदेशस्थम् उत्क्षिप्य– एतदुक्तं भवति । मरुतां कूपोद्धरणे यः श्रमस्तदेव सुखं बभूवेति ।

अस्मिन्नर्थेऽयमृक्– (ऋ.१.८५.१०)

**ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतम् ।**
**धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ।।**

गोतमस्त्रिष्टुभा मरुतं तुष्टाव । चतुर्थेऽहन्याग्निमारुते विनियुक्तम् । होताऽजनिष्टेत्याज्यं इति खण्डे सूत्रितम् । 'प्र ये शुम्भन्ते' (ऋ.१।८५) जनस्य गोपा । (ऋ ५।११) इति । (सां.श्रौ.मृ.११।७।२)

तत्रेतिहासः– गोतम ऋषिः पिपासया पीडितः सन् मरुतः उदकं ययाचे । तदनन्तरं मरुतो दूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषिसमीप (समीपे कूप) मवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयाञ्चक्रुः । अयमर्थोऽनया उत्तरया च प्रतिपाद्यते ।

अयमर्थः । हे **मरुतः** । **अवतं** कूपम् । अवत इति कूपनाम (निघण्टु.३।२३) । **ओजसा** बलेन **ऊर्ध्वम्** उपरि **नुनुद्रे** प्रेरितवन्तः । 'णुद प्रेरणे' । 'इरयो रे' (पा.६।४।७६) इति रे आदेशः । उत्खातवन्तः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो मरुतः मार्गमध्ये **ददृहाणं** प्रवृद्धं प्रवृद्धगतिनिरोधकम् । 'दृह दृहि वृद्धौ'–लिटः कानच् । (पा.३।२।१०६) । **पर्वतं** शिलोच्चयं **चिद्** अपि **विबिभिदुः** । विशेषेण बभञ्जुः । 'छन्दसि परेपीति' (पा.१।४।८१) परप्रयोगः । तथा **सुदानवः** शोभनदानास्ते मरुतः । **वाणम्** । 'वाणः पविः शब्दनाम' (निघण्टु १।११) । शततन्त्रीभिर्युक्तं वीणाविशेषं **धमन्तो** वादयन्तः । **सोमस्य मदे** सोमपानेन हर्षे सति **रण्यानि** रमणीयानि स्तुत्यानि धनानि **चक्रिरे** स्तोतृभ्यः कुर्वन्ति ।

नुनुद्रेऽवतम्–यकाराद्यक्षरं परं वकाराद्यपि वा (ऋ.प्रा.२।३४) इत्यभिहितसन्धिः ।

दादृहाणम्– श्रावयादित्वाद्दीर्घः (ऋ.प्रा.९।३०) ॥ १० ॥

## ऋक्संहिता पदपाठसहिता

**जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे ।**
**आ गच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ॥ ११ ॥**

**जिह्मम् । नुनुद्रे । अवतम् । तया । दिशा । असिञ्चन् । उत्सम् । गोतमाय । तृष्णऽजे ।**
**आ । गच्छन्ति । ईम् । अवसा । चित्रऽभानवः । कामम् । विप्रस्य । तर्पयन्त । धामऽभिः ॥**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'मरुषु गच्छंस्तृषितो गोतमो मरुतः आजुहाव । ते तस्मै वृष्टिं ददुः' इति । तदेतदुच्यते । **जिह्मम्** कुटिलं मेघम् । अन्यस्यां दिशि व्यवस्थितं सन्तमित्यर्थः । **नुनुद्रे अवतम् तया** । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यया गोतमो व्यवस्थितः तया **दिशा** नुत्वा **असिञ्चन्** क्षारितवन्तः **उत्सम्** कूपनामैतत् (निघ.३,२३) । कूपसदृशं मेघम् । किमर्थम् । उच्यते । **गोतमाय तृष्णजे** 'स्वपितृषोर्नजिङ्' (पा.३,२,१७२)

इत्येवं साधुकारिणि नजिङ् । सुष्टु तृषितस्य मम गोतमनाम्नः ऋषेरर्थायेत्यर्थः । किञ्च **आ गच्छन्ति** यज्ञान् प्रति **ईम्** एते **अवसा** तर्पणेन पालनेन वा निमित्तेन । आत्मानं तर्पयितुं यष्टॄन् पालयितुं वेत्यर्थः । **चित्रभानवः** विचित्रदीप्तयो मरुतः । आगत्य च **कामम्** इच्छाम् **विप्रस्य** मेधाविनः यष्टुः स्तोतुश्च **तर्पयन्त** तर्पयन्ति । पूरयन्ति इत्यर्थः । **धामभिः** धीयन्ते तानीति धामानि धनान्यत्राभिप्रेतानि तैः । अथवा धामानि स्थानानि । इह च परत्र च लोके अभिप्रेतैः स्थानैरित्यर्थः ।। ११ ।।

**वेङ्कटमाधव–** **जिह्मम्** तिर्यञ्चमित्यर्थो नोदनं प्रेरणं स्मृतम् ।
कूपम् **तया दिशा** यस्यां स्तोता वसति गोतमः ।। १ ।।

स्थापयित्वाथ तं कूपं कृत्वाऽऽहावं समीपतः ।
उदसिञ्चंश्च तं कूपम् **गोतमाय** पिपासवे ।। २ ।।

आगच्छन्त्येनम् अवसा मरुतश्चित्रदीप्तयः ।
पुरस्तात् प्रादुरभवन् रक्षणार्थमथ स्वयम् ।। ३ ।।

अथ मेधाविनस्तस्य **कामम्** तैर्धारकैर्जलैः ।
अतर्पयन्नृचोरर्थः श्लोकैरित्थमुदीरितः ।। ४ ।। ११ ।।

**मुद्गल–** मरुतः **अवतम्** उद्धृतं कूपं यस्यां दिशि ऋषिर्वसति **तया दिशा जिह्मम्** वक्रं तिर्यञ्चम् **नुनुद्रे** प्रेरितवन्तः । एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य **तृष्णजे** तृषिताय **गोतमाय** ऋषये तदर्थम् **उत्सम्** जलप्रवाहं कूपादुद्धृत्य **असिञ्चन्** आहावेऽवानयन् । एवं कृत्वा **ईम्** एनं स्तोतारमृषिम् **चित्रभानवः** विचित्रदीप्तयस्ते मरुतः **अवसा** ईदृशेन रक्षणेन सह **आ गच्छन्ति** तत्समीपं प्राप्नुवन्ति । प्राप्य च **विप्रस्य** मेधाविनो गोतमस्य **कामम्** अभिलाषम् **धामभिः** आयुषो धारकैरुदकैः **तर्पयन्त** अतर्पयन् ।। ११ ।।

**सायण–** मरुतः **अवतम्** उद्धृतं कूपं यस्यां दिशि ऋषिर्वसति **तया दिशा जिह्मं** वक्रं तिर्यञ्चं **नुनुद्रे** प्रेरितवन्तः । एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य **तृष्णजे** तृषिताय **गोतमाय** ऋषये तदर्थम् **उत्सं** जलप्रवाहं कूपादुद्धृत्य **असिञ्चन्** आहावेऽवानयन् । एवं कृत्वा **ईम्** एन स्तोतारमृषिं **चित्रभानवः** विचित्रदीप्तयस्ते मरुतः **अवसा** ईदृशेन रक्षणेन सह **आ गच्छन्ति**

तत्समीपं प्राप्नुवन्ति । प्राप्य च **विप्रस्य** मेधाविनो गोतमस्य **कामम्** अभिलाषं **धामभिः** आयुषो धारकैरुदकैः **तर्पयन्त** अतर्पयन् ।

तया । 'न गोश्वन्साववर्ण' इति 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तस्य प्रतीषेधः । दिशा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । तृष्णजे । 'ञितृषा पिपासायाम्' । 'स्वपितृषो-र्नजिङ्' (पा.सू.३.२.१७२) । प्रत्ययाद्युदात्तत्वम् । पदकारस्य शाकल्यस्य स्वयमभिप्रायः । 'अन्येष्वपि दृश्यते' इति दृशिग्रहणात् केवलादपि जनेर्डप्रत्ययः । तृष्णा जाता यस्य स तयोक्तः । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । धामभिः 'आतो मनिन्' इति मनिन् ।। ११ ।।

**सिद्धाञ्जनम्–** मरुतः **अवतम्** उद्धृतं उक्तलक्षणं कूपं **तया दिशा** यत्र अवस्थित ऋषिरूर्ध्वगतिकः तत्र **जिह्मम् नुनुद्रे** वक्रं प्रेरितवन्तः, ऊर्ध्वप्रेरणे न केवलमृजुधारया किं तु नानाभागसंस्पर्शो यथा स्यात् तथा तिरश्चीनगत्या प्रेरयामासुः । एवं सर्वाङ्गसेचनं सिध्यति । एवं **तृष्णजे** तृषिताय **गोतमाय** ऋषये **उत्सम्** जलप्रवाहं **असिञ्चन्** अवानयन् । अथ **ईम्** एनं यजमानमृषिं **चित्रभानवः** विचित्रदीप्तयः मरुतः **अवसा** ईदृशेन रक्षणेन सह **आगच्छन्ति** प्राप्नुवन्ति । **विप्रत्य** विपश्चित ऋषेः **कामम्** अपेक्षितं **धामभिः** धारकैः अब्रूपैस्तेजोभिः **तर्पयन्त** अतर्पयन् ।

तृष्णजे–तृष्णा जाता यस्य सः, तस्मै, ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति ह्रस्वत्वम् । धामभिः–दधातेः ।। ११ ।।

**नीतिमञ्जरी–** एषाऽपरा– (ऋ.१.८५.११)

**जिह्मं नुनुद्रेऽवतं तया दिशा सिञ्चन्नुत्सं गोतमाय तृष्णजे ।**
**आ गच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ।**

ऋष्यादि पूर्ववत् । ऋचोऽयमर्थः । मरुतोऽवतमुद्धृत्य तं कूपं यस्यां दिशि ऋषिर्वसति **तया दिशा जिह्मम्** वक्रं तिर्यञ्चं **नुनुद्रे** प्रेरितवन्तः । एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य **तृष्णजे** तृषिताय गोतमाय ऋषये तदर्थम् **उत्सं** जलप्रवाहं कूपादुद्धृत्य **असिञ्चन्** आहावे

सेचनमकुर्वन् । एवं कृत्वा **ईम्** एनं स्तोतारम् ऋषिम् **चित्रभानवः** विचित्रदीप्तयः ते मरुतः **अवसा** ईदृशेन रक्षणेन सह आगच्छन्ति । तत्समीपं प्राप्नुवन्ति । प्राप्य च **विप्रस्य** मेधाविनो गोतमस्य **कामम्** अभिलाषं **धामभिः** आयुषो धारकैः उदकैः **तर्पयन्त** अतर्पयन् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।**
**अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ।। १२ ।।**
या । वः । शर्म । शशमानाय । सन्ति । त्रिऽधातूनि । दाशुषे । यच्छत । अधि ।
अस्मभ्यम् । तानि । मरुतः । वि । यन्त । रयिम् । नः । धत्त । वृषणः । सुऽवीरम् ।।

**स्कन्द– या** यानि **वः** युष्माकम् **शर्म** शर्माणि सुखानि गृहानि वा । **शशमानाय** शशतिरर्चतिकर्माऽयम् (निघ.३,१४) । ताच्छील्ये चात्र शानच् द्रष्टव्यः । स्तुतिकरणशीलस्य अर्थाय । **सन्ति त्रिधातूनि** धीयन्ते प्राणिनां देहेष्विति धातवः अङ्गरसाः तैः दैवमनुष्योपभोग्यैः त्रिभिरप्युपेतानि त्रिधातूनि यच्छब्दात्तच्छब्दाध्याहारः । तानि **दाशुषे** अन्यस्मै अपि यजमानाय **यच्छत** दत्त । **अधि** अधिशब्दस्तु 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । न केवलाय दाशुषे । किं तर्हि । **अस्मभ्यम्** अपि **तानि** हे **मरुतः! वि यन्त** विविधं धत्त । **रयिम्** धनं च **नः** अस्मभ्यम् **धत्त वृषणः!** वर्षितारः! **सुवीरम्** शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् ।। १२ ।।

**वेङ्कटमाधव–** यानि युष्माकं गृहाणि स्तुवते **सन्ति** । तानि त्रिच्छदिष्काणि यजमानाय **अधि यच्छत** । **अस्मभ्यम् तानि मरुतः!** विविधं यच्छत । **रयिम्** च **नः धत्त** हे **वृषणः!** सुपुत्रम् ।। १२ ।।

**मुद्गल–** हे **मरुतः! वः** युष्माकं सम्बन्धीनि **या** यानि **शर्म** शर्माणि सुखानि । कीदृशानि । **त्रिधातूनि** पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि **शशमानाय** युष्मान् स्तुतिभिर्भजमानाय दातुं सम्पादितानि । पूर्वोक्तलक्षणानि शर्माणि यानि **सन्ति** यानि च **दाशुषे** हविर्दत्तवते यजमानाय **अधि यच्छत** अधिकं प्रयच्छथ । हे **मरुतः! तानि** सर्वाणि शर्माणि **अस्मभ्यम् वि यन्त** विशेषेण प्रयच्छत । किञ्च हे **वृषणः!** कामानां वर्षितारो मरुतः! **नः** अस्मभ्यम् **सुवीरम्** शोभनैर्वीरैः पुत्रादिभिर्युक्तम् **रयिम्** धनम् **धत्त** दत्त ।। १२ ।।

**सायण–** मारुते पशौ 'या वः शर्म' इति हविषो याज्या । 'प्रदानानाम्' इति खण्डे सूत्रितम्– 'अरा इवेदचरमा अहेव या वः शर्म शशमानाय सन्ति' (आश्व.श्रौ.३.७) इति ।

हे मरुतः **वः** युष्माकं सम्बन्धीनि **या** यानि **शर्म** शर्माणि सुखानि गृहाणि वा । कीदृशानि । **त्रिधातूनि** पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि **शशमानाय** युष्मान् स्तुतिभिर्भजमानाय दातुं सम्पादितानि । पूर्वोक्तलक्षणानि शर्माणि यानि **सन्ति** यानि च **दाशुषे** हविर्दत्तवते यजमानाय **अधि यच्छत** अधिकं प्रयच्छथ हे **मरुतः तानि** सर्वाणि शर्माणि **अस्मभ्यं वि यन्त** विशेषेण प्रयच्छत । किञ्च हे **वृषणः!** कामानां वर्षितारो मरुतः **नः** अस्मभ्यं **सुवीरं** शोभनैर्वीरैः पुत्रादिभिर्युक्तं **रयिं** धनं **धत्त** दत्त ।

या । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । शर्म । 'सुपां सुलुक्' इति जसो लुक् । शशमानाय । 'शश प्लुतगतौ' । ताच्छीलिकः चानश् । यच्छत । छान्दसे लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । यन्त । यमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः । अतस्तस्य पित्त्वेन ङित्त्वाभावात् 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपो न भवति । वृषणः । 'वा षपूर्वस्य निगमे' इति उपधादीर्घाभावः । सुवीरम् । बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! वः** युष्माकं सम्बन्धीनि **या** यानि त्रिधातूनि त्रिषु पृथिव्यादिस्थानेषु (पिण्डाण्डे ब्रह्माण्डे च) धारितानि अवस्थितानीत्यर्थः **शर्म** शर्माणि शरणानि, शान्तिसुखानि वा **शशमानाय** स्तुतिभिः भजमानाय दातुं **सन्ति** यानि च **दाशुषे** धत्तवते यजमानाय **अधि यच्छत** अधिकं प्रयच्छथ **तानि** सर्वाणि **अस्मभ्यम् वि यन्त** विशेषेण प्रयच्छत । हे **वृषणः!** वर्षितारः अभीष्टानां, **नः** अस्मभ्यं **सुवीरम्** शोभनवीर्योपेतं **रयिम्** धनं **धत्त** दत्त ।

शशमानाय–शश प्लुतगतौ, ताच्छीलिकश्चानश् । यन्त–यमेर्लोटि बहुलं छन्दसीति शपो लुक् ।।

।। इति प्रथमाष्टके षष्ठाध्याये दशमो वर्गः ।।

## ।। अथ एकदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ८६)

(१० गोतमो राहुगणः । मरुतः । गायत्री)

**मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ।**
**मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः । सुऽगोपातमः । जनः ।।**

**स्कन्द–** हे **मरुतः! यस्य क्षये** गृहे । हि-शब्दः पदपूरणः । **पाथ** पिबथ सोमम् । **दिवः** पञ्चमीनिर्देशात् आगत्येति शेषः । हे **विमहसः!** विविधं महान्तः! **सः सुगोपातमः** अतिशयेन शोभना गोप्तारः यस्य स सुगोपातमः । मरुदादिभिर्देवैर्वा शोभनैर्गोप्तृभिरतिशयेन रक्ष्यत इत्यर्थः ।। १ ।।

**वेङ्कटमाधव– मरुतः! यस्य** गृहे पिबथ सोमम् **दिवः** आगत्य विशिष्टदीप्तयः!, **सः** अत्यन्तं शोभनगोप्तृकः **जनः** ।। १ ।।

**मुद्गल–** 'मरुतो यस्य' इति दशर्चं द्वितीयं सूक्तम् । गोतम ऋषिः । गायत्री छन्दः । मरुतो देवताः ।।

हे **विमहसः!** विशिष्टप्रकाशाः । **मरुतः! दिवः** अन्तरिक्षलोकादागत्य **यस्य हि** यस्य खलु यजमानस्य **क्षये** यज्ञगृहे **पाथ** सोमं पिबथ, **सः जनः** जातो यजमानः **सुगोपातमः** शोभनैः पालकैरत्यन्तं युक्तो भवति ।। १ ।।

**सायण–** 'मरुतो यस्य' इति दशर्चं द्वितीयं सूक्तं गोतमस्यार्षं गायत्रं मरुद्देवताकम् । अनुक्रम्यते च– 'मरुतो दश गायत्रम्' इति । व्यूळ्हे तृतीये छन्दोमे आग्निमारुते शस्त्रे एतत्सूक्तम् । 'तृतीयस्यागन्ममहः' इति खण्डे सूत्रितं– 'मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतम्' (आश्व.श्रौ.८.११) इति । ऐन्द्रामारुत्यां प्रधानस्य हविषो 'मरुतो यस्य' इत्येषा अनुवाक्या । सूत्रितं च– 'ऐन्द्रामारुतीं भेदकामा मरुतो यस्य हि क्षये' (आश्व.श्रौ.२.११) इति । एषैव वरुणप्रघासेषु मारुत्याः आमिक्षाया अनुवाक्या । सूत्रितं च– 'मरुतो यस्य हि क्षयेऽरा इवेदचरमा

अहेव' (आश्व.श्रौ.२.१७) इति । तथा प्रातःसवने पोतुरेषा प्रस्थितयाज्या । सूत्रितं च– 'मरुतो यस्य हि क्षयेऽग्ने पत्नीरिहा वह' (आश्व.श्रौ.५.५) इति ॥

हे **विमहसः** विशिष्टप्रकाशाः **मरुतः दिवः** अन्तरिक्षलोकादागत्य **यस्य हि** यस्य खलु यजमानस्य **क्षये** यज्ञगृहे **पाथ** सोमं पिबथ **सः जनः** जातो यजमानः **सुगोपातमः** शोभनैः पालकैरत्यन्तं युक्तो भवति ।

पाथ । 'पा पाने' । 'लटि 'बहुलं छन्दसि' इति शपो लुक् । यद्वृत्तयोगादनिघातः । विमहसः । विशिष्टं महस्तेजो येषां ते तथोक्ताः । सुगोपातमः । शोभनो गोपा रक्षको यस्य स सुगोपाः । अतिशयेन सुगोपाः सुगोपातमः । तमपः पित्त्वादनुदात्तत्वे सति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वमेव शिष्यते ॥ १ ॥

**सिद्धाञ्जनम्–** अथ 'मरुतो यस्ये'ति दशर्चं द्वितीयं सूक्तं चतुर्दशेऽनुवाके । गोतमस्यार्षं गायत्रं मरुद्देवताकम् ।

हे **विमहसः!** विशिष्टतेजसः **मरुतः, दिवः** द्युलोकादेत्य यूयं **यस्य हि** यस्य खलु यजमानस्य **क्षये** यजनगृहे शरीरे **पाथ** सोमं अभिषुतं पिबथ **सः जनः** सः जातो यजमानः **सुगोपातमः** शोभनैः चिद्रश्मिपालकैर्देवैरत्यन्तं युक्तो भवति ।

विमहसः–विशिष्टं महो येषां ते । सुगोपातमः–शोभनो गोपाः रश्मिरक्षको यस्य सः, अतिशयेन सुगोपाः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् ॥ २ ॥**
यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य । वा । मतीनाम् । मरुतः । शृणत । हवम् ॥

**स्कन्द–** **वा**-शब्दोऽत्र चार्थे । **यज्ञैः** च निमित्तभूतैः । हे **यज्ञवाहसः!** 'यज्ञ उह्यते यान् प्रति ते यज्ञवाहसः । यष्टव्या इत्यर्थः । **विप्रस्य वा मतीनाम्** मतयः स्तुतय इहोच्यन्ते, मन्यतेरर्चतिकर्मत्वात् (निघ.३,१४) । तृतीयास्थाने षष्ठी । मेधाविनश्च मम स्वभूताभिः स्तुतिभिः निमित्तभूताभिः । यागाननुभवितुं स्तुतीश्च श्रोतुमित्यर्थः । हे **मरुतः! शृणुत हवम्** आह्वानम् ॥

**वेङ्कटमाधव– यज्ञैः वा** हेतुभिः यज्ञस्य वोढारः! अथवा **विप्रस्य** स्तुतिभिस्तच्छुश्रूषया **मरुतः! शृणुत** ह्वानम् ।। २ ।।

**मुद्गल–** हे **यज्ञवाहसः!** यक्षस्य वोढारः! **मरुतः!** यूयम् **यज्ञैः वा** वा इति समुच्चये । यज्ञैश्च यजमानस्य **मतीनाम्** स्तुतीनां सम्बन्धिनः **विप्रस्य वा** अयजमानस्य मेधाविनश्च **हवम्** आह्वानम् **शृणुत** । यज्ञवतो यजमानस्य यागरहितस्य स्तोतुश्चाह्वानं भवद्भिः श्रोतव्यम् । यतो भवन्तो यज्ञस्य वोढारः स्तुतिप्रियाश्चेति भावः ।। २ ।।

**सायण–** हे **यज्ञवाहसः** यज्ञस्य वोढारः **मरुतः** यूयं **यज्ञैर्वा** । वाशब्दः समुच्चये । यज्ञैश्च यजमानस्य **मतीनां** स्तुतीनां सम्बन्धिनः **विप्रस्य वा** अयजमानस्य मेधाविनश्च **हवम्** आह्वानं **शृणुत** । यज्ञवतो यजमानस्य यागरहितस्य स्तोतुश्चाह्वानमवश्यं भवद्भिः श्रोतव्यं यतः भवन्तो यज्ञस्य वोढारः स्तुतिप्रियाश्चेति भावः ।

यज्ञवाहसः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् 'वहिहाधाञ्भ्यश्छन्दसि' इति कारकपूर्वात् वहतेरसुन् । 'णित्' इत्यनुवृत्तेः उपधावृद्धिः । मतीनाम् । 'मन ज्ञाने' । अस्मात् करणे क्तिन् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । शृणुत । 'श्रुवः शृ च' इति श्नुः । 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् तिङ एव स्वरः शिष्यते । मरुत इत्यस्य आमन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वेन पदादपरत्वात् निघाताभावः । हवम् । 'भावेऽनुपसर्गस्य' इति ह्वयतेरप् सम्प्रसारणं च ।। २ ।।

**सिद्धाञ्जनम्–** हे **यज्ञवाहसः!** यज्ञस्य वोढारो **मरुतः, यज्ञैर्वा** यजमानस्य यजनैश्च सोमसवैश्च, वा समुच्चये, **मतीनां वा** स्तुतीनां च सम्बन्धिनः **विप्रस्य** विपश्चितः **हवम्** आह्वानं **शृणुत** आकर्णयत ।

सोमाभिषवैः साधनैः स्तुतिभिश्च साधनैः विपश्चित ऋषेराह्वानं शृणुतेति भावः ।।२।।

## ऋक्संहिता पदपाठसहिता

**उत वा यस्य॑ वा॒जिनोऽनु॒ विप्र॒मत॑क्षत । स गन्ता॒ गोम॑ति व्र॒जे ।। ३ ।।**

उ॒त । वा॒ । यस्य॑ । वा॒जिनः॑ । अनु॑ । विप्र॑म् । अत॑क्षत । सः । गन्ता॑ । गोऽम॑ति व्र॒जे ।।

**स्कन्द–** उतशब्दोऽप्यर्थे । वा-शब्दश्चार्थे । अपि च **यस्य** यजमानस्य **वाजिनः** हविर्लक्षणेनान्नेनान्नवतः स्वमूतम् **अनु विप्रम्** अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । मेधाविनमृत्विजं प्रति । **अतक्षत** तक्षतिः करोतिकर्मान्यत्र । इह तु गमनार्थः । लडर्थे च लङ् । गच्छथ । **सः गन्ता गोमति व्रजे** । प्राप्नोति गोष्ठमित्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** अपि च **यस्य** हविष्मन्तः ऋत्विजः मेधाविनं मरुद्गणम् अनु **अतक्षत** संस्कुर्वन्ति, सः पदं निधत्ते **गोमति व्रजे** सर्वदा इति ।। ३ ।।

**मुद्गल–** **उत वा** अपि च **यस्य** यजमानस्य **वाजिनः** हविर्लक्षणान्नोपेता ऋत्विजः **विप्रम्** मेधाविनं मरुद्गणम् **अनु अतक्षत** हविष्प्रदानादिना तीक्ष्णीकुर्वन्ति, **सः** यजमानः **गोमति** बहुभिर्गोभिर्युक्ते **व्रजे** गोष्ठे **गन्ता** गमनशीलो भवति ।। ३ ।।

**सायण–** **उत वा** अपि च **यस्य** यजमानस्य **वाजिनः** हविर्लक्षणान्नोपेता ऋत्विजः **विप्रं** मेधाविनं मरुद्गणम् **अनु अतक्षत** हविष्प्रदानादिना तीक्ष्णीकर्वन्ति **सः** यजमानः **गोमति** बहुभिर्गोभिर्युक्ते **व्रजे** गोष्ठे **गन्ता** गमनशीलो भवति ।

अतक्षत । 'तक्ष् त्वक्ष् तनूकरणे' । छान्दसो लङ् । व्यत्ययेन मध्यमः । गन्ता । गमेस्ताच्छीलिकः तृन् ।। ३ ।।

**सिद्धाञ्जनम्–** **उत वा** अपि च **यस्य वाजिनः** बलसमृद्धा मरुतः यस्य यजमानस्य अर्थे **विप्रम** विपश्चितं, तल्लक्षितं अन्तश्चक्षुष्मत्त्वं अत एव मेधावित्वं **अन्वतक्षत** तीक्ष्णीकुर्वन्ति शिल्पनिष्पादन इव, **सः** तादृशो यजमानः **गोमति** चिद्रश्मिपूरिते **व्रजे** गोष्ठे निवासस्थाने **गन्ता** गमनशीलो भवति ।

अतक्षत–तक्ष्णोतेः छान्दसो लङ् । गन्ता–गमेस्ताच्छीलिकस्तृन् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अस्य वीरस्य॑ ब॒र्हिषि॑ सु॒तः सोमो॒ दिवि॑ष्टिषु । उ॒क्थं मद॑श्च शस्यते ।। ४ ।।**

अ॒स्य । वी॒रस्य॑ । ब॒र्हिषि॑ । सु॒तः । सोम॑ः । दिवि॑ष्टिषु । उ॒क्थम् । मद॑ः । च॒ । श॒स्य॒ते ।।

**स्कन्द– अस्य** मम गोतमस्य यजमानस्य वा **वीरस्य** स्तुतिकरणशूरस्य स्वभूते **बर्हिषि सुतः सोमः दिविष्टिषु** द्यौरिष्यते गम्यते प्राप्यते याभिः ता दिविष्टयः स्वर्गफला इज्याः, तासु । **उक्थम् मदः च शस्यते** उक्तं शस्त्रमुच्यते । चशब्द उक्थात् परो द्रष्टव्यः । मदशब्दो हर्षकरवचनः । शस्त्रश्च हर्षकरं शस्यत इत्यर्थः ।। ४ ।।

**वेङ्कटमाधव– अस्य वीरस्य** मम यज्ञे **सुतः सोमः** दिवसागमनेषु शस्त्रं च मदकरम् **शस्यते** ।। ४ ।।

**मुद्गल– दिविष्टिषु** यजनीयदिवसेषु **बर्हिषि** यज्ञे **वीरस्य** शत्रुक्षेपणकुशलस्य **अस्य** मरुद्गणस्य यागाय **सोमः सुतः** ऋत्विग्भिरभिषुतो भवति । **उक्थम्** मरुद्देवताकं शस्त्रम् **मदः च** मदिधातुना युक्ता 'मरुतो देवाः सोमस्य मत्सन्' (खि.५,५,९) इत्यादिका मारुती निविच्च अस्य मरुद्गणस्य हर्षाय **शस्यते** होत्रा पठ्यते ।। ४ ।।

**सायण– दिविष्टिषु** यजनीयदिवसेषु **बर्हिषि** यज्ञे **वीरस्य** शत्रुक्षेपणकुशलस्य **अस्य** मरुद्गणस्य यागाय **सोमः सुतः** । ऋत्विग्भिरभिषुतो भवति । **उक्थं** मरुद्देवताकं शस्त्रं **मदश्च** मदिधातुना युक्ता 'मरुतो देवाः सोमस्य मत्सन्' इत्यादिका मारुती निवित् च अस्य मरुद्गणस्य हर्षाय **शस्यते** होत्रा पठ्यते ।

अस्य । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । दिविष्टिषु । इष्टय एषणानि गमनानि । दिवो द्योतमानस्य सूर्यस्येष्टयो येषु दिवसेषु ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । व्यत्ययेन उत्वाभावः ।। ४ ।।

**सिद्धाञ्जनम्– दिविष्टिषु** दिवः द्योतमानस्य ऊर्ध्वस्थानस्य इष्टयः एषणानि येषु कालेषु तेषु **अस्य** पूर्वोक्तस्य बलिनः **वीरस्य** शत्रुक्षेपणदक्षस्य यजमानस्यर्षेः **बर्हिषि** यज्ञे अन्तः हृदयवेद्यां **सुतः** अभिषुतः **सोमः शस्यते** प्रशस्तो भवति, तथा **उक्थम्** शस्त्रात्मकं स्तोत्रं शस्यते **मदश्च** हर्षश्च देवानां मादयितृत्वं च शस्यत इत्यर्थः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**अस्य श्रोषन्त्वा भुवो विश्वा यश्चर्षणीरभि । सूरं चित् सस्रुषीरिषः ।। ५ ।।**

**अस्य । श्रोषन्तु । आ । भुवः । विश्वाः । यः । चर्षणीः । अभि । सूरम् । चित् । ससुषीः । इषः ॥ ५ ॥**

**स्कन्द– अस्य** इति 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा.१,४,४०) इति । सम्प्रदानत्वाचतुर्थ्यर्थे षष्ठी । अस्मै मह्यं गोतमाय यजमानाय वा **आ श्रोषन्तु** आशृण्वन्तु दास्याम इत्येवं मरुतः । **भुवः** भूमेः । इह चामुत्र च स्थानानीत्यर्थः । योऽयं किं करोतीत्युच्यते । **विश्वाः यः चर्षणीः अभि** विश्वाश्च चर्षणीरिति कर्मश्रुतेरभीति चोपसर्गाद्योग्यक्रियाध्याहारः । सर्वा यो मनुष्यजातीरभिभवति । केन । सामर्थ्यात् स्तुतिभिः । अन्येभ्यो मनुष्येभ्योऽतिशयेन यो मरुतः स्तौतीत्यर्थः । न च केवलाया भुवः । किं तर्हि । **सूरम् चित्** चिच्छब्दोऽत्र चार्थे । सूर्यं च प्रति **ससुषीः इषः** अन्नकारणत्वात् आपोऽत्र इष उच्यन्ते । याश्चेमाः रश्मिभिराह्रियमाणाः सूर्यं प्रति गता आगामिवृष्टिलक्षणाः अन्नकारणभूता आपः, ताश्चेत्यर्थः ॥ ५ ॥

**वेङ्कटमाधव–** मम शृण्वन्तु भावयितारः सर्वान् मनुष्यान् । **यः** अभिभवति सुवीर्यं पुरुषम् । **ससुषीः इषः** अन्नानि युद्धेऽभिगच्छति यो गणः ॥ ५ ॥

**मुद्गल– अस्य** यजमानस्य स्तुतिं मरुतः **आ** आभिमुख्येन **श्रोषन्तु** शृण्वन्तु । **यः** मरुद्गणः **विश्वाः चर्षणीः** सर्वाञ्छत्रुभूतान्मनुष्यान् **अभि भुवः** अभिभवति । तादृग्गणाकारा मरुतः शृण्वन्त्वित्यर्थः । **सूरम् चित्** स्तुतेः प्रेरयितारं यजमानमपि **इषः** मरुद्भिः प्रत्तान्यन्नानि **ससुषीः** प्राप्तानि भवन्तु ॥ ५ ॥

**सायण– अस्य** यजमानस्य स्तुतिं मरुतः **आ** आभिमुख्येन **श्रोषन्तु** शृण्वन्तु । **यः** मरुद्गणः **विश्वाः चर्षणीः** सर्वान् शत्रुभूतान्मनुष्यान् **अभि भुवः** अभिभवति । तादृग्गणाकारा मरुतः शृण्वन्त्वित्यर्थः । **सूरं चित्** स्तुतेः प्रेरयितारं यजमानमपि **इषः** मरुद्भिः प्रत्तान्यन्नानि **ससुषीः** प्राप्तानि भवन्तु ।

श्रोषन्तु । 'श्रु श्रवणे' । लोटि 'सिब्बहुलं लेटि' इति बहुलवचनात् सिप् । भुवः । भवतेर्लेटि तिपः 'तिङां तिङो भवन्ति' इति सिप् । 'लेटोऽडाटौ' इति अडागमः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । सूरम् । 'षू प्रेरणे' । 'सुसूधागृधिभ्यः क्रन्' इति क्रन्प्रत्ययः । ससुषीः । 'सृ गतौ' । अस्मात् लिटः क्वसुः । 'उगितश्च' इति

ङीष् । भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ।। ५ ।।

**सिद्धाञ्जनम्– अस्य** यजमानस्य स्तोतुः स्तुतिं **आ श्रोषन्तु** आभिमुख्येन शृण्वन्तु मरुतः । **यः** यजमानः मरुतामनुग्रहात् **विश्वाः** चर्षणीः सर्वान् दृष्टिसम्पन्नान् पुरुषान् **अभि भुवः** अभि भवति, अतिशेत इत्यर्थः । अस्य **इषः** एषणाः मारुतबलप्रेरिताः **सूरं चित्** सूर्यमपि **सस्रुषीः** प्राप्ताः भवन्तु ।

भुवः–भवतेर्लेटि लेटोऽडाटावित्यडागमः । सस्रुषीः–स्रु गतौ, अस्माल्लिटः क्वसुः उगितश्चेति ङीप्, भसंज्ञायां वसोः सम्प्रसारणम्, शासिवसिघसीनां चेति षत्वम्, जसि वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ।। ५ ।।

**।। इति प्रथमाष्टके षष्ठाध्याये एकादशो वर्गः ।।**

## ।। अथ द्वादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । अवोभिश्चर्षणीनाम् ।। ६ ।।**
**पूर्वीभिः । हि । ददाशिम । शरत्ऽभिः । मरुतः । वयम् । अवःऽभिः । चर्षणीनाम् ।।**

**स्कन्द– पूर्वीभिः शरद्भिः** इत्युभयत्र सप्तम्यर्थे तृतीया । शरच्छब्दश्च संवत्सरवचनः । **हि**-शब्दोऽप्यर्थे । पूर्वेष्वपि संवत्सरेषु । **ददाशिम** दत्तवन्तो हविर्युष्मभ्यं हे **मरुतः! वयम् अवोभिः** पालनैर्निमित्तभूतैः । पालनार्थमित्यर्थः । कस्य । **चर्षणीनाम्** पुत्रपौत्रादिमनुष्याणाम् ।।

**वेङ्कटमाधव– पूर्वीभिः हि** दत्तवन्तः **शरद्भिः मरुतः! वयम्** भवद्भ्यो हवींषि मनुष्याणाम् रक्षणार्थम् इति ।। ६ ।।

**मुद्गल–** हे **मरुतः! पूर्वीभिः** बह्वीभिः **शरद्भिः** संवत्सरैः **चर्षणीनाम्** सर्वस्य द्रष्टॄणां सर्वज्ञानां भवतां सम्बन्धिभिः **अवोभिः** रक्षणैर्युक्ताः सन्तः **वयम् ददाशिम** युष्मभ्यं हवींषि दत्तवन्तः । **हि** यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्तिरीकरणायागच्छतेत्यर्थः ।। ६ ।।

**सायण–** हे **मरुतः पूर्वीभिः** बह्वीभिः **शरद्भिः** संवत्सरैः **चर्षणीनां** सर्वस्य द्रष्टृणां सर्वज्ञानां भवतां सम्बन्धिभिः **अवोभिः** रक्षणैर्युक्ताः सन्तः **वयं ददाशिम** युष्मभ्यं हवींषि दत्तवन्तः । **हि** यस्मादर्थे । यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्वीकरणायागच्छत इत्यर्थः ।

पूर्वीभिः । पुरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । यणादेशे 'हलि च' इति दीर्घत्वम् । ददाशिम । 'दाशृ दाने' । लिटि इडागमः । 'हि च' इति निघातप्रतिषेधः । चर्षणीनाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! पूर्वीभिः** बह्वीभिः **शरद्भिः** वत्सरैः **चर्षणीनाम्** सर्वस्य द्रष्टृणां ऋषीणां देवानां भवतां वा, **अवोभिः** रक्षणैः युक्ताः **वयम् ददाशिम** हविर्दत्तवन्तः । **हि** यस्मादेवं तस्मादनुग्रहं कुरुत ।

पूर्वीभिः–पुरुशब्दाद् गुणवचनात् ङीष् । ददाशिम–दाशृ दाने, लिटि इडागमः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ।। ७ ।।**
**सुऽभगः । सः । प्रऽयज्यवः । मरुतः । अस्तु । मर्त्यः । यस्य । प्रयांसि । पर्षथ ।।**

**स्कन्द– सुभगः** 'भगः' (निघ.२,१०) इति धननाम । सुधनः **सः** हे **प्रयज्यवः** । प्रकर्षेण यष्टव्याः! **मरुतः**! अस्तु मर्त्यः । **यस्य** स्वभूतानि **प्रयांसि** हविर्लक्षणान्यन्नानि **पर्षथ** पारयथ प्राप्नुथ । भक्षयथेत्यर्थः ।। ७ ।।

**वेङ्कटमाधव– सुभगः सः** प्रकर्षेण यष्टव्याः! **मरुतः**! भवतु **मर्त्यः**, **यस्य** हवींषि आत्मानं नयथ ।। ७ ।।

**मुद्गल–** हे **प्रयज्यवः**! प्रकर्षेण यष्टव्याः! **मरुतः**! **सः मर्त्यः** मनुष्यो यजमानः **सुभगः अस्तु** शोभनधनो भवतु । **यस्य** यजमानस्य **प्रयांसि** हविर्लक्षणान्यन्नानि, **पर्षथ** आत्मनि सिञ्चथ । स्वीकुरुथेत्यर्थः ।। ७ ।।

**सायण–** हे **प्रयज्यवः** प्रकर्षेण यष्टव्याः **मरुतः सः मर्त्यः** मनुष्यो यजमानः **सुभगः**

ङीष् । भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्– अस्य** यजमानस्य स्तोतुः स्तुतिं **आ श्रोषन्तु** आभिमुख्येन शृण्वन्तु मरुतः । **यः** यजमानः मरुतामनुग्रहात् **विश्वाः** चर्षणीः सर्वान् दृष्टिसम्पन्नान् पुरुषान् **अभि भुवः** अभि भवति, अतिशेत इत्यर्थः । अस्य **इषः** एषणाः मारुतबलप्रेरिताः **सूरं चित्** सूर्यमपि **सस्रुषीः** प्राप्ताः भवन्तु ।

भुवः–भवतेर्लेटि लेटोऽडाटावित्यडागमः । सस्रुषीः–स्रु गतौ, अस्माल्लिटः क्वसुः उगितश्चेति ङीप्, भसंज्ञायां वसोः सम्प्रसारणम्, शासिवसिघसीनां चेति षत्वम्, जसि वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ॥ ५ ॥

॥ इति प्रथमाष्टके षष्ठाध्याये एकादशो वर्गः ॥

## ॥ अथ द्वादशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

**पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । अवोभिश्चर्षणीनाम् ॥ ६ ॥**
**पूर्वीभिः । हि । ददाशिम । शरत्ऽभिः । मरुतः । वयम् । अवःऽभिः । चर्षणीनाम् ॥**

**स्कन्द– पूर्वीभिः शरद्भिः** इत्युभयत्र सप्तम्यर्थे तृतीया । शरच्छब्दश्च संवत्सरवचनः । **हि**-शब्दोऽप्यर्थे । पूर्वेष्वपि संवत्सरेषु । **ददाशिम** दत्तवन्तो हविर्युष्मभ्यं हे **मरुतः! वयम् अवोभिः** पालनैर्निमित्तभूतैः । पालनार्थमित्यर्थः । कस्य । **चर्षणीनाम्** पुत्रपौत्रादिमनुष्याणाम् ॥

**वेङ्कटमाधव– पूर्वीभिः हि** दत्तवन्तः **शरद्भिः मरुतः! वयम्** भवद्भ्यो हवींषि मनुष्याणाम् रक्षणार्थम् इति ॥ ६ ॥

**मुद्गल–** हे **मरुतः! पूर्वीभिः** बह्वीभिः **शरद्भिः** संवत्सरैः **चर्षणीनाम्** सर्वस्य द्रष्टॄणां सर्वज्ञानां भवतां सम्बन्धिभिः **अवोभिः** रक्षणैर्युक्ताः सन्तः **वयम् ददाशिम** युष्मभ्यं हवींषि दत्तवन्तः । **हि** यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्तिरीकरणायागच्छतेत्यर्थः ॥ ६ ॥

**सायण–** हे **मरुतः पूर्वीभिः** बह्वीभिः **शरद्भिः** संवत्सरैः **चर्षणीनां** सर्वस्य द्रष्टृणां सर्वज्ञानां भवतां सम्बन्धिभिः **अवोभिः** रक्षणैर्युक्ताः सन्तः **वयं ददाशिम** युष्मभ्यं हवींषि दत्तवन्तः । **हि** यस्मादर्थे । यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्वीकरणायागच्छत इत्यर्थः ।

पूर्वीभिः । पुरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । यणादेशे 'हलि च' इति दीर्घत्वम् । ददाशिम । 'दाशृ दाने' । लिटि इडागमः । 'हि च' इति निघातप्रतिषेधः । चर्षणीनाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! पूर्वोभिः** बह्वीभिः **शरद्भिः** वत्सरैः **चर्षणीनाम्** सर्वस्य द्रष्टृणां ऋषीणां देवानां भवतां वा, **अवोभिः** रक्षणैः युक्ताः **वयम् ददाशिम** हविर्दत्तवन्तः । **हि** यस्मादेवं तस्मादनुग्रहं कुरुत ।

पूर्वीभिः–पुरुशब्दाद् गुणवचनात् ङीष् । ददाशिम–दाशृ दाने, लिटि इडागमः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ।। ७ ।।**
**सुऽभगः । सः । प्रऽयज्यवः । मरुतः । अस्तु । मर्त्यः । यस्य । प्रयांसि । पर्षथ ।।**

**स्कन्द– सुभगः** 'भगः' (निघ.२,१०) इति धननाम । सुधनः **सः** हे **प्रयज्यवः** । प्रकर्षेण यष्टव्याः! **मरुतः!** अस्तु मर्त्यः । **यस्य** स्वभूतानि **प्रयांसि** हविर्लक्षणान्यन्नानि **पर्षथ** पारयथ प्राप्नुथ । भक्षयथेत्यर्थः ।। ७ ।।

**वेङ्कटमाधव– सुभगः सः** प्रकर्षेण यष्टव्याः! **मरुतः!** भवतु **मर्त्यः**, **यस्य** हवींषि आत्मानं नयथ ।। ७ ।।

**मुद्गल–** हे **प्रयज्यवः!** प्रकर्षेण यष्टव्याः! **मरुतः! सः मर्त्यः** मनुष्यो यजमानः **सुभगः अस्तु** शोभनधनो भवतु । **यस्य** यजमानस्य **प्रयांसि** हविर्लक्षणान्यन्नानि, **पर्षथ** आत्मनि सिञ्चथ । स्वीकुरुथेत्यर्थः ।। ७ ।।

**सायण–** हे **प्रयज्यवः** प्रकर्षेण यष्टव्याः **मरुतः सः मर्त्यः** मनुष्यो यजमानः **सुभगः**

**अस्तु** शोभनधनो भवतु । **यस्य** यजमानस्य **प्रयांसि** हविर्लक्षणान्यन्नानि **पर्षथ** आत्मनि सिञ्चथ स्वीकुरुथ इत्यर्थः ।

सुभगः । भग इति धननाम । शोभनो भगो यस्य । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । पर्षथ । 'पृषु वृषु मृषु सेचने' । भौवादिकः । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ।।७।।

**सिद्धाञ्जनम्–** हे **प्रयज्यवः!** प्रकर्षेण यष्टव्याः **मरुतः, सः मर्त्यः** मनुष्यो यजमानः **सुभगः अस्तु** शोभनभाग्ययुक्तो भवतु । **यस्य** सम्बन्धीनि **प्रयांसि** प्रियाणि अर्पणानि स्तोत्राण्यपि, **पर्षथ** आत्मनि सिञ्चथ, यूयं स्वीकुरुथ ।

पर्षथ–पृषु सेचने भौवादिकः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ।। ८ ।।**
**शशमानस्य । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ।।८।।**

**स्कन्द– शशमानस्य** शशमानः स्तुतिकरणशीलस्तस्य वा । हे **नरः!** मनुष्याकारा मरुतः! **स्वेदस्य** प्रस्विन्नस्य वा युष्मत्परिचर्याश्रमेण । महता यत्नेन युष्मान् परिचरत इत्यर्थः । हे **सत्यशवसः! विद कामस्य वेनतः** विदेति विदिर्ज्ञानार्थः । ज्ञानेनात्र तत्पूर्वकं पूरणं लक्ष्यते । कामस्येति द्वितीयार्थे षष्ठी । वेनत इति वेनतिः कान्तिकर्मा (निघ.२,६) । पूरयत कामं कामयमानस्येत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** भजमानस्य वा नेतारः! स्विन्नगात्रस्य वा श्रमेण सत्यबलाः! जानीत कामं कामयमानस्य ।। ८ ।।

**मुद्गल–** हे **सत्यशवसः!** अवितथबलाः! **नरः!** नेतारो मरुतः! **शशमानस्य** युष्मान् स्तुतिभिः सम्भजमानस्य **स्वेदस्य** स्तावकमन्त्रोच्चारणजनितश्रमेण स्विद्यमानगात्रस्य **वेनतः** कामयमानस्य । वाशब्दः समुच्चये । एवम्भूतस्य स्तोतुश्च कामस्य काममभिलाषम् विद लम्भयत । प्रयच्छतेत्यर्थः ।। ८ ।।

**सायण–** हे **सत्यशवसः** अवितथबलाः **नरः** नेतारो मरुतः **शशमानस्य** युष्मान् स्तुतिभिः सम्भजमानस्य **स्वेदस्य** स्तावकमन्त्रोच्चारणजनितेन श्रमेण स्विद्यमानगात्रस्य **वेनतः** । वेनतिः कान्तिकर्मा । कामयमानस्य । वाशब्दः समुच्चये । एवम्भूतस्य स्तोतुश्च **कामस्य** काममभिलाषं **विद** लम्भयत प्रयच्छतेत्यर्थः ।

शशमानस्य । 'शश प्लुतगतौ' । ताच्छीलिकः चानश् । स्वेदस्य । 'ञिष्विदा गात्रप्रक्षरणे' । अन्तर्भावितण्यर्थात् कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । विद । 'विद्लृ लाभे' । लोटि मध्यमपुरुषबहुवचनस्य व्यत्ययेन झादेशः । 'बहुलं चन्दसि' इति विकरणस्य लुक् । झस्य अदादेशः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । प्रत्ययाद्युदात्तत्वम् । पादादित्वात् निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । कामस्य । वृषादिषु पाठादाद्युदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **सत्यशवसः!** सत्यबलाः, **नरः** नेतारो बलिनो मरुतः, **शशमानस्य** स्तुतिभिर्भजमानस्य **स्वेदस्य** स्विद्यतः, परिश्रमं कुर्वतः, (स्वेदेन स्वेदवान् लक्ष्यते) यजमानस्य **वेनतः** वेनतिः कान्तिकर्मा कामयमानस्य **कामस्य** कामं अभीष्टं, कर्मार्थे षष्ठी, **विद** लम्भय । **वा** समुच्चये । अत्र कामना न सामान्यैषणा किं तु तपःप्रभावात् कान्तियुक्तस्य कामः, तस्मात् भजमानस्य कामयमानस्य चेति ग्राह्यम् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**यूयं तत् सत्यशवस आविष्कर्त महित्वना । विध्यता विद्युता रक्षः ॥ ९ ॥**
यूयम् । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना । विध्यत । विऽद्युता । रक्षः ॥

**स्कन्द–** अत्रेतिहासमाचक्षते– 'अन्धकारे गोतमं रक्षांस्यभिदुद्रुवुः । स भीतस्तदपघातार्थम् आभ्यामृभ्यां मरुत उवाच । **यूयम् तत्** हे **सत्यशवसः!** सर्वलोकप्रकाशं कुरुत । **महित्वना** स्वेन माहात्म्येन । किं तत् । उच्यते । वित्यत तापयत **विद्युता रक्षः** । विद्युत्प्रजनेन रक्षांसि हतेत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव– यूयम् तत्** सत्यबलाः! आविष्कुरुत बलम् । माहात्म्येन **विध्यत** च अशन्या युद्धे रक्षः ॥ ९ ॥

**अस्तु** शोभनधनो भवतु । **यस्य** यजमानस्य **प्रयांसि** हविर्लक्षणान्यन्नानि **पर्षथ** आत्मनि सिञ्चथ स्वीकुरुथ इत्यर्थः ।

सुभगः । भग इति धननाम । शोभनो भगो यस्य । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । पर्षथ । 'पृषु वृषु मृषु सेचने' । भौवादिकः । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ।।७।।

**सिद्धाञ्जनम्–** हे **प्रयज्यवः!** प्रकर्षेण यष्टव्याः **मरुतः, सः मर्त्यः** मनुष्यो यजमानः **सुभगः अस्तु** शोभनभाग्ययुक्तो भवतु । **यस्य** सम्बन्धीनि **प्रयांसि** प्रियाणि अर्पणानि स्तोत्राण्यपि, **पर्षथ** आत्मनि सिञ्चथ, यूयं स्वीकुरुथ ।

पर्षथ–पृषु सेचने भौवादिकः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**शशमानस्यं वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ।। ८ ।।**
**शशमानस्यं । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ।।८।।**

**स्कन्द– शशमानस्य** शशमानः स्तुतिकरणशीलस्तस्य वा । हे **नरः!** मनुष्याकारा मरुतः! **स्वेदस्य** प्रस्विन्नस्य वा युष्मत्परिचर्याश्रमेण । महता यत्नेन युष्मान् परिचरत इत्यर्थः । हे **सत्यशवसः! विद कामस्य वेनतः** विदेति विदिर्ज्ञानार्थः । ज्ञानेनात्र तत्पूर्वकं पूरणं लक्ष्यते । कामस्येति द्वितीयार्थे षष्ठी । वेनत इति वेनतिः कान्तिकर्मा (निघ.२,६) । पूरयत कामं कामयमानस्येत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** भजमानस्य वा नेतारः! स्विन्नगात्रस्य वा श्रमेण सत्यबलाः! जानीत कामं कामयमानस्य ।। ८ ।।

**मुद्गल–** हे **सत्यशवसः!** अवितथबलाः! **नरः!** नेतारो मरुतः! **शशमानस्य** युष्मान् स्तुतिभिः सम्भजमानस्य **स्वेदस्य** स्तावकमन्त्रोच्चारणजनितश्रमेण स्विद्यमानगात्रस्य **वेनतः** कामयमानस्य । वाशब्दः समुच्चये । एवम्भूतस्य स्तोतुश्च कामस्य काममभिलाषम् विद लम्भयत । प्रयच्छतेत्यर्थः ।। ८ ।।

**सायण–** हे **सत्यशवसः** अवितथबलाः **नरः** नेतारो मरुतः **शशमानस्य** युष्मान् स्तुतिभिः सम्भजमानस्य **स्वेदस्य** स्तावकमन्त्रोच्चारणजनितेन श्रमेण स्विद्यमानगात्रस्य **वेनतः** । वेनतिः कान्तिकर्मा । कामयमानस्य । वाशब्दः समुच्चये । एवम्भूतस्य स्तोतुश्च **कामस्य** काममभिलाषं **विद** लम्भयत प्रयच्छतेत्यर्थः ।

शशमानस्य । 'शश प्लुतगतौ' । ताच्छीलिकः चानश् । स्वेदस्य । 'ञिष्विदा गात्रप्रक्षरणे' । अन्तर्भावितण्यर्थात् कर्मणि घञ् । ञित्वादाद्युदात्तत्वम् । विद । 'विद्लृ लाभे' । लोटि मध्यमपुरुषबहुवचनस्य व्यत्ययेन झादेशः । 'बहुलं चन्दसि' इति विकरणस्य लुक् । झस्य अदादेशः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । प्रत्ययाद्युदात्तत्वम् । पादादित्वात् निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । कामस्य । वृषादिषु पाठादाद्युदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **सत्यशवसः!** सत्यबलाः, **नरः** नेतारो बलिनो मरुतः, **शशमानस्य** स्तुतिभिर्भजमानस्य **स्वेदस्य** स्विद्यतः, परिश्रमं कुर्वतः, (स्वेदेन स्वेदवान् लक्ष्यते) यजमानस्य **वेनतः** वेनतिः कान्तिकर्मा कामयमानस्य **कामस्य** कामं अभीष्टं, कर्मार्थे षष्ठी, **विद** लम्भय । **वा** समुच्चये । अत्र कामना न सामान्यैषणा किं तु तपःप्रभावात् कान्तियुक्तस्य कामः, तस्मात् भजमानस्य कामयमानस्य चेति ग्राह्यम् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**यूयं तत् सत्यशवस आविष्कर्त महित्वना । विध्यता विद्युता रक्षः ॥ ९ ॥**
**यूयम् । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना । विध्यत । विऽद्युता । रक्षः ॥**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'अन्धकारे गोतमं रक्षांस्यभिदुद्रुवुः । स भीतस्तदपघातार्थम् आभ्यामृभ्यां मरुत उवाच । **यूयम् तत्** हे **सत्यशवसः!** सर्वलोकप्रकाशं कुरुत । **महित्वना** स्वेन माहात्म्येन । किं तत् । उच्यते । वित्यत तापयत **विद्युता रक्षः** । विद्युत्प्रजनेन रक्षांसि हतेत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव– यूयम् तत्** सत्यबलाः! आविष्कुरुत बलम् । माहात्म्येन **विध्यत** च अशन्या युद्धे रक्षः ॥ ९ ॥

**मुद्गल–** हे **सत्यशवसः** । सत्यबलाः! अन्यैरप्रधृष्यबला मरुतः! **यूयम् तत्** वृत्रवधादिषु प्रसिद्धं युष्मदीयमाहात्म्यम् **आविः कर्त** आविष्कुरुत प्रकाशयत । **विद्युता** विद्योतमानेन **महित्वना** तेन महत्त्वेन माहात्म्येन **रक्षः** अस्माकमुपद्रवकारिणं राक्षसादिकम् **विध्यत** ताडयत । नाशयतेत्यर्थः ।। ९ ।।

**सायण–** हे **सत्यशवसः** सत्यबला अन्यैरप्रधृष्यबला मरुतः **यूयं** तत् वृत्रवधादिषु प्रसिद्धं युष्मदीयं माहात्म्यम् **आविष्कर्त** आविष्कुरुत प्रकाशयत । **विद्युता** विद्योतमानेन **महित्वना** तेन महत्त्वेन माहात्म्येन **रक्षः** अस्माकमुपद्रवकारिणं राक्षसादिकं **विध्यत** ताडयत नाशयतेत्यर्थः ।

कर्त । करोतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तबादेशः । गुणः । 'इदुदुपधस्य चाप्रत्ययस्य' (पा.सू.८.३.४१) इति आविःशब्दे विसर्जनीयस्य षत्वम् । महित्वना । भावप्रत्ययादुत्तरस्य आङः व्यत्ययेन नाभावः उदात्तत्वं च । यद्वा । 'सुपां सुलुक्' इति तृतीयाया आजादेशो नकारोपजनश्च । विध्यत । 'व्यध ताडने' । श्यनि ग्रहिज्यादिना सम्प्रसारणम् । तशब्दस्य 'सार्वधातुकमपित्' इति ङित्त्वे सति 'ऋचि तुनुघमक्षुतङ्' इति संहितायां दीर्घः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **सत्यशवसः!** अमोघबलाः मरुतः, **यूयम् तत्** प्रसिद्धं तच्छब्दवाच्यं महत् 'महद्देवानामसुरत्वमेकम्' इत्यन्यत्र गीतं **आविष्कर्त** आविष्कुरुत । इदं च महत् ज्योतिरिति विस्पष्टमुत्तरस्यां वर्णितम् । **रक्षः** आविष्कारप्रतिबन्धकं राक्षसादिकं **विद्युता** विद्योतमानेन **महित्वना** महत्त्वेन **विध्यत** ताडयत नाशयतेत्यर्थः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**गूहता गुह्यं तमो वि यात विश्वमत्रिणम् । ज्योतिष्कर्ता यदुश्मसि ।। १० ।।**
**गूहत । गुह्यम् । तमः । वि । यात । विश्वम् । अत्रिणम् । ज्योतिः । कर्त । यत् । उश्मसि ।। १० ।।**

**स्कन्द–** किञ्च **गूहत** 'गुहू संवरणे' । संवृणुत । अपनयतेत्यर्थः । **गुह्यम्** संवरणयोग्यम् अतिमहदेतत् **तमः** । **वि यात** यातिरत्र वधार्थः । 'अहेर्यातारं कमपश्यः' (ऋ.१,३२,१४)

इति, 'यया वज्रिवः परियासि' (ऋ.६,३७,४) इति च यथा । विविधं हत विश्वम् **अत्रिणम्** सर्वं भक्षयितारं रक्षः पिशाचादिकम् । **ज्योतिः** च विद्युदाख्यम् **कर्त** कुरुतं **यत्** **उश्मसि** कामयामहे वयम् ।। १० ।।

**वेङ्कटमाधव–** नाशयत नाशयितव्यम् **तमः** । विविधं हत सर्वं रक्षः । **ज्योतिः** कुरुत यदा वयं काम यामहे भवतः ।। १० ।।

**मुद्गल–** हे मरुतः! **गुह्यम्** गुहायां स्थितं सर्वत्र व्याप्य वर्तमानम् **तमः** अन्धकारम् **गूहत** संवृतं कुरुत । यथा अस्माभिर्न दृश्यते तथाऽदर्शनं प्रापयत । विनाशयतेत्यर्थः । **विश्वम्** सर्वम् **अत्रिणम्** अत्तारं राक्षसादिकम् **वि यात** विविधं यापयत, अस्मत्सकाशात् निर्गमयत । **यत्** **ज्योतिः** सूर्यादिकं वयम् **उश्मसि** कामयामहे तत् **कर्त** कुरुत ।। १० ।।

**सायण–** हे **मरुतः! गुह्यं** गुहायां स्थितं सर्वत्र व्याप्य वर्तमानं **तमः** अन्धकारं **गूहत** संवृतं कुरुत । यथा अस्माभिर्न दृश्यते तथा अदर्शनं प्रापयत विनाशयतेत्यर्थः । **विश्वं** सर्वम् **अत्रिणम्** अत्तारं राक्षसादिकं **वि यात** विविधं यापयत अस्मत्सकाशात् निर्गमयत । **यत्** **ज्योतिः** सूर्यादिकं वयम् **उश्मसि** कामयामहे तत् **कर्त** कुरुत । यद्वा । गुह्यं गुहायां शरीरान्तर्गत-गुहारूपे हृदये भवं तमो भावरूपाज्ञानं तद्गूहत विनाशयत । अत्रिणं पुरुषार्थस्यात्तारं कामक्रोधादिकं सर्वं विनिर्गमयत । यज्ज्योतिः परतत्त्वसाक्षात्काररूपं ज्ञानं कामयामहे प्राणापानादिपञ्चवृत्तिरूपा हे मरुतस्तत्कर्त कुरुत ।

गूहत । 'गुहू संवरणे' । शपि लघूपधगुणे 'ऊदुपधाया गोहः' (पा.सू. ६.४.८९) इति उपधाया ऊकारः । यात । 'या प्रापणे' । 'अस्मात् अन्तर्भावितण्यर्थात् लोट्' । अत्रिणम् । 'अदेस्त्रिनि च' (उ.सू.४.५०८) इति त्रिनिप्रत्ययः । उश्मसि । 'वश कान्तौ' । इदन्तो मसिः । उदादित्वात् शपो लुक् । ग्रहिज्यादिना सम्प्रसारणम् ।। १० ।।

**सिद्धाञ्जनम्–** हे मरुतः! **गुह्यम्** रहसि वर्तमानं, अन्तर्निलीनं **तमः** अन्धकारं **गूहत** संवृतं कुरुत, विनाशयतेत्यर्थः, **विश्वम् अत्रिणम्** सर्वं अत्तारं राक्षसादिकं **वि यात** विविधं यापयत, निर्गमयत । **ज्योतिः** तत् पूर्वोक्तं **कर्त** आविष्कुरुत, **यत्** वयं **उश्मसि** कामयामहे ।

अत्रिणम्–अत्तेः त्रिनिप्रत्ययः । उश्मसि–वष्टेः, इन्दतो मसिः ॥ १० ॥

॥ इति प्रथमाष्टके षष्ठाध्याये द्वादशो वर्गः ॥

## ॥ अथ त्रयोदशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ८७)

(६ गोतमो राहुगणः । मरुतः । जगती)

**प्रत्व॑क्षसः॒ प्रत॑वसो विर॒प्शिनोऽना॑नता॒ अवि॑थुरा ऋजी॒षिणः॑ ।**
**जुष्ट॑तमासो॒ नृत॑मासो अ॒ञ्जिभि॒र्व्या॑नज्रे॒ के चि॑दु॒स्रा इ॑व॒ स्तृभिः॑ ॥ १ ॥**
प्र॒ऽत्व॑क्षसः । प्रऽत॑वसः । वि॒ऽर॒प्शिनः॑ । अना॑नताः । अवि॑थुराः । ऋ॒जी॒षिणः॑ ।
जुष्ट॑ऽतमासः । नृऽत॑मासः । अ॒ञ्जिऽभिः॑ । वि । आ॒न॒ज्रे॒ । के । चि॒त् । उ॒स्राःऽइ॑व । स्तृ॒ऽभिः॑ ॥

**स्कन्द– प्रत्वक्षसः** त्वक्षू तनूकरणे । प्रकर्षेण तनूकर्तारः शत्रूणाम् । **प्रतवसः** प्रकृष्टबलाः । **विरप्शिनः** 'विरप्शी' (निघ.३,५) इति महन्नाम । महान्तः । **अनानताः** अप्रणतपूर्वाः कस्यचित् । **अविथुराः** 'व्यथ भयचलनयोः' । अभीरवः । **ऋजीषिणः** अन्तर्णीतमत्वर्थोऽत्र ऋजीषी । ऋजीषिणः । **जुष्टतमासः** प्रियतमाः अवितृतमा वा । **नृतमासः** नृशब्देनात्र तदाकारः तद्विषयं वा प्राशस्त्यं लक्ष्यते । अतिशयेन मनुष्याकाराः प्रशस्ता वेत्यर्थः । **अञ्जिभिः** 'इत्थम्भूतलक्षणे' (पा.२,३,२१) इत्येवमेषा तृतीया । अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति यथा । रत्नप्रायैराभरणैः सम्बद्धाः **वि आनज्रे** अञ्जेर्व्यक्त्यर्थस्येदं रूपम् । व्यज्यन्ते । कथम् । **के चित् उस्राः इव स्तृभिः** 'उस्राः' (निघ.१,५) इति रश्मिनाम । स्तृभिरित्यपि नक्षत्रनाम (या.३,२०) । यथा केचिदुस्राश्चन्द्ररश्मयः ऋत्वा आदित्यरश्मयो वा नक्षत्रैः सम्बद्धाः सौम्यरूपा व्यज्यन्ते तद्वदित्यर्थः ॥ १ ॥

**वेङ्कटमाधव–** प्रकर्षेण शत्रूणां तनूकर्तारः प्रकृष्टबलाः महान्तः अप्रणताः अनेकाकिनः तृतीयसवनेऽन्वयात् **ऋजीषिणः** पर्याप्ततमाः नेतृतमाः आभरणैः व्यक्ता अभवत् । **के चित्** रश्मयः इव प्रभाभिः इति मरुतो वदति ॥ १ ॥

**मुद्गल–** 'प्रत्वक्षसः' इति षड्चं तृतीयं सूक्तम् । गोतम ऋषिः । जगती छन्दः । मरुतो देवताः ।

**प्रत्वक्षसः** शत्रूणां प्रकर्षेण तनूकर्तारः । शत्रुघातिन इत्यर्थः । यतः **प्रतवसः** प्रकृष्टबलोपेताः । अत एव **विरप्शिनः** विविधजयघोषेणोपेताः । अत एव **अनानताः** आनसिरहिताः सर्वोत्कृष्टा इत्यर्थः । **अविथुराः** अवियुक्ताः । सप्तगणसंधीभूता इत्यर्थः । **ऋजीषिणः** प्रार्जयितारो रसानाम् । **जुष्टतमासः** अतिशयेन यष्टृभिः सेविताः **नृतमासः** अतिशयेन मेघादेर्नेतार एवाम्भूता मरुतः **स्तृभिः** स्वशरीरस्याच्छादकैः **अञ्जिभिः** रूपाभिव्यञ्जकैराभरणैः **व्यानज्रे** नभसि व्यक्ता दृश्यन्ते । दृष्टान्तः । **के चित् उस्राः इव** ये केचन सूर्यरश्मयो यथा नभसि दीप्यन्ते तद्वत् ।। १ ।।

**सायण–** 'प्रत्वक्षसः' इति षड्चं तृतीयं सूक्तं गोतमस्यार्षं जागतं मारुतम् । तथा चानुक्रान्तं– 'प्रत्वक्षसः षड् जागतम्' इति । अग्निष्टोमे आग्निमारुतशस्त्रे इदं सूक्तं मारुत-निविद्धानम् । 'अथ यथेतम्' इति खण्डे सूत्रितं– 'प्रत्वक्षसः प्रतवसो यज्ञा यज्ञा वो अग्नये' (आश्व.श्रौ.५.२०) इति ।

**प्रत्वक्षसः** शत्रूणां प्रकर्षेण तनूकर्तारः शत्रुघातिन इत्यर्थः । यतः **प्रतवसः** प्रकृष्टबलोपेताः अत एव **विरप्शिनः** विविधेन जयघोषेणोपेताः । यद्वा । महन्नामैतत् । महान्तो हि विविधैः शब्दैः प्रशस्यन्ते । अत एव **अनानताः** आनतिरहिताः सर्वोत्कृष्टा इत्यर्थः । **अविथुराः** अवियुक्ताः । सप्तगणरूपेण संधीभूता इत्यर्थः । **ऋजीषिणः** । तृतीयसवने ऋजीषस्याभिषवात् तत्र च मरुतः स्तूयन्ते इति तेषामृजीषित्वम् । यद्वा । ऋजीषिणः प्रार्जयितारो रसानाम् । **जुष्टतमासः** अतिशयेन यष्टृभिः सेविताः **नृतमासः** अतिशयेन मेघादेर्नेतारः एवम्भूता मरुतः **स्तृभिः** स्वशरीरस्याच्छादकैः **अञ्जिभिः** रूपाभिव्यञ्जकैराभरणैः **व्यानज्रे** नभसि व्यक्ता दृश्यन्ते । तत्र दृष्टान्तः । **के चित् उस्राइव** । ये केचन स्र्यरश्मयो यथा नभसि दीप्यन्ते तद्वत् ।

प्रत्वक्षसः । प्रकर्षेण त्वक्षन्ते तनूकुर्वन्तीति प्रत्वक्षसः । 'तक्षू त्वक्षू तनूकरणे' । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । प्रतवसः । तवः इति बलनाम । प्रकृष्टं तवो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । विरप्शिनः । 'रप लप व्यक्तायां वाचि' । विरपणं विरप्शः । औणादिकः शक्प्रत्ययः । तद्वन्तो विरप्शिनः । अनानताः । आनता अवनताः प्रह्वीभूताः । न आनता अनानताः । अव्ययपूर्वपदप्रकृति-स्वरत्वम् । अविथुराः । 'व्यथ भयचलनयोः' । 'व्यथेः संप्रसारणं धः किच्च' (उ.सू.१.३९) इति उरच्प्रत्ययः । अत्र तु बहुलवचनात् धत्वं न क्रियते । पूर्ववत् समासस्वरौ । जुष्टतमासः ।

'नित्यं मन्त्रे' इति जुष्टशब्दः आद्युदात्तः । तत आतिशायनिकस्य तमपः पित्त्वादनुदात्तत्वे स एव स्वरः शिष्यते । आनज्रे । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' । कर्मणि 'छन्दसि लुङ् लङ्लिटः' इति वर्तमाने लिट् । 'अत आदेः' इति अभ्यासस्य आत्वम् । 'तस्मान्नुड् द्विहलः' (पा.सू.७.४.७१) इति नुट् । व्यत्ययेन उपधालोपः । 'इरयो रे' । स्तृभिः । 'स्तञ् आच्छादने' । क्विप् । आगमानुशासनस्यानित्यत्वात् तुगभावः ।। १ ।।

**सिद्धाञ्जनम्–** 'प्रत्वक्षस' इति षड्ऋचं तृतीयं सूक्तम्, गोतमस्यार्षं जागतं मारुतम् ।।

**प्रत्वक्षसः** शत्रूणां प्रकर्षेण कर्शयितारः **प्रतवसः** प्रकृष्टबलाः, **विरप्शिनः** महन्नामैतत्, प्राग्विवृतम् (१.८.८) महान्तः, 'विविधेन जयघोषेणोपेताः महान्तो हि विविधैः शब्दैः प्रशस्यन्ते' इति सायणीयाम् । **अनानताः** आनतिहीनाः उद्धता इत्यर्थः, **अविथुराः** अव्यथमानतया भयचलनरहिताः । **ऋजीषिणः** प्रार्जयितारो रसानामिति सायणव्याख्या, ऋजीषं अपार्जनं शत्रूणां, तदेषामस्तीति वयम्, प्रागिदं कथितम्, (१.३२.६) । **जुष्टतमासः** अतिशयेन प्रीताः **नृतमासः** अतिशयेन नेतारो बलिनः **अञ्जिभिः** स्वरूपाभिव्यञ्जकैः प्रभाविशेषैः **व्यानज्रे** व्यक्ताः दृश्यन्ते । तत्र दृष्टान्तः, **स्तृभिः** नक्षत्रैर्युक्ताः **के चित् उस्रा सव** स्वल्पसङ्ख्याकाः सूर्यकिरणा इव । स्वल्पेषु उदयरश्मिषु नक्षत्रदर्शनं प्रसिद्धम् । अत्र मरुतां आदौ दर्शनं तेषां 'अञ्जिभिः' स्फुटं भवतीत्युक्तम् ।

प्रत्वक्षसः– तक्षू त्वक्षू तनूकरणे । अवियुराः–व्यथ भयसञ्चलनयोः, व्यथेः सम्प्रसारणं, घेः किच्चेति उरच्प्रत्ययः । आनज्रे–अनक्तेः, कर्मणि लिट्, इरयो रे ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**उपह्वरेषु यदचिध्वं ययिं वयइव मरुतः केन चित् पथा ।**
**श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते ।। २ ।।**
उपऽह्वरेषु । यत् । अचिध्वम् । ययिम् । वयःऽइव । मरुतः । केन । चित् । पथा ।
श्चोतन्ति । कोशाः । उप । वः । रथेषु । आ । घृतम् । उक्षत । मधुऽवर्णम् । अर्चते ।।

**स्कन्द–** **उपह्वरेषु** गह्वरेषु पर्वतप्रदेशेषु अन्तरिक्षप्रदेशेषु या व्यवस्थितं मेघसमूहम् **यत्** यदा **अचिध्वम्** चेतयध्वे **ययिम्** गन्तारम् । नष्टारमित्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् ।

तदा **वयः इव** पक्षिण इव हे **मरुतः! केन चित् पथा** केनापि मार्गेण । येनान्यः कश्चिदपि गन्तुं न शक्नोति तेन केनापीत्यर्थः । साकाङ्क्षत्वात् शीघ्रमिति वाक्यशेषः । गतानां च सताम् **श्चोतन्ति कोशाः** इत्यादि । अथवा यदचिध्वमित्येतदेव चनतेर्गतिकर्मण उपधाया इत्वम् । चितिरेव वा सामर्थ्यात् गत्यर्थो द्रष्टव्यः । यदा गच्छथ ययिं मेघसमूहं प्रति वय इव हे मरुतः! केनापि पथा तदा श्चोतन्ति क्षरन्ति कोशाः । 'कोश' (निघ.१,१०) इति मेघनाम । अथवा चर्ममयेन रज्वा बद्धेन येन कूपादुदकमुत्तार्यते स कोश इत्युच्यते । इह तु तत्सदृशत्वात् मेघाः कोशाः अभिप्रेताः । उदकपूर्णा मेघा इत्यर्थः । **उप व रथेषु** उपशब्दः सामीप्ये । समीपे वः युष्माकं स्वभूतानाम् । यत्र प्रदेशे युष्मदीया रथा व्यवतिष्ठन्ते तत्र रथचक्रधाराभिः छिद्यमानाः मेघाः प्रक्षरन्तीत्यर्थः । आकारस्तु पदपूरणः मर्यातार्थो वा । मर्यादया श्चोतन्तीति । य ईदृशा रथाः तान् प्रति ब्रूमः । **घृतम् उक्षत** वृष्टिलक्षणमुदकमुक्षत सिञ्चत । पातयतेत्यर्थः । **मधुवर्णम्** मधुसदृशवर्णम् । **अर्चते** स्तोतुरर्थाय ।। २ ।।

**वेङ्कटमाधव–** यदा **अचिध्वम्** सञ्चितमकुरुत मेघम्, पक्षिण इव मरुतः! **केन चित् पथा** शीघ्रं गच्छन्तः । तदानीम् उपक्षरन्ति मेघाः युष्माकुम् रथेषु स्थिताः । तथा सति उदकं सिञ्चत मधुसदृशवर्णं परिचरते ।। २ ।।

**मुद्गल–** हे **मरुतः! उपह्वरेषु** उपह्वर्तव्येषु गन्तव्येष्वस्माकं सन्निकृष्टेषु नभसः प्रदेशेषु **यत्** यदा **ययिम्** गतिमन्तं मेघम् **अचिध्वम्** वर्षणसामर्थ्येनोपचितं कुरुथ । किं कुर्वन्तः । **वयः इव** पक्षिण इव **केन चित् पथा** केनचिदाकाशमार्गेण शीघ्रं गच्छन्तः । नभसि शीघ्रं वर्षणार्थं प्रवर्तमानैर्मरुद्भिर्मेघाः उपचीयन्ते इत्यर्थः । तदानीम् **कोशाः** मेघाः **वः** युष्माकम् रथेषु **उप श्चोतन्ति** जलं मुञ्चन्ति । यस्मादेवं तस्मात् हे मरुतः! यूयम् **अर्चते** युष्मान् हविर्भिः पूजयते मह्यं यजमानाय मधुवर्णम् मधुसदृशरूपं स्वच्छम् **घृतम्** वृष्ट्युदकम् **आ** समन्तात् **उक्षत** सिञ्चत । अस्मदभिलषितां वृष्टिं कुरुतेत्यर्थः ।। २ ।।

**सायण–** हे **मरुतः! उपह्वरेषु** उपह्वर्तव्येषु गन्तव्येष्वस्माकं संनिकृष्टेषु नभसः प्रदेशेषु **यत्** यदा **ययिं** गतिमन्तं मेघम् **अचिध्वं** वर्षणसामर्थ्येनोपचितं कुरुथ । किं कुर्वन्तः । **वयइव** पक्षिण इव **केन चित् पथा** केनचिदाकाशमार्गेण शीघ्रं गच्छन्तः । नभसि शीघ्रं वर्षणार्थं प्रवर्तमानैर्मरुद्भिर्मेघा उपचीयन्ते इत्यर्थः । तदानीं **कोशाः** । मेघनामैतत् । **वः** युष्माकं **रथेषु**

आसक्ता मेघाः **श्चोतन्ति** जलं मुञ्चन्ति । यस्मादेवं तस्मात् हे मरुतो यूयम् अर्चते युष्मान् हविर्भिः पूजयते मह्यं यजमानाय **मधुवर्णं** मधुसदृशरूपं स्वच्छं **घृतं** वृष्ट्युदकम् **आ** समन्तात् **उक्षत** सिञ्चत । अस्मदभिलषितां वृष्टिं कुरुतेत्यर्थः ।

उपह्वरेषु । 'ह्वृ कौटिल्ये' । उपह्वरन्ति कौटिल्येन तिर्यग्गच्छन्त्येष्विति उपह्वरा नभःप्रदेशाः । 'पुंसि संज्ञायां घः प्रायेण' इति अधिकरणे घः । अचिध्वम् । चिनोतेः वर्तमाने लङ् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । ययिम् । 'या प्रापणे' । 'आदृगमहनजनः' इति किप्रत्ययः । पथा । आङि 'भस्य टेर्लोपः' इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । श्चोतन्ति । 'श्च्युतिर् क्षरणे' । छान्दसो यलोपः । उक्षत । 'उक्ष सेचने' । लोटि तशब्दस्य ङित्त्वे सति 'ऋचि तुनुध' इत्यादिना सांहितिको दीर्घः ।। २ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! उपह्वरेषु** उपह्वर्तव्येषु कौटिल्येन गन्तव्येषु पार्थिवेषु स्थलेषु अस्माकमन्नमयशरीरेषु **यत्** यदा **ययिम्** गमनयुक्तं दिव्यबलादिवर्षकं मेघं **अचिध्वम्** उपचितं कुरुथ । किं कुर्वन्तः? **वय इव** पक्षिण इव **केन चित् पथा** केनापि मार्गेण पतन्तः । तदानीं **कोशाः** तेजोबलादिनिधिभूताः मेघाः **वः** युष्माकं **रथेषु** यानेषु **उप** समीपे **आ श्चोतन्ति** क्षरन्ति, बलादिकं मुञ्चन्ति, तावद् भूरि वर्तते अतः हे मरुतः, यूयं **अर्चते** पूजयते यजमानाय **मधुवर्णम्** मधुसदृशं भासमानं **घृतम्** दीप्तिमत्तेजः **उक्षत** सिञ्चत ।

उपह्वरेषु–गतम् (१.६२.६) । अचिध्वम्–चिनोतेः वर्तमाने लङ्, छन्दसि विकरणस्य लुक् । ययिम्–या प्रापणे, किप्रत्ययः । श्चोतन्ति–श्च्युतिर् क्षरणे, छान्दसो यलोपः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।**
**ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः ।। ३ ।।**
**प्र । एषाम् । अज्मेषु । विथुराऽइव । रेजते । भूमिः । यामेषु । यत् । ह । युञ्जते । शुभे । ते । क्रीळयः । धुनयः । भ्राजत्ऽऋष्टयः । स्वयम् । महिऽत्वम् । पनयन्त । धूतयः ।।**

**स्कन्द–** **एषाम्** मरुताम् **अज्मेषु** 'अज गतिक्षेपणयोः' । गमनकालेषु **विथुरा इव** 'व्यथ भयचलनयोः' भीतेव **प्र रेजते** प्रकर्षेण कम्पते **भूमिः** । न च केवलेष्वज्मेषु । किं तर्हि ।

**यामेषु यत् ह युञ्जते** हशब्दोऽत्र चार्थे । यदा च यामेषु स्वरथेषु पृषतीः अश्वाः युञ्जते । किमर्थम् । **शुभे** 'शुभम्' (निघ.१,१२) इत्युदकनाम । उदकार्थम् । यदा गच्छन्ति मरुतः सन्नह्यन्ति च मेघान् हन्तुं तदा भयेन कम्पते इत्यर्थः । किञ्च **ते** मरुतः **क्रीळयः** क्रीडनशीलाः **धुनयः** कम्पयितारः शत्रूणाम् **भ्राजदृष्टयः** दीप्तशक्तयः दीप्ततोरणा वा स्वयम् एवात्मीयम् **महित्वम्** माहात्म्यम् **पनयन्त** पनतिः स्तुत्यर्थः । स्तावयन्ति । तथातथा स्वयमेवोपकुर्वन्ति यथायथा परितुष्टाः स्तोतारो मरुतां माहात्म्यं स्तुवन्तीत्यर्थः । **धूतयः** धवतेर्गतिकर्मण इदं रूपम् (निघ.२,१४) । गन्तारः मेघान् यज्ञान् शत्रून् वा प्रति ॥ ३ ॥

**वेङ्कटमाधव–** प्रकर्षेण चलति मरुताम् उत्क्षेपकेषु गमनेषु एकाकिनीव **भूमिः**, यदि खलु अमी युक्ता भवन्ति उदकार्थम् । **ते** क्रीडनशीलाः कम्पयितारः दीप्तायुधाः स्वयम् एव माहात्म्यं कथयन्ति धून्वन्तः ॥ ३ ॥

**मुद्गल–** **यत् ह** यदा खलु एते मरुतः **शुभे** शोभनाय वृष्ट्युदकाय **युञ्जते** मेघान् सज्जीकुर्वन्ति, तदानीम् **अज्मेषु** मेघानामुत्क्षेपकेषु **एषाम्** मरुतां सम्बन्धिषु यामेषु मेघानां नियमनेषु सत्सु **भूमिः** पृथिवी **प्र रेजते** प्रकर्षेण कम्पते । दृष्टान्तः । **विथुरा इव** यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालम्बा सती कम्पते तद्वत् । ते तादृशाः **क्रीळयः** विहारशीलाः **धुनयः** चलनस्वभावाः **भ्राजदृष्टयः** दीप्यमानायुधा मरुतः **धूतयः** पर्वतादीन् धून्वन्तः सन्तः **महित्वम्** स्वकीयं महिमानम् स्वयम् एव **पनयन्त** व्यवहरन्ति । प्रकटयन्तीत्यर्थः ॥ ३ ॥

**सायण–** **यद्ध** यदा खलु एते मरुतः **शुभे** शोभनाय वृष्ट्युदकाय **युञ्जते** मेघान् सज्जीकुर्वन्ति तदानीम् **अज्मेषु** मेघानामुत्क्षेपकेषु **एषां** मरुतां सम्बन्धिषु **यामेषु** मेघानां नियमनेषु सत्सु **भूमिः** पृथिवी **प्र रेजते** प्रकर्षेण कम्पते । यद्वा । यदा खलु मरुतः स्वकीयान् रथान् युञ्जते अश्वैर्योजयन्ति तदानीमेषां रथानां सम्बन्धिषु पर्वतादेरुत्क्षेपकेषु यामेषु गमनेषु भूमिर्भीत्या कम्पते । तत्र दृष्टान्तः । **विथुरेव** । यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालम्बा सती कम्पते तद्वत् । **ते** तादृशाः **क्रीळयः** विहारशीलाः **धुनयः** चलनस्वभावाः **भ्राजदृष्टयः** दीप्यमानायुधाः एवम्भूता मरुतः **धूतयः** पर्वतादीन् धुन्वन्तः सन्तः **महित्वं** स्वकीयं महिमानं स्वयमेव **पनयन्त** व्यवहरन्ति प्रकटयन्तीत्यर्थः ।

अज्मेषु । 'अज गतिक्षेपणयोः' । 'अर्तिस्तुसु' इत्यादिना विधीयमानो मन् बहुलवचना-दस्मादपि द्रष्टव्यः । 'बलादावार्धधातुके विकल्प इष्यते' (का.२.४.५६.२) इति वचनात् 'अजेर्व्यवत्रषोः' इति वीभावाभावः । नित्त्वादाद्युदात्तत्वम् । रेजते । 'रेजृ कम्पने' । 'भ्यसते रेजत इति भयवेपनयोः' (निरु.३.२१) इति यास्कः । यामेषु । 'यम उपरमे' । भावे घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । यद्वा । 'या प्रापणे' इत्यस्मात् 'अर्तिस्तुसु' इत्यादिना मन्प्रत्ययः । शुभे । 'शुभ दीप्तौ' । सम्पदादिलक्षणः कर्मणि क्विप् । 'सावेकाच' इति विभक्तेरुदात्तत्वम् । पनयन्तः । 'पन व्यवहारे' । 'गुपूधूपविच्छि' (पा.सू. ३.१.२८) इति आयः । अस्मात् छान्दसो लङ् । व्यत्ययेन ह्रस्वत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– यत् ह** यदा खलु **शुभे** शोभनाय तेजोबलादिवर्षणाय, **युञ्जते** वर्षणं सज्जीकुर्वन्ति मरुतः, तदानीं **अज्मेषु** उत्क्षेपकेषु **एषाम्** मरुतां **यामेषु** नियमनेषु सत्सु **भूमिः** पृथिवी शरीरं **प्ररेजते** प्रकर्षेण कम्पते । केव? **विथुरा इव** व्यथिता भयाचलितेव 'यथा भर्त्रा वियुक्ता जाया निरालम्बा कम्पते'' इति सायणीयम् । मरुतां तेजोबलादिवृष्टिसज्जीकरणे नियमनानि उत्क्षेपणपूर्वाणि आवश्यकानि भवन्ति, तत्र पृथिवी, (अन्तर्यजने शरीरं) प्रथमं भयादिव कम्पते । **ते** तथाभूताः **क्रीळयः** विहारशीलाः **धुनयः** कम्पनस्वभावाः **भ्राजदृष्टयः** दीप्यमानायुधाः **धूतयः** धुन्वन्तः प्रतिबन्धकान् **महित्वम्** स्वीयं महिमानं **स्वयम्** स्वयमेव **पनयन्त** प्रकटं कुर्वन्ति ।

अज्मेषु–अज गतिक्षेपणयोः । यामेषु–यम उपरमे, भावे घञ् । शुभे–शुभ दीप्तौ, सम्पदादिलक्षणः क्विप् । पनयन्त–पन व्यवहारे ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**स हि स्वसृत् पृषदश्वो युवा गणोऽ३ऽया ईशानस्तविषीभिरावृतः ।**
**असि सत्य ऋणयावानेद्योऽस्या धियः प्राविताथा वृषा गणः ।। ४ ।।**

**सः । हि । स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः । अया । ईशानः । तविषीभिः । आऽवृतः । असि । सत्यः । ऋणऽयावा । अनेद्यः । अस्याः । धियः । प्रऽअविता । अथ । वृषा । गणः ।। ४ ।।**

**स्कन्द–** हिशब्दः पदपूरणः । य उक्तगुणोऽसि सः त्वम् स्वसृत् स्वयंगामी । **पृषदश्वः**

पृषद्वर्णः वडवः । **युवा** सदैव तरुणः **गणः** मरुताम् । **ईशानः** ईश्वरः । **अया तविषीभिः** अयेति बहुवचनस्य स्थाने व्यत्ययेनैकवचनम् । आभिस्तविषीभिः एतैरात्मीयैः सेनालक्षणैर्बलैः **आवृतः** नित्यपरिवृतः । **असि सत्यः** सत्यश्चासि । **ऋणयावा** यातिरत्र सामर्थ्यादन्तर्णीत्तण्यर्थः । यानि स्तोतॄणामृणानि तेषां यापयिता । अपगमयितेत्यर्थः । **अनेद्यः** प्रशस्य । **अस्याः** च **धियः** कर्मणः प्रज्ञाया वा **प्राविता** प्रकर्षेण रक्षिता । अथ **वृषा गणः** अपि च वर्षिता मरुद्गणः ।।

**वेङ्कटमाधव– सः हि** स्वयमेव सर्ता **पृषदश्वः** तरुणः मरुद्गणः अनया पृथिव्या ईशितव्यया **ईशानः** बलैः **आवृतः** । **असि** सत्यकर्मा स्तोतॄणाम् ऋणं प्रतिगन्ता प्रशस्यः । अस्य कर्मणः प्रकर्षेण रक्षिताऽसौ वर्षिता च गणः ।। ४ ।।

**मुद्गल– स हि गणः** स खलु मरुद्गणः **अया** अस्य सर्वस्य जगतः **ईशानः** ईशनशीलो भवति । कीदृशः । **स्वसृत्** स्वयमेव सरन् । नह्यन्यः कश्चिदस्य मरुद्गणस्य प्रेरकोऽस्ति । **पृषदश्वः** पृषत्यश्वेतबिन्द्वङ्किता मृग्योऽश्वस्थानीया यस्य स तथोक्तः । **युवा** नित्यतरुणः **तविषीभिः** अन्येषामसाधारणैर्बलैः **आवृतः** परिवेष्टितः **सत्यः** सत्कर्मार्हः **ऋणयावा** स्तोतॄणामृणस्यापगमयिता । बहुलस्य धनस्य दातेत्यर्थः । **अनेद्यः** सर्वैरनिन्दितः **वृषा** जलानां वर्षिता । एवम्भूतो मरुद्गणः **अस्या धियः** अस्मदीयस्यास्य कर्मण अथ अनन्तरम् **प्र अपिता असि** प्रकर्षेण रक्षिता भवति ।।

**सायण– स हि** स खलु मरुद्गणः **अया** अस्य सर्वस्य जगतः **ईशानः** ईशनशीलः भवति । कीदृशः । **स्वसृत्** स्वयमेव सरन् । न ह्यन्यः कश्चिदस्य मरुद्गणस्य प्रेरकोऽस्ति । **पृषदश्वः** । पृषत्यः श्वेतबिन्द्वङ्किताः मृग्यः अश्वस्थानीयाः यस्य स तथोक्तः । **युवा** नित्यतरुणः **तविषीभिः** अन्येषामसाधारणैर्बलैः **आवृतः** परिवेष्टितः **सत्यः** सत्कर्मार्हः **ऋणयावा** स्तोतॄणामृणस्यापगमयिता बहुलस्य धनस्य दातेत्यर्थः । **अनेद्यः** । प्रशस्यनामैतत् । सर्वैरनिन्दितः **वृषा** जलानां वर्षिता । एवम्भूतो मरुद्गणः **अस्याः धियः** अस्मदीयस्यास्य कर्मणः **अथ** अनन्तरं **प्राविता असि** प्रकर्षेण रक्षिता भवति ।

अया । 'सुपां सुलुक्' इति षष्ठ्याः याजादेशः । 'हलि लोपः' (पा.सू.७.२.११३) इति इदम इद्रूपस्य लोपः । ईशानः । 'ईश ऐश्वर्ये' इत्यस्मात् ताच्छीलिकः चानश् । तस्य लसार्वधातुकत्वाभावेन चित्स्वरेणान्तोदात्तत्वम् । अया ईशान इत्यत्र ईषाअक्षादित्वात् प्रकृतिभावः ।

असि । पुरुषव्यत्ययः । ऋणयावा । 'या प्रापणे' इत्यस्मात् अन्तर्भावितण्यर्थात् 'आतो मनिन्' इति वनिप् । अनेद्यः । 'णिदि कुत्सायाम्' । 'ऋहलोर्ण्यत्' इति ण्यत् । आगमानुशासनस्यानित्यत्वात् नुमभावे लघूपधगुणः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्– स हि** स खलु मरुतां **गणः अया** अस्य सर्वस्य **ईशानः** ईश्वरो भवति । कीदृशः? **स्वसृत्** स्वयमेव सरन्, नान्यसाहाय्यमपेक्षमाणः **पृषदश्वः** पृषत्यः अश्वा यस्य सः **युवा** तरुणः **तविषीभिः** बलैः **आवृतः** परिवेष्टितः **अथ सत्यः** अनृतपरिपन्थी **ऋणयावा** भक्तानां ऋणस्य यापयिता **अनेद्यः** अनिन्दितः **वृषा** वर्षकः अभीष्टानां, **अस्याः धियः** अस्मदीयायाः धारणावत्या मेधायाः **प्राविता** प्रवर्धयिता **गणः असि** भवति, पुरुषव्यत्ययः ।

अया–षष्ठ्या याजादेशः । अनेद्यः–णिदि कुत्सायाम्, ण्यत् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा ।**
**यदीमिन्द्रं शम्यृक्काण आशतादिन्नामानि यज्ञियानि दधिरे ।। ५ ।।**
**पितुः । प्रत्नस्य । जन्मना । वदामसि । सोमस्य । जिह्वा । प्र । जिगाति । चक्षसा । यत् । ईम् । इन्द्रम् । शमि । ऋक्काणः । आशत । आत् । इत् । नामानि । यज्ञियानि । दधिरे ।। ५ ।।**

**स्कन्द– पितुः** पिता मरुतां रुद्रः । 'प्रत्नः' (निघ.३,२७) इति पुराणनाम । षष्ठीनिर्देशात् यत् सकाशादिति वाक्यशेषः । **जत्मना** इति हतौ तृतीया । रुद्राख्यस्य पितुः पुराणस्य सकाशाद्यत् मरतां जन्म तेन हेतुना । **वदामसि** उच्चारयामः । किम् । सामर्थ्यात् स्तुतीः । यस्माद्रुद्रात् पुराणाज्जातत्वादभिजनोपेता मरुतः, तस्मादेतान् स्तुम इत्यर्थः । तस्मादेव च **सोमस्य** द्वितीयार्थे षष्ठी । सोमं प्रति । मरुताम् **जिह्वा प्र जिगाति** प्रकर्षेण गच्छति । सोममपि यज्ञेषु तस्मादेव पिबन्तीत्यर्थः । न च केवलेनैव जन्मना हेतुना । किं तर्हि । **चक्षसा** दर्शनेन च । यस्माच्च सर्वज्ञेयानां ज्ञातार इत्यर्थः । यस्माच्च **ईम्** एते मरुतः **इन्द्रम् शमि** वृत्रवधादौ कर्मणि **ऋक्काणः** 'ऋच स्तुतौ' । अर्चनमृक् स्तुतिः, तद्वन्त ऋक्काणः । सर्वस्तोतॄणां स्तुत्येत्यर्थः । **आशत** व्याप्नुवन्ति । यस्माच्च वृत्रवधादौ कर्मणीन्द्रेण सदृशाः । नेन्द्रान्न्यूना इत्यर्थः । **आत्**

अस्मात् । **इत्** इच्छब्दस्तु पदपूरणः । **नामानि यज्ञियानि दधिरे** तैस्तैर्नामभिर्यज्ञेषु यष्टृभिरिज्यन्ते इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव– पितुः** पुराणस्य स्तोत्रकुशलस्य सकाशात् जननेन वयमपि स्तुतिकुशलाः स्तुमः । **सोमस्य** सुतस्य दर्शनेन मम **जिह्वा** स्तोतुकामा निर्गच्छति । यदैनम् **इन्द्रम्** कर्मणि स्तोत्रवन्तो मरुतः व्याप्नुवन् । अनन्तरमेव **यज्ञियानि नामानि** उदकानि प्रयच्छन्ति ।। ५ ।।

**मुद्गल– प्रत्नस्य** चिरन्तनस्य **पितुः** अस्माकं जनकस्य रहूगणस्य सकाशात् यज्जन्म तेन **जन्मना** वयम् **वदामसि** ब्रूमः । वक्ष्यमाणमस्माकं वृतान्तं पितोपदिष्टवान्, अतो वयं ब्रूमः । कोऽसौ वृत्तान्त इति चेदुच्यते । **सोमस्य** यज्ञेष्वभिषुतस्य सोमद्रव्यस्य **चक्षसा** प्रकाशमानयाहुत्या सहिता **जिह्वा** स्तुतिरूपा वाक् **प्र जिगाति** मरुद्गणं प्रकर्षेण गच्छति । यज्ञेषु सोमाहुतिः स्तुतिश्च मरुद्भ्यः क्रियते । **यत्** यस्मात् **ईम्** एनम् **इन्द्रम् शमि** वृत्रवधादिरूपे कर्मणि **ऋक्वाणः** 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३,२०) इत्येवंरूपया स्तुत्या युक्ताः सन्तः **आशत** प्राप्नुवन्, न पर्यत्याक्षुः । **आत् इत्** एवमिन्द्रप्राप्त्यनन्तरमेव **यज्ञियानि** यज्ञार्हाणि ईदृग्वान्यादृग्वा इत्येवमादीनि **नामानि** इन्द्रसकाशाल्लब्धानि **दधिरे** धृतवन्तः । तस्मादेषां यज्ञे सोमाहुतिः स्तुतिश्च क्रियते ।। ५ ।।

**सायण– प्रत्नस्य** चिरन्तनस्य **पितुः** अस्माकं जनकस्य रहूगणस्य सकाशात् यत् जन्म तेन वयं **वदामसि** ब्रूमः । वक्ष्यमाणं वृत्तान्तम् अस्माकं पितोपदिष्टवान् अतो वयं ब्रूम इत्यर्थः । कोऽसौ वृत्तान्तः इति चेत् उच्यते । **सामेस्य** यज्ञेष्वभिषुतस्य सोमद्रव्यस्य **चक्षसा** प्रकाशमानया-हुत्या सहिता **जिह्वा** स्तुतिरूपा वाक् **प्र जिगाति** मरुद्गणं प्रकर्षेण गच्छति । यज्ञेषु सोमाहुतिः स्तुतिश्च मरुद्भ्यः क्रियते । यस्मात् **ईम्** एनम् **इन्द्रं शमि** वृत्रवधादिरूपे कर्मणि **ऋक्वाणः** 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपया स्तुत्या युक्ताः सन्तः **आशत** प्राप्नुवन् न पर्यत्याक्षुः । **आदित्** एवमिन्द्रप्राप्त्यनन्तरमेव **यज्ञियानि** यज्ञार्हाणि 'ईदृङ् चान्यादृङ् च' इत्येवमादीनि **नामानि** इन्द्रसकाशात् लब्ध्वा **दधिरे** धृतवन्तः तस्मादेषां यज्ञे सोमाहुतिः स्तुतिश्च क्रियते ।

शमि । शमी इति कर्मनाम । सप्तम्येकवचने छान्दसः ईकारलोपः । ऋक्वाणः । 'ऋच स्तुतौ' । सम्पदादिलक्षणो भावे क्विप् । 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । अन्त्यविकार-

श्छान्दसः । यद्वा अयस्मयादिषु क्वचिदुभयं भवति (का.१.४.२०) इत्युक्तत्वात् 'स सुष्टुभा स ऋक्वता' इत्यादाविव पदत्वात् कुत्वं भत्वात् जश्त्वाभावः । आशत । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । यज्ञियानि । 'यज्ञर्त्विग्भ्यां घस्वञौ' इति अर्हार्थे घः ।। ५ ।।

**सिद्धाञ्जनम्– प्रत्नस्य** पुरातनस्य **पितुः** अस्मद्वंशमूलपुरुषस्य सकाशात् **जन्मना** यदार्षं जन्म लब्धं तेन तन्महिम्ना **वदामसि** ब्रूमः । वक्ष्यमाणमिदम्–**सोमस्य** अभिषुतस्य, देवेभ्योऽर्पणीयस्य सर्वानुभूतिरसस्य **चक्षसा** (प्रकाशेनेत्येके) दर्शनमात्रेण **जिह्वा** मन्त्रात्मिका वाक् **प्रजिगाति** मरुद्गणं प्रकर्षेण गच्छति, रसे निष्पन्ने सति, अनायासेन स्तुतिवाक् प्रवर्तते । **यत्** यदा **ईम्** एनं **इन्द्रम्** मरुत्वन्तं **शमि** इन्द्रस्य कर्मव्ये कर्मणि **ऋक्वाणः** ऋगात्मकस्तोत्रयुक्ताः सन्तः **आशत** आप्नुवन्, आप्नुवन्ति लडर्थे, **आदित्** अनन्तरमेव ते मरुतः **यज्ञियानि** यज्ञार्हाणि **नामानि** देवतोद्बोधनसमर्थानि रहस्यानि नामानि **दधिरे** धृतवन्तः, धारयन्ति । इन्द्रकार्य-भागहरत्वादेव यज्ञिया भवन्ति मरुत इत्युक्तम् ।

शमि-कर्मनामसु, सप्तम्येकवचने छान्दस ईकारलोपः । आशत–लङ, विकरणस्य लुक् ।।

## ऋक्संहिता पदपाठसहिता

**श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।**
**ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ।। ६ ।।**
श्रियसे । कम् । भानुऽभिः । सम् । मिमिक्षिरे । ते । रश्मिऽभिः । ते । ऋक्वऽभिः । सुऽखादयः । ते । वाशीऽमन्तः । इष्मिणः । अभीरवः । विद्रे । प्रियस्य । मारुतस्य । धाम्नः ।। ६ ।।

**स्कन्द– श्रियसे** सस्यसम्पत्तिलक्षणायै श्रियै । **कम्** उदकम् **भानुभिः** दीप्तिभिः विद्युल्लक्षणाभिः । **सम् मिमिक्षिरे** 'मिह सेचने' इत्यस्यैतद्रूपम् । सम्यक् सेक्तुमिच्छन्ति । विद्युद्भिर्वर्षन्तीत्यर्थः । न च केवलाभिः । किं तर्हि । **ते रश्मिभिः** अश्वप्रग्रहैः । **ते ऋक्वभिः** स्तुतिमद्भिः । कैः । सामर्थ्यादश्वैः रथैर्वा । सर्वैश्चोपकरणैः वर्षन्तीत्यर्थः । **सुखादयः** खादिरत्र कट्टारिकाकारो मरुतामायुधविशेषः कवष्या वा । उभयत्र हि खादिशब्दस्व दृष्टः प्रयोगः । 'त्वेषं गणं तवसं खादिहस्तम्' (ऋ.५,५८,२), 'अंसेषु व ऋष्टयः पत्सु खादयः' (ऋ.५,५४,११) ।

शोभनाः खादयो येषां ते सुखादयः । अथवा अन्यथास्यार्धर्चस्यार्थयोजना । श्रीयसे कमिति कंशब्दः पदपूरणः सुखनाम वा । सस्यसम्पत्तिलक्षणायै श्रियै सुखाय च सर्वप्राणिनां भानुभिः सम्मिमिक्षिरे ते रश्मिभिः । भानुशब्दोऽत्रान्तर्णीतमत्वर्थः । सम्मिमिक्षिरे इति म्यक्षतेर्गतिकर्मणो रूपम् । रसानुप्रदानकाले दीप्तिमद्भिरादित्यरश्मिभिः सह सङ्गच्छन्ते ते मरुतः । ते एव ऋक्वभिः स्तुतिमद्भिः स्तोतृभिः सह यागकाले सङ्गच्छन्ते सुखादयः । किञ्च **ते वाशीमन्तः** वाशीशब्दोऽत्रायुधविशेषः । 'वाशीमेको बिभर्ति' (ऋ,८,२९,३) इति यथा । वाङ्नाम वा वाशीशब्दः । तद्वन्तः । **इष्मिणः** इषिर्गत्यर्थः इच्छार्थो वा । गन्तारः शत्रून् प्रति । इषितारो वा स्तुतीनाम् । अथवा इट् इत्यन्ननाम (निघ.२,७) । तद्वन्त इष्मिणः । **अभीरवः** भयरहिताः । किञ्च **विद्रे** वेद्म्यहम् **प्रियस्य मारुतस्य धाम्नः** द्वितीयार्थेऽत्र षष्ठी । सर्वस्य प्रियं मारुतं धाम स्थानं वा नाम वा जन्म वा तेजो वा सामर्थ्यलक्षणम् ।। ६ ।।

**वेङ्कटमाधव–** श्रयणायोदकं तेजोभिः **सम् मिमिक्षिरे** समाददुः **ते रश्मिभिः** बन्धकैः । **ते** रसाऽऽहरणशीलैर्भानुभिः शोभनखादियुक्ताः । तथा **वाशीमन्तः** वाशी चाऽऽयुधम् । गन्तारः **अभीरवः** । लभेयाहं प्रियं मारुतं धामेति । वर्षकामस्य सूक्तम् ।। ६ ।।

**मुद्गल–** **ते** पूर्वोक्ता मरुतः **भानुभिः** दीप्यमानैः सूर्यरश्मिभिः सह **कम्** वृष्ट्युदकम् **श्रियसे** श्रयितुं प्राणिभिः सेवितुम् **सम् मिमिक्षिरे** सम्यक् मेढुमिच्छन्ति । पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छति । एवं वृष्टिमुत्पाद्य **ते** मरुतः **ऋक्वभिः** स्तुतिमद्भिर्ऋत्विग्भिः सह **सुखादयः** शोभनस्य हविषो भक्षयितारो भवन्ति । **वाशीमन्तः** शोभनया स्तुतिलक्षणया वाचोपेताः **इष्मिणः** गतिमन्तः **अभीरवः** भयरहिताः **ते** मरुतः **प्रियस्य** सर्वाभिमतस्य **मारुतस्य** मरुत्सम्बन्धिनः **धाम्नः** स्थानस्य सर्वाभिमतं मरुत्सम्बद्धं विशिष्टं स्थानं **विद्रे** लब्धवन्तः ।। ६ ।।

**सायण–** **ते** पूर्वोक्ता मरुतः **भानुभिः** भानुशीलैर्दीप्यमानैः सूर्यरश्मिभिः सह **कं** वृष्ट्युदकं **श्रियसे** श्रयितुं प्राणिभिः सेवितुं **सं मिमिक्षिरे** सम्यग्मेढुमिच्छन्ति । पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छन्ति । एवं वृष्टिमुत्पाद्य **ते** मरुतः **ऋक्वभिः** स्तुतिमद्भिर्ऋत्विग्भिः सह सुखादयः शोभनस्य हविषो भक्षयितारो भवन्ति । **वाशीमन्तः** । वाशी इति वाङ्नाम । शोभनया स्तुतिलक्षणया वाचोपेताः **इष्मिणः** गतिमन्तः **अभीरवः** भयरहिताः **ते** मरुतः **प्रियस्य** सर्वाभिमतस्य **मारुतस्य** मरुत्सम्बन्धिनः **धाम्नः** स्थानस्य सर्वाभिमतं मरुत्संबद्धं विशिष्टं स्थानं **विद्रे** लब्धवन्तः ।

श्रियसे । 'तुमर्थे सेसेन्' इति कसेन्प्रत्ययः । मिमिक्षिरे । 'मिह सेचने' । अस्मात् इच्छासनन्तात् लिटि 'अमन्त्रे' इति निषेधात् आमभावः । व्यत्ययेन आत्मनेपदम् । सुखादयः । 'खादृ भक्षणे' । औणादिकः इप्रत्ययः । शोभना खादिर्भक्षणं येषाम् । 'नञ्सुभ्याम्' इत्युत्तर-पदान्तोदात्तत्वम् । इष्मिणः । 'इष गतौ' । 'इषियुधीन्धि' इत्यादिना मक् । ततो मत्वर्थीय इनिः । विद्रे । 'विद्लृ लाभे' । लिटि द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यम्' इति द्विर्वचनाभावः । 'इरयो रे' इति इरयो रेभावः ।। ६ ।।

**सिद्धाञ्जनम्– ते** प्रक्रान्ताः मरुतः **भानुभिः** दीप्यमानैः **रश्मिभिः** किरणैः सह **कम्** सुखवृष्टिजलं **श्रियसे** श्रयितुं, यजमानस्यर्षेः सेवनायेति भावः, **संमिमिक्षिरे** सम्यक् मेढुं सेक्तुमिच्छन्ति, यजमानशरीरादिकं सुखार्द्रं कर्तुं प्रवृत्ता इत्यर्थः । तथा कृत्वा **ते** मरुतः **ऋक्वभिः** ऋग्युक्तैः, स्तुतिविषयभूतैरन्यैर्देवैरथवा स्तोतृभिः ऋषिभिः सह **सुखादयः** शोभनस्य सर्वस्य भोक्तारः भवन्ति । अथ **ते वाशीमन्तः** वाशीति वाङ्नाम, वाग्युक्ताः **इष्मिणः** प्रेरणावेगोपेत-गतियुक्ताः **अभीरवः** भयरहिताः सन्तः **प्रियस्य** स्वीयस्य अभिमतस्य **मारुतस्य** मरुत्सम्बन्धिनः **धाम्नः** स्थानस्य, स्थानमिति द्वितीयार्थे षष्ठी **विद्रे** लेभिरे लभन्त इति लडर्थे ।

श्रियसे–तुमर्थे असेन्प्रत्ययः । सुखादयः–खादृ भक्षणे, औणादिक इप्रत्ययः, खादिः । इष्मिणः–इष गतौ, मक्प्रत्ययः, ततो मत्वर्थीय इनिः । विद्रे–विद्लृ लाभे, इरेचो रेभावः ।।

।। इति प्रथमाष्टके षष्ठाध्याये त्रयोदशो वर्गः ।।

## ।। अथ चतुर्दशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८८)

(६ गोतमो राहुगणः । मरुतः । त्रिष्टुप् । १,६ प्रस्तारपङ्क्तिः । ५ विराड्रूपा)

**आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।**
**आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ।। १ ।।**

आ । विद्युन्मत्ऽभिः । मरुतः । सुऽअर्कैः । रथेभिः । यात । ऋष्टिमत्ऽभिः । अश्वऽपर्णैः ।
आ । वर्षिष्ठया । नः । इषा । वयः । न । पप्तत । सुऽमायाः ।। १ ।।

**स्कन्द– आ** इत्युपसर्गो **यात** इत्याख्यातेन सम्बध्यते । **विद्युन्मद्भिः** विद्युता संयुक्तैः । हे मरुतः! स्वर्कैः अर्चनमर्कः स्तुतिः । शोभनोऽर्को येषां ते स्वर्काः, तैः स्वर्कैः । सुष्ठु स्तुत्यैरित्यर्थः । **रथेभिः आ यात** अस्मान् प्रति । **ऋष्टिमद्भिः** शक्तिमद्भिः तोरणवद्भिर्वा । **अश्वपर्णैः** अश्वपतनैः । किमर्थम् । उच्यते । **आ वर्षिष्ठया** नः आ इत्युपसर्गः **पप्तत** इत्याख्यातेन सम्बन्धयितव्यः । वर्षिष्ठया **इषा** इति हेतौ तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । नः इत्यपि तादर्थ्ये चतुर्थी । वृद्धतमेनास्मदर्थेन अन्नेन । आयात । वृद्धतममन्नमस्मभ्यं दातुमित्यर्थः । कथञ्च पुनरायात । **वयः न** पक्षिण इव अत्यन्तशीघ्रम् **आ पप्तत** हे **सुमायाः!** सुप्रज्ञानाः! ॥ १ ॥

**वेङ्कटमाधव– आ यात** दीप्तिमद्भिः **मरुतः!** स्वश्वैः रथैः **ऋष्टिमद्भिः** अश्वपक्षैः । **आ** पतत् वृद्धतमेनान्नेन अस्मान् पक्षिण इव सुकर्माणः! ॥ १ ॥

**मुद्गल**– 'आ विद्युन्मद्भिः' इति षड्चं चतुर्थं सूक्तम् । गोतम ऋषिः । आद्या षष्ठी च द्वे प्रस्तारपङ्क्ती । आद्यौ पादौ जागतौ तृतीयचतुर्थौ गायत्रौ यस्याः सा प्रस्तारपङ्क्तिः । द्वितीयाद्याः पङ्क्तयः । पञ्चमी विराड्रूपा । आदितस्त्रयः पादा एकादशका अन्त्योऽष्टकः सा विराड्रूपा । मरुतो देवताः ॥

हे **मरुतः!** मितं निर्मितमन्तरिक्षं प्राप्य रुवन्ति शब्दं कुर्वन्तीति मरुतः । रथेभिः आत्मीयैः **आ यात** अस्मदीयं यज्ञमागच्छत । कीदृशैः रथैः । **विद्युन्मद्भिः** विशिष्टदीप्तियुक्तैः । **स्वर्कैः** स्वर्चनीयैः शोभनगमनयुक्तैः । **ऋष्टिमद्भिः** ऋष्टयः शक्तिरूपाण्यायुधानि तद्वद्भिः । **अश्वपर्णैः** अश्वानां पतनं गमनं येषामस्ति तादृशैः । हे **सुमायाः!** शोभनकर्माणो मरुतः! **वर्षिष्ठया** प्रवृद्धया **इषा** अस्मभ्यं दातव्येनान्नेन सह **नः** अस्मान् प्रति **वयः न** पक्षिण इव शीघ्रम् **आ पप्तत** आपतत । आगच्छतेत्यर्थः ॥ १ ॥

**सायण**– 'आ विद्युन्मद्भिः' इति षड्चं चतुर्थं सूक्तम् । अत्रानुक्रम्यते– 'आ विद्युन्मद्भिराद्यान्त्ये प्रस्तारपङ्क्ती पञ्चमी विराड्रूपा' इति । पूर्ववदृषिदेवते । आद्या षष्ठी च द्वे प्रस्तारपङ्क्ती । आद्यौ पादौ जागतौ तृतीयचतुर्थौ गायत्रौ यस्याः सा प्रस्तारपङ्क्तिः । सूत्रितं च– 'प्रस्तारपङ्क्तिः पुरतः' (पि.सू.३.४०) इति । अस्यायमर्थः । 'जागतौ गायत्रौ च' इत्यनुवर्तते । यदि पुरतः

पुरस्तात् द्वौ जागतौ पादौ स्याताम् अन्त्यौ गायत्रौ सा प्रस्तारपङ्क्तिरिति । 'एतत्त्यत्' इत्येषा **पञ्चमी विराड्रूपा** । आदितस्त्रयः पादा एकादशका अन्त्योऽष्टकः सा विराड्रूपेत्युच्यते । विनियोगो लैङ्गिकः ।।

हे **मरुतः!** मितं निर्मितमन्तरिक्षं प्राप्य रवन्ति शब्दं कुर्वन्तीति मरुतः । यद्वा । अमितं भृशं शब्दकारिणः । अथवा मितं स्वैर्निर्मितं मेघं प्राप्य विद्युदात्मना रोचमानाः । अथवा महत्यन्तरिक्षे द्रवन्तीति मरुतः । ये मध्यमस्थाने देवगणाः समाम्नातास्तेत्सर्वे मरुतः आख्यायन्ते । तथा चाहुः– सर्वा स्त्री मध्यमस्थाना पुमान् वायुश्च सर्वगः । गणाश्च सर्वे मरुत इति वृद्धानुशासनम्' इति । पौराणिकास्त्वाचक्षते– 'मारीचात्कश्यपात्सप्तगणात्मका एकोनपञ्चाशत्सङ्ख्याका मरुतो जज्ञिरे' इति । एवम्भूता हे **मरुतः! रथेभिः** आत्मीयैः रथैः **आ यात** अस्मदीयं यज्ञमागच्छत । कीदृशैः रथैः । **विद्युन्मद्भिः** । विद्योतनं विद्युत् । विशिष्टदीप्तियुक्तैः **स्वर्कैः** स्वश्चनैः शोभनगमनयुक्तैः । यद्वा । शोभनमर्कोऽर्चनं स्तुतिर्येषामस्ति तादृशैः । अथवा शोभनदीप्तियुक्तैः । **ऋष्टिमद्भिः** । ऋष्टयः शक्तिरूपाण्यायुधानि । स्थूणा इत्यन्ये । तद्वद्भिः । **अश्वपर्णैः** । अश्वानां पतनं गमनं येषामस्ति तादृशैः । यद्वा । रंहणशीला मेघा रथाः । तैः सह अन्तरिक्षे वर्षणार्थमागच्छत । कीदृशैः । विद्युन्मद्भिः । विद्युता तडिता तद्वद्भिः स्वर्कैः शोभनगमनैः ऋष्टिमद्भिः । अर्पणं गमनम् । तत्स्वभावनीरयुक्तैः । अश्वपर्णैः । अश्वं व्याप्तं पर्णं पननं गमनं येषाम् । अन्तरिक्षं व्याप्य वर्तमानैरित्यर्थः । हे **सुमायाः!** माया इति कर्मणो ज्ञानस्य च नामधेयम् । शोभनकर्माणः शोभनप्रज्ञा वा मरुतः **वर्षिष्ठया** प्रवृद्धतरया **इषा** अस्मभ्यं दातव्येनान्नेन सह **नः** अस्मान्प्रति **वयो न** पक्षिण इव शीघ्रम् **आ पप्तत** आपतत आगच्छतेत्यर्थः । अत्र निरुक्तम्– 'अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति । मरुतो मितराविणो वा मितरोचिनो वा महदद्रवन्तीति वा' इति, 'विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा रथैरायात ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणकर्माणो वा कल्याणप्रज्ञा वा' (निरु.११.१३-१४) इति ।

विद्युन्मद्भिः । यवादेराकृतिगणत्वेन विद्युच्छब्दस्य यवाद्यन्तर्भावात् 'अयवादिभ्यः' इत्यत्र अनुवृत्तेः 'झयः' (पा.सू.८.२.१०) इति मतुपो वत्वं न प्रवर्तते । ऋष्टिमद्भिः । 'ह्रस्वनुड्भ्यां

मतुप्' इति मतुप उदात्तत्वम् । अश्वपर्णैः । 'अशू व्याप्तौ' । 'अशिप्रुषि' इत्यादिना क्नप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्षिष्ठया । वृद्धशब्दात् आतिशायनिके इष्ठनि 'प्रियस्थिर' इत्यादिना वर्षादेशः । पप्तत । 'पत्लृ गतौ' । लङि लृदित्त्वात् च्लेः अङादेशः । 'पतः पुम्' (पा.सू.७.४.१९) इति पुमागमः ।। १ ।।

**सिद्धाञ्जनम्–** 'आ विद्युन्मद्भिरि'ति षडृचं चतुर्थं सूक्तम् । पूर्ववदृषिदेवते । आद्या षष्ठी च प्रस्तारपङ्क्ती, पञ्चमी विराड्रूपा । शिष्टास्त्रिष्टुभः, आद्यौ पादौ जागतौ तृतीयचतुर्थौ गायत्रौ यस्याः सा प्रस्तारपङ्क्तिः, आदितस्त्रयः पादा एकादशकाः अन्त्योऽष्टकः यस्याः सा विराड्रूपेत्युच्यते ।

हे **मरुतः! विद्युन्मद्भिः** विद्युत् विद्योतनं तद्वद्भिः **स्वर्कैः** शोभनार्चनयुक्तैः (अर्कः अर्चनं स्तुतिः दीप्तिरपि भवति) **ऋष्टिमद्भिः** आयुधयुक्तैः, दृष्टय एव ऋष्टय इति प्रागुपपादितम्, मारुतरथस्यापि दर्शनसामर्थ्यं वर्तत इति बोध्यम् । **अश्वपर्णैः** अश्वपतनसदृशवेगयुक्तैः, एवम्भूतैः **रथेभिः** रथैः रंहणशीलैः यानैः **आ यात** आगच्छत । हे **सुमायाः!** शोभनप्रज्ञोपेताः, **नः** अस्माकं **वर्षिष्ठया** प्रवृद्धया **इषा** प्रेरणशक्त्या सह **वयो न** पक्षिण इव **आ पप्तत** आपतत, शीघ्रमागच्छत ।

वर्षिष्ठया–वृद्धशब्दादिष्ठनि वर्षादेशः । पप्तत-पत्लृ गतौ, लुङि पतः पुमागमः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**तेऽरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथतूर्भिरश्वैः ।**
**रुक्मो न चित्रः स्वधितीवान् पव्या रथस्य जङ्घनन्त भूम ।। २ ।।**
**ते । अरुणेभिः । वरम् । आ । पिशङ्गैः । शुभे । कम् । यान्ति । रथतूःऽभिः । अश्वैः ।**
**रुक्मः । न । चित्रः । स्वधितिऽवान् । पव्या । रथस्य । जङ्घनन्त । भूम ।। २ ।।**

**स्कन्द– ते** मरुतः **अरुणेभिः** अरुणैः **वरम्** उत्कृष्टं मेघं प्रति **पिशङ्गैः** कपिलैश्च **शुभे** उदकार्थम् । 'कम् इति सुखनाम' (या,२१४) । सुखम् **आ यान्ति** आगच्छन्ति । **रथतूर्भिः**, रथे व्यवस्थिता ये त्वरन्ति तूर्वन्ति वा, मेघान् हिंसस्तीत्यर्थः, ते रथतुरः तैः रथतूर्भिः, अश्वैः । कथं पुनरायान्ति । **रुक्मः न चित्रः स्वधितीवान्** 'स्वधितिः' (निघ.२,२०) इति वज्रनाम ।

**यथायं रोचनः पूजनीयः आयुधवांश्च भगवानादित्यः भ्राजमान आगच्छति तद्वत्** । आगत्य च **पव्या** चक्रधारया **रथस्य जङ्घनन्त** घ्नन्ति । **भूम** बहुपर्यायोऽयं भूमशब्दः । बह्वपि मेघजातम् ।।

**वेङ्कटमाधव– ते** अरुणैः **पिशङ्गैः रथस्य** तारकैः **अश्वैः** वर्षिष्ठम् **कम्** चन देशम् **आ यान्ति** उदकार्थम् । मणिः इव **चित्रः** आयुधवान् मरुद्गणः । ते रथचक्रस्य धारया भूमिं घ्नन्ति मरुतः ।। २ ।।

**मुद्गल– ते** पूर्वोक्ता मरुतः **अरुणेभिः** अरुणवर्णैः **पिशङ्गैः** पिङ्गलवर्णैरुभयवर्णोपेतैः **रथतूर्भिः** रथस्य प्रेरयितृभिः **अश्वैः वरम्** देवानां वरीतारम् **कम्** शब्दयितारं स्तुवन्तं यजमानम् **आ यान्ति** आगच्छन्ति । किमर्थम् । शुभे तस्य शोभां कर्तुम् । तेषां मरुतां गणः **रुक्मः न** रोचमानं सुवर्णमिव **चित्रः** अतिशयेन दर्शनीयः **स्वधितीवान्** शत्रूणां खण्डकेन वज्रायुधेनोपेतः । एवंविधगणरूपास्ते मरुतः **रथस्य पव्या** चक्रधारया **भूम** भूमिम् **जङ्घनन्त** अत्यर्थं घ्नन्ति । स्तोतृरक्षणार्थमागतानां तेषां मरुतां भारमसहमाना भूमिरतिपीडिता बभूवेत्यर्थः ।। २ ।।

**सायण– ते** पूर्वोक्ता मरुतः **अरुणेभिः** अरुणवर्णैः **पिशङ्गैः** पिङ्गलवर्णैरुभयवर्णोपेतैः **रथतूर्भिः** रथस्य प्रेरयितृभिः **अश्वैः वरं** देवानां वरीतारं **कं** शब्दयितारं स्तुवन्तं यजमानम् **आ यान्ति** आगच्छन्ति । किमर्थम् । **शुभे** तस्य शोभां कर्तुम् । अथवा शुभे उदकाय । वृष्ट्यर्थमित्यर्थः । तेषां मरुतां गणः **रुक्मो न** रोचमानं सुवर्णमिव **चित्रः** अतिशयेन दर्शनीयः **स्वधितीवान्** । स्वधितिः इति वज्रनाम । शत्रूणां खण्डकेनायुधेनोपेतः । एवंविधगणरूपास्ते मरुतः **रथस्य पव्या** चक्रधारया **भूमभूमिं जङ्घनन्त** अत्यर्थं घ्नन्ति । स्तोतृरक्षणार्थमागतानां तेषां मरुतां भारमसहमाना भूमिरतिपीडिता बभूवेत्यर्थः ।

वरम् । व्रियन्ते देवाः अनेनेति वरः । 'ग्रहवृदृनिश्चि' इति करणे अप् । कम् । 'कै गै शब्दे' । कायतीति कः । बहुलवचनात् कप्रत्ययः । रथतूर्भिः । 'तुर त्वरणे' । रथं तुतुरति त्वरायुक्तं कुर्वन्तीति रथतुरः । 'क्विप् च' इति क्विप् । भिसि 'हलि च' इति दीर्घत्वम् । पव्या । 'पवी रथनेमिर्भवति' (निरु.५.५) इति यास्कः । 'पूङ् पवने' । अस्मात् 'अच इः' इति इप्रत्ययः । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । जङ्घनन्त । हन्तेर्यङन्तात् वर्तमाने छान्दसो लङ् । 'छन्दस्युभयथा' इति शपः आर्धधातुकत्वात् अतोलोपयलोपौ । भूम । भूमिशब्दादुत्तरस्य अमः 'सुपां सुलुक्' इति डादेशः । छान्दसं ह्रस्वत्वम् ।। २ ।।

**सिद्धाञ्जनम्– ते** मरुतः **अरुणेभिः** अरुणकान्तियुक्तैः **पिशङ्गैः** पिङ्गलवर्णैः वर्णद्वयोपेतैः, अरुणवर्णः, क्रियां प्रचण्डक्रियोद्योगश्च द्योतयितुं पिङ्गलवर्णः शुभप्रदत्वं चेति ज्ञेयम् । **रथतूर्भिः** रथस्य प्रेरयितृभिः **अश्वैः** तुरङ्गैः **वरम्** वरणीयं श्रेष्ठं **शुभे** शुभाय **कम्** सुखवर्षणात्मकमुदकं **आयान्ति** आगच्छन्ति, प्राप्नुवन्ति, तेषां गणः **रुक्मो न** रोचमानं सुवर्णमिव **चित्रः** दर्शनीयः **स्वधितीवान्** वज्रयुक्तः शत्रुविघातार्थः, स्वधितिर्वज्रनाम । **रथस्य पव्या** चक्रधारया **भूम** भूमिं, यजमानशरीरं **जङ्घनन्त** अत्यर्थं हन्ति, जडस्य घनस्य शरीरस्य मार्दवापादनाय, एवंविधप्रहारः ऊर्ध्वतनशक्तिभिः प्रयुज्यते, तेन दिव्यतेजोबलाद्यवतरणं सोढुं प्रभवति यजमानस्य अन्नमयादि-शरीरम् ।

रथतूर्भिः–रथं तुरन्ति त्वरायुक्तं कुर्वन्ति रथतुरः, क्विप् । पव्या–पविः, रथनेमिर्भवतीति यास्कः । जङ्घनन्त–हन्तेर्यङ्लुगन्तात् छान्दसो लङ् । भूम–भूमिशब्दादुत्तरस्यामः डादेशः, ह्रस्वः छान्दसः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा ।**
**युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ।। ३ ।।**
श्रिये । कम् । वः । अधि । वाशीः । मेधा । वना । न । कृणवन्ते । ऊर्ध्वा ।
युष्मभ्यम् । कम् । मरुतः । सुऽजाताः । तुविऽद्युम्नासः । धनयन्ते । अद्रिम् ।। ३ ।।

**स्कन्द– कम्** इतिं पदपूरणः सुखनाम वा । **श्रिये** सुखाय च सर्वप्राणिनाम् **वः** युष्माकं स्वभूताः **अधि तनूषु** मेघशरीराणामुपरि । साकाङ्क्षत्वाद्वर्तमाना इति वाक्यशेषः । मेघं छिन्दन्त इत्यर्थः । **वाशीः** आयुधविशेषाः । अथवा **वः** इत्येतत् तनूष्वित्येतेन सम्बध्यते न वाशीरित्यनेन । युष्माकं शरीराणामुपरि वर्तमाना वाश्यः । युष्माभिः गृहीता इत्यर्थः । किं कुर्वन्तः । उच्यते । **मेधा वना न कृणवन्ते ऊर्ध्वा** 'मेधः' (निघ.३,१७) इति यज्ञनाम । द्वितीयाबहुवचनस्य चात्र आकारादेशो द्रष्टव्यः । वनशब्दो वृक्षसमूहवचनः । यज्ञान् ऊर्ध्वान् कुर्वन्ति वनानीव । यथा वृष्टिद्वारेण वनानि जनयन्ति । एवं यज्ञानपीत्यर्थः । किञ्च युष्मभ्यं युष्माकमर्थाय **कम्** सुखं हे **मरुतः! सुजाताः! तुविद्युम्नासः** द्युम्नं द्योततेः अन्नमिहाभिप्रेतम् ।

बहुहविर्लक्षणान्नाः यजमानाः । **धनयन्ते** धनीकुर्वन्ति । अभिषवार्थं परिगृह्णन्तीत्यर्थः । **अद्रिम्** अभिषवाग्रावाणम् । अथवा धन धान्ये इत्येतस्य सामर्थ्यात् वृद्ध्यर्थस्य संस्कारार्थस्य वा रूपम् । अद्रिमित्यभिषवग्राव्णः सम्बन्धादादरणाद्वा सोमोऽभिप्रेतः । वसतीवर्येकधनाभिः वर्धयन्ति संस्कृर्वन्ति वेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** शोभायै भवति **वः** अङ्गेषु **वाशीः** । यज्ञान् वनानीव मरुतः ऊर्ध्वान् कृण्वन्ति । **युष्मभ्यम् मरुतः! सुजाताः!** बहुधनाः **कम्** ग्रावाणमभिषवाय सञ्चिन्वन्ति ।।

**मुद्गल–** हे **मरुतः! वः** युष्माकम् **अधि तनूषु** शरीरेष्वंसप्रदेशेषु **वाशीः** शत्रूणामाक्रोशकम् आराख्यमायुधम् **श्रिये कम्** ऐश्वर्यार्थं वर्तते इति शेषः । कम् इत्येतत् पादपूरणम् । तादृशा मरुतः **वना न** उच्छ्रितान् वृक्षसमूहानिव **मेघा** मेधान् यज्ञान् **ऊर्ध्वा** ऊर्ध्वान् एकाहा-हीनसत्ररूपेणोच्छ्रितान् **कृणवन्ते** यजमानैः कारयन्ति । हे **सुजाताः!** शोभनजननयुक्ताः! मरुतः! **युष्मभ्यम्** युष्मदर्थम् **कम्** सुखकरम् **अद्रिम्** सोमाभिषवे प्रवृत्तं ग्रावाणम् **तुविद्युम्नासः** प्रभूतधाः यजमानाः **धनयन्ते** धनं कुर्वन्ति । युष्माकं यागाय ग्रावभिरभिषुण्वन्तीत्यर्थः ।। ३ ।।

**सायण–** हे मरुतः! **वः** युष्माकं **तनूषु** शरीरेष्वंसप्रदेशेषु **वाशीः** शत्रूणामाक्रोशकम् आराख्यमायुधं **श्रिये कम्** ऐश्वर्यार्थं वर्तते इति शेषः । कम् इत्येतत् पादपूरणम् । तदुक्तम्– 'अथापि पादपूरणाः कमीमिद्विति' इति । तादृशा मरुतः **वना न** उच्छ्रितान् वृक्षसमूहानिव **मेघा** मेधान् यज्ञान् **ऊर्ध्वा** ऊर्ध्वान् एकाहाहीनसत्ररूपेणोच्छ्रितान् **कृणवन्ते** यजमानैः कारयन्ति । हे **सुजाताः!** शोभनजननयुक्ताः **मरुतः युष्मभ्यं** युष्मदर्थं **कं** सुखकरम् **अद्रिं** सोमाभिषवे प्रवृत्तं ग्रावाणं **तुविद्युम्नासः** प्रभूतधना यजमानाः **धनयन्ते** धनं कुर्वन्ति युष्माकं यागाय ग्रावभिरभिषुण्वन्तीत्यर्थः ।

वाशीः । शत्रूणां भयोत्पादनेनाक्रोशशब्दकरणं वाशः । ततः 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः । व्यत्ययेनाद्युदात्तत्वम् । मेधा । 'सुपां सुलुक्' इति शसो डादेशः । वना । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । कृणवन्ते । 'कृवि हिंसाकरणयोश्च' । लटि व्यत्ययेन आत्मनेपदम् । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । पुनरपि व्यत्ययेन अन्तादेशः । 'छन्दस्युभयथा' इति आर्धधातुकत्वेन झस्य अङित्त्वात् गुणे अवादेशः । ऊर्ध्वा । पूर्ववत् डादेशः । धनयन्ते । धनशब्दात् 'तत्करोति' इति णिच् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! वः** युष्माकं **तनूषु अधि** शरीरेषु अधिकरणे **श्रिये** शोभायै **वाशीः** (आयुधनाम स्थूलपक्षे) वाग्रूपाः शब्दाः वर्तन्त इति शेषः । **कम्** पदपूरणम् । तादृशा मरुतः **वना न** वनानि यथा चालयन्ति तथा **मेधा** अस्मदीयानि यजनानि, चालयित्वा **ऊर्ध्वा** उच्छ्रितानि ऊर्ध्वगतिकानि **कृणवन्ते** कुर्वन्ति । हे **सुजाताः!** शोभनजन्मानः मरुतः, **युष्मभ्यम्** युष्मदर्थं **कम्** सुखकरं **अद्रिम्** सोमाभिषवग्रावाणं इन्द्रवज्रलक्षितदिव्यवाग्रूपं **तुविद्युम्नासः** प्रभूततेजस्काः यजमाना ऋषयः **धनयन्ते** धनमिव कुर्वन्ति सम्पादयन्तीत्यर्थः । ग्रावस्वरूपं अञ्ःसवसूक्ते विचारितम् (१ मं.२८ सू.) ।

मेधा–शसो डादेशः । धनयन्ते–धनशब्दात् तत् करोतीति णिच् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अहा॑नि गृध्राः॒ पर्या॑ व॒ आगु॑रि॒मां धियं॑ वार्का॒र्यां॑ च॒ दे॒वीम् ।**
**ब्रह्मा॑ कृ॒ण्वन्तो॒ गोत॑मासो अ॒र्कैरू॒र्ध्वं नु॑नुद्र उत्स॒धिं पिब॑ध्यै ।। ४ ।।**
**अहा॑नि । गृध्राः॑ । परि॑ । आ । व॒ः । अ॒गुः॒ । इ॒माम् । धिय॑म् । वा॒र्का॒र्या॑म् । च॒ । दे॒वीम् । ब्रह्म॑ । कृ॒ण्वन्तः॑ । गोत॑मासः । अ॒र्कैः । ऊ॒र्ध्वम् । नु॒नु॒द्रे । उ॒त्स॒ऽधिम् । पिब॑ध्यै ।।**

**स्कन्द–** यागानामहःकालत्वात् **अहानि** इत्येतेन यागो लक्ष्यते । सप्तम्यर्थे चैषा प्रथमा । अहस्सु । यागकाले इत्यर्थः । **गृध्राः** अभिकाङ्क्षितारः फलानाम् । **वः** युष्माकं स्वभूतानाम् । **परि आ आ अगुः** पर्यागताः । प्राज्ञाः कुर्वन्तीत्यर्थः । **इमाम् धियम्** यागाख्यं कर्म । **वार्कार्याम् च** । वृतैर्ऋत्विग्भिः वाचा वा क्रियमाणत्वात् वार्कार्या स्तुतिरिहाभिप्रेता । ताम् च । कीदृशीम् **देवीम्** देवयोग्यां दीप्तां वा । स्वगुणैरत्यन्तोत्कृष्टामित्यर्थः । किञ्च **ब्रह्म** स्तुतिलक्षणम् **कृण्वन्तः गोतमासः** गोतमप्रभृतयः । **अर्कैः** मन्त्रैः सम्बद्धम् **ऊर्ध्वम् नुनुद्रे** प्रेरयन्ति । उत्क्षिपन्तीत्यर्थः । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः । वयं गोतमप्रभृतय उत्क्षिपाम इत्यर्थः । **उत्सधिम्** 'उत्सः' (निघ.३,२३) इति कूपनाम । धेट् पाने । कूप इव यः वीयते स उत्सधिः अत्यन्तप्रभूतः सोमः । तमुत्सधिम् । किमर्थम् । उच्यते । **पिबध्यै** पातुम् । यूयं पास्यथेत्येवमित्यर्थः ।। ४ ।।

**वेङ्कटमाधव– अहानि** तृषिताः सर्वाण्येव गोतमाः युष्मान् **परि आ आ अगुः** । इदं

कर्म च दैवं वृतैर्ऋत्विग्भिः कर्तव्यम् अकुर्वन् । कर्म कुर्वन्तः गोतमाः **ऊर्ध्वम्** उत्क्षिप्तवन्तः **स्तोत्रैः** उत्सनिधानं कूपं पानाय ।। ४ ।।

**मुद्गल–** तृषितैर्गोतमैः स्तुता मरुतस्तेभ्यो गोतमेभ्यो दशान्तरे वर्तमानं कूपमुत्खायानीय प्रददुः । एतद् दृष्ट्वा कश्चिदृषिर्ब्रूते । हे गोतमाः! **गृधाः** जलाभिकाङ्क्षायुक्तान् **वः** युष्मान् **अहानि** शोभनोदकोपेतानि दिनानि **परि आ अगुः** पर्यागतानि परितः आभिमुख्येन प्राप्तानि । प्राप्य च **वार्कार्याम्** वार्भिरुदकैर्निष्पाद्याम् **इमाम् धियम्** ज्योतिष्टोमादिलक्षणं कर्म च **दैवीम्** द्योतमानमकुर्वन् । येष्वहःसु **ब्रह्म** हविर्लक्षणमन्नम् **अर्कैः** मन्त्रसाध्यैः स्तोत्रैः सह **कृण्वन्तः** मरुद्भ्यः कुर्वन्तः **गोतमासः** गोतमा ऋषयः **उत्सधिम्** उत्सो जलप्रवाहोऽस्मिन् धीयत इत्युत्सधिः कूपः तम् **पिबध्यै** स्वकीयपानाय **ऊर्ध्वम् नुनुद्रे** नुनुदिरे देशान्तरे वर्तमानं कूपमुत्खातवन्तः । एतदीयस्तोत्रैः स्तुता मरुतः कूपमुत्खातवन्त इति यत् तदेतदीयस्तोत्रकारित-मिति एतेषूपचर्यते । एकः आकारः पदपूरणः ।। ४ ।।

**सायण–** तृषितैर्गोतमैः स्तुता मरुतस्तेभ्यो गोतमेभ्यो देशान्तरे वर्तमानं कूपमुत्खायानीय प्रददुः । एतत् दृष्ट्वा कश्चिदृषिर्ब्रूते । हे गोतमाः! **गृध्राः** जलाभिकाङ्क्षायुक्तान् **वः** युष्मान् **अहानि** शोभनोदकोपेतानि दिनानि **परि आ अगुः** पर्यागतानि परितः आभिमुख्येन प्राप्तानि । प्राप्य च **वार्कार्यां** वार्भिः उदकैर्निष्पाद्यां **धियं** ज्योतिष्टोमादिलक्षणं कर्म **च देवीं** द्योतमानमकुर्वन् । येष्वहःसु **ब्रह्म** हविर्लक्षणमन्नम् **अर्कैः** मन्त्रसाध्यैः स्तोत्रैः सह **कृण्वन्तः** मरुद्भ्यः कुर्वन्तः **गोतमासः** गोतमा ऋषयः **उत्सधिम्** । उत्सो जलप्रवाहोऽस्मिन्धीयते इत्युत्सधिः कूपः तं **पिबध्यै** स्वकीयपानाय **ऊर्ध्वं नुनुद्रे** नुनुदिरे देशान्तरे वर्तमानं कूपमुत्खातवन्तः । एतदीयस्तोत्रैः स्तुता मरुतः कूपमुत्खातवन्त इति यत् तदेतदीयस्तोत्रकारितमिति एतेषूपचर्यते ।

गृध्राः । 'गृधु अभिकाङ्क्षायाम्' । 'सुसूधागृधिभ्यः क्रन्' इति क्रन्प्रत्ययः । 'सुपां सुपो भवन्ति' इति शसो जस् । नित्त्वादाद्युदात्तत्वम् । अगुः । एतेर्लुङि 'इणो गा लुङि' इति गादेशः । 'आतः' इति झेः जुस् । वार्कार्याम् । 'डुकृञ् करणे' । 'ऋहलोर्ण्यत्' । वार्भिः कार्या वार्कार्या । त्रिचक्रादित्वात् उत्तरपदान्तोदात्तत्वम् । नुनुद्रे । 'णुद प्रेरणे' । 'इरयो रे' इति रेआदेशः । उत्सधिम् । 'कर्मण्यधिकरणे च' इति दधातेरधिकरणे किप्रत्ययः । पिबध्यै । 'पा पाने' । 'तुमर्थे सेसेन्' इति शध्यैन्प्रत्ययः । 'पाघ्रा' इत्यादिना पिबादेशः ।। ४ ।।

**सिद्धाञ्जनम्–** अस्यामृचि ऋषिर्गोतमः स्ववर्गीयानुषीन् श्रेष्ठान् चिद्रश्मिसम्पन्नान् 'गोतमान्' सम्बोध्याह । हे **गृध्राः!** गृध्नवः सुखोदकाभिकाङ्क्षिणः, **वः** युष्मान् **अहानि** दिनानि शोभनसुखभरितानि **पर्यागुः** पुनरावर्तनेन प्राप्तानि । कारणमाह । **इमाम् वार्कार्याम्** वार्भिः ज्योतिर्बलादिसुखलक्षकैः उदकैः, कार्यां निष्पाद्यां **धियं च** धीलक्षितां दृढप्रज्ञां च **देवीम्** द्योतमानां दिव्यां कुर्वन्तीति शेषः । एवं **गोतमासः** (वयं वा) ऋषयः **अर्कैः** दीप्तैः स्तोत्रैः साधनैः **ब्रह्म** हार्दवाग्रूपं मन्त्रं **कृण्वन्तः** कुर्वन्तः **उत्सधिम्** उत्सो जलप्रवाहः अस्मिन् धीयत इति उत्सधिः, तं कूपं **पिबध्यै** पानाय **ऊर्ध्वं नुनुद्रे** ऊर्ध्वं प्रेरितवन्तः, अत्र कूपस्य उर्ध्वप्रापणं रहस्यार्थगर्भितम् । अधस्ताज्जडे प्राणसहितान्नामयशरीरे निमग्नेन चैतन्येन सह तेजोबलादिलक्षणा आपः धीयन्ते । तस्मादुत्सधिः शरीरस्थप्राणशरीरं भवति । मरुतां प्राणमयान्तरिक्षसमुत्पन्नानां दिवि सञ्चरतां बलवर्षणेन अधस्तात् स्थितस्य प्राणमयशरीरस्य ऊर्ध्वगमनाभिकाङ्क्षामूलका ऊर्ध्वगमनप्रेरणा ऊर्ध्वगमनं च सिध्यन्ति । मरुतः 'उर्ध्वं नुनुद्रे' इत्यत्र व्याख्याते द्वे ऋचौ (१.८५.१०.११) अनुसन्धेये ।

गृध्राः–गृधु अभिकाङ्क्षायां, क्नप्रत्ययः । अगुः–एतेर्लुङः । पिबध्यै–पा पाने, तुमर्थे शध्यैन्प्रत्ययः । अन्ये गताः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**एतत् त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।**
**पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून् ।। ५ ।।**
**एतत् । त्यत् । न । योजनम् । अचेति । सस्वः । ह । यत् । मरुतः । गोतमः । वः ।**
**पश्यन् । हिरण्यऽचक्रान् । अयःऽदंष्ट्रान् । विऽधावतः । वराहून् ।। ५ ।।**

**स्कन्द–** युज्यन्ते प्राणवियोगादिना अनेन शत्रव इति **योजनम्** सेनालक्षणं बलमिहाभिप्रेतम् । **एतत्** युष्मदीयं बलम् **न अचेति** चेत्यते । न ज्ञायते केनचित् । **सस्वः** अन्तर्हितम् । हशब्दस्तु पदपूरणः । देवतामाहात्म्यादन्तर्हितं युष्मदीयं सेनालक्षणं बलं केनचिदपि न दृश्यत इत्यर्थः । यत् कीदृशम् । उच्यते । **यत्** हे **मरुतः! गोतमः** कर्मकर्तृश्रुतेः साकाङ्क्षत्वात् स्तुतवानिति वाक्यशेषः । **वः** युष्मान् । **पश्यन्** हिरण्यचक्रान् हिरण्यशब्दोऽत्र 'अथाप्यस्यां ताद्धितेन

**कृत्स्नवन्निगमा भवन्ति'** (या.२,५) इत्येवं हिरण्मये वर्तते । हिरण्मयानि रथचक्राणि येषां ते हिरण्यचक्राः । **तान् हिरण्यचक्रान्** । हिरण्मयचक्ररथस्थानित्यर्थः । **अयोदंष्ट्रान्** दंष्ट्रास्थानीयत्वाद्रथोद्धी अत्र दंष्ट्रे उच्येते । अयोमयरथोद्धीन् । लोहमयोद्धीकरथस्थानित्यर्थः । **विधावतः** इतश्चेतश्च विविधं धावतः । **वराहून्** वरमुत्कृष्टं श्रेष्ठमिति पर्यायाः । हुशब्दोऽपि हन्तेर्वा ह्वयतेर्वा हरतेर्वा जुहोतेर्वाऽदनार्थस्य । उत्कृष्टस्य शत्रोः हन्तॄन् आह्वातॄन् वा उदकस्य वाऽऽहर्तॄन् हविषो वा भक्षयितॄन् ।। ५ ।।

**वेङ्कटमाधव– एतत्** स्तोत्रसङ्घटनं मया कृम् एतत् इव ज्ञायते । न अन्यदस्त्यस्योपमानम् । प्रकाशितवान् **गोतमः** युष्मकम् **यत् मरुतः! पश्यन् हिरण्यचक्रान् अयोदंष्ट्रान् विधावतः वराहून्** उदारान् भवतां रथान् । धनं रथेषु तिष्ठति ।। ५ ।।

**मुद्गल–** हे **मरुतः! एतत् योजनम्** युज्यतेऽनेन देवतेति योजनम् एतत्सूक्तसाध्यं स्तोत्रम् । **त्यत् न** त्यत् प्रसिद्धमन्यदुत्कृष्टं स्तोत्रमिव **अचेति** सर्वैर्ज्ञायते । **वः** युष्मदर्थम् **यत्** यदेतत्सूक्तरूपं स्तोत्रं **गोतमः** ऋषिः सस्वः ह उच्चारितवान् खलु । किं कुर्वन् । **हिरण्यचक्रान्** हिरण्यमयचक्ररथारूढान् **अयोद्रंष्ट्रान्** अयोमयीभिश्चक्रधाराभिर्युक्तान् **विधावतः** दिविधमितस्ततः प्रवर्तमानान् **वराहून्** वरस्योत्कृष्टस्य शत्रोर्हन्तॄन् । एवम्भूतान् मरुतः **पश्यन्** सम्यग्जानन् गोतमो यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सदस्माभिः सर्वैरुपलभ्यते इत्यर्थः ।। ५ ।।

**सायण–** हे **मरुतः! एतत् योजनं** युज्यतेऽनेन देवतेति योजनम् एतत्सूक्तसाध्यं स्तोत्रम् । **त्यन्न** त्यत् प्रसिद्धमन्यदुत्कृष्टं स्तोत्रमिव **अचेति** सर्वैर्ज्ञायते । **वः** युष्मदर्थं **यत्** यदेतत्सूक्तरूपं स्तोत्रं **गोतमः** ऋषिः **सस्वर्ह** उच्चारितवान् खलु । किं कुर्वन् । **हिरण्यचक्रान्** हिरण्मयचक्ररथारूढान् हितरमणीयकर्मयुक्तान् वा **अयोदंष्ट्रान्** । दशतीति दंष्ट्रा चक्रधारा । अयोमयीभिश्चक्रधाराभिर्युक्तान् । यद्वा दंशनसाधना ऋष्टयो दंष्ट्राः । अयोमया ऋष्टयो येषाम् । तान् **विधावतः** विविधमितस्ततः प्रवर्तमानान् **वराहून्** । वरस्योत्कृष्टस्य शत्रोर्हन्तॄन् । यद्वा उत्कृष्टस्य वृष्ट्युदकस्याहर्तॄन् । अथवा उत्कृष्टानां देवतानामाह्वातॄन् वरस्य हविषो भक्षयितॄन् वा । एवम्भूतान् मरुतः पश्यन् सम्यग्जानन् गोतमः यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सत् अस्माभिः सर्वैरुपलभ्यते इत्यर्थः । अत्र निरुक्तम्– 'अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते । पश्यन्हिरण्यचक्रान्' (निरु.५.४) इति ।

अचेति । 'चिती संज्ञाने' । छान्दसो वर्तमाने कर्मणि लुङ् । सस्वः । 'स्वृ शब्दोपतापयोः' । लङि तिपि 'बहुलं छन्दसि' इति शपः श्लुः । गुणे 'हल्ङ्याब्भ्यः' इति तलोपः । धातुस्वरेण अन्तोदात्तत्वम् । वराहून् । वरशब्दोपपदात् आङ्पूर्वात् हन्तेर्वा हरतेर्वा ह्वयतेर्वा जुहोतेरदनार्थात् वा हु इत्येतस्य निष्पत्तिः इति स्कन्दस्वामी । अस्य पृषोदरादित्वात् अभिमतसिद्धिः ।। ५ ।।

**सिद्धाञ्जनम्–** ऋचोऽस्या उत्तरस्याश्च तात्पर्यग्रहणे पूर्वेषां व्याख्यातॄणां विप्रतिपत्तिर्भवति । तदत्र वक्ष्यमाणार्थस्य सुखबोधाय प्रथमं पदानामन्वयं ततः पदार्थं च ब्रूमः । ''सस्वः'' अन्तर्हितनाम, गुप्तं रहस्यमिति वा अर्थः । स्वृ शब्दोपतापयोरिति धातोर्निष्पन्नमिति मत्वा कथञ्चित् प्रक्रिया दत्ता सायणभाष्ये । 'सस्वर्ह' उच्चारितवान् खलु'' इति क्रियापदत्वेन गृहीतं तत्र । नेदं साधु । अयमन्वयो भवति– 'मरुतः! गोतमः हिरण्यचक्रान् अयोदंष्ट्रान् विधावतः वराहून् वः पश्यन् यत् (प्राप) त्यत् न सस्वः ह एतत् योजनं अचेति'' । हे **मरुतः! गोतमः** आत्मानमेव परोक्षेण निर्दिशति, इयं च ऋषीणां शैली, चिद्रश्मिसम्पन्नानां श्रेष्ठ इति वा **हिरण्यचक्रान्** हिरण्मयचक्ररथारूढान् **अयोदंष्ट्रान्** अयोमयीभिः शत्रुधातकघोरदर्शन-आयुधस्थानीयाभिः दंष्ट्राभिर्युक्तान् **विधावतः** विविधः सञ्चरतः **वराहून्** उत्कृष्टस्य शत्रोर्हन्तॄन्, अत्र बहुधा निर्वचनं भवति सायणीये । अन्यत्र (१२१-११) 'वराहुं वराहारं वृत्रमसुरं' इति सायण एव व्याचष्टे । **वः** एवम्भूतान् युष्मान् **पश्यन्** प्रत्यक्षयन् **यत्** योजनं प्राप **सस्वर्ह** अन्तर्हितं खलु **त्यत्** चिराद् दृष्टं तत् **योजनम्** मन्त्राक्षराणां वर्णानुपूर्वीरूपं विन्यासात्मकं संयोजनं **न** सम्प्रति, नेति सम्प्रत्यर्थे (निरुक्तम्) **एतत्** लब्धमिदं सूक्तरूपं स्तोत्रं **अचेति** ज्ञातं भवति, मया तदेवेदमिति सम्प्रति प्रत्यभिज्ञायत इत्यर्थः । अत्र वेदनित्यत्व–ऋषिकर्तृकत्वयोर्नानुपपत्तिरिति यद् भूमिकायां प्रपञ्चितं तदनुसन्धेयम् । इदमिह तात्पर्यं भवति–ऋषिर्गोतमः पूर्वं एतत्सूक्तस्थमन्त्रार्थान् ध्यानबलेन परमे व्योम्नि ददर्श । 'ऋचो अक्षरे परमे व्योमन्' इति हि प्रसिद्धिः । दृष्टानां मन्त्राणां वैखरीवाग्भुवि अवतरणे विलम्ब आसीत्, स्मृतिन्यूनताहेतोर्वा तद्वर्णानुपूर्वरूपं मन्त्राक्षरयोजनं कञ्चित्कालं न लब्धं, सम्प्रति तस्मिन् स्मृतिपथमागते प्रत्यभिज्ञातम् ।

अचेति–चिती संज्ञाने, कर्मणि लुङ्, लडर्थे छन्दसि ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी ।**
**अस्तोभयद् वृथासामनु स्वधां गभस्त्योः ।। ६ ।।**
**एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति । वाघतः । न । वाणी ।**
**अस्तोभयत् । वृथा । आसाम् । अनु । स्वधाम् । गभस्त्योः ।। ६ ।।**

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । या पुरापि स्तुतवती **एषा स्या** सा **वः** युष्मान् हे **मरुतः! अनुभर्त्री** अनुशब्दोऽत्र धात्वर्थानुवादी, लम्बते प्रलम्बत इति यथा । बिभर्तिर्धारणार्थः । युष्मद्गुणानां धारयित्री । सकलयुष्मद्गुणसङ्कीर्तनयुक्तेत्यर्थः । **प्रति स्तोभति** प्रतीत्येषोऽभीत्येतस्य स्थाने । स्तोभतिरर्चतिकर्मा । अभिष्टोभति । **वाघतः न** ऋत्विङ्नामैतत् । ऋत्विज इव । **वाणी** वागस्मदीया । न च स्वयमेव केवलं स्तौति । किं तर्हि । **अस्तोभयत्** अन्यैरपि स्वपुत्रैः पौत्रैश्च ऋत्विग्भिर्वा स्तावयति । **वृथा** अयत्नेन । अक्लेशेनेत्यर्थः । **आसाम् अनु स्वधाम् गभस्त्योः** अन्विति पश्चाद्भावे । 'स्वधा' (निघ.२,७) इत्यन्ननाम । षष्ठ्यर्थे चात्र द्वितीया । 'गभस्ती' (निघ.२,४) इति बाहुनाम । इह तु बाहुसम्बन्धाद् हस्तयोर्वर्तते । सप्तमीनिर्देशाच्च स्थितामिति वाक्यशेषः । एषां पश्चाद्भविर्लक्षणानामन्नानां हस्तयोः स्थितानाम् । हस्तस्थस्य हविषः प्रदानोत्तरकालमित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** सा एषा मदीया **वाणी मरुतः!** भवद्भ्यो हविषाम् **अनुभर्त्री** युष्मान् **प्रति स्तोभति**, यथा ऋत्विजः । हस्तयोः अन्नं दत्त्वा तदनन्तरमेव अनायासेन आभिः स्तुतिभिः मरुद्गणो गोतमम् **अस्तोभयत्** तेनान्नेन इति । अन्नकामस्य इयं स्तुतिः ।। ६ ।।

**मुद्गल–** हे **मरुतः! स्या** सा **एषा** अस्मदीया स्तुतिः **वः** युष्माकम् **अनुभर्त्री** युष्माननुहरन्ती युष्मद्गुणसदृशी **प्रति स्तोभति** प्रत्येकं स्तौति । तथा **वाघतः न वाणी** न सम्प्रत्यर्थे । इदानीम् ऋत्विक्सम्बन्धिनी वागपि **वृथा** अनायासेन **आसाम्** आभिर्ऋग्भिः **अस्तोभयत्** अस्तौत् । **गभस्त्योः** अस्मदीययोर्बाह्वोः **स्वधाम् अनु** बहुविधमन्नं मरुतः स्थापयन्ति । तामनुलक्ष्येत्यर्थः ।।

**सायण–** हे **मरुतः! स्या** सा **एषा** अस्मदीया स्तुतिः **वः** युष्माकम् **अनुभर्त्री** युष्माननुहरन्ती युष्मद्गुणसदृशी **प्रति ष्टोभति** प्रत्येकं स्तौति । स्तोभतिः स्तुतिकर्मा । तथा

**वाघतो न वाणी** । नशब्दः सम्प्रत्यर्थे । तदुक्तं यास्केन– 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (निरु.७.३१) इति । इदानीम् ऋत्विक्सम्बन्धिनी वागपि **वृथा** अनायासेन **आसाम्** आभिः ऋग्भिः **अस्तोभयत्** अस्तौत् । इदानीमित्युक्ते कदेत्याह । **गभस्त्योः** अस्मदीययोर्बाह्वोः **स्वधाम्** । अन्ननामैतत् । यदा बहुविधमन्नं मरुतः स्थापयन्ति । तामनुलक्ष्येत्यर्थः ।

अनुभर्त्री । 'हृञ् हरणे' । तृच् । 'ऋन्नेभ्यः' इति ङीप् । 'उदात्तयणो हल्पूर्वात्' इति नद्या उदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** इयमृक् बहुपदाध्याहारैः क्लिष्टकल्पनया कथञ्चित् पूर्वैराधुनिकैश्च व्याख्यायते । उत्तरार्धर्चे वर्तत एव कष्टम्, तस्मादूहमात्रमस्मदीयं व्याख्यानं 'आसा'मित्यादेः । हे **मरुतः!** **एषा स्या** सैषा पूर्वोक्तयोजनलक्षणा स्तुतिः **न** सम्प्रति **वाघतः वाणी** स्तोतुर्मम वाग्भूत्वा **वः** युष्माकं **अनुभर्त्री** अनुहर्त्री, युष्माननुहरन्ती युष्मद्गणसदृशी **प्रतिष्टोभति** प्रत्येकं स्तौति । अपि च सा वाणी **गभस्त्योः** मरुद्गणस्य **बाह्वोः स्वधाम्** अनुस्वभावधारणसमर्थां शक्तिं (१.६.४) अनुलक्ष्य **वृथा** अनायासेन **आसाम्** आभिः ऋग्भिः **अस्तोभयत्** अस्तौत् ।

अनुभर्त्री-हृञ् हरणे, तृच्, हस्य भः छन्दसि ।। ६ ।।

।। इति प्रथमाष्टक षष्ठाध्यासे चतुर्दशो वर्ग ।।

## ।। अथ पञ्चदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८९)

(१० गोतमो राहुगणः । विश्वेदेवाः (१-२,८-९ देवाः, १० अदितिः) । जगती । ६ विराट्-स्यानाः । ८-१० त्रिष्टुप्)

**आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।**
**दे॒वा नो॒ यथा॒ सद॒मिद् वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ।। १ ।।**

आ । नः॒ । भ॒द्राः । क्रत॑वः । यन्तु॒ । वि॒श्वतः॑ । अद॑ब्धासः । अप॑रिऽइतासः । उ॒त्ऽभिदः॑ ।
दे॒वाः । नः॒ । यथा॑ । सद॑म् । इत् । वृ॒धे । अस॑न् । अप्र॑ऽआयुवः । र॒क्षि॒तारः॑ । दि॒वेऽदि॑वे ।।

## ऋक्संहिता पदपाठसहिता

**एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी ।**
**अस्तोभयद् वृथासामनु स्वधां गभस्त्योः ।। ६ ।।**
**एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति । वाघतः । न । वाणी ।**
**अस्तोभयत् । वृथा । आसाम् । अनु । स्वधाम् । गभस्त्योः ।। ६ ।।**

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । या पुरापि स्तुतवती **एषा स्या** सा **वः** युष्मान् हे **मरुतः! अनुभर्त्री** अनुशब्दोऽत्र धात्वर्थानुवादी, लम्बते प्रलम्बत इति यथा । बिभर्तिर्धारणार्थः । युष्मद्गुणानां धारयित्री । सकलयुष्मद्गुणसङ्कीर्तनयुक्तेत्यर्थः । **प्रति स्तोभति** प्रतीत्येषोऽभीत्येतस्य स्थाने । स्तोभतिरर्चतिकर्मा । अभिष्टोभति । **वाघतः न** ऋत्विङ्नामैतत् । ऋत्विज इव । **वाणी** वागस्मदीया । न च स्वयमेव केवलं स्तौति । किं तर्हि । **अस्तोभयत्** अन्यैरपि स्वपुत्रैः पौत्रैश्च ऋत्विग्भिर्वा स्तावयति । **वृथा** अयत्नेन । अक्लेशेनेत्यर्थः । **आसाम् अनु स्वधाम् गभस्त्योः** अन्विति पश्चाद्भावे । 'स्वधा' (निघ.२,७) इत्यन्ननाम । षष्ठ्यर्थे चात्र द्वितीया । 'गभस्ती' (निघ.२,४) इति बाहुनाम । इह तु बाहुसम्बन्धाद् हस्तयोर्वर्तते । सप्तमीनिर्देशाच्च स्थितामिति वाक्यशेषः । एषां पश्चाद्भविर्लक्षणानामन्नानां हस्तयोः स्थितानाम् । हस्तस्थस्य हविषः प्रदानोत्तरकालमित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** सा एषा मदीया **वाणी मरुतः!** भवद्भ्यो हविषाम् **अनुभर्त्री** युष्मान् **प्रति स्तोभति**, यथा ऋत्विजः । हस्तयोः अन्नं दत्त्वा तदनन्तरमेव अनायासेन आभिः स्तुतिभिः मरुद्गणो गोतमम् **अस्तोभयत्** तेनान्नेन इति । अन्नकामस्य इयं स्तुतिः ।। ६ ।।

**मुद्गल–** हे **मरुतः! स्या** सा **एषा** अस्मदीया स्तुतिः **वः** युष्माकम् **अनुभर्त्री** युष्माननुहरन्ती युष्मद्गुणसदृशी **प्रति स्तोभति** प्रत्येकं स्तौति । तथा **वाघतः न वाणी** न सम्प्रत्यर्थे । इदानीम् ऋत्विक्सम्बन्धिनी वागपि **वृथा** अनायासेन **आसाम्** आभिर्ऋग्भिः **अस्तोभयत्** अस्तौत् । **गभस्त्योः** अस्मदीययोर्बाह्वोः **स्वधाम् अनु** बहुविधमन्नं मरुतः स्थापयन्ति । तामनुलक्ष्येत्यर्थः ।।

**सायण–** हे **मरुतः! स्या** सा **एषा** अस्मदीया स्तुतिः **वः** युष्माकम् **अनुभर्त्री** युष्माननुहरन्ती युष्मद्गुणसदृशी **प्रति ष्टोभति** प्रत्येकं स्तौति । स्तोभतिः स्तुतिकर्मा । तथा

**वाघतो न वाणी** । नशब्दः सम्प्रत्यर्थे । तदुक्तं यास्केन– 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (निरु.७.३१) इति । इदानीम् ऋत्विक्सम्बन्धिनी वागपि **वृथा** अनायासेन **आसाम्** आभिः ऋग्भिः **अस्तोभयत्** अस्तौत् । इदानीमित्युक्ते कदेत्याह । **गभस्त्योः** अस्मदीययोर्बाह्वोः **स्वधाम्** । अन्ननामैतत् । यदा बहुविधमन्नं मरुतः स्थापयन्ति । तामनुलक्ष्येत्यर्थः ।

अनुभर्त्री । 'हृञ् हरणे' । तृच् । 'ऋन्नेभ्यः' इति ङीप् । 'उदात्तयणो हल्पूर्वात्' इति नद्या उदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** इयमृक् बहुपदाध्याहारैः क्लिष्टकल्पनया कथञ्चित् पूर्वैराधुनिकैश्च व्याख्यायते । उत्तरार्धर्चे वर्तत एव कष्टम्, तस्मादूहमात्रमस्मदीयं व्याख्यानं 'आसा'मित्यादेः । हे **मरुतः!** **एषा स्या** सैषा पूर्वोक्तयोजनलक्षणा स्तुतिः **न** सम्प्रति **वाघतः वाणी** स्तोतुर्मम वाग्भूत्वा **वः** युष्माकं **अनुभर्त्री** अनुहर्त्री, युष्माननुहरन्ती युष्मद्गणसदृशी **प्रतिष्टोभति** प्रत्येकं स्तौति । अपि च सा वाणी **गभस्त्योः** मरुद्गणस्य **बाह्वोः स्वधाम्** अनुस्वभावधारणसमर्थां शक्तिं (१.६.४) अनुलक्ष्य **वृथा** अनायासेन **आसाम्** आभिः ऋग्भिः **अस्तोभयत्** अस्तौत् ।

अनुभर्त्री-हृञ् हरणे, तृच्, हस्य भः छन्दसि ।। ६ ।।

**।। इति प्रथमाष्टक षष्ठाध्यासे चतुर्दशो वर्ग ।।**

## ।। अथ पञ्चदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ८९)

**(१० गोतमो राहुगणः । विश्वेदेवाः (१-२,८-९ देवाः, १० अदितिः) । जगती । ६ विराट्-स्थानाः । ८-१० त्रिष्टुप्)**

**आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिद॑: ।**
**दे॒वा नो॒ यथा॒ सद॒मिद् वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ।। १ ।।**

आ । न॒: । भ॒द्राः । क्रत॑वः । य॒न्तु॒ । वि॒श्वत॑: । अद॑ब्धासः । अप॑रिऽइतासः । उ॒त्ऽभिद॑: ।
दे॒वाः । न॒: । यथा॑ । सद॑म् । इत् । वृ॒धे । अस॑न् । अप्र॑ऽआयुवः । र॒क्षि॒तार॑: । दि॒वेऽदि॑वे ।।

**स्कन्द–** 'वैश्वदेवे द्वे सूक्ते' (बृ.दे. ३,१२२) । एते च द्वे सूक्ते विश्वदेवदेवत्ये । **नः** अस्मान् । **भद्राः** कल्याणाः । **क्रतवः** यज्ञाः । **आ यन्तु** आगच्छन्तु । **विश्वतः** सर्वतः । स्वतस्सम्बन्धिनश्चात्मनः सम्बन्धिनां च पुत्रादीनामस्माकं यज्ञा उपनयन्त्वित्यर्थः । कीदृशाः । उच्यते । **अदब्धासः** अहिंसिताः । यज्ञविध्वंसिभी रक्षआदिभिः अविगुणा इत्यर्थः । **अपरीतासः** अपरिमताः । अन्यैरप्राप्तपूर्वा इत्यर्थः । **उद्भिदः** उद्भिन्नामैकाहः, तत्प्रभृतयः । अथवा उद्भिन्दन्ति फलानीत्युद्भिदः । जनयितारः फलानामित्यर्थः । कथं पुनरायन्तु । उच्यते । **देवाः नः यथा सदम् इत्** सदमिति सदाशब्दपर्यायः । इच्छब्दः एवार्थे । सदैव । **वृधे** वर्धनाय । **असन्** भवेयुः । **अप्रायुवः** अप्रमोषितारः आयुधः । जीवितस्य चानपहर्तार इत्यर्थः । अथवा प्रायुव इति अयतेर्गतिकर्मण इदं रूपम् । अप्रगन्तारः । नित्यसन्निहिता इत्यर्थः । अथवा प्रायुव इति यौते रूपम् । अन्यैरर्थैरप्रश्रिता बुद्धिर्येषां ते अप्रायुवः । अनाक्षिप्तचेतस्का इत्यर्थः । अत्यन्तं यत्नवन्त इत्यर्थः । **रक्षितारः** च **दिवेदिवे** अहन्यहनि ।। १ ।।

**वेङ्कटमाधव– आ यन्तु** अस्मान् सर्वतो भजनीयानि कर्माणि असुरैरहिंसितानि अपरिवृतानि च फलोद्भेदनानि । **देवा यथा** अस्माकं सदैव वर्धनाय स्युः अप्रगच्छन्तः **रक्षितारः** च अहन्यहनि ।।

**मुद्गल–** 'आ नो भद्राः' इति दशर्चं पञ्चमं सूक्तम् । गोतमः ऋषि । आदितः पञ्चर्चः सप्तमी च जगत्यः । षष्ठी विराट्स्थाना । 'नवकौ वैराजस्त्रैष्टुभश्च' (ऋ.१,९,५) इत्युक्तलक्षण-योगात् । अष्टम्याद्यास्तिस्रस्त्रिष्टुभः । विश्वेदेवा देवताः ।

**नः** अस्मान् **क्रतवः** अग्निष्टोमादयो महायज्ञाः **विश्वतः** सर्वस्मादपि दिग्भागात् **आ यन्तु**' आगच्छन्तु । कीदृशाः क्रतवः । **भद्राः** समीचीनफलसाधनत्वेन कल्याणाः । **अदब्धासः** असुरैरहिंसिताः । **अपरीतासः** शत्रुभिरपरिगताः । अप्रतिरुद्धा इत्यर्थः । **उद्भिदः** शत्रूणामुद्भेत्तारः । **यथा क्रतवस्तथा अप्रायुवः** अप्रगच्छत, स्वकीयं रक्षितव्यमपरित्यजन्तः, अत एव **दिवेदिवे** प्रतिदिवसम् रक्षितारः रक्षां कुर्वन्तः । एवंगुणविशिष्टाः सर्वे **देवाः नः** अस्माकम् **सदम् इत्** सदैव **वृधे** वर्धनाय **असन्** भवन्तु ।। १ ।।

**सायण–** 'ओ नो भद्राः' इति दशर्चं पञ्चमं सूक्तम् । गोतमस्यार्षं वैश्वदेवम् । आदितः पञ्चर्चः सप्तमी च जगत्यः षष्ठी 'स्वस्ति न इन्द्रः' इत्येषा विराट्स्थाना । 'नवकौ वैराजस्त्रैष्टुभश्च'

(अनु.९.५) इत्युक्तलक्षणयोगात् । अष्टम्याद्यास्तिस्रस्त्रिष्टुभः । तथा चानुक्रान्तम्– 'आ नो दश वैश्वदेवं तु पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट्स्थाना' इति । अग्निष्टोमे वैश्वदेवशस्त्रे उत्तमावर्जमेतत्सूक्तं वैश्वदेवनिविद्धानीयम् । सा तु प्रकृतौ विकृतौ च वैश्वदेवशस्त्रस्य परिधानीया । तथा च सूत्रितम्– 'आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवम्' इति, 'अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेवे' (आश्व.श्रौ.५.१८) इति च । ब्राह्मणं च भवति– 'सदैव पञ्चजनीयया परिदध्यात्' (ऐ.ब्रा.३.३१) इति । महाव्रते निष्केवल्ये एतत्सूक्तम् । तथा च पञ्चमारण्यके सूत्र्यते– 'आनोभद्रीयं च तस्य स्थाने' (ऐआ.५.३.२) इति ।

**नः** अस्मान् **क्रतवः** अग्निष्टोमादयो महायज्ञाः **विश्वतः** सर्वस्मादपि दिग्भागात् **आ यन्तु** आगच्छन्तु । कीदृशाः क्रतवः । **भद्राः** समीचीनफलसाधनत्वेन कल्याणाः भजनीया वा **अदब्धासः** असुरैरहिंसिताः **अपरीतासः** शत्रुभिरपरिगताः अप्रतिरुद्धा इत्यर्थः । **उद्भिदः** शत्रूणामुद्भेत्तारः । ईदृशाः क्रतवः अस्मांस्तथा आगच्छन्तु । **अप्रायुवः** अप्रगच्छन्तः स्वकीयं रक्षितव्यमपरित्यजन्तः अत एव **दिवेदिवे** प्रतिदिवसं **रक्षितारः** रक्षां कुर्वन्तः एवंगुणविशिष्टाः सर्वे **देवाः नः** अस्माकं **सदमित्** सदैव **वृधे** वर्धनाय **यथा असन्** भवेयुस्तथा आगच्छन्तु इति सम्बन्धः ।

अदब्धासः । 'दम्भु दम्भे' । दम्भो हिंसा । निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अपरीतासः । 'इण् गतौ' । पूर्ववत् कर्मणि निष्ठा । उभयत्र 'आज्जसेरसुक्' । वृधे । 'वृध वृद्धौ' । सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । असन् । 'अस भुवि' । लेटि अडागमः । 'बहुलं छन्दसि' इति शपो लुगभावः । तस्य अङित्त्वात् 'श्नसोरल्लोपः' इति अकारलोपाभावः । अप्रायुवः । 'इण् गतौ' । अस्मात् प्रपूर्वात् 'छन्दसीणः' इति उण्प्रत्ययः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । जसि 'जसादिषु च्छन्दसि वावचनम्' इति गुणस्य विकल्पितत्वादभावे तन्वादित्वात् उवङ् ॥

**सिद्धाञ्जनम्–** 'आ नो भद्रा' इति दशर्चं पञ्चमं सूक्तं गोतमस्यार्षं वैश्वदेवम् । आदितः पञ्चर्चः सप्तमी च जगत्यः, षष्ठी विराट्स्थाना, अष्टम्याद्यास्तिस्रः त्रिष्टुभः ।

**नः** अस्मान् **ऋतवः** प्राज्ञेच्छावलभरितकर्मसमर्थाः शक्तयः **विश्वतः** विश्वस्मात् दैवाधीनात्

प्रपश्चात् **आयन्तु** आगच्छन्तु । कीदृशाः ऋतवः? **भद्राः** कल्याणाः **अदब्धासः** अन्यैरहिंसिताः दमनाक्षमाः **अपरीतासः** अपरिगताः अप्रतिरुद्धाः **उद्भिदः** उद्भेत्तारो विरोधिनां, ईदृशाः क्रतवः अस्मान् तथा प्राप्नुवन्तु **यथा** येन प्रकारेण **देवाः** सर्वेऽपि **नः** अस्माकं **सदमित्** सदैव **वृधे** वर्धनाय **असन्** भवन्तु । कीदृशाः देवाः? **अप्रायुवः** न प्रकर्षेण गच्छन्तः, अस्मान् परित्यज्य नापगच्छन्तः, **दिवेदिवे रक्षितारः** प्रत्यहं रक्षां कुर्वन्तः ।

असन्–अस भुवि, लेटचडागमः, शपो लुगभावः छान्दसः । अप्रायुवः–इण् गतौ, उणप्रत्ययः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्तताम् ।**
**दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रन्तु ज॒वसे॑ ॥ २ ॥**

दे॒वाना॑म् । भ॒द्रा । सु॒ऽम॒तिः । ऋ॒जु॒ऽय॒ताम् । दे॒वाना॑म् । रा॒तिः । अ॒भि । नः॒ । नि । व॒र्त॒ता॒म् । दे॒वाना॑म् । स॒ख्यम् । उप॑ । स॒दि॒म । व॒यम् । दे॒वाः । नः॒ । आयुः॑ । प्र । ति॒र॒न्तु॒ । जी॒वसे॑ ॥ २ ॥

**स्कन्द– देवानाम् भद्रा** कल्याणी सुमतिः शोभना परानुग्रहात्मिका बुद्धिः **ऋजूयताम्** ऋतवः सदाचारा मनुष्याः, तत्कामिनाम् । किञ्च **देवानाम् रातिः** दानम् **अभि नः नि वर्तताम्** अस्मान् प्रति निवर्तताम् । देवा अस्मभ्यं ददत्वित्यर्थः । किञ्च **देवानाम् सख्यम् उप सेदिम** उपगच्छेम **वयम्** इत्याशास्महे । किञ्च **देवाः नः आयुः प्र तिरन्तु** प्रवर्धयन्तु **जीवसे** चिरं जीवनाय ॥ २ ॥

**वेङ्कटमाधव– देवानाम्** भवनीया सुमतिः ऋजुमिच्छताम् । **देवानाम्** दानम् अस्मान् **अभि नि वर्तताम् देवानाम् सख्यम् उप** गच्छेम वयम् । **देवाः नः आयुः** वर्धयन्तु जीवनाय ॥

**मुद्गल– भद्रा** सुखयित्री **देवानाम् सुमतिः** शोभनामतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः । कीदृशानाम् । **ऋजूयताम्** ऋजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम् । तथा **देवानाम् रातिः** दानम् **नः** अस्मान् **अभि** आभिमुख्येन नितराम् **वर्तताम्** । तदभिमतफलप्रदानमस्माकं भवत्वित्यर्थः । **वयम्** च तेषाम् **देवानाम् सख्यम्** सखित्वम् **उप सेदिम** प्राप्नुयाम । तादृशा **देवाः नः** अस्माकम् **आयुः जीवसे** जीवितुम् **प्रतिरन्तु** वर्धयन्तु ॥

**सायण– भद्रा** सुखयित्री भजनीया वा **देवानां सुमतिः** शोभना मतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः । कीदृशानाम् । **ऋजूयताम्** ऋजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम् । तथा **देवानां रातिः** दानं **नः** अस्मानाभिमुख्येन नितरां **वर्तताम्** । तदभिमतफलप्रदानमप्यस्माकं भवत्वित्यर्थः । **वयं** च तेषां **देवानां सख्यं** सखित्वं सख्युः कर्म वा **उप सेदिम** प्राप्नुवाम । तादृशाः **देवाः नः** अस्माकम् **आयुः जीवसे** जीवितुं **प्र तिरन्तु** वर्धयन्तु ।

भद्रा । 'भदि कल्याणे सुखे च' । 'ऋज्रेन्द्राग्र' (उ.सू.१८६) इत्यादौ रन्प्रत्ययान्तो निपातितः । ऋजूयताम् । ऋजुमात्मन इच्छति ऋजूयति । 'सुप आत्मनः क्यच्' । तदन्तात् लटः शतृ । 'शतुरनुमः' इति अजादिविभक्तेरुदात्तत्वम् । रातिः । 'रा दाने' । 'मन्त्रे वृष' इति क्तिन् उदात्तत्वम् । सख्यम् । 'सख्युर्यः' इति भावे कर्मणि वा यप्रत्ययः । सेदिम । 'षद्लृ विशरणगत्यवसादनेषु' । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लिट् । सत्वस्या-नैमित्तिकत्वेन लिटि परत आदेशादित्वाभावात् 'अत एकहल्मध्ये' इति एत्वाभ्यासलोपौ । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । प्र तिरन्तु । प्रपूर्वस्तिरतिर्वर्धनार्थः । तथा च यास्को व्याचख्यौ– 'देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय' (निरु.१२.३९) इति ।। २ ।।

**सिद्धाञ्जनम्– भद्रा** कल्याणी **देवानां सुमतिः** शोभना अनुग्रहात्मिका बुद्धिः अस्माकं अस्तु । **ऋजूयताम्** ऋजुं आर्जवयुक्तं–देवोपासकं आत्मन इच्छतां तेषां **देवानां रातिः** दानं, प्रसाद इत्यर्थः **नः अभि** अस्मानाभिमुख्येन **निवर्तताम्** नितरां वर्तताम्, तेषामभीष्टदानं भवत्वस्माकम् । **वयम् देवानाम् सख्यम्** सखित्वं **उपसेदिम** प्राप्नुवाम । तादृशाः **देवाः नः** अस्माकं **जीवसे** जीवितुं **आयुः प्रतिरन्तु** वर्धयन्तु ।

ऋजूयताम्–सुप आत्मनः क्यच् । रातिः–रा दाने । सेदिम–वर्तमाने प्रार्थनायां लिट्, छान्दसम् । प्रतिरन्तु-प्रपूर्वस्तिरतिर्वर्धनार्थ ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।**

**अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ।। ३ ।।**
**तान् । पूर्वया । निऽविदा । हूमहे । वयम् । भगम् । मित्रम् । अदितिम् । दक्षम् । अस्रिधम् । अर्यमणम् । वरुणम् । सोमम् । अश्विना । सरस्वती । नः । सुऽभगा । मयः । करत् ।। ३ ।।**

**स्कन्द– तान् पूर्वया** पूर्वसङ्कल्पितया पूर्वर्षिप्रयुक्तया वा **निविदा** 'निवित्' (निघ.१,११) इति वाङ्नाम । वाचा स्तुतिलक्षणया **हूमहे** आह्वयामः । कतमांस्तान् । **भगम् मित्रम् अदितिम् दक्षम्** च । कीदृशम् । **अस्रिधम्** न स्रेधति न व्यथत इति प्रयोगदर्शनात् स्रिधिः क्षयार्थः शोषणार्थो वा । अक्षयमशोषवितारं वा । न च भगादीनेव केवलान् । किं तर्हि । **अर्यमणम् वरुणम् सोमम् अश्विना** अश्विनौ च । किञ्च **सरस्वती नः** अस्माकम् सुभगा सुधना **मयः करत्** सुखं करोतु ।। ३ ।।

**वेङ्कटमाधव– तान् पूर्वया** वाचा ह्वयामः वयम् भगादीन् दक्षम् च अक्षयम् । सरस्वती च अस्माकम् सुभगा सुख करोतु ।। ३ ।।

**मुद्गल– तान्** विश्वान् देवान् **पूर्वया** पूर्वकालीनया **निविदा** वेदात्मिकया वाचा **वयम् हूमहे** आह्वयामः । देवानिति यत्सामान्येनोक्तं तदेव विव्रियते । **भगम्** भजनीयम् **मित्रम्** प्रमीतेस्त्रायकम् **अदितिम्** अखण्डनीयां देवमातरम् **दक्षम्** सर्वस्य जगतो निर्माणे समर्थं प्रजापतिम् **अस्रिधम्** शोषणरहितं सर्वदैकरूपेण वर्तमानं मरुद्गणम् **अर्यमणम्** अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीत्यर्यमा सूर्यः । **वरुणम्** वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति रात्र्यभिमानी देवो वरुणः । **सोमम्** द्वेधाऽऽत्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम् **अश्विना** अश्ववन्तौ । एवं भूतान् सर्वान् देवानस्मद्रक्षणार्थमाह्वयाम इति पूर्वत्र सम्बन्धः । अस्माभिराहूता **सुभगा** शोभनधनोपेता **सरस्वती नः** अस्मभ्यम् **मयः** सुखम् **करत्** करोतु ।।

**सायण– तान्** विश्वान् देवान् **पूर्वया** पूर्वकालीनया नित्यया **निविदा** वेदात्मिकया वाचा । निविदिति वाङ्नाम । यद्वा निविदा 'विश्वे देवाः सोमस्य मत्सन्' इत्यादिकया वैश्वदेव्या निविदा **वयं हूमहे** आह्वयामः । देवानिति यत्सामान्येनोक्तं तदेव विव्रियते । **भगं** भजनीयं द्वादशानामादित्यानामन्यतमं **मित्रं** प्रमीतेस्त्रायकमहरभिमानिनं देवम् । 'मैत्रं वा अहः' (तै.ब्रा.१.७.१०.१) इति श्रुतेः । **अदितिम्** अकण्डनीयामदीनां वा देवमातरं **दक्षं** सर्वस्य

जगतो निर्माणे समर्थं प्रजापतिम् । यद्वा । प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भम् । 'प्राणो वै दक्षः' (तै.सं.२.५.२.४) इति श्रुतेः । **अस्रिधं** शोषणरहितं सर्वदैकरूपेण वर्तमानं मरुद्गणम् । **अर्यमणम्** । अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीति अर्यमा सूर्यः । 'असौ वा आदित्योऽर्यमा' (तै.सं.२.३.४.१) इति श्रुतेः । तम् । **वरुणम्** । वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति रात्र्यभिमानिदेवो वरुणः । श्रूयते च– 'वारुणी रात्रिः' (तै.ब्रा.१.७.१०.१) इति । **सोमं** द्वेधा आत्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम् । **अश्विना** अश्ववन्तौ । यद्वा सर्वं व्याप्नुवन्तौ । तथा च यास्कः– 'अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिपान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः' (निरु.१२.१) इति । एवम्भूतान् सर्वन् देवान् अस्मद्रक्षणार्थमाह्वयाम इति पूर्वत्र सम्बन्धः । अस्माभिराहूता **सुभगा** शोभनधनोपेता **सरस्वती नः** अस्मभ्यं **मयः** सुखं **करत्** करोतु ।

हूमहे । ह्वेञो लटि 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । परपूर्वत्वे 'हलः' इति दीर्घत्वम् । 'बहुलं छन्दसि' इति शपो लुक् । अस्रिधम् । 'स्रिधु शोषणे' । सम्पदादिलक्षणो भावे क्विप् । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मयस्करत् । करोतेर्लेटि अडागमः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अतः कृकमि' इति विसर्जनीयस्य सत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– तान्** विश्वान् देवान् **पूर्वया** बहोः कालदागतया **निविदा** वेदवाचा, निविदिति वाङ्नाम, **वयम् हूमहे** आह्वयामः । कान् देवानिति विव्रियते । **भगम् मित्रम् अदितिम्** सर्वदेवमातरम् **अस्रिधम्** शोषणरहितं **दक्षम्** प्रजापतिं हिरण्यगर्भं मरुद्गणं वेति विकल्पेन सायण आह । 'अदितेर्दक्षः दक्षाददितिः' इत्यन्यत्र श्रुतत्वात्, सर्वथा अदितिसम्बन्धी दक्षः इति स्पष्टम् । **अर्यमणम् वरुणम् सोमम् अश्विना** अश्विनौ, एतानाह्वयामः । अस्माभिराहूता **सरस्वती सुभगा** शोभनैश्वर्योपेता **नः** अस्माकं **मयः** सुखं **करत्** करोतु ।

हूमहे–ह्वेञो लटि बहुलं छन्दसीमि सम्प्रसारणम् । अस्रिधम्–स्रिधु शोषणे, भावे क्विप् । करत्–करोतेर्लेटि अडागमः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः ।**
**तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥**
तत् । नः । वातः । मयःऽभु । वातु । भेषजम् । तत् । माता । पृथिवी । तत् । पिता । द्यौः । तत् । ग्रावाणः । सोमऽसुतः । मयःऽभुवः । तत् । अश्विना । शृणुतम् । धिष्ण्या । युवम् ॥ ४ ॥

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यद्वयमिच्छामः **तत् नः** अस्मान् प्रति **वातः मयोभु वातु भेषजम्** औषधम् । वातु गमयतु ददात्वित्यर्थः । **तत्** एव **माता पृथिवी तत्** एव **पिता द्यौः** । विवाहकाले 'द्यौरहम् । पृथिवी त्वम्' (तै.ब्रा.३,७,१,९) इति वरे वध्वां च द्युत्वपृथिवीत्वाध्यारोपात् सर्वमनुष्याणां च वधूवरमातापितृकत्वात् तद्धर्मेण मातृत्वेन पितृत्वेन च व्यपदेशः पृथिव्या दिवश्चायम् 'तन्माता पृथिवी तत्पिता द्यौः' इति । **तत्** एव **ग्रावाणः सोम सुतः** सोमाभिषवकारिणः **मयोभुवः** यागद्वारेण सुखस्य भावयितारः । **तत्** एव हे अश्विनौ । **शृणुतम्** श्रवणेनात्र तत्पूर्वकं करणं लक्ष्यते । कुरुतम् । हे **धिष्ण्या!** धिषणा वाक्, तस्या पुत्रौ! अथवा 'धीः' (निघ.३,९) इति प्रज्ञानाम । 'ष्णै वेष्टने' । धीर्वेष्टयित्री सर्वार्थग्रहणसमर्था ययोः तौ धिष्णौ । धिष्णावेव धिष्ण्यौ । अत्यन्तप्रज्ञावित्यर्थः । **युवम्** युवामपि ॥ ४ ॥

**वेङ्कटमाधव–** **तत्** नः वातः सुखस्य भावयितृ आत्मीयम् **भेषजम् वातु** । **तत् माता पृथिवी** । **तत् पिता द्यौः** । **तत् ग्रावाणः** सोमस्य सोतारः सुखस्य भावयितारः । **तत्** अश्विनौ! युवामपि धिषणार्हौ स्तुत्यर्हौ! **शृणुतम्** ॥ ४ ॥

**मुद्गल–** **वातः** वायुः **तत् भेषजम्** औषधम् **नः** अस्मान् वातु प्रापयतु, यद्भेषजम् **मयोभु** मयस सुखस्य भावयितृ । **माता** सर्वेषां जननी **पृथिवी** भूमिरपि **तत्** भेषजमस्मान् प्रापयतु । **पिता** वृष्टिप्रदानेन सर्वेषां रक्षिता **द्यौः** द्युलोकोऽपि **तत्** भेषजमस्मान् प्रापयतु । **सोमसुतः** सोमाभिषवं कृतवन्तः **मयोभुवः** मयसो यागफलभूतस्य सुखस्य भावयितारः **ग्रावाणः** अभिषवसाधनाः पाषाणाश्च **तत्** भेषजमस्मान् प्रापयन्तु । हे **धिष्ण्या** । धिषणा बुद्धि, तदर्हौ! । **अश्विना!** अश्विनौ । **युवम्** युवां तत् भेषजम् **शृणुतम्** ॥ ४ ॥

**सायण– वातः** वायुः **तत् भेषजम्** औषधं **नः** अस्मान् **वातु** प्रापयतु । यद्भेषजं **मयोभु** मयसः सुखस्य भावयितृ । **माता** सर्वेषां जननी **पृथिवी** भूमिरपि **तत्** भेषजम् अस्मान् प्रापयतु । **पिता** वृष्टिप्रदानेन सर्वेषां रक्षिता **द्यौः** द्युलोकोऽपि **तत्** भेषजम् अस्मान् प्रापयतु । **सोमसुतः** सोमाभिषवं कृतवन्तः **मयोभुवः** मयसः यागफलभूतस्य सुखस्य भावयितारः **ग्रावाणः** अभिषवसाधनाः पाषाणाश्च **तत्** भेषजम् अस्मान् प्रापयन्तु । हे **धिष्ण्या!** धिषणा बुद्धिः । तदर्हावश्विनौ **युवं** युवां तत् भेषजं **शृणुतं** आकर्णयतम् । यद्भेषजमस्माभिर्वाय्वादिषु प्रार्थ्यते तद्भेषजं देवानां भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः ।

मयोभु । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (पा.सू.१.२.४७) इति ह्रस्वत्वम् । वातु । 'वा गतिगन्धनयोः' अन्तर्भावितण्यर्थात् प्रार्थनायां लोट् । सोमसुतः । 'सोमे सुञः' (पा.सू.३.२.९०) इति भूते क्विप् । धिष्ण्या । धिषणाशब्दात् अर्हार्थे 'छन्दसि च' इति यः । वर्णलोपश्छान्दसः । 'सुपां सुलुक्' इति आकारः ।। ४ ।।

**सिद्धाञ्जनम्– वातः** वायुः **तत् भेषजम्** तद् दिव्यमौषधं **नः** अस्मान् **वातु** प्रापयतु यत् मयोभु मयसः सुखस्य भावयितृ । **माता पृथिवी** जननी भूमिरपि **तत्** भेषजं नः प्रापयतु, **पिता द्यौः** सर्वस्य पाता रक्षिता द्यौरपि **तत्** 'मयोभु भेषजम्' नः प्रापयतु । **सोमसुतः** सोमाभिषवं कुर्वन्तः अभिषवसाधनभूताः, अत एव **मयोभुवः** सुखस्य भावयितारः ग्रावाणः उक्तदिव्यलक्षणाः **तत्** भेषजं नः प्रापयन्तु । **धिष्ण्या** धारयितारौ, धिषणया युक्तौ, तत्र भवौ हे **अश्विना!** अश्विनौ देवभिषजौ **युवम्** युवां **तत् शृणुतम्** आकर्णयतं, अस्मत्प्रार्थनानुकूलं जानीतम् ।

वातु–वा गतिगन्धनयोः, अन्तर्भावितण्यर्थः । धिष्ण्या–धिषणाशब्दादर्हार्थे वा छन्दसि यः ।।

## ऋक्संहिता पदपाठसहिता

**तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व॒यम् ।**
**पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द् वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ।। ५ ।।**
तम् । ईशा॑नम् । जग॑तः । त॒स्थुषः॑ । पति॑म् । धि॒य॒म्ऽजि॒न्वम् । अव॑से । हू॒म॒हे॒ । व॒यम् ।
पू॒षा । नः॒ । यथा॑ । वेद॑साम् । अस॑त् । वृ॒धे । र॒क्षि॒ता । पा॒युः । अद॑ब्धः । स्व॒स्तये॑ ।।

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यमन्येऽपि सर्वे आह्वयन्ति **तम् पूषणम् ईशानम् जगतः** ईश्वरं जङ्गमस्य । **तस्थुषः पतिम्** स्थावरस्य च स्वामिनम् । **धियंजिन्वम्** 'जिन्वतिः प्रीतिकर्मा' (या,६,२) । सर्वप्रज्ञानां प्रीणयितारम् । **अवसे** पालना-यात्मनः । **हूमहे** आह्वयामः **वयम्** । कथं च पुनराह्वयामः । उच्यते । आहूतः **पूषा नः** अस्माकम् **यथा वेदसाम्** धनानं ज्ञानानां वा **असत्** भवेत् **वृधे** वर्धनाय । यथा नो धनवृद्धिकरो ज्ञानवृद्धिकरो वा स्याद् इत्यर्थः । **रक्षिता पायुः** पाता च सोमानाम् । **अदब्धः** अहिंसितः केनचित् । **स्वस्तये** 'स्वस्ति इत्यविनाशनाम' (या.३,२१) । अविनाशकरश्च स्यादित्यर्थः ।।

**वेङ्कटमाधव– तम्** ईश्वरं जङ्गमस्य स्थावरस्य च पालयितारं कर्मणः प्रीणयितारं रक्षणाय ह्वयामः **वयम्** । **पूषा** अस्माकम् धनानां भवति **यथा** वर्धनाय रक्षोभ्यः **रक्षिता** पालकोऽ-हिंसितोऽविनाशाय ।। ५ ।।

**मुद्गल–** पूर्वार्धेनेन्द्रः स्तूयतेऽपरार्धेन पूषा । **ईशानम्** ऐश्वर्यवन्तम् अत एव **जगतः** जङ्गमस्य प्राणिजातस्य **तस्थुषः** स्थावरस्य च **पतिम्** स्वामिनम् **धियंजिन्वम्** धीभिः कर्मभिः प्रीणयितव्यम् । एवम्भूतम् **तम्** इन्द्रम् **अवसे** रक्षणाय **वयम् हूमहे** आह्वयामः । **पूषा नः** अस्माकम् **वेदसाम्** धनानाम् **वृधे** वर्धनाय रक्षिता **यथा असत्** येन प्रकारेण भवति तेनैव प्रकारेण **अदब्धः** केनाप्यहिंसितः पूषा **स्वस्तये** अस्माकमविनाशाय **पायुः** पालको रक्षिता भवतु ।। ५ ।।

**सायण–** पूर्वार्धेनेन्द्रः स्तूयते अपरार्धेन पूषा । **ईशानम्** ऐश्वर्यवन्तं अत एव **जगतः** जङ्गमस्य प्राणिजातस्य **तस्थुषः** स्थावरस्य च **पतिं** स्वामिनं **धियञ्जिन्वं** धीभिः कर्मभिः प्रीणयितव्यं एवम्भूतं **तम्** इन्द्रम् **अवसे** रक्षणाय **वयं हूमहे** आह्वयामः । **पूषा नः** अस्माकं **वेदसां** धनानां **वृधे** वर्धनाय **रक्षिता यथा असत्** येन प्रकारेण भवति तेनैव प्रकारेण **अदब्धः** केनाप्यहिंसितः पूषा **स्वस्तये** अस्माकमविनाशाय **पायुः** रक्षिता भवतु ।

तस्थुषः । तिष्ठतेर्लिटः क्वसुः । षष्ठ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम् । धिय-ञ्जिन्वम् । जिविः प्रीणनार्थः । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् खच् । 'इच एकाचोऽम् प्रत्ययवच्च' (पा.सू.६.३.६८) इति अमागमः । असत् । 'अस भुवि' । 'लेटि अडागमः ।

'बहुलं छन्दसि' इति शपो लुगभावः । पायुः । 'पा रक्षणे' । 'कृवापाजि' इति उण् । स्वस्तये । सुपूर्वात् अस्तेः भावे क्तिन् । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात् 'अस्तेर्भूः' (पा.सू.२.४.५२) इति भूभावाभावः इति वृत्तावुक्तम् ।। ५ ।।

**सिद्धाञ्जनम्–** पूर्वार्धेनेन्द्रः अपरार्धेन पूषा स्तुतौ इति सायणः । सर्वेश्वर एव स्तूयत इति चेत् न कापि क्षतिः । **तम्** तच्छब्दवाच्यं **ईशानम्** ईश्वरं **धियञ्जिन्वम्** बुद्धिं प्रकाशदानेन प्रीणयन्तं **जगतः** जङ्गमस्य **तस्थुषः** स्थावरस्य च **पतिम्** पालकं **अवसे** रक्षणाय **वयम् हूमहे** आह्वयामः । सः ईश्वरः **पूषा** पूषा देवः सन् **यथा** येन प्रकारेण **नः** अस्माकं **वेदसाम्** ज्ञानानां (धनानां वा) **वृधे** वर्धनाय **रक्षिता असत्** भवति तथा **स्वस्तये** अविनाशाय **अदब्धः** अन्यैरहिंसितः, अप्रतिबद्धः इत्यर्थः सन् **पायुः** रक्षिता भवतु ।

धियञ्जिन्वम्–जिविः प्रीणनार्थः । असत्–लेटि अडागमः । पायुः–पा रक्षणे । स्वस्ति–सुपूर्वादस्तेर्भावे क्तिन् ।। ५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये पञ्चदशो वर्गः ।।

## ।। अथ षोडशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।। ६ ।।**
स्वस्ति । नः । इन्द्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः ।
स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः । स्वस्ति । नः । बृहस्पतिः । दधातु ।। ६ ।।

**स्कन्द– दधातु** इत्यन्त्यमाख्यातपदं सर्वत्रैवानुषक्तव्यम् । **स्वस्ति नः इन्द्रः दधातु** विधत्ताम् । करोत्वित्यर्थः । कीदृशः । **वृद्धश्रवाः** प्रवृद्धकीर्तिः प्रवृद्धधनः प्रवृद्धान्नो वा । **स्वस्ति नः पूषा विश्ववेदाः** सर्वज्ञ सर्वधनो वा । **स्वस्ति नः तार्क्ष्यः अरिष्टनमिः** 'नेमिः' (नि २,२०) इति वज्रनाम । अहिंसितायुधः । **स्वस्ति नः बृहस्पतिः** दधातु ।। ६ ।।

**वेङ्कटमाधव– स्वस्ति** अस्माकम् **इन्द्रः** वृद्धान्नः । **स्वस्ति नः पूषा** विश्वधनः । **स्वस्ति नः तार्क्ष्यः** चाहिंसितायुधः । **स्वस्ति** अस्माकम् **बृहस्पतिः** च दधातु ।। ६ ।।

**मुद्गल– वृद्धश्रवाः** वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं वा यस्य तादृशः **इन्द्रः नः** अस्माकम् **स्वस्ति** अविनाशम् **दधातु** विदधातु करोतु । **विश्ववेदाः** विश्वानि वेत्तीति विश्ववेदाः तादृशः **पूषा** पोषको देवः **नः** अस्माकम् **स्वस्ति** विदिधातु । **अरिष्टनेमिः** अरिष्टोऽहिंसितो नेमिर्यस्यैवम्भूतः **तार्क्ष्यः** तृक्षस्य पुत्रो गरुत्मान् **नः** अस्माकम् **स्वस्ति** अविनाशं विदधातु । तथा **बृहस्पतिः** बृहतां देवानां पालयिता **नः** अस्माकम् **स्वस्ति** अविनाशं विदधातु ॥ ६ ॥

**सायण– वृद्धश्रवाः** वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृशः **इन्द्रः नः** अस्माकम् । 'स्वस्तीत्यविनाशनाम' (निरु.३.२१) । **स्वस्ति** अविनाशं **दधातु** विदधातु करोतु । **विश्ववेदाः** । विश्वानि वेत्तीति विश्ववेदाः । यद्वा विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य । तादृशः **पूषा** पोषको देवः **नः** अस्माकं स्वस्ति विदधातु । **अरिष्टनेमिः** । नेमिः इति आयुधनाम । अरिष्टोऽहिंसितो नेमिर्यस्य । यद्वा रथचक्रस्य धारा नेमिः । यत्सम्बन्धिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः । एवम्भूतः **तार्क्ष्यः** तृक्षस्य पुत्रो गरुत्मान् **नः** अस्माकं **स्वस्ति** अविनाशं विदधातु । तथा बृहव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।

विश्ववेदाः । 'विद ज्ञाने,' 'विद्लृ लाभे' । आभ्यामसुन्प्रत्ययान्तो वेदस्शब्दः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । तार्क्ष्यः । तृक्षस्यापत्यम् । 'गर्गादिभ्यो यञ्' (पा.सू.४.१.१०५) । ञित्त्वादाद्युदात्तत्वम् । अरिष्टनेमिः । न रिष्टा अरिष्टा अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अरिष्टा नेमिर्यस्य स तथोक्तः । बृहस्पतिः । 'तद्बृहतोः करपत्योः' (पा.सू.६.१.१५७. ग.) इति सुट्तलोपौ । 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

**सिद्धाञ्जनम्– वृद्धश्रवाः** वृद्धं भूरि श्रवः श्रवणं यस्य सः **इन्द्रः नः** अस्माकं **स्वस्ति** अविनाशं **दधातु** विदधातु । **विश्ववेदाः** विश्वज्ञानोपेतः **पूषा** पोषको देवः **नः स्वस्ति** विदधातु । **अरिष्टनेमिः** अरिष्टः अहिंसितः नेमिः रथचक्रधारा यस्य सः **तार्क्ष्यः** गरुत्मान्, तृक्षस्य जगत्पतेः (कश्यपस्य प्रजापतेरिति पुराणानि) अपत्यं तार्क्ष्यः, प्रभातसूर्यरश्मिविशेषः अत एव अरुणवाही गरुत्मान् **स्वस्ति नः** विदधातु । **बृहस्पतिः नः स्वस्ति** विदधातुः करोत्वित्यर्थः ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।**

**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥**
**पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभम्ऽयावानः । विदथेषु । जग्मयः । अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः । देवाः अवसा । आ । गमत् । इह ॥ ७ ॥**

**स्कन्द–** पृषत्यः अश्वा येषां ते **पृषदश्वाः** । **मरुतः पृश्निमातरः** पृश्निः द्यौः, सा माता येषां ते पृश्निमातरः । **शुभंयावानः** शुभमित्युदकम् तदर्थं मेघान् प्रति गन्तारः । **विदथेषु** यज्ञेषु **जग्मयः** गमनशीलाः । न च केवला मरुतः । किं तर्हि । **अग्निजिह्वाः** वक्ष्यमाणानां विश्वेषां देवानामेतद् विशेषणम्, न केवलं मरुताम् । कुत एतत् । 'ये अग्निजिह्वा उत वा यजत्राः' (ऋ.६,५२,१३) इति प्रयोगदर्शनात् । अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः । अग्नौ प्रक्षिप्तं हि हविर्देवा अश्नन्ति, तेनैषामग्निर्जिह्वास्थानीयः । **मनवः** मन्तारः ज्ञातारः । **सूरचक्षसः** सूर्यस्येव चक्षो दर्शनं येषां ते सूरचक्षसः । एवंरूपा **विश्वे देवाः नः अवसा** अस्माकं पालनेन हेतुना । वयं पालयितव्या इत्येवमर्थमित्यर्थः । **आ गमन्** आगच्छन्तु । **इह** यज्ञे । पृषदश्वादिगुणा मरुतः अग्निनिह्वादिगुणाश्च विश्वे देवाः अस्मत्पालनार्थमिह यज्ञे आगच्छन्त्विति समस्तार्थः ॥ ७ ॥

**वेङ्कटमाधव–** पृषद्वर्णाश्वाः **मरुतः** गोमातरः उदकं प्रति गन्तारः यज्ञेषु गमनशीलाः अग्न्यास्याः मन्तारः सुवीर्यदर्शनाः **विश्वे** अस्मान् **देवाः** रक्षणेन सह आगच्छन्तु **इह** ॥ ७ ॥

**मुद्गल– पृषदश्वाः** पृषद्भि श्वेतविन्दुभिर्युक्ता अश्वा येषां ते । **पृश्निमातरः** पृश्निर्नानावर्णा गौः माता येषां ते । **शुभंयावानः** शुभं शोभनं यान्ति गच्छन्तीति शुभंयावानः । शोभनगतय इत्यर्थः । **विदथेषु** यज्ञेषु **जग्मयः** गन्तारः **अग्निजिह्वाः** अग्नेर्जिह्वायां वर्तमानाः । सर्वे **हि देवाः** हविःस्वीकरणायाग्नेर्जिह्वायां वर्तन्ते । **मनवः** सर्वस्य मन्तारः । **सूरचक्षसः** सूर्यप्रकाश इव चक्षः प्रकाशो येषां ते । एवम्भूताः **मरुतः विश्वे देवाः** सर्वे देवाः **नः** अस्मान् **इह** अस्मिन् काले **अवसा** रक्षणेन सह **आ गमन्** आगच्छन्तु ॥ ७ ॥

**सायण– पृषदश्वाः** पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः । **पृश्निमातरः** । पृश्निर्नानावर्णा गौर्माता येषाम् । **शुभंयावानः** । शुभं शोभनं यान्ति गच्छन्तीति शुभंयावानः । शोभनगतय इत्यर्थः । **विदथेषु** यज्ञेषु **जग्मयः** गन्तारः **अग्निजिह्वाः** अग्नेर्जिह्वायां वर्तमानाः ।

सर्वे हि देवा हविःस्वीकरणायाग्नेर्जिह्वायां वर्तन्ते । तात्स्थ्यात् ताच्छब्द्यम् । **मनवः** सर्वस्य मन्तारः **सूरचक्षसः** सूर्यप्रकाश इव चक्षः प्रकाशो येषां ते एवम्भूताः **मरुतः** मरुत्संज्ञकाः **विश्वे देवाः** सर्वे देवाः **नः** अस्मान् **इह** अस्मिन्काले **अवसा** रक्षणेन सह **आ गमन्** आगच्छन्तु ।

शुभंयावानः । 'या प्रापणे' । 'आतो मनिन्' इति वनिप् । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् द्वितीयाया अपि अलुक् । गमन् । गमेः प्रार्थनायां लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् ।। ७ ।।

**सिद्धाञ्जनम्– पृषदश्वाः** पृषद्भिः शुभ्रविन्दुभिर्युक्ता अश्वा वाहा येषां ते **पृश्निमातरः** पृश्निश्चित्रा गौरदितिर्माता येषां ते **शुभंयावानः** शोभनं यान्ति, शोभनगतय इत्यर्थः, **विदथेषु** ज्ञानागमस्थानेषु अन्तर्यजनेषु **जग्मयः** गन्तारः **अग्निजिह्वाः** अग्निमुखाः, अग्निर्हि देवानां मुखं, तस्य द्वारेण यजमानीयं सर्वं अर्पणं गृह्णन्ति सर्वे देवाः । मनवः मन्तारः ज्ञातारः, **सूरचक्षसः** सूर्यप्रकाश इव प्रकाशो येषां ते, एवम्भूताः **विश्वे** सर्वेऽपि **देवाः मरुतः नः** अस्मान् **इह** अत्र **अवसा** रक्षणेन सह **आगमन्** आगच्छन्तु । पृषदश्वाः गुप्तार्थानुसारेण व्याख्याताः, तथा पृश्निमातरश्च ।

शुभंयावानः–या प्रापणे, आतो मनिन्निति वनिप्, तत्पुरुषे कृति बहुलमिति द्वितीयाया अलुक् । गमन्–गमेः प्रार्थनायां लेटि अडागमः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।। ८ ।।**
भद्रम् । कर्णेभिः । शृणुयाम । देवाः । भद्रम् । पश्येम । अक्षऽभिः । यजत्राः । स्थिरैः । अङ्गैः । तुस्तुऽवांसः । तनूभिः । वि । अशेम । देवऽहितम् । यत् । आयुः ।। ८ ।।

**स्कन्द–** युष्मात्प्रसादादेव **भद्रम् कर्णेभि शृणुयाम** हे देवाः! भद्रम् एव **पश्येम अक्षभि यजत्राः** ! यष्टव्याः! । **स्थिरैः अङ्गैः** दृढैश्चात्मावयवैः **तनूभिः** शरीरैश्च । **जरया** अनुपहतशरीरतदवयवाः सन्त इत्यर्थः । **तुष्टुवांसः** शत्रर्थोऽयं क्वसुर्द्रष्टव्यः । स्तुवन्तो युष्मान् ।

**वि अशेम** मनुष्याणां च **देवहितम्** देवैर्दत्तं देवैर्वा निहितं स्थापितमुपकल्पितं **यत् आयुः** तद्वर्षशतपरिमाणकमायुः देवैर्मनुष्याणामुपकल्पितं कृत्स्नं प्राप्नुयाम । मान्तरा मृषीमहीत्यर्थः ।।

**वेङ्कटमाधव–** **भद्रम्** कर्णैः **शृणुयाम देवाः!** । **भद्रम्** एव **पश्येम अक्षिभिः** यष्टव्या । **स्थिरैः अङ्गैः तुष्टुवांसः तनूभिः** च युक्ताः व्यश्याम देवैर्निहितं शतसङ्ख्याकम् आयुः ।। ८ ।।

**मुद्गल**– हे **देवाः** ! दानादिगुणायुक्ताः सर्वे देवाः! **कर्णेभिः** अस्मदीयैः श्रोत्रैः **भद्रम्** भजनीयं कल्याणवचनम् **शृणुयाम** युष्मत्प्रसादात् श्रोतुं समर्थाः स्याम । अस्माकं बाधिर्यं कदाचिदपि मा भूत् । हे **यजत्राः**! यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवाः! **अक्षभिः** अक्षिभिरात्मीयैश्चक्षुर्भिः **भद्रम्** शोभनम् **पश्येम** द्रष्टुं समर्थाः स्याम । अस्माकं दृष्टिप्रतिघातोऽपि मा भूत् । **स्थिरैः** दृढैः अङ्गैः हस्तपादादिभिरवयवैः **तनूभिः** शरीरैश्च युक्ता वयम् **तुष्टुवांसः** युष्मान् स्तुवन्तः **यत् आयुः** विंशत्यधिकशतप्रमाणम् **देवहितम्** देवेन प्रजापतिना स्थापितं तत् **वि अशेष** व्याप्नुयाम् ।।

**सायण–** अस्ति सौम्यश्चरुस्तृतीयसवने । तेन चरुणा देवतामिष्ट्वा इष्टशेषे तस्मिन् बहु घृतमवनीय तस्मिन्वषट्कर्त्रा स्वकीया छाया द्रष्टव्या । सा यदि न दृश्येत तदानीं 'भद्रम्' इत्येका पठितव्या । 'त्वं सोम' इति खण्डे तथैव सूत्र्यते– 'राज्ञा सोमेन तद्वयमस्मासु धारयामसि भद्रं कर्णेभिः शृणुयाम देवा इति च' (आश्व.श्रौ.५.१९) इति । महानाम्नीव्रतेऽप्येषा भूमिस्पर्शने जप्या । सूत्रितं च 'एतद्विदम्' इति खण्डे– 'भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः' (आश्व.श्रौ.८.१४) इति ।।

हे **देवाः**! दानादिगुणयुक्ता सर्वे देवाः **कर्णेभिः** अस्मदीयैः श्रोत्रैः **भद्रं** भजनीयं कल्याणं वचनं **शृणुयाम** युष्मत्प्रसादाच्छ्रोतुं समर्थाः स्याम । अस्माकं बाधिर्यं कदाचिदपि मा भूत् । हे **यजत्राः** यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवाः **अक्षभिः** अक्षिभिरात्मीयैश्चक्षुर्भिः **भद्रं** शोभनं पश्येम द्रष्टुं समर्थाः स्याम । अस्माकं दृष्टिप्रतिघातोऽपि मा भूत् । **स्थिरैः** दृढैः **अङ्गैः** हस्तपादादिभिरवयवैः **तनूभिः** शरीरैश्च युक्ता वयं **तुष्टुवांसः** युष्मान् स्तुवन्तः **यत् आयुः** षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा **देवहितं** देवेन प्रजापतिना स्थापितं तत् **व्यशेम** प्राप्नुयाम ।

कर्णेभिः 'बहुलं छन्दसि' इति भिसः ऐसभावः । अक्षभिः । 'छन्दस्यपि दृश्यते' इति

अनङ् स च उदात्तः । यजत्राः । 'अमिनक्षि' इत्यादिना यजेः अत्रन्प्रत्ययः । तुष्टुवांसः । 'ष्टुञ् स्तुतौ' । लिटः क्वसुः । 'शर्पूर्वाः खयः' इति तकारः शिष्यते । अशेम । 'अशू व्याप्तौ' । 'लिङ्याशिष्यङ्' । यदि तु तत्र परिगणनमन्यव्यावृत्त्यर्थं तदानीं लिङि व्यत्ययेन शप् । देवहितम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ८ ।।

**सिद्धाञ्जनम्**– हे **देवाः!** **कर्णेभिः** श्रोत्रैः **भद्रम्** कल्याणं **शृणुयाम** श्रोतुं समर्थाः स्याम युष्मदनुग्रहात् हे **यजत्राः!** यष्टव्याः, पूजयितव्याः, **अक्षभिः** अक्षिभिः **भद्रम्** कल्याणं **पश्येम** द्रष्टुं प्रभवाम । अत्रेदमवधेयम् । यत् प्रथमसूक्ते भद्रपदमधिकृत्य विचार्योपपादितं 'सर्वथा भद्रपदं अशुभ–अनृतज्ञानजन्य–दुरित–प्रतिद्वन्द्वित्वेन प्रयुज्यते वेदे' इति **स्थिरैः** दृढैः **अङ्गैः** करचरणाद्यवयवैः **तनूभिः** शरीरैश्च युक्ता वयं **तुष्टुवांसः** युष्मान् स्तुवन्तः **देवहितम्** देवैर्विहितं **यत् आयुः** यदायुर्मानं भवति तत् **व्यशेम** प्राप्नुयाम, तस्योपभोक्तारः स्याम ।

कर्णेभिः–भिस ऐसभावः । अक्षभिः–छन्दसि अनङ । यजत्राः–यजेरत्रन्प्रत्ययः । तुष्टुवांसः–ष्टुञ् स्तुतौ, लिटः क्वसुः । अशेमलिङि आशिष्यङ् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।**
**पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ।। ९ ।।**

शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र । जरसम् । तनूनाम् । पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः । मध्या । रिरिषत । आयुः । गन्तोः ।।

**स्कन्द**– **इत् नु** इति पदपूरणौ । एकवाक्यताप्रसिद्ध्यर्थञ्च प्रथमे पादे यच्छब्दः अन्त्ये च षष्ठ्यन्तस्तच्छब्दोऽप्याहर्तव्यः । यदेतत् **शतम् शरदः** वर्षशतम् **अन्ति** अन्तिकं सन्निकृष्टम् । अल्पमित्यर्थः । हे **देवाः!** **यत्र नः** अस्माकम् **चक्र** कृतवन्तः स्थ । **जरसम्** जराम् **तनूनाम्** शरीराणाम् । यत् स्वरूपेणैवाल्पकं जरया चोपहतमित्यर्थः । **यत्र** च **पुत्रासः** पुत्राः **पितरः भवन्ति** स्वेषामपत्यानाम् । यत्रैकमेव शरीरमत्यन्तविरुद्धे पितापुत्रावस्थे शीघ्रमेव प्रतिपद्यते इत्यर्थः । अथवा पितृशब्दोऽत्र क्रियाशब्दः पालयितृवचनः । ये पुत्राः पाल्या आसंस्त एव वार्धक्ये जरयाभिभूतस्य पालयितारो भवन्तीत्यर्थः । **मा नः** अस्माकं तस्य **मध्या** मध्ये रिरिषत हिंसिष्ट । **आयुः** जीवितम् **गन्तोः** गमनशीलस्य ।। ९ ।।

**वेङ्कटमाधव– शतम्** एव **शरदः** अन्ततो भवति **देवाः!** मनुष्याणामायुः । **यत्र** अस्माकं कृतवन्तो यूयमङ्गानां जरां कल्पितवन्तः । पुत्रा एव रक्षितारो **यत्र भवन्ति** । तत् **आयुः गन्तोः** मध्ये **मा** अस्माकं हिंसिध्वम् इति । आयुष आशासनम् ।। ९ ।।

**मुद्गल–** हे **देवाः! अन्ति** अन्तिके मनुष्याणां समीपे आयुष्ट्वेन भवद्भिः कल्पिताः **शरदः** संवत्सराः **शतम् इत् नु** शतं खलु । यस्मात् सृष्टिकाले मनुष्याणां शतसंवत्सरायुरिति युष्माभिः परिकल्पितं तस्मात् **नः** अस्माकम् **आयुः गन्तोः** क्लृप्तस्यायुषो गमनात्पूर्वम् **मध्या** मध्ये **मा रीरिषत** मा हिंसिष्ट । कीदृशानाम् । **नः** अस्माकम् **तनूनाम्** शरीराणाम् **जरसम्** जराम् **यत्र** यस्यामवस्थायाम् **चक्र** कृतवन्तो यूयम्, यत्र च **पुत्रासः** पुत्राः **पितरः** अस्माकं रक्षितारः **भवन्ति** । ईदृग्दशापन्नानामित्यर्थः ।। ९ ।।

**सायण–** हे **देवाः! अन्ति** अन्तिके मनुष्याणां समीपे आयुष्ट्वेन भवद्भिः कल्पिताः **शरदः** संवत्सराः **शतम् इत् नु** शतं खलु । यस्मात् सृष्टिकाले मनुष्याणां शतं संवत्सरा आयुरिति युष्माभिः परिकल्पितं तस्मात् **नः** अस्मान् **आयुर्गन्तोः** क्लृप्तस्यायुषो गमनात्पूर्वं **मध्या** मध्ये **मा रीरिषत** मा हिंसिष्ट । कीदृशान् । **नः** अस्माकं **तनूनां** शरीराणां **जरसं** जरां **यत्र** यस्यामवस्थायां **चक्र** कृतवन्तो यूयं **यत्र** च **पुत्रासः** पुत्राः **पितरः** अस्माकं रक्षितारः **भवन्ति** । ईदृग्दशापन्नानित्यर्थः ।

अन्ति । अन्तिकशब्दस्य 'कादिलोपो बहुलमिति वक्तव्यम्' इति कलोपः । यत्र । 'ऋचि तुनुघमक्षुतङ्कुत्र' इति संहितायां दीर्घः । चक्र । लिटि मध्यमबहुवचनस्य कित्त्वात् गुणाभावे यणादेशः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । जरसम् । 'जराया जरसन्यतरस्याम्' (पा.सू.७.२.१०१) इति जरसादेशः । मध्या । 'सुपां सुलुक्' इति सप्तम्या डादेशः । रीरिषत । 'रिष रुष हिंसायाम्' अस्मात् ण्यन्तात् माङि लुङि मध्यमबहुवचने च्लेः चङि णिलोपोपधाह्रस्व-द्विर्वचनहलादिशेषसन्वद्भावेत्वदीर्घाः । छान्दसः पदकालीनो ह्रस्वः । गन्तोः । 'भावलक्षणे स्थेण्' (पा.सू.३.४.१६) इति गमेः तोसुन्प्रत्ययः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **देवाः! अन्ति** अन्तिके युष्माकं समीपे, मनुष्याणां **शरदः** संवत्सराः **शतमिन्नु** शतं खलु । सामन्याभिप्रायेणेदं शतमायुर्मानमिति । शतमानं भवतीति यजुर्वाक्या-

दनन्तरवाक्ये श्रूयते च 'अथो खलु, यावतीः समा एष्यन् मन्येत तावदेव मानं स्यात्' इति। **तस्मात् नः** अस्माकं **आयुः गन्तो** आयुषो गमनात् पूर्वं **मध्या** मध्ये **मा रिरिषत** मा हिंसिष्ट। **यत्र** क्लृप्तस्य आयुषोऽवस्थाविशेषे **तनूनाम्** शरीराणां **जरसम्** जरां **चक्र** कृतवन्तः यूयं, **यत्र** आयुषि **पुत्रासः** पुत्राः **पितरः** अपत्यजनकत्वात् स्वयं पितरो **भवन्ति**।

अन्ति–अन्तिकशब्दस्य कलोपः। जरसम्–जराया जरसादेशः। मध्या–सप्तम्या डादेशः। रीरिषत–रिष हिंसायाम्, अस्मात् ण्यन्तात् यङ्लुङि मध्यमबहुवचनम् ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः।**
**विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ १० ॥**
**अदि॑तिः। द्यौः। अदि॑तिः। अ॒न्तरि॑क्षम्। अदि॑तिः। मा॒ता। सः। पि॒ता। सः। पु॒त्रः।**
**विश्वे॑। दे॒वाः। अदि॑तिः। पञ्च॑। जनाः॑। अदि॑तिः। जा॒तम्। अदि॑तिः। जनि॑ऽत्वम् ॥**

**स्कन्द– अदितिः** देवमाता। तत्प्रभवाः सर्वे द्यवादयः। अत इदं कारणशब्देन कार्यस्य गौण्या वृत्त्याभिधानम्। अदितेः कार्यभूतेति **अदितिः** एव **अन्तरिक्षम् अदितिः** एव **माता सः पिता सः पुत्रः** स इति व्यत्ययेन पुल्लिङ्गता। सैवादितिः पिता सैव पुत्रः। **विश्वे देवाः अदितिः पञ्च जनाः** च। गन्धर्वाः पितरो देवा असुरा रक्षांसीति एते पञ्च जना अभिप्रेताः, निषादपञ्चमा वा ब्राह्मणादयो वर्णाः। **अदितिः** एव **जातम् अदितिः** एव **जनित्वम्** जनिष्यमाणम्। एवमशेषजगत्कारणत्वेनादितेर्विभूतिमाचष्टे। अथवा अदितिशब्दोऽत्र क्रियाशब्दः अदीनपर्यायः। द्यवादीनि वस्तूनि अदीनान्यनुपक्षीणानि। नित्यानीत्यर्थः ॥ १० ॥

**वेङ्कटमाधव– अदितिः** एव सर्वमित्यदितेर्विभूतिमाचष्टे। **अदितिः** एव **जातम्**। **अदितिः** एव जनिष्यमाणम्। सा च प्रयच्छतु आयुः इति ॥ १० ॥

**मुद्गल– अदितिः** अदीना पृथिवी देवमाता। सैव **द्यौः** द्योतनशीलो नाकः। सैव **अन्तरिक्षम्** अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम **अदितिः**। सैव **माता** निर्मात्री जगतो जननी। सैव **सः पिता** उत्पादकः तातश्च। सः पुत्रः मातापित्रोर्जातः पुत्रोऽपि सैव। **विश्वे देवाः** सर्वेऽपि देवाः **अदितिः** एव। **पञ्च जनाः** निषादपञ्चमाश्चत्वारो वर्णाः। एवंविधाः पञ्च

जना अपि **अदितिः** एव । **जातम्** जननं प्रजानामुत्पत्तिः सापि **अदितिः** एव । **जनित्वम्** जन्माधिकरणं तदपि **अदितिः** एव । एवं सकलजगदात्मनाऽदितिः स्तूयते ।। १० ।।

**सायण–** 'अदितिर्द्यौरदितिः' इत्येषा अदितिदेवताके पशौ हविषो याज्या । सूत्रितं च– 'अदितिर्द्यौरदितिरन्तरिक्षं न ते विष्णो जायमानो न जातः' (आश्व.श्रौ.३.८) इति ।

**अदितिः** अदीना अखण्डनीया वा पृथिवी देवमाता वा सैव **द्यौः** द्योतनशीलो नाकः । सैव **अन्तरिक्षम्** अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम । सैव **माता** निर्मात्री जगतो जननी । सैव **पिता** उत्पादकः । ततश्च **सः पुत्रः** मातापित्रोर्जातः पुत्रोऽपि सैव । **विश्वे देवाः** सर्वेऽपि देवाः **अदितिः** एव । **पञ्च जनाः** निषादपञ्चमाश्चत्वारो वर्णाः । यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसि । तदुक्तं यास्केन– 'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः' (निरु.३.८) इति । ब्राह्मणे त्वेवमाम्नातं– 'सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितृणां च' (ऐ.ब्रा.३.३१) इति । तत्र गन्धर्वाप्सरसामैक्यात्पञ्चजनत्वम् । एवंविधाः पञ्च जना अपि **अदितिः** एव । **जातं** जननं प्रजानामुत्पत्तिः सा अपि **अदितिः** एव । **जनित्वं** जन्माधिकरणं तदपि **अदितिः** एव । एवं सकलजगदात्मनादितिः स्तूयते । उक्तं च यास्केन– 'इत्यदितेर्विभूतिमाचष्टे' (निरु.४.२३) इति ।

अदितिः । 'दो अवखण्डने' । अस्मात् कर्मणि क्तिनि 'द्यतिस्यतिमास्थाम्' (पा.सू. ७.४.४०) इति इत्वम् । यास्कपक्षे तु 'दीङ् क्षये' इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । स पिता । निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददते इत्युद्देश्यलिङ्गतया पुंल्लिङ्गत्वम् । जनित्वम् । जनेरौणादिकः त्वन्प्रत्ययः ।। १० ।।

**सिद्धाञ्जनम्–** अखण्डस्वरूपाया देवमातुरदितेः सर्वात्मकत्वमस्यां स्तूयते । **अदितिः द्यौः** द्युलोकः **अदितिः अन्तरिक्षम्** मध्यमो भुवर्लोकः **अदितिः माता** पृथिवी जननी, **सः** सैव **पिता** जनकः **सः** सैव **पुत्रः** मातापित्रोर्जातः सैव **विश्वे** सर्वेऽपि **देवाः**, **अदितिः** सैव **पञ्च जनाः** पञ्चजनानधिकृत्य मतभेदा भूमिकायां उक्ताः । अन्नमयाद्यानन्दमयान्तेषु लोकेषु जाताः

वर्तमाना जनाः पञ्चजना इति रहस्यपक्षः । **अदितिः** सैव **जातम्** उत्पन्नं सर्व **अदितिः** सैव **जनित्वम्** जन्माधिकरणम् ।

जनित्वम्–जनेरौणादिकस्त्वनृप्रत्ययः ।। १० ।।

।। इति प्रथमाष्टके षष्ठाध्याये षोडशो वर्गः ।।

## ।। अथ सप्तमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ९०)

(९ गोतमो राहूगणः । विश्वेदेवाः । गायत्रीः । ९ अनुष्टुप्)

**ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् । अर्यमा देवैः सजोषाः ।। १ ।।**

**ऋजुऽनीती । नः । वरुणः । मित्रः । नयतु । विद्वान् । अर्यमा । देवैः । सऽजोषाः ।।**

**स्कन्द–** ऋजु नवतीति **ऋजुनीती नः** अस्मान् **मित्रः** वरुणः च । यत्र स्वर्गे ब्रह्मलोके वा अस्माभिः स्वकृतेन कर्मणा गन्तव्यं तत्र तत्र **नयतु विद्वान्** विजानन् । किम् । सामर्थ्यात् कर्मविपाककालं भक्ततां वा अस्माकम् । न च केवलं मित्रावरुणौ । किं तर्हि । **अर्यमा देवैः सजोषाः** देवैस्सह सम्प्रीयमाणः ।। १ ।।

**वेङ्कटमाधव–** ऋजुनयनेन अस्मान् नयनप्रकारज्ञाः वरुणादयः नयन्तु **अर्यमा** च **देवैः** सहितः ।।

**मुद्गल–** 'ऋजुनीती' इति नवर्चं षष्ठं सूक्तम् । गोतम ऋषिः । आद्याद्यष्ट गायत्र्यः । अन्त्याऽनुष्टुम् । विश्वेदेवा देवताः ।

अहरभिमानी देवः **मित्रः वरुणः** रात्र्यभिमानी । मित्रश्च वरुणश्च **अर्यमा** च **देवैः** इन्द्रादिभिः **सजोषाः** समानप्रीतिः **विद्वान्** नेतव्यमुत्तमं स्थानं जानन् **नः** अस्मान् **ऋजुनीती** ऋजुनीत्या ऋजुनयनेन कौटिल्यरहितेन गमनेन **नयतु** अभिमतं स्थानं प्रापयतु ।। १ ।।

**सायण–** 'ऋजुनीती' इति नवर्चं षष्ठं सूक्तं गोतमस्यार्षम् । अत्रानुक्रम्यते– 'ऋजुनीती नव गायत्रमन्त्यानुष्टुप्' इति । पूर्वत्र 'वैश्वदेवं तु' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमपि सूक्तं

बहुदेवताकम् । सूक्तविनियोगो लैङ्गिकः । चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य 'ऋजुनीति नः' इत्येषा आरम्भणीया । 'चतुर्विंशे' इति खण्डे सूत्रितम्– 'ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि' (आश्व.श्रौ.७.२) इति । अहर्गणेषु द्वितीयादिष्वहःस्वप्येषारम्भणीया शंसनीया । सूत्रितं च– 'आरम्भणीयाः पर्यासान्कद्वतोऽहरहः शस्यानीति होत्रका द्वितीयादिष्वेव' (आश्व.श्रौ. ७.१) इति ।

अहरभिमानी देवः **मित्रः**, **वरुणः** रात्र्यभिमानी मित्रश्च वरुणश्च **विद्वान्** नेतव्यमुत्तमं स्थानं जानन् **नः** अस्मान् **ऋजुनीती** ऋजुनीत्या ऋजुनयनेन कौटिल्यरहितेन गमनेन **नयतु** अभिमतं फलं प्रापयतु । तथा **देवैः** अन्यैरिन्द्रादिभिः **सजोषाः** समानप्रीतिः **अर्यमा** अहोरात्रविभागस्य कर्ता सूर्यश्चास्मानृजुगमनेनाभिमतं स्थानं प्रापयतु ।

ऋजुनीति । 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'ऋजुनीती'ति नवर्चं षष्ठं सूक्तम्, बहुदेवताकं अतो वैश्वदेवम्, गायत्रं अन्त्या अनुष्टुप् ।।

**ऋजुनीती** ऋजुना कौटिल्यशून्येन नयनेन नेतव्यमुत्तमं स्थानं प्रति प्रापणेन **नः** अस्मान् **मित्रः** तथा **वरुणः** देवश्च **विद्वान्** उत्तमं पदं जानन् **नयतु** प्रापयतु । तथा **देवैः** इन्द्रादिभिः **सजोषाः** समानप्रीतिः **अर्यमा** देवश्चास्मान् नेतव्यं नयतु ।

ऋजुनीती–तृतीयायाः पूर्वसवर्णदीर्घत्वम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः । व्रता रक्षन्ते विश्वाहा ।। २ ।।**
**ते । हि । वस्वः । वसवानाः । ते । अप्रऽमूराः । महःऽभिः । व्रता । रक्षन्ते । विश्वाहा ।।**

**स्कन्द– ते** इति प्रकृतानां वरुणादीनां प्रतिनिर्देशः । हिशब्द पदपूरणः । ते वरुणादयः **वस्वः** तृतीयार्थे षष्ठ्येषा । वसुना धनेन **वसवानाः** धनवन्तः । अथवा वसवाना इति वस आच्छादने इत्यस्य क्रियाशब्दः । धनेनाच्छादयितारः । प्रभूतस्य धनस्याच्छादयितार इत्यर्थः ।

**ते** एव **अप्रमूराः** अप्रमूढचेतसः । **महोभिः** महद्भिः प्रकाशकरणवृष्टिमदानादिभिः उपकारैः । **व्रता** सर्वकर्माणि प्राणिनाम् **रक्षन्ते विश्वाहा** सर्वदा ।। २ ।।

**वेङ्कटमाधव– ते हि** बसूनि आच्छादयन्तः, **ते** अप्रमूढाः तेनोभिः स्वानि स्वानि यमनादीनि कर्माणि सर्वेदा **रक्षन्ते** ।। २ ।।

**मुद्गल– ते हि** पूर्वोक्ताः मित्रादयः **वस्वः** वसुनो धनस्य **वसवानाः** वासका आच्छादयितारः । सर्वं जगत् धनेनाच्छादयन्तीत्यर्थः । अतः **ते** मित्रादयः **अप्रमूराः** अप्रमूर्च्छिता अमूढाः प्राज्ञाः सन्तः **महोभिः** आत्मीयैस्तेजोभिः **विश्वाहा** सर्वाण्यहानि सर्वेष्वप्यहःसु **व्रता** व्रतानि जगन्निर्वाहरूपाणि स्वकीयानि कर्माणि **रक्षन्ते** पालयन्ति ।। २ ।।

**सायण– ते हि** पूर्वोक्ता मित्रादयः **वस्वः** वसुनो धनस्य **वसवानाः** वासका आच्छादयितारः सर्वं जगद्धनेनाच्छादयन्तीत्यर्थः । अतः **ते** मित्रादयः **अप्रमूराः** अप्रमूर्च्छिता अमूढाः प्राज्ञाः सन्तः **महोभिः** आत्मीयैस्तेजोभिः **विश्वाहा** सर्वाण्यहानि । अत्यन्तसंयोगे द्वितीया । सर्वेष्वप्यहःसु **व्रता** व्रतानि जगन्निर्वाहरूपाणि स्वकीयानि कर्माणि **रक्षन्ते** पालयन्ति ।

वस्वः । आगमानुशासनस्य अनित्यत्वात् नुमभावे 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणस्य विकल्पनादभावे यणादेशः । वसवानाः । 'वस आच्छादने' । अस्मात् अन्तर्भावितण्यर्थात् लटः शानच् । 'बहुलं छन्दसि' इति शपो लुगभावः । वर्णव्यापत्त्या मकारस्य वकारः । अप्रमूराः । 'मुर्छा मोहसमुच्छ्राययोः' । अस्मात् सम्पदादिलक्षणो भावे क्विप् । 'राल्लोपः' इति छकारलोपः । प्रकृष्टा मूः प्रमूः । ततो मत्वर्थीयो रः । 'रो रि' (पा.सू.८.३. १४) इति रेफलोपः । न प्रमूरा अप्रमूराः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । रक्षन्ते । 'रक्ष पालने' । व्यत्ययेन तङ् ।। २ ।।

**सिद्धाञ्जनम्– ते हि** पूर्वोक्ता मित्रादयः खलु **वस्वः** सर्वावासाधारभूतस्य द्रव्यस्य **वसवानाः** वासयितारः आच्छादकाः स्वयं आत्मना आवरीतार इत्यर्थः । **ते** देवाः **अप्रमूराः** अप्रमूढाः अमूर्च्छिताः प्राज्ञाः अत एव **महोभिः** स्वीयैः ज्योतिर्भिः **विश्वाहा** सर्वेष्वहस्सु इत्यर्थे निपातः, सर्वदेत्यर्थः **व्रता** व्रतानि नियतानि दैव्यानि कर्माणि, तदनुरूपाण्यस्मदीयानि च **रक्षन्ते** पालयन्ति ।

वसवाना–वस आच्छादने, अस्मादन्तर्भावितण्यर्थात् शानच् । अप्रमूराः–मूर्च्छा मोहसमुच्छ्राययोः, अस्मान् क्विप्, राल्लोप इति छकारलोपः । रक्षन्ते–व्यत्ययेन तङ ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**ते अस्मभ्यं शर्म यंसन्नमृता मर्त्येभ्यः । बाधमाना अप द्विषः ।। ३ ।।**
**ते । अस्मभ्यम् । शर्म । यंसन् । अमृताः । मर्त्येभ्यः । बाधमानाः । अप । द्विषः ।।**

**स्कन्द– ते** वरुणादयः **अस्मभ्यम् शर्म** सुखं गृहं वा **यंसन्** प्रयच्छन्तु **अमृताः** मरणवर्जिताः **मर्त्येभ्यः** । **बाधमानाः अप** अपबाधमानाः **द्विषः** अस्मदीयान् द्विषतः ।।३।।

**वेङ्कटमाधव– ते अस्मभ्यम्** सुखं प्रयच्छन्तु **अमृताः मर्त्येभ्यः** द्वेष्टॄन् **अप बाधमानाः** ।।

**मुद्गल– अमृताः** अमरणधर्माणः **ते** विश्वे देवाः **मर्त्येभ्यः** मरणधर्मभ्यः **अस्मभ्यम्** अनुष्ठातृभ्यः **शर्म** अमृतलक्षणं सुखम् **यंसन्** प्रयच्छन्तु । किं कुर्वन्तः । **द्विषः** अस्मदीयान् पापलक्षणान् शत्रून् **अप बाधमानाः** विनाशं प्रापयन्तः ।। ३ ।।

**सायण– अमृताः** अमरणधर्माणः **ते** विश्वे देवाः **मर्त्येभ्यः** मरणधर्मभ्यः **अस्मभ्यम्** अनुष्ठातृभ्यः **शर्म** अमृतलक्षणं सुखं **यंसन्** यच्छन्तु प्रयच्छन्तु । किं कुर्वन्तः । **द्विषः** अस्मदीयान् पापलक्षणान् शत्रून् **अप बाधमानाः** विनाशं प्रापयन्तः ।

यंसन् । 'यम उपरमे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । अमृताः । मृतं मरणं येषां नास्तीति अमृताः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– अमृताः** अमरणधर्माणः **ते** सर्वे देवाः **मर्त्येभ्यः** मरणधर्मभ्यः **अस्मभ्यम् शर्म** सुखं अमृतलक्षणं **यंसन्** यच्छन्तु ददतु । कीदृशाः? **द्विषः** पापलक्षणान् शत्रून् **अप बाधमानाः** विनष्टिं प्रापयन्तः सन्तः ।

यंसन्-यम उपरमे, लेटि अडागमः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**वि नः पथः सुवितायं चियन्त्विन्द्रो मरुतः । पूषा भगो वन्द्यासः ॥ ४ ॥**
**वि । नः । पथः । सुवितायं । चियन्तु । इन्द्रः । मरुतः । पूषा । भगः । वन्द्यासः ॥**

**स्कन्द– नः** अस्माकम् **पथः** स्वर्गगमनमार्गान् **सुविताय** सुगमनाय **वि चियन्तु** विचिन्वन्तु । स्वर्गगमनमार्गप्रतिबन्धकारिणो रक्षोऽसुरप्रभृतीन् मार्गादपनयन्त्वित्यर्थः । के । उच्यते । **इन्द्रः** च **मरुतः पूषा भगः** च **वन्द्यासः** स्तुत्याः ॥ ४ ॥

**वेङ्कटमाधव– विचिन्वन्तु** मार्गानस्माकमभ्युदयायेन्द्रादयः वन्दितव्याः ॥ ४ ॥

**मुद्गल– वन्द्यासः** सर्वैर्वन्दनीया इन्द्रादयो देवाः **नः** अस्माकम् **पथः** मार्गान् **वि चियन्तु** विचिन्वन्तु अशोभनेभ्यो मार्गेभ्यः सकाशात् पृथक्कुर्वन्तु । किमर्थम् । **सुविताय** सुष्ठु प्राप्तव्याय स्वर्गादिफलाय ॥ ४ ॥

**सायण– वन्द्यासः** सर्वैर्वन्दनीयाः स्तोतव्या नमस्कर्तव्या वा इन्द्रादयो देवाः **नः** अस्माकं **पथः** मार्गान् **वि चियन्तु** विचिन्वन्तु अशोभनेभ्यो मार्गेभ्यः सकाशात् पृथक्कुर्वन्तु । किमर्थम् । **सुविताय** सुष्ठु प्राप्तव्याय स्वर्गादिफलाय ।

पथः । शसि 'भस्य टेर्लोपः' इति टिलोपः । उदात्तनिवृत्तिस्वरेण शस उदात्तत्वम् । सुविताय । 'इण् गतौ' इत्यस्मात् कर्मणि निष्ठा । 'तन्वादीनां छन्दसि बहुलमुपसङ्ख्यानम्' इति उवङ् । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'सूपमानात् क्तः' इति उत्तरपदान्तोदात्तत्वम् । चियन्तु । 'चिञ् चयने' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । इयङ् । पादादित्वात् निघाताभावः । वन्द्यासः । 'वदि अभिवादनस्तुत्योः' । 'ऋहलोर्ण्यत्' । 'ईडवन्दवृशंसदुहां ण्यतः' इति आद्युदात्तत्वम् । 'आज्जसेरसुक्' ॥ ४ ॥

**सिद्धाञ्जनम्– वन्द्यासः** वन्दनीयाः इन्द्रादयो वक्ष्यमाणा देवाः **नः** अस्माकं **पथः** मार्गान् उत्तमस्थानप्रापकान् **विचियन्तु** विचिन्वन्तु सम्पादयन्त्वित्यर्थः । किमर्थम्? **सुविताय** दुरितप्रतिद्वन्द्विने भद्रपदवाच्याय उत्तमकल्याणाय । के देवाः? **इन्द्रः मरुतः पूषा भगः** च ।

सुविताय–इण् गतौ, कर्मणि निष्ठा, सोः उवङ् छन्दसि । चियन्तु– चिञ् चयने, विकरणस्य लुक्, इयङ्, पादादित्वान्निघाताभावः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**उत नो धियो गोअंग्राः पूषन् विष्णवेवयावः । कर्ता नः स्वस्तिमतः ॥ ५ ॥**
**उत । नः । धियः । गोऽअंग्राः । पूषन् । विष्णो इति । एवऽयावः । कर्त । नः । स्वस्तिऽमतः ॥ ५ ॥**

**स्कन्द–** अपि चास्माकं **धियः गोअग्राः** 'धीः' (निघ.२,१) इति कर्मनाम । गावोऽग्रे यासां ता गोअग्राः । गोलाभफला इत्यर्थः । यागाख्यानि कर्माणि गोलाभफलानि । हे **पूषन्!** विष्णो! **एवयावः!** देवतान्तरस्य वरुणस्य मित्रस्यार्यम्ण इन्द्रस्य वा प्रतिनिर्देशोऽयम्, न पूष्णो विष्णोर्वा विशेषणम् । कुत एतत् । उत्तरत्र कर्त इति बहुवचनश्रुतेः । यातिरप्यन्तर्णीतण्यर्थः । कामानां यापयिता सम्पादयिता । एवयावा वरुणादीनामन्यतमः । तस्य सम्बोधनम् एवयावः! **कर्त** कुरुत । न केवला गोअग्रा धियः । किं तर्हि । **नः स्वस्तिमतः** अस्मांश्चाविनाशयुक्तान् कुरुत ॥ ५ ॥

**वेङ्कटमाधव–** अपि चास्माकं कर्माणि पश्वग्राणि कुरुत पूषादयः! । वायुः **एवयावा** एवं गच्छतीति । कुरुत च अस्मानविनाशवतः ॥ ५ ॥

**मुद्गल–** हे **पूषन्!** पोषकदेव! हे **विष्णो!** व्यापनशीलदेव! हे **एवयावः!** एवैर्गन्तृभिरश्वैर्याति गच्छतीति एवयावा मरुद्गणः । हे मरुद्गण! ते सर्वे यूयम् **नः** अस्माकम् **धयः** अप्तोर्यामलक्षणानि कर्माणि **गोअग्राः** पश्वग्राणि पशुप्रमुखान्यस्मत्सकाशात् भ्रष्टैः पशुभिर्युक्तानि **कर्त** कुरुत । **उत** अपि च **नः** अस्मान् **स्वस्तिमतः** अविनाशिनः कुरुत ॥ ५ ॥

**सायण–** अप्तोर्यामे सन्ति चत्वार्यतिरिक्तोक्थानि । तत्र चतुर्थे अच्छावाकातिरिक्तोक्थ्ये 'अत नो धियः' इत्येषा अनुरूपतृचस्य वैकल्पिकी तृतीया । सूत्रितं च– 'उत नो धियो गोअग्रा इति वानुरूपस्योत्तमा' (आश्व.श्रौ.९.११) इति ॥

हे **पूषन्!** पोषक देव हे **विष्णो!** व्यापनशील देव हे **एवयावः!** एवैर्गन्तृभिरश्वैर्याति गच्छतीति एवयावा मरुद्गणः । हे मरुद्गण! ते सर्वे यूयं **नः** अस्माकं **धियः** अप्तोर्यामलक्षणानि कर्माणि **गोअग्राः** पश्वग्राणि पशुप्रमुखन्यस्मत्सकाशात् भ्रष्टैः पशुभिर्युक्तानि **कर्त** कुरुत । अप्तोयामकर्मणश्च पशुप्राप्तिहेतुत्वमाम्नायते– 'यस्मात्पशवः प्रप्रेव भ्रंशेरन् स एतेन यजेत' (तै.ब्रा.२.७.१४.२) इति । **उत** अपि च **नः** अस्मान् **स्वस्तिमतः** अविनाशिनः कुरुत ।

एवयावः । 'इण् गतौ' । 'इण्शीङ्भ्यां वन्' इति वन्प्रत्ययः । अस्मिन्नुपपदे 'या प्रापणे' इत्यस्मात्' 'आतो मनिन्' इति वनिप् । सम्बुद्धौ 'वन उपसङ्ख्यानम्' (पा.सू.८.३.१.१) इति नकारस्य रुत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **पूषन्!** पोषक देव, हे **विष्णो!** व्यापक, हे **एवयावः!** मरुद्गण, यद्वा एवयामरुत् विष्णुरेव भवति, एवैः गन्तृभिः अश्वैः यातीति एवायावा तस्यामन्त्रणम् । सर्वे यूयं **नः** अस्माकं **धियः** धारणवतीः प्रज्ञाः **गोअग्राः** चित्किरणाग्राः चिद्रश्मिपुरस्सरा इत्यर्थः, **कर्त** कुरुत । **उत** अपि च **नः** अस्मान् **स्वस्तिमतः** अविनाशिनः कुरुत ।

एवयावः–इण् गतौ, अस्माद्वन्प्रत्ययः, अस्मिन् उपपदे या प्रापणे इत्यस्मात् वनिप्, सम्बुद्धौ वकारस्य रुत्वम् ।। ५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये सप्तदशो वर्गः ।।

## ।। अथ अष्टादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ।। ६ ।।**

**मधु । वाताः । ऋतऽयते । मधु । क्षरन्ति । सिन्धवः । माध्वीः । नः । सन्तु । ओषधीः ।।**

**स्कन्द–** मधु-शब्दो रसविशेषवचनः अन्तर्णीतमत्वर्थश्च । सामर्थ्याचेहोदके वर्तते । उदकनाम वा मधुशब्दः । साकाङ्क्षत्वाच्च **क्षरन्ति** इत्याख्यातं पूर्वत्राप्यनुवक्तव्यम् । मधुमत् मधुरसं वृष्टिलक्षणमुदकं क्षरन्ति । लोडर्थे अत्र लट् । क्षरन्तु । वर्षन्त्वित्यर्थः । के । **वाताः** । कस्मै । **ऋतायते** यज्ञं कामयमानस्य ममार्थाय । **मधु** क्षरन्ति **सिन्धवः** नद्यः । **माध्वीः** मध्वेव माध्वम् । स्वार्थिकस्तद्धितः छान्दसत्वात् । तद्वत्यो माध्व्यः । ईकारप्रत्ययो मत्वर्थे 'ईवनिपौ छन्दसि' (पा.वा.५।२,१०९) इति । मधरसा इत्यर्थः । **नः** अस्माकं **सन्तु ओषधीः** ।। ६ ।।

**वेङ्कटमाधव–**

**वाता मधु** क्षरन्त्यस्मै सत्यमिच्छति यो नरः ।
तद्धि सूर्यसमं ज्योतिस्तदिच्छन्निह सिध्यति ।।

यत् सम्भरन्ति सरघाः पुष्पेभ्यस्तन्मधु स्मृतम् ।
अस्मै सत्यविदे सर्वे तत् क्षरन्तीति कीर्त्यते ।।
मधुमत्यः ओषधयश्चास्माकं भवन्तु ।। ६ ।।

**मुद्गल– ऋतायते** ऋतं यज्ञमात्मनः इच्छते यजमानाय **वाताः** वायवः मधु माधुर्योपेतं कर्मफलम् **क्षरन्ति** वर्षन्ति । प्रयच्छन्तीत्यर्थः । तथा **सिन्धवः** स्यन्दनशीला नद्यः **मधु** माधुर्योपेतं स्वकीयरसं क्षरन्ति । एवम् **नः** अस्मभ्यम् **ओषधीः** ओषधयः फलपाकान्ताश्च **माध्वीः** माधुर्योपेताः **सन्तु** भवन्तु ।। ६ ।।

**सायण–** ऋत्विगाद्यर्थमाहृतं मधुपर्कं 'मधु वाताः' इति तृचेन ऋत्विगादिः प्रतिग्रहीतावेक्षेत । तथा च सूत्र्यते– 'मधु वाता ऋतायत इति तृचेनावेक्ष्य' (आश्व.गृ.१.२४.१४) इति ।।

**ऋतायते** ऋतं यज्ञमात्मन इच्छते यजमानाय **वाताः** वायवः **मधु** माधुर्योपेतं कर्मफलं **क्षरन्ति** वर्षन्ति प्रयच्छन्तीत्यर्थः । तथा **सिन्धवः** स्यन्दनशीला नद्यः समुद्रा वा **मधु** माधुर्योपेतं स्वकीयं रसं क्षरन्ति । एवं **नः** अस्मभ्यम् **ओषधीः** फलपाकान्ता ओषधयस्ताश्च **माध्वीः** माधुर्योपेताः **सन्तु** भवन्तु ।

मधु । अस्मादुत्तरस्य मत्वर्थीयस्य 'लुगकारेकाररेफाश्च वक्तव्याः' (पा.सू.४.४.१२८.२) इति लुक् । ऋतायते । ऋतमात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । अन्येषामपि संहितायां दीर्घत्वम् । क्यजन्तात् लटः शतृ । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । माध्वीः । 'मधोरञ् च' (पा.सू.४.४.१२९) इति मत्वर्थीयः अञ्प्रत्ययः । 'ऋत्व्यवास्त्व्य' इत्यादौ अञि यणादेशो निपात्यते । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ओषधीः । ओषः पाकः आसु धीयते इति ओषधयः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । 'कृदिकारादक्तिनः' इति ङीष् । जसि पूर्ववत् पूर्वसवर्णदीर्घः । दासीभारादिषु पठितत्वात् पूर्वपदप्रकृतिस्वरत्वम् । तच्च घञन्तमाद्युदात्तम् ।। ६ ।।

**सिद्धाञ्जनम्–** अथ मधुपर्कतृचम् । तृचे प्रथमां सूक्ते षष्ठीमृचमाह– **ऋतायते** ऋतं सत्यमात्मन इच्छते अन्तर्यजनशालिने पुरुषाय **वाताः** वायवः **मधु** सर्वान्तरवर्ति गूढं रसात्मकं अमृतं **क्षरन्ति** वर्षन्ति । **सिन्धवः** स्यन्दनशीला नद्य आपः **मधु** क्षरन्ति । **नः** अस्माकं

**ओषधीः** पृथिवीसारभूताः पृथिवीरुहः **माध्वीः** उक्तलक्षणमधुभरिताः **सन्तु** भवन्तु । सृष्टौ सर्वस्मादपि वस्तुजातात् मधु गृहीत्वा तत्सम्पन्नाः स्यामेत्यर्थः । ईदृशीर्ऋच आधारीकृत्य औपनिषदं मधुब्राह्मणमुपदिष्टम् ।

ऋतायते–सुप आत्मनः क्यच् । माध्वीः–मधोरञ् चेति मत्वर्थीयोऽञ्प्रत्ययः, अञि यणादेशो निपात्यते ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः । मधु द्यौरस्तु नः पिता ।। ७ ।।**
**मधु । नक्तम् । उत । उषसः । मधुऽमत् । पार्थिवम् । रजः । मधु । द्यौः । अस्तु । नः । पिता ।। ७ ।।**

**स्कन्द– नक्तम्** इति नेदमव्ययम् अधिकरणभूताया रात्रेर्वाचकम् । रात्रेरिहाधिकरणसम्भवात् नक्तेति रात्रिनाम्नः प्रथमान्तस्येदं छान्दसं ह्रस्वत्वं नपुंसकत्वं च । सामर्थ्याच्च **अस्तु नः** इत्येतत्पदं सर्वत्रानुषक्तव्यम् । मधु नक्तम् अस्तु नः । मधुत्वेन चात्र सर्वत्र तद्गतप्रीतिकरत्वं लक्ष्यते । प्रीतिकरी रात्रिरस्माकं भवत्वित्यर्थः । **उत उषसः** उषसोऽपि प्रीतिकर्यः सन्तु । **मधुमत् पार्थिवं रजः** पृथिवीलोकोऽप्यस्तु मधुमान् । **मधु द्यौः** अपि **अस्तु नः पिता** । विवाहकाले 'द्यौरहं पृथिवी त्वम्' (तै.ब्रा.३,७,१,९) इति वरे द्युत्वाध्यारोपात् सर्वमनुष्याणां च वरपितृकत्वात् तद्धर्मेणैव दिवो व्यपदेशः द्यौः पितेति ।। ७ ।।

**वेङ्कटमाधव–** रात्रौ **मधु** भवत्वस्माकम् । अपि वा **उषसः** च । मधुमान् भवतु पार्थिवः लोकः मधुमती **द्यौः अस्तु** अस्माकम् **पिता** इति ।

**मुद्गल– नक्तम्** रात्रिः **नः** अस्माकम् **मधु** मधुमती माधुर्योपेतफलप्रदा भवतु । **उत** अपि च **उषसः** उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु । **पार्थिवम् रजः** पृथिव्याः सम्बन्धी लोकोऽस्माकम् **मधुमत्** माधुर्यविशिष्टबलयुक्तो भवतु । **पिता** वृष्टिप्रदानेन सर्वेषां पालयिता **द्यौः** द्युलोकोऽपि **मधु** मधुयुक्तो भवतु ।। ७ ।।

**सायण– नक्तं** रात्रिः **नः** अस्माकं **मधु** मधुमती माधुर्योपेतफलप्रदा भवतु । **उत** अपि

च **उषसः** उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु । **पार्थिवं रजः** पृथिव्याः सम्बन्धी लोकोऽस्माकं **मधुमत्** माधुर्यविशिष्टफलयुक्तो भवतु । **पिता** वृष्टिप्रदानेन सर्वेषां पालयिता **द्यौः** द्युलोकोऽपि **मधु** मधुयुक्तः भवतु ।

पार्थिवम् । 'पृथिव्या ञाञौ' (पा.सू.४.१.८५.२) इति प्राग्दीव्यतीयः अञ्प्रत्ययः । रजः । रजःशब्दो लोकवाची । 'लोको रजांस्युच्यन्ते' (निरु.४.१९) इति यास्कः । रजन्त्यस्मिन् जना इति रजः । असुनि 'रजकरजनरजःसूपसङ्ख्यानम्' (का.६.४.२४.४) इति रञ्जेर्नलोपः ।।

**सिद्धाञ्जनम्– नक्तम्** रात्रिः **नः** अस्माकं **मधु** उक्तलक्षणं अमृतसुखं **अस्तु** भवतु । **उत** अपि च **उषसः** प्रभातवेलाः मधुभरिता भवन्तु । **पार्थिवम् रजः** पृथिव्याः सम्बन्धी लोकः **मधुमत्** मधुमान् भवतु । **द्यौः पिता** सर्वस्य पालको द्युलोकश्च **मधु** भवतु ।

रजः–रजःशब्दो लोकवाची ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**मधु॑मान्नो॒ वन॒स्पति॒र्मधु॑माँ अस्तु॒ सूर्यः॑ । माध्वी॒र्गावो॑ भवन्तु नः ।। ८ ।।**
**मधु॑ऽमान् । नः॒ । वन॒स्पतिः॑ । मधु॑ऽमान् । अ॒स्तु॒ । सूर्यः॑ । माध्वीः॑ । गावः॑ । भ॒व॒न्तु॒ । नः॒ ।। ८ ।।**

**स्कन्द– मधुमान् नः वनस्पतिः** वनानां पालयितृत्वात् स्वामित्वाद्वा वनस्पतिः सूर्यसाहचर्याच्च चन्द्रमा इहाभिप्रेतः । मधुमान्नो वनस्पतिः चन्द्रमा अस्तु । मधुमान् अस्तु **सूर्यः** । **माध्वीः** मधुमत्यः गावो भवन्तु ।। ८ ।।

**वेङ्कटमाधव– मधुमान्** अस्माकम् **वनस्पतिः** वृक्षाधिपतिः **सूर्यः** च । मधुमत्यः गावः च भवन्तु ।। ८ ।।

**मुद्गल– नः** अस्माकम् **वनस्पतिः** वनानां पालयिता यूपाभिमानी देवः **मधुमान्** माधुर्योपेतफलवान् **अस्तु** । तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः । **सूर्यः** सर्वस्य प्रेरकः सविता च **मधुमान् अस्तु** । **गावः** अग्निहोत्राद्यर्था धेनवश्च माधुर्योपेतेन पयसा युक्ता भवन्तु ।।८।।

**सायण–** **नः** अस्माकं **वनस्पतिः** वनानां पालयिता यूपाभिमानी देवः **मधुमान्** माधुर्योपेतफलवान् **अस्तु** । तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः । **सूर्यः** सर्वस्य प्रेरकः सविता च **मधुमान्** अस्तु । **गावः** अग्निहोत्राद्यर्था धेनवश्च **नः** अस्माकं **माध्वीः** माधुर्योपेतेन पयसा युक्ताः **भवन्तु** ।

वनस्पतिः । वनानां पतिर्वनस्पतिः । पारस्करादित्वात् सुट् । वनस्पतिशब्दावाद्युदात्तौ । 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** **नः** अस्माकं **वनस्पतिः** वनानां पालयिता देवः, वृक्षजातिर्वा **मधुमान्** मधुयुक्तः **अस्तु** भवतु, **सूर्यः** देवः **मधुमान् अस्तु** । **नः** अस्माकं **गावः** बाह्यपक्षे पशवः प्रसिद्धाः, चिन्मरीचयः **माध्वीः** मधुयुक्ताः **भवन्तु** ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**शं नो॑ मि॒त्रः शं वरु॑णः॒ शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॒ शं नो॒ विष्णु॑रुरुक्र॒मः ॥ ९ ॥**

**शम् । नः । मि॒त्रः । शम् । वरु॑णः । शम् । न॒ः । भ॒व॒तु । अ॒र्य॒मा । शम् । न॒ः । इन्द्रः॑ । बृह॒स्पति॑ः । शम् । न॒ः । विष्णु॑ः । उ॒रु॒ऽक्र॒मः ॥ ९ ॥**

**स्कन्द–** साकाङ्क्षत्वात् भवतु इत्याख्यातं सर्वत्रानुषक्तव्यम् । **शम्** सुखमस्माकम् **मित्रः** भवतु । **शम् वरुणः** । **शम् नः भवतु अर्यमा** । **शम् नः इन्द्रः बृहस्पतिः** । **शम् नः विष्णुः उरुक्रमः** विस्तीर्णगतिः विस्तीर्णप्रक्रमो वा । बलिबन्धनकाले त्रिभिः पदैः त्रैलोक्यप्रक्रमणम् । तदभिप्रायमिदमुरुक्रमवचनम् ॥ ९ ॥

**वेङ्कटमाधव–** अस्माकम् एते शङ्कराः भवन्तु, **विष्णुः** च उरुक्रमणः । ऋतमिच्छतोऽभ्युदयं तृचेनोपदिदिक्षुरुभयतः शान्तिं चकारेति ॥ ९ ॥

**मुद्गल–** अहरभिमानी **मित्रः** देवः **नः** अस्माकम् **शम्** सुखकरो भवतु । रात्र्यभिमानी **वरुणः** च **शम्** सुखकरः **भवतु** । **अर्यमा** अहोरात्रयोः ख्यापयिता सूर्यश्च **नः** अस्माकम् **शम्** सुखं करोतु । **बृहस्पतिः** बृहतां देवानां पालयिता इन्द्रः च **नः** अस्माकम् **शम्** सुखकरो

भवतु । **उरुक्रमः** उरु विस्तीर्णं क्रामति पादौ विक्षिपति इति उरुक्रमः । **विष्णुः** च **नः** अस्माकम् **शम्** सुखकरो भवतु ।। ९ ।।

**सायण–** अहरभिमानी **मित्रः** देवः **नः** अस्माकं **शं** सुखकरो भवतु । यद्वा । अस्मदीयानामुपद्रवाणां शमयिता भवतु । रात्र्यभिमानी **वरुणः** च **शं** सुखकरः **भवतु** । **अर्यमा** अहोरात्रयोः ख्यापयिता सूर्यश्च **नः** अस्माकं **शं** सुखकरो भवतु । **बृहस्पतिः** बृहतां देवानां पालयिता **इन्द्रः** च **नः** अस्माकं **शं** सुखकरो भवतु । **उरुक्रमः** । उरु विस्तीर्णं क्रामति पादौ विक्षिपतीति उरुक्रमः । विष्णुर्हि वामनावतारे पृथिव्यादीन् लोकान् पदत्रयरूपेणाक्रान्तवान् । अतः उरुक्रमः **विष्णुः** च **नः** अस्माकं **शं** सुखकरः उपद्रवाणां शमयिता वा भवतु ।

उरुक्रमः । 'क्रमु पादविक्षेपे' । पचाद्यच् । यद्वा । उरून् क्रामतीति उरुक्रमः । कर्मणि अण् । 'नोदात्तोपदेशस्य मान्तस्य' इति वृद्धिप्रतिषेधः ।। ९ ।।

**सिद्धाञ्जनम्– मित्रः** देवः **नः** अस्माकं **शम्** शान्तिमयसुखकरः **भवतु** । तथा **वरुणः शम्** भवतु । **नः अर्यमा** देवश्च **शम् भवतु इन्द्रः** देवः **नः शम्** भवतु । तथा **बृहस्पतिः** च । **उरुक्तमः** उरु विस्तीर्णं क्रामति सर्वं जगदाक्रामतीति उरुक्तमः **विष्णुः** व्यापनशीलः आदित्यात्मा **नः** अस्माकं **शम्** शान्तिमयसुखकरो भवतु ।। ९ ।।

।। इति प्रथमाष्टके षष्ठाध्याये अष्टादशो वर्गः ।।

## ।। अथ एकोनविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ९१)

(२३ गोतमो राहूगणः । सोमः । त्रिष्टुप् । ५-१६ गायत्री । १७ उष्णिक्)

**त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम् ।**
**तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ।। १ ।।**

त्वम् । सोम । प्र । चिकितः । मनीषा । त्वम् । रजिष्ठम् । अनु । नेषि । पन्थाम् ।
तव । प्रऽनीती । पितरः । नः । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः ।।

**स्कन्द–** 'सौम्यम्' । सोमदेवत्यमेतत् सूक्तम् । **त्वम्** हे **सोम! प्र चिकितः** प्रकर्षेण जानासि यावत् ज्ञातव्यम् **मनीषा** मनीषया त्वदीयया प्रज्ञया । **त्वम् रजिष्ठम्** तृतीयार्थे द्वितीया । **ऋजुतमेन** । **अनु नेषि** अनुशब्दोऽत्र धात्वर्थानुवादी, लम्बते प्रलम्बत इति यथा । सर्वयजमानान् स्वर्गं नयसि । **पन्थाम्** इदमपि तृतीयार्थे द्वितीया । यथा । **तव प्रणीती** प्रणीत्या नयेन । उपदेशेनेत्यर्थः । **पितरः** अपि **नः** अस्माकं हे **इन्दो!** सोम! । **देवेषु** षष्ठ्यर्थे सप्तमी । देवानां स्वभूतम् **रत्नम्** धनम् **अभजन्त** सम्भक्तवन्तः । देवानां सकाशात् लब्धवन्त इत्यर्थः । **धीराः** प्रज्ञावन्तः ।। १ ।।

**वेङ्कटमाधव–** **त्वम् सोम!** प्रकर्षेण जानासि प्रज्ञया । त्वम् ऋजुतमं पन्थानम् **अनु** नयसि । तव प्रणयनेन **पितरः** अस्माकम् **इन्दो! देवेषु रत्नम् अभजन्त** पितृयज्ञे प्राज्ञा अङ्गिरसः ।। १ ।।

**मुद्गल–** 'त्वं सोम' इति त्रयोविंशत्यृचं सप्तमं सूक्तम् । गोतम ऋषिः । पञ्चम्याद्याः षोडश्यन्ता द्वादशर्चो गायत्र्यः । सप्तदश्युष्णिक् । शिष्टा दश त्रिष्टुभः । सोमो देवता ।।

हे **सोम! त्वम् मनीषा** मनीषयाऽस्मदीयया बुद्ध्या **प्र चिकितः** प्रकर्षेण ज्ञातोऽसि । वयं त्वां स्तुतिभिरज्ञासिष्मेत्यर्थः । अतः **त्वम् रजिष्ठम्** ऋजुतममकुटिलम् **पन्थाम्** पन्थानम् कर्मफलावाप्तिहेतुभूतं मार्गम् **अनु नेषि** अस्माननुक्रमेण प्रापयसि । किञ्च हे **इन्दो!** उन्दनशील! सर्वं जगत् अमृतेन क्लेदयितः । सोम! **तव प्रणीती** प्रणीत्या त्वत्कर्तृकेण प्रकृष्टनयनेन **धीराः** धीमन्तः, कर्मवन्तः **नः** अस्माकम् **पितरः देवेषु** इन्द्रादिषु **रत्नम्** रमणीयं धनम् **अभजन्त** असेवन्त प्राप्नुवन् । अतोऽस्मानपि तादृशं धनं प्रापयेत्यर्थः ।। १ ।।

**सायण–** 'त्वं सोम' इति त्रयोविंशत्यृचं सप्तमं सूक्तं गोतमस्यार्षं सोमदेवताकम् । पञ्चम्याद्याः षोडश्यन्ता द्वादशर्चो गायत्र्यः । सप्तदश्युष्णिक् । शिष्टा दश त्रिष्टुभः । तथा चानुक्रान्तं– 'त्वं सोम त्र्यधिका सौम्यं पञ्चम्यादि गायत्र्यो द्वादशोष्णिक् च' इति । सूक्तविनियोगो लैङ्गिकः । एकादशिनस्य सौम्यस्य पशोर्वपा पुरोडाशयोः 'त्वं सोम' इति द्वे ऋचावनुवाक्ये । सूत्रितं च– 'त्वं सोम प्र चिकितो मनीषेति द्वे' (आश्व.श्रौ.३,७) इति । महापितृयज्ञे एकैकस्य हविषो द्वे द्वे अनुवाक्ये । तत्र सोमस्य पितृमतः 'त्वं सोम' इत्येषा प्रथमानुवाक्या । 'दक्षिणाग्नेरग्निम्'

इति खण्डे सूत्रितं– 'त्वं सोम प्र चिकितो मनीषा सोमो धेनुम्' (आश्व.श्रौ.२.१९) इति। एषैव प्रायणीयेष्टौ सौम्यस्यानुवाक्या । 'तदहः प्रायणीयेष्टिः' इत्यत्र सूत्रितं– 'त्वं सोम प्र चिकितो मनीषा या ते धामानि दिवि या पृथिव्याम्' (आश्व.श्रौ.४.३) इति ।

हे **सोम त्वं मनीषा** मनीषयास्मदीयया बुद्ध्या **प्र चिकितः** प्रकर्षेण ज्ञातोऽसि वयं त्वां स्तुतिभिरज्ञासिष्मेत्यर्थः । अतः **त्वं रजिष्ठम्** ऋजुतममकुटिलं **पन्थां** पन्थानं कर्मफलावाप्तिहेतुभूतं मार्गम् **अनु नेषि** अस्माननुक्रमेण प्रापयसि । किञ्च हे **इन्दो!** उन्दनशील! सर्वं जगदमृतेन क्लेदयितः सोम **तव प्रणीती** प्रणीत्या त्वत्कर्तृकेण प्रकृष्टनयनेन **धीराः** धीमन्तः कर्मवन्तः प्रज्ञावन्तो वा **नः** अस्माकं **पितरः** देवेषु इन्द्रादिषु **रत्नं** रमणीयं धनम् **अभजन्त** असेवन्त प्राप्नुवन् । अतोऽस्मानपि तादृशं धनं प्रापयेत्यर्थः ।

प्र चिकितः । 'कित ज्ञाने' । अस्मात् कर्मणि निष्ठा । छान्दसं द्विर्वचनम् । यद्वा । यङ्लुगन्तात् निष्ठा । संज्ञापूर्वकस्य विधेरनित्यत्वात् 'गुणो यङ्लुकोः' इति अभ्यासस्य गुणाभावः । यद्वा । 'छन्दस्युभयथा' इति निष्ठायाः सार्वधातुकसंज्ञायां शप् । जुहोत्यादित्वात् तस्य श्लुः । 'श्लौ' इति द्विर्वचनम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । मनीषा । 'सुपां सुलुक्' इति तृतीयाया डादेशः । रजिष्ठम् । ऋजुशब्दात् इष्ठनि 'विभाषर्जोश्छन्दसि' (पा.सू.६.४.१६२) इति रत्वम् । 'टः' इति टिलोपः । नेपि नयतेर्लटि 'बहुलं छन्दसि' इति शपो लुक् । पन्थाम् । 'पथिमथ्यृभुक्षामात्' (पा.सू.७.१.८५) इति असावपि व्यत्ययेन आत्वम् । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । प्रणीती । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** ''त्वं सोमे'ति त्रयोर्विंशत्यृचं सप्तमं सूक्तम् । गोतमस्यार्षं सोमदेवताकं पञ्चम्याद्याः षोडशान्त्या द्वादशर्चो गायत्र्यः सप्तदशी उष्णिक् शिष्टा दश त्रिष्टुभः ।

हे **सोम! त्वम् मनीषा** मनीषया अस्मदीयया बुद्ध्या **प्रचिकितः** प्रकर्षेण ज्ञातोऽसि, ज्ञात्वैवेदं ब्रूमः । **त्वम् रजिष्ठम्** ऋजुतमं **पन्थाम्** पन्थानं दिव्यं मार्गं **अनुनेषि** अस्मान् अनुक्रमेण सोपानक्रमेण, न तु हठात्, प्रापयसि । अपि च हे **इन्द्रो** उन्दनशील, विश्वममृतेन स्वीयेन रसेन क्लेदयितः, **तव प्रणीती** प्रणीत्या प्रकृष्टनयनेन **धीराः** धीयुक्ताः प्राज्ञाः **न पितरः**

अस्माकं पूर्वे पुरुषा ऋषयः **देवेषु** इन्द्रादिषु मध्ये **रत्नम् अभजन्त** रमणीयं, सर्वं स्वीयं भागं असेवन्त, प्राप्नुवन् ।

प्रचिकितः–कित ज्ञाने, कर्मणि निष्ठा छान्दसं द्विर्वचनम् । रजिष्ठम्–ऋजुशब्दादिष्ठन्, ऋजोः छन्दसि रत्वम् । नेषि–नयतेर्लटि छन्दसि शपो लुक् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं सो॒म॒ क्रतु॑भिः सु॒क्रतु॑र्भू॒स्त्वं दक्षैः॑ सु॒दक्षो॑ वि॒श्ववे॑दाः ।**
**त्वं वृषा॑ वृष॒त्वेभि॑र्महि॒त्वा द्यु॒म्नेभि॑र्द्यु॒म्न्य॑भवो नृ॒चक्षाः॑ ।। २ ।।**

त्वम् । सो॒म॒ । क्रतु॑ऽभिः । सु॒ऽक्रतुः॑ । भूः॒ । त्वम् । दक्षैः॑ । सु॒ऽदक्षः॑ । वि॒श्वऽवे॑दाः । त्वम् । वृषा॑ । वृ॒ष॒ऽत्वेभिः॑ । म॒हि॒ऽत्वा । द्यु॒म्नेभिः॑ । द्यु॒म्नी । अ॒भ॒वः॒ । नृ॒ऽचक्षाः॑ ।। २ ।।

**स्कन्द– त्वम्** हे **सोम! क्रतुभिः** कर्मभिः प्रज्ञाभिर्वा **सुक्रतुः भूः** सुकर्मा सुप्रज्ञो वा भवसि । **त्वम् दक्षैः सुदक्षः** दक्ष इति सकारान्तं बलनाम पठितम् (निघ.२,९) । अकारान्तं तस्यैव पर्यायो द्रष्टव्यम् । त्वं बलैः सुबल इत्यर्थः । अथवा दक्षशब्दो 'दक्ष वृद्धौ' इत्यस्य क्रियाशब्दो वृद्धिपर्यायः । वृद्धिभिः सुवृद्ध इत्यर्थः । **विश्ववेदा** सर्वज्ञश्च । अथवा 'विश्वम्' (निघ.३,१) इति बहुनाम । 'वेदः' (निघ.२,१०) इत्यपि धननाम । बहुधन इत्यर्थः । **त्वम् वृषा वृषत्वेभिः महित्वा** महित्वेति बहुवचनस्य स्थान एकवचनम् । वृषत्वेभिः महित्वेति चोभयत्र स्वार्थ एव भावप्रत्ययः द्रष्टव्यः । त्वं वर्षिता महद्भिर्वर्षणैरित्यर्थः । **द्युम्नी** द्युम्नं द्योततेर्यशो वा धनं वाऽन्नं वा । यशोभिरन्नैर्धनैर्वा यशस्वी अन्नवान् धनवान् वा भवसीत्यर्थः । **नृचक्षाः** मनुष्याणां द्रष्टा ।। २ ।।

**वेङ्कटमाधव– त्वम् सोम!** कर्मभिः सुकर्मा **अभवः** । त्वम् बलैः मुबलो विश्वघनः **त्वम्** वर्षिता वर्षितृत्वैः माहात्म्येन यशोभिः यशस्वी अभवः मनुष्याणां द्रष्टा ।। २ ।।

**मुद्गल–** हे **सोम! त्वम् क्रतुभिः** त्वत्सम्बन्धिभिरग्निष्टोमादिकर्मभिः **सुक्रतुः** शोभनकर्मा **भूः** भवसि । तथा **विश्ववेदाः** सर्वधनः **त्वम् दक्षैः** आत्मीयैर्बलैः **सुदक्षः** शोभनबलो भवसि । तथा **त्वम् वृषत्वेभिः** वृषत्वैः कामाभिवर्षणैः **महित्वा** महत्त्वेन माहात्म्येन च **वृषा** कामानां वर्षिता महांश्च भवसि । तथा त्वम् **नृचक्षाः** नृणां यज्ञस्य नेतृणां यजमानानामभिमतफलस्य दर्शयिता सन् **द्युम्नेभिः** द्युम्नैस्तैर्दत्तैः हविर्लक्षणैरन्नैः **द्युम्नी अभवः** प्रभूताग्रो भवसि ।। २ ।।

**सायण–** अग्निष्टोमे मरुत्वतीये 'त्वं सोम क्रतुभिः' इत्येषा धाय्या । सूत्रितं च– 'अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः' (आश्व.श्रौ.५.१४) इति ।।

हे **सोम! त्वं क्रतुभिः** त्वत्सम्बन्धिभिरग्निष्टोमादिकर्मभिः आत्मीयैर्ज्ञानैर्वा **सुक्रतुः** शोभनकर्मा शोभनप्रज्ञो वा **भूः** भवसि । तथा **विश्ववेदाः** सर्वधनः **त्वं दक्षैः** आत्मीयैर्बलैः सुदक्षः शोभनबलो भवसि । तथा **त्वं वृषत्वेभिः** वृषत्वैः कामाभिवर्षणैः **महित्वा** महत्त्वेन माहात्म्येन च **वृषा** कामानां वर्षिता महांश्च भवसि । तथा त्वं **नृचक्षाः** नृणां यज्ञस्य नेतृणां यजमानानामभिमतफलस्य दर्शयिता सन् **द्युम्नेभिः** द्युम्नैः तैर्दत्तैर्हविर्लक्षणैरन्नैः **द्युम्नी अभवः** प्रभूतान्नो भवसि ।

सुक्रतुः । बहुव्रीहौ 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । सुदक्षः । 'दक्ष वृद्धौ' । दक्ष्यतेऽनेनेति दक्षो बलम् । करणे घञ् । ञित्त्वादाद्युदात्तत्वम् । सुशब्देन बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । विश्ववेदाः । विश्वानि वेदांसि यस्यासौ । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । वृषत्वेभिः । वृष्णो भावो वृषत्वम् । 'बहुलं छन्दसि' इति भिसः ऐसभावः । महित्वा । महेरौणादिक इन्प्रत्ययः । भावप्रत्ययान्तात् 'सुपां सुलुक्' इति विभक्तेः आकारः ।। २ ।।

**सिद्धाञ्जनम्–** हे **सोम! त्वम् ऋतुभिः** क्रियासमर्थैः स्वीयैर्ज्ञानैः **सुक्रतुः** शोभनप्राज्ञकर्मा **भूः** भवसि । **त्वम् दक्षैः** सदसद्विवेकसमर्थैर्बलैः **सुदक्षः** तादृशशोभनबलो भवसि । **विश्ववेदाः** विश्वस्य वेदिता **त्वम् वृषत्वेभिः** वृषत्वैः सेचनसामर्थ्यैः **वृषा** वर्षिता स्वीयस्य रसस्य, यजमानस्याभीष्टानां वा **महित्वा** महत्त्वेन, महिम्ना च त्वं वृषा । **द्युम्नेभिः** द्योतनैः **द्युम्नी** द्योतवान् त्वं **नृचक्षाः** नेतृणां बलवतां यजमानानां दर्शयिता दिव्यस्य मार्गस्य **अभवः** ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**राज्ञो नु ते वरुणस्य व्रतानि बृहद् गभीरं तव सोम धाम ।**
**शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ।। ३ ।।**

सज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरम् । तव । सोम । धाम । शुचिः । त्वम् । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ।। ३ ।।

**स्कन्द–** नुशब्दोऽत्र उपमायाम् । **राज्ञः** इव **वरुणस्य ते** तव **व्रतानि** अत्यन्तोत्कृष्टानि कर्माणि । **बृहत्** च गभीरम् दुरवगाहम् **तव** हे **सोम! धाम** तेजः स्थानं वा । **शुचिः** च । **त्वम् असि प्रियः** च सर्वस्य । क इव । उच्यते । **न मित्रः** पुरस्तादुपचारोऽप्ययं नशब्दः सामर्थ्यादुपमार्थीयः । मित्र इव देवताविशेषः । **दक्षाय्यः** 'दक्ष वृद्धौ' । वर्धयिता च यजमानानाम् **अर्यमा** इव देवताविशेषः **असि** भवसि हे **सोम!** ।। ३ ।।

**वेङ्कटमाधव– राज्ञः** इव **ते वरुणस्य** कर्माणि । तवापि तद्वदहिंसितानि । **बृहत्** च ते गम्भीरं शरीरम् । **शुचिः त्वम् असि** प्रियम् इव च मित्रम् । वर्धयिताऽसि **अर्यमा इव सोम!**, अपि वा पूजनीय इति ।। ३ ।।

**मुद्गल–** हे **सोम! राज्ञः** ब्राह्मणानां स्वामिनः **वरुणस्य** वृतस्य क्रीतस्य **ते** तव सम्बन्धीनि हि **व्रतानि,** सर्वाण्यग्निष्टोमादीनि कर्माणि । अतः सर्वेषु यागेषु त्वमेव कारणभूतो भवसीत्यर्थः । अतः **तव धाम** त्वदीयं तेजः **बृहत्** महद्विस्तीर्णम् गभीरम् गाम्भीर्योपेतं च । हे **सोम! त्वम् नु** क्षिप्रम् **शुचिः** सर्वेषां शोधकः असि । दृष्टान्तः । **प्रियो न मित्रः** यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत् । तथा **त्वम्, अर्यमा इव** अस्माभिर्दृश्यमानः सूर्य इव **दक्षाय्यः** असि सर्वेषां वर्धकोऽसि । यथाऽहनि सूर्यः प्रकाशेन सर्वं वर्धयति एवं निशि अमृतमयैः सोमकिरणैराप्यायमानं सत् स्थावरजङ्गमात्मकं सर्वं जगद् वर्धते ।। ३ ।।

**सायण–** हे **सोम! राज्ञः** ब्राह्मणानां स्वामिनः । 'सोमोऽस्माकं ब्राह्मणानां राजा' (तै.सं.१.८.१०.२) इति श्रुतेः । **वरुणस्य** । यागार्थमाहृतः क्रीतो वस्त्रेणावृतः सोमो वरुणः । 'वरुणोऽसि धृतव्रतः' (तै.सं.१.२.१०.२) इति मन्त्रलिङ्गात् । क्रीतस्य **ते नु** तव सम्बन्धीनि हि **व्रतानि** सर्वाण्यग्निष्टोमादीनि कर्माणि । अतः सर्वेषु यागेषु त्वमेव करणभूतः भवसीत्यर्थः । अतः **तव धाम** त्वदीयं तेजः **बृहत्** महत् विस्तीर्णं **गभीरं** गाम्भीर्योपेतं च । यद्वा । नु इत्येतदुपमार्थे । तदुक्तं यास्केन– 'अथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूत वयाः' (निरु.१.४) इति राज्ञः राजमानस्य वरुणस्य नु वरुणस्येव हे सोम ते तव व्रतानि कर्माणि लोकहितकारीणि । शिष्टं समानम् । हे **सोम! त्वं शुचिः** सर्वेषां शोधकः **असि** । तत्र दृष्टान्तः । **प्रियो न मित्रः** । यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत् । तथा त्वम्

**अर्यमेव** अस्माभिर्दृश्यमानः सूर्य इव **दक्षाय्यः असि** सर्वेषां वर्धको भवसि । यथाहनि सूर्यः प्रकाशेन सर्वं वर्धयति एवं निशि अमृतमयैः सोमकिरणैराप्यायमानं सत् स्थावरजङ्गमात्मकं सर्वं जगद्वर्धते ।

शुचिष्ट्वम् । 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' इति विसर्जनीयस्य षत्वम् । दक्षाय्यः । 'दक्ष वृद्धौ' । 'श्रुदक्षिस्पृहिगृहिभ्य आय्यः' (उ.सू.३.३७६) इति आय्यप्रत्ययः ।। ३ ।।

**सिद्धाञ्जनम्– राज्ञो वरुणस्य नु** राजमानस्य वरुणस्येव, नु उपमार्थे (निरुक्तम्) **ते** तव **व्रतानि** नियतानि दैव्यानि कर्माणि भवन्ति । हे **सोम! तव धाम** त्वदीयं तेजः **बृहत्** महद्विस्तीर्णं **गभीरम्** गाम्भीर्योपेतं च भवति । हे **सोम! त्वम् शुचिः** शोधकः **मित्रो न** मित्रो देव इव **प्रियः असि** प्रीतिकरो भवसि सर्वेषाम् । अपि च **अर्यमा इव** अर्यमा देव इव **दक्षाय्यः** ऋतानृतविवेचनपटुः असि ।

दक्षाय्यः–दक्षेः आय्यप्रत्ययः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।**
**तेभिर्नो विश्वैः सुमना अहेळन् राजन्त्सोम प्रति हव्या गृभाय ।। ४ ।।**
या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्ऽसु । तेभिः । नः । विश्वैः । सुऽमनाः । अहेळन् । राजन् । सोम । प्रति । हव्या । गृभाय ।। ४ ।।

**स्कन्द– या ते** यानि तव **धामानि** स्थानानि जन्मानि वा दिवि, **या** यानि च **पृथिव्याम्, या** यानि च **पर्वतेषु ओषधीषु अप्सु** च । **तेभिः विश्वैः** तैः सर्वैः । तृतीयानिर्देशाद् युक्त इति वाक्यशेषः । सर्वेषु स्थानेषु जन्मसु वा वर्तमान इत्यर्थः । **नः** अस्माकं स्वभूतानि **सुमनाः** प्रीतचित्तः **अहेळन्** अक्रुध्यन् हे **राजन्! सोम! प्रति हव्या गृभाय** हवींषि प्रतिगृहाण ।।

**वेङ्कटमाधव–** यानि **ते** शरीराणि **दिवि**, यानि **पृथिव्याम्,** यानि च पर्वतादिषु, तैरस्माकं सर्वैः **सुमनाः** अक्रुध्वन् **राजन्! सोम!** प्रतिगृहाण हव्यानि । बहूनि धामानि देवानां भवन्ति, यैस्तत्र तत्र हविर्गृह्णन्ति इति ।। ४ ।।

**मुद्गल**– हे **सोम! ते** तव **दिवि** द्युलोके **या** यानि **धामानि** तेजांसि वर्तन्ते । तथा **पृथिव्याम्** भूमौ **या** यानि वर्तन्ते । तथा **पर्वतेषु** पर्ववत्सु शिलोच्चयेषु **या** यानि वर्तन्ते । तथा **ओषधीषु** व्रीह्याद्योपधीषु **अप्सु** च यानि वर्तन्ते । **तेभिः विश्वैः** तैः सर्वैस्तेजोभिर्युक्तः **सुमनाः** शोभनमना **अहेळन्** अक्रुध्यन् हे **राजन्! सोम!** राजमान सोम! त्वम् **नः हव्या** अस्माभिः प्रत्तानि हवींषि **प्रति गृभाय** प्रतिगृहाण ।। ४ ।।

**सायण**– आग्रयणेष्टौ सौम्यस्य हविषः 'या ते धामानि' इति याज्या । 'आग्रयणं व्रीहिश्यामाकयवानाम्' इति खण्डे सूत्रितम्– 'सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्याम्' (आश्व.श्रौ.२.९) इति । एषैवैकादशिनस्य सौम्यस्य पशोर्वपायां याज्या । सूत्रितं च– 'या ते धामानि दिवि या पृथिव्यामषाळ्हं युत्सु पृतनासु पप्रिम्' (आश्व.श्रौ.३.७) इति । प्रायणीयेष्टावप्येषैव सौम्यस्य याज्या । सूत्रितं च– 'त्वं सोम प्र चिकितो मनीषा या ते धामानि दिवि या पृथिव्याम् (आश्व.श्रौ.४.३) इति ।

हे सोम! **ते** तव **दिवि** द्युलोके **या** यानि **धामानि** तेजांसि वर्तन्ते । तथा **पृथिव्यां** भूमौ यानि वर्तन्ते । तथा **पर्वतेषु** पर्ववत्सु शिलोच्चयेषु यानि वर्तन्ते । तथा व्रीह्याद्योषधीषु **अप्सु** च यानि वर्तन्ते । **तेभिः विश्वैः** तैः सर्वैस्तेजोभिर्युक्तः **सुमनाः** शोभनमनाः **अहेळन्** अक्रुध्यन् हे **राजन्! सोम!** राजमान सोम, एवम्भूतस्त्वं **हव्या** अस्माभिः प्रत्तानि हवींषि **प्रति गृभाय** प्रतिगृहाण ।

या । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । पृथिव्याम् । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । ओषधीषु । 'ओषधेश्च विभक्तावप्रथमायाम्' (पा.सू.६.३.१३२) इति दीर्घः । अप्सु । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । सुमनाः । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । गृभाय । 'ग्रह अपादाने' । 'छन्दसि शायजपि' इति हौ श्नाप्रत्ययस्य शायजादेशः ।। ४ ।।

**सिद्धाञ्जनम्**– हे **सोम! ते** तव **या** यानि **धामानि** तेजांसि **दिवि** द्युलोके वर्तन्ते, **या** यानि **पृथिव्याम्** पृथिवीस्थाने **या** यानि **पर्वतेषु ओषधीषु अप्सु** पर्वतादिषु च वर्तन्ते **तेभिः विश्वैः** तैः सर्वैः तेजोभिः प्रभावैर्युक्तः **सुमनाः** शोभनमनस्कः **अहेळन्** अक्रुध्यन् प्रसन्नः

सन्नित्यर्थः हे **राजन्! सोम**, राजमान सोमदेव, **नः हव्या** अस्माभिरर्पितानि सर्वाणि **प्रतिगृभाय** प्रतिगृहाण ।

या–यानि, शेर्लोपः छन्दसि । गृभाय–ग्रह उपादाने, छन्दसि श्नाप्रत्ययस्य शायजादेशः ।।

## ऋक्संहिता पदपाठसहिता

**त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः ।। ५ ।।**
त्वम् । सोम । असि । सत्ऽपतिः । त्वम् । राजा । उत । वृत्रऽहा । त्वम् । भद्रः । असि । क्रतुः ।। ५ ।।

**स्कन्द–** **त्वम्** हे **सोम! असि** भवसि **सत्पतिः** सतां पालयिता । **त्वम् राजा उत वृत्रहा** । **त्वम् भद्रः** कल्याणः **असि क्रतुः** कर्ता सर्वार्थानाम् । अथवा क्रतुशब्दः कर्मनाम प्रज्ञानाम वा (निघ.२,१३,३,९) । अन्तर्णीतमत्वर्थश्च । कर्मवान् प्रज्ञावान् वेत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** **त्वम् सोम! असि** ब्राह्मणानां पतिः, **त्वम् राजा**, अपि च शत्रुहा त्वम् भजनीयश्च असि कर्ता ।। ५ ।।

**मुद्गल–** हे **सोम! त्वम् सत्पतिः असि** सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिर्भवसि । **उत** अपि च **राजा** राजमानः **त्वम् वृत्रहा** वृत्रस्यासुरस्य हन्तासि । **भद्रः** शोभनः **क्रतुः** योऽयमग्निष्टोमादियागः त्वम् एव तद्रूपः असि ।। ५ ।।

**सायण–** पौर्णमासेष्टौ सौम्यस्याज्यभागस्य 'त्वं सोम' इत्येषानुवाक्या । सूत्रितं च– 'अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या त्वं सोमासि सत्पतिरित्युत्तरस्य' (आश्व.श्रौ. १.५) इति । एवं यत्र यत्र वार्त्रघ्नावाज्यभागौ तत्र सर्वत्रास्या विनियोगः । प्रातःकालीनायामुपसदि प्रधानस्य सौम्यस्यैषैवानुवाक्या । आपराह्णिक्यामुपसदि सैव याज्या । सूत्रितं च– 'त्वं सोमासि सत्पतिर्गयस्फानो अमीवहा' इति, 'विपर्यासौ याज्यानुवाक्यानाम्' (आश्व.श्रौ.४.८) इति च ।।

हे **सोम! त्वं सत्पतिः असि** सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिर्भवसि । 'तस्मात्सोमराजानो ब्राह्मणाः' (तै.ब्रा.१.७.४.२) इति श्रुतेः । यद्वा । सन्तः स्वानादयः पतयः पालका यस्य सोमस्य तादृशो भवसि । तथा चाम्नायते– 'स्वान भ्राजेत्याहैते वा अमुष्मिन्

लोके सोममरक्षन्' (तै.सं.६.१.१०.५) इति । **उत** अपि च **राजा** राजमानः **त्वं वृत्रहा** वृत्रस्यासुरस्य शत्रोर्वा हन्तासि । **भद्रः** शोभनः **क्रतुः** योऽयमग्निष्टोमादियागः **त्वम्** एव तद्रूपो भवसि । त्वत्साध्यतद्यागानाम् ।

सत्पतिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । तत्पुरुषपक्षे तु 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **सोम! त्वम् सत्पतिरसि** सतो वस्तुजातस्य सर्वस्याधिपतिरसि । **उत** अपि च **राजा** राजमानः **त्वम् वृत्रहा** वृत्रमावरकं सर्वं तमोऽसुरं वा हन्तीति वृत्रहा । **त्वम् भद्रः** शोभनः **क्रतुरसि** प्राज्ञकर्मरूपश्च भवसि ।। ५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये एकोनविंशो वर्गः ।।

## ।। अथ विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वं च॑ सोम नो वशो॑ जी॒वातुं॒ न म॑रामहे । प्रि॒यस्तो॑त्रो॒ वन॒स्पतिः॑ ।। ६ ।।**
**त्वम् । च॒ । सो॒म । न॒ः । वश॑ः । जी॒वातु॑म् । न । म॒रा॒म॒हे॒ । प्रि॒यऽस्तो॑त्रः । वन॒स्पतिः॑ ।।**

**स्कन्द–** च-शब्दोऽत्र पदपूरणः । त्वम् हे **सोम! नः** अस्मभ्यम् **वशः** 'वश कान्तौ' । काम्यः प्रार्थयितव्यः । सर्वस्तोतॄणां याच्य इत्यर्थः । **जीवानुम्** जीविकाम् । कर्मसम्प्रदानश्रुत्योः साकाङ्क्षत्वात् देहीति वाक्यशेषः । अथवा त्वं च इति चशब्दश्रुतिसामर्थ्यात् त्वं च त्वदनुचराश्चेति वाक्यशेषः । त्वं च सर्वस्तोतॄणां याच्यः त्वदनुचराश्चास्मभ्यं जीविकां दत्तेति । अनुचराणां चात्र गुणता सोमस्यैव प्राधान्यम् इति सौम्यत्वस्याविरोधः । किं कारणं वाच्यः । उच्यते । यस्माद् वयं **न मरामहे** म्रियतिरत्र सामर्थ्यादन्तर्णीतसन्नर्थः । न शीघ्रं मुमूर्षाम इत्यर्थः । कीदृशोऽहम् । उच्यते । **प्रियस्तोत्रः** स्तुतिप्रियः । **वनस्पतिः** वनानां पालयिता स्वामी वा ।।

**वेङ्कटमाधव– त्वम्** चेत् **सोम!** अस्मान् कामयेथाः जीवयितुम्, **न मरामहे, प्रियस्तोत्रः** वनानां पालयिता ।। ६ ।।

**मुद्गल–** हे **सोम! नः** अस्माकं स्तोतॄणाम् **जीवातुम्** जीवनौषधम् त्वम् च त्वं चेत्

**वशः** कामयेथाः तदनीं वयम् **न मरामहे** न म्रियामहे । कीदृशस्त्वम् । **प्रियस्तोत्रः** प्रियाणि स्तोत्राणि यस्य सः । बहुभिः स्तोतव्य इत्यर्थः । **वनस्पतिः** वनानामोषधिवनस्पतिरूपाणां पतिः पालयिताऽसि ॥ ६ ॥

**सायण–** साग्निचित्ये क्रतावग्नीषोमीयस्य पशुपुरोडाशमनु अष्टौ देवसुवां हवींषि निरुप्यन्ते । तत्र सोमस्य वनस्पतेर्हविषः 'त्वं च सोम' इत्येषानुवाक्या । 'अथाग्नीषोमीयेण' इति खण्डे सूत्रितं– 'त्वं च सोम नो वशो ब्रह्मा देवानां पदवीः कवीनाम्' (आश्व.श्रौ.४.११) इति ॥

हे **सोम! नः** अस्माकं स्तोतृणां **जीवातुं** जीवनौषधं **त्वं च** त्वं चेत् **वशः** कामयेथाः तदानीं वयं **न मरामहे** न म्रियामहे । कीदृशस्त्वम् । **प्रियस्तोत्रः** । प्रियाणि स्तोत्राणि यस्य स तथोक्तः । बहुभिः स्तोतव्य इत्यर्थः । **वनस्पतिः** वनानामोषधिवनस्पतिरूपाणां पतिः पालयितासि । 'सोमो वा ओषधीनां राजा' (तै.सं.६.१.९.१) इति श्रुतेः ।

वशः । 'वश कान्तौ' । लेटि सिपि अडागमः । आगमानुदात्तत्वे धातुस्वरः शिष्यते । त्वं चेति चशब्दश्चणिति निपातान्तरं चेदर्थम् । तद्योगात् 'निपातैर्यद्यदिहन्त' इति निघातप्रतिषेधः । जीवातुम् । 'जीव प्राणधारणे' । 'जीवेरातुः' (उ.सू.१.७९) । मरामहे । 'मृङ् प्राणत्यागे' । व्यत्ययेन शप् ॥ ६ ॥

**सिद्धाञ्जनम्–** हे **सोम! नः** अस्माकं **जीवातुम्** जीवनौषधं **त्वम् च** त्वं चेत् **वशः** कामयेथाः तदा **वयम् न मरामहे** न म्रियामहे, अमृता भवामः । त्वं **प्रियस्तोत्रः** प्रियाणि स्तोत्राणि यस्य सः, यमुद्दिश्य प्रीत्या बहूनि स्तोत्राणि प्रवर्तन्ते महर्षीणामित्यर्थः । **वनस्पतिः** ओषधीशः वनानां पतिरिति बाह्यः पक्षः । वनस्य वननीयस्य रसस्यानन्दस्य पतिरिति रहस्यम् । त्वं चेति चशब्दः चेदर्थे निपातितः ।

वशः–वश कान्तौ, लेटि सिप्यडागमः । जीवातुम्–जीवेरातुः । मरामहे–मृञ् प्राणत्यागे, व्यत्ययेन शप् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवसे ॥ ७ ॥**

**त्वम् । सोम । महे । भगम् । त्वम् । यूने । ऋतऽयते । दक्षम् । दधासि । जीवसे ॥**

**स्कन्द– त्वम्** हे **सोम! महे** महते, वृद्धाय । स्थविरायेत्यर्थः । **भगम्** धनम् । **त्वम्** एव **यूने** तरुणाय **ऋतायते** यज्ञं कामयमानाय **दक्षम्** बलं वृद्धिं वा । **दधासि** ददासि **जीवसे** जीवितुम् ॥ ७ ॥

**वेङ्कटमाधव– त्वम्** हे **सोम!** वृद्धाय धनं दधासि, **त्वम् यूने** च यज्ञमिच्छते बलं च यच्छसि जीवनाय ॥ ७ ॥

**मुद्गल–** हे **सोम! त्वम् महे** महते प्रवृद्धाय **ऋतायते**, इतं यज्ञमात्मन इच्छते पुरुषाय **जीवसे** जीवितुम् **दक्षम्** उपभोगसमर्थम् **भगम्** धनम् **दधासि** विदधासि करोषि । तथा **त्वम् यूने** तरुणाय च **ऋतायते** जीवितुं धनं करोषि ॥ ७ ॥

**सायण–** आयुष्कामेष्ट्यां द्वितीयस्याज्यभागस्य 'त्वं सोम महे भगम्' इत्येषानुवाक्या । 'अथ काम्याः' इति खण्डे सूत्रितम्–' आ नो अग्ने सुचेतुना त्वं सोम महे भगम्' (आश्व.श्रौ. २.१०) इति ।

हे **सोम! त्वं महे** महते वृद्धाय **ऋतायते** ऋतं यज्ञमात्मन इच्छते पुरुषाय **जीवसे** जीवितुं **दक्षम्** उपभोगसमर्थं **भगं** धनं दधासि विदधासि करोषि । तथा त्वं **यूने** तरुणाय च ऋतायते जीवितुं धनं करोषि ।

महे । महते । अच्छब्दलोपश्छान्दसः । 'बृहन्महतोरुपसङ्ख्यानम्' इति विभक्तेरुदात्तत्वम् । यूने । 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम् । ऋतायाते । ऋतमात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । क्यजन्तात् घटः शतृ । 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् । जीवसे । 'जीव प्राणधारणे' । 'तुमर्थे सेसेन्' इति असेप्रत्ययः ॥ ७ ॥

**सिद्धाञ्जनम्–** हे **सोम! त्वम्, ऋतायते** ऋतं सत्यं सत्यधर्मं वा आत्मन इच्छते **महे** महते, तपसा वृद्धाय पुरुषाय **भगम्** भजनीयं सुखं **दधासि** विदधासि । **त्वम्** ऋतायते यूने तरुणाय **जीवसे** चिरकालं जीवितुं **दक्षम्** युक्तायुक्तविवेकसामर्थ्यं विदधासि ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत् त्वावतः सखा ॥ ८ ॥**
त्वम् । नः । सोम । विश्वतः । रक्ष । राजन् । अघऽयतः । न । रिष्येत् । त्वाऽवतः । सखा ॥ ८ ॥

**स्कन्द– त्वम् नः** अस्मान् हे **सोम! विश्वतः** सर्वस्मात् रक्ष हे **राजन्! अघायतः** पापमिच्छतः । किं कारणम् । उच्यते । यस्मात् **न रिष्येत्** न रिष्यते न हिंस्यते । **त्वावतः** त्वत्सदृशस्य **सखा** । वयश्च तव सखायः ॥ ८ ॥

**वेङ्कटमाधव– त्वम्** अस्मान् **सोम!** सर्वतः पापमिच्छतः **रक्ष** । न विनष्टो भवति त्वत्सदृशस्य **सखा** ॥ ८ ॥

**मुद्गल–** हे **सोम! राजन्!** राजनशील! **त्वम् अघायतः** अघं पापं तद्धेतुकं दुःखमस्माकं कर्तुमिच्छतः **विश्वतः** सर्वस्मादपि पुरुषात् **नः** अस्मान् **रक्ष** पालय । **त्वावतः** त्वत्सदृशस्य **सखा** सख्यं प्राप्तः पुरुषः **न रिष्येत्** न हि विनश्येत् । किमु वक्तव्यं त्वत्सखा न विनश्यति ॥

**सायण–** स्वस्त्ययन्यां द्वितीयस्याज्यभागस्य 'त्वं नः सोम' इत्येषानुवाक्या । सूत्रितं च– 'स्वस्त्ययन्यां रक्षितवन्तावग्रे रक्षा णो अंहसस्त्वं नः सोम विश्वतः' (आश्व.श्रौ.२.१०) इति ॥

हे **सोम! राजन्!** राजनशील **त्वम् अघायतः** । अघं पापम् । तद्धेतुकं दुःखमस्माकं कर्तुमिच्छतः **विश्वतः** सर्वस्मादपि पुरुषात् **नः** अस्मान् रक्षपालय । **त्वावतः** त्वत्सदृशस्य **सखा** सख्यं प्राप्तः पुरुषः **न रिष्येत्** नहि विनश्येत् किमु वक्तव्यं त्वत्सम्वा न विनश्यतीति ।

अघायतः । अघं पापं परेषामिच्छतीत्यघायन् । 'छन्दसि परेच्छायामपि' इति क्यच् । 'अश्वाघस्यात्' इति आत्वम् । रिष्येत् । 'रुष रिष हिंसायाम्' । त्वावतः । 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' इति वतुप् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । 'आ सर्वनाम्नः' इति आत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्– हे सोम! राजन्, त्वम् अघायतः** पापं अस्माकं कर्तुं इच्छतः **विश्वतः** सर्वस्मादपि पुरुषात् अदैव्यात् मनुष्यादसुराद्वा **नः रक्ष** अस्मान् पालय । **त्वावतः** त्वत्सदृशस्य **सखा** सख्यं प्राप्तो मादृशः **न रिष्येत्** न विनश्येत् ।

अघायतः–छन्दसि परेच्छायामपि क्यच् । त्वावतः–छन्दसि सादृश्य उपसङ्ख्यानमिति वतुप् ।।

## ऋक्संहिता पदपाठसहिता

**सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ।। ९ ।।**
**सोम । याः । ते । मयःऽभुवः । ऊतयः । सन्ति । दाशुषे । ताभिः । नः । अविता । भव ।। ९ ।।**

**स्कन्द–** हे **सोम! याः ते मयोभुवः** सुखस्य भावयित्र्यः । **ऊतयः** पालनानि सन्ति **दाशुषे** यजमानस्यार्थाय, **ताभिः नः अविता भव** ।। ९ ।।

**वेङ्कटमाधव– सोम!** यानि तत्र सुखस्य भावयितृणि पालनानि भवन्ति यजमानाय, तैः **भव** अस्माकं रक्षिता ।। ९ ।।

**मुद्गल–** हे **सोम!** ते तव सम्बन्धिन्यः **दाशुषे** चरुपुरोडाशादि दत्तवते यजमानाय **मयोभुवः** मयसः सुखस्य भावयित्र्यः **याः ऊतयः** रक्षाः **सन्ति** विद्यन्ते, **ताभिः** रक्षाभिः **नः** अस्माकम् **अविता** रक्षिता **भव** ।। ९ ।।

**सायण–** सोमप्रवहणे 'सोम यास्ते' इति तृचोऽनुवक्तव्यः । सूत्रितं च– 'सोम यास्ते मयोभुव इति तिस्रः' (आश्व.श्रौ.४.४) इति । आग्रयणे सौम्यस्य 'सोम यास्ते' इत्येषानुवाक्या । सूत्रितं च– 'सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्याम्' (आश्व.श्रौ.२.९) इति । अश्वमेधेऽपि पौष्ण्यामिष्टौ द्वितीयस्याज्यभागस्यैषानुवाक्या । सूत्रितं च– 'त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ' (आश्व.श्रौ.१०.६) इति ।

हे **सोम! ते** तव सम्बन्धिन्यः **दाशुषे** चरुपुरोडाशादीनि दत्तवते यजमानाय **मयोभुवः** मयसः सुखस्य भावयित्र्यः **याः ऊतयः** रक्षाः सन्ति विद्यन्ते **ताभिः** रक्षाभिः **नः** अस्माकम् **अविता** रक्षिता भव ।

मयोभुवः । अस्य ऊतिविशेषणत्वेन स्त्रीलिङ्गत्वे' (पा.सू.४.१.४७) इति ङीष् प्राप्नोति । तत् 'वोतो गुणवचनात्' इत्यस्मात् उतः इति तपरकरणस्यानुवर्तनात् न भवति ।। ९ ।।

**सिद्धाञ्जनम्**– हे **सोम! ते** तुभ्यं **दाशुषे** यथाभागं दत्तवते यजमानाय **याः** त्वदीयाः **मयोभुवः** सुखस्य भावयित्र्यः **ऊतयः** रक्षाः वृद्धिकृतः **सन्ति, ताभिः** ऊतिभिः **नः** अस्माकं **अविना** वर्धयिता **भव** ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**इमं यज्ञमिदं वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ।। १० ।।**

इमम् । यज्ञम् । इदम् । वचः । जुजुषाणः । उपऽआगहि । सोम । त्वम् । नः । वृधे । भव ।। १० ।।

**स्कन्द**– **इमम् यज्ञम् इदम् वचः** स्तुतिलक्षणम् **जुजुषाणः** हेतावयं शानच्, व्यत्ययश्च विकरणस्य द्रष्टव्यः । प्रयोजनस्य च हेतुत्वेन विवक्षा । सेवितुमित्यर्थः । **उपागहि** उपागच्छ । उपागम्य च हे **सोम! त्वम् नः वृधे** वर्धनाय भव ।। १० ।।

**वेङ्कटमाधव**– **इमम् यज्ञम् इदम्** च स्तोत्रं प्रीयमाणः उपागच्छ । **सोम! त्वम्** अस्माकं वर्धनाय **भव** ।। १० ।।

**मुद्गल**– हे **सोम! त्वम् इमम्** अस्माभिः क्रियमाणम् **यज्ञम् इदम् वचः** इदानीं क्रियमाणं स्तुतिलक्षणं वचः **जुजुषाणः** सेवमानः सन् **उपायहि** उपागच्छ, प्राचीनवंशलक्षणं गृहे प्राप्नुहि । प्राप्य च **नः** अस्माकम् **वृधे** यज्ञस्य वर्धनाय **भव** ।। १० ।।

**सायण**– हे **सोम! त्वम् इमम्** अस्माभिः क्रियमाणं यज्ञम् **इदं वचः** इदानीं क्रियमाणं स्तुतिलक्षणं वचनं **जुजुषाणः** सेवमानः सन् **उपागहि** उपागच्छ प्राचीनवंशलक्षणं गृहं प्राप्नुहि । प्राप्य च **नः** अस्माकं **वृधे** यज्ञस्य वर्धनाय **भव** ।

जुजुषाणः । 'जुषी प्रीतिसेवनयोः । छन्दसि लिट् । लिटः कानच् । 'चितः' इत्यन्तोदात्तत्वम् । उपागहि । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'अनुदात्तोपदेश' इत्यादिना मकारलोपः । 'असिद्धवदत्रा भात्' इति अस्य असिद्धत्वात् हेः लुगभावः । 'गतिर्गतौ' (पा.सू.८.१.७०) इति पूर्वस्य गतेर्निघातः ।। १० ।।

**सिद्धाञ्जनम्**– हे **सोम! त्वम् इमम् यज्ञम्** अस्मदीयं यजनं **इदम् वचः** इदानीमुच्चार्यमाणं

मन्त्रात्मकं स्तोत्रं च **जुजुषाणः** प्रीत्या सेवमानः सन् **उपागहि** उपागच्छ । **नः** अस्माकं **वधे** वृद्धये **भव** कल्पस्व ।

जुजुषाणः–जुषी प्रीतिसेवनयोः, छन्दसि लिटः कानच् ॥ १० ॥

**॥ इति प्रथमाष्टके षष्ठाध्याये विंशो वर्गः ॥**

## ॥ अथ एकविंशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

**सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आ विश ॥ ११ ॥**
**सोम । गीःऽभिः । त्वा । वयम् । वर्धयामः । वचःविदः । सुऽमृळीकः । नः । आ । विश ॥ ११ ॥**

**स्कन्द–** वृधन्वतः आज्यभागस्य पुरोऽनुवाक्यैषा । हे **सोम! गीर्भिः** स्तुतिलक्षणाभिर्वाग्भिः **त्वा** त्वाम् **वयम्** वर्धयामः **वचोविदः** स्तुतिलक्षणस्य वचसो वेदितारः । सम्यक् स्तोतुं ज्ञातार इत्यर्थः । स एतत् ज्ञात्वा **सुमृळीकः** सुसुखः सन् **नः आ विश** प्रविश उपविश अस्माकम् याज्यालक्षणं हविः प्रतिग्रहीतुम् ॥ ११ ॥

**वेङ्कटमाधव– सोम**! स्तुतिभिः त्वाम् **वयम् वर्धयामः** स्तोत्रविदः । सुष्ठु सुखयिता सन् अस्मान् **आ विश** ॥ ११ ॥

**मुद्गल–** हे **सोम! त्वा** त्वाम् **वचोविदः** स्तुतिलक्षणानां वचसां वेदितारः **वयम् गीर्भिः** स्तुतिलक्षणैर्वचोभिः **वर्धयामः** प्रवृद्धं कुर्मः । स्वश्च **नः** अस्माकम् **सुमृळीकः** शोभनं सुखं कुर्वन् सन् **आ विश** आगच्छ ॥ ११ ॥

**सायण–** दर्शयागे सौम्यस्याज्यभागस्य 'सोम गीर्भिः' इत्येषानुवाक्या । सूत्रितं च– 'अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयम्' (आश्व.श्रौ.१.५) इति । अन्यत्रापि यत्र वृधन्वन्तावाज्यभागौ तत्रैषा द्वितीयाज्यभागानुवाक्या ।

हे **सोम! त्वा** त्वां **वचोविदः** स्तुतिलक्षणानां वचसां वेदितारः **वयम्** अनुष्ठातारः **गीर्भिः**

स्तुतिलक्षणैर्वचोभिः **वर्धयामः** प्रवृद्धं कुर्मः । तादृशस्त्वं च **नः** अस्माकं **सुमृळीकः** शोभनं सुखं कुर्वन् सन् **आ विश** आगच्छ ।

सुमृळीकः । 'मुड सुखने' । 'मृडे कीकन्ककनौ' (उ.सू.४.४६४) इति भावे कीकन्प्रत्ययः । शोभनं मृडीकं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्–** हे **सोम! त्वा** त्वां **वचोविदः** मन्त्रलक्षणस्य वचसो वेदितारः **वयम् गीर्भिः** स्तुतिभिर्वाग्भिः **वर्धयामः**, स्तुत्या हि देवता वर्धते । **नः** अस्माकं **सुमृळीकः** शोभनसुखकरः **आविश** आगच्छ, अस्माकमन्तराविष्टो भवेत्यर्थः ।

सुमृळीकः–मृड सुखने, अस्माद्भावे कीकन्प्रत्ययः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**गयस्फानो॑ अमीव॒हा व॑सु॒वित् पु॑ष्टि॒वर्ध॑नः । सु॒मि॒त्रः सो॑म नो भव ।। १२ ।।**
**ग॒य॒ऽस्फान॑ः । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः । सु॒ऽमि॒त्रः । सो॒म॒ । न॒ः । भ॒व॒ ।।**

**स्कन्द–** गय इत्यपत्यनाम गृहनाम वा धननाम वा । स्फायिर्वृद्ध्यर्थः । अपत्यस्य धनस्य गृहस्य वा वर्धयिता **गयस्फानः** । **अमीवहा** हिंहितॄणां हन्ता । **वसुवित्** । विन्दतिर्लाभार्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । धनानां लम्भयिता । दातेत्यर्थः । **पुष्टिवर्धनः** सर्वप्रकारायाः पुष्टेर्वर्धयिता । **सुमित्रः** शोभनानि मित्राणि सुमित्राणि । तानि करोतीति सुमित्रयति । तत्करोतीति णिच् । सुमित्रयतेरच् । शोभनानां मित्राणां कर्ता । हे **सोम! नः** अस्माकम् **भव** ।।१२।।

**वेङ्कटमाधव–** धनस्य वर्धयिता रक्षसां हन्ता धनानां लम्भयिता पुष्टेर्वर्धयिता कल्याणं मित्रम् **भव सोम!** अस्माकम् । 'गयस्फानोऽमीवहा' (माश.११,४,३,१९) इति, 'गवां न स्फावयिता (ऐ.ब्रा १,१३) इति तु ब्राह्मणम् ।। १२ ।।

**मुद्गल– गयस्फानः** धनस्य वर्धयिता **अमीवहा** अमीवानां रोगाणां हन्ता **वसुवित्** स्तोतॄणां धनस्य प्रापयिता **पुष्टिवर्धनः** पुष्टेः सम्पदो वर्धयिता **सुमित्रः** शोभनानि मित्राणि सखायो यस्य सः । हे **सोम! त्वम् नः** अस्माकम् एवंगुणविशिष्टः **भव** ।। १२ ।।

**सायण–** सन्ति पवमानेष्टयस्तिस्रः । तत्र तृतीयस्यामिष्टावुत्तरस्याज्यभागस्य 'गयस्फानः' इत्येषानुवाक्या । सूत्रितं च– 'पुष्टिमन्तावग्निना रयिमश्नवद्गयस्फानो अमीवहा' (आश्व.श्रौ.२.१) इति । एषैव प्रातःकालीनोपसदि सौम्ययागस्य याज्या सायंकालीनायां त्वनुवाक्या । सूत्रितं च 'अथोपसत्' इति खण्डे– 'त्वं सोमासि सत्पतिर्गयस्फानो अमीवहा' (आश्व.श्रौ.४.८) इति ॥

**गयस्फानः** । गयः इति धननाम । धनस्य वर्धयिता **अमीवहा** अमीवानां रोगाणां हन्ता **वसुवित्** स्तोतृणां धनस्य लम्भयिता प्रापयिता **पुष्टिवर्धनः** पुष्टेः सम्पदो वर्धयिता **सुमित्रः** । शोभनानि मित्राणि सखायो यस्य स तथोक्तः । हे **सोम!** त्वं **नः** अस्माकम् एवंगुणविशिष्टः **भव** ।

गयस्फानः । 'स्फायी वृद्धौ' । अन्तर्भावितण्यर्थात् ल्युटि व्यत्ययेन यलोपः । इदमादिषु चतुर्षु पदेषु कृदुत्तरपदप्रकृतिस्वरत्वम् । सुमित्रः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

**सिद्धाञ्जनम्– गयस्फानः** गय इति धननामेति सायणः, गृहेऽपि वर्तते, गयो गमनं गतिरिति व्याख्यातम् (१.७४.२) गमनस्य दिव्ययात्रात्मकस्य वर्धयिता प्रोद्बलयितेत्यर्थः **अमीवहा** अमीवानां रोगाणां हन्ता **वसुवित्** धनस्य सर्वस्यापि वेदिता **पुष्टिवर्धनः** पोषणस्य वर्धयिता **सुमित्रः** शोभनानि **मित्राणि** सुहृदो यस्य सः, हे **सोम! नः** अस्माकं एवंविधः **भव** ।

गयस्फानः–स्फायी वृद्धौ, अस्मादन्तर्भावितण्यर्थात् ल्युटि व्यत्ययेन यलोपः ॥ १२ ॥

## ऋक्संहिता पदपाठसहिता

**सोम॑ रार॒न्धि नो॑ हृ॒दि गावो॒ न यव॑से॒ष्वा । मर्य॑ इ॒व॒ स्व ओ॒क्ये॑ ॥ १३ ॥**

सोम॑ । र॒र॒न्धि । नः॒ । हृ॒दि । गाव॑ः । न । यव॑सेषु । आ । मर्य॑ःऽइव । स्वे । ओ॒क्ये॑ ॥

**स्कन्द–** हे **सोम! ररन्धि** अत्यर्थं रमस्व । **नः हृदि** अस्माकं हृदये । **गावः न यवसेषु** यवसशब्दो वासवचनः । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । गाव इव यवसवत्सु देशेषु । आकारस्तु पदपूरणः । **मर्य इव स्वे ओक्ये** स्वार्थेऽयं यत्प्रत्ययः । ओक्ये निवासस्थाने ॥ १३ ॥

**वेङ्कटमाधव– सोम!** रमस्वास्माकं हृदये, गावः हव तृणेषु, मनुष्य इव च स्वे गृहे ॥

**मुद्गल–** हे **सोम!** त्वम् **नः** अस्माकम् **हृदि** हृदये **ररन्धि** रमस्व । निदर्शनद्वयम् । **गावः न** यथा गावः **यवसेषु** शोभनतृणेषु **आ** आभिमुख्येन रमन्ते । **मर्यः इव** यथा वा मर्यो मरणधर्मा मनुष्यः **स्वे ओक्ये** स्वकीये ओकसि गृहे पुत्रादिभिः सह रमते तद्वदस्माभिर्दत्तेन हविषा तृप्तः सन् अस्मास्वेवावतिष्ठस्व ।। १३ ।।

**सायण–** हे **सोम!** त्वं **नः** अस्माकं **हृदि** हृदये **ररन्धि** रमस्व । तत्र निदर्शनद्वयमुच्यते । **गावो न** । यथा गावः **यवसेषु** शोभनतृणे **आ** आभिमुख्येन रमन्ते । **मर्यइव** । यथा वा मर्यो मरणधर्मा मनुष्यः **स्वे ओक्ये** स्वकीये ओकसि गृहे पुत्रादिभिः सह रमते तद्वदस्माभिर्दत्तेन हविषा तृप्तः सन् अस्मास्वेवावतिष्ठस्व । नान्यत्र गच्छेति निदर्शनद्वयस्य तात्पर्यार्थः ।

ररन्धि । 'रमु क्रीटायाम्' । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपः श्लुः । 'छन्दस्युभयथा' इति हेः आर्धधातुकत्वेन ङित्त्वाभावात् 'अङितश्च' इति हेर्धिः । अत एव अङित्त्वात् अनुनासिकलोपाभावः । 'सेर्ह्यपिच्च' इति हेः अपित्त्वात् तस्यैव स्वरः शिष्यते । छान्दसमभ्यासदीर्घत्वम् । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्य अविद्यमानवत्त्वात् पदादपरत्वेन निघाताभावः । मर्यइव । 'छन्दसि निष्टर्क्य' इत्यादौ मर्यशब्दो यत्प्रत्ययान्तो निपात्यते । 'यतोऽनावः' इत्याद्युदात्तत्वम् । ओक्ये । 'उच समवाये' । उच्यते समवेयते प्राप्यते इति ओक्यं गृह्यम् । 'ऋहलोर्ण्यत्' । 'चजोः कु धिण्यतोः' इति कुत्वम् । तित्स्वरितः ।। १३ ।।

**सिद्धाञ्जनम्–** हे **सोम! नः हृदि** अस्मदीये हृदये **ररन्धि** रमस्व । तत्र द्वौ दृष्टान्तौ भवतः–**गावो न यवसेषु आ** यथा गावः शोभनतृणेषु आभिमुख्येन रमन्ते, अपि च **मर्य इव स्वे ओक्ये** यथा वा मनुष्यः स्वीये ओकसि गृहे स्वीयैः सह रमते तद्वत् ।

ररन्धि–रमु क्रीडायाम्, व्यत्ययेन परस्मैपदम्, शपः श्लुः हेर्धिश्च छान्दसौ । ओक्ये–उच समवाये, उच्यते समवेयते प्राप्यत इत्योक्यं गृहम् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**यः सोम सख्ये तव रारणद् देव मर्त्यः । तं दक्षः सचते कविः ।। १४ ।।**

**यः । सोम । सख्ये । तवं । रण॑त् । देव । मर्त्यः । तम् । दक्षः । सचते । कविः ।।**

**स्कन्द– यः** हे **सोम! सख्ये तव** । देवानां मनुष्याणां च किं सख्यम् । यष्टव्याः देवाः यष्टारो मनुष्या इति । तस्मिन् सख्ये **तव** त्वदीये । यागे इत्यर्थः । **ररणत्** अत्यन्तं रमते । हे **देव! मर्त्यः** मनुष्यः । **तम् दक्षः** बलं वृद्धिं वा **सचते** सेवते । बलं वृद्धिं वा प्राप्नोतीत्यर्थः । **कविः** मेधावी ।। १४ ।।

**वेङ्कटमाधव– यः सोम! तव सख्ये** रमते **देव!** मनुष्यः, **तम्** समर्थः स्तोता सेवते स्तोतुम् ।। १४ ।।

**मुद्गल**– हे **देव!** द्योतमान! **सोम! तव सख्ये** त्वदीये सखित्वे निमित्तभूते सति यः **मर्त्यः** मरणधर्मा यजमानः **ररणत्** रणति एतत्सूक्तरूपेण स्तोत्रेण त्वां स्तौति । **तम्** यजमानम् **कविः** क्रान्तदर्शी **दक्षः** सर्वकार्यसमर्थस्त्वम् **सचते** सचसे सेवसे । अनुगृह्णासीत्यर्थः ।।१४।।

**सायण–** हे **देव!** द्योतमान **सोम! तव सख्ये** त्वदीये सखित्वे निमित्तभूते सति **यः मर्त्यः** मरणधर्मा यजमानः **रारणत्** रणति एतत्सूक्तरूपेण स्तोत्रेण त्वां स्तौति **तं** यजमानं **कविः** क्रान्तदर्शी **दक्षः** सर्वकार्यसमर्थस्त्वं **सचते** सेवसे । अनुगृह्णासीत्यर्थः ।

ररणत् । रण शब्दार्थः । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'इतश्च लोपः' इति इकारलोपः । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अचि अनिटि लसार्वधातुके विधीयमानस्य अभ्यस्ताद्युदात्तत्वस्याभावे धातुस्वरः शिष्यते । सचते । 'षच समवाये' । पुरुषव्यत्ययः ।। १४ ।।

**सिद्धाञ्जनम्–** हे **सोम! देव!** द्योतमान, **तव सख्ये** सखित्वे निमित्तभूते **यः मर्त्यः** मनुष्यः **ररणत्** त्वां रणति स्तौति, **तम्** त्वदीयसख्यलिप्सुं पुरुषं **दक्षः** विवेचनपटुः **कविः** सत्यस्य द्रष्टा त्वम् **सचते** सचसे सेवसे, व्यत्ययेन प्रथमपुरुषः, अनुगृह्णासीत्यर्थः ।

ररणत्–रथ शब्दे, लेट्यडागमः, शपः श्लुः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः । सखा सुशेव एधि नः ॥ १५ ॥**
उरुष्य । नः । अभिऽशस्तेः । सोम । नि । पाहि । अंहसः । सखा । सुऽशेवः । एधि । नः ॥ १५ ॥

**स्कन्ध– उरुष्य नः** पालय अस्मान् **अभिशस्तेः** अभिहिंसितुः हे **सोम!** न च केवलात् अभिशस्तेः । **नि पाहि** नियमेन रक्ष **अंहसः** पापादपि । **सखा** च **सुशेवः** सुसुखः **एधि भव नः** अस्माकम् ॥ १५ ॥

**वेङ्कटमाधव–** रक्ष अस्मानभिशंसनात् **सोम!** । **नि** रक्षास्मानाहन्तुः । **सखा** सुसुखो भवास्माकम् ॥ १५ ॥

**मुद्गल–** हे **सोम!** त्वम् **नः** अस्मान् अभिशस्तेः अभिशंसनात् अभिशापरूपात् निन्दनात् **उरुष्य** रक्ष । तथा **अंहसः** अस्मत्कृतात् पापाच्च **नि पाहि** नितरां पालय । एवम् **नः** अस्मदीयं पापं परिहृत्य **सुशेवः** अस्मभ्यं दातव्येन शोभनेन सुखेन युक्तः सन् **सखा एधि** हितकारी भव ॥ १५ ॥

**सायण–** हे **सोम!** त्वं **नः** अस्मान् **अभिशस्तेः** अभिशंसनात् अभिशापरूपान्निन्दनात् **उरुष्य** रक्ष । 'उरुष्यती रक्षाकर्मा' (निरु.५.२३) इति यास्कः । तथा **अंहसः** अस्मत्कृतात् पापाश्च **नि पाहि** नितरां पालय । एवमस्मदीयं पापं परिहृत्य **सुशेवः** अस्मभ्यं दातव्येन शोभनेन सुखेन युक्तः सन् **सखा एधि** हितकारी भव ।

अभिशस्तेः । 'शंसु स्तुतौ' । अस्मात् भावे क्तिन् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । एधि । 'अस भुवि' । लोटि सेर्हिः । तस्य ङित्त्वात् 'श्नसोरल्लोपः' इति अकारलोपः । 'ध्वसोरेद्धावभ्यासलोपश्च' इति सकारस्य एत्वम् । तस्य 'असिद्धवदत्रा भात्' इति असिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः ॥ १५ ॥

**सिद्धाञ्जनम्–** हे **सोम! त्वम् नः** अस्मान् **अंहसः** पाप्मनः **अभिशस्तेः** अभिशंसनात् आहतेरित्यर्थः **अरुष्य** रक्ष, उरुष्यतिः रक्षाकर्मा । तथा पापाभिघाताद्रक्षित्वा **नि पाहि** सर्वथा नितरां पालय । **नः** अस्मदर्थं **सुशेवः** शोभनसुखोपेतः **सखा एधि** सुहृद् भव ।

एधि–अस भुवि, लोटि सेर्हिः, सकारस्य एत्वं, हेर्धिरादेशः ।। १५ ।।

**।। इति प्रथमाष्टके षष्ठाध्याये एकविंशो वर्गः ।।**

## ।। अथ द्वाविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ।। १६ ।।**
**आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ।। १६ ।।**

**स्कन्द– आ प्यायस्व** प्यायतिर्वृद्ध्यर्थः । वर्धस्व । **सम् एतु ते** सङ्गच्छतां **ते विश्वतः** सर्वतः हे **सोम! वृष्ण्यम्** अपठितमपि बलनामैतत् । रसवचनो वा सामर्थ्यादत्र वृष्ण्यशब्दः । बलं रसो वा । **भव** चास्माकम् **वाजस्य** अन्नस्य **सङ्गथे** चतुर्थ्यर्थे सप्तम्येषा । सङ्गमाय । लाभायेत्यर्थः ।। १६ ।।

**वेङ्कटमाधव–** पूर्णो भव रसेन । सङ्गच्छताम् **ते** सर्वतः **सोम** । वर्षणनिमित्तमन्धो द्रोणकलशं प्रति । **भव** अन्नस्य सङ्गमनाय ।। १६ ।।

**मुद्गल–** हे **सोम!** त्वम् **आ प्यायस्व** वर्धस्य । **ते** तव **वृष्ण्यम्** वृषत्वं वीर्यं सामर्थ्यम् **विश्वतः** सर्वतः **सम एतु** सङ्गच्छताम्, त्वया संयुक्तं भवतु । एवम्भूतस्त्वम् **वाजस्य** अन्नस्य **सङ्गथे** सङ्गमने **भव** । अस्माकमन्नप्रदो भवेत्यर्थः ।। १६ ।।

**सायण–** ग्रावस्तोत्रे 'आ प्यायस्व समेतु ते' इति तृचो विनियुक्तः । सूत्रितं च– 'आ प्यायस्व समेतु त इति तिस्रो मृजन्ति त्वा दश क्षिपः' (आश्व.श्रौ.५.१२) इति । पत्नीसंयाजेषु सौभ्यस्य 'आ प्यायस्व' इत्येषानुवाक्या । सूत्रितं च– 'आ प्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजाः' (आश्व.श्रौ.१.१०) इति । चमसाप्यायनेऽप्येषा विनियुक्ता । सूत्रितं च– 'आ प्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा इति चमसानाद्योपाद्यान्' (आश्व.श्रौ.५.६) इति ।।

हे **सोम!** त्वम् **आ प्यायस्व** वर्धस्व । **ते** तव **वृष्ण्यं** वृषत्वं वीर्यं सामर्थ्यं **विश्वतः** सर्वतः **समेतु** सङ्गच्छतां त्वया संयुक्तं भवतु । एवम्भूतस्त्वं **वाजस्य** अन्नस्य **सङ्गथे** सङ्गमने भव । अस्माकमन्नप्रदो भवेत्यर्थः ।

वृष्ण्यम् । 'वृष सेचने' । 'कनिन्युवृषि' इत्यादिना कनिन् । वृष्णि भवं वृष्ण्यम् । 'भवे छन्दसि' इति यत् । 'अल्लोपोऽनः' इति अकारलोपः । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययने न प्रवर्तते । 'यतोऽनावः' इत्याद्युदात्तत्वम् । भव । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । सङ्गथे । 'पातृतुदिवचि' इत्यादिना विधीयमानः थक्प्रत्ययो बहुलवचनात् गमेरपि भवति । थाथादिना उत्तरपदान्तोदात्तत्वम् ।। १६ ।।

**सिद्धाञ्जनम्**– हे **सोम! आप्यायस्व** वर्धस्व, **ते** तव **वृष्ण्यम्** वृषत्वं अभीष्टतेजोबलानन्दादिवर्षणसामर्थ्यं **विश्वतः** सर्वतः **समेतु** त्वया संयुक्तं भवतु । **वाजस्य** समृद्धेः **सङ्गथे** सङ्गमने **भव** अस्माकं वाजस्य सङ्गमयिता भवेत्यर्थः ।

वृष्ण्यम्–वृष्णि भवम्, भवे छन्दसि यत् । सङ्गथे–गमेः थक्प्रत्ययः ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ।।**
**आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः । भव । नः । सुश्रवःऽतमः । सखा । वृधे ।। १७ ।।**

**स्कन्द**– **आ प्यायस्व** हे **मदिन्तम!** अतिशयेन मदवन्! । सुष्ठु मदकर! इत्यर्थः । **सोम! विश्वेभिः** सर्वैः **अंशुभिः** । सोमस्यवयवा अंशव उच्यन्ते । **भव नः** अस्माकम् **सुश्रवस्तमः** सुधनतमः सुकीर्तितमो वा **सखा वृधे** वर्धनाय ।। १७ ।।

**वेङ्कटमाधव**– आप्यायय रसम् **सोम!** मादयितः! विश्वाभिर्लताभिः । **भव** अस्माकं स्वन्नतमः **सखा** वर्धनाय ।। १७ ।।

**मुद्गल**– हे **मदिन्तम!** अतिशयेन मदवन्! **सोम! विश्वेभिः** सर्वैः अंशुभिः लतावयवैः **आ प्यायस्व** आ समन्ताद् वृद्धो भव । स त्वम् **सुश्रवस्तमः** अतिशयेन शोभनान्नयुक्तः सन् **नः** अस्माकम् **वृधे** वर्धनाय **सखा भव** मित्रीभव ।। १७ ।।

**सायण**– हे **मदिन्तम!** अतिशयेन मदवन् **सोम! विश्वेभिः** सर्वैः **अंशुभिः** लतावयवैः **आ प्यायस्व** आ समन्तात् वृद्धो भव । स त्वं **सुश्रवस्तमः** अतिशयेन शोभनान्नयुक्तः सन् **नः** अस्माकं **वृधे** वर्धनाय **सखा भव** मित्रीभव ।

मदिन्तम । मदो हर्षः । तद्वान् मदी । अतिशयेन मदी मदिन्तमः । 'नाद्घस्य' (पा.सू.८.२.१७) इति तमपो नुट् । सुश्रवस्तमः । 'श्रवः इत्यन्ननाम श्रूयते इति सतः' (निरु.१०.३) इति यास्कः । शोभनं श्रवो यस्य स तथोक्तः । अतिशयेन सुश्रवाः सुश्रवस्तमः । तमपः पित्त्वादनुदात्तत्वे 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वमेव शिष्यते ।। १७ ।।

**सिद्धाञ्जनम्**– हे **मदिन्तम!** अतिशयेन हर्षवन् **सोम! विश्वेभिः** सर्वैः **अंशुभिः** कलाभूतैस्त्वदीयविभवैः **आप्यायस्व** समन्तात् वर्धस्व तथा पूर्णविभवस्त्वं **नः वृधे** अस्मदीयवर्धनाय **सुश्रवस्तमः भव** अतिशयेन शोभनश्रवणशाली **सखा** भवः ।

मदिन्तम–मदोऽस्येति मदी, अतिशयेन मदी, तमपो नुम् ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।**
**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ।। १८ ।।**
**सम् । ते । पयांसि । सम् । ऊँ इति । यन्तु । वाजाः । सम् । वृष्ण्यानि । अभिमातिऽसहः । आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ।। १८ ।।**

**स्कन्द**– यन्तु इत्याख्यातं प्रति सम्-शब्दोऽनुषक्तव्यः । **सम् यन्तु** सङ्गच्छन्ताम् अस्माभिस्सह ते तव स्वभूतानि । त्वदीयानीत्यर्थः । **पयांसि** वृष्टिलक्षणान्युदकानि । **सम् उ यन्तु वाजाः** उकारः पदपूरणः । सङ्गच्छन्तामन्नानि । **सम् वृष्ण्यानि** सङ्गच्छन्तां बलानि रसा वा । कीदृशस्य तव । उच्यते । **अभिमातिषाहः** हिंसितॄणामभिभवितुः । अथवा ते अभिमातिषाहः उभयत्र तृतीयार्थे षष्ठी । सङ्गच्छतां त्वया हिंसितॄणामभिभवित्रा पयांसि वसतीवर्येकधनालक्षणान्युदकानि । सम् उ यन्तु वाजाः सवनीयपुरोडाशहविर्लक्षणान्यन्नानि बलानि रसा वा । किञ्च **आप्यायमानः अमृताय** अमृतभावाय । अथवा अमृतशब्दो देवतावचनः ।

अमृतेभ्यः । देवतार्थमित्यर्थः । हे **सोम! दिविश्रवांसि** कीर्तिम् अन्नानि धनानि वा अस्माकम् **उत्तमानि धिष्व** धारय । कुर्वित्यर्थः ।। १८ ।।

**वेङ्कटमाधव– सम् यन्तु** त्वत्तो रसाः, **सम् एव** यन्तु अन्नानि, **सम्** यन्तु वर्षणनिमित्तानि शत्रूणामभिभवितुः **आप्यायमानः** अमृतत्वाय **सोम! दिवि** चान्नान्यस्माकम् **उत्तमानि** कृणुष्व । पीतसोमो हि न परत्र क्षुध्यति ।। १८ ।।

**मुद्गल–** हे सोम! **अभिमातिषाहः** अभिमातीनां शत्रूणां हन्तुः **ते** तव एवं भूतं त्वाम् **पयांसि** श्रयणार्थानि क्षीराणि **सम् यन्तु** सङ्गच्छन्ताम् । तथा **वाजाः** उ हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम् । **वृष्ण्यानि** वीर्याणि सङ्गच्छन्ताम् । हे **सोम!** त्वम् **अमृताय** अस्माकममृतत्वाय अमरणत्वाय **आप्यायमानः** आ समन्ताद् वर्धमानः सन् दिवि नभसि स्वर्गे **उत्तमानि** उद्गततमान्युत्कृष्टानि **श्रवांसि** अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि च **धिष्व** धारय ।। १८ ।।

**सायण–** पत्नीसंयाजे सौम्यस्य 'सं ते पयांसि' इति याज्या । सूत्रितं च– 'सं ते पयांसि समु यन्तु वाजा इह त्वष्टारमग्रियम्' (आश्व.श्रौ.१.१०) इति । चमसाप्यायनेऽप्येषा । सूत्रितं च– 'सं ते पयांसि समु यन्तु वाजा इति चमसानाद्योपाद्यात्' (आश्व.श्रौ.५.६) इति ।

हे सोम! **अभिमातिषाहः** अभिमातीनां शत्रूणां हन्तुः **ते** तव एवम्भूतं त्वां **पयांसि** श्रयणार्थानि क्षीराणि **सं यन्तु** सङ्गच्छन्ताम् । तथा **वाजाः** उ हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम् । **वृष्ण्यानि** वीर्याणि च सङ्गच्छन्ताम् । हे **सोम!** त्वम् **अमृताय** अस्माकममृतत्वाय अमरणत्वाय **आप्यायमानः** आ समन्तात् वर्धमानः सन् **दिवि** नभसि स्वर्गे **उत्तमानि** उद्गततमान्युत्कृष्टानि **श्रवांसि** अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि वा **धिष्व** धारय ।

ते । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । अभिमातिषाहः । 'षह अभिभवे' । 'छन्दसि सहः' इति ण्विप्रत्ययः । सुषामादित्वात् षत्वम् । अमृताय । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । उत्तमानि । उच्छब्दात् ससाधनक्रियावचनात् आतिशायनिकस्तमप् । 'उत्तमशश्वत्तमौ सर्वत्र' (पा.सू.६.१.१६०. ग) इति उञ्छादिषु पाठात् अन्तोदात्तत्वम् । धिष्व । 'सुधिव । 'सुधित वसुधित नेमधित धिष्व धिषीय च' (पा.सू.७.४.४५) इति धिभावो निपात्यते ।। १८ ।।

**सिद्धाञ्जनम्–** हे **सोम! अभिमातिषाहः** अभिमातीनां शत्रूणां साहयिता अभिभविता अभिमातिषाट् तस्य **ते** तव, क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । **पयांसि** गव्यानि चिद्रश्मिजन्यसाराः **संयन्तु** त्वां सम्प्राप्नुवन्तु । तथा **वाजाः उ** समृद्धयश्च **सम्** संयन्तु । **वृष्ण्यानि** वीर्याणि च त्वां **सम्** संयन्तु । हे सोम, अस्मदर्थं **अमृताय** अमरणधर्माय **आप्यायमानः** वर्धमानः सन् **दिवि** द्युलोके **उत्तमानि** उत्कृष्टतमानि **श्रवांसि** दिव्योवेशश्रवणानि **धिष्व** अस्मदर्थं धारय ।

अभिमातिषाहः–छन्दसि सह इति ण्विप्रत्ययः, सुषामादित्वात् षत्वम् । धिष्व–सुधितेत्यादीनां धिभावो निपात्यते ।। १८ ।।

## ऋक्संहिता पदपाठसहिता

**या ते धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञम् ।**
**गय॒स्फान॑ः प्र॒तर॑णः सु॒वीरोऽवी॑रहा॒ प्र च॑रा सोम॒ दुर्या॑न् ।। १९ ।।**
**या । ते॒ । धामा॑नि । ह॒विषा॑ । यज॑न्ति । ता । ते॒ । विश्वा॑ । प॒रि॒ऽभूः । अ॒स्तु॒ । य॒ज्ञम् । गय॒ऽस्फान॑ः । प्र॒ऽतर॑णः । सु॒ऽवीर॑ः । अवी॑रऽहा । प्र । च॒र॒ । सो॒म॒ । दु॒र्या॑न् ।। १९ ।।**

**स्कन्द– या ते** यानि तव **धामानि** स्थानानि नामानि जन्मानि वा तेजांसि वा **हविषा यजन्ति** यष्टारः, **ता** तानि **ते** सर्वाणि **परिभूः अस्तु** परिपूर्वो भवतिः सर्वत्र परिग्रहार्थे । उभयत्र बहुवचनस्य स्थाने एकवचनम् । परिग्रहीतॄणि सन्तु । इमं मदीयम् **यज्ञम्** । यानि तव यष्टव्यानि धामानि तैः सर्वैः इमं यज्ञं परिगृहाणेत्यर्थः । किञ्च **गयस्फानः** अपत्यस्य दनस्य गृहस्य वा वर्धयिता । **प्रतरणः** तरतिरत्र वृद्ध्यर्थः । वर्धयिता च सर्वार्थानाम् । शोभना वीरा देवा यस्य सः **सुवीरः** । शोभनानाञ्च पुत्राणां दातेत्यर्थः । **अवीरहा** अहन्ता च वीराणाम् । **प्र चर** प्रगच्छ । हे **सोम! दुर्यान्** गृहनामैतत् (तु.निघ.३,४) । अस्मदीयानि गृहाणि ।।

**वेङ्कटमाधव–** यानि तव तेजांसि **हविषा यजन्ति** तानि तव विश्वानि भवन्तु सङ्गतानि । तैः **परिभूः अस्तु यज्ञम्** इति परोक्षम् । सोम । गवां वर्धयिता प्रकर्षेण तारकः शोभनवीरः पुत्राणामहन्ता सन् प्रगच्छ गृहान् ।। १९ ।।

**मुद्गल–** हे **सोम! ते** त्वदीयानि **या** यानि **धामानि** द्युप्रभृतिष्ववस्थितानि तेजांसि **हविषा** चरुपुरोढाशादिना **यजन्ति** यजमानाः पूजयन्ति । **ता ते विश्वा** त्वदीयानि तानि सर्वाणि धामानि **यज्ञम्** अस्मदीयमध्वरम् **परिभूः अस्तु** परितो भावयितॄणि परितः प्राप्तानि सन्तु । तादृशैर्धामभिरुपेयस्त्वम् **दुर्यान्** प्राचीनवंशादिलक्षणानस्मदीयान् गृहान् **प्र चर** प्रकर्षेण गच्छ । कीदृशस्त्वम् । **गयस्फानः** गयस्य गृहस्य वर्धयिता । **प्रतरणः** प्रकर्षेण दुरितान् तारयिता । **सुवीरः** शोभनैर्वीरैरुपेतः । **अवीरहा** पुत्राणामहन्ता ॥ १९ ॥

**सायण–** सोमप्रवहणे 'या ते धामानि' इत्येषा । सूत्रितं च- 'या ते धामानि हविषा यजन्तीमां धियं शिक्षमाणस्य देवेति निहिते परिदध्यात्'(आश्व.श्रौ.४-४) इति । एकादशिनस्य सौम्यस्य पशोर्हविष एषैव याज्या । 'प्रदानानाम्' इति खण्डे सूत्रितम्- अषाळ्हं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजन्ति'(आश्व.श्रौ.३-७) इति ।

हे **सोम! ते** त्वदीयानि **या** यानि **धामानि** द्युप्रभृतिष्ववस्थितानि तेजांसि **हविषा** चरुपुरोडाशादिना **यजन्ति** यजमानाः पूजयन्ति **ता ते विश्वा** त्वदीयानि तानि सर्वाणि धामानि **यज्ञम्** अस्मदीयमध्वरं **परिभूरस्तु** परितो भावयितॄणि परितः प्राप्तानि सन्तु । यद्वा । त्वदीयानां तेषां सर्वेषां धाम्नामस्मदीयो यजमानः परिभूर्यज्ञं प्रति परिग्रहीता यागेन स्वीकर्ता अस्तु भवतु । परिपूर्वो भवतिः परिग्रहार्थः । तादृशैर्धामभिरुपेतस्त्वं **दुर्यान्** प्राचीनवंशादिलक्षणानस्मदीयान् गृहान् । 'गृहा वै दुर्याः' (तै.सं.६.२.९.१) इति श्रुतेः । **प्र चर** प्रकर्षेण गच्छ । कीदृशस्त्वम् । **गयस्फानः** गयस्य गृहस्य धनस्य वा वर्धयिता **प्रतरणः** प्रकर्षेण दुरितात् तारयिता **सुवीरः** शोभनैः वीरैरुपेतः **अवीरहा** । वीर्यात् जायन्ते इति वीराः पुत्राः । तेषामहन्ता ।

परिभूः । 'भू प्राप्तौ' । अस्मात् 'क्विप् च' इति क्विप् । 'व्यत्ययो बहुलम्' (पा.सू.३.१.८५) इति लिङ्गवचनव्यत्ययौ । अस्तु । व्यत्ययेन एकवचनम् । गयस्फानः । गय इति गृहस्य धनस्य च नामधेयम् । तेषां स्फायिता वर्धयिता । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युटि छान्दसो यलोपः । अवीरहा । वीराणां हन्ता वीरहा । न वीरहा अवीरहा ॥

**सिद्धाञ्जनम्–** हे **सोम! ते या धामानि** त्वदीयानि यानि तेजांसि द्युस्थानादिषु अवस्थितानि **हविषा** स्वीयेन अर्पणेन (चरुपुरोडाशादिनेति बाह्ये कर्मणि) **यजन्ति** पूजयन्ति

यजमानाः, **ता ते विश्वा** त्वदीयानि तानि सर्वाणि तेजांसि **यज्ञम्** यजनमस्मदीयं **परिभूः अस्तु** परितो भवन्ति, परितः प्राप्तानि भवन्तु । वचनव्यत्ययः । तादृशो बहुधामा त्वं **दुर्यान्** द्वारयुक्तान् गृहान्, (शरीराण्येव गृहाणि रहस्यार्थे) **प्रचर** प्रकर्षे गच्छ । कीदृशस्त्वम् ? **गयस्फानः** गृहस्य (शरीरस्य) वर्धयिता **प्रतरणः** प्रकर्षेण दुरितात्तारयिता **सुवीरः** शोभनवीर्योपेतः **अवीरहा** वीरान् न हन्ति, देवपक्षे स्थितान् पराक्रमशालिन ऋषीन् यजमानान् न कदापि परित्यजति, अनुगृह्णात्येवेत्यर्थः ।

अवीरहा–वीराणां हन्ता वीरहा, न वीरहा अवीरहा ।। १९ ।।

## ऋक्संहिता पदपाठसहिता

**सोमो॑ धे॒नुं सोमो॒ अर्व॑न्तमा॒शुं सोमो॑ वी॒रं क॑र्म॒ण्यं॑ ददाति ।**
**सा॒द॒न्यं॑ वि॒द॒थ्यं॑ स॒भेयं॑ पितृ॒श्रव॑णं॒ यो ददा॑शदस्मै ।। २० ।।**
**सोम॑ः । धे॒नुम् । सोम॑ः । अर्व॑न्तम् । आ॒शुम् । सोम॑ः । वी॒रम् । क॒र्म॒ण्य॑म् । ददाति । स॒द॒न्य॑म् । वि॒द॒थ्य॑म् । स॒भेय॑म् । पि॒तृ॒ऽश्रव॑णम् । यः । ददा॑शत् । अ॒स्मै ।।२०।।**

**स्कन्द– सोमः धेनुम्, सोमः** एव **अर्वन्तम् आशुम्** शीघ्रम्, **सोमः** एव **वीरम्** पुत्रम् **कर्मण्यम्** कर्मसु साधुं सर्वकर्मसु योग्यम् **ददाति** । न च सर्वकर्मयोग्यमेव केवलम् । किं तर्हि । **सदन्यम्** सदनं गृहम् । तत्र च साधुम् । **विदथ्यम्** विदथं यज्ञः । तत्र च साधुम् । **सभेयम्** विद्वत्समाजः सभा, तत्र च साधुम् । **पितृश्रवणम्** पितॄणां च श्रोतारम् । विनीतमित्यर्थः । कस्मै ददाति । **यः ददाशत्** यो ददाति अस्मै सोमाय । किम् । सामर्थ्यात् हवींषि ।।२०।।

**वेङ्कटमाधव– सोमः धेनुम्, सोमः** अश्वम् आशुगन्तारम्, **सोमः** पुत्रं कर्मणि समर्थं **ददाति** । गृहे शूरं यज्ञसभयोश्च यः स्वकीर्त्याऽऽत्मीयं पितरम् अस्य पिताऽयमिति श्रावयति तं ददाति । **यः** हविः सोमाय ददाति अस्मै यजमानाय ।। २० ।।

**मुद्गल– यः** यजमानः **ददाशत्** सोमाय हविर्लक्षणान्यन्नानि दद्यात्, तस्मै यजमानाय **सोमः धेनुम्** सवत्सां गां दोग्ध्रीम् **ददाति** । तथा **सोमः आशुम् अर्वन्तम्** शीघ्रगामिनमश्वं ददाति । तथा **सोमः वीरम्** पुत्रम् अस्मै यजमानाय ददाति । कीदृशं पुत्रम् । **कर्मण्यम्** लौकिक-कर्मकुशलम् । **सदन्यम्** सदनं गृहं तदर्हम् । गृहकार्यकुशलमित्यर्थः । **विदथ्यम्** विदया यज्ञाः

तदर्हम् । दर्शपूर्णमासादियागानुष्ठानतत्परमित्यर्थः । **सभेयम्** सभायां साधुम् । सकल-शास्त्राभिज्ञमित्यर्थः । **पितृश्रवणम्** पिता श्रूयते आख्यायते येन पुत्रेण तादृशम् ।। २० ।।

**सायण–** महापितृयज्ञे सोमस्य पितृमतो यागे 'सोमो धेनुम्' इत्येषा द्वितीयानुवाक्या । तत्र ह्येकैकस्य हविषो द्वे द्वे अनुवाक्ये समुच्चयेन विहिते । तथैव 'दक्षिणाग्नेः' इति खण्डे सूत्रितम्– 'सोमो धेनुं सोमो अर्वन्तमाशुं त्वं सोम पितृभिः संविदानः' (आश्व.श्रौ.२.१९) इति ।।

**यः** यजमानः **ददाशत्** सोमाय हविर्लक्षणान्यन्नानि दद्यात् तस्मै यजमानाय **सोमः धेनुं** सवत्सां दोग्ध्रीं गां **ददाति** । तथा **आशुं** शीघ्रगामिनम् **अर्वन्तम्** अश्वं ददाति प्रयच्छति । तथा **वीरं** पुत्रम् **अस्मै** यजमानाय ददाति । कीदृशं पुत्रम् । **कर्मण्यं** लौकिककर्मसु कुशलं **सदन्यम्** । सदनं गृहम् । तदर्हम् । गृहकार्यकुशलमित्यर्थः । **विदथ्यम्** । विदन्त्येषु देवानिति विदथाः यज्ञाः । तदर्हम् । दर्शपूर्णमासादियागानुष्ठानपरमित्यर्थः । **सभेयं** सभायां साधुम् । सकलशास्त्राभिज्ञमित्यर्थः । **पितृश्रवणं** पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशम् ।

कर्मण्यम् । कर्मसु साधुः कर्मण्यः । 'तत्र साधुः' (पा.सू.४.४९८) इति यत् । 'ये चाभावकर्मणोः' इति प्रकृतिभावः । 'तित्स्वरितम्' इति स्वरितत्वम् । एवमुत्तरत्रापि यत्प्रत्ययः । सभेयम् । 'ढश्छन्दसि' (पा.सू.४.४.१०६) इति तत्र साधुः इत्यर्थे ढप्रत्ययः । ददाशत् । 'दाशृ दाने' । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः ।। २० ।।

**सिद्धाञ्जनम्– यः** यजमानः **ददाशत्** यथाभागं दद्यात् सोमाय, **अस्मै** तस्मै यजमानाय सोमः **धेनुम्** अमृतस्य दोग्ध्रीं गां, गोलक्षणां चिन्मरीचिं ददाति प्रयच्छति । **सोमः अर्वन्तम्** सत्वरं गच्छन्तं **आशुम्** अश्वं तल्लक्षितप्राणक्रियावेगं ददाति । **सोमः वीरम्** वीर्योपेतं पुत्रं ददाति इति बाह्यः पक्षः, रहस्यं तु अन्तर्यजनशालिन ऋषेः प्रभाप्रसारः यत्र शिष्ये पुत्रे अन्यस्मिन्ननुग्राह्ये जने वा संक्रामति, स एव वीरः पुत्र इति बोध्यम् । कीदृशम् वीरम्? **कर्मण्यम्** क्रियासु कुशलं **सदन्यम्** सदनं अन्तर्यागसमर्थं शरीरं तदर्हम् । **विदथ्यम्** विदथः देवताज्ञान-प्राप्तिस्थानं यजनं तदर्हम् । **सभेयम्** सभायां साधुं तत्त्वाभिज्ञमित्यर्थः । **पितृश्रवणम्** पितृणां पूर्वेषां श्रवणमिव श्रवणं आन्तरं दिव्यं च यस्य तं, पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशमिति स्थूलरीत्या ।

सभेयम्–ढः छन्दसीति तत्र साधुरित्यर्थे ढप्रत्ययः । ददाशत्–लेटि अडागमः, शपः श्लुः ।।

।। इति प्रथमाष्टके षष्ठाध्याये द्वाविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।**
**भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ।। २१ ।।**
अषाळ्हम् । युत्ऽसु । पृतनासु । पप्रिम् । स्वःऽसाम् । अप्साम् । वृजनस्य गोपाम् । भरेषुऽजाम् । सुऽक्षितिम् । सुऽश्रवसम् । जयन्तम् । त्वाम् । अनु । मदेम । सोम ।।

**स्कन्द– अषाळ्हम्** अन्यैः अनभिभूतपूर्वम् । **युत्सु** युद्धेषु **पृतनासु पप्रिम्** पृ पालनपूरणयोरित्यस्य एतद्रूपं न प्रा पूरणे इत्यस्य । सङ्ग्रामेषु पालयितारं यष्टॄणां च स्तोतॄणां च । **स्वर्षाम्** स्वर्द्यौः तां सनोतीति स्वर्षाः, तं स्वर्षाम् । दिवः सम्भक्तारमित्यर्थः । **अप्साम्** अपां च सेवितारम् । **वृजनस्य गोपाम्** । 'वृजनम्' (निघ.२,९) इति बलनाम । बलस्य गोप्तारम् । **भरेषुजाम्** जनिरत्र सामर्थ्याज्जयतेरर्थे । सङ्ग्रामेषु जेतारम् । **सुक्षितिम्** सुनिवासम् । **सुश्रवसम्** सुकीर्तिं स्वन्नं सुधनं वा । **जयन्तम् त्वाम् अनु** अनुशब्दोऽत्र 'अनुर्लक्षणे' (पा.२,४,८४) इत्येवं कर्मप्रवचनीयः आक्षिप्तनिशमयत्यर्थः । शाकल्यस्य संहितामनु प्रावर्षदिति यथा । जयन्तं त्वामनुनिशम्य श्रुत्वेत्यर्थः । **मदेम** मोदेम । **प्रहृष्टाः** स्वामेत्यर्थः । हे **सोम!** ।।

**वेङ्कटमाधव–** शत्रुभिरसोढं युद्धेषु **पृतनासु** पालयितारं दिवः सम्भक्तारम् अपां दातारं बलस्य गोपायितारं सङ्ग्रामेषु प्रादुर्भवन्तं सुनिवासं सुकीर्तिम् **जयन्तम् त्वाम् अनु मदेम** स्तोत्रैः **सोम!** ।। २१ ।।

**मुद्गल– युत्सु** युद्धेषु **अषाळ्हम्** शत्रुभिरनभिभवनीयं तथा **पृतनासु** सेनासु **पप्रिम्** जयस्य पूरयितारम् । **स्वर्षाम्** स्वर्गस्य सनितारं दातारम् । **अप्साम्** वृष्टिलक्षणानामुदकानां दातारम् । **वृजनस्य गोपाम्** बलस्य गोपायितारं रक्षितारम् । **भरेषुजाम्** भ्रियन्त एषु हवींषीति भरा यागा तेषु प्रादुर्भवन्तम् । **सुक्षितिम्** शोभननिवासस्थानम् । **सुश्रवसम्** शोभनयशस्कम् । **जयन्तम्** शत्रूनभिभवन्तम् । हे **सोम!** ईदृग्भूतम् **त्वाम्** अनुलक्ष्य **मदेम** हर्षयुक्ता भवेम ।। २१ ।।

**सायण–** एकादशिनस्य सौम्यस्य पशोः पुरोडाशस्य 'अपाह्लं युष्सु' इत्येषा याज्या । 'ब्रह्मणानाम्' इति खण्डे सूत्रितम्– 'अषाह्लं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजन्ति' (आश्व.श्रौ.३.७) इति ।

**युत्सु** युद्धेषु **अषाह्लं** शत्रुभिरनभिभवनीयं तथा **पृतनासु** सेनासु **पप्रिं** जयस्य पूरयितारं **स्वर्षां** स्वर्गस्य सनितारं दातारं **अप्साम्** अपां वृष्टिलक्षणानामुदकानां दातारम् । यद्वा अप्साम् अप्सातृकं भक्षकरहितम् । सर्वेषामनुग्राहकमित्यर्थः । **वृजनस्य गोपाम्** । वृज्यतेऽनेनेति वृजनं बलम् । तस्य गोमं गोपयितारं रक्षितारं **भरेषुजाम्** । भ्रियन्ते एषु हवींषीति भराः यागाः । तेषु प्रादुर्भवन्तं **सुक्षितिं** शोभननिवासस्थानं **सुश्रवसं** शोभनयशस्कं **जयन्तं** शत्रूनभिभवन्तम् । हे **सोम!** ईदृग्भूतं **त्वाम्** अनुलक्ष्य **मदेम** हर्षयुक्ता भवेम ।

अषाह्लम् । 'षह अभिभवे' । 'साढ्यै साढ्वा साढेति निगमे' (पा.सू.६.३.११३) इति निपातनात् 'सहिवहोरोदवर्णस्य' (पा.सू.६.३.११२) इति ओत्वाभावः । 'सहेः साढः सः' इति षत्वम् । पप्रिम् । 'पृ पालनपूरणयोः' । 'आदृगमहनजनः' इति किन्प्रत्ययः । स्वर्षाम् । स्वः स्वर्गं सनोतीति स्वर्षाः । 'षणु दाने' । 'जनसनखन' इति विट् ।'विड्वनोरनुनासिकस्यात्' इति आत्वम् । अप्साम् । अप्शब्दोपपदात् सनोतेः पूर्ववत् विट् । यद्वा । 'प्सा भक्षणे' । प्साति भक्षयतीति प्साः । 'क्विप् च' इति क्विप् । न विद्यते प्सा अस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । भरेषुजाम् । 'जनी प्रादुर्भावे' । पूर्ववत् विट् आत्वं च । मदेम । 'मदी हर्षे' । व्यत्ययेन शप् ।। २१ ।।

**सिद्धाञ्जनम्– युत्सु** संग्रामेषु **अषाळ्हम्** शत्रुभिरनभिभवनीयं **पृतनासु** सेनासु **पप्रिम्** पालयितारं **स्वर्षाम्** स्वः स्वर्गस्य सनितारं दातारं **अप्साम्** अपां ज्योतिर्बलादीनां दातारं **वृजनस्य** दृढस्यास्माकं स्थानस्य **गोपाम्** गोपायितारं रक्षितारं **भरेषुजाम्** भरेषु यजनेषु जायमानं प्रादुर्भवन्तं **सुक्षितिम्** शोभनावासयुक्तं **सुश्रवसम्** शोभनश्रवणशालिनं **जयन्तम्** शत्रून् अभिभवन्तं **त्वाम्** हे **होम, अनु मदेम** अनुसृत्य हृष्टा भवेम ।

अषाळ्हम्– षह अभिभवे, सहेः साडः स इति षत्वम् । पप्रिम्–पृ पालनपूरणयोः, किन् प्रत्ययः । स्वर्षाम्–स्वः स्वर्गं सनोतीति स्वर्षाः, षणु दाने । अप्साम्–अप्शब्दोपपदात् सनोतेः पूर्ववत् । भरेषुजाम्–जनी प्रादुर्भावे, पूर्ववत् आत्वम् ।। २१ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमि॒मा ओष॑धीः सोम॒ विश्वा॒स्त्वम॒पो अ॑जनय॒स्त्वं गाः ।**
**त्वमा त॑तन्थो॒र्व१॒॑न्तरि॑क्षं॒ त्वं ज्योति॑षा॒ वि तमो॑ ववर्थ ।। २२ ।।**
**त्वम् । इ॒माः । ओष॑धीः । सो॒म॒ । विश्वा॑ः । त्वम् । अ॒पः । अ॒ज॒न॒यः॒ । त्वम् । गाः ।**
**त्वम् । आ । त॒त॒न्थ॒ । उ॒रु । अ॒न्तरि॑क्षम् । त्वम् । ज्योति॑षा । वि । तम॑ः । व॒व॒र्थ॒ ।।**

**स्कन्द– त्वम् इमाः ओषधीः** हे **सोम! विश्वाः** सर्वाः । **त्वम्** एव **अपः** वृष्टिलक्षणान्युदकानि । **अजनयः** अनयसि । **त्वम्** एव **गाः** । **त्वम्** एव आ **ततन्थ** आतनोषि विस्तारयसि । **उरु** विस्तीर्णम् **अन्तरिक्षम्** । **त्वम्** एवादित्याख्येन ज्योतिषा **वि ववर्थ** विविधं वारयसि शार्वरं **तमः** । ओषधी जननादि हि सर्वं धर्मायत्तम् । धर्मश्च यागादिः सोमायत्तः । अतः सोमसाध्ययागादिद्वारकर्मत्वाद् ओषध्यादीनामिदमुच्यते त्वमिमा ओषधीः इत्यादि ।। २२ ।।

**वेङ्कटमाधव– त्वम् इमाः ओषधीः सोम! विश्वाः अजनयः** । **त्वम्** उदकानि **त्वम्** पशून् । **त्वम्** विस्तारितवानसि तेजसा विस्तीर्णम् **अन्तरिक्षम् त्वम् ज्योतिषा** नैशम् **तमः** विनिषारितयानसि ।। २२ ।।

**मुद्गल–** हे **सोम! त्वम् इमाः** भूम्यां वर्तमानाः **विश्वाः** सर्वाः **ओषधीः अजनयः** उत्पादितवानसि । तथा हे **सोम! त्वम् अपः** तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः । तथा **त्वम् गाः** सर्वान् पशून् उदपादयः । **उरु** विस्तीर्णम् **अन्तरिक्षम् त्वम् आ ततन्थ** विस्तारितवानसि । तस्मिन्नन्तरिक्षे यत् **तमः** अस्मद्दृष्टिनिरोधकमन्धकारं तदपि **त्वम् ज्योतिषा** आत्मीयेन प्रकाशेन **वि ववर्थ** विवृतं विश्लिष्टं कृतवानसि ।। २२ ।।

**सायण–** हे **सोम! त्वम् इमाः** भूम्यां वर्तमानाः **विश्वाः** सर्वाः **ओषधीः अजनयः** उत्पादितवानसि । तथा **त्वम् अपः** तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः । तथा **त्वं गाः** सर्वान् पशूनुदपादयः । **उरु** विस्तीर्णम् **अन्तरिक्षं त्वम् आ ततन्थ** विस्तारितवानसि । तस्मिन्नन्तरिक्षे यत् **तमः** अस्मद्दृष्टिनिरोधकमन्धकारं तदपि **त्वं ज्योतिषा** आत्मीयेन प्रकाशेन **वि ववर्थ** विवृतं विश्लिष्टं विनष्टं कृतवानसि ।

ततन्थ । 'तनु विस्तारे' । ववर्थ । 'वृञ् वरणे' । उभयत्र लिटस्थलि 'बभृथा ततन्थ जगृम्भ ववर्थेति निगमे' (पा.सू.७.२.६४) इति निपात्यते ।। २२ ।।

**सिद्धाञ्जनम्**– हे **सोम! त्वम्, इमाः विश्वा ओषधीः** अत्र वर्तमानाः सर्वा ओषधीः पृथ्वीसारभूताः **अजनयः** आविष्कृतवानसि । तथा **त्वम् अपः** अजनयः, **त्वम् गाः** अजनयः । आनन्दपर्यायरसस्वरूपस्य सोमस्य सर्वस्रष्टृत्वोपपत्तेः गवां अपां च जनयिता सोम इत्यत्र स्थूलपक्षः रहस्यपक्षश्च उपपद्येते । **त्वम् उरु** विस्तीर्णं **अन्तरिक्षम्** आकाशं **आततन्थ** समन्तात् विस्तारितवानसि । **त्वम् तमः** अन्धकारं बाह्यमाभ्यन्तरं च **ज्योतिषा** आत्मीयेन प्रकाशेन **विववर्थ** विवृतं शिथिलितं विनष्टं कृतवानसि ।

ततन्थ–तनु विस्तारे । ववर्थ–वृञ् वरणे, उभयत्र लिटः थलि निगमे एवं निपात्यते ।।

## ऋक्संहिता पदपाठसहिता

**देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य ।**
**मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ।। २३ ।।**
**देवेन । नः । मनसा । देव । सोम । रायः । भागम् । सहसाऽवन् । अभि । युध्य ।**
**मा । त्वा । आ । तनत् । ईशिषे । वीर्यस्य । उभयेभ्यः । प्र । चिकित्स । गोऽईष्टौ ।।**

**स्कन्द**– देवेन इत्यत्र सामर्थ्याद् दीव्यतिः दानार्थः । देवेन दानाभिमुखेन **मनसा नः** अस्मान् प्रति हे **देव! सोम! रायः** धनस्य **भागम्** एकदेशम् । हे **सहसावन्!** बलवन् **अभि युध्य** अभियुध्यतिर्गतिकर्मा (तु.निघ.२,१४) सामर्थ्याश्चात्रान्तर्णीतण्यर्थः । अभिगमय । देह्यस्मभ्यमित्यर्थः । **मा** च **त्वा** त्वां ददतम् **आ तनत्** आतनिरत्र सामर्थ्यात्प्रतिबन्धार्थः । प्रतिभान्त्सीत् । भवतो ददतः प्रतिबन्धं मा कश्चित् कार्षीदित्यर्थः । कस्मात् । उच्यते । यस्मात् **त्वम् ईशिषे वौर्यस्य** स्वाम्यसि । यस्मादत्यन्तशूरोऽसि । अत्यन्तशूरत्वाच्च प्रतिबन्धकारिणो हन्तुं समर्थ इत्यर्थः । यतश्चैतदेवं ततो ब्रूमः । उभयशब्दः शत्रुविषयः । अपादानपञ्चमीश्रुतेश्च योग्यक्रियाध्याहारः । आत्मीयेभ्योऽस्मदीयेभ्यश्च **उभयेभ्यः** अपि शत्रुभ्यो धनान्यपहृत्य । अथवा उभयशब्दः प्रयोजनवचनः । सामर्थ्याच्चतुर्थी चैषा द्वितीयार्थे । यानि चास्माकमिह लोके प्रयोजनानि च परत्र तेभ्यः उभयेभ्यः । ऐहलौकिकपारलौकिककार्यमित्यर्थः । **प्र चिकित्स** । कित ज्ञाने । ज्ञानेन चात्र तत्पूर्वकं दानं लक्ष्यते । प्रकर्षेण देहीत्यर्थः । **गविष्टौ** गाव इष्यन्ते यत्र प्राप्तुं सा गविष्टिरिष्टिः तत्र । यज्ञे इत्यर्थः ।। २३ ।।

**वेङ्कटमाधव–** दीप्तेन अस्माकम् **मनसा देव! सोम!** धनस्य **भागम्** बलवन् । **अभि युध्य । मा त्वा** पर्येति कश्चित् । त्वं हि बलस्य ईशिषे । **उभयेभ्यः** परेभ्यो अस्मदीयेभ्यश्च गवामन्वेषणे अस्मान् प्रकर्षेण जानीहि । जेतव्यमस्मदर्थमिति ।। २३ ।।

**मुद्गल–** हे **देव!** द्योतमान, **सहसावन्** बलवन् **सोम!** देवेन **मनसा** द्योतमानया **त्वदीयया** बुद्ध्या **रायः** भागम् वनस्यांशम् **नः** अस्मानभिलक्ष्य **युध्य** प्रेरय । **त्वा** तादृशं त्वां कश्चिदपि शत्रुः **मा आ तनन्** क्लेशेन आर्तं मा कार्षीत् । मा हिंसीदित्यर्थः । **उभयेभ्यः** उभयेषां युध्यमानानां सम्बन्धिनः **वीर्यस्य** त्वम् **ईशिषे** ईश्वरो भवसि । स त्वम् **गविष्टौ** सङ्ग्रामे **प्र चिकित्स** अस्मदीयमुपद्रवं परिहर ।। २३ ।।

**सायण–** हे **देव!** द्योतमान, **सहसावन्** बलवन् **सोम! देवेन मनसा** द्योतमानया त्वदीयया बुद्ध्या **रायो भागं** धनस्यांशं **नः** अस्मानभिलक्ष्य **युध्य** प्रेरय । यद्वा । नोऽस्माकं रायो धनस्य भागं भक्तारमपहर्तारं शत्रुम् **अभि युध्य** आभिमुख्येन सम्यक् प्रहर । **त्वा** तादृशं त्वां कश्चिदपि शत्रुः **मा आ तनत्** क्लेशेन आनतं **मा** कार्षीत् । मा हिंसीदित्यर्थः । **उभयेभ्यः** उभयेषां युध्यमानानां सम्बन्धिनः **वीर्यस्य** बलस्य त्वम् **ईशिषे** ईश्वरो भवसि । स त्वं **गविष्टौ** सङ्ग्रामे **प्र चिकित्स** अस्मदीयमुपद्रवं परिहर ।

रायः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । भागम् । भजतेः कर्मणि घञ्; 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि वा । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । सहसावन् । सहः शब्दात् मतुपि छान्दस आकारोपजनः । युध्य । 'युध संप्रहारे' । व्यत्ययेन परस्मैपदम् । तनत् । 'तनु विस्तारे' । व्यत्ययेन शप् । 'न माङ्योगे' इति अडभावः । ईशिषे । 'ईशः से' (पा.सू.७.२.७७) इति इडागमः । चिकित्स । 'कित ज्ञाने' । 'गुप्तिज्किद्भ्यः सन्' (पा.सू.३.१.५) । गविष्टौ । गवां बाणानामिष्टयः एषणानि गमनानि येष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। २३ ।।

**सिद्धाञ्जनम्–** हे **देव! सोम, सहसावन्,** बलवन्, **देवेन मनसा** द्योतमानेन मननेन त्वदीयेन ज्ञानेनेत्यर्थः **नः** अस्माकं **रायः भागम्** दिव्यस्य धनस्य अस्माभिर्भजनीयं अंशं **अभियुध्य** आभिमुख्येन प्रेरय, असुरादिकं शत्रुं आभिमुख्येन प्रहृत्य नः प्रेषयेति भावः । **त्वा**

त्वां **मा आतनत्** मा कार्षीत् आततं कोऽपि शत्रुः, मा हिंसीदित्यर्थः, न कोऽपि हिंसितुं प्रभवतीति भावः, कुतः? **वीर्यस्य ईशिषे** बलस्य ईश्वरोऽसि । तस्मात् **उभयेभ्यः** देवेभ्यो मनुष्येभ्यश्च हितार्थं **गविष्टौ** गवां चिद्रश्मीनां इष्टौ एषणे अन्वेषणे **प्रचिकित्स** प्रकर्षेण ज्ञानेचां कुरु । इदं च गवेषणमधिकृत्य अङ्गिरस्तत्त्वविचारे प्रपञ्चितम् ।

सहसावन्–सहः शब्दात् मतुपि छान्दस आकारोपजनः । युध्य–व्यत्ययेन परस्मैपदम् । तनत्–व्यत्ययेन शप् । चिकित्स–कित ज्ञाने, अस्मात् सन् । गविष्टौ–गवां इष्टयः एषणानि यस्मिन् (सङ्ग्रामे, यजने वा) तस्मिन् ।। २३ ।।

**।। इति प्रथमाष्टके षष्ठाध्याये त्रयोविंशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**(सूक्तम्-९२)**

**(१८ गोतमो राहुगणः । उषाः । १६-१८ अश्विनौ । १-४ जगती । ५-१२ त्रिष्टुप् । १३-१८ उष्णिक्)**

**एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।**
**निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ।। १ ।।**

एताः । ऊँ इति । त्याः । उषसः । केतुम् । अक्रत । पूर्वे । अर्धे । रजसः । भानुम् । अञ्जते । निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यन्ति । मातरः ।। १ ।।

**स्कन्द–** 'उषस्यम्' । उषस्यमेतत् सूक्तम् । उकारः पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । या पूर्वेष्वप्यहःस्वकार्षुः **एताः** ताः **उषसः** एकस्या एवोषसः पूजनार्थमेतत् बहुवचनम् । भवन्तो मे गुरव इति यथा । अवयवभेदापेक्षं वा । भिन्नेष्वहःसूषोभेदात् बह्व्य एवोषसः । **केतुम् अक्रत** प्रज्ञानं प्राणिनां कुर्वन्ति । केन प्रकारेण । उच्यते । **पूर्वे अर्धे रजसः** द्युलोकस्यान्तरिक्षस्य वा । सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः । **भानुम् अञ्जते** भानुमिति तृतीयार्थे द्वितीया । अञ्जिर्व्यक्त्यर्थः । भानुना व्यञ्जन्ति । स्वया भासा सर्वं व्यक्ती-कुर्वन्तीत्यर्थः । कथम् । उच्यते । **निष्कृण्वानाः आयुधानीव** कृणोतिरत्र सामर्थ्यात् कृषेरर्थे द्रष्टव्यः । निष्कर्षन्तः । आयुधानीव **धृष्णवः** धर्षयितारो योद्धारो यथा कोशेभ्यः

**खड्गान्निष्कर्षन्तो व्यक्तीकुर्वन्ति तद्वदित्यर्थः ।** अथवा पूर्वे अर्धे रजसः भानुम् अञ्जते **इत्यञ्जिर्गत्यर्थः । सामर्थ्याच्चेहान्तर्णीतण्यर्थः ।** पूर्वे अर्धे अन्तरिक्षस्य द्युलोकस्य वा दीप्तिं गमयन्ति **प्राणिनां च प्रकाशद्वारेण प्रज्ञानं कुर्वन्ति ।** पूर्वार्धं च द्युलोकस्यान्तरिक्षस्य वा दीप्तं कुर्वन्तीत्यर्थः । कथम् । निष्कृण्वाना आयुधानीव । निरित्येष समित्येतस्य स्थाने । संस्कुर्वन्तः आयुधानीव घृष्णवः । यथा परिमार्जनादिभिः संस्कारैः संस्कुर्वन्तः आयुधानि योद्धारो दीप्तानि कुर्वन्ति तद्वदित्यर्थः । कृत्वा चैतत् **प्रति गावः अरुषीः यन्ति** प्रतियन्ति । यत आगताः तत्रैव प्रतिगच्छन्ति । यत आदित्यादुत्पन्नास्तत्रैव प्रविलीयन्त इत्यर्थः । गावः । उषसोऽत्र गाव उच्यन्ते । 'कृष्णा यत् गोष्वरुणीषु सीदत्' (ऋ १०,६२,४) इति यथा । उषसः कीदृश्यः । अरुषीः । अरुषतिर्गतिकर्मा (तु.निघ.२,१४) । गमनस्वभाविकाः । **मातरः** मातृस्थानीयाः सर्वस्य निर्मात्र्यो वा ।। १ ।।

**वेङ्कटमाधव–** ताः **एताः उषसः** प्रज्ञानम् अकृण्वन् **पूर्वे अर्धे** अन्तरिक्षलोकस्य प्राच्यां कुड्ये मृदमिव दीप्तिम् **अञ्जते** । कोशात् **आयुधानि निष्कृण्वानाः** वीराः इव **प्रति यन्ति** गन्त्र्यः आरोचमाना उषसः मातृस्थानीयाः । निरुक्तं च द्रष्टव्यम् । (या.१२,७) ।। १ ।।

**मुद्गल–** 'एता उ त्याः' इत्यष्टादशर्चमष्टमं सूक्तम् । गोतम ऋषिः । आदितश्चतस्रो जगत्यः । त्रयोदश्याद्याः षड्च उष्णिहः । शिष्टास्त्रिष्टुभः । उषा देवता । 'अश्विना वर्ति' इत्यन्त्यस्तृचोऽश्विदेवत्यः ।

उ इति पादपूरणम् । **त्याः** ताः **एताः उषसः** प्रभातकालाभिमानिन्यो देवताः । **केतुम्** अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् **अक्रत** अकृषत कृतवत्यः । यस्मादेवं तस्मात् उषसः **रजसः** अन्तरिक्षलोकस्य **पूर्वे अर्धे** प्राचीनदिग्भागे **भानुम्** प्रकाशम् **अञ्जते** व्यक्तीकुर्वन्ति । **घृष्णवः** धर्षणशीला योद्धारः **आयुधानि इव** यथा असिप्रभृतीन्यायुधानि संस्कुर्वन्ति । एवम् **निष्कृण्वानाः** स्वभासा जगत्संस्कुर्वाणाः गावः यमनस्वभावाः **अरुषीः** आरोचमानाः **मातरः** सूर्यस्य प्रकाशस्य निर्मात्र्यो मातर उषसः **प्रति यन्ति** प्रतिदिवसं गच्छन्ति । एवं विधा उषसोऽस्मान् रक्षन्त्वित्यर्थः ।। १ ।।

**सायण–** 'एता उ त्याः' इति अष्टादशर्चमष्टमं सूक्तं गोतमस्यार्षम् । आदित्यश्चतस्रो

जगत्यः । त्रयोदश्याद्याः षड्च उष्णिहः । शिष्टा अष्टौ त्रिष्टुभः । उषा देवता । 'अश्विना वर्तिः' इति अन्त्यस्तृचोऽश्विदेवताकः । तथा चानुक्रान्तम्– 'एता उ त्या व्यूनोषस्यं चतुर्जगत्यादि षळुष्णिगन्तं तृचोऽन्त्य आश्विनः' इति । सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाके उषस्ये क्रतौ जागते छन्दस्याश्विनशस्त्रे च 'एता उ त्याः' इति चतस्रो विनियुक्ताः । सूत्रितं च– 'एता उ त्या इति चतस्रो जागतम्' (आश्व.श्रौ.४.१४) इति ।

उ इत्येतत् पादपूरणम् । **त्याः** ताः **एताः उषसः** प्रभातकालाभिमानिन्यो देवताः । **केतुम्** अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् **अक्रत** अकृषत कृतवत्यः । यस्मादेवं तस्मात् उषसः **रजसः** अन्तरिक्षलोकस्य **पूर्वे अर्धे** प्राचीनदिग्भागे **भानुं** प्रकाशम् **अञ्जते** व्यक्तीकुर्वन्ति । **धृष्णवः** धर्षणशीला योद्धारः **आयुधानीव** यथा असिप्रभृतीन्यायुधानि संस्कुर्वन्ति एवं **निष्कृण्वानाः** स्वभासा जगत्संस्कुर्वाणाः **गावः** गमनस्वभावाः **अरुषीः** आरोचमानाः **मातरः** सूर्यप्रकाशस्य निर्मात्र्यो जगज्जनन्यो वा उषसः **प्रति यन्ति** प्रतिदिवसं गच्छन्ति । एवंविधा उषसोऽस्मान् रक्षन्त्वित्यर्थः । अत्र निरुक्तम्– 'एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने । एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रति यन्ति गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः' (निरु.१२.७) इति ।

अक्रत । करोतेर्लुङि 'मन्त्रे घस' इति च्लेः लुक् । निष्कृण्वानाः । 'कृवि हिंसाकरणयोश्च' । अस्मात् ताच्छीलिकः चानश् । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'एता उ त्या' इत्यष्टादशर्चं अष्टमं सूक्तं गोतमस्यार्षम् । आद्याश्चतस्रो जगत्यः, त्रयोदश्याद्याः उष्णिहः षड्चः, अष्टौ शिष्टा अनुष्टुभः । उषो देवता, अश्विना वर्तिरित्यन्त्यस्तृचो विश्वदेवत्यः ।

यद्यपि सक्तेऽस्मिन् ऋचां स्थूलार्थः उषः कालपरत्वेन विस्पष्टं लक्ष्यत एव, तथापि तत्र तत्र रहस्यार्थमन्तरेण न शक्यं ऋजुतात्पर्यं बोद्धुम् । अन्तरर्थे उषसः न प्रभातवेलाः किं तु प्रज्ञानसूर्योदयकालीनाः प्रभातभासो देव्यः । एताश्च चित्प्रभातभासः चित्सत्यज्योतिषः

साक्षात्कारात् प्राक् बहुवारं व्यक्ता भवन्ति वैदिकयोगमार्गयायिन ऋषेः, तासां दर्शने मन्त्रद्रष्टारः **तथा** वर्णयन्ति ताः यथा प्रायः बाह्यारुणोदयगामी च स्यान्मन्त्रवर्णः । उ पादपूरणः **एताः त्याः उषसः** एतास्ताः चिज्ज्योतिरुदयभासः केतुम् प्रज्ञानकारकं प्रकाशं **अक्रत** अकृषत, तस्मात् **रजसः** अन्तरिक्षस्य मध्यमस्थानस्य प्राणनिलयस्य **पूर्वे अर्धे** प्राक् व्यक्ते भागे **भानुम्** प्रकाशं **अञ्जते** व्यक्तीकुर्वन्ति । **धृष्णवः** धर्षणशीलाः योद्धारः **आयुधानीव** यथा आयुधानि संस्कुर्वन्ति तथा **निष्कृण्वानाः** संस्कुर्वाणाः (जगत्सर्वम्) ऋषेः प्राणभुवं आकाशं स्वशरीरं चेति बोध्यम् । **अरुषीः** आरोचमानाः **मातरः** सत्यसूर्यप्रकाशस्य जनयित्र्यः **गावः** उषसः **प्रति यन्ति** प्रत्यागच्छन्ति । वह्नीनामुषसां प्रादुर्भावः भवति सत्यज्योतिषः साक्षात्कारात्पूर्वम् ।

अक्रत–करोतेर्लुङ्, मन्त्रे च्लेर्लुक् । निष्कृण्वानाः–कृवि हिंसाकरणयोः, ताच्छीलिकश्चानश् ।।

## ऋक्संहिता पदपाठसहिता

**उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।**
**अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ।। २ ।।**
**उत् । अपप्तन् । अरुणाः । भानवः । वृथा । सुऽआयुजः । अरुषीः । गाः । अयुक्षत । अक्रन् । उषसः । वयुनानि । पूर्वऽथा । रुशन्तम् । भानुम् । अरुषीः । अशिश्रयुः ।।**

**स्कन्द– उत् अपप्तन्** उत्पतन्ति उद्गच्छन्ति । **अरुणाः** रक्तवर्णाः उषसः । **भानवः** दीप्ताः । उद्गम्य च **वृथा** अयत्नेन । **स्वायुजः** सुखमायुज्यन्ते या रथेषु ताः स्वायुजः **अरुषीः** गमनस्वभाविकाः । **गाः** उषसामुपयोजनानि गाव इहोच्यन्ते । आत्मीया वडवाः । **अयुक्षत** युञ्जन्ति । युक्त्वा च त्रीनपि लोकान् गत्वा **अक्रन्** कुर्वन्ति **उषासः वयुनानि** । प्रकाशद्वारेण प्रज्ञानानि कुर्वन्ति प्राणिनाम् । **पूर्वथा** पूर्वेष्विव कालेषु । कृत्वा च **रुशन्तम्** दीप्यमानम् **भानुम् अरुषीः** गमनस्वभाविकाः **अशिश्रयुः** संश्रयन्ति । आदित्ये एव प्रलीयन्त इत्यर्थः ।।

**वेङ्कटमाधव– उत् अपप्तन् अरुणाः** दीप्तयः अतायासेन । स्वयमेव युज्यमानाः आरोचमाना आत्मीयाः **गाः** चाश्वभूताः **अयुक्षत** रथे अयोजयन् । पूर्वेष्विवाहःसु प्रज्ञानानि अकृण्वन् । दीप्यमानमादित्यम् । **उषसः** श्रयन्ति आरोचमानाः ।। २ ।।

**मुद्गल– अरुणाः** रोचमानाः **भानवः** औपस्यो दीप्तयः **वृथा** अनायासेन स्वयमेव **उत् अपप्तन्** उदगमन् । तदनन्तरम् **उषसः** च स्वायुजः सुस्वेन रथे आयोक्तुं शक्याः **अरुषीः** शुभ्रवर्णा **गाः** पूर्वमुच्छ्रितान् रश्मीन् **अयुक्षत** स्वरथेऽयोजयन् । एवं गोभिर्युक्तं रथमारुह्य उषसः **पूर्वथा** पूर्वेषु अतीतेषु अहःस्विव **वयुनानि** सर्वेषां प्राणिनां ज्ञानानि **अक्रन्** अकार्षुः । उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति । तदनन्तरम् **अरुषीः** आरोचमानास्ता उषसः **रुशन्तम्** शुभ्रवर्णम् **भानुम्** सूर्यम् **अशिश्रयुः** असेवन्त । तेन सहैकीभवन्तीत्यर्थः ।। २ ।।

**सायण– अरुणाः** आरोचमानाः **भानवः** औषस्यो दीप्तयः **वृथा** अनायासेन स्वयमेव **उदपप्तन्** उदगमन् । तदनन्तरम् **उषसः** च **स्वायुजः** सुखेन रथे आयोक्तुं शक्याः **अरुषीः** शुभ्रवर्णाः **गाः** पूर्वमुत्थितान् रश्मीन् ईदृशीः स्ववाहनभूताश्चतुष्पदीर्गा एव वा **अयुक्षत** स्वरथेऽयोजयन् । उक्तं च– 'अरुण्यो गाव उषसाम्' (नि.१.१५.७) इति । एवं गोभिर्युक्तं रथमारुह्य उषसः **पूर्वथा** पूर्वेष्वतीतेष्वहःस्विव **वयुनानि** सर्वेषां प्राणिनां ज्ञानानि **अक्रन्** अकार्षुः । उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति । तदनन्तरम् **अरुषीः** आरोचमानास्ताः उषसः **रुशन्तम्** । 'रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः' (निरु.२.२०) इति यास्कः । शुभ्रवर्णं **भानुं** सूर्यम् **अशिश्रयुः** असेवन्त । तेन सह एकीभवन्तीत्यर्थः ।

अपप्तन् । 'पत्लृ गतौ' । लुङि लृदित्त्वात् च्लेः अङादेशः । 'पतः पुम्' (पा.सू.७.४.१९) इति धातोः पुमागमः । अक्रन् । 'मन्त्रे घस' इत्यादिना च्लेः लुक् । पूर्वथा । 'प्रानपूर्वविश्वेमात्थाल छन्दसि' (पा.सू.५.३.१११) इति इवार्थे थाल्प्रत्ययः । अशिश्रयुः । 'श्रिञ् सेवायाम्' । 'बहुलं छन्दसि' इति शपः श्लुः । 'सिजभ्यस्तविदिभ्यश्च' इति झेः जुस् । 'जुसि च' (पा.सू.७.३.८३) इति गुणः ।। २ ।।

**सिद्धाञ्जनम्– अरुणाः** अरुणवर्णाः **भानवः** किरणाः **वृथा** अनायासेन **उदपप्तन्** उद्गता अभूवन् । ततः **उषसः** चित्रप्रभातभासो देव्यः **स्वायुजः** सुखेन आयोक्तुं शक्याः **अरुषीः** आरोचमानाः **गाः** पूर्वम् उदितान् चिद्रश्मीन् **अयुक्षत** अयोजयन् स्वरथे । एवं गोरथयुक्ताः उषसः **पूर्वथा** यथापूर्वं **वयुनानि** ज्ञानानि, पूर्णसत्यसाक्षात्कारात् प्रागावश्यकानि **अक्रन्** अकार्षुः । ततः परं **अरुषीः** आरोचमानाः ता उषसः **रुशन्तम् भानुम्** ज्वलन्तं सत्यज्योतिः स्वरूपं सूर्यं **अशिश्रयुः** असेवन्त ।

अपप्तन्–पततेर्लुङ् । अक्रन्–मन्त्रे घसेत्यादिना च्लेर्लुक् । अशिश्रयुः–श्रिञ् सेवायाम्, शपः श्लुः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।**
**इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ ३ ॥**
**अर्चन्ति । नारीः । अपसः । न । विष्टिऽभिः । समानेन । योजनेन । आ । पराऽवतः ।**
**इषम् । वहन्तीः । सुऽकृते । सुऽदानवे । विश्वा । इत् । अह । यजमानाय । सुन्वते ॥**

**स्कन्द– अर्चन्ति** अर्च पूजायाम् । पूजयन्त्युषसः । प्रकाशत्वापादनेनाभिपूजितं कुर्वन्तीत्यर्थः । किम् । सामर्थ्यात् त्रैलोक्यं दिवं वा । **नारीः अपसः न विष्टिभिः** नार्यः कर्मवत्य इव कर्मभिः । उपलेषनादिकर्मभिः गृहाद्यभिपूजितं कुर्वन्ति तद्वदित्यर्थः । न च केवलाः । किं तर्हि । समानेन योजनेन सर्वैः प्रकाशैः प्रकाशकत्वेन युज्यमानत्वाद् योजन इहाऽऽदित्य उच्यते । सहयोगलक्षणा चैषा तृतीया । आत्मनः समानेन सर्वप्रकाश्यानां वा साधारणेन प्रकाशयित्राऽऽदित्येन सहेत्यर्थः । अथवा प्रकाश्यैर्युज्यमानत्वाद् योजन इह प्रकाश एवोच्यते । करणे एवैषा तृतीया । सर्वप्रकाश्यसाधारणेन प्रकाशेनार्चन्तीत्यर्थः । **आ परावत्** दूरात् अन्तात् । समस्तं त्रैलोक्यं दिवश्चेत्यर्थः । **इषम् वहन्तीः** प्रापयन्त्यः । अन्नं ददत्य इत्यर्थः । **सुकृते** शोभनकारिणे **सुदानवे** शोभनहविर्दायिने । **विश्वा इत् अह** विश्वा इति चतुर्थ्येकवचनस्याकारः । इत् अह इति निपातौ पदपूरणौ । सर्वस्मै **यजमानाय सुन्वते** सोमाभिषवं कुर्वते ॥ ३ ॥

**वेङ्कटमाधव– अर्चन्ति** उषस आप इव प्रवेशनैः एकेन उद्योगेन आ पश्चिमायाः अन्नम् वहन्त्यः सुकर्मणे सुदानाय । विश्वान्येवापेक्षितानि च **यजमानाय सुत्वते** वहन्त्यः ॥ ३ ॥

**मुद्गल– नारीः** नेत्र्यः उषसः **विष्टिभिः** निवेशकैः स्वकीयैस्तेजोभिः समानेन योजनेन एकेनैवोद्यमेन **आ परावतः** आ दूरदेशाद् आ पश्चिमदिग्भागात् **अर्चन्ति** नभःप्रदेशं पूजयन्ति । कृत्स्नं जगद् युगपदेव व्याप्नुवन्तीत्यर्थः । दृष्टान्तः । **अपसः न** युद्धकर्मणोपेता पुरुषा यथा स्वकीयैरायुधैर्धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत् । किं कुर्वन्त्यः । **सुकृते** शोभनकर्मणः कर्त्रे **सुन्वते** सोमाभिषवं कुर्वते **सुदानवे** कल्याणीर्दक्षिणा ऋत्विग्भ्यो ददते **यजमानाय विश्वा इत् अह** सर्वमेव **इषम्** अन्नम् **वहन्तीः** आवहन्त्यः प्रयच्छन्त्य इत्यर्थः ॥ ३ ॥

**सायण– नारीः** नेत्र्यः उषसः **विष्टिभिः** निवेशकैः स्वकीयैस्तेजोभिः **समानेन योजनेन** एकेनैव योजनेनोद्योगेन **आ परावतः** आ दूरदेशात् आ पश्चिमदिग्भागात् **अर्चन्ति** नभःप्रदेशं पूजयन्ति । कृत्स्नं जगद्युगपदेव व्याप्नुवन्तीत्यर्थः । तत्र दृष्टान्तः । **अपसो न** । युद्धकर्मणोपेताः पुरुषा यथा स्वकीयैरायुधैर्धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत् । किं कुर्वत्यः । **सुकृते** शोभनस्य कर्मणः कर्त्रे **सुन्वते** सोमाभिषवं कुर्वते **सुदानवे** कल्याणीर्दक्षिणाः ऋत्विग्भ्यो ददते **यजमानाय विश्वेदह** सर्वमेव **इषम्** अन्नं **वहन्तीः** आवहन्त्यः प्रयच्छन्त्य इत्यर्थः ।

नारीः । 'नॄ नये' । 'ऋदोरप्' । 'नृनरयोर्वृद्धिश्च' (पा.सू.४.१.७३.ग) इति शार्ङ्गरवादिषु पाठात् ङीन् । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । अपसः । अपसूशब्दात् 'अर्शआदिभ्योऽच्' इति अच् । 'सुपां सुलुक्' इति जसः सुः । व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम् । विष्टिभिः । 'विश प्रवेशने' । विशन्ति प्रविशन्तीति विष्टयः किरणाः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । विश्वा । 'सुपां सुलुक्' इति अमः डादेशः ।। ३ ।।

**सिद्धाञ्जनम्– नारीः** नेत्र्यः उषसः, चित्सत्योदयात्पूर्वं तत्प्रभातरश्मीनां नेत्र्य इत्यर्थः **विष्टिभिः** स्वीयाभिः व्याप्तिभिः **अर्चन्ति** सर्वतः दीपयन्ति । तत्र दृष्टान्तः–**अपसो न** अपसा अपस्वी लक्ष्यते, यथा कर्मकुशलः एकत्र स्थितः सर्वत्र व्याप्नोति स्वकर्मव्याप्तिभिः तद्वत् । कथं अर्चन्ति? **समानेन योजनेन** वैषम्यराहित्येन उद्योजनेन, समप्रवर्तनेनेत्यर्थः । किं कुर्वत्यः? **परावतः** दूरप्रदेशात्, परस्मात् ज्योतिषः स्थानात् **विश्वेदह** सर्वामेव **इषम्** एषणां, प्रेरणाशक्तिं **आवहन्तीः** आहरन्त्यः । कस्मै? **सुकृते** शोभनकर्मकारिणे **सुदानवे** देवेभ्यः शोभनदानकर्त्रे **सुन्वते** सोमाभिषवं कुर्वते, एवम्भूताय **यजमानाय** ।

नारीः–नॄ नयने, शार्ङ्गरवादिषु पाठात् ङीन् । विष्टिभिः–विष्लृ व्याप्तौ । विश्वा–सुपां सुलुगिति अमो डादेशः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम् ।**
**ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः ।। ४ ।।**
अधि । पेशांसि । वपते । नृतूऽइव । अप । ऊर्णुते । वक्षः । उस्राऽइव । बर्जहम् । ज्योतिः ।

**विश्वस्मै । भुवनाय । कृण्वती । गावः । न । व्रजम् । वि । उषाः । आवरित्यावः । तमः ।। ४ ।।**

**स्कन्द– अधि** उपरि **पेशांसि** प्रकाश्यानि रूपाणि **वपते** । वपिः 'केशश्मश्रु वपते' (तै.ब्रा ३,८,१,२) इत्यादौ मुण्डने प्रसिद्धः । मुण्डयत्युषा । केशस्थानीयं तमः प्रकाश्यानामर्थानामपनवतीत्यर्थः । कथम् । **नृतूरिव** नापित इव । **अप ऊर्णुत** प्रकाशयति चात्मीयं वक्षः । कथम् । उस्रेव वर्जहम् 'उस्रा' (निघ.२,११) इति गोनाम । भृञ् भरणे । प्राणिनां भरणसमर्थत्वाद् बर् इति क्षीरमुच्यते । तज्जहातोति बर्जहम् ऊधः । गौरिव क्षीरपूर्णमूध इत्यर्थः । किं कुर्वत्युषाः । उच्यते । द्वयमिदं करोति । **ज्योतिर्विश्वस्मै भुवनाय** सर्वस्य भूतजातत्वार्थाय **कृण्वती** कुर्वती । किञ्च **गावः न व्रजम्** यथा गावो गोष्ठम् एवम् उषाः **वि आव** व्यावृणोति । स्वेन ज्योतिषा व्याप्नोतीत्यर्थः । किम् । उच्यते । **तमः** शार्वरम् ।। ४ ।।

**वेङ्कटमाधव– अधि वपते** आश्लिष्टानि तमांसि नापित इव केशान् । तमोभिराच्छादितम् **वक्षः** च **अप ऊर्णुते** गौरिव ऊधो दोहाय । **ज्योतिः विश्वस्मै भुवनाय कृण्वती** । यथा **गावः व्रजम्** व्यावृण्वन्ति एवम् **तमः** स्वेन ज्योतिषा व्यावृणोति ।। ४ ।।

**मुद्गल– उषाः पेशांसि** जगत्स्वाश्लिष्टानि कृष्णवर्णानि तमांसि **अधि** आधिक्येन **वपते** छिनत्ति । दृष्टान्तः । **नृतूः** इव नृंस्तूर्वति केशेन रिक्तीकरोतीति नृतूर्नापितः । स यथा केशान्निःशेषेण छिनत्ति, एवमुषा अप्यन्धकारं समूलं निरस्यतीत्यर्थः । प्रथमतोऽन्धकारं स्वकिरणैर्निरस्य **वक्षः** स्वकीयमुरःप्रदेशम् **अप ऊर्णुते** तमसाऽनाच्छादितं करोति । स्वयमाविर्भवतीत्यर्थः । **बर्जहम्** पयस उत्पत्तिस्थानं दोहनसमये **उस्रा इव** गौर्यथा आविष्करोति तद्वत् । किं कुर्वती । **गावः न व्रजम्** यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवन्ति एवं स्वयमेव प्राचीं दिशं प्राप्य विश्वस्मै सर्वस्मै **भुवनाय** लोकाय **ज्योतिः कृण्वती** प्रकाशं कुर्वती । एवमुक्तेन प्रकारेण उषाः **तमः** अन्धकारम् **वि आवः** विवृतमपश्लिष्टमकरोत् ।। ४ ।।

**सायण– उषाः पेशांसि** जगत्स्वाश्लिष्टानि कृष्णवर्णानि तमांसि **अधि** आधिक्येन **वपते** छिनत्ति । तत्र दृष्टान्तः । **नृतूरिव** । नृन् तूर्वति केशेन रिक्तीकरोतीति नृतूर्नापितः । स यथा केशान्निःशेषेण छिनत्ति एवमुषा अप्यन्धकारं समूलं हिनस्तीत्यर्थः । यद्वा नृतूरिव नृत्यन्ती

योषिदिव । पेशांसि । रूपनामैतत् । सर्वैर्दर्शनीयानि रूपाण्युषा अधि वपते स्वात्मन्यधिकं धारयति एवं प्रथमतोऽन्धकारं स्वकिरणैर्निरस्य **वक्षः** स्वकीयमुरःप्रदेशम् **अपोर्णुते** तमसानाच्छादितं करोति । स्वयमाविर्भवतीत्यर्थः । **वर्जहं** पयस उत्पत्तिस्थानं दोहनसमये **उस्रा** गौर्यथा आविष्करोति तद्वत् । किं कुर्वती । **गावो न व्रजं** यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवन्ति एवं स्वयमेव प्राचीं दिशं प्राप्य **विश्वस्मै भुवनाय** सर्वस्मै लोकाय **ज्योतिः कृण्वती** प्रकाशं कुर्वती । एवमुक्तेन प्रकारेणोषाः **तमः** अन्धकारं **वि आवः** विवृतमपश्लिष्टमकरोत् ।

नृतूरिव । तुर्वी हिंसार्थः । 'क्विप् च' इति क्विप् । 'राल्लोपः' इति वलोपः । 'र्वोरुपधायाः' इति दीर्घत्वम् । यद्वा । 'नृती गात्रविनामे' । 'नृतिशृध्योः कूः' (उ.सू.१.९१) इति कूप्रत्ययः । वर्जहम् । 'वृङ् सम्भक्तौ' । वृणीते सम्भजते गामिति यः पयः । विच् । तज्जहातीति वर्जहः । 'ओहाक् त्यागे' । 'खश्यप्रकरणे वातशुनीतिलगर्धेष्वजधेट्तुदजहातिभ्य उपसङ्ख्यानम्' (पा.सू. ३.२.२८.१) इति अगर्धशब्दोपपदादपि 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् खश् । तस्य सार्वधातुकत्वेन कर्तरि शपि जुहोत्यादित्वात् श्लुः । द्विर्वचनादि । बवयोरभेद इति बत्वम् । दिवोदासादित्वात् पूर्वपदाद्युदात्तत्वम् । आवः । 'वृञ् वरणे' । लुङि 'मन्त्रे घसः' इति च्लेः लुक् । गुणे 'हल्ङ्याब्भ्यः' इति लोपः । 'छन्दस्यपि दृश्यते' (पा.सू.६.४.७३) इति आडागमः ।।

**सिद्धाञ्जनम्–** नेत्र्य उषसः व्याप्तिभिः सर्वतो दीपयन्तीति तमसः प्रध्वंस उक्तः । इदानीमौषस्यं दर्शनीयत्वमाह । **उषाः** देवी **नृतूरिव** नृत्यन्ती योषिदिव **पेशांसि** रूपाणि बहूनि दर्शनीयानि **अधि वपते** स्वस्यां अधिकं धारयते । नृतूर्नापितः यथा केशान् निःशेषेण छिनत्ति तथा उषाः तमश्छिनत्तीति व्याख्यान्तरं सायणस्य, अस्मिन् पक्षे नॄन् तूर्वति केशेन रिक्तीकरो नृतूर्नापितः, तदा पेशांसि कृष्णवर्णानि तमांसीति व्याख्या भवति । अत्र पेशो रूपमित्येव साधीयानर्थः । एवं बहुधा रूपप्रदर्शनात्परं **वक्षः अपोर्णुते** स्वीयं उरःप्रदेशं अनाच्छादितं करोति स्वयं आविर्भवतीत्यर्थः । उषसां गोभिरुपमा वेदे प्रसिद्धा, वक्षःप्रदर्शनं उषसां सम्यगाविष्कारं ज्ञापयति । तत्र दृष्टान्तः– **वर्जहम्** सकृदेवास्य प्रयोग ऋक्संहितायाम्, अस्य रूपावतारः सायणीयानुसारेण क्रियते, पयस उपत्तिस्थानं, **उस्रा इव** गौर्यथा दोहनसमये आविष्करोति तद्वत् । अथ उषाः, **गावः व्रजम् न** यथा गावः स्वीयं स्थानं गोष्ठं सत्वरं प्राप्नुवन्ति तथा उत्तम-ज्योतिःस्थानं चित्सूर्यमण्डलं प्राप्य **विश्वस्मै भुवनाय** सर्वस्मै जगते **ज्योतिः कृण्वती** प्रकाशं कुर्वती **तमः** अन्धकारं अन्तर्बहिश्च **व्यावः** विवृतं अकरोत्, व्यनाशयत् ।

नृतूः–नृती गात्रविक्षेपे, नृतिगृध्योः कूरिति कूप्रत्ययः । वर्जहम्–वृङ सम्भजने, वृणीते सम्भजते गामिति वः पयः, ववयोरभेद इति वत्वं, विच्, तज्जहातीति वर्जहः । आवः–वृञ् वरणे, लुङि मन्त्रे घसेति च्लेर्लुक् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।**
**स्वरुं न पेशो विदथेष्वञ्जञ् चित्रं दिवो दुहिता भानुमश्रेत् ।। ५ ।।**
**प्रति । अर्चिः । रुशत् । अस्याः । वि । तिष्ठते । बाधते । कृष्णम् । अभ्वम् । स्वरुम् । न । पेशः विदथेषु । अञ्जन् । चित्रम् । दिवः । दुहिता । भानुम् । अश्रेत् ।। ५ ।।**

**स्कन्द– अर्चिः** ज्योतिः **रुशत्** दीप्यमानम् **अस्याः** उषस **प्रति अदर्शि** प्रतिदृश्यते । **वि तिष्ठते** विविधं गच्छति त्रीनपि लोकान् प्रति । गत्वा च **बाधते** अपनयति **कृष्णम्** कृष्णवर्णं शार्वरं तमः । **अभ्वम्** महत् । किञ्च **स्वरुम्** न यूपस्य यः प्रथमशकलः पश्वञ्जार्थमुपादीयते स स्वरुरित्युच्यते । प्रथमार्थे चैषा द्वितीया । यथा स्वरुः **पेशः** आज्यसम्बन्धादुज्ज्वलरूपम् **विदथेषु अञ्जन्** श्रयति एवम् **चित्रम्** विचित्रं पूज्यं वा **दिवः दुहिता** द्युप्रभवत्वादुषा दुहितेत्याख्यायते । सा **भानुम्** दीप्तिम् **अश्रेत्** श्रयति । प्रतिक्षणं दीप्ता रूपान्तरीभवतीत्यर्थः ।।

**वेङ्कटमाधव–** उषसः दीप्तिः प्रतिदृश्यते श्वेता । विविधं च गच्छति अर्चिः । **बाधते** च तमो महत् । स्वरुम् इव रूपं गृहेषु अञ्जन्ति इति । **चित्रम् दिवः दुहिता भानुम्** उत् **अश्रेत्** यूपमिवोत्थापयति । स्वरुमान् यूपः स्वरुः इति ।। ५ ।।

**मुद्गल– अस्याः** उषसः **रुशत्** दीप्यमानम् **अर्चिः** तेजः **प्रति अदर्शि** सर्वैः पूर्वस्यां दिशि प्रथमतो दृश्यते । **वि तिष्ठते** सर्वासु दिक्षु विविधमवतिष्ठते । व्याप्नोतीत्यर्थः । सर्वा दिशो व्याप्य च **अभ्वम्** अतिशयेन विपुलम् **कृष्णम्** कृष्णवर्णमन्धकारम् **बाधते** अपसारयति । **विदथेषु** यज्ञेषु **स्वरुम् न** स्वरुनाम्ना शकलेन युक्तं यूपं यथा आध्वर्यवः **अञ्जन्** अञ्जन्ति । तद्वन्नभसि स्वकीयम् **पेशः** रूपम् उषा अनक्ति संश्लिष्टं करोति । तदनन्तरम् **चित्रम्** चायनीयम् **भानुम्** सूर्यम् दिवः **दुहिता** द्युलोकादुत्पन्ना उषाः **अश्रेत्** असेवत ।। ५ ।।

**सायण–** प्रातरनुवाकस्योषस्ये क्रतौ 'प्रत्यर्चिः' इति अष्टावनुवक्तव्याः आश्विनशस्त्रे च । तथा च सूत्रितम्– 'प्रत्यर्चिरित्यष्टौ व्युषा आ वो दिविजा इति षळिति त्रैष्टुभम् (आश्व.श्रौ. ४.१४) इति ।

**अस्याः** उषसः **रुशत्** दीप्यमानम् **अर्चिः** तेजः **प्रति अदर्शि** सर्वैः पूर्वस्यां दिशि प्रथमतो दृश्यते । **वि तिष्ठते** सर्वासु दिक्षु विविधमवतिष्ठते व्याप्नोतीत्यर्थः । सर्वा दिशो व्याप्य च **अभ्वम्** । महन्नामैतत् । अतिशयेन विपुलं **कृष्णं** कृष्णवर्णमन्धकारं **बाधते** अपसारयति । **विदथेषु** यज्ञेषु **स्वरुं न** स्वरुनाम्ना शकलेन युक्तं यूपं यथा आज्येन आध्वर्यवः **अञ्जन्** अञ्जन्ति तद्वन्नभसि स्वकीयं **पेशः** रूपम् उषा अनक्ति संश्लिष्टं करोति । तदनन्तरं **चित्रं** चायनीयं **भानुं** सूर्यं **दिवो दुहिता** द्युलोकादुत्पन्नोषाः **अश्रेत्** असेवत ।

वितिष्ठते । 'समवप्रविभ्यः' इत्यात्मनेपदम् । अश्रेत् । 'श्रिञ् सेवायाम्' । लङि 'बहुलं छन्दसि' इति शपो लुक् ।। ५ ।।

**सिद्धाञ्जनम्– अस्याः उषसः रुशत्** दीप्यमानं **अर्चिः** कान्तिः **प्रति अदर्शि** पूर्वमिव प्रत्यावृत्य दृश्यते, **वितिष्ठते** सर्वत्र व्याप्यावतिष्ठते, **अभ्वम्** महन्नाम, बलिष्ठं सान्द्रं **कृष्णम्** कृष्णवर्णं घनं तमः **बाधते** अपसारयति । **विदथेषु** ज्ञानसाधनप्राप्तिस्थानेषु अन्तर्यजनेषु **पेशः** स्वकीयं रूपं अनक्ति संश्लिष्टं करोति । तत्र दृष्टान्तः–विदथेषु बाह्येषु यज्ञेषु **स्वरुम् न** यूपं यथा **अञ्जन्** अञ्जन्ति अध्वर्यवः । स्वरुशब्दस्य व्युत्पत्तिः सन्दिग्धा, यूपः दारुशकलः, दृढप्रतिष्ठो ध्वजो वा भवति । ततः **चित्रम्** विचित्रं आश्चर्यकरं **भानुम्** सूर्यं **दिवो दुहिता** उषाः **अश्रेत्** असेवत् ।

वितिष्ठते–समवप्रविभ्यः स्थ इत्यात्मनेपदम् । अश्रेत्–श्रिञ् सेवायाम्, लङः, शपो लुक् बहुलं छन्दसि ।। ५ ।।

**।। इति प्रथमाष्टके षष्ठाध्याये चतुर्विंशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**अता॑रिष्म॒ तम॑सस्पा॒रम॒स्योषा उ॒च्छन्ती॑ व॒युना॑ कृणोति ।**
**श्रि॒ये छन्दो॒ न स्म॑यते विभा॒ती सु॒प्रती॑का सौमन॒साया॑जीगः ।। ६ ।।**

**अतारिष्म । तमसः । पारम् । अस्य । उषाः । उच्छन्ती । वयुना । कृणोति । श्रिये । छन्दः । न । स्मयते । । विऽभाती । सुऽप्रतीका । सौमनसाय । अजीगरिति ।। ६ ।।**

**स्कन्द– अतारिष्म** निस्संशयं प्राप्ता वयम् **तमसः पारम् अस्य** । किं कारणम् । उच्यते । यस्मात् **उषाः** इयं साम्प्रतम् **उच्छन्ती** तमांसि विवासयन्ती **वयुना** प्रज्ञानानि प्राणिनाम् **कृणोति** करोति । यस्माच्च **श्रिये** प्रकाशलक्षणायै । **छन्दः न** 'छन्त्सत्' (निघ.२,६) इति कान्तिकर्मसु पाठात् छन्दश्शब्दोऽत्र कामिनीवचनः । कामिनीव स्मयते ष्मिङ् ईषद्धसने । ईषद्धसन्ती । **विभाती** विविधं दीप्यमाना । यथा कामिनी ईषद्धसन्ती स्वदन्तकिरणान् प्रकाशयति, एवमुषाः स्वकिरणानाविष्करोतीत्यर्थः । अथवा 'छन्दः' (निघ.३,१६) इति स्तोतृनाम । स्तोतेव स्मयते । यथा स्तोता स्तुत्यमतिशयवद्भिर्गुणैः स्तुवन् प्रकर्षाद्विकसितवदनो भवति तद्वदित्यर्थः । स्मित्वा च **सुप्रतीका** प्रतीकशब्दो मुखवचनः दर्शनपर्यायो वा । सुमुखा सुदर्शना वा । **सौमनसाय** सौमनस्याय प्राणिनाम् अजीगः जिगर्तिर्गिरतिकर्मा वार गृह्णातिकर्मा वाऽन्यत्र (तु.या.६,८) । इह तु सामर्थ्यात् गतिकर्मणां इदं रूपम् । त्रीनपि लोकान् प्रति गच्छतीत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** नैशस्य **तमसः पारम्** वयं तीर्णवन्तः । **उषाः** व्युच्छन्ती प्रज्ञानानि च **कृणोति** । धनाश्रयणाय दरिद्रो यथाऽऽढ्याय आत्मच्छन्दं प्रकाशयति एवमिदं हसति, शोभनावयवा सर्वेषां **सौमनसाय** तमश्च गिरति इति ।। ६ ।।

**मुद्गल– अस्य** नैशस्य **तमसः** अन्धकारस्य **पारम्** समाप्तिप्रदेशम् **अतारिष्म** उत्तीर्णा अभूम । अनन्तरम् **उच्छन्ती** नैशं तमो वर्जयन्ती **उषाः वयुना** वयुनानि सर्वेषां प्राणिनां ज्ञानानि **कृणोति** निर्मिमीते । **श्रिये** सम्पदर्थम् **छन्दः न स्मयते** । यथा उपच्छन्दयिता वशीकरणसमर्थः पुरुषः आढ्यसमीपं प्राप्य तत्प्रीत्यर्थं स्मयते हसति एवम् **विभाती** विशिष्टप्रकाशं कुर्वत्युषाः स्वकीयया निर्मलदीप्त्या हसन्तीव दृश्यते । एवम् **सुप्रतीका** विशिष्टप्रकाशरूपत्वेन शोभमानाङ्गी सती **सौमनताय** सर्वेषां सौमनस्याय **अजीगः** अन्तकारं भक्षितवती ।। ६ ।।

**सायण– अस्य** नैशस्य **तमसः** अन्धकारस्य **पारं** समाप्तिप्रदेशम् **अतारिष्म** उत्तीर्णा अभूम । अनन्तरम् **उच्छन्ती** नैशं तमो वर्जयन्ती **उषाः वयुना** वयुनानि सर्वेषां प्राणिनां ज्ञानानि **कृणोति** निर्मिमीते । **श्रिये** सम्पदर्थं **छन्दो न स्मयते** । यथोपच्छन्दयिता वशीकरणे समर्थः

पुरुषः आढ्यसमीपं प्राप्य तत्प्रीत्यर्थं स्मयते हसति एवं **विभाती** विशिष्टप्रकाशं कुर्वत्युषाः स्वकीयया निर्मलदीप्त्या हसन्तीव दृश्यते । एवं **सुप्रतीका** विशिष्टप्रकाशरूपत्वेन शोभनाङ्गी सती **सौमनसाय** सर्वेषां सौमनस्याय **अजीगः** अन्धकारं भक्षितवती ।

अतारिष्म । 'तॄ प्लवनतरणयोः' । लुङि सिचि वृद्धिः । तमसः । 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य संहितायां सत्वम् । स्मयते । 'स्मिङ् ईषद्धसने' । भौवादिकः । अजीगः । 'गॄ निगरणे' । लङि 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । तुजादित्वात् दीर्घः ।। ६ ।।

**सिद्धाञ्जनम्–** उषसमधिकृत्य देवताविचारे भूमिकायां यदुक्तं तदवधेयम् । ऋगेषा बाह्यार्थपक्षे गृहीता चेदुपहसनीयतां भजत इति भूमिकायामुदाहृतम् ।

**अस्य** बहोः कालादनुभूयमानस्य **तमसः** अज्ञानान्धकारस्य **पारम्** अवधिं **अतारिष्म** तीर्त्वा चित्प्रकाशं प्राप्ताः स्मः । कुतः? **उच्छन्ती** तमो वर्जयन्ती, प्रकाशमाना **उषाः** चित्प्रभातभा देवी **वयुना** ज्ञानानि नवनवानि **कृणोति** करोति । अपि च **श्रिये** शोभायै स्वप्रभाप्रदर्शनाय, **स्मयते** हसति, तत्र दृष्टान्तः– **छन्दः न** छन्देन छन्दयिता लक्ष्यते, यथा उपच्छन्दयिता पुरुषः हसति तद्वत् । अपि च **विभाती** एवं विशिष्टां भां कुर्वती **सुप्रतीका** शोभनमुखी **सौमनसाय** सर्वस्यापि सौमनस्यापादनाय, **अजीगः** भक्षितवती पूर्वोक्तलक्षणं तमः ।

स्मयते–ष्मिङः ईषद्धसने । अजीगः–गु निगरणे, लङः, शपः श्लुः अन्यत्सर्वं च छान्दसम् ।।

## ऋक्संहिता पदपाठसहिता

**भास्व॑ती ने॒त्री सू॒नृता॑नां दि॒वः स्त॑वे दु॒हि॒ता गोत॑मेभिः ।**
**प्र॒जाव॑तो नृ॒वतो॒ अश्व॑बुध्या॒नुषो॒ गोअ॑ग्राँ उप॑ मासि॒ वाजा॑न् ।। ७ ।।**
**भास्व॑ती । ने॒त्री । सू॒नृता॑नाम् । दि॒वः । स्त॒वे॒ । दु॒हि॒ता । गोत॑मेभिः । प्र॒जाऽव॑तः । नृ॒ऽवतः॑ । अश्व॑ऽबुध्यान् । उषः॑ । गोऽअ॑ग्रान् । उप॑ । मा॒सि॒ । वाजा॑न् ।। ७ ।।**

**स्कन्द– भास्वती** 'भास्वती' (निघ १,८) इत्युषोनाम । **नेत्री सूनृतानाम्** वाचाम् । उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते । अतः सैव तासां प्रवर्तयित्रीत्युच्यते– नेत्री सूनृता-

नामिति । **दिवः दुहिता** द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते । **स्तवे** स्तूयते । **गोतमेभिः** 'अस्मदोर्द्वयोश्च' (पा.१,२,५९) इत्येवमेतदेकस्मिन्नेव बहुवचनम् । मया गोतमेनेत्यर्थः । तत्प्रभृत्यपेक्षं वा बहुवचनम् । अस्माभिः गोतमेभिः गोतमप्रभृतिभिरित्यर्थः । परोऽर्धर्च प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । **प्रजावतः** प्रजासहितान् । **नृवतः** परिचारकमनुष्यैः सहितान् । **अश्वबुध्यान्** अश्वैर्ये बोध्यन्ते तेऽश्वबुध्याः, तान् अश्वबुध्यान् । उत्कृष्टैरश्वैरद्धासितानित्यर्थः । हे **उषः! गोअग्रान्** गावोऽग्रभूता येषां ते गोअग्राः, तान् गोअग्रान् । उत्कृष्टाभिः गोभिः सहितानित्यर्थः । **उप मासि** माङ् माने लोडर्थे चात्र लट् । निर्मिमीहि कुरु । देहीत्यर्थः । कान् । उच्यते । **वाजान्** अन्ननामैतत् । प्रजादिसहितान्यन्नानि देहीत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** उषाः वचसां प्रणेत्री **दिवः दुहिता** स्तुता गोतमैः प्रजायुक्तान् दासयुक्तान् अश्वैर्बोद्धव्यान् **उषः!** गोमुखान् उपकुरु **वाजान्** अन्नानि ।। ७ ।।

**मुद्गल– भास्वती** तेजस्विनी सूनृतानाम् प्रियसत्वात्मिकानाम् वाचाम् **नेत्री** प्रणेत्री कारयित्री । उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापाराय इतस्ततः शब्दं कुर्वन्ति । एवम्भूता **दिवः दुहिता** द्युलोकसकाशाद् उत्पन्ना उषाः **गोतमेभिः** ऋषिभिरस्माभिः **स्तवे** स्तूयते । हे **उषः!** अस्माभिः स्तुता त्वम् **वाजान्** अन्नानि **उप मासि** प्रयच्छ । कीदृशान् वाजान् । **प्रजावतः** प्रजाभिः पुत्रपौत्रादिभिर्युक्तान् **नृवतः** दासलक्षणैर्नृभिरुपेतान् **अश्वबुध्यान्** अश्वा बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान् । **गोअग्रान्** गावोऽग्रे प्रमुखे येषां तादृशान् ।।

**सायण– भास्वती** तेजस्विनी । सूनृता इति वाङ्नाम । सूनृतानां प्रियसत्यात्मिकानां **नेत्री** प्रणेत्री कारयित्री । उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापाराय इतस्ततः शब्दं कुर्वन्ति । एवम्भूता **दिवः दुहिता** द्युलोकसकाशादुत्पन्ना उषाः **गोतमेभिः** ऋषिभिरस्माभिः **स्तवे** स्तूयते । हे **उषः!** अस्माभिः स्तुता त्वं **वाजान्** अन्नानि **उप मासि** प्रयच्छ । कीदृशान् वाजान् । **प्रजावतः** प्रजाभिः पुत्रपौत्रादिभिर्युक्तान् **नृवतः** दासलक्षणैर्नृभिरुपेतान् **अश्वबुध्यान्** । अश्वाः बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान् । यद्वा अश्वबुध्नान् । वर्णव्यापत्त्या यकारः । अश्वमूलान् । अश्वैर्हि राजानो धनान्यन्नानि च लभन्ते । अतोऽन्नानां तन्मूलत्वम् । **गोअग्रान्** । गावोऽग्रे प्रमुखे येषां तादृशान् ।

भास्वती । 'भा दीप्तौ' । असुन् । ततो मतुप् । 'मादुपधायाः' इति मतुपो वत्वम् । 'अगितश्च' इति ङीप् । नेत्री । 'ऋन्नेभ्यो ङीष्' । 'उदात्तयणो हल्पूर्वात्' इति ङीष उदात्तत्वम् । स्तवे । 'ष्टुञ् स्तुतौ' । कर्मणि लटि 'बहुलं छन्दसि' इति बहुलग्रहणात् यकोऽपि लुक् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । 'छन्दस्युभयथा' इति एकारस्य आर्धधातुकत्वेन ङित्त्वाभावात् गुणावादेशौ । नृवतः । व्यत्ययेन मतोर्वत्वम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । मासि । 'मा माने' । आछादिकः ।। ७ ।।

**सिद्धाञ्जनम्– भास्वती** प्रभावती **सूनृतानाम्** शोभनसत्यानां, प्रियसत्यवाचामिति सायणो लौकिकीं भाषां अनुसृत्य, प्रागुक्तं (१.३) अवधेयम् । **नेत्री** प्रापयित्री यजमानमृषिं प्रति । **दिवो दुहिता** द्युलोकान् उत्तमज्योतिःस्थानादुत्पन्ना **गोतमेभिः** चिद्रश्मिसम्पन्नतमैरस्माभिः **स्तवे** स्तूयते । हे **उषः!** स्तुता त्वं **प्रजावतः** सन्ततियुक्तान् **नृवतः** नृभिर्बलवद्भिरुपेतान् **अश्वबुध्यान्** अश्वाः प्राणबलात्मानः बुध्याः बोद्धव्याः येषु तान् **गोअग्रान्** चित्किरणपुरस्सरान्, एवम्भूतान् **वाजान्** समृद्धिविभवान् **उपमासि** प्रयच्छसि ।

स्तवे–ष्टुञ् स्तवे, कर्मणि लिङि छन्दसि बहुलग्रहणात् यकोऽपि लुक्, एवमन्यदपि छान्दसम् । नृवतः–व्यत्ययेन मतोर्वत्वम् । मासि–मा माने, अदादिः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।**
**सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ।। ८ ।।**
उषः । तम् । अश्याम् । यशसम् । सुऽवीरम् । दासऽप्रवर्गम् । रयिम् । अश्वऽबुध्यम् ।
सुऽदंससा । श्रवसा । या । विऽभासि । वाजऽप्रसूता । सुऽभगे । बृहन्तम् ।। ८ ।।

**स्कन्द–** हे उषः! **तम् अश्याम्** । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । य त्वमेव दातुं समर्थो नान्य कश्चित्, तं त्वया दीयमानम् अश्यां प्राप्नुयाम् अहम् । **यशसम्** यशस्वन्तम् । अन्नेन सहितमित्यर्थः । **सुवीरम्** शोभनैर्वीरैः पुत्रैः सहितम् । **दासप्रवर्गम्** प्रकृष्टा वर्गा येषां ते प्रवर्गाः । दासाः प्रवर्गा यस्मिन् स दासप्रवर्गः, तं दासप्रवर्गम् । प्रकृष्टैर्दासगणैः सहितमित्यर्थः । **रयिम्** धनम् । **अश्वबुध्यम्** अश्वैरुद्भासितम् । याऽहम् कीदृशी । उच्यते

। **सुदंससा श्रवसा** 'दस' (निघ.२,१) इति कर्मनाम । श्रवःशब्दः कीर्तिपर्यायः । उभयत्र च हेतौ तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । शोभनप्रकाशकरणादिकर्मसम्बन्धया कीर्त्या हेतुभूतया । अतिशयवत्कर्मनिमित्तकीर्त्यर्थमित्यर्थः । **या विभासि** विविधं दीप्यसे । अथवा दसि दर्शनदर्शनयोः इत्यस्य दंसशब्दो दर्शनवचनः । श्रवःशब्दोऽपि सामर्थ्यात् ज्योतिर्वचनः । सुदर्शनेन ज्योतिषा या विभासीत्यर्थः । **वाजप्रसूता** षू प्रेरणे । कर्तव्येनाग्निहोत्रादिहविर्लक्षणेनान्नेन प्रेरिता । हे **सुभगे**! सुधने, **बृहन्तम्** क्रियाविशेषणमिदम् । व्यत्ययेन तु पुंल्लिङ्गता । महद् विभासि । अथवा पुल्लिङ्गत्वसामर्थ्याद् व्यवहितस्यापि रयिमित्येतस्यैव विशेषणम् । महान्तं रयिमश्यामिति ।। ७ ।।

**वेङ्कटमाधव–** उषः! **तम्** अहम् प्राप्नुयां यशस्विनम् **सुवीरम्** प्रकृष्टदासगणम् **रयिम् अश्वबुध्यम्** । सुकर्मणा अन्नेन **या विभासि** प्रसूतान्ना सुधने! महान्तं यजमानं प्रति ।। ८ ।।

**मुद्गल–** हे उषः! उषोदेवते! **तम् रयिम्** धनम् **अश्याम्** प्राप्नुयाम् । कीदृशम् । **यशसम्** यशसा कीर्त्या युक्तम् । सर्वैः प्रशस्यमित्यर्थः । **सुवीरम्** शोभनवीरैः पुत्रादिभिर्युक्तम् । **दासप्रवगम्** प्रकृष्टो वर्गः संघः प्रवर्गः । दासानां कर्मकराणां प्रवर्गो यस्मिन् तम् । अनेकैर्भृत्यैरुपेतमित्यर्थः । **अश्वबुध्यम्** अश्वा बुध्या बोद्धव्या येन धनेन तादृशम् । हे **सुभगे**! शोभनवने! उषः! **सुदंससा** शोभनेन कर्मणा युक्तेन **श्रवसा** श्रवणीयेन स्तोत्रेण प्रीता त्वम् **वाजप्रसूता** अस्मभ्यं दत्तान्ना सती **बृहन्तम्** प्रौढम् **या** यं रयिम् **विभासि** विशेषेण प्रकाशयसि । तमश्यामिति पूर्वेण सम्बन्धः ।। ८ ।।

**सायण–** हे **उषः**! उषोदेवते **तं रयिं** धनम् **अश्यां** प्राप्नुयाम् । कीदृशम् । **यशसं** यशसा कीर्त्या युक्तम् । सर्वैः प्रशस्यमित्यर्थः । **सुवीरं** शोभनैर्वीरैः पुत्रादिभिर्युक्तं **दासप्रवर्गम्** । प्रकृष्टो वर्गः सङ्घः प्रवर्गः । दासानां कर्मकराणां प्रवर्गो यस्मिन् तम् । अनेकैर्भृत्यैरुपेतमित्यर्थः । **अश्वबुध्यम्** । अश्वा बुध्या बोद्धव्या येन धनेन तादृशम् । हे **सुभगे**! शोभनधने उषः **सुदंससा** शोभनेन कर्मणा युक्तेन **श्रवसा** श्रवणीयेन स्तोत्रेण प्रीता त्वं **वाजप्रसूता** अस्मभ्यं दत्तान्ना सती **बृहन्तं** प्रौढं **या** यं रयिं **विभासि** विशेषेण प्रकाशयसि तमश्यामिति पूर्वेण सम्बन्धः ।

अश्याम् । 'अशू व्याप्तौ' । व्यत्यनेन परस्मैपदम् । 'बहुलं छन्दसि' इति विकरणस्य

लुक् । यशसम् । अर्शआदित्वात् मत्वर्थीयोऽच् । व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम् । दासप्रवर्गम् । दासयत्युपक्षपयति शत्रूनिति दासो भृत्यः । 'दसु उपक्षये' । अस्मात् ण्यन्तात् पचाद्यच् । चित्त्वादन्तोदात्तत्वम् । तदेव बहुव्रीहिस्वरेण शिष्यते । सुदंससा । 'सोर्मनसी अलोमोपसी' इति बहुव्रीहावुत्तरपदाद्युदात्तत्वम् । या । 'सुपां सुलुक्' इति अमः ढादेशः ।।

**सिद्धाञ्जनम्**– हे **उषः! तम् रयिम्** तत् दिव्यं धनं **अश्याम्** प्राप्नुयाम् । नेदं लोकसाधारणं धनं 'बृहन्तं विभासि' इति वक्ष्यमाणो वाक्यार्थः तद्विस्पष्टयति । कीदृशं रयिम्? **यशसम्** यशोयुक्तं, प्रशस्यं श्रेष्ठमिति यावत् । **सुवीरम्** शोभनवीर्योपेतं **दासप्रवर्गम्** दासानां क्रियादक्षाणां प्रवर्गः प्रकृष्टः वर्गः सङ्घो यस्मिन् तं, बहुकर्मकुशलत्वोपेतमित्यर्थः । **अश्वबुध्यम्** अश्वाः प्राणक्रियावेगाः बुध्याः बोद्धव्याः येन तम् । हे **सुभगे!** शोभनैश्वर्योपेते, उषः, **सुदंससा** शोभनकर्मणा युक्तेन **श्रवसा** दिव्यावेशश्रुतिजन्येनास्मदीयस्तोत्रेण युक्ता प्रीता वा त्वं **वाजप्रसूता** समृद्धिप्रदात्री सती **बृहन्तम्** महान्तं अति प्रौढं लोकोत्तरं लोकातीतं वा **या रयिम्** यद् धनं **विभासि** प्रकाशयसि, आविष्करोषि तमश्यामिति सम्बन्धः ।

या–सुपां सुलुगिति अमो डादेशः । अन्ये गताः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**विश्वा॑नि दे॒वी भुव॑नाभि॒चक्ष्या॑ प्रती॒ची चक्षु॑रु॒र्वि॑या॒ वि भा॑ति ।**
**विश्वं॑ जी॒वं च॒रसे॑ बो॒धय॑न्ती॒ विश्व॑स्य॒ वाच॑मविदन्मना॒योः ।। ९ ।।**
**विश्वा॑नि । दे॒वी । भुव॑ना । अ॒भि॒ऽचक्ष्य॑ । प्र॒ती॒ची । चक्षुः॑ । उ॒र्वि॒या । वि । भा॒ति॒ । विश्व॑म् । जी॒वम् । च॒रसे॑ । बो॒धय॑न्ती । विश्व॑स्य । वाच॑म् । अ॒वि॒द॒त् । म॒ना॒योः ।। ९ ।।**

**स्कन्द**– **विश्वानि देवी** उषाः **भुवना** भूतजातानि **अभिचक्ष्य** दर्शयित्वा । प्रकाश्येत्यर्थः । **प्रतीची** अश्वतिर्गत्यर्थः । तं तमर्थं प्रति गन्त्री । सर्वव्यापिनीत्यर्थः । **चक्षुः** चक्षुःस्थानीया प्राणिनाम् । **उर्विया** प्रथमैकवचनस्यायमियादेशः । उरु विस्तीर्णा । **वि भाति** विविधं दीप्यते । किञ्च **विश्वम् जीवम्** सर्वमाणिनः **चरसे** तत्रसत्र गमनाय **बोधयन्ती** सुप्तानुत्थापयन्ती **विश्वस्य** सर्वस्य ऋषेः यजमानस्य वा **वाचम्** स्वभूतां स्तुतिम् **अविदत्** जानाति ज्ञातवती वा । **मनायोः** मन्यतेरर्चतिकर्मणो मना स्तुतिरुच्यते । तत्कामस्य मनायोः । सर्वेण ऋषिणा यजमानेना वा स्तुतिकामेन वा स्तूयते स्तुता वेत्यर्थः ।। ९ ।।

**वेङ्कटमाधव– विश्वानि** भुवनानि उषाः चक्षुषी दर्शयित्वा प्राणिनामभिमुखमागच्छन्ती बृहत् तेजः प्रकाशयति । **विश्वम्** प्राणिनं चरणाय **बोधयन्ती विश्वस्य** मननशीलस्य प्राणिनः वाचम् अलम्भयत् ।। ९ ।।

**मुद्गल– दवी** द्योतमाना उषाः **विश्वानि** सर्वाणि **भुवना** भुवनानि भूतजातानि **अभिचक्ष्य** अभिप्रकाश्य प्रकाशवन्ति कृत्वा अनन्तरम् **प्रतीची** प्रत्यङ्मुखी सती **चक्षुः** प्रकाशकेन तेजसा **उर्विया** उर्वी विस्तीर्णा सती **वि भाति** प्रकाशते । अपि च **विश्वम्** जीवम् सर्वं प्राणिजातम् **चरसे** चरणाय स्वस्वव्यापारेषु प्रवर्तनाय **बोधयन्ती** निद्रातः सकाशाद् उद्बोधयन्ती उषाः **विश्वस्य** सर्वस्य **मनायोः** मनसा युक्तस्य वाग्व्यवहारसमर्थस्य प्राणिजातस्य या वागस्ति, ताम् **वाचम् अविदत्** अलभत । अत एवोषसः सूनृतावतीति सञ्ज्ञोपपन्ना भवति ।। ९ ।।

**सायण– देवी** द्योतमानोषाः **विश्वानि** सर्वाणि **भुवना** भुवनानि भूतजातानि **अभिचक्ष्य** अभिप्रकाश्य प्रकाशवन्ति कृत्वा अनन्तरं **प्रतीची** प्रत्यङ्मुखी सती **चक्षुः** प्रकाशकेन तेजसा **उर्विया** उर्वी विस्तीर्णा सती **वि भाति** प्रकाशते । अपि च **विश्वं जीवं** सर्वं प्राणिजातं **चरसे** चरणाय स्वस्वव्यापारेषु प्रवर्तनाय **बोधयन्ती** निद्रातः सकाशात् उद्बोधयन्त्युषाः **विश्वस्य** सर्वस्य **मनायोः** मनसा युक्तस्य वाग्व्यवहारसमर्थस्य प्राणिजातस्य या वागस्ति तां **वाचमविदत्** अलभत । अत एवोषसः सूनृतावतीति संज्ञोपपन्ना भवति ।

अभिचक्ष्य । 'चक्षिङ् व्यक्ताव्यां वाचि' । अयं प्रकाशनार्थोऽपि । 'समासेऽनञ्पूर्वे–' (पा.सू.७.१.३७) इति क्त्वाप्रत्ययस्य ल्यबादेशः । प्रतीची । प्रतिपूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । 'अञ्चतेश्चोपसङ्ख्यानम्' इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । उर्विया । उर्वीशब्दादुत्तरस्य सोः 'इयाडियाजीकाराणां चोपसङ्ख्यानम्' (पा.सू.७.१.३९.१) इति डियाजादेशः । आदेशसामर्थ्यात् तस्य लोपो न भवति । मनायोः । मन आत्मन इच्छति मनस्यति । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उः । वर्णव्यापत्त्या सकारे आकारः । यद्वा । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् सकारलोपश्च । 'अकृत्सार्वधातुकयोः' इति दीर्घः ।।

**सिद्धाञ्जनम्– देवी** द्योतमानोषाः **विश्वानि भुवना** सर्वाणि भुवनानि भूर्भुवरादीनि

**अभिचक्ष्य** अभितः प्रकाश्य, ऋषिदृष्टेर्गोचरतां गमयित्वा, **प्रतीची** प्रत्यङ्मुखी अन्तर्मुखी सती, पराकुप्रतिद्वन्द्वी प्रत्यक्शब्दः, **चक्षुः** चक्षुषा प्रकाशकेन तेजसा, विभक्तिलोपः, **उर्विया** विस्तीर्णा **विभाति** प्रकाशते । अपि च **विश्वम् जीवम्** सर्वं प्राणयुक्तं देवकामं पुरुषं **चरसे** चरणाय दिव्यकार्यप्रवर्तनाय **बोधयन्ती** ज्ञापयन्ती, **विश्वस्य मनायोः** सर्वस्य मनोयुक्तस्य मनस्विनः पुरुषस्य **वाचम्** देवाह्वानसमर्थां मन्त्रात्मिकां वाचं **अविदत्** अलभत । 'जीवं चरसे' इति प्राणक्रियां 'मनायोः वाचम्' इति ज्ञानक्रियां चावेदयति उषःशब्दवेदनीयचित्प्रभातव्यापारः ।

अभिचक्ष्य–चक्षिः प्रकाशनार्थेऽपि प्रसिद्धः । उर्विया– उर्विशब्दादुत्तरस्य सोः ड्डियाजादेशः । मनायोः मन आत्मन इच्छति मनस्यति, क्यच्, क्याच्छान्दसीत्युः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**पुनः पुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना ।**
**श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ।। १० ।।**
**पुनःऽपुनः । जायमाना । पुराणी । समानम् । वर्णम् । अभि । शुम्भमाना । श्वघ्नीऽइव । कृत्नुः । विजः । आऽमिनाना । मर्तस्य । देवी । जरयन्ती । आयुः ।। १० ।।**

**स्कन्द– पुनःपुनः जायमाना** जन्मन अत्र उदयोऽभिप्रेतः । उद्यती । **पुराणी** जगत्सृष्टिकाल एवोत्पन्नत्वाद् उषाः पुराणीत्युच्यते । **समानम् वर्णम् अभि** अत्र कर्मण उपसर्गस्य च श्रुतेः योग्यक्रियापदाध्याहारः । समानं वर्णम् अभिगम्य **शुम्भमाना** शोभमाना । उषोन्तरैः समानेन शुक्लेन वर्णेन शोभमानेत्यर्थः । **श्वघ्नीव** श्वभिर्हन्तीति श्वघ्नी लुब्धक इहोच्यते । स यथा **कृत्नुः** पापस्य कर्मणः कर्ता । **विजः** विः पक्षी, ततो जायत इति विजः । ये अनुपजातपक्षा बालाः पक्षिणः तानवष्टभ्य बलात् हिंस्यात् । एवम् **आमिनाना** मीञ् हिंसायाम् । बलाद्धिंसन्ती । किम् । सामर्थ्यात् तमांसि । सर्वप्राणिनो वा पूर्वं निर्दिष्टत्वात् पक्षिणः मर्तस्य मनुष्याणाञ्च **देवी** उषाः **जरयन्ती** जरा नयन्ती । क्षपयन्तीत्यर्थः । **आयुः** जीवितम् । लक्षणार्थशतृशानच्छ्रुतेः साकाङ्क्षत्वादस्या ऋचः उत्तरचैकवाक्यता ।। १० ।।

**वेङ्कटमाधव–** अन्वहम् **जायमाना** प्रत्ना **समानम्** एव **वर्णम् अभि** एति शोभमाना । लुब्धकस्त्रीव कर्तनशीला चलतः पक्षिणो हिंसन्ती मनुष्यस्य **देवी जरयन्ती** जीवितम् । उत्तरत्र सम्बन्धः ।। १० ।।

**मुद्गल– पुनःपुनः जायमाना** प्रतिदिवसं सूर्योदयात् पूर्वं प्रादुर्भवन्ती **पुराणी** चिरन्तनी। नित्येत्यर्थः। यस्मात् **समानम् वर्णम्** एकमेव रूपम् **अभि** प्राप्य **शुम्भमाना** शोभमाना। विभिन्नेष्वपि दिवसेष्वस्या एकरूपेणावस्थानान्नित्यत्वमित्यर्थः। एवंगुणविशिष्टा **देवी** देवनशीला उषाः **मर्तस्य** मरणधर्मवतः सर्वस्य प्राणिजातस्य **आयुः** जीवनम् **जरयन्ती** वर्तते। बह्वीषूषःस्वतीतासु हि सर्वेषामायुर्हीयते। उषाश्च पुनर्जायमानेत्युक्तमतः सैवायुर्जरयति। दृष्टान्तः। **कृत्नुः** कर्तनशीला **श्वघ्नीव** व्याधस्त्रीव। सा यथा **विजः** चलतः पक्षिणः **आमिनाना** पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत्॥ १०॥

**सायण– पुनःपुनर्जायमाना** प्रतिदिवसं सूर्योदयात्पूर्वं प्रादुर्भवन्ती **पुराणी** चिरन्तनी नित्येत्यर्थः। यस्मात् **समानं वर्णम्** एकमेव रूपम् **अभि** प्राप्य **शुम्भमाना** शोभमाना। विभिन्नेष्वपि दिवसेष्वस्या ऐकरूप्येण अवस्थानान्नित्यत्वमित्यर्थः। एवंगुणविशिष्टा **देवी** देवनशीलोषाः **मर्तस्य** मरणधर्मणः सर्वस्य प्राणिजातस्य **आयुः** जीवनं **जरयन्ती** ऊनयन्ती वर्तते। बह्वीषूषःसु अतीतासु हि सर्वेषामायुर्हीयते। उषाश्च पुनःपुनर्जायमानेत्युक्तं अतः सैवायुर्जरयति। तत्र दृष्टान्तः। **कृत्नुः** कर्तनशीला **श्वघ्नीव** व्याधस्त्रीव। सा यथा **विजः** चलतः पक्षिणः **आमिनाना** पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत्।

पुराणी। पुरा इत्यस्मात् अव्ययात् 'सायंचिरंप्राह्णे' (पा.सू.४.३.२३) इत्यादिना भवार्थे ट्युप्रत्ययः। 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (पा.सू.४.३.१०५) इति निपातनात् तुढभावः। योरनादेशः। टित्त्वात् ङीप्। व्यत्ययेन अन्तोदात्तत्वम्। शुम्भमाना। 'शुम्भ दीप्तौ'। शपः पित्त्वादनुदात्तत्वम्। शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। श्वघ्नी। शुना मृगान् हतवान् श्वहा। 'बहुलं छन्दसि' (पा.सू.३.२.८८) इति वचनात् ब्रह्मादिव्यतिरिक्तेऽप्युपपदे हन्तेः क्विप्। 'ऋन्नेभ्यो ङीप्' इति ङीप्। 'अल्लोपोऽनः' इति अकारलोपः। 'हो हन्तेः' इति घत्वम्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। कृत्नुः। 'कृती छेदने'। औणादिकः क्नुप्रत्ययः। विजः। 'ओविजी भयचलनयोः'। विजन्ति चलन्तीति विजः पक्षिणः। आमिनाना। 'मीञ् हिंसायाम्'। क्रैयादिकः। 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्। शानचश्चित्त्वादन्तोदात्तत्वम्॥

**सिद्धाञ्जनम्–** पूर्णसत्योदयात्प्राक् बह्व्य उषसो भवन्तीति प्रागुक्तं स्मार्यम्। **पुनःपुनः जायमाना** पुनरावृत्त्या प्रादुर्भवन्ती **पुराणी** चिरन्तनी नित्येत्यर्थः **समानम् वर्णम्** तुल्यं रूपं

**अभिशुम्भमाना** अभिप्राप्य शोभमाना विविधप्रादुर्भावेऽपि एकमेवास्याः स्वरूपमित्यर्थः । **देवी** दिव्या **मर्तस्य** मरणधर्मणः पुरुषस्य **आयुः** आयुर्मानं **जरयन्ती** ऊनयन्ती वर्तते, मरणधर्मस्य ऊनतापादनेन अमरणधर्मस्य अमृतत्वस्य लब्धिर्बोध्या । बाह्यपक्षे तु, उषःसु अतीतासु मानुषं आयुर्हीयते । तत्र दृष्टान्तः– **कृत्नुः** कर्तनशीला **श्वघ्नी** श्वभिः मृगान् हन्तीति, व्याधस्त्री **विजः इव** विजः चलतः पक्षिणः यथा **आमिनाना** हिंसन्ती वर्तते, तद्वत् । विजः उद्वेजक इति सायणोऽन्यत्र (२.१२.५) । नव्याः केचन अक्षद्यूतकरा यथा कपटयुक्त्या वञ्चयन्ति तथा उषाः मानुषायुर्मोषणेनेति मन्यन्ते, निरादारमिदमूहमात्रम् ।

विजः–ओविजी भयचलनयोः विजन्ते चलन्ति पक्षिणः । आमिनाना–मीञ् हिंसायाम्, क्रैयादिकः ।। १० ।।

**।। इति प्रथमाष्टके षष्ठाध्याये पञ्चविंशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**व्यूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति ।**
**प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ।। ११ ।।**

विऽऊर्ण्वती । दिवः । अन्तान् । अबोधि । अप । स्वसारम् । सनुतः । युयोति । प्रऽमिनती । मनुष्या । युगानि । योषा । जारस्य । चक्षसा । वि । भाति ।। ११ ।।

**स्कन्द– व्यूर्ण्वती** ऊर्णुञ् आच्छादने । विविधं छादयन्ती स्वेन ज्योतिषा तमांसि । **दिवः अन्तान्** अबोधि बोधयति । प्रकाशयतीत्यर्थः । **स्वसारम्** उषसमुदयेनादित्यो जनयति अस्तमयेन रात्रिम् । अतो रात्रिरुषसः स्वसोच्यते । तां च । **सनुतः** अन्तर्हितनामैतत् । अत्यन्त-मन्तर्हिताम् । **अप युयोति** अपमिश्रयति । अपनयतीत्यर्थः । किञ्च **प्रमिनती** हिंसन्ती । क्षपयन्तीत्यर्थः । **मनुष्या युगानि** युगशब्दः कालवचनः । मनुष्याणां जीवितादिकालान् । **योषा** उषआख्या स्त्री । **जारस्य** रात्रेः रसानां वा जरयितृत्वात् जार आदित्य उच्यते । तस्य स्वभूतेन **चक्षसा** दर्शनेन प्रकाशाख्येन **वि भाति** ।। ११ ।।

**वेङ्कटमाधव–** विविधं छादयन्ती द्युलोकस्य पर्यन्तान् प्रादुरासीत् । स्वसारम् च रात्रिमन्तर्हिताम् **अप युयोति** अपगमवति । प्रहिंसन्ती मनुष्याणां परिच्छेदकानि अहोरात्राणि **योषा** अरयितुरादित्यस्य तेजसा सम्प्रकाशयति ।। ११ ।।

**मुद्गल– दिवः** नभसः **अन्तान्** प्रान्तान् **व्यूर्ण्वती** विवृतान् तमसा वियुक्तान् कुर्वत्युषाः **अबोधि सर्वैः** प्राणिभिरज्ञायि ज्ञाताऽभूत् । तदनन्तरम् **स्वसारम्** उषसः प्रादुर्भावे सति स्वयमेव सरन्तीं निशाम् **सनुतः** अन्तर्हितप्रदेशे **अप युयोति** अपगम्य पृथक् करोति । **मनुष्या** मनुष्याणां सम्बन्धीनि **युगानि** कृतत्रेतादीनि **प्रमिनती** स्वगमनाऽऽगमनाभ्यां प्रकर्षेण हिंसन्ती **जारस्य** रात्रेर्जरयितुः सूर्यस्य **योषा** जाया उषाः **चक्षसा** आत्मीयेन प्रकाशेन **वि भाति** विशेषेण प्रकाशते ।। ११ ।।

**सायण– दिवः** नभसः **अन्तान्** प्रान्तान् **व्यूर्ण्वती** विवृतांस्तमसा वियुक्तान् कुर्वत्युषाः **अबोधि सर्वैः** प्राणिभिरज्ञायि ज्ञाताभूत् । तदनन्तरं **स्वसारम्** उषसः प्रादुर्भावे सति स्वयमेव सरन्ती निशां **सनुतः** । अन्तर्हितनामैतत् । अन्तर्हितप्रदेशे **अप युयोति** अपगमय्य पृथक्करोति । **मनुष्या** मनुष्याणां सम्बन्धीनि **युगानि** कृतत्रेतादीनि **प्रमिनती** स्वगमनागमनाभ्यां प्रकर्षेण हिंसन्ती **जारस्य** रात्रेर्जरयितुः सूर्यस्य **योषा** जायोषाः **चक्षसा** आत्मीयेन प्रकाशेन **विभाति** विशेषेण प्रकाशते ।

व्यूर्ण्वती । 'ऊर्णुञ् आच्छादने' । विपूर्वात् अस्मात् लटः शतृ । 'उगितश्च' इति ङीप् । 'शतुरनुमः' इति नद्या उदात्तत्वम् । सनुतः । एतदन्तोदात्तं स्वरादिषु निपातितम् । अतोऽव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सप्तम्या लुक् । युयोति । 'यु मिश्रणामिश्रणयोः' । 'बहुलं छन्दसि' इति शपः श्लुः । मनुष्या । 'सुपां सुलुक्' इति षष्ठ्या डादेशः । युगानि । युजेः करणे कर्मणि वा घञ् । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । उञ्छादिषु कालविशेषे रथाद्युपकरणे च युगाब्दपाठात् लघूपधगुणाभावः (पा.सू.६.१.१६०.ग.) । 'उञ्छादीनां च' इत्यन्तोदात्तत्वम् । जारस्य । 'दारजारौ कर्तरि णिलुक्च' (पा.सू.३.३.२०.४) इति घञन्तो निपात्यते ।। ११ ।।

**सिद्धाञ्जनम्– दिवः अन्तान्** द्युलोकस्य प्रान्तान् **व्यूर्ण्वती** विवृतान् कुर्वती **अबोधि** अस्माभिर्ज्ञाता भवति । **स्वसारम्** साहचर्यात् सहोदरीं तामसीं शक्तिं, रात्रिमिति बाह्यः पक्षः **सनुतः** अन्तर्हितनामैतत् रहस्ये अपयुयोति **अपगमय्य** पृथक् करोति । **मनुष्याः युगानि** मनुष्यसम्बन्धीनि कालमानानि, न तु देवसम्बन्धीनि **प्रमिनती** प्रकर्षेण हिंसन्ती । (विवृतमेतत् दशम्याम्) **जारस्य** जरयितुस्तमसः **योषा** अङ्गना **चक्षसा** प्रकाशेन विभाति विशेषेण भासते ।

व्यूर्णवती–ऊर्णुञ् आच्छादने, विपूर्वादस्माल्लटः शतृ, उगितश्चेति ङीप् । सनुतः– एतदन्तोदात्तत्वं स्वरादिषु निपातितं, अतः अव्ययसंज्ञायामाप्सुप इति सप्तम्या लुक् । युयोति– यु मिश्रणामिश्रणयोः । मनुष्या–षष्ठ्या डादेशः । युगानि– युजेः घञ् करणे कर्मणि वा । जारस्य–दारजारौ कर्तरि णिलुक् चेति घञन्तो निपातितः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद उर्विया व्यश्वैत् ।**
**अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ।। १२ ।।**
**पशून् । न । चित्रा । सुऽभगा । प्रथाना । सिन्धुः । न । क्षोदः । उर्विया । वि । अश्वैत् । अमिनती । दैव्यानि । व्रतानि । सूर्यस्य । चेति । रश्मिऽभिः । दृशाना ।। १२ ।।**

**स्कन्द– पशून्** न यथा कश्चिच्छीघ्रगमनाय विस्तीर्णे पथि गाः अन्यान् या पशून् पृथूकरोति एवं **चित्रा** विचित्रा पूजनीया वा उषाः **सुभगा** सुधना **प्रथाना** प्रथयन्ती । किम् । सामर्थ्यात् ज्योतिः । **सिन्धुः न क्षोदः** 'क्षोदः' (निप.१,१२) इत्युदकनाम । प्रथनस्य चेयं द्वितीयोपमा । यथा सिन्धुर्नदी आत्मीयमुदकं प्रथयति एवं प्रथाना । **उर्विया** उरु विस्तीर्णा । **वि अश्वैत्** श्वयतिर्गत्यर्थः । विविधं गच्छति त्रीनपि लोकान् प्रति । किञ्च **अमिनती** अहिंसती **दैव्यानि** देवानां स्वभूतानि । **व्रतानि** यागकर्माणि । यागकर्मणां ह्यकरणं हिंसा । उषआयत्ता च तेषां क्रिया, तदुत्तरकालभावित्वात् । अत इदमुच्यते– अमिनती दैव्यानि व्रतानीति । यागार्थमुद्यतीत्यर्थः । **सूर्यस्य रश्मिभिः** तृतीयानिर्देशात् सदृशीति वाक्यशेषः । **चेति** ज्ञायते लक्ष्यते । **दृशाना** दृश्यमाना उषाः सदा सूर्यरश्मिसदृशी लक्ष्यत इत्यर्थः ।। १२ ।।

**वेङ्कटमाधव– पशून्** इव **चित्रा** सुधना विस्तारयन्ती तेजांसि नदीव उदकम् उरुत्वेन भासं वर्धयति । दैव्यानि कर्माण्यहिंसन्ती । रात्रिर्हि यज्ञान् हिनस्ति, नैवमहः । सूर्यस्य रश्मिभिः सह विज्ञायते दृश्यमाना ।। १२ ।।

**मुद्गल– सुभगा** शोभनधना **चित्रा** चायनीया पूजनीया उषाः **पशून् न** यथा पशून् गोपालकोऽरण्ये विस्तारयति तथा **प्रथाना** तेजांसि विस्तारयन्ती **उर्विया** उर्वी महती एवम्भूता सा **वि अश्वैत्** सर्वं जगद् व्याप्नोत् । दृष्टान्तः । **सिन्धुः न क्षोदः** यथा स्यन्दनशीलमुदकं

निम्नदेशेऽचिरादेव व्याप्नोति तद्वत् । सैवोषाः **सूर्यस्य रश्मिभिः** किरणैः सह **दृशाना** दृश्यमाना सती **चेति** प्रज्ञाताऽऽसीत् । किं कुर्वती । **दैव्यानि** दैवसम्बन्धीनि **व्रतानि** दर्शपूर्णमासादीनि कर्माणि **अमिनती** अहिंसती । अनुष्ठाने यजमानान् प्रवर्तयन्तीत्यर्थः ।। १२ ।।

**सायण– सुभगा** शोभनधना **चित्रा** चायनीया पूजनीयोषाः **पशून्न** यथा पशून् गोपालकोऽरण्ये विस्तारयति तथा **प्रथाना** तेजांसि विस्तारयन्ती **उर्विया** उर्वी महती एवम्भूता सा **व्यश्वैत्** सव जगत् व्याप्नोत् । तत्र दृष्टान्तः । **सिन्धुर्न क्षोदः** । यथा स्यन्दनशीलमुदकं निम्नदेशेऽचिरादेव व्याप्नोति तद्वत् । सैवोषाः **सूर्यस्य रश्मिभिः** किरणैः सह **दृशाना** दृश्यमाना सती **चेति** प्रज्ञाता आसीत् । किं कुर्वती । **दैव्यानि** देवसम्बन्धीनि **व्रतानि** दर्शपूर्णमासादीनि कर्माणि **अमिनती** अहिंसती । अनुष्ठाने यजमानान् प्रवर्तयन्तीत्यर्थः । उषसः प्रादुर्भावानन्तरं हि अग्निहोत्रादीनि सर्वाणि कर्माण्यनुष्ठीयन्ते न रात्रौ । 'न सायमस्ति देवया अजुष्टम्' (ऋ.सं.५.७७.२) इति श्रुतेः ।

प्रथाना । 'प्रथ प्रख्याने' । अस्मात् अन्तर्भावितण्यर्थात् ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपो लुक् । सिन्धुः । 'स्यन्दू प्रस्रवणे' । 'स्यन्देः सम्प्रसारणं धश्च' (उ.सू. १.११) इति उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । अश्वैत् । 'टुओश्वि गतिवृद्ध्योः' । लुङि अङ्चङोर्विकल्पितत्वात् (पा.सू.३.१.५८; ४९) च्लेः सिच् । आगमानुशासनस्या-नित्यत्वात् इडभावः । 'सिचि वृद्धिः' (पा.सू.७.२.१) । अनिडादित्वात् 'ह्म्यन्तक्षण' इति वृद्धिप्रतिषेधाभावः । 'बहुलं छन्दसि' (पा.सू.७.३.९७) इति ईडागमाभावः । 'स्कोः संयोगाद्योः' इति सलोपः । चेति । 'चिती संज्ञाने' । कर्मणि लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । दृशाना । दृशेः कर्मणि लटः शानच् । 'बहुलं छन्दसि' इति विकरणस्य लुक् ।।

**सिद्धाञ्जनम्– सुभगा** शोभनैश्वर्या **चित्रा** अद्भुता उषाः **पशून् न** पशुपालो यथा पशून् चारणाय सर्वासु दिक्षु विस्तारयति तथा **प्रथाना** स्वतेजांसि विस्तारयन्ती **उर्विया** विस्तीर्णा स्वयं बृहती **सिन्धुर्न क्षोदः** स्यन्दनशीलमुदकं यथा सर्वतो व्याप्नोति तद्वत् **व्यश्वैत्** विश्वं व्याप्नोति । अपि च **दैव्यानि** देवसम्बन्धीनि **व्रतानि** नियतानि कर्माणि **अमिनती** अहिंसन्ती, स्वतन्त्रापि दिव्यधर्मानुसारिणीत्यर्थः । **सूर्यस्य** उत्तमस्य ज्योतिषः सत्यस्वरूपस्य **रश्मिभिः** किरणैः सह मिलिता **दृशाना** दृश्यमाना **चेति** अचेति, अज्ञायि, अस्माभिर्ज्ञातेत्यर्थः । प्रथाना– प्रथ प्रख्याने, अन्तर्भावितण्यर्थात् ताच्छीलिकश्चानश्, बहुलं छन्दसीति शपो लुक् ।

अश्वैत्–टु ओश्वि गतिवृद्ध्योः, लुङः, इडभावश्छान्दसः । चेति–चिती संज्ञाने, कर्मणि लुङ् । दृशाना–दृशेः कर्मणि लटः शानच्, विकरणस्य लुक् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ।। १३ ।।**
उषः । तत् । चित्रम् । आ । भर । अस्मभ्यम् । वाजिनीऽवति । येन । तोकम् । च । तनयम् । च । धामहे ।। १३ ।।

**स्कन्द–** हे उषः! **तत् चित्रम्** विचित्रं पूजनीयं वा **आ भर अस्मभ्यम्** आहर । देहीत्यर्थः । हे **वाजिनीवति!** वाजमन्नम्, तद्वती वाजिनी अन्नसंहतिः, तद्वती वाजिनीवती । अन्नसमूहवति! इत्यर्थः । स्वार्थिको वा मत्वर्थीयः । अन्नवति! इत्यर्थः । **येन तोकम् च तनयम् च** द्वयमप्येते अपत्यनामनी । पुत्रविषयमेकं पौत्रविषयमपरम् । पुत्रांश्च पौत्रांश्च । **धामहे** धारयामः । सम्यक् पुष्णीम इत्यर्थः ।। १३ ।।

**वेङ्कटमाधव–** उषः! **तत्** चायनीयमन्नम् **अस्मभ्यम् आ भर** अन्नवति! । **येन** पुत्रम् च तत्पुत्रम् च धारयेम ।। १३ ।।

**मुद्गल–** हे **वाजिनीवति!** वाजो हविर्लक्षणमन्नम्, तद्युक्ता क्रिया वाजिनी, तथा क्रियया युक्ते! **उषः!** उषोदेवते! **अस्मभ्यम् चित्रम्** चायनीयम् **तत्** धनम् **आ भर** आहर प्रयच्छ । **येन** धनेन **तोकम् च** पुत्रम् **तनयम्** तत्पुत्रम् च **धामहे** दध्महे धारयामः ।। १३ ।।

**सायण–** प्रातरनुवाकस्योषस्ये क्रतावौष्णिहे छन्दसि 'उषस्तच्चित्रम्' इति तृचो विनियुक्तः आश्विनशस्त्रे च । 'अथोषस्यः' इति खण्डे सूत्रितम्– 'उषस्तश्चित्रमा भरेति तिस्र औष्णिहम्' (आश्व.श्रौ.४.१४) इति ।।

हे **वाजिनीवति!** वाजो हविर्लक्षणमन्नम् । तद्युक्ता क्रिया वाजिनी । तया क्रियया युक्ते **उषः** उषोदेवते **अस्मभ्यं चित्रं** चायनीयं **तत्** धनम् **आ भर** आहर प्रयच्छ । **येन** धनेन **तोकं** पुत्रं **तनयं** तत्पुत्रं **च धामहे** दध्महे धारयामः । अत्र निरुक्तम्– 'उषस्तच्चित्रं चायनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च दधीमहि' (निरु.१२.६) इति ।

**धामहे** । दधातेर्लटि 'बहुलं छन्दसि' इति शपो लुक् । व्यत्ययेन आद्युदात्तत्वम् । यद्वा । लोटि 'आडुत्तमस्य पिच्च' इति आडागमः प्रत्ययस्य पिद्वद्भावश्च । अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । अस्मिन् पक्षे 'एत ऐ' (पा.सू.३.४.९३) इति ऐत्वाभावो व्यत्ययेन द्रष्टव्यः । यद्वृत्तयोगादनिघातः ।। १३ ।।

**सिद्धाञ्जनम्–** हे **वाजिनीवति!** बहुविधया समृद्ध्या युक्ते, **उषः** उषोदेवि, **तत् चित्रम्** अद्भुतं तद्दिव्यं वैभवं **अस्मभ्यम्** अस्मदर्थं **आभर** आहर । **येन** चित्रेण वैभवेन **तोकम् च** अपत्यं **तनयम् च** तत्सन्तानं च **धामहे** दध्महे, धारयामः । तोकः अन्तर्यागप्रभावस्य अविच्छेदेनान्यत्राश्रिते पुरुषे सङ्क्रामो भवति, तस्य सन्तानं तनयो भवति ।

धामहे–दधातेर्लटि शपो लुक् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**अश्वो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावति ।। १४ ।।**
**उषः । अद्य । इह । गोऽमति । अश्वऽवति । विभाऽवरि । रेवत् । अस्मे इति । वि । उच्छ । सूनृताऽवति ।। १४ ।।**

**स्कन्द–** हे उषः! अद्य इह सप्तमीनिर्देशात् स्थितेभ्य इति वाक्यशेषः । हे गोमति! अश्वावति! विभावरि! दीप्ते! रेवत् धनसंयुक्तम् अस्मे तादर्थ्यचतुर्थ्यन्तमेतत् । अस्मदर्थम् । इहैव स्थितेभ्योऽस्मभ्यं धनं देहीत्यर्थः । वि उच्छ विविधं तमांसि विवासय । हे सूनृतावति! सूनृताः प्रिया वाचः स्तुतिलक्षणाः, तद्वति! ।। १४ ।।

**वेङ्कटमाधव–** उषः! अद्य अस्मिन् प्रदेशे गोमति! अश्वावति! दीप्तिमति! धनयुक्तमस्मभ्यम् वि उच्छ शब्दवति! ।। १४ ।।

**मुद्गल–** हे गोमति! अस्मभ्यं दातव्यैः गोभिर्युक्ते! तथा अश्वावति! अश्वैर्युक्ते! विभावरि! विशिष्टप्रकाशोपेते! सूनृतावति! प्रियवाचा युक्ते! एवंभूते हे उषः! उषोदेवते! अद्य इदानीं प्रभातसमये इह अस्मिन् देशे अस्मे अस्माकम् रेवत् धनयुक्तं कर्म यथा भवति तथा वि उच्छ नैशं तमो निवारय ।। १४ ।।

**सायण–** हे **गोमति!** अस्मभ्यं दातव्यैर्गोभिर्युक्ते तथा **अश्वावति** अश्वैर्युक्ते **विभावरि** विशिष्टप्रकाशोपेते **सूनृतावति** । प्रियसत्यात्मिका वाक् सूनृता । तादृश्या वाचा युक्ते एवम्भूते हे **उषः!** उषोदेवते **अद्य** इदानीं प्रभातसमये **इह** अस्मिन् देशे **अस्मे** अस्माकं **रेवत्** धनयुक्तं कर्म यथा भवति तथा **व्युच्छ** नैशं तमो निवारय ।

अश्वावति । 'मन्त्रे सोमाश्वेन्द्रिय' इति मतौ दीर्घत्वम् । पादादित्वात् आमन्त्रितस्य आष्टमिकनिघाताभावः । रेवत् । 'रयेर्मतौ बहुलम्' (पा.सू.६.१.३७.६) इति सम्प्रसारणम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम्' (का.६.१.१७६.१) इति मतुप उदात्तत्वम् । उच्छ । 'उछी विवासे' । विवासो वर्जनम् ।। १४ ।।

**सिद्धाञ्जनम्–** हे **गोमति!** चिद्रश्मियुक्ते, **अश्वावति** प्राणशक्तिसम्पन्ने **विभावरि** विशिष्टभायुक्ते **सूनृतावति** शोभनसत्यवाग्युक्ते **उषः अद्य** इदानीं **इह** अस्मिन् स्थाने **अस्मे** अस्मासु **रेवत्** दिव्यं धनं यता भवति तथा **व्युच्छ** प्रकाशं कुरु । गोमतीत्यादयः सर्वे प्राग्व्याख्याताः ।

अस्मे–सप्तम्याः शे आदेशः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः । अथा नो विश्वा सौभगान्या वह ।।**
**युक्ष्व । हि । वाजिनीऽवति । अश्वान् । अद्य । अरुणान् । उषः । अथ । नः । विश्वा । सौभगानि । आ । वह ।। १५ ।।**

**स्कन्द–** हि–शब्दः पदपूरणः । युक्ष्व स्वरथे नियुङ्क्ष्व । वाजिनीवति! अश्वान् अद्य अरुणान् आरक्तवर्णान् हे उषः! । अथ अनन्तरम् नः अस्मान् प्रति विश्वा सौभगानि 'भगः' (निघ.२,१०) इति धननाम् । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । आ वह प्रापय । आनीयास्मभ्यं देहीत्यर्थः ।। १५ ।।

**वेङ्कटमाधव–** योजय हि अन्नवति! अरुणान् अश्वान् अद्य उषः! । अथ अस्मभ्यम् विश्वान्येव सौभाग्यानि आ वह ।। १५ ।।

**मुद्गल–** हे वाजिनीवति! हविर्लक्षणान्नवति! उषः! उषोदेवते! अरुणान् अरुणवर्णान् अश्वान् अश्वस्थानीयान् गोविशेषान् अद्य अस्मिन् काले युक्ष्व हि योजयैव । हिर्निर्धारणे । अथ अनन्तरं रथमारुह्य विश्वा सर्वाणि सौभगानि सौभाग्यानि नः अस्मभ्यम् आ वह आनय ।। १५ ।।

**सायण–** हे **वाजिनीवति!** हविर्लक्षणान्नवति **उषः** उषोदेवते **अरुणान्** अरुणवर्णान् **अश्वान्** अश्वस्थानीयान् गोविशेषान् **अद्य** अस्मिन् काले **युक्ष्वा हि** योजयैव । हिः अवधारणे । **अथ** अनन्तरं रथमारुह्य **विश्वा सौभगानि** सर्वाणि सौभाग्यानि **नः** अस्मभ्यम् **आ वह** आनय ।

अश्वान् । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । सौभगानि । 'सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् भावकर्मणोरर्थयोः 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' इति अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति उभयपदवृद्धौ प्राप्तायां सर्वविधीनां छन्दसि विकल्पितत्वादत्रोत्तरपदवृद्धिर्न भवति (का.७.३.१९) इत्युक्तम् ।। १५ ।।

**सिद्धाञ्जनम्–** हे **वाजिनोवति!** बहुविधसमृद्धिसम्पन्ने, हे **उषः! अरुणान् अश्वान्** अरुणवर्णान् अश्वान्, क्रियावेगद्योतकोऽरुणवर्णः राजसः, अश्वाश्च प्राणबलात्मानो बोध्याः, **अद्य** इदानीं **युक्ष्व हि** योजयैव । **अथ** ततः परं **नः** अस्मभ्यं **विश्वा सौभगानि** सर्वविधानि सौभाग्यानि **आवह** आनय ।। १५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये षड्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतम् ।।**
**अश्विना । वर्तिः । अस्मत् । आ । गोऽमत् । दस्रा । हिरण्यऽवत् । अर्वाक् । रथम् । सऽमनसा । नि । यच्छतम् ।। १६ ।।**

**स्कन्द–** 'आश्विनस्तृचः' (तु.बृदे.३,१२४) । हे अश्विना! वर्तिः तृतीयार्थे प्रथमैषा । वर्तन्या प्रसिद्धेन पथा । अस्मत् आ आकारोऽत्र मर्यादायाम् । हे दस्रा! शत्रूपक्षयकरौ! दस्रनामानौ! वा । यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामापरः, तथापीदं साहचर्यादुभयो-

रभिधानम् । गोमत् हिरण्यवत् रथस्यैते विशेषणे । व्यत्ययेन तु नपुंसकता । अस्मभ्यं देयाभिर्गोभिर्हिरण्येन च संयुक्तम् । अर्वाक् अस्मदभिमुखं स्वरथम् समनसा सम्प्रीतचेतस्कौ नि यच्छतम् । गोमता हिरण्यवता च रथेन सम्प्रीयमाणावभिमुखमागच्छतमित्यर्थः ।। १६ ।।

**वेङ्कटमाधव–** अश्विनौ! अस्मदर्थं मार्गं प्रति गोमन्तं हिरण्यवन्तम् रथम् अभिमुखम् आ नि यच्छतम् समानमनसौ दर्शनीयौ ।। १६ ।।

**मुद्गल–** उषःसाहचर्याद् बुद्धिस्थौ 'अश्विनौ' इदमादिकेन तृचेन स्तूयेते । हे अश्विना! अश्ववन्तौ देवौ! दस्रा! शत्रूणामुपक्षपयितारौ! अस्मत् अस्माकम् वर्तिः वर्तनहेतुभूतं गृहम् आ समन्तात् गोमत् बहुभिर्गोभिर्युक्तम् हिरण्यवत् हितरमणीयधनुयुक्तश्च यथा भवति तथा समनसा समानमनस्कौ सन्तौ युवां युष्मदीयम् रथम् अर्वाक् अर्वाचीनमस्मदीयगृहाभिमुखम् नि यच्छतम् आवर्तयतम् ।। १६ ।।

**सायण–** प्रातरनुवाकस्याश्विने ऋतावौष्णिहे छन्दसि 'अश्विना वर्तिः' इत्ययं तृचः आश्विनशस्त्रे च । तथा च सूत्रितम्– 'अश्विना वर्तिरस्मदाश्विनावेह गच्छतमिति तृचौ' (आश्व.श्रौ.४.१५) इति ।।

उषःसाहचर्यात् बुद्धिस्थौ अश्विनौ इदमादिकेन तृचेन स्तूयेते । हे **अश्विना!** अश्ववन्तौ व्यापनशीलौ वा देवौ **दस्रा** शत्रूणामुपक्षपयितारौ **अस्मत्** अस्माकं **वर्तिः** वर्तनहेतुभूतं गृहम् **आ** समन्तात् **गोमत्** बहुभिर्गोभिर्युक्तं **हिरण्यवत्** हितरमणीयधनयुक्तं च यथा भवति तथा **समनसा** समानमनस्कौ सन्तौ **युवां** युष्मदीयं **रथम् अर्वाक्** अर्वाचीनम् अस्मदीयगृहमभिमुखं **नियच्छतम्** आवर्तयतम् ।

अश्विना । 'सुपां सुलुक्' इति आकारः । वर्तिः । वर्ततेऽस्मिन्निति वर्तिर्गृहम् । औणादिक इसिप्रत्ययः । अस्मत् । 'सुपां सुलुक्' इति षष्ठ्या लुक् । समनसा । समानं मनो ययोस्तौ । 'समानस्य च्छन्दसि' इति सभावः ।। १६ ।।

**सिद्धाञ्जनम्–** उषा अश्विनोर्योषा, रथे तयोः प्रतिष्ठते, तत्साहचर्यात् अश्विनौ प्रस्तुतौ तृचेऽस्मिन्, तत्र आद्या 'अश्विना वर्ति'रिति भवति । हे **अश्विना!** अश्ववन्तौ, **दस्रा**

क्रियादक्षौ, व्याक्यातम् (१.३.३) **अस्मत्** अस्माकं **वर्तिः** वर्तनं, आवासगृहं शरीरमित्यर्थः **गोमत्** चित्किरणयुक्तं **हिरण्यवत्** सौरज्योतिर्द्योतकसुवर्णयुक्तं यथा भवति तथा **समनसा** समानमनस्कौ सन्तौ युवां **अर्वाक्** अर्वाचीनं अस्माकं समीपे **रथम्** युष्मदीयं **आ नियच्छतम्** आवर्तयतम् ।

वर्तिः–वर्ततेऽस्मिन्निति औणादिक इसिप्रत्ययः । अस्मत्–सुपां सुलुगिति षष्ठ्या लुक् ।।

## ऋक्संहिता पदपाठसहिता

**यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः । आ न ऊर्जं वहतमश्विना युवम् ।।**
**यौ । इत्था । श्लोकम् । आ । दिवः । ज्योतिः । जनाय । चक्रथुः । आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् ।। १७ ।।**

**स्कन्द–** यौ इत्था अमुत्रान्तरिक्षे सत्यं वा श्लोकम् श्लोकलक्षणं वचः आ दिवः द्युलोकात् विद्युदाख्यम् ज्योतिः जनाय लोकोपकारार्थम् चक्रथुः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तौ नः अस्मान् प्रति ऊर्जम् अन्नम् आ वहतम् प्रापयतम् । दत्तमस्मभ्यमित्यर्थः । हे अश्विनौ! युवम् युवाम् ।। १७ ।।

**वेङ्कटमाधव–** यौ इत्थं स्तोतव्यम् ज्योतिः दिवः भूमिं प्रति आ चक्रथुः जनार्थम्, तौ युवाम् अश्विनौ! अस्मभ्यम् अन्नम् आ वहतम् ।। १७ ।।

**मुद्गल–** हे अश्विना! अश्विनौ! यौ युवाम् आ जनाय सर्वजनार्थम् दिवः द्युलोकात् श्लोकम् उपश्लोकनीयं प्रशंसनीयम् ज्योतिः तेजः इत्था इत्थम्भूतमस्माभिरनुभूयमानेन प्रकारेण चक्रथुः कृतवन्तौ, तौ युवम् युवाम् नः अस्मभ्यम् ऊर्जम् बलप्रदमन्नम् आ वहतम् आनयतं प्रयच्छतम् ।।

**सायण–** हे अश्विनौ! **यौ** युवां **दिवः** द्युलोकात् **श्लोकम्** उपश्लोकनीयं प्रशंसनीयं **ज्योतिः** तेजः **इत्था** इत्थमस्माभिरनुभूयमानेन प्रकारेण **चक्रथुः** कृतवन्तौ । केषाञ्चिन्मतेन सूर्याचन्द्रमसावश्विनौ उच्येते । तदुक्तं यास्केन– 'तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके' (निरु.१२.१) इति । तथा च प्रकाशकत्वं तयोरुपपन्नम् । तौ **युवं** युवां **नः** अस्मभ्यम् **ऊर्जं** बलप्रदमन्नम् **आ वहतं** आनयतं प्रयच्छतम् ।

श्लोकम् । 'श्लोकृ सङ्घाते' । अयं स्तुत्यर्थोऽपि । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **यौ** युवां **दिवः** द्युलोकात् **श्लोकात्** श्लोकम् श्लोकनीयं प्रशस्यं **ज्योतिः** उत्तमं तेजः **जनाय** यजमानाय **इत्था** इत्थमस्मदनुभवक्षमं **आ चक्रथुः** आकारयुक्तं निष्पादितवन्तौ, तौ **युवम्** युवां **नः** अस्मभ्यं **ऊर्जम्** वीर्यवद्बलमपि **आवहतम्** आनयतम् ।

श्लोकम्–श्लोकृ सङ्घाते, स्तुत्यर्थेऽपि प्रसिद्धः, कर्मणि घञ् ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**एह देवा मयोभुवा दस्रा हिरण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतये ।। १८ ।।**
**आ । इह । देवा । मयःऽभुवा । दस्रा । हिरण्यवर्त्तनी इति हिरण्यऽवर्तनी । उषःऽबुधः । वहन्तु । सोमऽपीतये ।। १८ ।।**

**स्कन्द–** आ इत्युपसर्गो वहन्त्वित्याख्यातेन सम्बन्धयितव्यः । **इह** अस्मदीये यज्ञे **देवा** देवावश्विनौ । **मयोभुवा** यष्टॄणां च स्तोतॄणाञ्च सुखस्य भावयितारौ जनयितारौ । **दस्रा** शत्रूपक्षयकरौ । **हिरण्यवर्तनी** वर्तनी रथचक्रधारा । सा हिरण्मयी ययोः तौ हिरण्यवर्तनी । **उषर्बुधः** सुप्ताः सन्तः यज्ञं प्रति गन्तुमुषःकाले ये प्रतिबुध्यन्ते ते उषर्बुधोऽश्वाः, ते **आ वहन्तु** **सोमपीतये** सोमपानार्थम् ।। १८ ।।

**वेङ्कटमाधव– आ वहन्तु** अत्र देवौ सुखस्य भावयितारौ दस्रौ हिरण्ययुक्तमार्गावश्विनौ उषसि प्रबुद्धा देवाः सोमपानाय ।। १८ ।।

**मुद्गल– उषर्बुधः** उषसि प्रबुद्धा अश्वाः इह अस्मिन् यागे **सोमपीतये** सोमपानाय **दस्रा** शत्रूणामुपक्षपयितारावश्विनौ **आ वहन्तु** आनयन्तु । कीदृशौ । **देवा** देवनशीलौ **मयोभुवा** मयस आरोग्यप्रदस्य सुखस्य भावयितारौ **हिरण्यवर्तनी** सुवर्णमयो वर्तनिः रथो ययोस्तौ ।।

**सायण– उषर्बुधः** उषसि प्रबुद्धा अश्वाः इह अस्मिन् यागे **सोमपीतये** सोमपानाय **दस्रा** शत्रूणामुपक्षपयितारावश्विनौ **आ वहन्तु** आनयन्तु । कीदृशौ । **देवा** देवनशीलौ दानादिगुणयुक्तौ वा **मयोभुवा** मयस आरोग्यप्रदस्य सुखस्य भावयितारौ । 'अश्विनौ वै देवानां भिषजौ' (ऐ.ब्रा.१.१८) इति श्रुतेः । **हिरण्यवर्तनी** । वर्ततेऽनेनेति व्युत्पत्त्या वर्तनिशब्देन रथ उच्यते । सुवर्णमयो वर्तनिर्ययोस्तौ ।

देवेत्यादिषु त्रिषु 'सुपां सुलुक्' इति आकारः । सोमपीतये । 'पा पाने' । भावे क्तिनि 'घुमास्था' इति ईत्वम् । सोमस्य पीतिः सोमपीतिः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्– उषर्बुधः** उषसि प्रबुद्धाः सामर्थ्यादश्वा इति पूर्वे व्याख्यातारः । तथा ग्रहणमुपपन्नम् । **इह** अस्मिन्नस्मदन्तर्यजने **सोमपीतये** सोमपानाय **दस्रा** क्रियादक्षौ अश्विनौ **आवहन्तु** आनयन्तु । कीदृशौ? **देवा** देवौ **मयोभुवा** मयोभुवौ सुखस्य भावयितारौ **हिरण्यवर्तनी** हिरण्मयो वर्तनिर्मार्गो ययोस्तौ । 'रुद्रवर्तनी'' (१.३.३) इत्यत्र वर्तनिशब्दव्याख्या द्रष्टव्या ।।

**।। इति प्रथमाष्टके षष्ठाध्याये सप्तविंशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**(सूक्तम्-९३)**

**(१२ गोतमो राहूगणः । अग्नीषोमौ । १-३ अनुष्टुप् ।**
**४-७, १२ त्रिष्टुप् । ८ जगती त्रिष्टुब्वा । ९-११ गायत्री)**

**अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ।।**
**अग्नीषोमौ । इमम् । सु । मे । शृणुतम् । वृषणा । हवम् । प्रति । सुऽउक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ।। १ ।।**

**स्कन्द–** 'अग्नीषोमीयमुत्तमम्' । अनुवाकस्योत्तममिदं सूक्तम् अग्नीषोमदेवत्यम् । हे **अग्नीषोमौ! इमम् मे** मम स्वभूतम् सु **शृणुतम्** शोभनं सुष्ठु वा शृणुतम् । हे **वृषणा!** वर्षितारौ! **हवम्** आह्वानम् **सूक्तानि** च स्तुतिरूपाणि **प्रति हर्यतम्** कामयेथाम् । **भवतम् दाशुषे** यजमानाय **मयः** सुखम् ।। १ ।।

**वेङ्कटमाधव– अग्नीषोमौ**! इदं मदीयमाह्वानं वर्षितारौ! सुष्ठु **शृणुतम्** । **सूक्तानि** च कामयेथाम् । भावयतश्च यजमानाय सुखम् ।। १ ।।

**मुद्गल–** 'अग्नीषोमौ' इति द्वादशर्चं नवमं सूक्तम् । गोतम ऋषिः । आदितस्तिस्रोऽनुष्टुभः । नवम्याद्यास्तिस्रो गायत्र्यः । अष्टमी जगती त्रिष्टुब् वा । शिष्टाः पञ्च त्रिष्टुभः । अग्नीषोमौ देवते ।।

**वृषणा!** कामानां वर्षितारौ ! हे **अग्नीषोमौ! इमम्** इदानीं प्रयुज्यमानं **मे** मदीयम् **हवम्** आह्वानम् **सु शृणुतम्** सम्यगवगच्छतम् । **सूक्तानि** शोभनानि स्तुतिलक्षणान्यस्माभिः कृतानि वचांसि **प्रति हर्यतम्** प्रत्येकं कामयेथाम् । तदनन्तरम् **दाशुषे** चरुपुरोढाशादीनि दत्तवते यजमानाय **मयः** मयसः सुखस्य दातारौ **भवतम्** ।। १ ।।

**सायण–** 'अग्नीषोमौ' इति द्वादशर्चं नवमं सूक्तं गोतमस्यार्षम् । आदितस्तिस्रोऽनुष्टुभः । नवम्याद्यास्तिस्रो गायत्र्यः । अष्टमी जगती त्रिष्टुब्वा । शिष्टाः पञ्च त्रिष्टुभः । अग्नीषोमौ देवता । तथा चानुक्रान्तम्– 'अग्नीषोमौ द्वादशाग्नीषोमीयमाद्यास्तिस्रोऽनुष्टुभ उषान्त्यास्तिस्रो गायत्र्योऽष्टमी जगती वा' इति । अग्नीषोमीयस्य पशोर्वपापुरोडाशहविषामादितस्तिस्र ऋचः क्रमेणानुवाक्याः । सूत्रितं च– 'अग्नीषोमाविमं सु मे युवमेतानि दिवि रोचनानीति तृचौ' (आश्व.श्रौ.३.८) इति ।

**वृषणा** वृषणौ कामानां वर्षितारौ हे **अग्नीषोमौ! इमम्** इदानीं प्रयुज्यमानं **मे** मदीयं **हवम्** आह्वानं **सु शृणुतं** सम्यगवगच्छतम् । **सूक्तानि** शोभनानि स्तुतिलक्षणान्यस्माभिः कृतानि वचांसि **प्रति हर्यतं** प्रत्येकं कामयेथाम् । तदनन्तरं **दाशुषे** चरुपुरोडाशादीनि दत्तवते यजमानाय **मयः** मयसः सुखस्य दातारौ **भवतम्** ।

अग्नीषोमौ । अग्निश्च सोमश्च । द्वन्द्वे 'ईदग्नेः सोमवरुणयोः' (पा.सू.६.३.२७) इति ईत्वम् । 'अग्नेः स्तुत्स्तोमसोमाः' (पा.सू.८.३.८२) इति षत्वम् । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरे प्राप्ते 'आमन्त्रितस्य च' इत्याद्युदात्तत्वम् । वृषणा । 'सुपां सुलुक्' इति आकारः । 'वा षपूर्वस्य' इति विकल्पनादुपधाया दीर्घाभावः । हवम् । 'भावेऽनुपसर्गस्य' इति ह्वयतेः अप् सम्प्रसारणं च । सूक्तानि । सुपूर्वात् वक्तेः कर्मणि निष्ठा । 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । हर्यतम् । 'हर्य गतिकान्त्योः' । भौवादिकः ।। १ ।।

**सिद्धाञ्जनम्–** 'अग्नीषोमावि'ति द्वादशर्चं नवमं सूक्तं गोतमस्यार्षम् । आदितस्तिस्रोऽनुष्टुभः नवम्याद्यास्तिस्रो गायत्र्यः अष्टमी जगती त्रिष्टुब्वा शिष्टाः पञ्च त्रिष्टुभः, अग्नीषोमौ देवता ।

**वृषणा** वर्षितारौ अभीष्टानां हे **अग्नीषोमौ! मे इमम् हवम्** प्रकृतमस्मदाह्वानं **सु शृणुतम्** सम्यगाकर्णयतम् । **सूक्तानि प्रति** अस्मदीयानि स्तोत्राणि समुद्दिश्य **हर्यतम्** तानि कान्तानि

कुरुतं, 'सूक्तानि प्रति हर्यतम् प्रत्येकं कामयेथाम्' इति सायणानुसारतो वा भवतु । अथ **दाशुषे** दत्तवते यजमानाय **मयः** सुखं, सुखमयी **भवतम्** ।

हर्यतम्–हर्य गतिकान्त्योः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमा यो अद्य वामिदं वचः सपर्यति । तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ।।**
**अग्नीषोमा । यः । अद्य । वाम् । इदम् । वचः । सपर्यति । तस्मै । धत्तम् । सुऽवीर्यम् । गवाम् । पोषम् । सुऽअश्व्यम् ।। २ ।।**

**स्कन्द–** पूर्णमासे उपांशुयाजस्यानुवाक्यैषा । **अग्नीषोमा!** हे अग्नीषोमौ! **यः अद्य वाम् वचः** युवयोः अनुवाक्यलक्षणम् **इदम्** वधनम् **सपर्यति** परिचरणकर्माऽयमन्यत्र । इह तु सामर्थ्यादुच्चारणार्थः । अथवा परिचरणकर्मैव । इदम् वचः इति तृतीयार्थे द्वितीया । युवामनुवाक्यालक्षणेन वचसा सपर्यति परिचरति । स्तौतीत्यर्थः । **तस्मै धत्तम्** दत्तम् **सुवीर्यम्** शोभनेन वीर्येण सहितम् **गवाम् पोषम्, स्वश्व्यम्** शोभनैश्चाश्वैः सहितम् ।। २ ।।

**वेङ्कटमाधव–** अग्नीषोमौ! **यः अद्य इदम् वचः** उच्चारयति । **तस्मै धत्तम् सुवीर्यम् यवाम् पोषम्** अश्वसङ्घं च शोभनम् ।। २ ।।

**मुद्गल–** हे **अग्नीषोमा!** अग्नीषोमौ! **यः** यजमानः **अद्य** अस्मिन् कर्मणि **वाम्** युवाभ्यां युष्मदर्थम् **इदम्** स्तुतिलक्षणम् **वचः** वाक्यम् **सपर्यति** पूजितं करोति । **तस्मै** यजमानाय **गवाम्** पशूनाम् **पोषम्** अभिवृद्धिम् **धत्तम्** प्रयच्छतम् । कीदृशं पोषम् । **सुवीर्यम्** शोभनेन वीर्येणोपेतम् **स्वश्व्यम्** शोभनैरश्वैर्युक्तम् ।। २ ।।

**सायण–** यदा पौर्णमास्यामग्नीषोमावुपांशुयाजस्य देवता तदानीम् 'अग्नीषोमा यो अद्य' इति तस्यानुवाक्या । सूत्रितं च 'उक्ता देवताः' इति खण्डे– 'अग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभार' (आश्व.श्रौ.१.६) इति ।

हे **अग्नीषोमौ! यः** यजमानः **अद्य** अस्मिन् कर्मणि **वां** युवाभ्यां युष्मदर्थम् इदं स्तुतिलक्षणं **वचः** वाक्यं **सपर्यति** पूजितं करोति **तस्मै** यजमानाय **गवां** पशूनां **पोषम्** अभिवृद्धिं **धत्तं** प्रयच्छतम् । कीदृशं पोषम् । **सुवीर्यं** शोभनेन वीर्येण सामर्थ्येनोपेतं **स्वश्व्यं** शोभनैरश्वैर्युक्तम् ।

गवाम् । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वम् 'न गोश्वन्साववर्ण' इति प्रतिषेधः ।। २ ।।

**सिद्धाञ्जनम्**– हे **अग्नीषोमा!** अग्नीषोमौ, **यः** यजमानः **अद्य** इदानीं **वाम्** युष्मभ्यं **इदम्** **वचः** मन्त्रात्मकं वचनं **सपर्यति** पूजितं करोति **तस्मै** यजमानाय **गवाम् पोषम्** ज्ञानांशूनामभिवृद्धिं **धत्तम्** धारयतं, प्रयच्छतमित्यर्थः । कीदृशं पोषम्? **सुवीर्यम्** शोभनवीर्योपेतं **स्वश्व्यम्** शोभनैरश्वैः प्राणलक्षणैर्युक्तम् । गवाश्वैः ज्ञानक्रियात्मकशक्तिद्वयं प्रतिपाद्यते ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् ।**
**स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ।। ३ ।।**
**अग्नीषोमा । यः । आऽहुतिम् । यः । वाम् । दाशात् । हविःऽकृतिम् । सः । प्रऽजया । सुऽवीर्यम् । विश्वम् । आयुः । वि । अश्नवत् ।। ३ ।।**

**स्कन्द**– **अग्नीषोमा**! अग्नीषोमौ! **यः** यजमानः **आहुतिम्** आज्यलक्षणाम् । **यः वाम्** युवाभ्याम् **दाशात्** ददाति । **हविष्कृतिम्** पुरोडाशादिहविः यथोक्तसंस्कारादिसंस्कृतम् । **सः** **प्रजया सुवीर्यम् विश्वम् आयुः** जीवितमन्नं वा **वि अश्नवत्** विविधं प्राप्नुयात् । लभेत युष्मत्प्रसादेनेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव**– अग्नीषोमौ! **यः** युवाभ्याम् आज्याहुतिं प्रयच्छति **यः** वा पुरोडाशम् । **सः** **प्रजया** च **सुवीर्यम् विश्वम् आयुः** च व्याप्नोतु ।। ३ ।।

**मुद्गल**– हे **अग्नीषोमा! यः** यजमानः **आहुतिम्** आज्याहुतिम् **वाम्** युवाभ्याम् **दाशात्** दद्यात् । अथवा **हविष्कृतिम्** हविषा चरुपुरोडाशादिना कृतामाहुतिम् **यः** यजमानो दद्यात् **सः** यजमानः **प्रजया** पुत्रपौत्रादिना युक्तम् **सुवीर्यम्** शोभनवीर्ययुक्तम् **विश्वम्** सर्वम् आयुः जीवनम् वि अक्षवत् व्याप्नोतु ।। ३ ।।

**सायण**– हे अग्नीषोमौ! **यः** यजमानः **आहुतिम्** आज्याहुतिं **वां** युवाभ्यां **दाशात्** दद्यात् । अथवा **हविष्कृतिं** हविषा चरुपुरोडाशादिना कृताम् आहुतिं **यः** यजमानो दद्यात् । **सः** यजमानः **प्रजया** पुत्रपौत्रादिना युक्तं **सुवीर्यं** शोभनवीर्ययुक्तं **विश्वं** सर्वम् **आयुः** जीवनं **व्यश्नवत्** व्याप्नोतु ।

आहुतिम् । जुहोतेः क्तिनि 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । दाशात् । 'दाशृ दाने' । लेटि आडागमः । यद्वृत्तयोगादनिघातः । हविष्कृतम् । हविषः कृतिः करणं यस्यामाहुतौ । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य षत्वम् । अश्नवत् । अश्नोतेर्व्यत्ययेन परस्मैपदम् । लेटि अडागमः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **अग्नीषोमा!** अग्नीषोमौ, **यः** यजमानः **हविष्कृतिम्** हविषा अर्पणद्रव्येण कृतां **आहुतिम्** आह्वानलक्षणमर्पणं **वाम्** युष्मभ्यं **दाशात्** दद्यात्, **सः** यजमानः **प्रजया** उक्तलक्षणया सन्तत्या सह **सुवीर्यम्** शोभनवीर्योपेतं **विश्वम् आयुः** सर्वं जीवनं **व्यश्नवत्** व्याप्नोत् । मन्त्रे 'यः' द्विरावृत्तः आदरार्थो ग्राह्यः ।

हविष्कृतिः–हविषः कृतिः करणं यस्यामाहुतौ । अश्नवत्, दाशात्–उभयं लेट् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमा चेति तद् वीर्यं वां यदमुष्णीतमवसं पणिं गाः ।**
**अवातिरतं बृसयस्य शेषोऽविन्दतं ज्योतिरेकं बहुभ्यः ।। ४ ।।**
**अग्नीषोमा । चेति । तत् । वीर्यम् । वाम् । यत् । अमुष्णीतम् । अवसम् । पणिम् । गाः । अव । अतिरतम् । बृसयस्य । शेषः । अविन्दतम् । ज्योतिः । एकम् । बहुऽभ्यः ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'पणिर्नामासुरो देवेभ्यो बिभ्यत् स्वा गा आदाय ननाश । तमग्नीषोमावनुगम्य ता अस्य गा अनुजह्रतुः' इति । तदेतदुच्यते– **अग्नीषोमा इति** ।। हे **अग्नीषोमा! चेति** चेत्यते ज्ञायते । सर्वलोकप्रकाशमित्यर्थः । **तत् वीर्यम् वाम्** युवयोः । **यत्** तृतीयार्थे प्रथमैषा । येन **अमुष्णीतम्** मुषितवन्तौ स्थः । **अवसम्** अवतेर्गत्यर्थस्य । अवितारं गन्तारम् । नंष्टारमित्यर्थः । **पणिम् गाः** पणिनामानमसुरं गाः सास्नादिमतीः । सर्वलोकप्रकाशं तद्युवयोः वीर्यं येन पणेर्गा अपहृतवन्तौ स्थः । किञ्च **अव अतिरतम्** इत्यादि । अत्रापीतिहासमाचक्षते– 'वृत्र आदित्यं नक्षत्राणि रश्मींश्चापहृत्य महत् तमस्ततान लोके । अग्नीषोमौ त्वादित्यादीन् प्रत्यानिन्यतुः' इति । तदेतदुच्यते– अवातिरतमित्यादि । अवतिरति-र्वधकर्मा (तु.निघ.२,१९) । इतवन्तौ स्थः । **बृसयस्य शेषः** 'शषः' (निघ.२,२) इति अपत्यनाम । बृसयनाम्नोऽसुरस्य वृत्राख्यमपत्यम् । हत्वा च **अविन्दतम्** लब्धवन्तौ स्थः । **ज्योतिः एकम्** सर्वसाधारणमादित्याख्यम् **बहुभ्यः** बहूनां प्राणिनामर्थाय ।। ४ ।।

**वेङ्कटमाधव–** अग्नीषोमौ! **तत्** युवयोः **वीर्यम्** चेतयति, **यत् अमुष्णीतम्** अन्नं पशूंश्च पणेः । तथा **बृसयस्य** अपत्यं वृत्रम् **अव अतिरतम्** अभ्यभवतम् । **अविन्दतम् च ज्योतिः एकम् बहुभ्यः** साधारणमादित्यं वृत्रहननेन लम्भितवन्तौ इति ।। ४ ।।

**मुद्गल–** हे **अग्नीषोमा! वाम्** युवयोः **तत्** वक्ष्यमाणम् **वीर्यम्** सामर्थ्यम् **चेति** अस्माभिर्ज्ञातमभूत् । **यत्** येन वीर्येण **गाः अवसम्** गोरूपमन्नम् **पणिम्** पणेरेतन्नाम्नोऽसुरात् **अमुष्णीतम्** अपाहार्ष्टम् । तथा **बृसयस्य** बृसयति सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा, तस्यासुरस्य **शेषः** अपत्यं त्वष्टुः सकाशादुत्पन्नं वृत्रम् **अव अतिरतम्** अवधिष्टम् । ततो वृत्रवधानन्तरम् **ज्योतिः** द्योतमानं सूर्यम् **एकम्** नभसि गच्छन्तम् **बहुभ्यः** बहूनामर्थाय **अविन्दतम्** अलप्साथाम् । एतत्सर्वं येन वीर्येण क्रियते तदस्माभिर्ज्ञातमित्यर्थः ।। ४ ।।

**सायण–** हे अग्नीषोमौ! **वां** युवयोः **तत्** वक्ष्यमाणं **वीर्यं** सामर्थ्यं **चेति** अस्माभिर्ज्ञातमभूत् । **यत्** येन वीर्येण **गाः अवसं** गोरूपमन्नं **पणिं** पणेः । विभक्तिव्यत्ययः । एतन्नाम्नोऽसुरात् **अमुष्णीतं** अपाहार्ष्टम् । तथा **बृसयस्य** । वृसिः वेष्टनार्थः । वृसयति सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा । तस्यासुरस्य शेषः अपत्यम् । 'शेष इत्यपत्यनाम शिष्यते प्रयतः' (निरु. ३.२) इति यास्कः । त्वष्टृसकाशादुत्पन्नं वृत्रम् **अवातिरतम्** अवधिष्टम् । अवतिरतिर्वधकर्मा । प्राणापानरूपयोर्युवयोर्वृत्रेऽनवस्थानात् स मरणं प्राप्तः । तथा चाम्नायते– 'तस्माज्जञ्भ्यमाना-दग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहिताम्' (तै.सं.२.५.२.४) इति । ततो वृत्रवधानन्तरं **ज्योतिः** द्योतमानं सूर्यम् **एकं** नभसि गच्छन्तं **बहुभ्यः** जनेभ्यो बहूनामर्थाय **अविन्दतम्** अलप्साथाम् । एतत् सर्वं येन वीर्येण क्रियते तदस्माभिर्ज्ञातमित्यर्थः ।

चेति । 'चिती संज्ञाने' । लुङि 'चिण् भावकर्मणोः' (पा.सू.३.१.६६) इति च्लेः चिणादेशः । 'चिणो लुक्' इति तशब्दस्य लुक् । अमुष्णीतम् । 'मुष स्तेये' । क्रैयादिकः । अवसम् । अवतेरौणादिकः असच् । शेषः । 'सुषां सुलुक्' इति द्वितीयायाः सुः । एकम् । 'इण गतौ' । 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ.सू.३.३२३) इति कन्प्रत्ययः । नित्त्वा-दाद्युदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे **अग्नीषोमा!** अग्नीषोमौ, **वाम् तत् वीर्यम्** युवयोः तद्वक्ष्यमाणं सामर्थ्यं

**चेति** अचेति, अस्माभिर्ज्ञातं भवति । **यत्** येन वीर्येण **गाः अवसम्** गवात्मकं रक्षणं, चिद्रश्मिजालं हि महद्रक्षणं देवकामानाम् । **पणिम् अमुष्णीतम्** पणेर्व्यवहारिणोऽसुरान् अपाहार्ष्टम् । तथा **बृसयस्य** बृसयति संवेष्टयति आवृणोति तमोघनोऽसुरो वृत्रः तस्य **शेषः** अवशिष्टं अंशं, **अवातिरतम्** अधः प्रापयतम् । हिरण्यस्तूपस्यैन्द्रे सूक्ते वृत्रवधं प्रति विचारितम् (१.३२), इन्द्रेण हतस्य वृत्रस्य शिष्टं शरीरं अपामधः पातितं तत्र शेत इति । ततः परं **बहुभ्यः** देवकामेभ्य ऋषिभ्यः **एकम् ज्योतिः** उत्तमं सौरं सत्यं **अविन्दतम्** अलप्साथाम् । अत्र बृसयः त्वष्टा तस्य शेषः अपत्यं वृत्र इति पुराणकथारीतिमवलम्ब्य व्याचष्टे सायणः ।

अवसम्–अवतेरौणादिकः असच् । शेषः– सुपां सुलुगिति द्वितीयायाः सुः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।**
**युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ।। ५ ।।**
**युवम् । एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति सऽक्रतू । अधत्तम् । युवम् । सिन्धून् । अभिऽशस्तेः । अवद्यात् । अग्नीषोमौ । अमुञ्चतम् । गृभीतान् ।। ५ ।।**

**स्कन्द–** पूर्णमासेऽग्नीषोमीयस्य पुरोडाशस्य याज्यैषा । **युवम् एतानि दिवि रोचनानि** नक्षत्राणि । **अग्निः च** चशब्दात्त्वं च । हे **सोम! सक्रतू** समानकर्माणौ । **अधत्तम्** वृत्रहनन-द्वारेण स्वसाध्ययज्ञहेतुकवृष्ट्यादिद्वारेण वा स्थापितवन्तौ । **युवम्** एव **सिन्धून्** स्यन्दनात् सिन्धवो रश्मय इह उच्यन्ते । 'न सिन्धवो रजसो अन्तमानशुः' (ऋ १,५२,१४) इति यथा । रश्मीन् । **अभिशस्तेः** हिंसितुर्वृत्राख्यात् । कीदृशात् । **अवद्यात्** अत्यन्तपापात् । हे **अग्नीषोमौ! अमुञ्चतम् गृभीतान्** विमोचितवन्तौ स्थः वृत्रेण गृहीतान् सतः ।। ५ ।।

**वेङ्कटमाधव– युवम् एतानि दिवि** नक्षत्राणि **अग्नीषोमौ!** समानकर्माणौ **अधत्तम्** । **युवम्** नदीः ब्रह्महत्यागृहीताः **अवद्यात्** अभिशस्तेः च **अमुञ्चतम्** ।। १५ ।।

**मुद्गल–** हे **सोम!** त्वम् **अग्निः च सक्रतू** समानकर्माणौ सन्तौ **युवम्** युवाम् **रोचनानि** रोचमानानि दीप्यमानानि **एतानि** अस्माभिर्निशि दृश्यमानानि ताराग्रहादीनि ज्योतींषि **दिवि** द्युलोके **अधत्तम्** अधारयतम् । उत्तरार्धस्येयमाख्यायिका– 'इन्द्रो वृत्रं हत्वा ब्रह्महत्याया भीतः

सन् पृथिव्यां वृक्षेषु स्त्रीष्वप्सु च तां ब्रह्महत्यां न्यमार्क्षीत् । तासामपां शुद्धिरग्नीषोमाभ्यां जाता' इति । ब्रह्महत्यांशपापेन **गृभीतान्** गृहीतान् आक्रान्तान् **सिन्धून्** नदीविशेषान् **अग्नीषोमौ** । **युवम्** युवाम् **अभिशस्तेः** अभिशस्यमानादभितः प्रकटितात् **अवद्यात्** तस्मात्पापात् **अमुञ्चतम्** मुक्तवन्तौ ॥ ५ ॥

**सायण–** अग्नीषोमीयस्य पशोर्वपापुरोडाशहविषां 'युवमेतानि' इति आद्यास्तिस्र ऋचः क्रमेण याज्याः । सूत्रं तु पूर्वमेवोदाहृतम् (आश्व.श्रौ.३.८) । पौर्णमासयागेऽग्नीषोमीयस्य पुरोडाशस्य 'युवमेतानि' इत्येषा याज्या । 'उक्ता देवताः' इति खण्डे सूत्रितं– 'युवमेतानि दिवि रोचनानीन्द्राग्नी अवसा गतम्' (आश्व.श्रौ.१.६) इति ।

हे **सोम!** त्वम् **अग्निश्च सक्रतू** समानकर्माणौ सन्तौ **युवं** युवां **रोचनानि** रोचमानानि दीप्यमानानि **एतानि** अस्माभिर्निशि दृश्यमानानिताराग्रहादीनि ज्योतींषि **दिवि** द्युलोके **अधत्तम्** अधारयतम् । उत्तरार्धस्येयमाख्यायिका । इन्द्रो वृत्रं हत्वा ब्रह्महत्याया भीतः सन् पृथिव्यां वृक्षेषु स्त्रीष्वप्सु च तां ब्रह्महत्यां न्यमार्क्षीत् तासामपां शुद्धिरग्नीषोमाभ्यां जातेति । ब्रह्महत्यांशेन पापेन **गृभीतान्** गृहीतानाक्रान्तान् **सिन्धून्** नदीविशेषान् हे **अग्नीषोमौ!** युवाम् **अभिशस्तेः** अभिशस्यमानादभितः प्रकटितात् **अवद्यात्** तस्मात् पापात् **अमुञ्चतं** मुक्तवन्तौ । यद्वा । वृत्रः इन्द्रेण हतः सन् नदीषु पपात । ततो मृतेन वृत्रशरीरेण नद्यः सर्वा दुष्टा बभूवुः । तथा च तैत्तिरीयकम्– 'इन्द्रो वृत्रमहन् सोऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञियं सदेवमासीत्तदपोदक्रामत्' (तै.ब्रा.३.२.५.१) इति । तेन दोषेण गृहीता नदीस्तस्माद्दोषादग्नीषोमौ मुक्तवन्तौ ।

रोचनानि । 'रुच दीप्तौ' । 'अनुदात्तेतश्च हलादेः' इति युच् । सिन्धून् । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः' इति अनुनासिकः । गृभीतान् । 'हृग्रहोर्भः' इति भत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्–** हे **सोम!** त्वं **अग्निः च सक्रतू** समानकर्माणौ सन्तौ **युवम्** युवां **दिवि** द्युलोके **एतानि रोचनानि** ज्योतींषि, दिव्यानि तेजांसीति रहस्यम्, नक्षत्रपरं बाह्यपक्षे । **अधत्तम्** अधारयतम्, **युवम्** युवां **गृभीतान्** गृहीतान् वृत्रबन्धनस्थान् **सिन्धून्** अब्लक्षणान् तेजोबलादीन् हे **अग्नीषोमौ! अभिशस्तेः** अभितो हिंसतः **अवद्यात्** पापात् **अमुञ्चतम्** मुक्तवन्तौ । 'रोचनानि' चित्प्रकाशं 'सिन्धवः' प्राणबलधारां चावेदयन्ति ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

**आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।**
**अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ।। ६ ।।**
**आ । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परि । श्येनः । अद्रेः । अग्नीषोमा । ब्रह्मणा । ववृधाना । उरुम् । यज्ञाय । चक्रथुः । ऊँ इति । लोकम् ।।**

**स्कन्द–** पूर्णमासे उपांशुयाजस्य याज्यैषा । अन्यशब्दश्चात्रैकवचनपर्यायः । युवयोरेकं **दिवः** द्युलोकात् **मातरिश्वा आ** जहार आहृतवान् । कतरम् । अग्निम् । कुत एतत् । 'आ दूतो अग्निमभरद् विवस्वतो वैश्वानरं मातरिश्वा परावतः' (ऋ.६,८,४) इति मन्त्रान्तरदर्शनात् । **अमथ्नाद् अन्यम्** इत्यादि । अत्रैतरेयब्राह्मणैकदेशपठितमितिहासैकदेशमाचक्षते– 'सोमो वै राजामुष्मिन् लोक आसीत् । तं देवाश्च ऋषयश्चाभ्यध्यायन्– कथमयमस्मान् सोमो राजाऽगच्छेदिति । तेऽब्रुवन्– छन्दांसि यूयं न इमं राजानं सोममाहरतेति । तानि तथेति प्रतिपद्य सुपर्णरूपाणि भूत्वोदपतन् । तेषां जगती त्रिष्टुप् च सोममाहर्तुं नाशक्नोत् । गायत्री गत्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं परिगृह्याऽऽहरत् (तु.ऐ.ब्रा.३,२५-२६) इति । तदेतदुच्यते– अमथ्नादन्यमिति । मथ्नातिरत्र मथनकर्मक आहरणे वर्तते । **अन्यम्** तु सोमाख्यं गायत्री सुपर्णरूपिणी सोमपालान् भीषयित्वा प्रमथ्याऽऽहरदित्यर्थः । कुत एतत् । पूर्वोक्तादितिहासात् । 'सोमः श्येनाभृतः सुतः' (ऋ.१,८०,२), 'आदाय श्येनो अभरत्' (ऋ. ४,२६,७) इति चैवमादिमन्त्रान्तरे दर्शनात् । क आहरत् । उच्यते । **श्येनः** श्येनरूपा गायत्री । काहरत् । **परि अद्रेः** पर्वतस्योपरि । पर्वतेषु हि भूयान् सोमो जायते । तदेतदुच्यतेपर्यद्रेराहरदिति । हे अग्नीषोमौ! अस्मदीयेन याज्यालक्षणेन **ब्रह्मणा वावृधाना** वर्धमानौ । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते– ब्रह्मणा वावृधानेति । अथवा 'ब्रह्म' (निघ.२,७) इत्यन्ननाम । उपांशुयाज्यलक्षणेनान्नेन वर्धमानौ । **उरुम्** विस्तीर्णम् **यज्ञाय** यज्ञार्थमस्माकम् **चक्रथुः** कुरुतम् । उ-कारस्तु पदपूरणः । **लोकम्** स्थानं यत्र विस्तीर्णे स्थाने स्थिता वयं यज्ञान् कुर्मः । ततो दत्तमित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** युवयोरन्यतरमग्निं स्वर्गात् वायुः आहृतवान् भृगवे । **अन्यम्** च सोमं मेरोः **श्येनः** भूत्वा गरुडः **परि अमथ्नात्** । अग्नीषोमौ! स्तोत्रेण वर्धमानौ विस्तीर्णम् अवकाशम् **यज्ञाय चक्रथुः** । एतयोः हि मध्ये सर्वेषामेव देवानां यागः ।। ६ ।।

**मुद्गल–** हे **अग्नीषोमा!** युवयोर्मध्ये **अन्यम्** एकमग्निम् **मातरिश्वा** वायुः **दिवः** द्युलोकात् **आ जभार** भृगवे यजमानाय आजहार । **श्येनः** शंसनीयगतिमान् पक्षी पक्ष्याकारा गायत्री **अन्यम्** सोमम् **अद्रेः परि** मेरोरुपर्यवस्थितात् स्वर्गात् **अमथ्नात्** बलादाहृतवती । एवं महानुभावौ युवाम् **ब्रह्मणा** स्रष्ट्रा मन्त्ररूपेण स्तोत्रेण **वावृधाना** वर्धमानौ युवाम् **यज्ञाय** अन्येषां देवानां यागाय **उरुम्** विस्तीर्णम् **लोकम्** स्थानम् **चक्रथुः** कृतवन्तौ । उ इत्येतत् पादपूरणम् ।। ६ ।।

**सायण–** अग्नीषोमीयस्योपांशुयागस्य 'आन्यं दिवः' इत्येषा याज्या । 'अग्नीषोमा यो अद्य वाम्' इत्यत्र सूत्रमुदाहृतम् ।

हे अग्नीषोमौ! युवयोर्मध्ये **अन्यम्** एकमग्निं **मातरिश्वा** वायुः **दिवः** द्युलोकात् **आ जभार** भृगवे यजमानाय आजहार । तथा च मन्त्रान्तरम्– 'द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा' (ऋ.सं.१.६०.१) इति । **श्येनः** शंसनीयगतिमान्पक्षी पक्ष्याकारा गायत्री **अन्यं** सोमम् **अद्रेः परि** मेरोरुपर्यवस्थितात् स्वर्गात् **अमथ्नात्** बलादाहृतवती । एवं महानुभावौ युवां **ब्रह्मणा** स्रष्ट्रा मन्त्ररूपेण स्तोत्रेण हविर्लक्षणेनान्नेन वा **ववृधाना** वर्धमानौ युवां **यज्ञाय** अन्येषां देवानां यागाय उरुं विस्तीर्णं लोकं स्थानं चक्रथुः कृतवन्तौ । उ इत्येतत् पादपूरणम् । आज्यभागदेवतयोरग्नीषोमयोः उत्तरार्धदक्षिणार्धयोर्हूयते । तन्मध्येऽन्यदेवत्यानि सर्वाणि हवींषि हूयन्ते । तन्मध्यमं स्थानमग्नीषोमकृतम् । तथा च तैत्तिरीयकम्– 'राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै' (तै.सं.२.६.२.१-२) इति ।

ववृधाना । वृधेर्लिटः कानच् । छान्दसमभ्यासस्य दीर्घत्वम् । 'सुपां सुलुक्' इति आकारः ।।

**सिद्धाञ्जनम्–** हे **अग्नीषोमा!** अग्नीषोमौ, **अन्यम्** युवयोरेकं अग्निं **मातरिश्वा** वायुः **दिवः** द्युलोकात् **आजभार** आजहार । **श्येनः** शंसनीयगतियुक्तः पक्षी **अन्यम्** सोमं अद्रेः **परि** अन्नमयादिभूमिकानामुपरि **अमथ्नात्** मथित्वा आहृतवान् । प्राणशक्तिविभवेन तपसा प्रादुर्भवति ऋतुरूपो भगवानग्निरन्तः । मातरिश्वा अग्निमाजहारेत्युक्तेरिदं रहस्यम् । 'मथीद्यदीं विभृतो मातरिश्वा' (१.७१.४) 'प्रशस्तं रातिं भृगवे मातरिश्वा' इत्याद्यवदेयम् । श्येनः पक्षी जीव-भूतोऽन्तरात्मैव, तस्योच्चैः पतनेन अद्रिवदवस्थितस्य बहुप्रस्थोपेतस्य शारीरस्य पुरुषस्य सोमपद-वेदनीय-अमृताहरणसम्भवो बोध्यः । अत्रापि तपसाः उच्चैः शिखरात्स पक्षी सोमं सम्पाद्याहरति ।

एवं युवां **ब्रह्मणा** मन्त्रेण ऋषेहर्दिवाग्रूपेण **ववृधाना** वर्धमानौ **यज्ञाय** यजनार्थं **लोकम्** प्रपञ्चं **उरुम्** विस्तीर्णं **चक्रथुः** कृतवन्तौ । उ पदपूरणम् ।। ६ ।।

**।। इति प्रथमाष्टके षष्ठाध्यायेऽष्टाविंशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।**
**सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ।। ७ ।।**

**अग्नीषोमा । हविषः । प्रऽस्थितस्य । वीतम् । हर्यतम् । वृषणा । जुषेथाम् । सुऽशर्माणा । सुऽअवसा । हि । भूतम् । अथ । धत्तम् । यजमानाय । शम् । योः ।। ७ ।।**

**स्कन्द–** हे अग्नीषोमौ! **हविषः प्रस्थितस्य** युवां प्रति गतस्य प्रस्थितयज्ञस्य वा । षष्ठीनिर्देशस्य साकाङ्क्षत्वादेकदेशं स्वांशलक्षणमिति शेषः । द्वितीयार्थे वा षष्ठी । हविः प्रस्थितम् । **वीतम्** भक्षयतम् । **हर्यतम्** कामयेथां च । अभिप्रेतं सम्भक्षयतमित्यर्थः । हे **वृष्टणा!** वर्षितारौ कामितभक्षितेन च तेन **जुषेथाम्** जुषी प्रीतिसेवनयोः । प्रीयेथाम् । प्रीत्वा च **सुशर्माणा** सुमुखौ । **स्ववसा हि** हिशब्दः पदपूरणः चार्थे वा । सुपालनौ च **भूतम्** भवतम् । **अथ** अनन्तरम् । **धत्तम् यजमानाय शम्** शमनम् । कस्य । सामर्थ्याद् उद्भूतानां रोगादीनामनभीष्टानम् । **योः** यावनं पृथक्करणम् । असम्बन्धं चेत्यर्थः । सामर्थ्याद् उत्पित्सुभिरनिष्टैः ।। ७ ।।

**वेङ्कटमाधव–** अग्नीषोमौ! हविः प्रस्थितं भक्षयतम् । कामयेथां सेवेथां च वर्षितारौ । सुसुखौ सुरक्षौ च हि भवतम् । तथा सति यजमानाय उत्पन्नानाम् अनिष्टानां शमनम् अनागतानां च पृथक्करणम् **धत्तम्** ।। ७ ।।

**मुद्गल–** हे **अग्नीषोमा! प्रस्थितस्य** होमार्थमाहवनीयसमीपं प्राप्तम् **हविषः** इदं हविः **वीतम्** भक्षयतम् । तदनन्तरं च **हर्यतम्** अस्मान् कामयेथाम् । हे **वृषणा!** कामानां वर्षितारौ! **जुषेथाम्** अस्मदीयं परिचरणं सेवेथाम् । तदनन्तरम् **सुशर्माणा** शोभनमुखौ **स्ववसा हि** शोभनरक्षणौ च **भूतम्** अस्माकं भवतम् । **अथ** अनन्तरं हविर्दत्तवते **यजमानाय शम्** शमनीयानां रोगाणां शमनम् **योः** पृथक्कर्तव्यानां भयानां यावनं पृषक्करणं च **धत्तम्** कुरुतम् ।। ७ ।।

**सायण–** हे अग्नीषोमौ **प्रस्थितस्य** होमार्थमाहवनीयसमीपं प्राप्तं **हविषः** इदं हविः **वीतं** भक्षयतम् । तदनन्तरं च **हर्यतं** अस्मान् कामयेथाम् । हे **वृषणा** वर्षितारौ **जुषेथाम्** अस्मदीयं परिचरणं सेवेथाम् । तदनन्तरं **सुशर्माणा** शोभनसुखौ **स्ववसा हि** शोभनरक्षणौ च **भूतम्** अस्माकं भवतम् । **अथ** अनन्तरं हविर्दत्तवते **यजमानाय शं** शमनीयानां रोगाणां शमनं **योः** पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं च **धत्तं** विधत्तं कुरुतम् । उक्तं च यास्केन– 'शमनं च रोगाणां यावनं च भयानाम्' (निरु.४.२१) इति ।

हविषः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । वीतम् । 'वी गतिप्रजनकान्त्यशनखादनेषु' । थसस्तम् । अदादित्वात् शपो लुक् । वीतं च हर्यतं चेति चार्थप्रतीतेः 'चारिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । हर्यतम् । पादादित्वात् निघाताभावः । जुषेथाम् । वृषणा इत्यामन्त्रितस्य 'आमन्त्रितं पूर्वम्' इति अविद्यमानवत्त्वे सति तिङ परत्वात् निघाताभावः । सुशर्माणा स्ववसा । उभयत्र बहुव्रीहौ 'सोर्मनसी अलोमोपसी' इत्युत्तरपदाद्युदात्तत्वम् । भूतम् । लोटि 'बहुलं छन्दसि' इति शपो लुक् ।। ७ ।।

**सिद्धाञ्जनम्–** हे **अग्नीषोमा!** अग्नीषोमौ, **प्रस्थितस्य** युवां प्रति प्रस्थानं कृतवतः अस्य **हविषः** अस्मदीयस्य अर्पणस्य, द्वितीयार्थे षष्ठी, सिद्धं अर्पणं **वीतम्** व्याप्नुतं, वी गतिव्याप्त्यादिषु, **हर्यतम्** व्याप्य च कान्तं कुरुतम् । हे **वृषणा!** वर्षितारौ, **जुषेथाम्** सेवेथां तदस्माभिरर्पितम् । हे **सुशर्माणा!** शोभनसुखोपेतौ **स्ववसा** स्ववसौ शोभनरक्षोपेतौ च **भूतम्** भवतम् । **हि** पादपूरणम् । **अथ** अनन्तरं **योः** युवां कामयमानाय, विभक्तिव्यत्ययः **यजमानाय शम्** शान्तिसुखं **धत्तम्** विधतम् ।

भूतम्–लोटि बहुलं छन्दसीति शपो लुक् । अन्ये गताः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**यो अग्नीषोमा हविषा सपर्याद् देवद्रीचा मनसा यो घृतेन ।**
**तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतम् ।। ८ ।।**
यः । अग्नीषोमा । हविषा । सपर्यात् । देवद्रीचा । मनसा । यः । घृतेन । तस्य । व्रतम् । रक्षतम् । पातम् । अंहसः । विशे । जनाय । महि । शर्म । यच्छतम् ।। ८ ।।

**स्कन्द–** रक्षतं पातमिति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । अग्नीषोमाविति च नेदमामन्त्रणं अननुदात्तत्वात् । अतोऽत्र युष्मच्छब्देन समानार्थो भवच्छब्दः उपपदभूतोऽध्याहर्तव्यः । भवन्तौ अग्नीषोमौ **यः हविषा सपर्यात्** चरुपुरोडाशादिना परिचरेत् । **देवद्रीचा मनसा** देवौ प्रत्यञ्चतीति देवाद्यक् । 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' (पा.६,३,९२) इति अद्र्यादेशः । तेन देवद्रीचा युवामेव देवौ प्रति गतेन । अत्यन्तयुष्मद्भक्तेन चेतसेत्यर्थः । **यः** वा **घृतेन** आज्याहुतिलक्षणेन । **तस्य** उभयस्यापि **व्रतम्** यागाख्यं कर्म **रक्षतम्, पातम्** पालयतम् **अंहसः** पापात् । विशे मनुष्यनामैतत्(तु. निघ.२,३) । जात्यपेक्षयैकवचनम् । पुत्रादिमनुष्यजातस्वभूताय यजमानाय परिचारकजनाय च । **महि शर्म** महत् सुखम् **यच्छतम्** दत्तम् ।। ८ ।।

**वेङ्कटमाधव–** **यः** अग्नीषोमौ **हविषा** परिचरति, देवानञ्चता मनसा **यः** वा **घृतेन, तस्य** यज्ञम् **रक्षतम्,** रक्षसश्च तम् **पातम्** । निवसते **जनाय** महत् सुखम् **यच्छतम्** ।। ८ ।।

**मुद्गल–** **यः** यजमानः **अग्नीषोमा!** अग्नीषोमौ **देवद्रीचा** देवानञ्चता देवतापरायणेन श्रद्धायुक्तेन **मनसा** अन्तःकरणेन युक्तः सन् **हविषा** चरुपुरोडाशादिना **सपर्यात्** सपर्यति परिचरति । **यः** च यजमानः **घृतेन** आज्येनाग्नीषोमौ परिचरति । **तस्य** यजमानस्य **व्रतम्** कर्म **रक्षतम्, अंहसः** पापात् तं च यजमानम् **पातम्** रक्षतम् । **विशे** यागेषु प्रविशते तस्मै **जनाय महि** महत् प्रभूतम् **शर्म** सुखम् **यच्छतम्** दत्तम् ।। ८ ।।

**सायण–** **यः** यजमानः **अग्नीषोमा** अग्नीषोमौ **देवद्रीचा** देवानञ्चता देवतापरायणेन श्रद्धायुक्तेन **मनसा** अन्तःकरणेन युक्तः सन् **हविषा** चरुपुरोडाशादिना **सपर्यात्** सपर्यति परिचरति । **यः** च यजमानः **भृतेन** आज्येनाग्नीषोमौ परिचरति । **तस्य** यजमानस्य **व्रतं** कर्म **रक्षतम्** । **अंहसः** पापात् तं च यजमानं **पातं** रक्षतम् । **विशे** यागेषु प्रविशते तस्मै **जनाय** यजमानाय **महि** महत् प्रभूतं **शर्म** सुखं **यच्छतं** दत्तम् ।

अग्नीषोमा । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् । सपर्यात् । 'सपरपूजायाम्' । कण्ड्वादिः । लेटि आडागमः । देवद्रीचा । देवानञ्चतीति देवद्र्यङ् । अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (पा.सू.

६.३.९२) इति देवशब्दस्य टेः अद्र्यादेशः । तृतीयैकवचने 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्' (पा.सू.६.३.९५.१) इति वचनात् अद्र्यादेशः अन्तोदात्तः । विशे । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्– यः** यजमानः **अग्नीषोमा** अग्निं सोमं च **देवद्रीचा** देवान् अञ्चता, देवपरायणेन **मनसा** मानसेन युक्तः **हविषा** अर्पणलक्षणेन स्वीयेन द्रव्येण **सपर्यात्** सपर्यति, पूजयति, **यः** यश्च **घृतेन** धीप्रदीप्त्या च युक्तः अग्नीषोमौ सपर्यति, एकाग्रेण मनसा दीप्तया बुद्ध्या चेति भावः । **तस्य** तादृशस्य यजमानस्य **व्रतम्** नियतं कर्म **रक्षतम्**, लडर्थे लोट्, रक्षथ एवेत्यर्थः, **अंहसः पातम्** तं पापात् रक्षतम्, रक्षथः । **विशे जनाय**, विशतीति विट्, तस्मै अन्तः प्रविश्य देवान् यजते जनाय यजमानाय **महि** प्रभूतं **शर्म** शरणं सुखं वा **यच्छतम्** दत्तम्, अत्रापि लडर्थ एव । एकाग्रमनो देवतापरायणस्य जनस्य पापाद्रक्षणं कर्मरक्षणं च, अन्तर्लब्धप्रवेशस्य प्रभूतं शर्मेत्युक्तम् ।

सपर्यात्–सपर पूजायां, कण्ड्वादिः, लेट् । देवद्रीचा–देवान् अञ्चतीति देवद्र्यङ्, देवशब्दस्य टेरद्र्यादेशः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ ९ ॥**

**अग्नीषोमा । सऽवेदसा । सहूती इति सऽहूती । वनतम् । गिरः । सम् । देवऽत्रा । बभूवथुः ॥**

**स्कन्द–** पूर्णमासेऽग्नीषोमीयस्य पुरोडाशस्य पुरोऽनुवाक्यैषा । हे अग्नीषोमौ! **सवेदसा** समानपुरोडाशहविर्लक्षणधनौ **सहूती** समानाह्वानौ **वनतम्** सम्भजेथाम् । अस्मदीययाज्यानुवाक्यास्तुतिलक्षणाः **गिरः** । किन्तु **सम् देवत्रा बभूवथुः** सम् इत्येकीभावे सम्यक्तायां वा । देवत्रेति 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा.५,४,५६) इति बाहुलकात् प्रथमायां च द्रष्टव्यः । बभूवथुरिति लोडर्थे लिट् । सम्भूतौ सम्यग्वा अस्य पुरोडाशस्य हविषो देवौ भवतमित्यर्थः ॥ ९ ॥

**वेङ्कटमाधव–** अग्नीषोमौ! समानपुरोडाशौ समानाह्वानौ भजेथां स्तुतीः । युवां हि सर्वानेव देवान् महत्तया सम् **बभूवथुः**, स्थाली इव तण्डुलान् इति ।। ९ ।।

**मुद्गल–** हे अग्नीषोमौ! युवाम् **सवेदसा** समानेनैकेन वेदसा हविर्लक्षणेन धनेन युक्तौ **सहूती** समानाह्वानौ च सन्तौ **गिरः** अस्मदीयाः स्तुतीः **वनतम्** सम्भजेथाम् । **देवत्रा** देवेषु सर्वेषु यौ युवाम् **सम् बभूवथुः** सम्भूतौ सम्भावितौ प्रशस्तौ स्थः ।। ९ ।।

**सायण–** पौर्णमासयागेऽग्नीषोमीयस्य यागस्य 'अग्नीषोमा' इत्येषानुवाक्या । तथा च सूत्रितम्' उक्ता देवताः' इति खण्डे– 'अग्नीषोमा सवेदसा युवमेतानि दिवि रोचनानि (आश्व.श्रौ.१.६) इति ।

हे अग्नीषोमौ युवां **सवेदसा** समानेनैकेन वेदसा हविर्लक्षणेन धनेन युक्तौ **सहूती** समानह्वानौ च सन्तौ **गिरः** अस्मदीयाः स्तुतीः **वनतं** सम्भजेथाम् । **देवत्रा** देवेषु सर्वेषु यौ युवां **सं बभूवथुः** सम्भूतौ सम्भावितौ प्रशस्तौ स्थः । 'राजानौ वा एतौ देवतानां यदग्नीषोमौ' (तै.सं.२.६.२.१-२) इति श्रुतेः ।

सवेदसा । समानं वेदो ययोः । 'समानस्य च्छन्दसि' इति सभावः । वनतम् । 'वन षण सम्भक्तौ' । देवत्रा । 'देवमनुष्यपुरुषपुरुमर्त्य' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **अग्नीषोमा!** युवां **सवेदसा** समानं वेदो ज्ञानं ययोस्तौ **सहूती** समानाहूतिराह्वानं ययोस्तौ सन्तौ **गिरः** स्तुतीरस्मदीयाः **वनतम्** सम्भजेथाम् । **देवत्रा** देवेषु **सम्बभूवथुः** युवां सम्भूतौ, अतः सम्भावितौ ।

देवत्रा–सप्तम्यर्थे त्राप्रत्ययः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमावनेनं वां यो वां घृतेन दाशंति । तस्मैं दीदयतं बृहत् ।। १० ।।**
**अग्नीषोमौ । अनेनं । वाम् । यः । वाम् । घृतेनं । दाशंति । तस्मैं । दीदयतम् । बृहत् ।।**

**स्कन्द–** हे **अग्नीषोमौ! अनेन वाम्** युवयोः एव स्वभूतेन योग्येन वा **यः** यजमानः

**वाम्** युवाभ्याम् **घृतेन** तृतीयानिर्देशात् संयुक्तं हविरिति शेषः । अथवा अनेन घृतेन इति द्वितीयार्थे तृतीया । इदं घृतम् । **दाशति** ददाति । **तस्मै दीदयतम्** दत्तम् **बृहत्** महत् धनम् । अथवा तस्मै इति तादर्थ्ये चतुर्थी । तदर्थं दीदयतं दीव्येथाम् । बृहत् महत् । सुष्ठ्वित्यर्थः ॥

**वेङ्कटमाधव– अग्नीषोमौ! अनेन वाम् यः घृतेन** परिचरति, तस्मै वर्धयतं महद्धनम् । **वाम्** इति पूरणम् ॥ १० ॥

**मुद्गल–** हे **अग्नीषोमौ! वाम्** युवयोः सम्बन्धी **यः** यजमानः **अनेन घृतेन** उत्पवनादिभिः संस्कृतेनाज्येन युक्तं हविः **वाम्** युवाभ्याम् **दाशति** प्रयच्छति, **तस्मै** यजमानाय **बृहत्** प्रभूतं धनम् **दीदयतम्** प्रकाशयतम् । प्रयच्छतमित्यर्थः ॥ १० ॥

**सायण–** हे **अग्नीषोमौ! वां** युवयोः सम्बन्धी **यः** यजमानः **अनेन घृतेन** उत्पवनादिभिः संस्कृतेनाज्येन युक्तं हविः **वां** युवाभ्यां **दाशति** प्रयच्छति **तस्मै** यजमानाय **बृहत्** प्रभूतं धनं **दीदयतं** प्रकाशयतं प्रयच्छतमित्यर्थः ।

दाशति । 'दाशृ दाने' । शपिषोः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । दीदयतम् । दीदयतिः दीप्तिकर्मा ॥ १० ॥

**सिद्धाञ्जनम्–** हे **अग्नीषोमौ! वाम्** युवयोः सम्बन्धी **यः** यजमानः **अनेन घृतेन** ईदृशा धीप्रदीप्त्या युक्तः सन् **वाम्** युष्मभ्यं **दाशति** यथाभागं प्रयच्छति स्वीयं अर्पणीयं **तस्मै** तादृशाय **बृहत्** बृहच्छब्दवाच्यं ऋतं सत्यं **दीदयतम्** प्रकाशयतम्, दीदयतिः दीप्तिकर्मा ॥ १० ॥

## ऋक्संहिता पदपाठसहिता

**अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् । आ यातमुप नः सचा ॥ ११ ॥**
अग्नीषोमौ । इमानि । नः । युवम् । हव्या । जुजोषतम् । आ । यातम् । उप । नः सचा ॥ ११ ॥

**स्कन्द– अग्नीषोमौ! इमानि नः युवम् हव्या जुजोषतम्** सेवेथाम् । **आ यातम्** च **उप नः** समीपेऽस्माकम् **सचा** सह ॥ ११ ॥

**वेङ्कटमाधव– अग्नीषोमौ! इमानि** अस्माकं हवींषि युवां जुषेथाम्, **उप आ यातम्** चास्मान् सह ॥ ११ ॥

**मुद्गल–** हे **अग्नीषोमौ! युवम्** युवाम् **नः** अस्मदीयानि **इमानि हव्या** हवींषि **जुजोषतम्** सेवेथाम् । तदर्थम् **नः** अस्मान् **सचा** सह युवाम् **उप आ यातम्** उपागच्छतम् ॥ ११ ॥

**सायण–** हे **अग्नीषोमौ! युवं** युवां **नः** अस्मदीयानि **इमानि हव्या** हवींषि **जुजोषतं** सेवेथाम् । तदर्थं **नः** अस्मान् **सचा** सह युवाम् **उप आ यातं** उपागच्छतम् ।

जुजोषतम् । 'जुषी प्रीतिसेवनयोः । लोटि व्यत्ययेन शप् । छान्दसं द्विर्वचनम् । यद्वा । विकरणस्य 'बहुलं छन्दसि' इति श्लुः । ततो व्यत्ययेन शप् । 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात् 'नाभ्यस्तस्याचि पिति' इति लघूपधगुणप्रतिषेधाभावः ॥ ११ ॥

**सिद्धाञ्जनम्–** हे **अग्नीषोमौ! युवम्** युवां **नः** अस्मत्सम्बन्धीनि **इमानि हव्या** सिद्धानि अर्पणार्थानि द्रव्याणि **जुजोषतम्** सेवेथाम् । तथा सेवनाय **नः** अस्मान् **सचा** सह **उपायातम्** उपगच्छतम् ।

जुजोषतम्–विकरणव्यत्ययेन श्लुः छान्दसः ॥ ११ ॥

## ऋक्संहिता पदपाठसहिता

**अ॒ग्नी॑षोमा पि॒पृ॒तमर्व॑तो न॒ आ प्या॑यन्तामु॒स्रिया॑ ह॒व्य॒सूद॑ः ।**
**अ॒स्मे बला॑नि म॒घव॑त्सु धत्तं कृणु॒तं नो॑ अध्व॒रं श्रु॒ष्टि॒मन्त॑म् ॥ १२ ॥**
अ॒ग्नी॑षोमा । पि॒पृ॒तम् । अर्व॑तः । न॒ः । आ । प्या॒य॒न्ता॒म् । उ॒स्रिया॑ः । ह॒व्य॒ऽसूद॑ः । अ॒स्मे इति॑ । बला॑नि । म॒घव॑त्ऽसु । ध॒त्त॒म् । कृ॒णु॒तम् । न॒ः । अ॒ध्व॒रम् । श्रु॒ष्टि॒ऽमन्त॑म् ॥ १२ ॥

**स्कन्द–** हे अग्नीषोमौ! **पिपृतम्** पृणातेः पालनार्थस्य दानार्थस्य वा सामर्थ्यादिदं रूपम् । पालयतं दत्तं वा । **अर्वतः** अश्वान् **नः** अस्मभ्यम् अस्माकं वा । **आ प्यायन्ताम्** अस्माकम् **उस्रियाः** गावः **हव्यसूदः** षूद क्षरणे । पयआख्यस्य हविषः क्षरित्र्यः । दोग्ध्र्य इत्यर्थः । किञ्च **अस्मे** अस्मासु **बलानि मघवत्सु धत्तम्** स्थापयतम् । धनवतोऽस्मान् कृत्वा ततो बलानि

द्रष्टव्यम् । फलभूतेन सुखेन सुखवन्तम् । सुखफलमित्यर्थः । अथवा श्रुष्टीति क्षिप्रनाम (तु.या.६,१२) । क्षिप्रवन्तम् । शीघ्रफलमित्यर्थः ॥ १२ ॥

**वेङ्कटमाधव–** अग्नीषोमौ! पालयतम् अस्माकम् अश्वान् । **आ प्यायन्ताम्** च अस्माकं गावः हविषः प्रेरयित्र्यः । अस्मासु **बलानि** धनवत्सु स्थापयतम् । कुरुतं च अस्माकं यज्ञं प्राप्तियुक्तम् आशु आत्मनि प्राप्तम् इति ॥ १२ ॥

**मुद्गल–** हे अग्नीषोमौ! **नः** अस्माकम् **अर्वतः** अश्वान् **पिपृतम्** पालयतम् । **हव्यसूदः** क्षीरादिहविषामुत्पादयित्र्यः **उस्रियाः** अस्मदीया गावश्च **आ प्यायन्ताम्** आप्यायिताः प्रवृद्धाः सन्तु । **मघवत्सु** हविर्लक्षणधनयुक्तेषु **अस्मे** अस्मासु **बलानि धत्तम्** स्थापयतम् । तथा **नः** अस्माकम् **अध्वरम्** यागम् **श्रुष्टिमन्तम्** धनयुक्तम् **कृणुतम्** कुरुतम् ॥ १२ ॥

**सायण–** हे अग्नीषोमौ **नः** अस्माकम् **अर्वतः** अश्वान् **पिपृतं** पालयतम् । **हव्यसूदः** क्षीरादिहविषामुत्पादयित्र्यः **उस्रियाः** अस्मदीया गावश्च **आ प्यायन्ताम्** आप्यायिताः प्रवृद्धाः सन्तु । **मघवत्सु** हविर्लक्षणधनयुक्तेषु **अस्मे** अस्मासु **बलानि धत्तं** स्थापयतम् । तथा **नः** अस्माकम् **अध्वरं** यागं **श्रुष्टिमन्तं** धनयुक्तं **कृणुतं** कुरुतम् ।

पिपृतम् । 'पृ पालनपूरणयोः । पृ इत्येके' । जुहोत्यादित्वात् शपः श्लुः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । हव्यसूदः । हव्यं सूदन्ते क्षरन्तीति हव्यसूदः । 'षूद क्षरणे' । 'क्विप् च' इति क्विप् । अस्मे । 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः । श्रुष्टिमन्तम् । श्रुष्टीति धननाम । शु आशु अश्यते व्याप्यते इति श्रुष्टिः । पृषोदरादिः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥ १२ ॥

**सिद्धाञ्जनम्–** हे **अग्नीषोमा! नः** अस्माकं **अर्वतः** अश्वलक्षितप्राणक्रियावेगान् **पिपृतम्** पूरयतम् । तथा **हव्यसूदः** हव्यमर्पणीयं सूदन्ते क्षरन्ति त्वरयन्ति प्रेरयन्तीति हव्यसूदः **उस्रियाः** गावः गोलक्षितचित्प्रभाः **आप्यायन्ताम्** आप्यायिताः प्रवृद्धाः भवन्तु । **मघवत्सु** धनवत्सु देवेषु, दिव्यधनयुक्तेषु महानुभावेषु वा मध्ये **अस्मे** अस्मासु **बलानि** दिव्यानि विविधानि **धत्तम्** धारयतं, स्थापयतम् । प्राणबलानां परिपूरणं ज्ञानरश्मीनां प्रवर्धनं मघवत्सु देवेषु मनुष्येषु वा मध्ये बलप्रतिष्ठापनं च प्रार्थितानि । तदनन्तरं **नः** अस्माकं **अध्वरम्** दिव्ययात्रात्मकं यज्ञं **श्रुष्टिमन्तम्** दिव्यावेश (श्रवण) युक्तं **कृणुतम्** कुरुतम् ।

पिपृतम्– पृ पालने पूरणे च । अस्मे– सप्तम्याः शे आदेशः । श्रुष्टिमन्तम्– श्रुष्टिः धननामेति स्थूलः पक्षः, श्रुष्टिः श्रवणं अन्तर्दिव्यं वा तत्प्रेरितो दिव्यावेशश्च रहस्यार्थे ।। १२ ।।

।। इति प्रथमाष्टके षष्ठाध्याये एकोनत्रिंशो वर्गः ।।

।। प्रथमे मण्डले चतुर्दशोऽनुवाकः समाप्तः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ९४)

(१६ कुत्स आङ्गिरसः । अग्निः (जातवेदाः) । ८ (त्रयः पादाः) देवाः, १६ उत्तरार्धस्य अग्निः, मित्रवरुणादितिसिन्धुपृथिवीद्यावो वा । जगतीः । १५-१६ त्रिष्टुप्)

**इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।**
**भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ।। १ ।।**
इमम् । स्तोमम् । अर्हते । जातऽवेदसे । रथम्ऽइव । सम् । महेम । मनीषया । भद्रा । हि । नः । प्रऽमतिः । अस्य । सम्ऽसदि । अग्ने । सख्ये । मा रिषाम । वयम् । तव ।।

**स्कन्द–** 'इमं स्तोममिति त्वस्मात् कुत्स आङ्गिरसः परम् । अस्मात् पूर्वोक्तात् सूक्तात् गौतमात् परम् 'इमं स्तोममर्हते' इत्यादि कुत्सो नाम अङ्गिरसः पुत्र ऋषिर्ददर्श । असङ्ख्यातश्चायम् । सर्वत्र च 'असङ्ख्यातमृषिं विद्यादतीत्यापि मितानृषीन् । तावद्यावदृषेर्नादिरमितस्य परो भवेत्' । सोऽपरिमित ऋषिस्तमेव परिमितान् उत्तरानृषीनतीत्यापि यावदन्यस्यापरिमितस्य ऋषेरादिर्न भवति तावद्विजानीयात् । तेन वार्षागिरान् त्रितं चातीत्यापि आ कक्षीवतोऽयमृषिर्वेदितव्यः । 'अग्नेः पूर्वः सयोवृषात्' । 'स यो वृषा' (ऋ.१,१००,१) इत्येतस्मात् पूर्वः सूक्तसमुदायः अग्निदेवत्यः । विशेषान् स्वेस्वे प्रदेशे वक्ष्यामः । बृहद्देवताकारस्तु आद्यायामृचि जातवेदस इति श्रुतेः इदं सूक्तं जातवेदस्यं मन्यते, न शुद्धाग्नेयम् । एवं ह्याह– 'इमं तु जातवेदस्यं कुत्स आङ्गिरसो जगौ । जागतं षोडशर्चम्' (बृ.दे.३,१२६) इति । **इमम् स्तोमम् अर्हते जातवेदसे** तादर्थ्यं एषा चतुर्थी । स्तोमार्हस्य जातप्रज्ञानस्य वाऽग्नेरर्थाय । **रथमिव सम् महेम** संशब्दोऽत्र सम्यक्तायाम् । महिरपि सामर्थ्यात् गत्यर्थोऽन्तर्णीतण्यर्थश्च । यथा कश्चिद्रथं सम्यग् गमयेत् तद्वत् सम्यग्गामयेम । **मनीषया** स्वया प्रज्ञया । अस्माकं प्रज्ञयैव स्तोममुच्चारये-

**नः** षष्ठीनिर्देशात् उपरीति वाक्यशेषः । सप्तम्यर्थे वा षष्ठी । अस्माकमुपरि अस्मासु वा । **प्रमतिः** प्रकृष्टानुग्रहात्मिका मतिः । **अस्य** अग्नेः **संसदि** सभायाम् । यस्मादयं यज्ञादिसभास्वस्माकमनुग्राहक इत्यर्थः । परः पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । हे **अग्ने! सख्ये** देवानां मनुष्याणां च स्तुत्यस्तोतृसम्बन्धः सख्यम्, तस्मिन् । सप्तमीनिर्देशात् वर्तमाना इति वाक्यशेषः । **मा रिषाम** मा हिंसिष्महि केनचित् **वयम्** । कस्य सख्ये । उच्यते । **तव** ।। १ ।।

**वेङ्कटमाधव–** कुत्स आङ्गिरसः । **इमम् स्तोमम्** स्तोमार्हाय जातप्रज्ञाय रथमिव संस्कुर्मः प्रज्ञया । भजनीया **हि अस्य** अस्माकम् **प्रमतिः** भवति सहाऽवस्थाने । **अग्ने! तव सख्ये** वर्तमानाः **वयम्** मा विनश्येम ।। १ ।।

**मुद्गल–** पञ्चदशेऽनुवाके द्वादश सूक्तानि । तत्र 'इमं स्तोमम्' इति षोडशर्चं प्रथमं सूक्तम् । आङ्गिरसः कुत्स ऋषिः । पञ्चदशीषोडश्यौ त्रिष्टुभौ शिष्टा जगत्यः । अग्निः देवता । 'दवा भवतु सुन्वतो रथः' (ऋ.१,९४,८) इति त्रयः पादा देवदेवताकाः । 'तन्नो मित्रः' (ऋ.१, ९४,१६) इत्यर्धर्चो लिङ्गोक्तमित्रावरुणादिषड्देवत्यः । अथवा तस्याप्यग्निरेव देवता । मित्रावरुणादयस्तु निपातभाक्त्वेनाऽप्रधानाः ।।

**अर्हते** पूज्याय **जातवेदसे** जातानामुत्पन्नानां वेदित्रे अग्नये **मनीषया** निशितया बुद्ध्या **इमम्** एतत्सूक्तरूपम् **स्तोमम्** स्तोत्रम् **रथमिव** यथा तक्षा रथे संस्करोति तथा **सम् महेम** सम्यक् पूजितं कुर्मः । **अस्य** अग्नेः **संसदि** सम्भजने **नः** अस्माकम् **प्रमतिः** प्रकृष्टा बुद्धिः **भद्रा हि** कल्याणी समर्था खलु । अतस्तया बुद्ध्या स्तुम इत्यर्थः । हे **अग्ने! तव सख्ये** **नः** अस्माकं त्वया सह सखित्वे सति **वयम् मा रिषाम** हिंसिता न भवाम । अस्मान् रक्षेत्यर्थः ।। १ ।।

**सायण–** पञ्चदशेऽनुवाके द्वादश सूक्तानि । तत्र 'इमं स्तोमम्' इति षोडशर्चं प्रथमं सूक्तम् । आङ्गिरसस्य कुत्सस्यार्षम् । पञ्चदशीषोडश्यौ त्रिष्टुभौ शिष्टा जगत्यः । अग्निर्देवता । 'पूर्वो देवा भवतु सुन्वतो रथः' इति त्रयः पादा देवदेवत्याः । 'तन्नो मित्रो वरुणः' इति अर्धर्चो लिङ्गोक्तमित्रावरुणादिषड्देवत्यः । अथवा तस्याप्यग्निरेव देवता मित्रावरुणादयस्तु निपातभाक्त्वेनाप्रधानाः । एतत्सर्वमनुक्रान्तम्– 'इमं षोळश कुत्स आग्नेयं तद्वित्रिष्टुबन्तं पूर्वो देवास्त्रयः

पादा दैवास्तन्नो मित्रोऽर्धर्चो लिङ्गोक्तदेवतो यद्देवत्यं वा सूक्तम्' इति । प्रातरनुवाकस्याग्नेये क्रतौ जागते छन्दस्येतत् सूक्तम् आश्विनशस्त्रे च । तथा च सूत्रितम्– 'इमं स्तोममर्हते सं जागृवद्भिः' (आश्व.श्रौ.४.१३) इति । आभिप्लविके षष्ठे हन्याग्निमारुतेऽप्येतत्सूक्तं जातवेदस्यनिविद्धानम् । सूत्रितं च– 'प्रयज्यव इमं स्तोममित्याग्निमारुतम्' (आश्व.श्रौ.७.७) इति । तृतीयसवने 'इमं स्तोमम्' इत्येषा अग्नीधः प्रस्थितयाज्या । सूत्रितं च– 'इमं स्तोममर्हते जातवेदस इति तार्तीयसवनिक्यः' (आश्व.श्रौ.५.५) इति ।

**अर्हते** पूज्याय **जातवेदसे** जातानामुत्पन्नानां वेदित्रे जातप्रज्ञाय जातधनाय वाग्नये **मनीषया** निशितया बुद्ध्या **इमम्** एतत्सूक्तरूपं **स्तोमं** स्तोत्रं **रथमिव** यथा तक्षा रथं संस्करोति तथा **सं मदेम** सम्यक् पूजितं कुर्मः । **अस्य** अग्नेः **संसदि** सम्भजने **नः** अस्माकं **प्रमतिः** प्रकृष्टा बृद्धिः **भद्रा हि** कल्याणी समर्था खलु । अतस्तया बुद्ध्या स्तुम इत्यर्थः । हे **अग्ने! तव सख्ये** अस्माकं त्वया सह सखित्वे सति **वयं मा रिषाम** हिंसिता न भवाम । अस्मान् रक्षेत्यर्थः ।

अर्हति । 'अर्ह पूजायाम्' । 'अर्हः प्रशंसायाम्' (पा.सू.३.२.१३३) इति लटः शत्रादेशः । शपः पित्त्वादनुदात्तत्वम् । शतुश्च अदुपदेशात् लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । महेम । 'मह पूजायाम्' । रिषाम । 'रिष हिंसायाम्' । व्यत्ययेन शः । तव । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् ॥ १ ॥

**सिद्धाञ्जनम्–** पञ्चदशोऽनुवाके द्वादश सूक्तानि, तत्र 'इमं स्तोममि'ति षोडशर्चं प्रथमं सूक्तम् । आङ्गिरसस्य कुत्सस्यार्षम्, पञ्चदशी षोडशी च त्रिष्टुभौ, शिष्टा जगत्यः, अग्निर्देवता । अन्या देवताः लिङ्गोक्ता निपातभाक्त्वेन अप्रधानाः ।

**अर्हते** पूज्याय **जातेवेदसे** जातानां सर्वेषां वेदित्रे अग्नये **इमम्** एतत्सूक्तात्मकं **स्तोमम्** स्तोत्रं **रथमिव** यथा तक्षा रथं तक्ष्णोति, संस्करोति च तथा **मनीषया** बुद्ध्या **संमहेम** सम्यक् पूजितं कुर्मः । **अस्य** अग्नेः **संसदि** सम्यक् सीदन्त्यस्यामिति संसत् सभा तस्यां, अग्निसंनिधौ इत्यर्थः **नः** अस्माकं **प्रमतिः** प्रकृष्टा बुद्धिः **भद्रा हि** कल्याणी खलु । अग्नेः सान्निध्ये तत्प्रभावादेवं स्तोमं कर्तुं समर्था निशिता नो बुद्धिरिति भावः । हे **अग्ने! तव सख्ये** त्वदीयसखित्वे **वयम् मा रिषाम** हिंसिताः न भवाम, सख्ये विच्छेदः शैतिल्यं वा मा भूदित्यर्थः ।

अर्हते–अर्ह पूजायाम् । महेम–मह पूजायाम् । रिषाम–रिष हिंसायाम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।**
**स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ।। २ ।।**
**यस्मै । त्वम् । आऽयजसे । सः । साधति । अनर्वा । क्षेति । दधते । सुऽवीर्यम् । सः । तूताव । न एनम् । अश्नोति । अंहतिः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ।।**

**स्कन्द– यस्मै** यस्य यजमानस्यार्थाय **त्वम् आयजसे** मर्यादया देवान् यजसि, **सः साधति** साधयत्यात्मनोऽभिप्रेतानर्थान् । **अनर्वा क्षेति** अर्वतिर्गत्यर्थः । अन्यं प्रत्याश्रिततया न गच्छतीत्यनर्वा, अन्यं वाऽनाश्रिततया गच्छतीत्यनर्वा । अन्यं च अनाश्रित्य स्वस्थाने निवसतीत्यर्थः । **दधते** धारयति चात्मनि **सुवीर्यम्** । सुवीर्यं च प्राप्नोतीत्यर्थः । **सः** एव **तूताव** तवतिर्वृद्धिकर्मा (या.९,२५) । सर्वाभिर्वृद्धिभिर्वर्धते । न च **एनम् अश्नोति** आप्नोति **अंहतिः** पापं वधो वा । किञ्च **अग्ने! सख्ये मा रिषाम वयम् तव** ।। २ ।।

**वेङ्कटमाधव– यस्मै त्वम्** देवान् **आयजसे** हविः आदाय देवेभ्यः प्रयच्छसि । **सः** साधयति अभिलषितम्, अप्रत्यृतः च निवसति, धारयति च **सुवीर्यम्** । सः वर्धते, **न एनम् अश्नोति** अवर्तिः ।। २ ।।

**मुद्गल– यस्मै** यजमानाय हे **अग्ने! त्वम् आयजसे** देवानाभिमुख्येन, **सः** यजमानः **साधति** स्वाभिलषितं साधयति । प्राप्नोतीत्यर्थः । किञ्च स यजमानः **अनर्वा** शत्रुभिरप्रत्यृतः सन् **क्षेति** निवसति । तथा **सुवीर्यम्** शोभनवीर्योपेतं धनम् **दधते** धारयति । प्राप्नोतीत्यर्थः । धृत्वा च सः यजमानः **तूताव** वर्धते । **एनम्** यजमानम् **अंहतिः** आर्तिर्दारिद्र्‌यम् **न अश्नोति** न प्राप्नोति । अन्यत् पूर्ववत् ।। २ ।।

**सायण– यस्मै** यजमानाय हे **अग्ने! त्वम् आयजसे** देवानाभिमुख्येन यजसि **सः** यजमानः **साधति** स्वाभिलषितं साधयति । प्राप्नोतीत्यर्थः । किंच **स** यजमानः **अनर्वा** शत्रुभिरप्रत्यृतः सन् **क्षेति** निवसति । तथा **सुवीर्यं** शोभनवीर्योपेतं धनं **दधते** धारयति । प्राप्नोतीत्यर्थः । धृत्वा च **सः** यजमानः **तूताव** वर्धते । **एनं** यजमानम् **अंहतिः** आर्तिर्दारिद्र्यं **न अश्नेति** न प्राप्नोति । अन्यत् पूर्ववत् ।

साधति । 'षिधु संराद्धौ' । णिचि 'सिध्यतेरपारलौकिके' (पा.सू.६.१.४९) इति आत्वम् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । क्षेति । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । दधते । 'दध धारणे' । भौवादिकः । तूताव । तु इति वृद्ध्यर्थः सौत्रो धातुः । अस्मात् छान्दसो लिट् । तुजादित्वात् अभ्यासस्य दीर्घत्वम् । अश्नोति । व्यत्ययेन परस्मैपदम् । अंहतिः । 'हन्तेरंह च' (उ.सू.४.५०२) इति अतिप्रत्ययः । 'चित्' इत्यनुवृत्तेः अन्तोदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्– यस्मै** यजमानाय हे **अग्ने! त्वम् आयजसे** देवान् आभिमुख्येन यजसि, यजमानकृत्यं सर्वमग्निरेव निर्वहति, तस्मात्स धन्यः यस्मिन् प्रादुर्भूतोऽग्निः यजमानार्थं देवान् यजति । **सः** यजमानः **साधति** साधयति कार्यम् । **अनर्वा** अप्रत्यृतः, अप्रतिगतः शत्रुभिः **क्षेति** निवसति स्वस्थ इत्यर्थः, **सुवीर्यम्** शोभनवीर्यं **दधते** धारयते । **सः तूताव** स वर्धते, उत्तरोत्तराभिवृद्धिस्तस्य । **एनम्** यजमानं **अंहतिः** पाप्मा **न अश्नोति** न प्राप्नोति, न स्पृशतीत्यर्थः, अंहतिर्दारिद्र्यमिति सायणः, अन्यत्र 'अंहतिभ्यः' पापेभ्यो निर्गमयत् (५.५५.१०) स एव पापमिति व्याचष्टे । शिष्टं व्याख्यातम् ।

क्षेति–क्षि निवासे, विकरणस्य लुक् । दधते–दध धारणे, भौवादिकः । तूताव–तू इति सौत्रो धातुः वृद्ध्यर्थः । अंहतिः–हन्तेः अंह चेति अतिप्रत्ययः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।**
**त्वमादित्याँ आ वह तान् ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव ।। ३ ।।**
**शकेम । त्वा । सम्ऽइधम् । साधय । धियः । त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् । त्वम् । आदित्यान् । आ । वह । तान् । हि । उश्मसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ।।**

**स्कन्द– शकेम** शक्नुयाम त्वाम् **समिधम्** तुमर्थेऽयं कमुल् । समिन्धितुम् । **साधय** अस्माकम् **धियः** कर्माणि प्रज्ञा वा । किञ्च **त्वे** त्वयि **देवाः हविः अदन्ति** भक्षयन्ति **आहुतम्** मर्यादया हुतम् । **त्वम् आदित्यान्** अदितेः पुत्रान् सर्वान् देवान् यष्टुम् **आ वह । तान् हि उश्मसि** कामयामहे **वयम्** । किञ्च **अग्ने! तव** ।। ३ ।।

**वेङ्कटमाधव–** शक्नुयाम त्वां वयं समेधितुम् । **साधय** कर्माणि । त्वयि **देवाः हविः** भक्षयन्ति **आहुतम्** । **त्वम्** इह **आदित्यान् आ वह** । **तान् हि वयम्** कामयामहे ।। ३ ।।

**मुद्गल–** हे **अग्ने! त्वा** त्वाम् **समिधम्** सम्यगिद्धं कर्तुम् **शकेम** शक्ता भूयास्म । त्वं च **धियः** अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि **साधय** निष्पादय । त्वया हि सर्वे यागा निष्पाद्यन्ते । यस्मात् **त्वे** त्वय्यग्नौ **आहुतम्** ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकम् **हविः देवाः अदन्ति** भक्षयन्ति । तस्मात् त्वं साधयेत्यर्थः । अपि च **त्वम् आदित्यान्** अदितेः पुत्रान् सर्वान् देवान् **आ वह** अस्मद्यज्ञार्थमानय । **तान् हि** इदानीमेव वयम् **उश्मसि** कामयामहे । अन्यत् पूर्ववत् ।। ३ ।।

**सायण–** हे **अग्ने! त्वा** त्वां **समिधं** सम्यगिद्धं कर्तुं **शकेम** शक्ता भूयास्म । त्वं च **धियः** अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि **साधय** निष्पादय । त्वया हि सर्वे यागा निष्पाद्यन्ते । यस्मात् **त्वे** त्वय्यग्नौ **आहुतम्** ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं **हविः देवाः अदन्ति** भक्षयन्ति । तस्मात् त्वं साधयेत्यर्थः । अपि च **त्वम् आदित्यान्** अदितेः पुत्रान् सर्वान् देवान् **आ वह** अस्मद्यज्ञार्थमानय । **तान् हि** इदानीमेव वयम् **उश्मसि** कामयामहे । अन्यत् पूर्ववत् ।

शकेन । 'शक्लृ शक्तौ' । 'लिङ्याशिष्यङ्' । अदुपदेशात् लसार्वधातुकानुदात्तत्वेऽङ् एव स्वरः शिष्यते । समिधम् । 'ञिइन्धी दीप्तौ' । अस्मात् सम्पदादिलक्षणः कर्मणि क्विप् । त्वे । 'सुपां सुलुक्' इति सप्तम्येकवचनस्य शेआदेशः । उश्मसि । 'वश कान्तौ' । इदन्तो मसिः । अदादित्वात् शपो लुक् । 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **अग्ने! त्वा** त्वां **समिधं** समिद्धं सम्यग् ज्वलितं कर्तुं **शकेम** शक्ताः भूयास्म । **धियः** अस्मदीयाः बुद्धीः यथा युक्ता भवन्ति तथा **साधय** निष्पादय । **त्वे** त्वयि **देवाः** इन्द्रादयः **आहुतम् हविः** अर्पितमर्पणद्रव्यं **अदन्ति** भक्षयन्ति, स्वीकुर्वन्तीत्यर्थः । **त्वम् आदित्यान्** अदितेः पुत्रान् देवान् **आवह** आनय । **तान् हि** तान् खलु **उश्मसि** कामयामहे । शिष्टं प्राग्वत् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**भरा॑मे॒ध्मं कृ॒णवा॑मा ह॒वींषि॑ ते चि॒तय॑न्तः॒ पर्व॑णापर्वणा व॒यम् ।**
**जी॒वात॑वे प्र॒तरं॑ साधया॒ धियोऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ।। ४ ।।**
**भरा॑म । इ॒ध्मम् । कृ॒णवा॑म । ह॒वींषि॑ । ते॒ । चि॒तय॑न्तः । पर्व॑णाऽपर्वणा । व॒यम् । जी॒वात॑वे । प्र॒ऽतरम् । सा॒ध॒य॒ । धियः॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ।। ४ ।।**

**स्कन्द–** **भराम** शुद्धोऽप्ययं हरतिराङ्पूर्वार्थे द्रष्टव्यः । आहराम त्ववर्धम् **इध्मम्** । **कृणवाम हवींषि ते चितयन्तः** ज्ञातवन्तः । किम् । सामर्थ्याद् यज्ञकर्म त्वन्माहात्म्यं वा । **पर्वणापर्वणा** सप्तम्यर्थे तृतीयैषा । पर्वणिपर्वणि । पौर्णमास्याममावास्यायां चेत्यर्थः । **वयम्** । किञ्च **जीवातवे** जीवातुर्जीविका, तदर्थम् । **प्रतरम्** क्रियाविशेषणमिदम् । प्रकृष्टतरं प्रवृद्धतरं वा । **साधय** अस्माकम् **धियः** । किञ्च **अग्ने!** ।। ४ ।।

**वेङ्कटमाधव–** **भराम इध्मम्**, **कृणवाम** च **हवींषि** तुभ्यम् बुध्यमानाः **पर्वणापर्वणा** अहोरात्रयोः पर्वणि सायं च प्रातश्च । ताभ्याम् अग्निहोत्रं कृणवाम, मासपर्वभ्यां दर्शपूर्णमासौ, ऋतुसन्धिभिः चातुर्मास्यानि । **जीवितुम्** प्रकृष्टतरम् अस्माकं कर्माणि **साधय** ।। ४ ।।

**मुद्गल–** हे **अग्ने!** त्वद्यागार्थम् **इध्मम्** इन्धनसाधनमेकविंशतिदार्वात्मकं समित्समूहम् **भराम** सम्पादयाम । तदनन्तरम् **ते** तुभ्यम् **हवींषि** चरुपुरोडाशलक्षणान्यन्नानि **वयम् कृणवाम** करवाम । किं कुर्वन्तः । **पर्वणापर्वणा** प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्याम् **चितयन्तः** त्वां प्रज्ञापयन्तः । स त्वम् **जीवातवे** अस्माकं जीवनौषधाय चिरकालावस्थानाय **धियः** कर्माणि अग्निहोत्रादीनि **प्रतरम्** प्रकृष्टतरम् **साधय** निष्पादय । अन्यत् समानम् ।। ४ ।।

**सायण–** हे **अग्ने!** त्वद्यागार्थम् **इध्मम्** इन्धनसाधनमेकविंशतिदार्वात्मकं समित्समूहं **भराम** सम्पादयाम । तदनन्तरं **ते** तुभ्यं **हवींषि** चरुपुरोडाशादिलक्षणान्यन्नानि **वयं कृणवाम** करवाम । किं कुर्वन्तः । **पर्वणापर्वणा** प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्यां **चितयन्तः** त्वां प्रज्ञापयन्तः । स त्वं **जीवातवे** अस्माकं जीवनौषधाय चिरकालावस्थानाय **धियः** कर्माण्यग्निहोत्रादीनि **प्रतरं** प्रकृष्टतरं **साधय** निष्पादय । अन्यत् समानम् ।

चितयन्तः । 'चिती संज्ञाने' । संज्ञापूर्वकस्य विधेरनित्यत्वात् लघूपधगुणाभावः ।

पर्वणापर्वणा । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः । 'तस्य परमाम्रेडितम्' इति परस्याम्रेडितसंज्ञायाम् 'अनुदात्तं च' इत्यनुदात्तत्वम् । प्रतरम् । तरबन्तात् प्रशब्दात् क्रियाप्रकर्षे वर्तमानात् 'अमु च च्छन्दसि' (पा.सू.५.४.१२) इति अमुप्रत्ययः ॥ ४ ॥

**सिद्धाञ्जनम्–** हे **अग्ने! इध्मम्** इन्धनसाधनं त्वद्बोधनज्वलनकरणं अस्मास्विति शेषः । **भराम** सम्पादयाम । **ते** तुभ्यं **हवींषि कृणवाम** अर्पणीयानि भोग्यानि करवाम । **वयम् पर्वणापर्वणा** पदे पदे सोपानक्रमेण (दर्शपूर्णमासाभ्यामिति कर्मठाः) त्वां **चितयन्तः** अस्मदभिमुखं बोधयन्तः प्रज्ञापयन्तः कृणवामेति पूर्वेण सम्बन्धः । **जीवातवे** जीवनौषधाय दीर्घकालजीवनप्रदाय, **प्रतरम्** प्रकृष्टतरं अस्माकं **धियः साधय** । अन्यत्समानम् ।

चितयन्तः–चिती संज्ञाने, संज्ञापूर्वकविधेरनित्यत्वात् लघूपधगुणाभावः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।**
**चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥**
**विशाम् । गोपाः । अस्य । चरन्ति । जन्तवः । द्विऽपत् । च । यत् । उत । चतुःऽपत् । अक्तुऽभिः । चित्रः । प्रऽकेतः । उषसः । महान् । असि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ५ ॥**

**स्कन्द– विशाम्** विडिति मनुष्यनाम (निघ.२,३) । पुत्रपौत्रादिमनुष्याणाम् । **गोपाः** गोप्तारः । **अस्य** अग्नेः । षष्ठीनिर्देशात् स्वभूताः प्रसादेन वेति वाक्यशेषः । **चतन्ति** तत्रतत्र विचरन्ति । **जन्तवः** मनुष्याः । अविनश्यद्भिः पुत्रपौत्रादिमनुष्यैरुपेताः ते तत्रतत्र विचरन्ति अग्नेः स्वभूताः प्रसादेन वेत्यर्थः । न च केवला जन्तवः । किं तर्हि । **द्विपत् च यत्** अन्यदपि यद् द्विपात् तत्सर्वम् । **उत चतुष्पन्** चतुष्पात् गवादिः । **अक्तुभिः** रात्रिनामैतत् (निघ.१,७) । इह तु साहचर्यात् नक्तञ्चरेषु रक्षःपिशाचादिषु वर्तते । सहयोगलक्षणा चैषा तृतीया । रात्रिचरैः सहेत्यर्थः । **चित्रः** च अस्य **प्रकेतः** प्रज्ञानम् । प्रकाश इत्यर्थः । **उषसः** लुप्तोपममेतत् द्रष्टव्यम् । उषस इव । परः ऋक्छेषः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । **महान्** त्वम् **असि** प्रभावतः । किञ्च **अग्ने!** ॥ ५ ॥

**वेङ्कटमाधव–** **विशाम्** गोपायिता भवति अग्निः । तं परिचरन्ति **जन्तवः यत्** द्विपात् यत् च चतुष्पाद् अञ्जनसाधनैः आज्यैः । आश्चर्यः **उषसः** प्रज्ञापयिता **महान्** भवसि ॥५॥

**मुद्गल–** **अस्य** अग्नेः जन्तवः जाता रश्मयः **विशाम्** सर्वेषां प्राणिनाम् **गोपाः** गोपायितारो रक्षकाः सन्तः **चरन्ति** उद्गच्छन्ति । तदनन्तरम् **यत् च द्विपत्** मनुष्यादिकमस्ति, **उत** अपि च **चतुष्पत्** गवादिकं यदस्ति, तदुभयम् **अक्तुभिः** अञ्जकैः अस्य रश्मिभिरक्तम् आश्लिष्टम् अभूत् । हे **अग्ने! चित्रः** विचित्रदीप्तियुक्तः **प्रकेतः** रात्रावन्धकारावृतानां सर्वेषां प्रज्ञापयिता प्रदर्शयिता **उषसः** उषोदेवताया अपि **महान्** गुणैरधिकः **असि** भवसि । उषास्तु रात्रेश्चरमभागे प्रकाशयति, अग्निस्तु सर्वस्यां रात्रौ प्रकाशयतीति तस्य गुणाधिक्यम् ॥ ५ ॥

**सायण–** **अस्य** अग्नेः **जन्तवः** जाता रश्मयः **विशां** सर्वेषां प्राणिनां **गोपाः** । गोपायितारो रक्षकाः सन्तः **चरन्ति** उद्गच्छन्ति । तदनन्तरं **यत् च द्विपत्** द्विपात् मनुष्यादिकमस्ति **उत** अपि च **चतुष्पत्** चतुष्पात् गवादिकं यदस्ति तदुभयम् **अक्तुभिः** अञ्जकैः अस्य रश्मिभिरक्तम् आश्लिष्टमभूत् । हे **अग्ने! चित्रः** विचित्रदीप्तियुक्तः **प्रकेतः** रात्रावन्धकारावृतानां सर्वेषां प्रज्ञापयिता प्रदर्शयिता **उषसः** उषोदेवताया अपि **महान्** गुणैरधिकः **असि** भवसि । उषास्तु रात्रेश्चरमभागे प्रकाशयति अग्निस्तु सर्वस्यां रात्रौ प्रकाशयतीति तस्य गुणाधिक्यम् ।

गोपाः । 'गुपू रक्षणे' । 'गुपूधूपविच्छि' (पा.सू.३.१.२८) इति आयप्रत्ययः । अस्मात् क्विप् । अतो लोपः । 'वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति पूर्वं वलि लोपः । न चातो लोपस्य स्थानिवत्त्वं, 'न पदान्त' इत्यादिना यलोपं प्रति तन्निषेधात् । द्विपत् । द्वौ पादावस्येति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्य' (पा.सू.५.४.१४०) इति पादशब्दस्य अन्त्यलोपः समासान्तः । अयस्मयादित्वेन भत्वे 'पादः पत्' (पा.सू.६.३.१३०) इति पद्भावः । एकदेशविकृतस्यानन्य-वत्त्वात् । चतुष्पत् । पूर्ववत् समासान्तः पद्भावश्च । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । 'त्रः सङ्ख्यायाः' (फि.सू.२८) इति चतुरशब्द आद्युदात्तः । स एव बहुव्रीहिस्वरेण शिष्यते ॥ ५ ॥

**सिद्धाञ्जनम्–** अस्यां 'द्विपत् चतुष्पत्' च प्रयुक्ते । मनुष्यादिकं गवादिकं चोक्ते इति आपाततः स्थूलोऽर्थः साधुरेव भवति । रहस्यं तु पृथिव्यां दिवि च वर्तनाय यः प्रभवति स

द्विपात् । व्याहृतिचतुष्टयवेदनीयस्थानचतुष्टये पृथक् पदं स्थानं धारयितुं यः प्रभुः स चतुष्पात् । एवं अरविन्दश्रीचरणानां दृष्टिरवधेया । **विशाम्** सर्वेषां मनुष्याणां **गोपाः** गोपायितारः सन्तः **अस्य** अग्नेः **जन्तवः** जाताः रश्मयः **चरन्ति** उच्चरन्ति उद्गच्छन्ति । **यच्च द्विपत्** पूर्वोक्तस्थानद्वयवर्तिप्रभावशालिनं मानुष्यकं अस्ति, **उत** अपि च **चतुष्पत्** पदचतुष्टय-वर्तिदिव्यज्ञानोपेतं ऋष्यादिकं अस्ति तदुभयं **अक्तुभिः** अञ्जकैः अभिव्यञ्जकैः अस्य रश्मिभिः उक्तमाश्लिष्टं भवतीत्यध्याहारः । हे **अग्ने!** तव **प्रकेतः** प्रज्ञापयिता प्रकाशको रश्मिः **चित्रः** नानावर्णः अद्भुतः सर्वदा प्रकाशयति, उषास्तु प्रभात एव, तस्मात् **उषसः** उषसोऽपि त्वं **महान् असि** । अन्यत् समानम् ।

गोपाः–गुपू रक्षणे, क्विप् ।। ५ ।।

।। इति प्रथमाष्टके षष्ठाध्याये त्रिंशो वर्गः ।।

## ।। अथ एकत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वम॑ध्व॒र्युरु॒त होता॑सि पू॒र्व्यः प्र॑शा॒स्ता पोता॑ ज॒नुषा॑ पु॒रोहि॑तः ।**
**विश्वा॑ वि॒द्वाँ आर्त्वि॑ज्या धीर पुष्य॒स्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ।। ६ ।।**
त्वम् । अ॒ध्व॒र्युः । उ॒त । होता॑ । अ॒सि॒ । पू॒र्व्यः । प्र॒ऽशा॒स्ता । पोता॑ । ज॒नुषा॑ । पु॒रःऽहि॑तः ।
**विश्वा॑ । वि॒द्वान् । आर्त्वि॑ज्या । धी॒र॒ । पु॒ष्य॒सि॒ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् ।**
**तव॑ ।। ६ ।।**

**स्कन्द–** अध्वर्य्वादिकर्मकारित्वादग्नेरयमध्वर्य्वादिव्यपदेशः । अग्न्यायत्तत्वादध्वर्य्वादि-कर्मणामग्निरेव कर्तेत्युच्यते । **त्वम् अर्ध्वयुः** अध्वर्युकर्मकारीत्यर्थः । **उत होता असि पूर्व्यः** चिरन्तन इत्यर्थः । **प्रशास्ता** च **पोता** च त्वमेवासि । **जनुषा** जन्मना । जन्मन एव प्रभृतीत्यर्थः । **पुरोहितः** पूर्वस्यां दिश्याहवनीयात्मना स्थापितः सन् । किञ्च **विश्वा** सर्वाणि **विद्वान् आर्त्विज्या** ऋत्विक्कर्माणि । हे **धीर! पुष्यसि** त्वं स्वयं पुष्णासि वा यज्ञसम्पादनद्वारेण यजमानत्वात् । किञ्च **अग्ने सख्ये** ।। ६ ।।

**वेङ्कटमाधव– त्वम् अध्वर्युः** अपि च **होता** भवसि प्रत्नः मैत्रावरुणः **पोता** च जातेन सर्वेण ब्रह्मत्वेन पुरो निहितः । सर्वाण्येव जानन् आर्त्विज्यानि पोषयसि प्राज्ञ! ॥ ६ ॥

**मुद्गल**– हे **अग्ने! त्वम् अध्वर्युः** अध्वरस्य यागस्य नेता देवान् प्रति प्रेरयिता । **उत** अपि च **पूर्व्यः** मुख्यः **होता** देवानामाह्वाता यागनिष्पादकः **असि** भवसि । तथा **प्रशास्ता** प्रकर्षेण शास्ता सर्वेषां शिक्षकोऽसि । **पोता** यज्ञस्य पावयिताऽसि । तथा **जनुषा** जन्मना स्वाभाव्येन **पुरोहितः** पुरस्तादागामिनि स्वर्गादौ हितोऽनुकूलाचरणोऽसि । **विश्वा** सर्वाणि **आर्त्विज्या** ऋत्विजः कर्माणि आध्वर्यवादीनि **विद्वान्** जानंस्त्वं हे **धीर! प्राज्ञ! अग्ने! पुष्यसि** न्यूनाधिकभावराहित्येन सम्पूर्णानि करोषि । अन्यत् समानम् ॥ ६ ॥

**सायण– हे अग्ने! त्वम् अध्वर्युः** अध्वरस्य यागस्य नेता देवान्प्रति प्रेरयिता यद्वा यागे अध्वर्यवस्य कर्ता भवसि । अध्वर्यौ मनुष्ये जाठररूपेण वागिन्द्रियाधिष्टातृत्वेन वावस्थाय यागनिष्पादकः असि । **उत** अपि च **पूर्व्यः** मुख्यः **होता** देवानामाह्वाता पूर्ववद्धोतर्यवस्थाय हौत्रस्य कर्मणः कर्ता वा **असि** भवति । मानुषो होता अमुख्यः । तदपेक्षयास्य मुख्यत्वम् । तथा **प्रशास्ता** प्रकर्षेण शास्ता सर्वेषां शिक्षकोऽसि । यद्वा । 'होतर्यज पोतर्यज' इत्यादिना प्रैषेण शास्तीति मैत्रावरुणः प्रशास्ता । पूर्ववत् तस्मिन्नवस्थाय यागनिष्पादकोऽसि । **पोता** यज्ञस्य पावयिता शोधयितासि । यद्वा पोतृनामकस्य ऋत्विजः पूर्ववदधिष्ठाय यागनिष्पादकोऽसि । तथा **जनुषा** जन्मना स्वाभाव्येन **पुरोहितः** पुरस्तादागामिनि स्वर्गादौ हितोऽनुकूलाचरणोऽसि । यद्वा । सर्वेषु कर्मसु पूर्वस्यां दिश्याहवनीये स्थापितोऽसि । अथवा पुरोहितो ब्रह्मा देवपुरोहितस्य बृहस्पतेः प्रतिनिधित्वात् । तथा च मन्त्रान्तरम्– 'बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम्' (तै.ब्रा.३.७.६.३) इति । अतस्तस्मिन्ब्रह्मणि पूर्ववदवस्थाय तद्रूपः सन् **विश्वा** सर्वाणि **आर्त्विज्या** ऋत्विजः कर्माण्यध्वर्यवादीनि **विद्वान्** जानंस्त्वं हे **धीर**! प्राज्ञ **अग्ने**! **पुष्यसि** न्यूनाधिकभावराहित्येन सम्पूर्णानि करोषि । अन्यत् समानम् ।

जनुषा । जनेरुसिः । पुरोहितः । दधातेः कर्मणि निष्ठा । 'पूर्वाधर' इत्यादिना असि-प्रत्ययान्तः पूरस्शब्दोऽन्तोदात्तः । 'तद्धितश्चासर्वविभक्तिः' इति अव्ययसंज्ञायां 'पुरोऽव्ययम्' इति गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । आर्त्विज्या । ब्राह्मणादित्वात् व्यञ् । ञित्त्वादाद्युदात्तत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्– त्वम् अध्वर्युः** अध्वरकार्यनिर्वाही तवमेव । **उत** अपि च **पूर्व्यः होता** मुख्य आह्वाता **असि** भवसि । पूर्व्यः पुराणश्चिरन्तनो नित्य इति यावत् । अग्निमुखा देवे एव आर्त्विज्यं निर्वहन्ति यजमानाय । तेषां प्रतिनिधिभूताः मानुषर्त्विजः बाह्ये कर्मणि हौत्र–आध्वर्यव–औद्गात्र–ब्रह्मण्यानि अनुतिष्ठन्ति । अत्र यथा अग्निरेव सर्वे देवाः, तथा **स** एव ऋत्विजः सर्वेऽपीति प्रतिपाद्यते । तथा त्वमेव **प्रशास्ता** प्रकर्षेण शिक्षकोऽसि, **पोता** पावयिता शोधयिता च ऋत्विगसि । **जनुषा** जन्मना **पुरोहितः** देवेषु मध्ये अग्निरेव यजमाने प्रथमो जायते, तं पुरोधाय क्रमेणान्येषां देवानां प्रादुर्भावः । त्वं **विश्वा** सर्वाणि **आर्त्विज्या** आर्त्विज्यानि आह्वानादिकर्माणि **विद्वान्** जानन्, हे **धीर!** प्राज्ञ, **पुष्यसि** स्वयं पुष्टः यजमानं पोषयसि । अन्यत्समानम् ।

जनुषा–जनेरुसिः । आर्त्विज्या–ब्राह्मणादित्वात् ष्यञ् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन्तळिदिवाति रोचसे ।**
**राञ्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥**

**यः । विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् । तळित्ऽइव । अति । रोचसे । रात्र्याः । चित् । अन्धः । अति । देव । पश्यसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ७ ॥**

**स्कन्द– यः** स्वम् **विश्वतः** सर्वतः **सुप्रतीकः** सुमुखः सुदर्शनो वा । **सदृङ्** सदृशश्च असि । **दूरे चित्** दूरेऽपि **सन् तळिदिव** विद्युत् तळिदित्युच्यते । विद्युदिव । **अति रोचसे** सुष्ठु दीप्यसे । अथवा 'तळित्' (निघ.२,१६) इत्यन्तिकनाम । दूरेऽपि सन् अन्तिक इव दीप्यसे । **रात्र्याः चित्** रात्रेरपि स्वकम् **अन्धः अति** तमोऽत्रान्ध उच्यते । कर्मोपसर्गश्रुतेश्च योग्यक्रियाध्याहारः । तमोऽतीत्य । हे **देव! पश्यसि** यस्य ते तमसा दर्शनशक्तिर्न प्रतिबध्यते इत्यर्थः । यच्छब्दश्रुतेश्च तच्छब्दोऽध्याहर्तव्यः तस्य । अग्ने! ॥ ७ ॥

**वेङ्कटमाधव– यः** समन्तात् प्रज्वलन् सर्वतः एव अन्यूनः सदृशो भवसि, स शोभनावयवः सन् **दूरे** अपि सन् अन्तिक इवाऽऽस्थितः **अति रोचसे** । अपि वा विद्युदिव रोचसे । **रात्र्याः** अपि **अन्धः** विनाशयसि ॥ ७ ॥

**मुद्गल–** हे **अग्ने! यः** त्वम् **सुप्रतीकः** शोभताङ्गः सन् **विश्वतः** सर्वस्मादपि **सदृङ् असि** अन्यूनः सदृशो भवसि स त्वम् **दूरे चित् सन्** दूरेऽपि वर्तमानः सन् **तळिदिव** अन्तिके वर्तमान इव **अति रोचसे** दीप्यसे । **रात्र्याः चित्** रात्रेः सम्बन्धिनम् **अन्धः** बहुलमन्धकारमपि हे **देव!** द्योतमानाग्ने! **अति पश्यसि** अतीत्य प्रकाशसे । अन्यत् पूर्ववत् ।। ७ ।।

**सायण–** हे **अग्ने! यः** त्वं **सुप्रतीकः** शोभनाङ्गः सन् **विश्वतः** सर्वस्मादपि **सदृङ्ङसि** अन्यूनः सदृशो भवसि स त्वं **दूरे चित्** सन् दूरेऽपि वर्तमानः सन् **तळिदिव** । अन्तिकनामैतत् । अन्तिके वर्तमान इव **अति रोचसे** अतिशयेन दीप्यसे । तदुक्तं यास्केन– 'दूरेऽपि सन्नन्तिक इव संदृश्यसे' (निरु.३.११) इति । **रात्र्याश्चित्** रात्रेरपि रात्रेः संबन्धिनम् **अन्धः** बहुल-मन्धकारमपि हे **देव!** द्योतमान अग्ने **अति पश्यसि** अतीत्य प्रकाशसे । अन्यत् पूर्ववत् ।

सुप्रतीकः । शोभनं प्रतीकोऽङ्गं यस्य । **'क्रत्वादयश्च'** इत्युत्तरपदाद्युदात्तत्वम् । सदृङ् । 'समानान्ययोश्चेति वक्तव्यम्' (पा.सू.३.२.६०.१) इति समानोपपादात् दृशेः किन् । 'दृग्दृश-वतुषु' (पा.सू.६.३.८९) इति समानस्य सभावः । 'दृक्स्ववःस्वतवसां छन्दसि' (पा.सू. ७.१.८३) इति नुम् । संयोगान्तलोपः । किन्प्रत्ययस्य 'कुः' इति कुत्वम् । कृदुत्तरपद-प्रकृतिस्वरत्वम् । रात्र्याः । 'रात्रेश्चाजसौ' (पा.सू.४.१.३१) इति ङीष् ।। ७ ।।

**सिद्धाञ्जनम्–** हे **अग्ने! यः** त्वं **सुप्रतीकः** शोभनाङ्गः सन् **विश्वतः** सर्वतः **सदृङः असि** सदृशो भवसि । यजमानस्यान्तर्बहिर्वा अन्तःप्रकाशावस्थायां अप्रकाशावस्थायां च तुल्योऽसीत्यर्थः । **दूरे चित् सन्** दूरे वर्तमानोऽपि **तळिदिव** तळित् अन्तिकनाम, समीपे सन्निव **अति रोचसे** अत्यन्तं दीप्यसे । हे **देव!** द्योतमानाग्ने, **रात्र्याः चित्** रात्रेरपि **अन्धः** अन्धकारं **अति पश्यसि** अतीत्य तव दृष्टिर्वर्तत इति भावः । यजमानस्यान्तरप्रकाशदशामतिघनामप्यतीत्य सोऽग्निः तमसः परस्तात् उज्ज्वलः पश्यति । अन्यत्समानम् ।

सदृङ्–समानोपपदाद्दृशो किन्, समानस्य सभावः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।**
**तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ।। ८ ।।**

**पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि । अस्तु । दुःऽध्यः । तत् । आ । जानीत । उत । पुष्यत । वचः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ।। ८ ।।**

**स्कन्द–** 'पूर्वो देवाः' इत्यस्या ऋचः आद्यास्त्रयः पादा देवदेवत्याः । समानजातानां मध्ये **पूर्वः** अग्रिमः हे **देवाः! भवतु सुन्वतः** मत्प्रभृतेर्यजमानस्य **रथः । अस्माकम् च** स्वभूतः **शंसः** आशंसनम् अभिलापः **अभि अस्तु** सम्पत्याऽभिभवतु मूर्ध्ना **दूढ्यः** पापबुद्धीन् । त्वदीयसम्पत्तिकामान् । **तत्** एतत् **आ जानीत** आ इत्येष प्रतीत्यस्य स्थाने । मह्यं प्रतिजानीत । **उत पुष्यत** पुष्णीत संवर्धयत । अस्मदीयम् **वचः** । परः पादो भिन्नदेवत्वात् भिन्नं वाक्यम् । **अग्ने!** ।। ८ ।।

**वेङ्कटमाधव–** मुख्यः भवतु **देवाः!** यजमानस्य **रथः । अस्माकम्** सुन्वतां शंसनम् अभिभवतु पापबुद्धीन् । **तत्** इदं मदीयं वचनं यूयम् अभ्यनुजानीत । अपि च तत् पोषयत । इति देवदेवत्याः त्रयः पादाः ।। ८ ।।

**मुद्गल–** हे **देवाः!** अग्रवयवभूताः सर्वे देवाः! **सुन्वतः** सोमाभिषवं कुर्वतो यजमानस्य **रथः पूर्वः** अन्येषामयजमानानां रथेभ्यो मुख्यः **भवतु** । अपि च **अस्माकम् शंसः** शंसनीयमभिशापरूपं पापम् **दूढ्यः** दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपराच्छत्रून् **अभि अस्तु** अभिभवतु तान् बाधताम् । **तत्** इदं मद्वाक्यं हे देवाः! **आ जानीत** आभिमुख्येनावगच्छत । **उत** अपि च तत् **वचः** अस्मदीयं वचनं तदर्थाचरणेन **पुष्यत** प्रवर्धयत । हे देव! सर्वात्मक! **अग्ने!** । **सख्ये** इत्यादि पूर्ववत् ।। ८ ।।

**सायण–** हे **देवाः!** अग्रवयवभूताः सर्वे देवाः **सुन्वतः** सोमाभिषवं कुर्वतो यजमानस्य **रथः पूर्वः** अन्येषामयजमानानां रथेभ्यो मुख्यः **भवतु** । अपि च **अस्माकं शंसः** शंसनीयमभिशापरूपं पापं **दूढ्यः** दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपराञ्छत्रून् **अभ्यस्तु** अभिभवतु तान् बाधताम् । **तत्** इदं मद्वाक्यं हे देवाः **आ जानीत** आभिमुख्येनावगच्छत । **उत** अपि च तत् **वचः** अस्मदीयं वचनं तदर्थाचरणेन **पुष्यत** प्रवर्धयत । हे सर्वदेवात्मक **अग्ने** । सख्ये इत्यादि पूर्ववत् ।

सुन्वतः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । शंसः । शंस्यते कीर्त्यन्ते इति शंसोऽभि-शापः । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । दूढ्यः । दुष्टं ध्यायन्तीति दुर्धियः । 'ध्यै चिन्तायाम्' इत्यस्मात् 'क्विप् च' इति क्विप् । दृशिग्रहणानुवृत्तेस्तस्य च विध्यन्तरोपसंग्रहार्थत्वात् सम्प्रसारणम् । पृषोदरादिषु 'ध्यै च' इति पाठात् दुरो रेफस्योत्वं उत्तरपदादेः ष्टुत्वं च ॥

**सिद्धाञ्जनम्–** हे देवाः! अग्रङ्गभूताः सर्वे देवाः, **सुन्वतः** सोमाभिषवं कुर्वतः यजमानस्य **रथः पूर्वः भवतु** दिव्ययात्रासाधनं यानं प्रतिरोधकैः राक्षसादिभिः शत्रुभिरनासादितं सत् पूर्वं गच्छतु । **अस्माकम् शंसः** अस्मदीयं शंसनीयं अभिशापरूपं वचनं **दूढ्यः** दुर्धियः पापबुद्धीन् देवद्विषः **अभ्यस्तु** अभिभवतु । **तत् वचः आजानीत** अस्मदीयं तदभिशापवचनं अवगच्छत, **उत** अवगम्य च **पुष्यत** पोषयत, सफलं कुरुतेत्यर्थः । अन्यत् समानम् ।

शंसः–शंस्यते कीर्त्यत इति शंसोऽभिशापः, कर्मणि घञ् । दूढ्यः–दुष्टं ध्यायन्तीति दुर्धियः, ध्यै चिन्तायामित्यस्मात्, क्विप्, पृषोदरादिषु ध्यैः चेति पाठात् दुरो रेफस्योत्वं, उत्तरपदादेः ष्टुत्वं च ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**व॒धैर्दुः॒शंसाँ॒ अप॑ दू॒ढ्यो॑ जहि दू॒रे वा॒ ये अन्ति॑ वा॒ के चि॑द॒त्रिणः॑ ।**
**अथा॑ य॒ज्ञाय॑ गृण॒ते सु॒गं कृ॑ध्यग्ने स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ९ ॥**

व॒धैः । दुः॒ऽशंसा॑न् । अप॑ । दुः॒ऽध्यः॑ । ज॒हि॒ । दू॒रे । वा॒ । ये॒ । अन्ति॑ । वा॒ । के । चि॒त् । अ॒त्रिणः॑ । अथ॑ । य॒ज्ञाय॑ । गृ॒ण॒ते । सु॒ऽगम् । कृ॒धि॒ । अ॒ग्ने॒ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ ९ ॥

**स्कन्द–** **वधैः दुःशंसान्** पापाभिलाषान् । अस्मद्विनाशनकामानित्यर्थः । **दूढ्यः** पापबुद्धीन् । **अप जहि दूरे वा ये** अन्तिके **वा केचिदत्रिणः** अत्तारः भक्षयितारः । विनाश-यितारोऽस्माकमित्यर्थः । अपहत्य च **अथ** अनन्तरम् **यज्ञाय** यज्ञार्थम् **गृणते** स्तुवते मह्यम् **सुगम्** अपटितमपि सुखनामैतदिह द्रष्टव्यम् । 'अस्मभ्यमिन्द्र वरिवः सुखं कृधि' (ऋ.१,१०२, ४) इति यथा । सुखम् **कृधि** कुरु । अथवा यज्ञायेति हेतुतृतीयार्थे चतुर्थी । सुगशब्दोऽपि सुगमदेशवचनः । यज्ञेन हेतुना स्तुतो ममार्थाय सुगमं स्वर्गादिदेशं कुर्वित्यर्थः । किञ्च **अग्ने!** ॥

**वेङ्कटमाधव–** आयुधैः दुर्वचनान् दुर्बुद्धींश्च **अप जहि, दूरे वा ये के चित्** अन्तिके वा भवन्ति अदनशीला राक्षसाः । अथ यज्ञार्थं स्तुवते शोभनगमनमार्गं कुरु ॥ ९ ॥

**मुद्गल–** हे **अग्ने!** त्वम् **वधैः** हननसाधनैरायुधैः **दुःशंसान्** दुःखेन कीर्तनीयान् **दूढ्यः** दुर्धियः पापबुद्धीन् **अप जहि** वधं प्रापय । **ये के चित्** ये केचन **अन्ति** अन्तिके वा **दूरे वा** दूरे विप्रकृष्टदेशे वर्तमानाः **अत्रिणः** अत्तारः राक्षसादयो विद्यन्ते, तान् दुर्धियोऽपजहीत्यर्थः । **अथ** अनन्तरम् **यज्ञाय** यज्ञपतये **गृणते** त्वां स्तुवते यजमानाय **सुगम्** शोभनं मार्गम् **कृधि** कुरु । अन्यत् पूर्ववत् ॥ ९ ॥

**सायण–** हे **अग्ने!** त्वं **वधैः** हननसाधनैरायुधैः **दुःशंसान्** दुःखेन कीर्तनीयान् **दूढ्यः** दुर्धियः पापबुद्धीन् **अप जहि** वधं प्रापय । **ये के चित्** ये केचन **दूरे** विप्रकृष्टदेशे **वा** अन्तिके समीपदेशे **वा** वर्तमानाः **अत्रिणः** अत्तारो राक्षसादयो विद्यन्ते तान् दुर्धियोऽप जहीत्यर्थः । **अथ** अनन्तरं **यज्ञाय** यज्ञपतये **गृणते** त्वां स्तुवते यजमानाय **सुगं** शोभनं मार्गं **कृधि** कुरु । अन्यत् पूर्ववत् ।

वधैः । 'हनश्च वधः' इति हन्ते करणेऽप् वधादेशश्च । स च अदन्तोऽन्तोदात्तः । तस्यातो लोपे सति उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । दुःशंसान् । 'ईषद्दुःसुषु' इति कर्मणि खलु । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । जहि । लोटि हिः । 'हन्तेर्जः' इति जादेशः । तस्य 'असिद्धवदत्रा भात्' इति असिद्धतत् हेर्लुगभावः । अन्ति । अन्तिकस्य 'कादिलोपो बहुलम्' इति कलोपः । अत्रिणः । 'अदेस्त्रिनि च' इति त्रिनिप्रत्ययः । इकारो नकार-परित्राणार्थः । गृणते । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । सुगम् । 'सुदुरोरधिकरणे' (पा.सू. ३.२.४८.३) इति गमेर्डः । कृधि । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिः । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥ ९ ॥

**सिद्धाञ्जनम्–** हे **अग्ने!** त्वं **वधैः** हननैस्ताडनैरित्यर्थः **दुःशंसान्** दुःखेन कीर्तनीयान् **दूढ्यः** दुर्धियः पापात्मनः **अप जहि** वधं प्रापय **ये केचित्** ये केचन **दूरे** दूरप्रदेशे **अन्ति वा** अन्तिके समीपे वा **अत्रिणः** अत्तारो राक्षसादयः वर्तन्ते, तान् दुर्धियोऽपजहीति सम्बन्धः । **अथ** अनन्तरं **यज्ञाय** यजनपरिपूर्तये **गृणते** त्वां स्तुवते यजमानाय **सुगम्** शोभनं मार्गं कृधि कुरु । अन्यत् समानम् ।

वधैः–हनश्च वध इति हन्तेः करणे अप् वधादेशश्च । दुःशंसान्–कर्मणि खल् । जहि–लोटि हिः, हन्तेः जः इति जादेशः । सुगम्–सुदुरोरधिकरणे इति गमेर्डः । कृधि–हेर्धिः, विकरणस्य लुक् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः ।**
**आदिन्वसि वनिनो धूमकेतुनाऽग्ने सख्ये मा रिषामा वयं तव ।। १० ।।**

यत् । अयुक्थाः । अरुषा । रोहिता । रथे । वातऽजूता । वृषभस्यऽइव । ते । रवः । आत् । इन्वसि । वनिनः । धूमऽकेतुना । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ।।

**स्कन्द–** दावाग्नेरियं स्तुतिः । **यत्** यदा **अयुक्थाः** दावात्मत्वात् शीघ्रं गन्तुं युनक्षि **अरुषा** गन्तारौ **रोहिता** लोहितवर्णावश्वौ आत्मीये **रथे** । कीदृशौ । **वातजूता** वातवत् यौ जवतः गच्छतः तौ वातजूतौ । अत्यन्तशीघ्रावित्यर्थः । यदा इति वचनात् तदा इत्यध्याहार्यम् । तदा रथेन गच्छतः **वृषभस्येव ते रवः** । साकाङ्क्षत्वात् भवतीति वाक्यशेषः । **आत्** तदैव च **इन्वसि** व्याप्नोषि **वनिनः** 'विष्वग् वियन्ति वनिनो न शाखाः' (ऋ.७,४३,१), 'तमित् समानं वनिनश्च वीरुधः' (ऋ.१०,९१,६) इति प्रयोगदर्शनात् वनिनो वनस्पतय इहोच्यन्ते । वनस्पतीन् । **धूमकेतुना** केतुः पताकोच्यते । धूमः केतुस्थानीयो यस्य तेन धूमकेतुना । सामर्थ्यात् ज्वालासमूहेन ज्योतिषा वा । ईदृशस्याग्नेः ।। १० ।।

**वेङ्कटमाधव–** यदा त्वं युनक्षि गन्तारौ रोहितवर्णावश्वौ वातवेगौ गमनाय स्वरथे, तदानीं गच्छतस्तव शब्दः **ऋषभस्येव** श्रूयते । अथ त्वं व्याप्नोषि वृक्षान् **धूमकेतुना** ज्वालासङ्घेन ।।

**मुद्गल–** हे **अग्ने! अरुषा** आरोचमानौ **रोहिता** लोहितवर्णावश्वौ **वातजूता** वातस्य वायोर्जूतं जवो वेग इव वेगो ययोस्तावीदृशावश्वौ **रथे यत्** यदा **अयुक्थाः** अयोजयः, तदानीं वनानि दहतः **ते** तव **रवः** शब्दः **वृषभस्येव** दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति । **आत्** अनन्तरम् **वनिनः** वनसम्बद्धान् वृक्षान् धूमकेतुना धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना **इन्वसि** व्याप्नोषि । अन्यत् पूर्ववत् ।। १० ।।

**सायण–** हे **अग्ने! अरुषा** आरोचमानौ **रोहिता** लोहितवर्णौ । रोहित इत्यग्नेरश्वस्याख्या

'रोहितोऽग्नेः' (नि.१.१५.२) इति दर्शनात् । 'रोहितेन त्वाग्निर्देवतां गमयतु' (तै.सं.१.७.४.३) इति मन्त्रवर्णाच्च । 'एते वै देवाश्वाः' (तै.सं.१.७.४.३) इति हि तत्र व्याख्यातम् । **वातजूता** । वातस्य वायोर्जूतं जवो वेग इव वेगो ययोस्तौ । ईदृशावश्वौ **रथे यत्** यदा **अयुक्थाः** अयोजयः तदानीं वनानि दहतः **ते** तव **रवः** शब्दः **वृषभस्येव** दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति । **आत्** अनन्तरं **वनिनः** वनसम्बद्धान् वृक्षान् **धूमकेतुना** धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना **इन्वसि** व्याप्नोषि । अन्यत् पूर्ववत् ।

अयुक्थाः । 'युजिर् योगे' । लुङि 'झलो झलि' इति सकारलोपः । अरुषेत्यादिद्विवचनेषु 'सुपां सुलुक्' इति आकारः । रवः । 'रु शब्दे' । 'ऋदोरप्' इति भावे अप् । इन्वसि । 'इवि व्याप्तौ' । भौवादिकः । इदित्त्वात् नुम् ।। १० ।।

**सिद्धाञ्जनम्–** हे **अग्ने! अरुषा** रोचमानौ **रोहिता** लोहितवर्णौ इन्द्रस्य हरी इव अग्नेः रोहितौ अश्वौ मन्त्रेषु विश्रुतौ **वातजूता** वातस्य जूतं जवो वेग इव वेगो ययोस्तौ अश्वौ **यत्** यदा **रथे अयुक्थाः** अयोजयः तदानीं **ते** तव **रवः** शब्दः **वृषभस्येव** दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति । **आत्** अनन्तरं **वनिनः** वनसम्बन्धिनः पृथ्वीरुहान् धूमकेतुना रश्मिना 'धूमः ऊर्जवेगेन यो बाष्पगतिप्रायः कम्पो जायते सः केतुः प्रज्ञापको ज्ञानं यस्येति' प्राग् व्याख्यातमन्तरर्थानुरोधेन (१.२७.११) **इन्वसि** व्याप्नोषि । अन्यत् समान् । पृथ्वीरुहाणां दहनं, अग्निप्रादुर्भावप्रभावात् अन्नमयशरीरस्थानां हेयानां सर्वेषां विनष्टिं लक्षयति । अयमाशयः आग्नेयमन्त्रेषु अन्यत्र चावधेयः, यथा वा पराशरसूक्तेषु 'अग्निर्ह दाति रोमा पृथिव्याः' (१.६५.४) ।

अयुक्थाः– युजिर् योगे, लुङः । अरुषेत्यादिषु द्विवचनेषु सुपां सुलुगित्याकारः । रवः– रु शब्दे । इन्वसि–इवि व्याप्तौ ।। १० ।।

।। इति प्रथमाष्टके षष्ठाध्याये एकत्रिंशो वर्गः ।।

## ।। अथ द्वात्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अध॑ स्व॒नादु॒त बि॑भ्युः पत॒त्रिणो॑ द्र॒प्सा यत् ते॑ यव॒सादो॒ व्यस्थि॑रन् ।**
**सु॒गं तत् ते॑ ताव॒केभ्यो॒ रथे॒भ्योऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ।। ११ ।।**

**अध॑ । स्व॒नात् । उ॒त । बि॒भ्यु॒ः । प॒त॒त्रिण॑ः । द्र॒प्साः । यत् । ते॒ । य॒व॒स॒ऽअद॑ः । वि । अ॒स्थि॒र॒न् । सु॒ऽगम् । तत् । ते॒ । ता॒व॒केभ्य॑ः । रथे॑भ्यः । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ।। ११ ।।**

**स्कन्द–** अथ-शब्दोऽत्र तदा इत्यस्यार्थे । तदा **स्वनात्** शब्दात् **उत बिभ्युः पतत्रिणः पतत्रिणः** पतत्रिणः पक्षिण उच्यन्ते । पक्षिणोऽपि बिभ्यति, किमुतान्ये प्राणिनः । कदा । उच्यते । **द्रप्साः** 'दधिद्रप्सान् प्राश्य' इत्यादिषु द्रप्सशब्दः कठिनवचनः । कठिनाः । बहुलरूपा इत्यर्थः । **यत्** यदा **ते** तव दावात्मकस्य स्वभूताः **यवसादः** यवसं तृणम्, तस्यात्तारो ज्वालासमूहाः **वि अस्थिरन्** तिष्ठतेरिदं रूपम् । वितिष्ठन्ते । सर्वं व्याप्नुवन्तीत्यर्थः । किञ्च **सुगम् तत्** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यत् पर्वतपृष्ठादि अन्यः कश्चित् गन्तुं न शक्नोति सुगं तत् **ते** तव । न च केवलस्य । किं तर्हि । **तावकेभ्यः रथेभ्यः** षष्ठ्यर्थे चतुर्थी पञ्चमी वा । एषां रथानां च त्वदीयानाम् । किञ्च **अग्ने! सख्ये** ।। ११ ।।

**वेङ्कटमाधव–** यदा दवाग्नेः शकलानि तृणस्य भक्षकाणि अरण्ये वितिष्ठन्ते, अनन्तरमेव दवाग्निशब्दात् पक्षिणो बिभ्यति । शोभनगमनम् **तत्** अरण्यम् अग्नेः **रथेभ्यः** भवति । **ते** इति पूरणम् । तत् त्वं यथाऽऽत्मीयैः यथाकामं सञ्चरसीत्यर्थः ।। ११ ।।

**मुद्गल–** हे **अग्ने! अध** दग्धुं वनप्रवेशानन्तरम् **स्वनात्** त्वदीयात् पूर्वोक्तगम्भीरशब्दात् । उतशब्दोऽप्यर्थः । **पतत्रिणः** पक्षिणोऽपि **बिभ्युः** बिभ्यति भयं प्राप्नुवन्ति । किमु वक्तव्यमन्येषां तत्रत्यानां वृकादीनां भीतिर्जायत इति । अतस्त्वयि वनं प्रविशति सर्वे प्राणिनो भयं प्राप्नुवन्ती-त्यर्थः । तादृशस्य **ते** तव **द्रप्साः** ज्वालैकदेशाः **यथसादः** यवसानामरण्ये वर्तमानानां तृणानामत्तारः सन्तः **यत्** यदा **वि अस्थिरन्** विविधमवतिष्ठन्ते **तत्** तदा **ते** तव सर्वभरण्यम् **सुगम्** सुखेन गन्तुं शक्यम् । अतः **तावकेभ्यः** त्वदीयेभ्यः **रथेभ्यः** च तदरण्यं सुगं भवति । पूर्वं प्रवृत्तैर्ज्वालाग्रैः तृणादिषु दग्धेषु सत्सु त्वदीया रथाः प्रतिबन्धमन्तरेण पश्चाद्गच्छन्तीति भावः । अन्यत् समानम् ।। ११ ।।

**सायण–** हे **अग्ने! अध** दग्धुं वनप्रवेशानन्तरं **स्वनात्** त्वदीयात् पूर्वोक्तगम्भीरशब्दात् । उतशब्दोऽप्यर्थः । **पतत्रिणः** पक्षिणोऽपि **बिभ्युः** बिभ्यति भयं प्राप्नुवन्ति । उत्पतनेन देशान्तरं गन्तुं समर्थाः पक्षिणोऽपि यदा भयं प्राप्नुवन्ति किमु वक्तव्यमन्येषां तत्रत्यानां वृकादीनां भीतिर्जायते इति । अतस्त्वयि वनं प्रविशति सर्वे प्राणिनो भयं प्राप्नुवन्तीत्यर्थः । तादृशस्य **ते** तव **द्रप्साः** ज्वालैकदेशाः **यवसादः** यवसानामरण्ये वर्तमानानां तृणानामत्तारः सन्तः यत् यदा **व्यस्थिरन्** विविधमवतिष्ठन्ते **तत्** तदा **ते** तव सर्वमरण्यं **सुगं** सुखेन गन्तुं शक्यम् । अतः **तावकेभ्यः** त्वदीयेभ्यः **रथेभ्यः** च तदरण्यं सुगं भवति । पूर्वं प्रवृत्तैर्ज्वालाग्रैः तृणादिषु दग्धेषु सत्सु त्वदीया रथाः प्रतिबन्धमन्तरेण पश्चाद्गच्छन्तीति भावः । अन्यत् समानम् ।

बिभ्युः । 'ञिभी भये' । छान्दसो लिट् । 'एरनेकाचः' इति यण् । व्यस्थिरन् । 'समवप्रविभ्यः' इति तिष्ठतेरात्मनेपदम् । लुङि व्यत्ययेन झस्य रन् । 'स्थाध्वोरिच्च' इति इत्वम् । 'ह्रस्वादङ्गात्' (पा.सू.८.२.२७) इति सलोपः । तावकेभ्यः । 'तवकममकावेकवचने' (पा.सू. ४.३.३) इति युष्मदस्तवकादेशः ।। ११ ।।

**सिद्धाञ्जनम्–** यथा यात्रायां यात्रिकस्य तद्यानस्य च पृथ्वीरुहाः कण्टकादयः प्रतिबन्धका भवन्ति, तथा यजमानस्य अध्वरयात्रायां अन्नमयदेहोद्भवाः तमोजाड्यादिसंस्काराः वासनाश्च सूक्ष्मदेहं मनःप्राणात्मकं बाधन्ते, तत्प्रतिरोधकाः भवन्ति । यदा अग्नेर्ज्वालया ते विनाशिता भवन्ति तदा मार्गः सुगमो भवति, अन्नमयं जगत् शरीरं च शोधिते भवतः । इदमेवाहास्यां ऋचि । हे अग्ने! **अध** वनप्रवेशात्परं **स्वनात्** त्वदीयशब्दात् **उत पतत्रिणः** उत अप्यर्थः शीघ्रमुत्पतनशीलाः पक्षिणोऽपि वृक्षावासाः **बिभ्युः** भीता भवन्ति । रहस्यं तु, चण्डवेगाः मरुतः पक्षिणः, प्राणबलोद्रिक्तधीवृत्तिविशेषाः । **यत्** यदा **ते** तव **द्रप्साः** ज्वालैकदेशाः, प्राग्विवृतो द्रप्सशब्दः (१.१४.४) **यवसादः** तृणानामत्तारः **व्यस्थिरन्** वनं व्याप्य अवतिष्ठन्ते 'यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः' इति अन्यत्र चोक्तम् । **तत्** तदा **ते** तव **तावकेभ्यः रथेभ्यः** त्वदीयरथेभ्यश्च **सुगम्** सुखेन गन्तुं शक्यं वनं भवति, अन्नमयशरीरजातं सर्वं प्रतिरोधकमिति रहस्यम् । अन्यत्समानम् ।

बिभ्युः–छान्दसो लिट् लडर्थे । व्यस्थिरन्–विपूर्वस्तिष्ठतिरात्मनेपदी, व्यत्ययेन झस्य रन् ।।

## ऋक्संहिता पदपाठसहिता

**अ॒यं मि॒त्रस्य॒ वरु॑णस्य॒ धाय॑सेऽवया॒तां म॒रुतां॒ हेळो॒ अद्भु॑तः ।**
**मृ॒ळा सु नो॒ भूत्वे॑षां॒ मनः॒ पुन॒रग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ।। १२ ।।**
अ॒यम् । मि॒त्रस्य॑ । वरु॑णस्य । धाय॑से । अ॒व॒ऽया॒ताम् । म॒रुता॑म् । हेळः॑ । अद्भु॑तः । मृ॒ळ ।
सु । नः॒ । भूतु॑ । ए॒षा॒म् । मनः॑ । पुनः॑ । अग्ने॑ । स॒ख्ये । मा रि॒षा॒म॒ । व॒यम् । तव॑ ।।

**स्कन्द–** अत्रेग्निहासमाचक्षते– 'मित्रो वरुणो मरुतश्च कुत्सस्य यज्ञमाजग्मुः । सोऽग्निस्तुत्या क्षिप्तमनाः तान्न तुष्टाव । तस्मै क्रुद्धा यज्ञाद्देवा जग्मुः । तत्प्रसक्तये कुत्सोऽग्निमुवाच' इति । **अयम् धायसे** सोमपानाय **मित्रस्य वरुणस्य** मरुतां च **अवयाताम्** अवशब्दोऽपेत्यस्य स्थाने । अस्मद्यज्ञादपगच्छताम् । **हेळः** क्रोधः **अद्रुतः** महान् । साकाङ्क्षत्वात् प्रसादेन व्यावर्तताम् इति वाक्यशेषः । एतत् कुर्वन् **मृळ सु** सुष्ठु सुखय **नः** अस्मान् । **भूतु एषाम् पुनः** अप्यस्मासु **मनः** । पुनरप्यस्मासु सानुग्रहचेतसो भवन्त्वित्यर्थः । किञ्च **अग्ने!** ।। १२ ।।

**वेङ्कटमाधव– अयम्** मित्रावरुणयोः सोमपानाय स्वर्गात् अधस्तात् आगच्छताम् **मरुताम्** च क्रोधो महान् भवति । यदि प्रमादोऽस्माकं भवति क्रुध्यन्तीत्यर्थः । एवं स्थिते तान् यजन् अस्मान् सुष्ठु सुखय । भवतु च **एषाम्** त्वत्प्रसादेन अस्मासु **मनः पुनः** अपि ।। १२ ।।

**मुद्गल– अयम्** अग्नेः स्तोता **मित्रस्य** अहरभिमानिनो देवस्य **वरुणस्य** रात्र्यभिमानिनश्च सम्बन्धिने **धायसे** धारणाय अवस्थापनाय भवतु । मित्रावरुणाविममग्नेः स्तोतारं धास्यतामित्यर्थः । **अवयाताम्** अवस्ताद्गच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानाम् मरुताम् एतत्संज्ञानां देवानाम् **हेळः** क्रोधः **अद्भुतः** महान् भवति । तस्मात् क्रोधात् इममग्नेः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः । अपि च नः अस्मान् हे **अग्ने! सु** मृळ सुष्ठु मृडय सुखय । **एषाम्** मरुताम् **मनः** च **पुनः भूतु** पुनरपि प्रसन्नं भवतु । अन्यत् समानम् ।। १२ ।।

**सायण– अयम्** अग्नेः स्तोता **मित्रस्य** अहरभिमानिनो देवस्य **वरुणस्य** रात्र्यभिमानिनश्च सम्बन्धिने **धायसे** धारणायावस्थापनाय भवतु । मित्रावरुणाविममग्नेः स्तोतारं धारयतामित्यर्थः । **अवयाताम्** अवस्ताद्गच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानां **मरुताम्** एतत्संज्ञानां देवानां **हेळः** क्रोधः **अद्भुतः** महान् भवति । अद्भुत इत्येतन्महन्नाम । तस्मात् क्रोधात् इममग्नेः स्तोतारं

मित्रावरुणौ रक्षतामिति शेषः । अपि च **नः** अस्मान् हे **अग्ने! सु मृळ** सुष्ठु मृडय सुखय । **एषां** मरुतां **मनः** च **पुनः भूतु** पुनरपि प्रसन्नं भवतु । अन्यत् समानम् ।

धायसे । 'वहिहाधाञ्भ्यश्छन्दसि' इति भावे असुन् । 'नित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युक् । अवयाताम् । 'या प्रापणे' । अस्मात् अवपूर्वात् लटः शतृ । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । मृळ । 'मृड सुखने' । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । भूतु । 'बहुलं छन्दसि' इति शपो लुक् ।। १२ ।।

**सिद्धाञ्जनम्– अयम्** अग्नेरुपासकः **मित्रस्य** देवस्य **वरुणस्य** देवस्य उभयोश्च **धायसे** धारणाय, स्वस्मिन्नवस्थापनाय प्रभवत्विति शेषः । **अवयाताम्** अवेत्युपसर्गः अधःपर्यायः प्राणक्षेत्रात् अन्तरिक्षादधस्तात् गच्छतां **मरुताम् हेळः** क्रोधः **अद्भुतः** महान् प्रसिद्धः । तस्मादपि रक्षतां मित्रावरुणौ मयि अवस्थापितौ । **नः** अस्मान् हे अग्ने, **सु मृळ** सुष्ठु सुखय, **एषाम्** मरुतां **मनः** चित्तं **पुनः भूतु** पुनरपि प्रसन्नं भवतु । अन्यत्समानम् ।

धायसे–धाञो भावेऽसुन्, आतो युक् । अवयाताम्–यातेः शतृ, षष्ठीबहुवचनम् । भूतु–शपो लुक् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।**
**शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ।। १३ ।।**

देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि । चारुः । अध्वरे । शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ।।

**स्कन्द– देवः** त्वं सर्वेषाम् **देवानाम् असि मित्रः अद्भुतः** हविर्वहनाद्युपकारकरणात् महत् मित्रमसि । **वसुः वसूनाम् असि** धनानां च त्वं धनमसि धनकार्यकरत्वात् । **चारुः अध्वरे** यज्ञे च शोभनोऽसि । तस्य **शर्मन्** शरणस्थाने वयम् **स्याम** भवेम । प्राप्नुयामेत्यर्थः । **तव** स्वभूते अग्निलोकाख्ये सप्रथस्तमे सर्वतः पृथुतमे । अथवा 'शर्म' (निघ.३।४) इति गृहनाम । गृहे स्याम तव सम्बन्धिनि सर्वपृथुतमे । त्वया दीयमानमस्यन्तविस्तीर्णं गृहं वयं प्राप्नुयामेत्यर्थः । किञ्च **अग्ने!** ।। १३ ।।

**वेङ्कटमाधव–** **देवः देवानाम् असि** सखा महान् । **वसुः वसूनाम्** इति । वसवः देवाः, तेषाम् अपि वासयिता भवसि कल्याणः त्वं यज्ञे । सुखे **स्याम तव** सर्वतः पृथुतमे ।।१३।।

**मुद्गल–** हे **अग्ने! देवः** द्योतमानस्त्वम् **देवानाम्** सर्वेषाम् **अद्भुतः** महान् **मित्रः असि** प्रौढः सखा भवसि । तथा **चारुः** शोभनस्त्वम् **अध्वरे** यज्ञे **वसूनाम्** सर्वेषां धनानाम् **वसुः असि** निवासयिता भवसि । अतोऽस्माकं वसूनि देहीत्यर्थः । किञ्च **सप्रथस्तमे** सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे **तव** त्वत्सम्बन्धिनि **शर्मन्** शर्मणि यज्ञगृहे **स्याम** वर्तमाना भवेम । अन्यत् पूर्ववत् ।। १३ ।।

**सायण–** हे **अग्ने! देवः** द्योतमानस्त्वं **देवानां** सर्वेषाम् **अद्भुतः** महान् **मित्रः असि** प्रौढः सखा भवसि । तथा **चारुः** शोभनस्त्वम् **अध्वरे** यज्ञे **वसूनां** सर्वेषां धनानां **वसुः असि** निवासयिता भवसि । अतोऽस्माकं वसूनि देहीत्यर्थः । किञ्च **सप्रथस्तमे** सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे **तव** त्वत्सम्बन्धिनि शर्मणि यज्ञगृहे **स्याम** वर्तमाना भवेम । अन्यत् पूर्ववत् ।

शर्मन् । 'सुपां सुलुक्' इति सप्तम्या लुक् ।। १३ ।।

**सिद्धाञ्जनम्–** हे **अग्ने!** त्वं **देवानाम्** सर्वेषां मध्ये **देवः** विशेषतो द्योतमानः सन् **अद्भुतः** महान् **मित्रः असि** प्रौढः सखा भवसि । **चारुः** रमणीयस्त्वं **अध्वरे** यज्ञयात्रायां **वसूनाम्** वर्तमानानां दिव्यानां धनानां **वसुः असि** निवासयिता भवति । **सप्रथस्तमे** सर्वतः पृथुतमे अत्यन्तं विस्तीर्णे **तव शर्मन्** त्वदीये शर्मणि शरणे वासस्थले **स्याम** वर्तमानाः भवेम । 'ऋतं बृहत्' अग्नेः स्वं गृहं तदुरु भवति त्रैलोक्यादुपरि, तत्र स्यामेत्युक्तम् । अन्यत् प्राग्वत् ।

शर्मन्–सुपां सुलुगिति सप्तम्या लुक् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**तत् ते भ॒द्रं यत् समि॑द्धः॒ स्वे दमे॒ सोमा॑हुतो॒ जर॑से मृळयत्त॑मः ।**
**दधा॑सि॒ रत्नं॒ द्रवि॑णं च दा॒शुषेऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ।। १४ ।।**

**तत् । ते॒ । भ॒द्रम् । यत् । सम्ऽइ॑द्धः । स्वे । दमे॑ । सोम॑ऽआहुतः । जर॑से । मृ॒ळयत्ऽत॑मः । दधा॑सि । रत्न॑म् । द्रवि॑णम् । च॒ । दा॒शुषे॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ।। १४ ।।**

**स्कन्द– तत्** चेष्टितं कर्म वा **ते** तव **भद्रम्** कल्याणम् । **यत् समिद्धः** सन् **स्वे दमे** यज्ञगृहे । **सोमाहुतः** सोमयागेनाहुतः सन् । **जरसे** होतृत्वात् स्तौषि देवताः, स्तूयसे वा ऋत्विग्भिः । **मृळयत्तमः** यष्टॄणां च स्तोतॄणां च सुखयितृतमः । यच्च **दधासि** ददासि **रत्नम्** माणिक्यादि **द्रविणम्** धनम् च सुवर्णादि **दाशुषे** यजमानाय । किञ्च **अग्ने**! ।। १४ ।।

**वेङ्कटमाधव– तत्** तव कल्याणम्, **यत्** त्वम् प्रज्वलितः **स्वे** यज्ञगृहे सोमेन आहुतः सन् देवान् स्तौषि सुखयितृतमः । यच्च त्वम् **रत्नम्** धनम् च यजमानाय प्रयच्छसि । **अग्ने! सख्ये** इति ।। १४ ।।

**मुद्गल–** हे अग्ने! **ते** त्वत्सम्बन्धि **तत्** वस्तु **भद्रम्** भजनीयम् । प्रशस्तमित्यर्थः । किं पुनस्तत् । **स्वे दमे** स्वकीये उत्तरवेदिलक्षणे निवासस्थाने । तस्यामुत्तरवेद्यां **समिद्धः** सम्यगिद्धः प्रज्वलितः **सोमाहुतः** हुतेन सोमरसेन सन्तर्पितः सन् **जरसे** ऋत्विग्भिः स्तूयसे इति यदस्ति । तद्भद्रमित्यर्थः । एवं प्रशस्तस्त्वम् **मृळयत्तमः** अतिशयेनास्माकं सुखयिता भूत्वा **रत्नम्** रमणीयं कर्मफलम् **द्रविणम्** धनम् **च दाशुषे** हविर्दत्तवते यजमानाय **दधासि** प्रयच्छसि । अन्यत् समानम् ।। १४ ।।

**सायण–** हे **अग्ने! ते** त्वत्सम्बन्धि **तत्** खलु **भद्रं** भजनीयम् । प्रशस्तमित्यर्थः । किं पुनस्तत् । **स्वे दमे** स्वकीये उत्तरवेदिलक्षणे निवासस्थाने । 'तस्यैष स्वो लोको यदुत्तरवेदीनाभिः' (ऐ.ब्रा.१.२८) इति श्रुतेः । तस्यामुत्तरवेद्यां **समिद्धः** सम्यगिद्धः प्रज्वलितः **सोमाहुतः** हुतेन सोमरसेन सन्तर्पितः सन् **जरसे** ऋत्विग्भिः स्तूयसे इति यदस्ति तद्भद्रमित्यर्थः । एवं प्रशस्तस्त्वं **मृळयत्तमः** अतिशयेनास्माकं सुखयिता भूत्वा **रत्नं** रमणीयं कर्मफलं **द्रविणं** धनं **च दाशुषे** हविर्दत्तवते यजमानाय **दधासि** प्रयच्छसि । अन्यत् समानम् ।

समिद्धः । 'ञिइन्धी दीप्तौ' । कर्मणि निष्ठा । 'श्वीदितो निष्ठायाम्' इति इट्प्रतिषेधः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सोमाहुतः । सोमेनाहुता । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । जरसे । जरतिः स्तुतिकर्मा । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । यद्वृत्तयोगादनिघातः । दधासि । 'अनुदात्ते च' इति अभ्यस्तस्य आद्युदात्तत्वम् ।। १४ ।।

**सिद्धाञ्जनम्– तत्** वक्ष्यमाणलक्षणं ते त्वदीयं **भद्रम्** दुरितप्रतिद्वन्द्वि नित्यकल्याणम् ।

प्रथमसूक्ते भद्रशब्दार्थस्य वैशिष्ट्यं सविस्तरं प्रपञ्चितम् । **समिद्धः** सम्यक् प्रज्वलितः **स्वे दमे** स्वीये गृहे 'ऋते सत्ये बृहति' **सोमऽआहुतः** सोमेन रसेन सन्तर्पितः सन् **जरसे** स्तूयसे महर्षिभिरिति शेषः, इति **यत्** यदस्ति, तत् ते भद्रमिति सम्बन्धः । एवमुत्तमस्त्वं **मृळयत्तमः** अतिशयेन सुखयिता **रत्नम्** रमणीयं हर्षाधायकं रतिसुखं **द्रविणम्** च उत्तमं धनं च **दाशुषे** यजमानाय दधासि धारयसे, प्रयच्छसि । समानमन्यत् ।

समिद्धः– इन्धी दीप्तौ, कर्मणि निष्ठा । जरसे–जरतिः स्तुतिकर्मा, व्यत्ययेन कर्मणि कर्तृप्रत्ययः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।**
**यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ।। १५ ।।**
**यस्मै । त्वम् । सुऽद्रविणः । ददाशः । अनागाःऽत्वम् । अदिते । सर्वऽताता । यम् । भद्रेण । शवसा । चोदयासि । प्रजाऽवता । राधसा । ते । स्याम ।। १५ ।।**

**स्कन्द– यस्मै त्वम्** हे **सुद्रविणः**! सुधन! सुबल! वा । **ददाशः** ददासि । किम् । उच्यते । **अनागस्त्वम्** आगः पापमुच्यते । अपापत्वम् अपुण्यवर्जितत्वम् । हे **अदिते**! अदितिर्देवमाता । तच्छब्देनेदं सोऽयमित्यभिसम्बन्धात् पुत्रस्याग्नेरभिधानम् । अदितेः पुत्र इत्यर्थः । अथवा अदितिशब्दः अदीनपर्यायः । अदीन! क्षयवर्जित इत्यर्थः । **सर्वताता** सर्वशब्दादयम् 'सर्वदेवात्तातिल्' (पा.४,४,१४२) 'इत्येवं स्वार्थिकस्तातिल्प्रत्ययः । सप्तम्याश्च डादेशः । सर्वत्रेत्यर्थः । अथवा अनागास्त्वम् इति आगश्शब्द अपराधवचनः । सर्वतातेत्यपि सर्वैव ऐष्टिकपाशुकसौमिकरूपा कर्मसन्ततिर्यज्ञ उच्यते । यस्मै वैगुण्यलक्षणापराधवर्जितत्वं यज्ञेषु ददासि, तस्य विगुणमपि यज्ञं सगुणं करोषीत्यर्थः । **यम्** च **भद्रेण शवसा** 'इत्थंभूतलक्षणे' (पा.२,३,२१) इत्येवमेषा तृतीया । भद्रेण बलेन सम्बद्धम् । चोदयासि तत्रतत्र प्रवर्तयसि । यं भद्रेण बलेन संयोज्य 'तत्र तत्र विनियोजयसि इत्यर्थः । न च केवलेन बलेन । **प्रजावता राधसा** प्रजासहितेन च धनेन । **ते** वयम् एव **स्याम** । अस्माकमेव सर्वमिदं कुर्वित्यर्थः ।।

**वेङ्कटमाधव– यस्मै त्वम्** अग्ने! शोभनधन! प्रयच्छसि अपापवादम् अखण्डित! यज्ञे

कृते, **यम्** च **त्वं** कल्याणेन बलेन सयोज्य युद्दे प्रेरयसि, यं वा **प्रजावता** धनेन संयोजयसि, वयं च **ते** भवाम । 'ते वयम् इह स्याम' इति यास्कः (११,२४) ।। १५ ।।

**मुद्गल–** हे **सुद्रविण!** शोभनधन! **अदिते!** अखण्डनीयाग्ने! **सर्वताता** सर्वासु कर्मततिषु यज्ञेषु वर्तमानाय **यस्मै** यजमानाय अनागास्त्वम् अपापात्वं पापराहित्येन कर्मार्हताम् **त्वम् ददाशः** प्रयच्छसि, स यजमानः समृद्धो भवति । यम् च यजमानम् **भद्रेण** भजनीयेन कल्याणेन **शवसा** बलेन **चोदयासि** संयोजयसि सोऽपि समृद्धो भवति । **वयं** च स्तोतारः **प्रजावता** प्रजाभिः पुत्रपौत्रैर्युक्तेन **ते राधसा** त्वया दत्तेन धनेन युक्ताः **स्याम** भवेम ।। १५ ।।

**सायण–** हे **सुद्रविणः!** शोभनधन **अदिते** अखण्डनीयाग्ने **सर्वताता** सर्वासु कर्मततिषु यद्वा सर्वेषु यज्ञेषु वर्तमानाय **यस्मै** यजमानाय **अनागास्त्वम्** अपापत्वं पापराहित्येन कर्मार्हतां **त्वं ददाशः** प्रयच्छसि स यजमानः समृद्धो भवति । **यं** च यजमानं **भद्रेण** भजनीयेन कल्याणेन **शवसा** बलेन **चोदयासि** संयोजयसि सोऽपि समृद्धो भवति । वयं च स्तोतारः **प्रजावता** प्रजाभिः पुत्रपौत्रैर्युक्तेन **ते राधसा** त्वया दत्तेन धनेन युक्ताः **स्याम** भवेम ।

सुद्रविणः । शोभनानि द्रविणानि धनानि यस्य । 'द्रु गतौ' । 'द्रुदक्षिभ्यामिनन्' (उ.सू.२.२०८) । द्रविणशब्दस्यान्ते सकारोपजनश्छान्दसः । ददाशः । 'दाशृ दाने' । लोटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सर्वताता । 'सर्वदेवात्तातिल्' इति स्वार्थे तातिल्प्रत्ययः । यास्कपक्षे तु सर्वाः स्तुतयो येषु यागेष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्णव्यापत्त्या आत्वम् । उभयत्रापि 'सुपां सुलुक्' इति सप्तम्या डादेशः । चोदयासि । 'चुद प्रेरणे' । लेटि आडागमः ।। १५ ।।

**सिद्धाञ्जनम्–** हे **सुद्रविणः!** शोभनधन, **अदिते** अखण्डस्वरूप, अग्ने, **सर्वताता** सर्वतातौ सर्वेषु ज्ञानक्रियाव्यापारेषु **यस्मै** यजमानाय **अनागास्त्वम्** अदोषत्वं, पापराहित्यं **ददाशः त्वम्** ददासि, स धन्यः । **यम्** यं च **भद्रेण** कल्याणेन **शवसा** उज्ज्वलबलेन चोदयासि संयोजयसि स च भाग्यवान् । वयमपि **ते** तव **प्रजावता** सन्ततियुक्तेन **राधसा** उत्तमेन धनेन युक्ताः **स्याम** भवेम ।

सुद्रविणः–शोभनानि द्रविणानि यस्य, सकारोपजनश्छान्दसः, द्रु गतौ । ददाशः–शपः श्लुः

लेट्यडागमः । सर्वताता–सर्वदेवात्तातिलिति स्वार्थे तातिल्प्रत्ययः । चोदयासि–चुद प्रेरणे, लेट्याडागमः ।। १५ ।।

## ऋक्संहिता पदपाठसहिता

**स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। १६ ।।**

**सः । त्वम् । अग्ने । सौभगऽत्वस्य । विद्वान् । अस्माकम् । आयुः । प्र । तिर । इह । देव । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ।। १६ ।।**

**स्कन्द–** 'उत्तमायास्त्वृचोऽर्धं तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो वात्र षड्भ्यः कृताभ्यः । अध्यायस्य सूक्तस्य वा उत्तमाया अस्या ऋचः उत्तरमर्धं तस्यैव वा यस्य तत् पूर्वमुक्तम् अग्नेः, मित्रादिभ्यो वा षड्भ्यो देवताभ्यः अत्रैव ऋचि कृताभ्यो व्यवस्थिताभ्यः निगदिताभ्य इत्यर्थः । 'एतनोदर्कः' । बहुदेवत्येषु समानधर्मा पुनरुक्त उदर्क इत्युच्यते । बहुदेवतेषु उक्तेषु 'चन्द्रमा अप्सु' (ऋ.१,१०५,१), 'तक्षन्रथम्' (ऋ१,१११,१) इत्यादिषु, द्विदेवतेषु 'य इन्द्राग्नी चित्रतमः' (ऋ १,१०८,१), 'ईळे द्यावापृथिवी' (ऋ १,११२,१) इत्यादिषु यः सूक्ताध्याययोरर्धर्च उदर्कः स एतेनार्धर्चेन समानधर्मा वेदितव्यः । यथैष प्रकृतदेवताकः नियमितमित्रादिदेवताको वा, एवं सोऽपीत्यर्थः । तत्र प्रकृताग्निदेवताकता तावदस्यार्धर्चस्य एव । एवमस्या ऋचोऽर्धयोजना । य उक्तगुणोऽसि सः **त्वम्** हे **अग्ने!** सौभगत्वस्य 'भगः' (निघ.२,१०) इति धननाम । शोभनं धनं हविर्लक्षणं यस्य स सुभगः । सुभग एव सौभगः । स्वार्थिकस्तद्धितः । तस्य भावः सौमगत्वम् । तस्य **सौभगत्वस्य विद्वान्** । सहविष्कतामस्माकं जानन्नित्यर्थः । **अस्माकम् आयुः प्र तिर** प्रवर्धय । **इह** जन्मनि लोके वा हे **देव!** । **तत्** च **नः** त्वया प्रवर्ध्यात्मानं त्वत्प्रसादादेव ममहन्ताम् अत्यर्थं पूजयन्तु । अनुमन्यन्तामित्यर्थः । के । **मित्रः वरुणः अदिति सिन्धु पृथिवी उत द्यौः** । एवमग्नेः प्राधान्यं मित्रादीनां चाप्राधान्यम् । अतोऽस्य सूक्तस्याग्नेयत्वे न व्याघातः । मित्रादिदेवताकत्वे तु पूर्वानपेक्ष एषोऽर्धर्चो योजयितव्यः । त्वम् अग्ने! अस्माकमायुः प्रवर्धय । तत् ते मित्रादयोऽपि मामहन्ताम् । न केवलोऽग्निरेवेति ।। १६ ।।

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ।।

।। इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये षष्ठोऽध्यायः ।।

**वेङ्कटमाधव–** सः **त्वम् अग्ने!** सौभाग्यं कर्तुं जानन् **अस्माकम् आयुः** वर्धय अस्मिन् स्तोत्रे सति **देव!** । **तत्** इदम् अग्नेः स्तोत्रं मित्रादयोऽपि पूजयन्तु इति ।। १६ ।।

इत्येवं षष्ठमध्यायं व्याकरोत् प्रथमेऽष्टके ।
भरतस्य कुले जातो माधवो वेङ्कटात्मजः ।। १ ।।

।। इति वेङ्कटमाधवाचार्यविरचिते ऋक्सहिताव्याख्याने प्रथमाष्टके षष्ठोऽध्यायः ।।

**मुद्गल–** हे **देव!** दानादिगुणयुक्त! **अग्ने! सः** पूर्वोक्तगुणविशिष्टः त्वम् सौभगत्वस्य सुभगत्वं सौभाग्यम् **विद्वान्** जानन् इह अस्मिन् कर्मणि **अस्माकम् आयु प्र तिर** प्रवर्धय । त्वया प्रवर्धितम् **नः** अस्माकम् **तत्** आयुर्मित्रादयः षड् देवताः **ममहन्ताम्** पूजयन्ताम् । रक्षन्त्वित्यर्थः । **मित्रः** प्रमीतेस्त्राता । **वरुणः** अनिष्टानां निवारयिता । **अदितिः** अदीना अखण्डनीया वा देवमाता । **सिन्धुः** स्यन्दनशीलोदकात्मा देवता । **पृथिवी** प्रथिता भूदेवता । **उत** इति समुच्चये । **द्यौः** प्रकाशमाना द्युलोकात्मा देवता । एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहन्तामिति पूर्वत्रान्वयः ।। १६ ।।

।। इति प्रथमाष्टके षष्ठाध्याये द्वात्रिंशो वर्गः ।।

।। इति ऋग्वेदे सभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ।।

**सायण–** हे **देव!** दानादिगुणयुक्त **अग्ने! सः** पूर्वोक्तगुणविशिष्टः **त्वं सौभगत्वस्य** सुभगत्वं सौभाग्यं **विद्वान्** जानन् इह अस्मिन् कर्मणि **अस्माकमायुः प्र तिर** प्रवर्धय । प्रपूर्वस्तिरतिर्वर्धनार्थः । त्वया प्रवर्धितं **नः** अस्माकं **तत्** आयुः मित्रादयः षड्देवताः **ममहन्तां** पूजयन्तां रक्षन्त्वित्यर्थः । **मित्रः** प्रमीतेस्त्राता **वरुणः** अनिष्टानां निवारयिता **अदितिः** अदीना अखण्डनीया वा देवमाता **सिन्धुः** स्यन्दनशीलोदकात्मा देवता **पृथिवी** प्रथिता भूदेवता । **उत** इति समुच्चये । **द्यौः** प्रकाशमाना द्युलोकात्मा देवता । एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहन्तामिति पूर्वत्रान्वयः ।

सौभगत्वस्य । सुभगस्य भावः सौभगम् । 'सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् भावे अञ् । पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी । ममहन्ताम् । 'मह पूजायाम्' । भौवादिकः । लोटि 'बहुलं छन्दसि' इति शपः श्लुः । तुजादित्वात् अभ्यासस्य दीर्घत्वम् ।। १६ ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

**।। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ।।**

**सिद्धाञ्जनम्–** हे **देव! अग्ने, सः त्वम्** पूर्वोक्तविधस्त्वं **सौभगत्वस्य विद्वान्** सौभाग्यं जानन् **इह** अस्मिन् लोके **अस्माकम् आयुः** अस्मदीयं सशरीरजीवनं **प्रतिर** प्रवर्धय, येन वयं त्वद्युक्ताः तावकाः स्यामेति विवक्षा । **नः** अस्माकं **तत्** देवार्थं आयुः मित्रादयः वक्ष्यमाणाः **ममहन्ताम्** पूजयन्तां अभिमान्य रक्षन्तु । के ते देवाः? **मित्रः वरुणः अदितिः** देवमाता **सिन्धुः** स्यन्दनशीलाः आपः **पृथिवी उत** चार्थे **द्यौः** द्युलोकाधिष्ठाता देवः ।

ममहन्ताम्–मह पूजायाम्, लोटि शपः श्लुः ।। १६ ।।

**।। इति प्रथमाष्टके षष्ठोऽध्याये द्वात्रिंशो वर्गः ।।**

**।। प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ।।**

## ।। अथ सप्तमोऽध्यायः ।।

## ।। अथ प्रथमो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

(सूक्तम् ९५)

(११ कुत्स आङ्गिरसः । अग्निः औषसोऽग्निर्वा । त्रिष्टुप्)

**द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।**
**हरिरन्यस्यां भवति स्वधावाञ् छुक्रो अन्यस्यां ददृशे सुवर्चाः ।। १ ।।**

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे । अन्याऽअन्या । वत्सम् । उप । धापयेते इति । हरिः । अन्यस्याम् । भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ।। १ ।।

**स्कन्द–** 'औषसाय वा' । 'द्वे विरूपे चरतः' इत्यौषसाय वा अग्नये शुद्धाय वा । शुद्धस्य त्वत्राग्नेः स्तुतिर्दृश्यते नौषसस्य । **द्वे** रात्र्युषसौ **विरूपे** विभिन्नरूपे **चरतः** रात्रिर्गता उषा आगता, उषा गता रात्रिरागता, एवं गच्छतः । **स्वर्थे** अर्थशब्दः अर्तेर्गत्यर्थस्य गमनवचनः प्रयोजनवचनो वा । शोभनगमने शोभनप्रयोजने वा । **अन्यान्या वत्सम्** अन्योन्यस्य च वत्सस्थानीयम् अग्निम् । अग्निः हि रात्र्युषसोरुभयोः अपि वत्सस्थानीयः, तत्र जायमानत्वात् । **उप धापयेते** धेट् पाने । उपगम्य धापयतः पाययतः । किम् । सामर्थ्यात् आहुतीः । रात्रिर्हि उपगम्य सायमाहुतीरग्निं पाययति, प्रातराहुतीरूपाः । पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये द्वे रात्र्युषसौ चरतः अन्योन्यस्य च वत्सस्थानीयम् अग्निम् उपधापयेते, तयोः **हरिः अन्यस्याम् भवति** हरितवर्ण एकस्यां रात्रौ **स्वधावान्** अन्नवानग्निः, **शुक्रः अन्यस्याम् ददृशे** शुक्रवर्णोऽन्यस्यां दृश्यते उषसि । उषसा चात्र तत्समनन्तरभाव्यहर्लक्ष्यते । अहन्यादित्यात्मना व्यवस्थितः सन् शुक्ररूपोऽग्निर्दृश्यत इत्यर्थः । **सुवर्चाः** सुदीप्तः ।। १ ।।

**वेङ्कटमाधव–** 'अध्यायम् **'द्वे विरूपे'** च माधवो व्याचिकीर्षति ।
अन्वादेशस्य विषये वक्तव्यं सम्प्रदर्शयन् ।। १ ।।

'अस्य' इति प्रथमादेश उदात्तं स्मर्यते पदम् ।
अन्वादेशे चानुदात्तम् 'अस्य वामस्य' दृश्यते ।। २ ।।

'अस्येदु मातुः सवने' ननूदात्तोऽत्र दृश्यते ।
'अस्मा अस्य' इति सूक्तेऽस्मिन्निन्द्र एवापदिश्यते ।। ३ ।।

ऋच्येकस्यामन्वादेश इति वक्तुं न युज्यते ।
'युञ्जन्त्यस्य काम्याया' भिन्नयामपि दर्शनात् ।। ४ ।।

'नास्मै विद्युन्न तन्यतुः', 'नकिरस्य सहन्त्य' च ।
'एवा ह्यस्य सूनृता' ऋचश्चात्र निदर्शनम् ।। ५ ।।

'दिवीश्चदस्य वरिमा' सूक्तादौ च प्रदृश्यते ।
अन्वादेशः पूर्वसूक्ते स्तुतस्यैव पुनः स्तुतौ ।। ६ ।।

अन्वादेशः पादमध्ये सर्वत्रेति न युज्यते ।
यस्मादुदात्ता दृश्यन्ते पादमध्येऽपि तद्यथा ।। ७ ।।

'मार्किर्नो अस्य परिषूतिः 'अग्ने चिकिद्ध्यश्स्य नः ।
पादो 'ज्यायांसमस्य' इति सर्वे तत्र निदर्शनम् ।। ८ ।।

पादादिष्वनुदात्तोऽस्य न कदाचन दृश्यते ।
उदात्ताः पादमध्येऽपि दृश्यन्ते बहवस्तथा ।। ९ ।।

वाक्यादावपदिष्टोऽपि लौकिकैरपदिश्यते ।
उच्चैर्धर्मी ततस्तत्र नान्वादेशस्य सम्भवः ।। १० ।।

पूर्वस्मिन् प्रकृते वाक्ये वाक्यमध्येऽपदिश्यते ।
नीचैरर्थस्वभावेन सोऽन्वादेशः स्मृतो बुधैः ।। ११ ।।

कुत्सः । **द्वे** भिन्नरूपे **चरतः** शोभनकार्ये, **अन्यान्या च वत्सम्** उपधापयतः । तत्र **आदित्यः अन्यस्याम्** अह्नि **वलवान् भवति**, शुक्रवर्णः अग्निः रात्रौ **ददृशे** सुदीप्तिः ।। १ ।।

**मुद्गल**– प्रथमे मण्डले पञ्चदशोऽनुवाके प्रथमं सूक्तं व्याख्यातम् । 'द्वे विरूपे' इत्येकादशर्चं द्वितीयं सूक्तम् । आङ्गिरसः कुत्स ऋषिः । त्रिष्टुप् छन्दः । औषसगुणविशिष्टाग्निः देवता शुद्धोऽग्निर्वा देवता ।।

**स्वर्थे** स्वरणे शोभनगमनागमने **विरूपे** विषमरूपे शुक्लकृष्णतया नानारूपे **द्वे** अहोरात्रे **चरतः** पुनःपुनः पर्यावर्तेते । ते चाहोरात्रे अग्नेः सूर्यस्य च जनन्यौ । तत्र रात्रेः पुत्रः सूर्यः । स हि गर्भवत् रात्रावन्तर्हितः सन् तस्याः चरमभागादुत्पद्यते । अह्नः पुत्रोऽग्निः । स हि तत्र विद्यमानोऽपि प्रकाशराहित्येन असत्कल्पः सन् तस्मात् अह्नः सकाशात् निर्मुक्तः प्रकाशमानं स्वात्मानं लभते । अतोऽनयोरेतयोः पुत्रत्वम् । ते चाहोरात्रे **वत्सम्** स्वंस्वं पुत्रम् **अन्यान्या** परस्परव्यतिहारेण **उप धापयेते** स्वकीयं रसं पाययतः । यद्रात्र्या कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य पायनं तदहः करोति । यदह्नः कर्तव्यं स्वपुत्रस्याग्ने रसस्य पायनं **तद्रात्रिः** करोति । एतच्च सायंप्रातःकालीनाहुत्यभिप्रायम् । यस्मादेवं तस्मात् **अन्यस्याम्** स्वजनन्याः अन्यस्याम् अहरात्मिकायाम् अग्नेर्जनन्याम् **हरिः** रसहरणशील आदित्यः **स्वधावान्** हविर्लक्षणान्नवान् **भवति । शुक्रः** निर्मलदीप्तिरग्निः स्वजनन्याः **अन्यस्याम्** रात्र्यामादित्यस्य जनन्याम् **सुवर्चाः** शोभनदीप्तियुक्तः सन् **ददृशे** दृश्यते ॥ १ ॥

**सायण–**

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

प्रथमे मण्डले पञ्चदशेऽनुवाके प्रथमं सूक्तं व्याख्यातम् । 'द्वे विरूपे' इत्येकादशर्चं द्वितीयं सूक्तम् । अत्रानुक्रम्यते– 'द्वे एकादशौषसाय वाग्नये' इति । 'ऋषिश्चान्यस्मात्' इति परिभाषया कुत्सस्यानुवृत्तेराङ्गिरसः कुत्सः ऋषिः । अनादेशपरिभाषया त्रिष्टुप् छन्दः । उषसि प्रातःकाले हविर्भाक् योऽग्निरस्ति स देवता । यद्वा 'आग्नेयं तत्' इति पूर्वत्रोक्तत्वात् तुह्यादिपरिभाषया इदमादीनि पञ्च सूक्तानि केवलाग्निदेवत्यानि । अतोऽस्य सूक्तस्य औषसगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वा देवता इति वाशब्दार्थः । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादिके द्वे सूक्ते । तथा च सूत्रितम् 'अथैतस्याः' इति खण्डे– 'द्वे विरूपे इति सूक्ते' (आश्व.श्रौ.४.१३) इति । आश्विनशस्त्रे चैते 'प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य' (आश्व.नौ६.५) इत्यतिदिष्टत्वात् ।

**स्वर्थे** स्वरणे शोभनगमनागमने । यद्वा । अर्थः प्रयोजनम् । शोभनप्रयोजनोपेते **विरूपे** विषमरूपे शुक्लकृष्णतया नानारूपे **द्वे** अहोरात्रे **चरतः** पुनः पुनः पर्यावर्तेते । ते चाहोरात्रे

अग्नेः सूर्यस्य च जनन्यौ । तत्र रात्रेः पुत्रः सूर्यः । स हि गर्भवत् रात्रावन्तर्हितः सन् तस्याः चरमभागादुत्पद्यते । अह्नः पुत्रोऽग्निः । स हि तत्र विद्यमानोऽपि प्रकाशराहित्येन असत्कल्पः सन् तस्मात् अह्नः सकाशात् निर्मुक्तः प्रकाशमानं स्वात्मानं लभते । अनयोरेतयोः पुत्रत्वं च तैत्तिरीयैराम्नायते– 'तयोरेतौ वत्सौ । अग्निश्चादित्यश्च । रात्रेर्वत्सः । श्वेत आदित्यः । अह्नोऽग्निः ताम्रो अरुणः' (तै.आ.१.१०) इति । ते चाहोरात्रे **वत्सं** स्वं स्वं पुत्रम् **अन्यान्या** परस्परव्यतिहारेण **उप धापयेते** स्वकीयं रसं पाययतः । यद्रात्र्या कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य पायनं तदहः करोति । यदह्ना कर्तव्यं स्वपुत्रस्याग्नेः रसस्य पायनं तद्रात्रिः करोति । एतच्च सायंप्रातः कालीनाहुत्यभिप्रायम् । श्रूयते च– 'तस्मादग्नये सायं हूयते सूर्याय प्रातः' (तै.ब्रा.२.१.२६) इति । यस्मादेवं तस्मात् **अन्यस्यां** स्वजनन्याः अन्यस्याम् अहरात्मिकायामग्नेर्जनन्यां **हरिः** रसहरणशील आदित्यः **स्वधावान्** हविर्लक्षणान्नवान् **भवति** । **शुक्रः** निर्मलदीप्तिरग्निः स्वजनन्याः **अन्यस्यां** रात्र्यामादित्यस्य जनन्यां **सुवर्चाः** शोभनदीप्तियुक्तः सन् ददृशे दृश्यते ।

स्वर्थे । 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' इति भावे कर्मणि वा थन्प्रत्ययः नित्त्व-दाद्युदात्तत्वम् । शोभनोऽर्थो ययोस्ते । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अन्यान्या । 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम्' (पा.म.८.१. १२.११) इति द्विर्भावः । बहुलग्रहणात् समासवद्भावाभावे 'तस्य परमाम्रेडितम्' इति परस्याम्रेडितसंज्ञायाम् 'अनुदात्तं च' इति आम्रेडितानुदात्तत्वम् । धापयेते । 'धेट् पाने' । 'आदेचः' इति आत्वम् । ततो हेतुमति णिच् । 'अर्तिह्री' (पा.सू.७.३.३६) इत्यादिना धातोः पुगागमः । तत्र हि लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ज्ञापितं 'शाच्छासाह्वाव्या' इति कृतात्वानां निर्देशेन । स हि युक्प्राप्तिख्यापनार्थः । यदि तत्र लक्षणप्रतिपदोक्तपरिभाषया षुक् न प्राप्नोति सोऽनर्थकः स्यात् । तस्मात् अध्यापयति इत्यादाविव धापयेते इत्यत्रापि पुगागमः सिद्धः । 'निगरणचलनार्थेभ्यश्च' (पा.सू.१.३.८७) इति प्राप्तस्य परस्मैपदस्य 'पादिषु धेट् उपसङ्ख्यानम्' (पा.सू.१.३.८९.१) इति प्रतिषेधात् आत्मनेपदम् । हरिः । 'हृञ् हरणे' औणादिकः इन्प्रत्ययः । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । भवति । 'एकान्याभ्यां समर्थाभ्याम्' (पा.सू.८.१.६५) इति प्रथमायाः तिङ्विभक्तेः निघातप्रतिषेधः । ददृशे । दृशेः

'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । सुवर्चाः । शोभनं वर्चस्तेजो यस्य । 'सोर्मनसी अलोमोपसी' इत्युत्तरपदाद्युदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्– स्वर्थे** शोभनः अर्थः प्रयोजनं ययोस्ते **विरूपे** विभिन्नरूपे **द्वे** अहोरात्रस्वरूपे, प्रकाशाप्रकाशदशावस्थाने कालात्मानौ इत्यर्थः **चरतः** पर्यावृत्त्या गच्छतः । ते अहोरात्रस्वरूपे **अन्यान्या** परस्परव्यतिहारेण **वत्सम्** जातं शिशुं अग्निं **उपधापयेते** स्वीयं रसं पाययतः । दिव्यसम्पत्तये यज्ञयात्रां कुर्वतो यजमानस्यान्तरग्नौ प्रादुर्भूते सति, तं जातं अहश्च रात्रिश्च पोषयतः । अहःशब्देन प्रकाशदशा रात्रिशब्देन अप्रकाशदशा च लक्षिते । पर्यायेण प्रकाशाप्रकाशी भवतः । अप्रकाशे सर्वस्य प्रपञ्चस्य विस्मृतिः, प्रकाशे तु उज्ज्वला स्मृतिः । प्रकाशदशानुभूतीनां स्वात्मसात्काराय अप्रकाशावस्था आवश्यकी भवति । तत्रापि अग्निर्जागरूकः पोष्यत इति रहस्यम् । 'अहश्च कृष्णं अहरर्जुनं च' (६.९.१) इत्यादिमन्त्रान्तराणां इदमेव रहस्यम् । न चेत् कथं अहः कृष्णं कृष्णवर्णं भवेत्? एकदा अप्रकाशः अन्यदा प्रकाश इति खल्वाशयः ।

**अन्यस्याम्** अहोरूपायां प्रकाशावस्थायां **हरिः** सूर्यः **स्वधावान्** स्वधारणशक्तियुक्त उज्ज्वलन् **भवति** स्वप्रकाशं ख्यापयन् वर्तते । **अन्यस्याम्** रात्रिस्वरूपायां अप्रकाशावस्थायां **शुक्रः** निर्मलदीप्तिः अग्निः **सुवर्चाः** शोभनवर्चस्कः **ददृशे** दृश्यते । दशाद्वयेऽपि यजमानजातस्याग्नेः संवर्धनं भवत्येवेत्युक्तम् ।

अन्यान्या– कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः । धापयेते–धेट् पाने, हेतुमण्णिन् । ददृशे– दृशेः छन्दसि वर्तमाने लिट् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम् ।**
**तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ।। २ ।।**
दश । इमम् । त्वष्टुः । जनयन्त । गर्भम् । अतन्द्रासः । युवतयः । विऽभृत्रम् । तिग्मऽअनीकम् । स्वऽयशसम् । जनेषु । विरोचमानम् । परि । सीम् । नयन्ति ।। २ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'सर्वमिदमन्धेन तमसा क्षणेनैवावृतमभवत् । अथ त्वष्टा दिक्ष्वग्निमजनयत् । तस्मिन्नतृप्यति प्रवर्धमाने आकाशं प्राज्वलत् । तं दिशः द्यावापृथिव्यौ चामृतेन

तर्पयित्वा तत्रतत्र विहृतवत्यः' इति । तदेतदिहोच्यते– 'दशेमं त्वष्टुः' इति । चतस्रो दिशः चतस्रश्चाऽवान्तरदिशः ऊर्ध्वम् अध इति एता **दश** दिशः **इमम्** अग्निम् **त्वष्टुः** सकाशात् **जनयन्त** जनितवत्यः । **गर्भम्** अपत्यभूतम् । **अतन्द्रासः** अनलसाः **युवतयः** तरुण्यः । **विभृत्रम्** तत्रतत्र विह्रियतेऽसाविति विभृत्रः तं विभृत्रम् । **तिग्मानीकम्** तिग्मशब्दस्तीक्ष्णवचनः । अनीकमित्यपि लोके खड्गस्य मुखमुच्यते । इह तु तीक्ष्णाग्रत्वादेस्तत्सादृश्यात् ज्वाला उच्यन्ते । तीक्ष्णज्वालमित्यर्थः । अथवा ब्राह्मणानीकं क्षत्रियानीकमिति प्रयोगदर्शनादनीकशब्दः समूहवचनः । सामर्थ्याच्चेह ज्वालासमूहमाह, नान्यम् । तीक्ष्णज्वालासमूहमित्यर्थः । **स्वयशसम्** आत्म-निमित्तकीर्तिम् । जनयित्वाऽमृतेन तर्पयित्वा **जनेषु** मनुष्येषु **विरोचमानम्** विविधं दीप्यमानम् **परि सीम् नयन्ति** परीति सर्वतोभावे । सीमिति पदपूरणः । नयन्तीति भूते लट्, छान्दसत्वात् । सर्वतो नीतवत्य इत्यर्थः ।। २ ।।

**वेङ्कटमाधव– दश** दिशः एनम् अग्निं त्वष्ट्रा दिक्षु निषिक्तं गर्भभूतं जनितवत्यः अनलसाः **युवतयः** धारकम् यद्वा इतस्ततः विहृतम् । तीक्ष्णज्वालं स्वभूतकीर्तिं मनुष्येषु परिणयन्ति **विरोचमानम्** परितः ।। २ ।।

**मुद्गल– अतन्द्रासः** स्वकार्ये जगतः पोषणे अनलसाः आलस्यरहिताः । जागरूका इत्यर्थः । **युवतयः** नित्यतरुण्यः । अजरामरणा इत्यर्थः । एवम्भूताः **दश** प्राच्याद्या दशसङ्ख्या-काः दिशः **गर्भम्** मेघेषु गर्भरूपेणान्तर्वर्तमानम् **त्वष्टुः** दीप्तात् मध्यमात् वायोः सकाशात् **इमम् जनयन्त** वैद्युतमग्निम् उत्पादयन्ति । कीदृशमग्निम् । **विभृत्रम्** सर्वेषु भूतेषु विहृतम् । जाठररूपेण विभज्य वर्तमानमित्यर्थः । **तिग्मानीकम्** तीक्ष्णमुखं तीक्ष्णतेजसम् । अत एव हि वैद्युताग्निदर्शनात् दृष्टिः प्रतिहन्यते । **स्वयशसम्** स्वायत्तयशस्कम् । अतिशयेन यशस्विनमित्यर्थः । **जनेषु** जनपदेषु सर्वेषु देशेषु **विरोचमानम्** विशेषेण दीप्यमानम् । बहूनामुपकारकमित्यर्थः । एवम्भूतम् **सीम्** एनमग्निम् **परि** परितः सर्वतः **नयन्ति** स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति ।।

**सायण– अतन्द्रासः** स्वकार्ये जगतः पोषणेऽनलसाः आलस्यरहिताः जागरूका इत्यर्थः । **युवतयः** नित्यतरुण्यः जरामरणरहिता इत्यर्थः । एवम्भूताः **दश** प्राच्याद्या दशसङ्ख्याकाः दिशः **गर्भं** मेघेषु गर्भरूपेणान्तर्वर्तमानं **त्वष्टुः** दीप्तात् मध्यमात् वायोः सकाशात् **जनयन्त** वैद्युतमग्निम् उत्पादयन्ति । यद्वा दशसङ्ख्याका अङ्गुलयस्त्वष्टुर्दीप्तस्य वायोः गर्भं स्वकारणभूते वायौ गर्भरूपेण

वर्तमानम् । अग्नेर्हि वायुः कारणं 'वायोरग्निः' (तै.आ.८.१) इति श्रुतेः । एवम्भूतम् **इमम्** अग्निम् अरण्योः सकाशात् जनयन्त उत्पादयन्ति । कीदृश्योऽङ्गुलयः । अतन्द्रासः पुनः पुनः कर्मकरणे आलस्यरहिताः । युवतयः अपृथक्कृत्य वर्तमानाः । एकस्मिन्पाणौ संहत्यावस्थिता इत्यर्थः । कीदृशमग्निम् । **विभृत्रं** सर्वेषु भूतेषु विहृतम् । जाठररूपेण विभज्य वर्तमानमित्यर्थः । **तिग्मानीकं** तीक्ष्णमुखं तीक्ष्णतेजसम् । अत एव हि वैद्युताग्निदर्शने दृष्टिः प्रतिहन्यते । **स्वयशसं** स्वायत्तयशस्कम् । अतिशयेन यशस्विनमित्यर्थः । **जनेषु** जनपदेषु सर्वदेशेषु **विरोचमानं** विशेषेण दीप्यमानम् । बहूनामुपकारकमित्यर्थः । एवम्भूतं **सीम्** एनमग्निं **परि** परितः सर्वतः **नयन्ति** स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति ।

त्वष्टुः । 'त्विष दीप्तौ' । 'नप्तृनेष्टृत्वष्टृ' (उ.सू.२.२५२) इत्यादिना उणादिषु तृनन्तः निपातितः । अतो नित्त्वादाद्युदात्तत्वम् । विभृत्रम् । 'हृञ् हरणे' अस्मात् कर्मणि निष्ठा । छान्दसो रेफोपजनः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । 'हृग्रहोर्भः' इति भत्वम् । यद्वा औणादिकः क्त्रप्रत्ययः । तिग्मानीकम् । 'तिज निशाने' । 'युजिरुचितिजां कुत्वं च' (उ.सू.१.१४३) इति मक् । 'अन प्राणने' । 'अनिदृशिभ्यां च' इति कीकन् । तिग्मं तीक्ष्णमनीकं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । परि षीम् । 'पूर्वपदात्' इति षत्वम् ॥२॥

**सिद्धाञ्जनम्–** प्रथमानुवाके तृतीयसूक्ते 'अण्वीभिस्तना पूतासः' इत्यस्य व्याख्याने सूक्ष्माः शक्तयः अण्व्य इत्युपपादितम्, तत्सर्वमवधेयम् । विस्तरभयान्नेह मन्त्रवर्णा उदाह्रियन्ते । तत्र या दश स्वसार उक्ताः ता एव 'युवतयः मातरः योषणः' अग्निं पोषयन्तीति अन्यत्र सूक्तेषु वर्ण्यते, तथा वैश्वामित्र (३ म. १ सू.) पाराशर्यादि (१.७३.१०) सूक्तेषु च । दशसङ्ख्याया वैशिष्ट्यं न शक्यं निर्णेतुम् । पूर्तिद्योतकमित्यूहः ।

**अतन्द्रसः** अनलसाः **युवतयः** नित्यतरुण्यः **दश** दशसङ्ख्याकाः शक्तयः **त्वष्टुः** विश्वकर्मणो देवात् **इमं गर्भम्** अग्निं **जनयन्त** उत्पादयन्ति । कीदृशम् ? **विभृत्रम्** वितत्य भृतं धारितं, **तिग्मानीकम्** तीक्ष्णमुखं तीव्रतेजसं, **स्वयशसम्** स्वीयेन यशसा कीर्तनीयप्रभावेण युक्तं **जनेषु** सर्वेषु जातेषु भूतेषु **विरोचमानम्** विविधं दीप्यमानम् । ईदृशं **सीम्** एनमग्निं **परि** परितः **नयन्ति** प्रापयन्ति, एकत्र प्रादुर्भूतं अग्निं स्वीयपोषणेन पूर्वोक्ता युवतयः परितः प्रभाभिस्तं प्रसारयन्ति ।

विभृत्रम्– भृञ्धातोरौणादिकः क्त्रप्रत्ययः, यद्वा कर्मणि निष्ठायां रेफोपजनश्छान्दसः । तिग्मानीकम्–तिज निशाने, मक्प्रत्ययः, अन प्राणने, अनिहृषिभ्यां चेति कीकन्प्रत्ययः । परि षीम्–पूर्वपदादिति षत्वम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।**
**पूर्वामनु प्र दिशं पार्थिवानामृतून् प्रशासद् वि दधावनुष्ठु ।। ३ ।।**
**त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् । दिवि । एकम् । अप्ऽसु । पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्ठु ।।**

**स्कन्द– त्रीणि जाना** जन्मानि **परि भूषन्ति** परिपूर्वो भवति सर्वत्र परिग्रहे । परिगृह्णन्ति । अस्य अग्नेः । सत्सु अप्यन्येषु जन्मसु सारभूतत्वात् त्रीण्येव जन्मान्यस्याग्नेः परिगृह्णन्तीत्यर्थः । कतमानि । उच्यते । **समुद्रे एकम्** बाडवात्मना । **दिवि एकम्** आदित्यात्मना । **अप्सु** अप्शब्दोऽत्रोदकवचनः अन्तरिक्षनाम वा । वृष्टिलक्षणासु अप्सु अन्तरिक्षे वा अपरं वैद्युतात्मना । किञ्च **पूर्वाम् अनु प्रा दिशम्** अनुशब्दो 'लक्षणेत्थम्भूताख्यान' (पा.१,४,९०) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः प्रशासदित्याख्यातेन सम्बन्धयितव्यः । प्रशब्दस्तूपसर्गः । पूर्वां दिशं प्रति । पूर्वस्यां दिश्याहवनीयात्मना व्यवस्थापितः सन्नित्यर्थः । **पार्थिवानाम्** पृथिव्यां सम्भवानां यजमानानाम् **ऋतून्** यागकालान् **प्रशासत्** प्रकर्षेण कथयन्निव **वि दधौ** विदधाति । करोतीत्यर्थः । किम् । उच्यते । **अनुष्ठु** यागकर्म । यागं करोतीत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** जनाः स्तोतारः अस्य **त्रीणि** जन्मानि अलङ्कुर्वन्ति – अन्तरिक्षस्थम् **एकम्,** दिव्यम् अपरम्, **अप्सु** अपरम् । सोऽयं प्राचीम् **दिशम्** प्रति स्थित्वा मनुष्याणां व्युच्छनेन कालान् **प्रशासत्** कल्याणं प्रकर्षेण विदधाति इति । औषसम् अग्निम् आह । औसाग्निप्रधानं वेदं सूक्तम् । अत्र कात्यायनः– 'औषसाय वाऽग्नये' (ऋ.अ.२,१,९५) इति ।। ३ ।।

**मुद्गल–** अस्य अग्नेः **त्रीणि** त्रिसंख्याकानि **जाना** जननानि जन्मानि **परि भूषन्ति** परितः सर्वतः अलङ्कुर्वन्ति । **समुद्रे** अब्धौ वडवानलरूपेण **एकम्** जन्म, **दिवि** द्युलोके आदित्यात्मना **एकम्, अप्सु** अन्तरिक्षे वैद्युताग्निरूपेण एकम् । एवमग्निस्त्रेधाऽऽत्मानं विभज्य त्रिषु स्थानेषु

वर्तत इत्यर्थः । तत्रादित्यात्मना वर्तमानः सोऽग्निः **ऋतून्** वसन्ताद्यान् षड्तून् **अनु प्रशासत्** प्रकर्षेण विभक्ततया ज्ञापयन् **पार्थिवानाम्** पृथिव्याः सम्बन्धिनां सर्वेषां प्राणिनाम् **पूर्वाम्** प्राचीम् **प्र दिशम्** प्रकृष्टां ककुभम् **अनुष्ठु** सम्यगनुक्रमेण **वि दधौ** कृतवान् ।। ३ ।।

**सायण–** **अस्य** अग्नेः **त्रीणि** त्रिसङ्ख्याकानि **जाना** जननानि जन्मानि **परि भूषन्ति** परितः सर्वतोऽलङ्कुर्वन्ति । यद्वा परीत्येष समित्येतस्य स्थाने । अस्याग्नेस्त्रीणि जन्मानि सम्भवन्ति । **समुद्रे** अब्धौ वडवानलरूपेण **एकं** जन्म । **दिवि** द्युलोके आदित्यात्मना **एकम्** । **अप्सु** । आपः इति अन्तरिक्षनाम । अन्तरिक्षे वैद्युताग्निरूपेणैकम् । एवमग्निस्त्रेधात्मानं विभज्य त्रिषु स्थानेषु वर्तते इत्यर्थः । तत्रादित्यात्मना वर्तमानः सोऽग्निः **ऋतून्** वसन्ताद्यान् षड्तून् **प्रशासत्** प्रकर्षेण विभक्ततया ज्ञापयन् **पार्थिवानां** पृथिव्याः सम्बन्धिनां सर्वेषां प्राणिनां **पूर्वां** प्राचीं **प्र दिशं** प्रकृष्टां ककुभम् । **अनुष्ठु** इत्येतदव्ययं सम्यक्शब्दसमानार्थं सुष्ठ्विति यथा । सम्यगनुक्रमेण **वि दधौ** कृतवान् । स्वतो भेदरहितयोरखण्डयोर्दिक्कालयोः प्राच्यादिभेदो वसन्तादिभेदश्च सूर्यगत्या निष्पाद्यते । अतः सूर्य एव तयोः कर्तेत्यर्थः ।

जाना । 'जनी प्रादुर्भावे' । घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वा-दाद्युदात्तत्वम् । 'शेश्छन्दसि बहुलम्' इति शर्लोपः । भूषन्ति । 'भूष अलङ्कारे' । भौवादिकः । यद्वा । भवतेर्लेटि 'सिब्बहुलं लेटि' इति सिप् । आगमानुशासनस्यानित्यत्वात् इडभावः, संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावश्च । दिवि । अप्सु । उभयत्र 'ऊडिदम्' इति विभक्तेः उदात्तत्वम् । पार्थिवानाम् । 'पृथिव्या ञाञौ' इति प्राग्दीव्यतीयः अञ्प्रत्ययः । प्रशासत् । 'शासु अनुशिष्टौ' । अस्मात् लटः शतृ । 'जक्षित्यादयः षट्' इति अभ्यस्तसंज्ञायां 'नाभ्य-स्ताच्छतुः' इति नुम्प्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अनुष्ठु । 'अपदुःसुषु स्थः' (उ.सू.-१.२५) इति विधीयमानः कुप्रत्ययो बहुलवचनात् तिष्ठतेरनुपूर्वादपि भवति ।। ३ ।।

**सिद्धाञ्जनम्–** **अस्य** अग्नेः **त्रीणि जाना** त्रीणि जन्मानि **परिभूषन्ति** परि समित्यर्थे, सम्भवन्ति, परितोऽलङ्कुर्वन्तीति वा । क तानि जन्मस्थानानि? **समुद्रे एकम्** अखण्डसत्वपूर्णे सर्वजगदुपादानभूते एकं जन्म, **दिवि एकम्** द्युलोके एकमन्यत्, द्वितीयं जन्म, ततः **अप्सु** अन्तरिक्षस्थानासु प्राणावासभूमिषु अन्यदेकम् ।

**प्रथमं** अखण्डज्ञानक्रियाशक्तिनिधौ समुद्रे, ततः ज्योतिर्मयज्ञानभुवि 'दिवि,' ततः प्राणक्रियाशक्तिनिधिभूतासु मध्यमस्थानासु ''अप्सु'' एव जन्मत्रयमग्नेरुक्तम् । तत्र दिव्यः उत्तमस्थाने सौरज्योतिरात्मना वर्तमानोऽग्निः अखण्डतया वर्तमानस्य देशस्य तथा कालस्य च विभागं यजमानस्योपयोगाय विधत्त इत्याह (देशकालविभागं सूर्यो विधत्ते बहिर्जगति) । अन्तर्यजने प्रवृत्तस्य ऋषेः कया दिशा गन्तव्यमिति उपदिशति, प्रदिशति वा मार्गं उत्तमस्थानोऽग्निः, तथा कालविशेषं चोपदिशति पदे पदे प्रवर्तनाय । **पार्थिवानाम्** पृथिवीसम्बन्धिनां सर्वेषां **प्रशासत्** प्रकर्षेण ज्ञापयन् **पूर्वाम् प्र दिशम्** प्रथमां प्रकृष्टां उपदेशपद्धतिं **अनु** अनुक्रमेण **अनुष्ठु** सम्यगर्थे, सुष्ठु **विदधौ** विधत्ते । तथा **ऋतून्** युक्तकालविशेषान् विदधौ । अन्यत्रेवात्रापि धात्वर्थः शब्दानामवधातव्यः । प्राधान्येन प्रदिशमित्यस्यार्थविवरणं सायणीयव्याख्यामनुसृत्यैव भवति । स हि व्याचष्टे '' 'प्राचीनं ज्योतिः प्रदिशा दिशन्ता' (१०.११०.७) प्रदिशा प्रदिष्टेन उपदिष्टेन मार्गेण'' इति ।

जाना–जनी प्रादुर्भावे, भावे घञ् । भूषन्ति–भूधातोर्लेटि सिप् बहुलमिति सिप्, भूष अलङ्कार इत्यस्माद्वा । प्रशासत्–शासु अनुशिष्टौ, अस्मात् शतृ । अनुष्ठु–अव्ययम्, अपदुःसुषु स्थ इति विधीयमानः कुप्रत्ययः बहुलवचनात् तिष्ठतेरनुपूर्वादपि भवति ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**क इ॒मं वो॑ नि॒ण्यमा चि॑केत व॒त्सो मा॒तॄर्ज॑नयत स्व॒धाभि॑ः ।**
**ब॒ह्वी॒नां गर्भो॑ अ॒पसा॑मु॒पस्था॑न्म॒हान् क॒विर्निश्च॑रति स्व॒धावा॑न् ।। ४ ।।**

**कः । इ॒मम् । वः॒ । नि॒ण्यम् । आ । चि॒के॒त॒ । व॒त्सः । मा॒तॄः । ज॒न॒य॒त॒ । स्व॒धाभि॑ः ।**
**व॒ह्वीना॑म् । गर्भ॑ः । अ॒पसा॑म् । उ॒प॒ऽस्था॑त् । म॒हान् । क॒विः । निः । च॒र॒ति॒ । स्व॒धाऽवा॑न् ।।**

**स्कन्द– कः इमम्** अग्निम् **वः** युष्माकमृषीणां ब्राह्मणानां मध्ये **निण्यम्** अन्तर्हितम् **आ चिकेत** जानाति । कतमम् । उच्यते । योऽयं **वत्सः** वत्सस्थानीयः । अपत्यभूतः सन्नित्यर्थः । **मातॄः** ओषधिवनस्पतयोऽत्र मातर उच्यन्ते, अग्नेर्जनकत्वात् । **जनयत** वैद्युतात्मना व्यवस्थितः सन् जनयति । **स्वधाभिः** 'स्वधा' (निघ.१,१२) इत्युदकनाम । वृष्टिलक्षणैरुदकैः । यश्च **वह्वीनाम्** ओषधीनां दिशां वा **गर्भः** अपत्यभूतः **अपसाम् उपस्थात्** अपांसि कर्माणि,

तान्युपगम्य यत्र तिष्ठन्ति सोऽपसामुपस्थो यज्ञः आहवनीयो वा, तस्मात् **महान् कविः** मेधावी **निः चरति** देवान् प्रति गन्तुं निर्गच्छति । **स्वधावान्** हविर्लक्षणेनान्नेनान्नवान् । हवींष्यादायेत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** युष्माकं मध्ये **कः** एनम् अन्तर्हितम् जानाति । **वत्सः** सन्नोषधीनाम् **मातृः** जनयति उदकैः वैद्युतः । **बह्वीनाम्** दिशां गर्भभूतः असौ अपाम् उदधिस्थानाम् मध्यात् **महान्** क्रान्तदर्शनः **निः चरति** बलवान् ।। ४ ।।

**मुद्गल–** हे ऋत्विग्यजमानाः! **निण्यम्** निर्णीतम् अबादिषु गर्भरूपेणान्तर्हितम् **इमम्** अग्निम् **वः** युष्माकं मध्ये **वः आ चिकेत** को जानाति । न कोऽपीत्यर्थः । सोऽयमग्निः **वत्सः** मेघस्थानाम् अपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् **मातृः** तस्य मातृस्तानीयानि वृष्ट्युदकानि **स्वधाभिः** हविर्लक्षणैरन्नैः **जनयत** उत्पादयति । अपि च **बह्वीनाम्** मेघस्थानामपाम् **गर्भः** वैद्युतरूपेण गर्भस्तानीयः सोऽग्निः **अपसाम् उपस्थात्** समुद्रात् **निः चरति** ओजसाऽग्निरूपेण आदित्यः सन् निर्गच्छति । कीदृशः । **महान्** तेजसा प्रौढः **कविः** क्रान्तदर्शी स्वधावान् हविर्लक्षणान्नवान् । एक एवाग्निः होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मना औषसरूपेणादित्यात्मना च विभज्य वर्तत इत्यर्थः ।। ४ ।।

**सायण–** हे ऋत्विग्यजमानाः **निण्यं** निर्णीतम् । अन्तर्हितनामैतत् । अबादिषु गर्भरूपेणान्तर्हितम् । तथा च मन्त्रान्तरम्– 'गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्' (ऋ.सं.१.७०.२) इति । एवम्भूतम् **इमम्** अग्निं **वः** युष्माकं मध्ये **कः आ चिकेत** को जानाति । न कोऽपीत्यर्थः । सोऽयमग्निः **वत्सः** मेघस्थानामपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् **मातृः** तस्य मातृस्थानीयानि वृष्ट्युदकानि **स्वधाभिः** हविर्लक्षणैरन्नैः **जनयत** उत्पादयति । तथा च स्मर्यते– 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मनु.३.७६) इति । अपि च **बह्वीनां** मेघस्थानामपां **गर्भः** वैद्युतरूपेण गर्भस्थानीयः सोऽग्निः **अपसामुपस्थात्** समुद्रात् **निश्चरति** औपसाग्निरूपेणादित्यः सन्निर्गच्छति । कीदृशः । **महान्** तेजसा प्रौढः **कविः** क्रान्तदर्शी **स्वधावान्** हविर्लक्षणान्नवान् । एक एवाग्निर्होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मना औषसरूपेण आदित्यात्मना च विभज्य वर्तते इत्यर्थः ।

चिकेत । 'कित ज्ञाने' । छान्दसो लिट् । जनयत । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् । पूर्ववत् छान्दसो लङ् । बह्वीनाम् । 'नित्यं छन्दसि' (पा.सू.४.१.४६) इति बहुशब्दात् ङीष् । 'ङ्याश्छन्दसि बहुलम्' (पा.सू.६.१.१७८) इति नाम उदात्तत्वम् । अपसाम् । 'आप्लृ व्याप्तौ' । 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' (उ.सू. ४.६४७) इति बहुलवचनादकर्माख्यायामपि आप्नोतेः असिप्रत्ययः ह्रस्वश्च । उपस्थात् । उपतिष्ठन्त्यापोऽत्र इत्युपस्थः । 'आतश्चोपसर्गे' इति 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् अधिकरणे कप्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** अद्भुतोऽयमग्निः, रहस्यं को वेदेति पृच्छति कुत्स ऋषिः । हे ऋषयः, यजमानाः, **निण्यम्** अन्तर्हितं, रहसि स्थितं **इमम्** अग्निं वः युष्मासु मध्ये, **कः आचिकेत** को जानाति? दुर्विज्ञेयं रहस्यमग्नेरित्यर्थः । तद्रहस्यमाह– **वत्सः** शिशुः अग्निः **मातुः** स्वस्य पोषयित्रीः नित्यतरुणीः दिव्याः शक्तीः, **स्वधाभिः** स्वधारणसामर्थ्यप्रभाभिः **जनयत** उत्पादयति । दक्षाददितिरजायत अदितेर्दक्ष इति यथा अन्यत्र तथा मातृरग्निर्जनयतीति मन्त्रवर्णेषु चमत्कुतिस्तत्र तत्र लक्ष्यते । **बह्वीनाम् उपसाम्** अपां **उपस्थात्** उत्सङ्गात् **गर्भः** वत्सोऽग्निः **महान्** बृहन् **कविः** द्रष्टा **स्वधावान्** स्वधारणसामर्थ्योपेतश्च एवम्भूतः सन् **निश्चरति** निर्गच्छति । बह्वीभ्यो मातृभ्य एको गर्भः उक्तगुणविशिष्टः सन् निश्चरति । उद्भुतमिदं अतः को वेदेति पृच्छा ।

उपसाम्– आपः कर्माख्यायां ह्रस्वश्च नुट् च वेति बहुलवचनात् आप्नोतेः असिप्रत्ययो ह्रस्वश्च ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।**
**उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते ।। ५ ।।**
आविःऽत्यः । वर्धते । चारुः । आसु । जिह्मानाम् । ऊर्ध्वः । स्वऽयशाः । उपऽस्थे ।
उभे इति । त्वष्टुः । बिभ्यतुः । जायमानात् । प्रतीची इति । सिंहम् । प्रति । जोषयेते इति ।। ५ ।।

**स्कन्द–** आविश्शब्दः प्रकाशवचनः । आविरेव आविष्ट्यः स्वार्थे त्यप्प्रत्ययः । अव्यया-

त्यप्याविष्ट्यस्योपसङ्ख्यानं छन्दसि' (पा.वा.४,२,१०४) इति । सर्वलोकप्रकाशः अग्निः **वर्धते चारुः** शोभनः **आसु** 'बह्वीनां गर्भः' (ऋ.१,९५,४) इति पूर्वस्यामृचि आदिष्टानामोषधीनामयमन्वादेशः । आस्वोषधीषु । अथवा बह्वीनां गर्भ इति बह्वीशब्देन दिश उच्यन्ते । तत आस्विति तासामन्वादेशः । तदा च वर्धत इति भूतकाले व्यत्ययेन लट् द्रष्टव्यः । त्वष्टुः सकाशाज्जनयित्वा आसु दिक्षु सर्वलोकप्रकाशोऽग्निरवर्धतेत्यर्थः । कीदृशीषु आसु । **जिह्मानाम्** जिह्मशब्दोऽनृजुवचनः । सप्तम्यर्थे षष्ठी । जिह्मासु । तिर्यग्व्यवस्थितास्वित्यर्थः । कथं वर्धते । उच्यते । **ऊर्ध्वः** उर्ध्वज्वलनस्वभावक एव ह्यग्निः । कीदृशः । **स्वयशाः** आत्मनिमित्तकीर्तिः । न च केवलास्वासु । किं तर्हि । **उपस्थे** उपस्थो यज्ञः आहवनीयो वान्तरिक्षं वा, तत्र च । अथवा उपस्थ इत्येतत् आसु इत्येतेन विशेष्यते, न समुच्चीयते । उपस्थशब्दश्च स्थानवचनः । आस्वोषधीषु दिक्षु वा यदग्नेः स्थानं तत्रेत्यर्थः । किञ्च **उभे** द्यावापृथिव्यौ **बिभ्यतुः** भीते आस्ताम् **त्वष्टुः** सकाशात् दशस्वपि दिक्षु **जायमानात्** अतिवृद्धादग्नेः । भीते च सत्यौ **प्रतीची** अञ्चतिर्गत्यर्थः । अग्निमेव प्रतिगते । अग्निपरिचर्यापरे सत्यावित्यर्थः । **सिंहम्** लुप्तोपममेतत् । सिंहसदृशं दुरभिभवमग्निम् **प्रति जोषयेते** जुषिरत्र प्रीत्यर्थः । प्रतिशब्दश्च धात्वर्थानुवादी । भूते लट् । अप्रीणयतम् । दशभिरपि दिग्भिः सहाऽमृतेन अतर्पयतमित्यर्थः ।। ५ ।।

**वेङ्कटमाधव– आविष्ट्यः वर्धते चारुः** अग्निः **आसु** अप्सु तिर्यग् गच्छन्तीनाम् अपाम् **उपस्थे** । स्वयमूर्ध्वः । **त्वष्टुः जायमानात्** और्वाद् अग्नेः द्यावापृथिवी **उभे** अपि **बिभ्यतुः** । अपि च एनम् **सिंहम्** इव बलिनम् अभिमुखे सेवेते । अत्र निरुक्तं द्रष्टव्यम् (८,१४;१५) इति ।। ५ ।।

**मुद्गल– आसु** मेघस्थास्वप्सु वैद्युतात्मनां वर्तमानोऽग्निः **चारुः** शोभनदीप्तिः सन् **आविष्ट्यः वर्धते** आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति । किं कुर्वन् । **जिह्मानाम्** कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपाम् **उपस्थे** उत्सङ्गे **स्वयशाः** स्वायत्तयशस्कोऽग्निः **ऊर्ध्वः** ऊर्ध्वज्वलनः सन् । अकारणासु अप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलन्नित्यर्थः । अपि च **उभे** द्यावापृथिव्यौ **त्वष्टुः** दीप्तात् **जायमानात्** उत्पद्यमानात् तस्मादग्नेः **प्रति बिभ्यतुः** भयं प्रापतुः । तदनन्तरम् उत्पन्नम् **सिंहम्** सहनशीलम् अभिभवनशीलं तमग्निम् **प्रतीची** प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवत्यौ **जोषयेते** सेवेते ।। ५ ।।

**सायण– आसु** मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निः **चारुः** शोभनदीप्तिः सन् **आविष्ट्यो वर्धते** आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति । किं कुर्वन् । **जिह्मानां** कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपाम् **उपस्थे** उत्सङ्गे **स्वयशाः** स्वायत्तयशस्कोऽग्निः **ऊर्ध्वः** ऊर्ध्वज्वलनः सन् । स्वकारणभूतास्वप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलन्नित्यर्थः । तदुक्तं वैशेषिकैः– 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनम् अणुमनसोराद्यं कर्मैतान्यदृष्टकारितानि' इति । अपि च **उभे** द्यावापृथिव्यौ **त्वष्टुः** दीप्तात् **जायमानात्** उत्पद्यमानात्तस्मादग्नेः **बिभ्यतुः** भयं प्रापतुः । तदनन्तरमुत्पन्नं **सिंहं** सहनशीलमभिभवनशीलं तमग्निं **प्रतीची** प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवन्त्यौ **जोषयेते** सेवेते । यास्कस्त्वाह– 'आविरावेदनात्तत्त्यो वर्धते चारुरासु चारु चरतेर्जिह्मं जिहीतेरूर्ध्व उच्छ्रितो भवति स्वयशा आत्मयशा उपस्थ उपस्थान उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते द्यावापृथिव्याविति वाहोरात्रे इति वारणी इति वापि चैते प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते' (निरु.८.१५) इति ।

आविष्ट्यः । आविःशब्दात् 'छन्दसि' (पा.सू.४.२.१०४.१) इति शैषिकस्त्यप् । 'ह्रस्वात्तादौ तद्धिते' (पा.सू.८.३.१०१) इति षत्वम् । आसु । 'इदमोऽन्वादेशे' इति अशादेशोऽनुदात्तः, विभक्तिश्च सुप्त्वादनुदात्ता इति सर्वानुदात्तत्वम् । न च 'ऊडिदम्' इति विभक्तेरुदात्तत्वं शङ्कनीयम् । अन्तोदात्तादिदंशब्दाद्धि तद्विधीयते । प्रतीची । प्रतिपूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । 'अञ्चतेश्चोपसङ्ख्यानम्' इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । जोषयेते । 'जुषी प्रीतिसेवनयोः' । स्वार्थे णिच् ॥ ५ ॥

**सिद्धाञ्जनम्– आसु** अप्सु उक्तस्वरूपासु मातृषु प्राणक्रियाशक्तिभूयिष्ठासु **चारुः** शोभनरूपः सन् **आविष्ट्यः** आविर्भूतः प्रकाशमानः **वर्धते** वृद्धिं प्राप्नोति । **जिह्मानाम्** कुटिलानां तिर्यगवस्थाय स्यन्दमानानां तासां अपां **उपस्थे** उत्सङ्गे स्थितः **ऊर्ध्वः** ऊर्ध्वज्वलनः **स्वयशाः** स्वकीयवर्णनीयप्रभावोपेतः **वर्धत** इति सम्बन्धः । **त्वष्टुः** विश्वकर्मणः स्रष्टुः देवशिल्पिनः प्रभावेण **जायमानात्** उत्पद्यमानात् अस्मादग्नेः **उभे** द्यौश्च पृथिवी च **बिभ्यतुः** भयं प्रापतुः । तादृशोऽस्य प्रतापः । अथ ते उभे **सिंहम्** सिंहवत् विक्रान्तमेनमग्निं **प्रतीची** प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवन्त्यौ **प्रति जोषयेते** संसेवेते ।

आविष्ट्यः– आविःशब्दात् छन्दसीति शैषिकस्त्यप् । जोषयेते–स्वार्थे णिच् ।। ५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये प्रथमो वर्गः ।।

## ।। अथ द्वितयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।**
**स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ।। ६ ।।**
उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः । सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ।। ६ ।।

**स्कन्द– उभे** द्यावापृथिव्यौ **भद्रे** कल्याण्यौ **जोषयेते** जुषिरत्र सेवार्थः । स्वार्थे णिच् । सेवितवत्यौ । त्वाष्ट्रमग्निम् अतिप्रवर्धमानं परिचरितवत्यावित्यर्थः । कथम् । **न मेने** 'मेना ग्नाः' इति स्त्रीणां नामनी (या.३,२१) । नशब्दश्चात्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयः । स्त्रियाविव केचित् भर्तारम् । किञ्च **गावः न वाश्राः उप तस्थुः** यथा वा वाशनस्वाभाविकाः अचिरप्रसूता गावः स्वान् वत्सान् पयस्तर्पणेनोपतिष्ठन्ति एवं त्वाष्ट्रमग्निम् अतिप्रवर्धमान-मुपस्थितवत्यः ता दश दिशो द्यावापृथिव्यौ च । कुत एतत् । इतिहासात् । केनोपनस्थुः । उच्यते । **एवैः** अमृततर्पणैः । किञ्च **सः** अग्निः **दक्षाणाम्** सर्वबलानाम् **दक्षपतिः बभूव** यथैव प्रवीणशब्दः प्रकृष्टो वीणायां प्रवीण इत्येवमपि व्युत्पाद्यमानः **प्रवीणो** व्याकरणे प्रवीणो मीमांसायामित्यादिप्रयोगदर्शनात् प्रकर्षमात्रवचनो विज्ञायते, न वीणाविषयकप्रकर्षवचनः । एवमयमपि दक्षपतिशब्दः दक्षस्य पतिर्दक्षपतिरित्येवमपि व्युत्पाद्यमानोऽधिपतिमात्रवचनो द्रष्टव्यः । अधिपति-र्भवतीत्यर्थः । **अञ्जन्ति** अञ्जतिर्गत्यर्थः । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । होमार्थमुप-गच्छन्ति । **यम्** आहवनीयात्मना स्थितम् । **दक्षिणतः** दक्षिणस्यां दिशि । **हविर्भिः** 'इत्थम्भूत-लक्षणे' (पा.२,३,२१) इत्येवमेषा तृतीया । अपि भवान् कमण्डलुना छात्रमद्राक्षीद् इति यथा । गृहीतहविष्का इत्यर्थः ।। ६ ।।

**वेङ्कटमाधव– उभे** स्त्रियौ द्यावापृथिव्यौ कल्याण्यौ अग्निं सेवेते । **न** इति पदपूरणम् ।

**गावः** इव शब्दकारिण्यः वत्सम् एनं गमनैः ऋत्विजः उपतिष्ठन्ति । **सः** अयं बलपतिः अभवत्, **यम्** एनं यज्ञस्थम् अध्वर्यवः अपरेण आहवनीयं दक्षिणाऽतिक्रम्य तत्र स्थिताः **हविर्भिः** सिञ्चन्ति ।। ६ ।।

**मुद्गल– उभे** द्यावापृथिव्यौ **भद्रे** भजनीये शोभमाने **मेने** स्त्रियौ **जोषयेते न** सेवेते इव । यथा शोभने स्त्रियौ चामरहस्ते राजानम् उभयतः सेवेते एवं द्यावापृथिव्यौ एनमग्निम् उभयतः सेवेते इत्यर्थः । अपि च **वाश्राः** हंभारवं कुर्वत्यः **गावः न** गावो यथा **एवैः** स्वकीयैश्चरित्रै-रादरातिशयेन स्वकीयान् वत्सान् **उप तस्थुः** सङ्गच्छन्ते, तथेममग्निम् उपस्थिते भवतः । अतः सः अग्निः **दक्षाणाम्** सर्वेषां बलानाम् **दक्षपतिः** बलाधिपतिः **बभूव** आसीत् । बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः । **यम्** अग्निम् **दक्षिणतः** आहवनीयस्य दक्षिणभागे अवस्थिताः ऋत्विजः **हविर्भिः** चरुपुरोडाशादिभिः **अञ्जन्ति** आर्द्रीकुर्वन्ति तर्पयन्ति । सोऽग्निरिति पूर्वेणान्वयः ।। ६ ।।

**सायण– उभे** अहश्च रात्रिश्च । यद्वा उभे द्यावापृथिव्यौ । अरणी वा । **भद्रे** भजनीये शोभनाङ्ग्यौ **मेने** स्त्रियौ **जोषयेते न** सेवते इव । यथा शोभने स्त्रियौ चामरहस्ते राजानमुभयतः सेवेते एवं द्यावापृथिव्यौ एनमग्निमुभयतः सेवेते इत्यर्थः । अपि च **वाश्राः** हम्भारवं कुर्वत्यः **गावो न** गावो यथा **एवैः** स्वकीयैश्चरित्रैरादरातिशयेन स्वकीयान् वत्सान् **उप तस्थुः** सङ्गच्छन्ते तथेममग्निं द्यावा पृथिव्यौ उपस्थितै भवतः । पूर्वं सेवनमात्रमुक्तम् इदानीं पुनः गोनिदर्शनेन तत्रैवादरातिशयो द्योत्यते । अतः **सः** अग्निः **दक्षाणां** सर्वेषां बलानां **दक्षपतिः** बलाधिपतिः **बभूव** आसीत् । बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः । **यम्** अग्निं **दक्षिणतः** आहवनीयस्य दक्षिणभागे अवस्थिताः ऋत्विजः **हविर्भिः** चरुपुरोडाशादिभिः **अञ्जन्ति** आर्द्रीकुर्वन्ति तर्पयन्ति सोऽग्निरिति पूर्वेणान्वयः ।

वाश्राः । 'वाशृ शब्दे' । 'स्फायितञ्चि' इत्यादिना रक् । एवैः । 'इण् गतौ' 'इण्शीङ्भ्यां वन्' इति भावे वन्प्रत्ययः ।। ६ ।।

**सिद्धाञ्जनम्– उभे** द्यावापृथिव्यौ, ऊर्ध्वा दिव्या मनीमयी चित् द्यौर्भवति, अधरा भौमा मनोमयी जागरितस्थाना चित् पृथिवी भवतीति रहस्यं बहुधा प्रागुक्तं स्मार्यम् । **भद्रे** कल्याण्यौ

**मेने न** स्त्रियौ इव **जोषयेते** सेवेते । जातमग्निं शोभनाङ्ग्यौ योषितो यथा प्रभुं सेवेते तया उभे अपि चितौ सेवनेन प्रीणयतः । अपि च वाश्राः हम्भारवं कुर्वन्त्यः **गावो न** गावो यता **एवैः** गमनैः स्वकीयैश्चरित्रैः **उपतस्थुः वत्सान्** सङ्गच्छन्ते तथा उभे पूर्वोक्ते अग्नि उपस्थिते भवतः, अनेन आदरातिशयो द्योत्यते । एवं प्रीणित आदृतश्च **सः** अग्निः **दक्षाणाम्** सदसद्विवेकबलानां मध्ये **दक्षपतिः** दक्षस्य अतिशयितबलस्य पतिः अधिपतिः **बभूव** । **यम्** अग्निं **हविर्भिः** अर्पणैः **दक्षिणतः** दाक्षिण्येन देवकार्ये औदार्येण **अञ्जन्ति** अलङ्कुर्वन्ति, यद्वा व्यञ्जयन्ति स्पष्टीकुर्वन्ति महान्तो यजमानाः । बाह्ये कर्मणि, दक्षिणतः आहवनीयस्य दक्षिणे भागेऽवस्थिता ऋत्विजः हविर्भिः चरुपुरोडाशादिभिः अञ्जन्ति अक्तं आर्द्रं कुर्वन्ति । सोऽग्निरिति पूर्वेण सम्बन्धः ।

वाश्राः– वाशृ शब्दे, गतः । एवैः–इण् गतौ, भावे वन्प्रत्ययः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**उद् यंयमीति सवितेवं बाहू उभे सिचौं यतते भीम ऋञ्जन् ।**
**उच्छुक्रमत्कमजते सिमस्मान्नवां मातृभ्यो वसंना जहाति ।। ७ ।।**
उत् । यंयमीति । सविताऽईव । बाहू इतिं । उभे इतिं । सिचौं । यतते । भीमः । ऋञ्जन् ।
उत् । शुक्रम् । अत्कम् । अजते । सिमस्मात् । नवां । मातृऽभ्यः । वसंना । जहाति ।।

**स्कन्द– उत् यंयमीति** देवपरिवेषणवेलायां यदुद्यमनं तदिहाभिप्रेतम् । देवान् परिवेष्टुं हवींष्यादाय पुनःपुनरुच्छति । **सविता इव** यजमाननामैतच्छाकपूणिना पठितम् । यजमान इव । **बाहू** बाहुसम्बन्धात् हस्तावेवात्र बाहुशब्देन लक्ष्येते । आत्मीयौ हस्तौ । देवान् परिवेष्टुं हस्ताभ्यां हवींष्यादाय यजमानवत् पुनःपुनरग्निरुत्क्षिपतीत्यर्थः । सविताऽत्र आदित्य एव वाऽभिप्रेतः । तथाहि मन्त्रान्तरेऽप्यस्य ऊर्ध्वहस्तत्वं दृश्यते । 'उदू अयाँ उपयक्तेव' (ऋ,६,७१,५) इति यथा । ऐतिहासिकाश्च प्रतिमासु चित्रकर्मसु ऊर्ध्वहस्तमेव सवितारं स्मरन्ति । हवींष्युत्क्षेप्तुमादित्य इव हस्तौ उद्यच्छतीत्यर्थः । **उभे सिचौ यजते** सिचशब्दोऽत्र वस्त्राञ्चलवचनः । 'पितुर्न पुत्रः सिचमारभे ते' (ऋ.३,५३,२) इति यथा । यततिरपि सामर्थ्यात् सन्नहनार्थः । उभे अपि वस्त्राञ्चले गाढं सन्नह्यति । परिकरबन्धं च करोतीत्यर्थः । अथवा उत् यंयमीति होमवेलायां

यदुद्यमनं तदिहाभिप्रेतम् । होमवेलायाम् अग्निरात्मीयौ **हस्तौ** आहुतीः प्रतिग्रहीतुं प्रसारयतीत्यर्थः । उभे सिचौ यतते इत्यपि आज्यसेचनात् जुहूपभृतौ उच्येते । यततिरपि सामर्थ्याच्चुम्बनार्थः । उभे अपि जूहूपभृतौ चुम्बतीत्यर्थः । **भीमः** अतिप्रज्वलितत्वात् भयानकः । **ऋञ्जन्** प्रसाधयन् आत्मानं यज्ञं सिचौ वा । किञ्च **उत् शुक्रम् अत्कम् अजते** अत्कशब्दोऽत्र रूपवचनः । 'सचा यदासु जहतीष्वत्कम्' (ऋ.१०,९५,८) इति यथा । अजतिरपि क्षेपणार्थः । शुक्रमात्मीयज्वालाख्यं रूपमुत्क्षिपति । ऊर्ध्वं ज्वलतीत्यर्थः । **सिमस्मात्** सर्वस्मादाहवनीयागाराद् अन्यतो वा स्थानात् । किञ्च **नवा मातृभ्यः वसना जहाति** नवानि वसनानि । वसनानि तमांस्यत्राभिप्रेतानि, अचिरोत्पन्नत्वादाच्छादकत्वाच्च दिशाम् । मातरः अपि **दिशः**, त्वाष्ट्रात्मनोऽग्रेर्जनकत्वात् । जहातीत्यपि लट् भूते काले । अचिरोत्पन्नानि तमांसि दिग्भ्यः त्वाष्ट्रोऽग्निरजहात् । अपनीतवानित्यर्थः । अथवा ओषधिवनस्पतयोऽत्र मारत उच्यन्ते । तासां नवानि वसनानि अजीर्णास्त्वचः । मातृभ्य इति षष्ठ्यर्थे पञ्चमी । ओषधिवनस्पतीनामजीर्णास्त्वचः अग्निर्दग्ध्वा जहातीत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** यथा उद्बाहुः सविता उदेति, तद्वद् अयमात्मीयं तेजः उद्यच्छति । सोऽयम् **उभे सिचौ** सिक् सिञ्चतेः । द्यौरुदकैः पृथिवीं सिञ्चति, पृथिवी हविर्भिः दिवम्, ते उभे अपि अभिगच्छति तेजसा प्रकाशयति । भयङ्करोऽग्निः **शुक्रम्** रूपमादत्ते सर्वस्मात् । नवानि च वसनानि ज्वालाख्यानि अद्भ्यः विसृजत्यासां मध्याद् उत्तिष्ठन् ।। ७ ।।

**मुद्गल– सवितेव** सर्वस्य प्रेरक आदित्यो यथा **बाहू** बाहुस्थानीयान् रश्मीनुद्गमयति, तथाऽयमौषसोऽग्निः स्वकीयानि तेजांसि **उत् यंयमीति** भृशमुद्यतानि ऊर्ध्वाभिमुखानि करोति । तदनन्तरम् **भीमः** सर्वेषां भयङ्करोऽग्निः **उभे सिचौ** उभे द्यावापृथिव्यौ **ऋञ्जन्** प्रस्तधयन् स्वतेजसाऽलङ्कुर्वन् **यतते** स्वव्यापारे प्रयतते । तदनन्तरम् **सिमस्मात्** सर्वस्मात् भूतजातात् **शुक्रम्** दीप्तम् **अत्कम्** सारभूते रसम् **उत् अजते** रश्मिभिरूर्ध्वमादत्ते । अपि च **मातृभ्यः** स्वमातृस्तानीयेभ्यो वृष्ट्युदकेभ्यः सकाशात् **नवा** नवानि प्रत्यग्राणि **वसना** सर्वस्य जगत आच्छादकानि तेजांसि **जहाति** उद्गमयति ।। ७ ।।

**सायण– सवितेव** सर्वस्य प्रेरकः आदित्यो यथा **बाहू** बाहुस्थानीयान् रश्मीनुद्गमयति तथायमौषसोऽग्निः स्वकीयानि तेजांसि **उद्यंयमीति** भृशमुद्यतान्यूर्ध्वाभिमुखानि करोति । तदनन्तरं

**भीमः** सर्वेषां भयङ्करोऽग्निः **उभे सिचौ** उभे द्यावापृथिव्यौ **ऋञ्जन्** प्रसाधयन् स्वतेजसालङ्कुर्वन् **यतते** स्वव्यापारे प्रयतते । तदनन्तरं **सिमस्मात्** सर्वस्माद्भूतजातात् **शुक्रं** दीप्तम् **अत्कं** सारभूतं रसम् **उत् अजते** रश्मिभिरूर्ध्वमादत्ते । अपि च **मातृभ्यः** स्वमातृस्थानीयेभ्यो वृष्ट्युदकेभ्यः सकाशात् **नवा** नवानि प्रत्यग्राणि **वसना** सर्वस्य जगतः आच्छादकानि तेजांसि **जहाति** उद्गमयति ।

यंयमीति । 'यम उपरमे' । अस्मात् यङ्लुकि 'नुगतोऽनुनासिकान्तस्य' (पा.सू.७.४.८५) इति अभ्यासस्य नुगागमः । एतच्चानुस्वारोपलक्षणार्थम् । सिचौ । 'षिचिर् क्षरणे' । सिञ्चतः फलेन संयोजयत इति सिचौ द्यावापृथिव्यौ । 'क्विप् च' इति क्विप् । यतते । 'यती प्रयत्ने' । अत्कम् । 'अत सातत्यगमने' । 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ.सू.३.३२३) इति कन् । नित्त्वादाद्युदात्तत्वम् । सिमस्मात् । सिमशब्दः सर्वशब्दपर्यायः । नवा वसना । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । जहाति । 'ओहाक् त्यागे' । जौहोत्यादिकः ।। ७ ।।

**सिद्धाञ्जनम्**– अयमग्निः एवं प्रादुर्भूतो वर्धितस्तर्पितश्च द्यावापृथिवीभ्यां, **सवितेव** सर्वस्य प्रेरकः सूर्यो यथा **बाहू** बाहुस्थानीयान् किरणान् उद्गमयति तथा **उद्यंयमीति** स्वीयानि तेजांसि उद्यतानि ऊर्ध्वाभिमुकानि करोति । अपि च अयं **भीमः** भयङ्करः **उभे सिचौ** सिञ्चतः अभीष्टवर्षणेन इति सिचौ (फलेन संयोजयत इति सायणः) द्यावापृथिव्यौ **ऋञ्जन्** प्रसाधयन्, स्वाविभविन स्वतेजसा च भूषयन्नित्यर्थः, **यतते** स्वव्यापारे प्रयतते । ततः, **सिमस्मात्** सर्वस्मात् भूतजातात् **शुक्रम्** ज्वलितं **अत्कम्** सारभूतं रसं **उदजते** उद्गमयति । सर्वत्र भूतजाते यो गुप्तोऽन्तर्हितो रसो वर्तते तं निर्गमय्य सर्वमपि ऊध्वगतिकं करोतीति भावः । अनन्तरं **मातृभ्यः** उक्तलक्षणाभ्यः उद्भ्यः उद्धृत्य **नवा वसना** प्रत्यग्राणि वसनानि आच्छादकानि प्राणतेजोबलादीनि जहाति मुञ्चति भूतजातस्य सर्वस्योत्तरोत्तराभिवृद्धये । यंयमीति–यम् उपरमे, यङ्लुकि अभ्यासस्य नुगागमः ।

सिचौ–षिचिर् क्षरणे, क्विप् । अत्कम्–अत सातत्यगमने, कन्प्रत्ययः । सिमस्मात्–सिमशब्दः सर्वशब्दपर्यायः । नवा, वसाना–उभयतः शेर्लोपः छन्दसि । जहाति–ओहाक् त्यागे ।।

## ऋक्संहिता पदपाठसहिता

**त्वेषं रूपं कृणुत उत्तरं यत् संपृञ्चानः सदने गोभिरद्भिः ।**
**कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ ८ ॥**
त्वेषम् । रूपम् । कृणुते । उत्ऽतरम् । यत् । सम्ऽपृञ्चानः । सदने । गोभिः । अत्ऽभिः ।
कविः । बुध्नम् । परि । मर्मृज्यते । धीः । सा । देवऽताता । सम्ऽइतिः । बभूव ॥

**स्कन्द– त्वेषम्** दीप्तम् आत्मरूपम् अग्निः **कृणुते** कुरुते । **उत्तरम्** सर्वत उत्कृष्टतरम् । **यत्** सप्तम्या अत्र लुग्द्रष्टव्यः । यत्र **संपृञ्चानः** सम्पृच्यमानः **सदने** यज्ञगृहे **गोभिः अद्भिः** गोशब्दोऽत्र स्तुतिवचनः । 'गोभिर्यदीमन्ये अस्मत्' (ऋ.८,२,६) इति यथा । स्तुतिभिः सोमरसलक्षणाभिश्चाद्भिः । स्तुतिभिः स्तूयमानः सोमेन च हूयमान इत्यर्थः । **कविः** मेधावी । **बुध्नम् परि मर्मृज्यते** बुध्नमन्तरिक्षम्, तच्च तमोऽपनयनेन सर्वतः शोधयति । **धीः सा देवताता** 'धीः' (निघ.२,१) इति कर्मनाम । सङ्गच्छन्ते यस्यां देवाः **सा समितिः बभूव** भवति । यत्र यज्ञकर्मणि दीप्तमात्मनो रूपमग्निः करोति, अन्तरिक्षाच्च तमोऽपनयति, तत्रैव देवाः सङ्गच्छन्ते, नान्यत्रेत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** दीप्तम् **रूपम् कृणुते, यत्** रूपम् उद्धततरं भवति, संसृजन् समुद्रे तेजोभिः **अद्भिः** च । क्रान्तः ध्यानात्मकः मूलम् उदकं ज्वालाभिः परिमार्ष्टि । सोऽयं देवैः ततः सङ्घः भवति । प्रकाशते पूर्वस्यां दिशि ॥ ८ ॥

**मुद्गल– सदने** अन्तरिक्षे **गोभिः** गन्त्रीभिः **अद्भिः** मेघस्थाभिः सह **संपृञ्चानः** वैद्युतरूपेण संयुक्तः सन् **त्वेषम्** दीप्तं सर्वैर्द्रष्टुमशक्यम् **उत्तरम्** उत्कृष्टतरम् **रूपम्** वैद्युतं प्रकाशम् **यत्** यदा **कृणुते** करोति, तदानीम् **कविः** क्रान्तदर्शी **धीः** सर्वेषां धारकः सोऽग्निः **बुध्नम्** सर्वस्योदकस्य मूलभूतमन्तरिक्षम् **परि मर्मृज्यते** परितो मार्ष्टि स्वतेजसाच्छादयति । तस्याग्नेः **सा देवताता** देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती **समितिः बभूव** तेजसां संहतिर्भवति ॥ ८ ॥

**सायण– सदने** अन्तरिक्षे **गोभिः** गन्त्रीभिः **अद्भिः** मेघस्थाभिः सह **सम्पृञ्चानः** वैद्युतरूपेण संयुक्तः सन् **त्वेषं** दीप्तं सर्वैर्द्रष्टुमशक्यम् **उत्तरम्** उत्कृष्टतरं **रूपं** वैद्युतं प्रकाशं **यत्**

यदा **कृणुते** करोति तदानीं **कविः** क्रान्तदर्शी **धीः** सर्वेषां धारकः सोऽग्निः **बुध्नं** सर्वस्योदकस्य मूलभूतमन्तरिक्षं **परि मर्मृज्यते** परितो मार्ष्टि स्वतेजसाच्छादयति । तस्याग्नेः **सा देवताता** देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती **समितिर्बभूव** तेजसां संहतिर्भवति ।

सम्पृश्चानः । 'पृची सम्पर्के' । रौधादिकः । अस्मात् लटः शानच् । 'श्नसोरल्लोपः' इति अकारलोपः । सीदन्त्यस्मिन् गन्धर्वादय इति सदनमन्तरिक्षम् । अधिकरणे ल्युट् । मर्मृज्यते । 'मृजूष् शुद्धौ' । अस्मात् यङि 'मर्मृज्यते मर्मृज्यमानास उपसङ्ख्यानम्' (पा.सू.७.४.९१.१) इति निपातनात् अभ्यासस्य रुगागमः । देवताता । देवेन तता देवताता । तनोतेः कर्मणि निष्ठा । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । व्यत्ययेन आत्वम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ८ ।।

**सिद्धाञ्जनम्– सदने** अन्तरिक्षस्थाने विशाले प्राणमयाकाशप्रदेशे, **गोभिः** चिद्रश्मिभिः **अद्भिः** तेजोबलवाहिनीभिश्च सह **सम्पृश्चानः** संपृक्तः संयुक्तः सन् **त्वेषम्** दीप्तं सर्वैर्द्रष्टुमशक्यं **उत्तरम्** उत्कृष्टतरं उत्तमस्थानोचितं दिव्यं **रूपम्** स्वरूपं **यत्** यदा **कृणुते** करोति, तदा सः **कविः** सर्वस्य द्रष्टा भूत्वा **बुध्नम्** सर्वस्य तेजोबलादेः मूलभूतं द्युस्थानं **परि** परितः **मर्मृज्यते** स्वतेजसा मार्ष्टि, शुद्धं करोति । **सा धीः** तादृशी धारणासमर्था द्युस्थानगता शुद्धा बुद्धिः **देवताता** देवैर्विस्तारिता **समितिः** सङ्गमनं तेजसां, **बभूव** संवृत्ता । अग्निना तेजोबलयुक्तेन यदा तदुपरि मूलस्थानं शुद्धं क्रियते, तदा तत्र प्रकाशमाना धीमयी शुद्धा चित् तेजस्संहतिरूपं देवसमागमस्थानं भवतीत्युक्तम् ।

सम्पृश्चानः–पुची सम्पर्के, रौधादिकः, लटः शानच् । मर्मृज्यते–मृजूष् शुद्धौ, अस्माद्यङि अभ्यासस्य रुगागमः । देवताता–देवेन देवैर्वा तता, तनोतेः, कर्मणि निष्ठा, व्यत्ययेन आत्वम् ।।

## ऋक्संहिता पदपाठसहिता

**उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।**
**विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ।। ९ ।।**

उरु । ते । ज्रयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम । विश्वेभिः अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ।। ९ ।।

**स्कन्द–** उरु विस्तीर्णम् **ते** तव स्वभूतम् **व्रयः** व्रयतिर्गतिकर्मा (निघ.२,१४) । गमनस्वभावकम् **परि एति** परिगच्छति । सर्वतो व्याप्नोतीत्यर्थः । **बुध्नम्** अन्तरिक्षम् । **विरोचमानम्** विविधं दीप्यमानम् । **महिषस्य** महन्नामैतत् (निघ.३,३) । महतो भवतः । **धाम** तेजः । य ईदृशोऽसि, स त्वम् **विश्वेभिः** सर्वैः हे **अग्ने! स्वयशोभिः** आत्मनिमित्तं यशो येषु पालनेषु तानि स्वयशांसि तैः **इद्धः** दीप्तः सन् **अदब्धेभिः** अहिंसितैः **पायुभिः** पालनैः **पाहि** रक्ष **अस्मान्** ।। ९ ।।

**वेङ्कटमाधव–** विस्तीर्णं गच्छत् तव तेजः परि गच्छति मूलम् विरोचमानम् महतः । सर्वैः अग्ने । स्वकीर्तिभिः समिद्धः अनुपहिंसितैः पालनैः **अस्मान्** रक्ष ।। ९ ।।

**मुद्गल– महिषस्य** महतः **ते** तव **व्रयः** राक्षसादीनाम् अभिभावकम् **विरोचमानम्** विशेषेण दीप्यमानम् **उरु** विस्तीर्णम् **धाम** तेजः **बुध्नम्** अपां मूलभूतम् अन्तरिक्षम् **परि एति** परितो व्याप्नोति । हे **अग्ने! इद्धः** अस्माभिः प्रज्वलितः सन् **विश्वेभिः** सर्वैः **स्वयशोभिः** आत्मीयैस्तेजोभिः **अस्मान् पाहि** रक्ष । कीदृशैः । **अदब्धेभिः** राक्षसादिभिरहिंसितैः **पायुभिः** पालनशक्तैः ।। ९ ।।

**सायण– महिषस्य** महतः **ते** तव **व्रयः** राक्षसादीनामभिभावुकं **विरोचमानं** विशेषेण दीप्यमानम् **उरु** विस्तीर्णं **धाम** तेजः **बुध्नम्** अपां मूलभूतमन्तरिक्षं **पर्येति** परितो व्याप्नोति । हे **अग्ने! इद्धः** अस्माभिः प्रज्वलितः सन् **विश्वेभिः** सर्वैः **स्वयशोभिः** स्वकीयैरात्मीयैस्तेजोभिः **अस्मान् पाहि** रक्ष । कीदृशैः । **अदब्धेभिः** राक्षसादिभिरहिंसितैः **पायुभिः** पालनशक्तैः ।

व्रयः । 'जि व्रि अभिभवे' । असुन् । अदब्धेभिः । 'दम्भु दम्भे' । निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । 'अनिदिताम्' इति नलोपः । 'झषस्तथोर्धोऽधः' इति धत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'बहुलं छन्दसि' इति भिस ऐसभावः ।। ९ ।।

**सिद्धाञ्जनम्– महिषस्य** महतः ते तव **व्रयः** राक्षसादीनां अभिभवनशीलं **विरोचमानम्** विशेषेण दीप्यमानं **उरु** विस्तीर्णं **धाम** तेजः **बुध्नम्** त्रैलोक्यस्य तेजोबलादेर्वा मूलभूतं ऊर्ध्वं स्थानं **परि** परितः **एति** गच्छति, व्याप्नोतीत्यर्थः । हे **अग्ने!**, **इद्धः** प्रज्वलितस्त्वं **विश्वेभिः** सर्वैः **स्वयशोभिः** स्वकीयतेजोभिः **अस्मान् पाहि** अस्मान् रक्षः । कीदृशैः? **अदब्धेभिः** अहिंसितैः अप्रतिहतैः, **पायुभिः** रक्षणसमर्थैः ।

व्रयः–जि व्रि अभिभवे असुन् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**धन्वन्त्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।**
**विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ।। १० ।।**

धन्वन् । स्रोतः । कृणुते । गातुम् । ऊर्मिम् । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षाम् । विश्वा । सनानि । जठरेषु । धत्ते । अन्तः । नवासु । चरति । प्रऽसूषु ।।१०।।

**स्कन्द– धन्वन् स्रोतः** 'धन्व' (निघ.१,३) इति अन्तरिक्षनाम । 'स्रोतः' (निघ.१,१२) इत्यप्युदकनाम । हविर्नयनद्वारेणान्तरिक्षे वृष्टिलक्षणमुदकं करोत्यग्निः । **गातुम्** गमनस्वभावकम् **ऊर्मिम्** अत्यन्तप्रभूतम् । **शुक्रैः** च **ऊर्मिभिः** ज्वालाभिः **अभि नक्षति** अभिव्याप्नोति **क्षाम्** पृथिवीम् । **विश्वा** सर्वाणि च **सनानि** पुराणान्यन्नानि **जठरेषु** उदरेषु **धत्ते** धारयति । धारणेन चात्र पाकरहितस्यान्नस्य उदरेषु धारयितुमशक्यत्वात् हेतुभूतौदनत्वाद्यापत्तिरूपः कार्यभूतो वा रसलोहितमांसत्वाद्युत्पत्तिरूपः पाको लक्ष्यते । अन्नानि चौदनादिरूपेण रसादिरूपेण वा जाठरात्मनाग्निः पचतीत्यर्थः । **अन्तः** मध्ये च **नवासु चरति प्रसूषु** नवानां चरति अग्निः प्रसूतानामोषधीनाम् अन्तर्गतः । अग्न्यायत्तो हि प्रसूतानामोषधीनां फलपाकः । अत एतदुच्यते– अन्तर्नवासु चरति प्रसूषु इति ।। १० ।।

**वेङ्कटमाधव– अन्तरिक्षे** सन्ततं गमनशीलं तेजःसङ्घातं करोति । **शुक्रैः** तेजोभिः **अभि** व्याप्नोति द्याम् । विश्वानि च अन्नानि स्वोदरेषु धारयति । **अन्तः चरति नवासु** मातृषु अप्सु ।।

**मुद्गल– धन्वन्** धन्वनि नभसि **गातुम्** गमनशीलम् **ऊर्मिम्** उदकसङ्घम् अयमग्निः **स्रोतः कृणुते** स्रोतसा प्रवाहरूपेण युक्तं करोति । **शुक्रैः** निर्मलैः **ऊर्मिभिः** तैर्जलसङ्घैः **क्षाम्** भूमिम् **अभि नक्षति** अभिव्याप्नोति । स्वतेजोभिरन्तरिक्षे जलसङ्घमुत्पाद्य तेन सर्वां भूमिमभिवर्षतीत्यर्थः । पश्चात् **विश्वा** सर्वाणि **सनानि** अन्नानि **जठरेषु धत्ते** अवस्थापयति । तदर्थम् **नवासु** वृष्ट्यनन्तर-मुत्पन्नासु **प्रसूषु** सर्वेषामन्नानां प्रसवित्रीषु ओषधीषु पाकार्थम् **अन्तः चरति** मध्ये वर्तते । अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते ।। १० ।।

**सायण– धन्वन्** नभसि **गातुं** गमनशीलम् **ऊर्मिम्** उदकसङ्घम् अयमग्निः **स्रोतः कृणुते** स्रोतसा प्रवाहरूपेण युक्तं करोति । **शुक्रैः** निर्मलैः **ऊर्मिभिः** तैर्जलसङ्घैः **क्षां** भूमिम् **अभि नक्षति** अभिव्याप्नोति । स्वतेजोभिरन्तरिक्षे जलसन्धमुत्पाद्य तेन सर्वा भूमिमभिवर्षतीत्यर्थः । पश्चात् **विश्वा** सर्वाणि **सनानि** । अन्ननामैतत् । सर्वाण्यन्नानि **जठरेषु धत्ते** अवस्थापयति । तदर्थं **नवासु** वृष्ट्यनन्तरमुत्पन्नासु **प्रसूषु** सर्वेषामन्नानां प्रसवित्रीष्वोषधीषु पाकार्थम् **अन्तः चरति** मध्ये वर्तते । अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते ।

धन्वन् । 'रिवि रवि धवि गत्यर्थाः' । इदित्त्वात् नुम् । 'कनिन्युवृषि' इत्यादिना कनिन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'धन्वान्तरिक्षं धन्वन्त्यस्मादापः' (निरु.५.५) इति यास्कः । नित्त्वात् आद्युदात्तत्वम् । गातुम् । 'गाङ् गतौ' । 'कमिमनिजनि' इत्यादिना तुप्रत्ययः । ऊर्मिम् । 'अर्तेरू च' इति मिप्रत्ययः । नक्षति । 'नक्ष गतौ' ।। १० ।।

**सिद्धाञ्जनम्– धन्वन्** निरुदके क्षेत्रे, अन्नमये जडे देहे गातुम् गमनशीलं मार्गं **ऊर्मिम्** आप्यतरङ्गं तद्युक्तं, **स्रोतः** प्रवाहरूपं यथा भवति तथा **कृणुते** करोति । जडेऽन्तर्हिता आप:तेजोबलादिशक्तिततीः निर्गमय्य प्रवाहयतीति भावः । **क्षाम्** भूमिं, (जागरितस्थानां स्थूलामपि सर्वां चितिं) **शुक्रैः** निर्मलैः ज्वलद्भिः **ऊर्मिभिः** तेजस्तरङ्गैः **अभिनक्षति** अभिव्याप्नोति । तदनन्तरं **विश्वा सनानि** सर्वाणि सम्भजनीयानि भोग्यानि **जठरेषु** गुप्तेषु अन्तः गूढं यथा भवति तथा **धत्ते** धारयते, अवस्थापयति । **नवासु प्रसूषु** नूतनासु ज्योतिर्बलादीनां उत्पादयित्रीषु आविष्कत्रीषु अन्नमयप्राणमयमनोमयादिभूमिकासु **अन्तः गूढं चरति** सव्यापारं गच्छति ।

धन्वन्–धवि गत्यर्थः, इदित्वान्नुम्, कनिन्युवृषीत्यादिना कनिन्, सप्तम्या लुक् । गातुम्-गाङ गतौ, तुप्रत्ययः । नक्षति-नक्ष गतौ ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**एवा नो अग्ने समिधा वृधानो रेवत् पावक श्रवसे वि भाहि ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। ११ ।।**
एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ।।११।।

**स्कन्द– एव** एवमुक्तेन प्रकारेण **नः** अस्माकं स्वभूतया हे **अग्ने! समिधा** समिन्धयति इति समित् । स्तुतिरत्राभिप्रेता न काष्ठमयी । तया **वावृधानः** अत्यर्थं वर्धमानः **रेवत्** धनसंयुक्तम्। धनायास्मकमित्यर्थः । हे **पावक! श्रवसे** अन्नाय च **वि भाहि** विविधं दीप्यस्व । **तत् नः मित्रः** इत्युक्तार्थः (ऋ.१,९४,१६ द्र.) ।। ११ ।।

**वेङ्कटमाधव–** एवम् **अग्ने!** निधीयमानया **समिधा** वर्धमानः अस्माकं धनयुक्तं अन्नार्थं च दीप्यस्व । सूक्तं प्राज्ञैः निरूपणीयम् इति ।। ११ ।।

**मुद्गल–** हे **पावक!** शोधक! **अग्ने! समिधा** अस्माभिर्दत्तेन समिदादिद्रव्येण **एव** एवमुक्तप्रकारेण **वृधानः** वर्धमानः सन् रेवत् रयिमते धनयुक्ताय **नः** अस्माकम् **श्रवसे** अन्नाय **वि भाहि** विशेषेण दीप्यस्व । अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः । **नः** अस्माकम् **तत्** अन्नं मित्रादयः **ममहन्ताम्** पूजयन्ताम् । रक्षन्त्वित्यर्थः । **उत** समुच्चये । पृथिवी च द्यौश्चेत्यर्थः ।।

**सायण–** हे **पावक!** शोधक **अग्ने! समिधा** अस्माभिर्दत्तेन समिदादिद्रव्येण **एव** एवमुक्तप्रकारेण **वृधानः** वर्धमानः सन् **रेवत्** रयिमते धनयुक्ताय **नः** अस्माकं **श्रवसे** अन्नाय **वि भाहि** विशेषेण दीप्यस्व । अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः । **नः** अस्माकं **तत्** अन्नं मित्रादयः **ममहन्तां** पूजयन्तां रक्षन्त्वित्यर्थः । उतशब्दः समुच्चये । पृथिवी च द्यौश्चेत्यर्थः ।

एव । 'निपातस्य च' इति संहितायां दीर्घः । वृधानः । वृधेः अन्तर्भावितण्यर्थात् ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपो लुक् । चानशः सार्वधातुकत्वेन ङित्त्वात् लघूपधगुणाभावः । लसार्वधातुकत्वाभावेनानुदात्तत्वाभावे चित्स्वर एव शिष्यते । रेवत् । रयिशब्दात् मतुप् । 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'रेशब्दाच्च' (का.६.१.१७६.१) इति मतुप उदात्तत्वम् । 'सुपां सुलुक्' इति चतुर्थ्या लुक् ।।

**सिद्धाञ्जनम्–** हे **पावक!**, शोधक, **अग्ने, समिधा** अस्माभिः साधितेन ज्वलनसाधनेन **एव** एवं **वृधानः** वर्धमानः सन् **रेवत्** दिव्यसम्पद्युक्तं यथा भवति तथा **श्रवसे** अस्माकं श्रवणाय दिव्याय, अन्तः सत्यश्रुतेः सम्पादनायेति यावत् **विभाहि** विशेषेण दीप्यस्व । तत् उक्तं श्रवः **नः** अस्माकं मित्रादयो रक्षान्तु । अर्धर्चो व्याख्यातः प्राक् ।

वृधानः-वृधेश्चानश्, शपो लुक् छान्दसः । रेवत्-रयेर्मतो बहुलमिति सम्प्रसारणं, रयिशब्दान्मतुप्, छन्दसि मतुपो वत्वम् ।। ११ ।।

।। इति प्रथमाष्टके सप्तमाध्याये द्वितीयो वर्गः ।।

## ।। अथ तृतीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-९६)

(९ कुत्स आङ्गिरसः । अग्निः द्रविणोदा अग्निर्वा । त्रिष्टुप्)

**स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।**
**आपश्च मित्रं धिषणा च साधन् देवा अग्निं धारयन् द्रविणोदाम् ।। १ ।।**
**सः । प्रत्नऽथा । सहसा । जायमानः । सद्यः । काव्यानि । बट् । अधत्त । विश्वा ।**
**आपः । च । मित्रम् । धिषणा । च । साधन् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ।।**

**स्कन्द–** 'स प्रत्नथेति द्रविणोदसेऽग्नये' (बृ.दे.३,१२९) । 'स प्रत्नथा' इत्येतत्सूक्तं द्रविणोदसेऽग्नये, न शुद्धाय । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः पूर्वेषामप्यङ्गिरःप्रभृतीनामृषीणां न्यधत्त, सः इदानीन्तनानामपि यजमानानाम् **प्रत्नथा** पुराणानामिव **सहसा** बलेन मथ्यमानादरणिद्वयात् **जायमानः सद्यः** तस्यामेव वेलायाम् **काव्यानि** कविः मेधाव्यग्निः, तस्य यानि कर्माणि हविर्वहनादीनि तानि काव्यानि । **बट् अधत्त** बट् धारयति । करोतीत्यर्थः । **विश्वा** सर्वाणि । किञ्च **आपः च मित्रम् धिषणा च साधन्** अप्शब्दोऽत्र आप्नोतेर्व्याप्तिवचनः, न उदकवचनः । 'धिषणा' (निघ.१,११) इति वाङ्नाम । व्याप्त्यश्चाहुतयः स्तुतिलक्षणा च वाक् मित्रम् अग्निं साधन् साधयन्ति । कुर्वन्तीत्यर्थः । कस्य । सामर्थ्यात् यजमानानाम् । किञ्च **देवाः अग्निम् धारयन्** धारितवन्तः । निहितवन्त इत्यर्थः । **द्रविणोदाम्** हविराख्यस्य धनस्य दातारम् । हविषां वोढारम्, ऊर्ध्वं चार्पयितारमित्यर्थः । तदेतत् सौचीकोऽग्निर्वक्ष्यति– 'अथा देवा दधिरे हव्यवाहम्' (ऋ.१०,५२,३) इति, 'मां देवा दधिरे हव्यवाहम्' (ऋ.१०,५२,४) इति च ।। १ ।।

**वेङ्कटमाधव–** सः प्रत्न इव बलेन **जायमानः** तदानीमेव हविर्वहनादीनि कविकर्माणि सर्वाणि

एव सत्यमेव धारयति । **आपः च** अन्तरिक्ष्या माध्यमिका वाक् च मित्रमेनं साधयन्ति वैद्युतम् अग्निम् । तम् इमं धनस्य दातारम् **देवाः** अधारयन् इति ।। १ ।।

**मुद्गल–** 'स प्रत्नथा' इति नवर्चं तृतीयं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । द्रविणोदस्त्वगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वा देवता ।।

**सहसा** बलेन **जायमानः** निर्मथनेनोत्पद्यमानः **सः** अग्निः **सद्यः** तदानीमुत्पत्त्यनन्तरमेव **प्रत्नथा** प्रत्न इव चिरन्तन इव **विश्वा** विश्वानि सर्वाणि **काव्यानि** कवेः क्रान्तदर्शिनः प्रगल्भस्य कर्माणि **बट्** सत्यम् **अधत्त** अधारयत् । पूर्वं विद्यमान इवाग्निरुत्पत्तेः समकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः । इममग्निं वैद्युतरूपेण वर्तमानं मेघेष्ववस्थिताः **आपः च धिषणा च** या माध्यमिका वाक् सा च **मित्रम्** सखिभूतम् **साधन्** साधयन्ति **कुर्वन्ति** । तमिमम् **द्रविणोदाम्** द्रविणस्य धनस्य दातारम् **अग्निम् देवाः** ऋत्विजो देवाः **धारयन्** धारयन्ति ।। १ ।।

**सायण–** 'स प्रत्नथा' इति नवर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् । द्रविणोदस्त्वगुणविशिष्टोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्– 'स प्रत्नथा नव द्रविणोदसः' इति । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः । व्यूढस्य दशरात्रस्य षष्ठेऽहन्याग्निमारुते इदं सूक्तं जातवेदस्यनिविद्धानम् । 'व्यूळ्हश्चेत्' इति खण्डे सूत्रितं– 'स प्रत्नथेत्याग्निमारुतम्' (आश्व.श्रौ.८.८) इति । 'स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कम्' (ऐ.ब्रा. ५.१५) इत्यादि ब्राह्मणम् । महापितृयज्ञे स्विष्टकृत्स्थानीयस्य कव्यवाहनस्य 'स प्रत्नथा' इत्येषा याज्या । 'दक्षिणाग्नेः' इति खण्डे सूत्रितम्– 'स प्रत्नथा सहसा जायमान इत्यग्निः स्विष्टकृत्कव्यवाहनः' (आश्व.श्रौ.२.१९) इति ।

**सहसा** बलेन **जायमानः** निर्मथनेनोत्पद्यमानः **सः** अग्निः **सद्यः** तदानीमुत्पत्त्यनन्तरमेव **प्रत्नथा** प्रत्न इव चिरन्तन इव **विश्वा** विश्वानि **सर्वाणि काव्यानि** कवेः क्रान्तदर्शिनः प्रगल्भस्य कर्माणि **बट्** सत्यम् **अधत्त** अधारयत् । पूर्वं विद्यमान इवाग्निरुत्पत्तिसमकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः । इममग्निं वैद्युतरूपेण वर्तमानं मेघेष्ववस्थिताः **आपश्च धिषणा च** या माध्यमिका वाक् सा च **मित्रं** सखिभूतं **साधन्** साधयन्ति कुर्वन्ति । तमिमं

**द्रविणोदां** द्रविणस्य धनस्य दातारम् **अग्निं देवाः** ऋत्विजः **धारयन्** गार्हपत्यादिरूपेण धारयन्ति । यद्वा । देवा एवेन्द्रादय इममग्निं द्रविणोदां हविर्लक्षणस्य धनस्य दातारं कृत्वा दूत्ये धारयन् धारयन्ति ।

प्रत्नथा । प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' इति इवार्थे थाल्प्रत्ययः । काव्यानि । कवेः कर्म काव्यम् । 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् । ञित्त्वादाद्युदात्तत्वम् । साधन् । 'षिधु संराद्धौ' । णौ 'सिध्यतेरपारलौकिके' (पा.सू.६.१.४९) इति आत्वम् । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । 'छन्दस्युभयथा' इति शपः आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । द्रविणोदाम् । द्रविणानि ददातीति द्रविणोदाः । 'द्रु गतौ' । 'द्रुदक्षिभ्यामिनन्' । छान्दसः पूर्वपदस्य सुक् । 'अन्येभ्योऽपि दृश्यन्ते' इति ददातेः विच् । सकारान्तं त्वसुनि कृते निष्पद्यते ।। १ ।।

**सिद्धाञ्जनम्–** 'स प्रत्नथे'ति नवर्चं तृतीयं सूक्तं कुत्सस्यार्षं आग्नेयं त्रैष्टुभम् । द्रविणोदस्त्व-विशिष्टः अग्निः शुद्धो वा देवतेत्याहुः ।

**सहसा** बलेन **जायमानः** उत्पद्यमानः **सः** अग्निः, सहसस्पुत्र इति हि स वर्ण्यते । **सद्यः** प्रादुर्भावक्षणात्परमेव **प्रत्नथा** प्रत्नश्चिरन्तन इव **विश्वा** सर्वाणि **काव्यानि** कविकर्माणि, सर्वस्य द्रष्टुः कवेः कृत्यानि, **बट्** सत्यं **अधत्त** अधारयत् । ''नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि'' (१.७२.१) इति मन्त्रान्तरेपि अयमाशयो द्रष्टव्यः । **आपः च** ज्योतिर्बलादि-वाहिन्यः शक्तयः च **धिषणा च** उत्कृष्टा बुद्धिश्च तमग्निं **मित्रम्** सखिभूतं **साधन्** साधयन्ति, कुर्वन्ति । **देवाः** इन्द्रादयः **अग्निम्** इमं **द्रविणोदाम्** द्रविणस्य दातारं दुतगमनशीलस्य धनविशेषस्य दातारं **धारयन्** अधारयन्, मानुषे जने यजमाने प्रादुर्भावात्पूर्वं देवा ईदृशं द्रविणोदां स्वेषु धारितवन्तः इत्यर्थः ।

प्रत्नथा–प्रत्नशब्दात् थाल् छन्दसि इवार्थे । साधन्-षिधु संराद्धौ, णिचि सिध्यतेः अपारलौकिके इत्यात्वं, लेट्यडागमः । द्रविणोदाम्–द्रविणानि ददातीति द्रविणोदाः, द्रु गतौ, द्रुदक्षिभ्यामिनन्, ददातेर्विच्, सकारान्तं तु असुनि कृते निष्पद्यते ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् ।**
**विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन् द्रविणोदाम् ।। २ ।।**
**सः । पूर्वया । निऽविदा । कव्यता । आयोः । इमाः । प्रऽजाः । अजनयत् । मनूनाम् ।**
**विवस्वता । चक्षसा । द्याम् । अपः । च । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ।।**

**स्कन्द–** प्रकृतिभूम्ना प्रजापतिरूपेणाग्निरत्र स्तूयते । **सः पूर्वया निविदा** 'अग्निर्देवेद्धः' (खि.५,५,१) इत्येषा निवित् । वाङ्नाम वा निविच्छब्दः (निघ.१,११) । तृतीयानिर्देशाच्च स्तूयमान इति शेषः । स प्रकृतोऽग्निः पूर्वया निविदा पूर्वर्षिप्रयुक्तया वाचा स्तूयमानः । **कव्यता** कवित्वेन । **आयोः** उर्वशीपुत्रस्य राज्ञः । षष्ठीनिर्देशात् भोग्या इति वाक्यशेषः । **इमाः प्रजाः अजनयत्** । न च केवलस्यायोः । किं तर्हि । **मनूनाम्** मनोश्च राज्ञः पुत्राणाम् । न च कवित्वेन केवलेन । किं तर्हि । **विवस्वता चक्षसा** विवासनमपनयनम्, तद्वता च दर्शनेन । अशेषाज्ञाननिवृत्तिसमर्थेन च ज्ञानेनेत्यर्थः । न च केवलाः प्रजाः । किं तर्हि । **द्याम् अपः च** । 'आपः' (निघ.१,३) इत्यन्तरिक्षनाम । दिवं चान्तरिक्षञ्च । किञ्च देवाः ।। २ ।।

**वेङ्कटमाधव–** **सः** प्रथमया वाचा कवित्वेन च उर्वशीपुत्रस्य **आयोः** प्रजापतेः **इमाः प्रजाः अजनयत्** मनुष्याणां दृश्यमानाः । तमसः विवासनेन तेजसा **द्याम्** 'अन्तरिक्षं च प्रकाशयति ।।

**मुद्गल–** **सः** अग्निः **पूर्वया** प्रथमया 'अग्निर्देवेद्धः' (खि.५,५,१) इत्यादिकया **निविदा कव्यता** गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता **आयोः** मनोः सम्बन्धिना उक्थेन च स्तूयमानः सोऽग्निः **मनूनाम्** सम्बन्धिनीः **इमाः प्रजाः अजनयत्** उदपादयत् । मनुना स्तुतः सन् मानवीः सर्वाः प्रजा अजनयेदित्यर्थः । तथा विवस्वता विवासनवता विशेषेणाच्छादयता **चक्षसा** आत्मीयेन **तेजसा द्याम्** द्युलोकम् **अपः च** अन्तरिक्षञ्च व्याप्नोतीति शेषः । अन्यत् समानम् ।। २ ।।

**सायण–** **सः** अग्निः **पूर्वया** प्रथमया 'अग्निर्देवेद्धः' इत्यादिकया **निविदा काव्यता** गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता **आयोः** मनोः सम्बन्धिनोक्थेन च स्तूयमानः सोऽग्निः **मनूनां** सम्बन्धिनीः **इमाः प्रजाः अजनयत्** उदपादयत् । मनुना स्तुतः सन् मानवीः सर्वाः प्रजा अजनयदित्यर्थः । तथा **विवस्वता** विवासनवता विशेषेणाच्छादयता **चक्षसा** आत्मीयेन तेजसा **द्यां** द्युलोकम् **अपश्च** अन्तरिक्षं च व्याप्नोतीति शेषः । अन्यत् समानम् ।

कव्यता । 'कु शब्दे' । 'अचो यत्' इति भावे यत् । कव्यं कवनं स्तुतिं करोति । 'तत्करोति' (पा.सू.३.१.२६.५) इति णिच् । तदन्तात् क्विप् । 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलुक् । ततस्तुक् । धातुस्वरेणान्तोदात्तत्वम् । आयोः । 'इण् गतौ' । 'छन्दसीणः' इति अण्प्रत्ययः ।। २ ।।

**सिद्धाञ्जनम्– सः** अग्निः **आयोः** आयुः मनुष्यनाम तस्य **पूर्वया** चिरन्तन्या **निविदा** देवताह्वानसमर्थया स्तुत्या आहूतः सन् **कव्यता** कविः द्रष्टा सत्यश्रुत्, कव्यं कवनं सत्यदर्शनं तत् कुर्वता साधनेन पश्यन्त्या बुद्ध्येत्यर्थः, **मनूनाम्** मन्तृणां मननशालिनां **इमाः प्रजाः** सन्ततीः **अजनयत्** उदपादयत् । अपि च **विवस्वता** प्रकाशमानेन **चक्षसा** स्वकीयेन तेजसा **द्याम्** द्युलोकं **अपः च** ज्योतिर्बलादिवाहिनीः शक्तीश्च व्याप्नोतीति शेषः । कव्यता दर्शनसाधनेन मन्तृणां मनुष्याणां सन्ततीरजनयत्, तेजसा साधनेन द्यामपश्च व्याप्तवान् । सायणीये, 'कव्यता स्तुतिं कुर्वता सूक्तेन' 'आयोः मनोः' इति पदार्थौ दत्तौ । चिन्त्यमेतत्, अध्याहारबाहुल्यं क्लेशं जनयति तात्पर्यावगाहने । देवा इत्याद्यन्यत् समानम् ।

कव्यता–कुधातोः भावे यत्, कव्यं कवनं तत् करोतीति कव्यति, लटः शतरि तृतीयैकवचनान्तं कव्यता इति ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम् ।**
**ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन् द्रविणोदाम् ।। ३ ।।**
तम् । ईळत । प्रथमम् । यज्ञऽसाधम् । विशः । आरीः । आऽहुतम् । ऋञ्जसानम् ।
ऊर्जः । पुत्रम् । भरतम् । सृप्रऽदानुम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ।।

**स्कन्द– तम्** प्रकृतमग्निम् ईळत स्तुत । **प्रथमम्** यज्ञस्य साधयितारम् । हे **विशः!** मनुष्यजातयः! **आरीः** अर्तेर्वा गत्यर्थस्य रातेर्वा दानार्थस्येदं रूपम् । गन्त्र्यः दात्र्यो वा हविषाम् । **आहुतम्** मर्यादयाऽभिहुतम् । **ऋञ्जसानम्** प्रसाधयन्तम् । किम् । सामर्थ्याद्यज्ञम् । सर्वान् अभिप्रेतान् वा । **ऊर्जः पुत्रम्** ऊर्जःशब्देनात्रान्नद्यकारणत्वाद् वृष्टिलक्षणमुदकमुच्यते बीजावस्थं वाऽन्नम् । तस्य हि पुत्रोऽग्निः पारम्पर्येण तत उत्पद्यमानत्वात् । ततो ह्योषधिवनस्पतयो जायन्ते

ओषधिवनस्पतिभ्य एष जायत इति । **भरतम्** ऋत्विजम् । ऋत्विङ्नाम भरतशब्दः (निघ. ३,१८) । कर्तृवचनो वा । भर्तारं वा सर्वयजमानानाम् । **सुप्रदानुम्** तत्रतत्र गन्तृ सुप्रम्, सुप्रं दानं यस्य स सुप्रदानुः, तं सुप्रदानुम् । तस्मैतस्मै स्तोत्रे यजमानाय च दातारमित्यर्थः । किञ्च देवाः ।। ३ ।।

**वेङ्कटमाधव– तम्** स्तुत **प्रथमम्** यज्ञस्य साधयितारम् **विशः!** अभिगन्त्र्य आहुतम् प्रसाधयन्तम् अन्नस्य **पुत्रम्** देवानां हविषश्च भर्तारं विस्तृतदानम् ।। ३ ।।

**मुद्गल–** हे **विशः!** सर्वे मनुष्याः **आरीः** अग्निं स्वामिनं गच्छन्त्यो यूयम् **तम्** अग्निम् **ईळत** स्तुध्वम् । **प्रथमम्** सर्वेषु देवेषु मुख्यम् **यज्ञसाधम्** यज्ञस्य दर्शपूर्णमासादेः साधकम् **आहुतम्** हविर्भिः तर्पितम् **ऋञ्जसानम्** स्तोत्रैः प्रसाध्यमानम् **ऊर्जः** अन्नस्य **पुत्रम्** भुक्तेनान्नेन जाठराग्नेर्वर्धनात् अग्नेरन्नपुत्रत्वम् । **भरतम्** हविषो भर्तारम् । **सुप्रदानुम्** सर्पणशीलदानयुक्तम् । अविच्छेदेन धनानि प्रयच्छन्तमित्यर्थः । **देवाः** इत्यादि गतम् ।। ३ ।।

**सायण–** हे **विशः!** सर्वे मनुष्याः **आरीः** अग्निं स्वामिनं गच्छन्त्यो यूयं **तम्** अग्निम् **ईळत** स्तुध्वम् । कीदृशम् । **प्रथमं** सर्वेषु देवेषु मुक्यं **यज्ञसाधं** यज्ञस्य दर्शपूर्णमासादेः साधकं निष्पादकं **आहुतं** हविर्भिस्तर्पितं **ऋञ्जसानं** स्तोत्रै प्रसाध्यमानं **ऊर्जः** अन्नस्य **पुत्रम्** । भुक्तेनान्नेन जाठराग्नेर्वर्धनात् अग्नेरन्नपुत्रत्वम् । **भरतं** हविषो भर्तारम् । यद्वा । प्राणरूपेण सर्वासां प्रजानां भर्तारम् । श्रूयते च– 'स्वदेहे वा एष प्राणो भूत्वा प्रजा बिभर्ति तस्मादेष भरतः' इति । **सुप्रदानुं** सर्पणशीलदानयुक्तम् । अविच्छेदेन धनानि प्रयच्छन्तमित्यर्थः । देवाः इत्यादि गतम् । ईळत । 'ईड स्तुतौ' । लोटि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपो लुगभावः । यज्ञसाधम् । यज्ञं साधयतीति यज्ञसात् । साधयतेः क्विप् । 'णेरनिटि' इति णिलोपः । आरीः । 'ऋ गतौ' । 'सूचिसूत्रि' (पा.म.३.१.२२.३) इत्यादिना यङ् । 'यङोऽचि च' इति चशब्देन बहुलग्रहणानुकर्षणात् अनैमित्तिको लुक् । प्रत्ययलक्षणेन द्विर्भावे उरदत्वहलादिशेषौ । 'रुग्रिकौ च लुकि' इति रुक् । यङ्लुगन्तात् औणादिकः क्विप्रत्ययः । यणादेशे 'रो रि' इति रेफलोपः । 'ढ्रलोपे पूर्वस्य' इति दीर्घत्वम् । 'कृदिकारादक्तिनः' इति ङीप् । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । व्यत्ययेन आद्युदात्तत्वम् । ऋञ्जसानम् । ऋञ्जतिः प्रसाधनकर्मा । 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ.सू.२.२४४) इति कर्मणि असानच् । भरतम् । 'भृञ्

भरणे'। 'भृमृदृशि' इत्यादिना अतच् । सुप्रदानुम् । सृप्लृ गतौ' । 'स्फायितञ्चि' इत्यादिना रक् । सृप्रो दानुर्दानं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **विशः!** मनुष्याः **आरीः** देवं अग्निं गच्छन्त्यः यूयं **तम् अग्निम्** देवं **ईळत** स्तुध्वम्, अध्येषध्वम् । कीदृशम्? **प्रथमम्** देवेषु पूर्वमस्माकं, **यज्ञसाधम्** यजनस्य साधकं **आहुतम्** अर्पणैः तर्पितं **ऋञ्जसानम्** प्रसाध्यमानं स्तुतिभिः **ऊर्जः पुत्रम्** वेगवद्वीर्यस्य पुत्रं, सहसस्पुत्रः इति हि स **प्रसिद्धः**, भरतम् भर्तारं **सुप्रदानुम्** सर्पणशीलदानोपेतं, अविच्छेदेन ददाति दातव्यमित्यर्थः । देवा इत्यादि गतम् ।

ईळत–लोटि व्यत्ययेन परस्मैपदम् । यज्ञसाधम्–यज्ञं साधयतीति यज्ञसात्, साधयते, क्विप्, णेरनिटीति णिलोपः । आरीः–ऋ गतौ, जनिधसिभ्यामिण् इति बहुलग्रहणादस्मादपि इण्, कृदिकारादक्तिन इति ङीष्, वा छन्दसीति पूर्वसवर्णदीर्घत्वम् । ऋञ्जसानम्–ऋञ्जतेः कित्, कर्मणि असानच् । भरतम्–भृञ् भरणे, भृमृदृशीत्यादिना अतच् । सुप्रदानुम्–सृप्लृ गतौ, स्फायितञ्चीत्यादिना रुक्, सृप्रो दानुर्दानं यस्य तम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**स मा॒तरि॑श्वा पुरु॒वार॑पुष्टिर्वि॒दद् गा॒तुं तन॑याय स्व॒र्वित् ।**
**वि॒शां गो॒पा ज॑नि॒ता रोद॑स्योर्दे॒वा अ॒ग्निं धा॑रयन् द्रविणो॒दाम् ।। ४ ।।**
**सः । मा॒तरि॑श्वा । पु॒रु॒वार॑ऽपुष्टिः । वि॒दत् । गा॒तुम् । तन॑याय । स्वः॒ऽवित् ।**
**वि॒शाम् गो॒पाः । ज॒नि॒ता । रोद॑स्योः । दे॒वाः । अ॒ग्निम् । धा॒रय॑न् । द्र॒वि॒णः॒ऽदाम् ।।**

**स्कन्द–** मातरिश्वसम्बन्धादग्निरेव **सः** मातरिश्वा इत्युच्यते । कः पुनरग्नेर्मातरिश्वना सम्बन्धः । उच्यते । तेन दृष्टोऽग्निराहृतश्च । हिरण्यस्तूपेन भरद्वाजेन चोक्तम् । 'त्वमग्ने प्रथमो मातरिश्वन आविर्भव (ऋ,१,३१,३), 'आ दूतो अग्निमभरद्विवस्वतः' (ऋ.६,८,४) इति च सौचीकोऽग्नि-र्दर्शनाहरणाभ्यां मातरिश्वसम्बन्धी । **पुरुवारपुष्टिः** बहुवरणीयपोषणः । **विदत्** जानाति । किम् । उच्यते । **गातुम्** देवलोकगमनमार्गम् । **तनयाय** अपत्यभूतस्य यजमानस्यार्थाय । कीदृशः । उच्यते । **स्वर्वित्** सर्वस्य वेदिता । **विशाम् गोपाः** मनुष्याणां रक्षिता । **जनिता रोदस्योः** प्रकृतिभूम्ना प्रजापतिरूपेणैषा स्तुतिः । जनयिता द्यावापृथिव्योः । किञ्च देवाः ।। ४ ।।

**वेङ्कटमाधव– सः** अन्तरिक्षे श्वसन् बहुभिः वरणीयपोषः जानाति मार्गं सर्वज्ञः पुत्रभूताय मनुष्यजाताय । **विशाम्** गोपायिता जनयिता द्यावापृथिव्योः ।। ४ ।।

**मुद्गल– सः** अग्निः **तनयाय** अस्मदीयाय पुत्राय **गातुम्** अनुष्ठानमार्गम् **विदत्** लम्भयतु । कीदृशः । **मातरिश्वा** मातरि सर्वस्य जगतो निर्मातरि अन्तरिक्षे श्वसन् वर्तमानः **पुरुवारपुष्टिः** पुरुभिर्बहुभिर्वारा वरणीया पुष्टिरभिवृद्धिर्यस्य स तथोक्तः । **स्वर्वित्** स्वः स्वर्गस्य यागद्वारेण लम्भयिता **विशाम्** सर्वासां प्रजानाम् **गोपाः** गोपायिता रक्षिता **रोदस्योः** द्यावापृथिव्योः **जनिता** जनयिता उत्पादयिता । **देवाः** इत्यादि गतम् ।। ४ ।।

**सायण– सः** अग्निः **तनयाय** अस्मदीयाय पुत्राय **गातुम्** अनुष्टानमार्गं विदत् लम्भयतु । कीदृशः । **मातरिश्वा** मातरि सर्वस्य जगतो निर्मातरि अन्तरिक्षे श्वसन् वर्तमानः **पुरुवारपुष्टिः** । पुरुभिर्बहुभिर्वारा वरणीया पुष्टिरभिवृद्धिर्यस्य स तथोक्तः । **स्वर्वित्** स्वः स्वर्गस्य यागद्वारेण लम्भयिता **विशां** सर्वासां प्रजानां **गोपाः** गोपायिता रक्षिता **रोदस्योः** द्यावापृथिव्योः **जनिता** जनयितोत्पादयिता । देवाः इत्यादि गतम् ।

मातरिश्वा । 'श्वन्नुक्षन्' इत्यादौ मातृशब्दोपपदात् 'श्वस प्राणने' इत्यस्मात् कनिन्प्रत्ययान्तो निपात्यते । विदत् । 'विद्लृ लाभे' । अस्मात् अन्तर्भावितण्यर्थात् छान्दसो लुङ् । लृदित्त्वात् च्लेः अङादेशः । पादादित्वात् निघाताभावः । जनिता । 'जनिता मन्त्रे' (पा.सू.६.४.५३) इति तृचि णिलोपो निपात्यते ।। ४ ।।

**सिद्धाञ्जनम्– सः** अग्निः **मातरिश्वा** मातरि अन्तरिक्षे श्वसिति इति वायौ रूढिः, अत्र अग्नेः प्राणबलविशिष्टं वैशाल्यं व्यापकत्वं च द्योतयति, **पुरुवारपुष्टिः** पुरुभिर्बहुभिः वारवरणीया पुष्टिरभिवृद्धिः यस्य स एवम्भूतः **तनयाय** सन्ततये, अस्माकं विस्ताराय **गातुम्** मार्गं विदत् लम्भयतु । पुनः कीदृशः? **स्वर्वित्** स्वः स्वर्गस्य लम्भयिता, **विशाम्** प्रजानां **गोपाः** रक्षिता **रोदस्योः** द्यावापृथिव्यो **जनिता** जनयिता प्रादुर्भावयिता । देवा इत्यादि गतम् ।

विदत्–विद्लृ लाभे, अस्मादन्तर्भावितण्यर्थात् छान्दसो लुङ् । जनिता–मन्त्रे इति णिलोपनिपातः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची ।**
**द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाम् ।। ५ ।।**
**नक्तोषसा । वर्णम् । आमेम्याने इत्याऽमेम्याने । धापयेते इति । शिशुम् । एकम् । समीची इति सम्ऽईची । द्यावाक्षामा । रुक्मः । अन्तः । वि । भाति । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ।। ५ ।।**

**स्कन्द– नक्तोषसा** 'नक्ता' (निघ.१,७) इति रात्रिनाम । रात्र्युषसौ । **वर्णम् आमेम्याने** कृष्णः शुक्लश्च रात्र्युषसोः वर्णः । तमामेम्याने । मीङ् हिंसायाम् । आकार ईषदर्थे । परस्परमीषद्धिंसन्त्यौ । रात्रिर्हि उषसो रूपं स्वेन तेजसा ईषद्धिनस्ति उषा अपि स्वेन ज्योतिषा । ते **धापयेते** सायमाहुतीः प्रातराहुतीश्चाग्निं पाययतः । कथम् । **शिशुम् एकम्** शिशुर्बालः । लुप्तोपमं चैतत् । बालम् इवैकं किञ्चित् केचित् स्त्रियौ । **समीची** परस्परेण सङ्गते । किञ्च **द्यावाक्षामा रुक्मः अन्तः** द्यावापृथिव्योर्मध्ये रुक्मः रोचनोऽग्निः **वि भाति** विविधं दीप्यते । किञ्च **देवाः** ।। ५ ।।

**वेङ्कटमाधव–** नक्तोषासौ आत्मीयम् **वर्णम्** अन्योन्यस्याध्यात्मं कुर्वाणे पाययतः उभयोः साधारणं सङ्गते स्वरसं हविरग्निहोत्रम् । स चासौ द्यावापृथिव्योः मध्ये मणिरिव दीप्यते ।।

**मुद्गल– नक्तोषासा** रात्रिरहश्च **वर्णम्** स्वकीयं रूपम् **आमेम्याने** परस्परं पुनःपुनः हिंसन्त्यौ **समीची** सङ्गते संश्लिष्टे । एवम्भूते अहस्त्रियामे **एकम् शिशुम्** अह्नः पुत्रम् अग्निम् **धापयेते** हवींषि पाययेते । **रुक्मः** रोचमानः सोऽग्निः **द्यावाक्षामा** द्यावापृथिव्योः **अन्तः** मध्ये **वि भाति** विशेषेण प्रकाशते । अन्यत् पूर्ववत् ।। ५ ।।

**सायण– नक्तोपासा** रात्रिरहश्च **वर्णं** स्वकीयं स्वरूपम् **आमेम्याने** परस्परं पुनःपुनर्हिंसन्त्यौ **समीची** सङ्गते संश्लिष्टे एवम्भूते अहस्त्रियामे **एकं शिशुम्** अह्नः पुत्रमग्निं **धापयेते** हवींषि पाययेते । **रुक्मः** रोचमानः सोऽग्निः **द्यावाक्षामा** द्यावापृथिव्योः **अन्तः** मध्ये **वि भाति** विशेषेण प्रकाशते । अन्यत् पूर्ववत् ।

नक्तोपसा । नक्ता इति रात्रिनाम । नक्ता उपाश्च नक्तोपसा । 'सुपां सुलुक्' इति विभक्तेः

आकारः । 'अन्येषामपि' इति सांहितिकमुपधादीर्घत्वम् । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् । आमेम्याने । 'मीङ् हिंसायाम्' । अस्मात् यङ्लुगन्तात् व्यत्ययेन शानच् । 'अदादिवच्च' इति वचनात् शपो लुक् । 'एरनेकाचः' इति यण् । 'अभ्यस्तानामादिः' इति आद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । धापयेते । 'धेट् पाने' । अस्मात् ण्यन्तात् 'निगरणचलन' (पा.सू.१.३.८७) इति प्राप्तस्य परस्मैपदस्य 'पादिषु धेट् उपसङ्ख्यानम्' (पा.सू. १.३.८९.१) इति वचनात् 'न पादम्याङ्यम' (पा.सू.१.३.८९) इति प्रतिषेधः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । पादादित्वात् निघाताभावः । समीची । सम्पूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना किन् । 'अनिदिताम्' इति नलोपः । 'समः समि' (पा.सू.६.३.९३) इति सम्यादेशः । 'अञ्चतेश्चोपसङ्ख्यानम्' इति ङीप् । 'अचः' इति अकार लोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । पदकारस्य त्वयमभिप्रायः । 'उद ईत्' (पा.सू.६.४.१३९) इति विधीयमानम् ईत्वं सम उत्तरस्याप्यञ्चतेर्व्यत्ययेन भवतीति । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । द्यावाक्षामा । 'दिवो द्यावा' इति द्यावादेशः । 'सुपां सुलुक्' इति षष्ठ्याः डादेशः । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्– नक्तोषसा** रात्रिरहश्च **वर्णम्** स्वीयं रूपं **आमेभ्याने** परस्परं पुनः पुनः हिंसन्त्यौ, परिणमयन्त्यौ इत्यर्थः **समीची** सङ्गते संश्लिष्टे सत्यौ **एकम् शिशुम्** वत्सं अग्निं **धापयेते** पाययेते । 'द्वे विरूपे' इत्यत्र (१.६५.१) व्याख्यातमवधेयम् । **रुक्मः** रोचमानः सोऽग्निः **द्यावाक्षामा** द्यावापृथिव्योः **अन्तः** मध्ये **वि भाति** विशेषेण भासते । देवा इत्यादि मतम् ।

आमेभ्याने–मीञ् हिंसायाम्, अस्माद्यङ्लुगन्तात् व्यत्ययेन शानचु, शपो लुक्, एरनेकाच इति यण् । समीची-सम्पूर्वादञ्चतेः क्विप् । द्यावाक्षामा– दिवो द्यावादेशः, षष्ठ्या डादेशः ।।

।। इति प्रथमाष्टके सप्तमाध्याये तृतीयो वर्गः ।।

## ।। अथ चतुर्थो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**रायो बुध्नः सङ्गमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः ।**
**अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन् द्रविणोदाम् ।। ६ ।।**

**रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । यज्ञस्य । केतुः । मन्मऽसाधनः । वेरिति वेः । अमृतऽत्वम् । रक्षमाणासः । एनम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥**

**स्कन्द–** **रायः** धनस्य **बुध्नः** बुध्नभूतः । आश्रयभूतः इत्यर्थः । **सङ्गमनो वसूनाम्** सङ्गमयिता च धनानां यजमानैः सह । दाता च धनानां यजमानेभ्य इत्यर्थः । **यज्ञस्य केतुः** 'कित ज्ञाने' । यज्ञस्य ज्ञाता । अथवा केतुशब्दः एताकावचनः कर्तृवचनो वा । यज्ञस्य पताकाभूतः कर्ता वेत्यर्थः । मन्मसाधनः 'मन्यते' (निघ.३,१४) इत्यर्चतिकर्मा । मन्म मननं स्तुतिः, तस्याः साधयिता । **वेः** वेतिरिति गतिकर्मा (निघ.१,७) । गन्ता हविर्गृहीत्वा देवान् प्रति । किञ्च **अमृतत्वम् रक्षमाणासः** अमृतत्वं हविर्भक्षणलक्षणं देवत्वम्, तदात्मनो रक्षन्तः । आत्मनो हविर्भक्षणपरिपालनार्थमित्यर्थः । **एनम् देवाः** ॥ ६ ॥

**वेङ्कटमाधव–** धनस्य मूलम्, विविधानि च धनानि सङ्गच्छन्ते अस्मिन्, **यज्ञस्य** प्रज्ञापकः अभिलषितस्य साधयिता । तम् इमम् आत्मनः **अमृतत्वम्** रक्षमाणाः **देवाः** अधारयन् ॥

**मुद्गल–** योऽग्निः **रायः** धनस्य **बुध्नः** मूलभूतः आहुतिद्वारा सर्वेषां धनानां कारणत्वात् । **वसूनाम्** निवासहेतूनां धनानाम् **सङ्गमनः** सङ्गमयिता स्तोतॄणां प्रापयिता **यज्ञस्य** दर्शपूर्वमासादेः **केतुः** केतयिता ज्ञापयिता **वेः** आत्मानमभिगच्छतः पुरुषस्य मन्मसाधनः मननीयस्याभिलषितस्य साधयिता । **अमृतत्वम्** स्वकीयामरणत्वम् **रक्षमाणासः** पालयन्तः **देवाः एनम् द्रविणोदाम्** धनस्य दातारम् **अग्निम् धारयन्** धारयन्ति ॥ ६ ॥

**सायण–** योऽग्निः **रायः** धनस्य **बुध्नः** मूलभूतः । आहुतिद्वारा सर्वेषां धनानां कारणत्वात् । **वसूनां** निवासहेतूनां धनानां **सङ्गमनः** सङ्गमयिता स्तोतॄणां प्रापयिता **यज्ञस्य** दर्शपूर्णमासादेः **केतुः** केतयिता ज्ञापयिता **वेः** आत्मानमभिगच्छतः पुरुषस्य **मन्मसाधनः** मननीयस्याभिलषितस्य साधयिता **अमृतत्वं** स्वकीयामरणत्वं **रक्षमाणासः** पालयन्तः **देवाः एनं** धनस्य दातारम् **अग्निं** धारयन्ति ।

रायः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । सङ्गमनः । नन्द्यादिलक्षणो ल्युः । वेः । वी गत्यादिषु । अस्मात् औणादिकः इप्रत्ययः टिलोपश्च ॥ ६ ॥

**सिद्धाञ्जनम्–** **रायः** धनस्य समृद्धिरूपस्य **बुध्नः** मूलभूतः **वसूनाम्** वासहेतुभूतानां धनानां **सङ्गमनः** सङ्गमयिता, **यज्ञस्य केतुः** यजनस्य प्रज्ञापयिता, **वेः** गच्छतः उत्तरोत्तरं पदमिति शेषः, यजमानस्य **मन्मसाधनः** मननीयस्य साधयिता, अभिमतस्य निष्पादयितेत्यर्थः, एवम्भूतोऽग्निः, तं **एनम्** अग्निं **अमृतत्वम् रक्षमाणासः** स्वकीयं अमरणधर्मं पालयन्तो देवाः इत्यादि गतम् ।

सङ्गमनः–नद्यादिलक्षणो ल्युः । वेः–वी गत्यादिषु, औणादिक इप्रत्ययः टिलोपश्च ।।

## ऋक्संहिता पदपाठसहिता

**नू च॑ पु॒रा च॒ सद॑नं रयी॒णां जा॒तस्य॑ च॒ जाय॑मानस्य च॒ क्षाम् ।**
**स॒तश्च॑ गो॒पां भव॑तश्च॒ भूरे॑र्दे॒वा अ॒ग्निं धा॑रयन् द्रवि॒णो॒दाम् ।। ७ ।।**
**नु । च॒ । पु॒रा । च॒ । सद॑नम् । र॒यी॒णाम् । ज॒तस्य॑ । च॒ । जाय॑मानस्य । च॒ । क्षाम् ।**
**स॒तः । च॒ । गो॒पाम् । भव॑तः । च॒ । भूरेः॑ । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ।।**

**स्कन्द–** नुशब्दोऽत्रेदानीमित्यर्थे । इदानीम् च **पुरा च** पूर्वस्मिंश्च काले **सदनम्** स्थानम् रयीणाम् धनानाम् । **जातस्य** च भूतग्रामस्य च **जायमानस्य** च **क्षाम्** पृथिवीनामैतत् (निघ.१,१) । पृथिवीस्थानीयम् । आश्रयभूतमित्यर्थः । अथवा 'क्षि निवासगत्योः' इत्यस्य क्षाशब्दो निवासवचनः । निवासभूतमित्यर्थः । **सतः च गोपाम् भवतः च** यच्च पूर्वोत्पन्नमस्त्येव यच्चेदानीं भवति तस्योभयस्यापि गोप्तारम् । **भूरेः** बहुनः । **देवाः** ।। ७ ।।

**वेङ्कटमाधव–** अद्य **च पुरा च** आवासस्थानम् रयीणाम्, **जातस्य च जायमानस्य च** आवासस्थानम्, विद्यमानस्य च गोपायितारम् **भवतः च** बहोः ।। ७ ।।

**मुद्गल–** **नू च** अद्य अस्मिन् काले **पुरा च** रयीणाम् सर्वेषां धनानाम् **सदनम्** आवास-स्थानम् **जातस्य** उत्पन्नस्य कार्यजातस्य **जायमानस्य** उत्पद्यमानस्य **च क्षाम्** निवासयितारम् **सतः च** सर्वत्र विद्यमानस्वभावस्य नित्यस्य चाकाशादेः **भवतश्च** सद्भावं प्राप्नुवतः **भूरेः** असङ्ख्यातस्यान्यस्य च भूतजातस्य **गोपाम्** गोपायितारं रक्षितारम् **द्रविणोदाम्** धनप्रदम् एवंगुणविशिष्टम् **अग्निम् देवाः धारयन्** हविर्वोढृत्वेन धारयन्ति ।। ७ ।।

**सायण–** नू च इति निपातसमुदायः अद्य इत्यस्यार्थे । 'नू चिदिति निपातः पुराणनवयोर्नू च' (निरु.४.१७) इति यास्कः । **नू च** अद्य अस्मिन्काले **पुरा च रयीणां** सर्वेषां धनानां **सदनम्** आवासस्थानं **जातस्य** उत्पन्नस्य कार्यजातस्य **जायमानस्य** उत्पद्यमानस्य **च क्षां** निवासयितारं **सतश्च** सर्वत्र विद्यमानस्वभावस्य नित्यस्य चाकाशादेः **भवतश्च** सद्भावं प्राप्नुवतः **भूरेः** असङ्ख्यातस्य अन्यस्य च भूतजातस्य **गोपां** गोपायितारं रक्षितारं **द्रविणोदां** धनप्रदं एवंगुणविशिष्टम् **अग्निं देवाः धारयन्** हविर्वोढृत्वेन धारयन्ति ।

नू च । 'ऋचि तुनुघ' इति दीर्घः । रयीणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । क्षाम् । 'क्षि निवासगत्योः' । अस्मात् णिच् । वृद्ध्यायादेशौ । ण्यन्तात् क्विप् । 'णेरनिटि' इति णिलोपः । 'वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति पूर्वं 'लोपो व्योर्वलि' इति यलोपः । न च णिलोपस्य स्थानिवत्त्वं, 'न पदान्तद्विर्वचनवरेयलोप' इति प्रतिषेधात् । यद्वा । 'क्षै जै षै क्षये' । अस्मात् क्विप् । 'आदेचः' इति आत्वम् । सतः । अस्तेः शतरि अदादित्वात् शपो लुक् । 'श्नसोरल्लोपः' इति अकारलोपः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– नू च** अद्येत्यर्थे निपातः **पुरा च** पुराणकाले च **रयीणाम्** सर्वविधधनानां **सदनम्** आवासस्थानभूतं **जातस्य च जायमानस्य च** उत्पन्नस्य उत्पद्यमानस्य च सर्वस्य भूतजातस्य **क्षाम्** वासभूमिभूतं **सतश्च गोपाम्** अविकार्यतया स्वतःसिद्धस्य सर्वत्र सतः स्वभावस्य रक्षितारं **भूरेः भवतश्च** अमितस्य परिणामं प्राप्नुवतः सर्वस्यापि गोपां, एवम्भूतं अग्निं देवा इत्यादि गतम् ।

क्षाम्–क्षि निवासगत्योः, अस्माण्णिच्, वृद्ध्यायादेशौ, ण्यन्तात् क्विप्, णेरनिटीति णिलोपः ।।

## ऋक्संहिता पदपाठसहिता

**द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।**
**द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ।। ८ ।।**
द्रविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् । द्रविणःऽदाः । वीरऽवतीम् । इषं । नः । द्रविणःऽदाः । रासते । दीर्घम् । आयुः ।। ८ ।।

**स्कन्द– द्रविणोदाः** धनदानस्वभावकोऽग्निः । **द्रविणसः तुरस्य** तुरशब्दस्त्वरतेः । उभयत्र

च द्वितीयार्थे षष्ठी । अश्वादि धनं त्वरणस्वभावकम् । **द्रविणोदाः** एव **सनरस्य** इयमपि द्वितीयार्थे षष्ठी । सनरं परिचारकमनुष्यसहितं हिरण्यादि । **प्र यंसत्** प्रयच्छतु । ददात्वित्यर्थः । **द्रविणोदाः** एव **वीरवतीम्** पुत्रसंयुक्ताम् **इषम्** अन्नम् **नः** अस्मभ्यं ददातु । **द्रविणोदाः** एव **रासते** ददातु **दीर्घम् आयुः** ।। ८ ।।

**वेङ्कटमाधव–** **द्रविणोदाः** तुरः त्वस्तेः । अश्वादिधनं त्वरणस्वभावकं प्रयच्छतु समनुष्यं च । **द्रविणोदाः** वीरवत् अन्नम्, **द्रविणोदाः दीर्घम् आयुः** च प्रयच्छतु ।। ८ ।।

**मुद्गल–** **द्रविणोदाः** द्रविणस्य धनस्य दाताऽग्निः **तुरस्य** त्वरमाणस्य चलतः जङ्गमस्य **द्रविणसः** धनस्य एकदेशम् **प्र यंसत्** अस्मभ्यं प्रयच्छतु । तथा **द्रविणोदाः सनरस्य** सननीयस्य सम्भजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु । अपि च **द्रविणोदाः वीरवतीम्** वीरैः पुत्रादिभिर्युक्तम् **इषम्** अन्नम् **नः** अस्मभ्यं प्रयच्छतु **द्रविणोदाः दीर्घम् आयुः** अस्मभ्यम् **रासते** प्रयच्छतु ।। ८ ।।

**सायण–** **द्रविणोदाः** द्रविणस्य धनस्य बलस्य वा दाता अग्निः **तुरस्य** त्वरमाणस्य चलतो जङ्गमस्य **द्रविणसः** धनस्य बलस्य वा एकवेशं **प्र यंसत्** अस्मभ्यं प्रयच्छतु । तथा **द्रविणोदाः सनरस्य** सननीयस्य सम्भजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु । अपि च **द्रविणोदाः वीरवतीं** वीरैः पुत्रादिभिः युक्तम् **इषम्** अन्नं **नः** अस्मभ्यं प्रयच्छतु । तथा **द्रविणोदाः दीर्घमायुः** अस्मभ्यं **रासते** प्रयच्छतु ।

तुरस्य । 'तुर त्वरणे' । इगुपधलक्षणः कः । सनरस्य । 'वन षण सम्भक्तौ' । 'कृदरा-दयश्च' (उ.सू.५,७१९) इति अरन्प्रत्ययः । यंसत् । 'यम उपरमे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । रासते । 'रा दाने' । पूर्ववत् लेटि सिप् । व्यत्ययेन आत्मनेपदम् ।। ८ ।।

**सिद्धाञ्जनम्–** **द्रविणोदाः** द्रुतगतिशीलस्य धनविशेषस्य बलस्य वा दाताऽग्निः **तुरस्य** त्वरमाणस्य **द्रविणसः** द्रविणस्य (चलतो चङ्गमस्येति सायणः) एकदेशं, कमप्यंशं **नः प्रयंसत्** अस्मभ्यं प्रयच्छतु । तथा **द्रविणोदाः सनरस्य** सननीयस्य सम्भजनीयस्य (जङ्गमात्मकस्य धनस्येति सायणः) 'प्रयंसत्' एकदेशं प्रयच्छतु । **द्रविणोदाः** तथा सः **वीरवतीम्** वीर्योपेतां **इषम्** प्रचोदनाशक्तिं ''प्रयंसत्'' तथा **द्रविणोदाः दीर्घम् आयुः रासते** प्रयच्छतु ।

तुरस्य–तुर त्वरणे, इगुपधलक्षणः कः । सनरस्य–वन षण सम्भक्तौ, अरन्प्रत्ययः । यंसत्– यम उपरमे, लेट्यडागमः, लेटि सिप् । रासते– रा दाने, पूर्ववल्लेटि सिप्, व्यत्ययेनात्मनेपदम् ।।

## ऋक्संहिता पदपाठसहिता

**एवा नो॑ अग्ने स॒मिधा॑ वृधा॒नो रे॒वत् पा॑वक॒ श्रव॑से॒ वि भा॑हि ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ९ ॥**

एव । नः॒ । अ॒ग्ने॒ । सम्ऽइधा॑ । वृ॒धा॒नः । रे॒वत् । पा॒व॒क॒ । श्रव॑से । वि । भा॒हि॒ ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥

**स्कन्द–** **एव नः अग्ने** इत्याद्युक्तार्थम् (१,९५,११ द्र.) ।। ९ ।।

**वेङ्कटमाधव–** ऋ.१,९५,११ इत्यत्र द्र. ।। ९ ।।

**मुद्गल–** हे **पावक!** शोधक! अग्ने! **समिधा** अस्माभिर्दत्तेन समिदादिद्रव्येण एव एवम् उक्तप्रकारेण **वृधानः** वर्धमानः सन् **रेवत्** धनयुक्ताय **नः** अस्माकम् **श्रवसे** अन्नाय **वि भाहि** विशेषेण प्रकाशय । **नः** अस्माकम् **तत्** अन्नं मित्रादयः **ममहन्ताम्** पूजयन्ताम् । रक्षन्तु इत्यर्थः । तथा **सिन्धुः** अब्देवता । **उत** समुच्चये द्यावापृथिव्यौ च ममहन्ताम् ।। ९ ।।

**सायण–** व्याख्यातेयं पूर्वसूक्ते । अक्षरार्थस्तु । हे शोधक! **अग्ने!** एवमस्माभिर्दत्तेन समिदादिद्रव्येण **वृधानः** वर्धमानः सन् **नः** अस्माकं धनयुक्तायान्नाय विशेषेण प्रकाशस्व । अस्माकं **तत्** अन्नं मित्रादयः **ममहन्तां** पूजयन्तां रक्षन्त्वित्यर्थः । तथा **सिन्धुः** अब्धेवता द्यावापृथिव्यौ च ममहन्ताम् ।। ९ ।।

**सिद्धाञ्जनम्–** एकादशी पूर्वसूक्ते व्याख्यातेयम् ।। ९ ।।

**।। इति प्रथमाष्टके सप्तमाध्याये चतुर्थो वर्गः ।।**

## ।। अथ पञ्चमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम्-९७)

(८ कुत्स आङ्गिरसः । अग्निः शुचिरग्निर्वा । गायत्री)

**अप॑ नः॒ शोशु॑चद॒घमग्ने॑ शुशु॒ग्ध्या र॒यिम् । अप॑ नः॒ शोशु॑चद॒घम् ।। १ ।।**

अप॑ । नः॒ । शोशु॑चत् । अ॒घम् । अग्ने॑ । शु॒शु॒ग्धि । आ । र॒यिम् । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ।। १ ।।

**स्कन्द–** अत्र छन्दोगब्राह्मणाधीतमितिहासमाचक्षते– 'कुत्सश्च लुशश्च इन्द्रं व्यह्वयेताम् । स इन्द्रः कुत्समुपावर्तते तं शतेन वाद्ध्रीभिरण्डयोरबध्नात् (तांब्रा ९,२,२२) इति । अत्र च वाघा वार्द्ध्र उच्यन्ते । तदेतल्लुश इन्द्ररूपतामापन्नो वक्ष्यति– 'प्र मुञ्चस्व परि कुत्सादिहा गहि' (ऋ.१०,३८,५) इति । स इन्द्रातिक्रमजेन पापेनाभिभूतमात्मानं मन्यमानः तदपनोदनार्थ-मग्निमुवाच । **अप नः शोशुचत्** इति । अपपूर्वः शुचिरत्र सामर्थ्यादपनयने । व्यत्ययेन प्रथमपुरुषः । अपनय । **नः** अस्माकम् **अघम्** इन्द्रातिक्रमणं पापम् । हे **अग्ने! शुशुग्धि आ** 'शग्धि' (निघ.३,१९) इति याच्ञाकर्मा पठितः । तस्येदमुपधाया उत्वं छान्दसत्वात् । याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते । आकारश्चात्र मर्यादायाम् । मर्यादया देहीत्यर्थः । **रयिम्** धनम् । अथवा शुशुग्धीति शुचेरेव दीप्त्यर्थस्येदं रूपम् । आ रयिमिति कर्मोपसर्ग-श्रुतेर्योग्यक्रियाध्याहारः । दीप्यस्व आहर च धनमित्यर्थः । परस्तु पादो भिन्नमेव वाक्यम् । तेन पुनरुक्तः अर्थः । भूयस्त्वार्थो वा अभ्यासः । 'अभ्यासे भूयांसमर्थं मन्यन्ते, यथा अहो दर्शनीय! अहो दर्शनीय!' (या.१०,४२) इति ।। १ ।।

**वेङ्कटमाधव–** 'सर्वमित्रं सन् कुत्स इन्द्रवचनात् दीर्घजिह्वीं नाम राक्षसीं बाधितवान् । अथ तं कुत्सं सुमित्रः सन् क्रूरमकः इत्येवं वागभ्यवदत् । तं शुगार्च्छत् तदपनोदनाय अग्निं स्तौति । सौमित्रं भवति दीर्घजिह्वी वा' (तां.ब्रा. १३,६,८-१०) इत्यादि ताण्ड्यकम् । अस्माकं पापमपगच्छतु अस्मानत्यन्तं दहतु । **अग्ने!** प्रज्वलय धनम् । अर्धर्चः उत्तरः पूरणः आदरार्थो वा ।। १ ।।

**मुद्गल–** 'अप नः' इति अष्टर्चं चतुर्थं सूक्तम् । कुत्स ऋषिः । गायत्री छन्दः । शुचिगुणकोऽग्निर्देवता शुद्धाग्निः वा ।

अत्रेदमाख्यानम्– 'दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । तां हन्तुम् इन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीत्, एषा त्वया हन्तव्येति । स चावधीत् । तं वागभ्यवदत्– अनुचितमिदं त्वयाचरितम्, यत् त्वं सर्वेषां मित्रभूतः सन् क्रूरम् अकार्षीरिति । तम् ऋषिं शोकः प्राप्नोत् । स ऋषिरनेन सूक्तेनग्निं स्तुत्वा शोकमपागमयत् ।

हे **अग्ने! नः** अस्माकम् **अघम्** पापम् **अप शोशुचत्** अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु । अपि च अस्माकम् **रयिम्** धनम् **आ** समन्तात् **शुशुग्धि** प्रकाशय । आदरातिशयद्योतनाय पुनः पठ्यते । अप ॥ १ ॥

**सायण–** 'अप नः' इति अष्टर्चं चतुर्थं सूक्तं कुत्सस्यार्षं गायत्रम् । शुचिगुणकोऽग्निः शुद्धोऽग्निर्वा देवता । तथा चानुक्रान्तम्– 'अप नोऽष्टौ शुचये गायत्रम्' इति । विनियोगो लैङ्गिकः । अत्रेदमाख्यानम् । दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । तां हन्तुमिन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीदेषा त्वया हन्तव्येति । स चावधीत् । तं वागभ्यवदत् अनुचितमिदं त्वया चरितं यत्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति । तमृषिं शोकः प्राप्नोत् । स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत् । तथा च ताण्डकम्– 'दीर्घजिह्वी वा इदं रक्षो यज्ञहा यज्ञानवलिहत्यचरत् तामिन्द्रः कया चन मायया हन्तुं नाशंसत् अथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीत्' (ता.१३.६.९) इत्यादि । तस्मादेतत्सूक्तं शुगपनयनाय विनियोज्यम् । अत एव हि सूत्रकारेण भारद्वाजेन दशमेऽहनि कर्तव्ये शान्तिकर्मणि यजुर्वेदे पठितमेतत्सूक्तं विनियुज्यते– 'नव च स्रुवाहुतीरप नः शोशुचदघम्' इति ।

हे **अग्ने! नः** अस्माकम् **अघं** पापम् **अप शोशुचत्** अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु । यद्वा । अस्मदीयं पापं शोशुचत् शोकग्रस्तं सद्विनश्यतु । अपि चास्माकं **रयिं** धनम् **आ** समन्तात् **शुशुग्धि** प्रकाशय । उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते । अवश्यमस्माकमघं विनश्यत्विति ।

शोशुचत् । 'शुच शोके' । अस्मात् यङ्लुगन्तात् लेटि अढागमः । 'अदादिवच्च' इति

वचनात् शपो लुक् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अघं शोशुचच्च रयिं शुशुग्धि चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । शुशुग्धि । 'शुच दीप्तौ' । लोटि 'बहुलं छन्दसि' इति शपः श्लुः । 'हुझल्भ्यो हेर्धिः' । 'चोः कुः' इति कुत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** अथ 'अप न' इत्यष्टर्चं चतुर्थं सूक्तं कुत्सस्यार्षं गायत्रम् । शुचिगुणकोऽग्निः शुद्धो वा देवता ।

हे **अग्ने! नः** अस्माकं **अघम्** पापं **अप शोशुचत्** अस्मत्तः निर्गत्य शोकग्रस्तं सत् विनश्यतु । अपि च अस्माकं **रयिम्** समृद्धिरूपं धनविशेषं **आ** समन्तात् **शुशुग्धि** प्रकाशय । उक्तार्थमपि वाक्यं आदरातिशयद्योतनाय पुनः पठ्यते, **नः अघम् अप शोशुचत्** इति ।

शोशुचत्–शुच शोके, यङ्लुगन्तात् लेट्यडागमः । शुशुग्धि–शुच दीप्तौ, लोटि शपः श्लुः ।।

**नीतिमञ्जरी–** साधव उपकर्तृमकृत्यमपि कुर्वन्तीत्याह–

**अकृत्यमपि कुर्वन्ति परकार्याय साधवः ।**
**दीर्घजिह्वीं मनुष्येभ्यः कुत्सो हत्वा जयं ददौ ।। २४ ।।**

साधवः सत्पुरुषाः परकार्याय परोपकारार्थम् अकृत्यमपि निषिद्धाचरणमपि कुर्वन्ति । कुत्सवत् । यथा कुत्सऋषिः 'न हिंस्यात्सर्वा भूतानि' इत्येवं धर्मं परित्यज्य मनुष्येभ्योऽभयं ददौ । किं कृत्वा दीर्घजिह्वीं राक्षसीं हत्वा । इति कुत्सेन साधुना मनुष्यार्थं निषिद्धाचरणमपि कृतम् । कृत्वा च 'अप नः शोशुचदघम्' (ऋ.१.९७) इत्यनेन पापं क्षालितम् ।

तत्रेतिहासः– दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । एतां हन्तुमिन्द्रो शक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीत् । एषा हन्तव्येति । स चावधीत् । तं वागभ्यवदद् अनुचितं त्वयाऽऽचरितम् यस्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति । स ऋषिः शोकं प्राप्नोत् स ऋषिः 'अप नः' (ऋ.१.९७) इत्यनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत् ।

'सौमित्रं भवति दीर्घजिह्वी वा इदं रक्षो सर्वहा यज्ञभवलिहन्त्यचरत्तामिन्द्रः कयाचन मायया हन्तुं नाशंसतेत्यादि' छान्दोग्यपञ्चविंशं ब्राह्मणम् (१३.६.९)

'तथा ऋग्विधानम्'– अनेन सक्तेन मध्याह्ने स्नात्वा शुचिकामो घृतं प्रत्यृचं जुहुयात् । अथवा अष्टौ समिधः प्रत्यृचं जुहुयात् ।

**'अप नः शोशुचदिति' स्नात्वा मध्यन्दिने रवौ ।**
**शुद्धिकामो यताहारः प्रत्यृच जुहुयाद्घृतमिति ।।'** (श्लो.११९)

कुत्सो गायत्र्याऽग्निं तुष्टाव । आप्रायण्यां धूमशातने विनियुक्तं महाव्याहृतीः सावित्रीं चोदाहृत्य 'अप नः शोशुचदघम्' इति, एतेन सूक्तेनेति गृह्ये ।

तत्र ऋक्– (ऋ.१.९७.१)

**अप॑ न॒ः शोशु॑चद॒घमग्ने॑ शुशु॒ग्ध्या र॒यिम् । अप॑ न॒ः शोशु॑चद॒घम् ।**

हे **अग्ने! नो**ऽस्माकम् **अघं** पापं **अपशोशुचत्** शोकग्रस्तं सद्विनश्यतु । यद्वा अस्मदीयं शत्रुं शोचयतु । अपि चास्माकं **रयिम्** आसमन्ताच्छुशुग्धि प्रकाशितं कुरु । 'शुच दीप्तौ' द्विरुक्तिरादरातिशयद्योतनाय । इति कृत्सेन परार्थमकृत्यं कृतमिति दर्शितम् ।

'शुतिकामो जिताहारः' इत्यपि पाठः । शोशुचदिति 'शुच शोके' । 'अस्माद्यङ्लुङ्नन्तात् लेट्यडागमः'(पा.३.४.९४) अदादिवच्चेति वचनाच्छपो लुक् । 'अभ्यस्तानामादिः' (पा. ६.१.१८९) इति आद्युदात्तत्वम् । अघं शोचुचच्च रयिं शुशुग्धि च' इति चार्थप्रतीतेः 'चादि लोपे विभाषा'(पा.८.१.६३) इति निघातप्रतिषेधः ।

शुशुन्धि-शुच दीप्तौ लोटि बहुलं छन्दसीति शपः श्लुः । 'हुझल्भ्यो हेर्धिः'(पा.६.४.१०१) 'चोः कुः' (पा.८.२.३०) इति कुत्वम् । उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते । अवश्यमस्माकमघं विनश्यत्विति ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**सु॒क्षे॒त्रि॒या सु॒गा॒तु॒या व॑सू॒या च॑ यजामहे । अप॑ न॒ः शोशु॑चद॒घम् ।। २ ।।**
**सु॒ऽक्षे॒त्रि॒या । सु॒गा॒तु॒ऽया । व॒सु॒ऽया । च॒ । य॒जा॒म॒हे॒ । अप॑ । न॒ः । शोशु॑चत् । अ॒घम् ।।**

**स्कन्द–** सुक्षेत्रियादीनि क्यजन्तानि इच्छावचनानि । सर्वत्र तृतीयाया डादेशः । इह तावल्लोके **सुक्षेत्रिया** शोभनक्षेत्रेच्छया परलोके **सुगातुया** सुगतीच्छया च **वसूया च** धनेच्छया च वयं त्वाम् **यजामहे** । एतानि सर्वाण्यस्मभ्यं देहीत्यर्थः । किञ्च **अप नः** ।। २ ।।

**वेङ्कटमाधव–** शोभनक्षेत्रेच्छया शोभनमार्गेच्छया धनेच्छया च वयमग्निम् **यजामहे** । **अप नः शोशुचत् अघम्** ॥ २ ॥

**मुद्गल–** **सुक्षेत्रिया** शोभनक्षेत्रेच्छया **सुगातुया** शोचनमार्गेच्छया **वसूया च** धनेच्छया निमित्तभूतया च **यजामहे** अग्निं हविर्भिः पूजयामः । अप. ॥ २ ॥

**सायण–** **सुक्षेत्रिया** शोभनक्षेत्रेच्छया **सुगातुया** शोभनमार्गेच्छया **वसूया च** धनेच्छया निमित्तभूतया च **यजामहे** अग्निं हविर्भिः पूजयामः । यद्वा सुक्षेत्रिया देवयजनलक्षणशोभन-देशसम्बन्धिना हविषा अग्निं यजामहे । **नः** अस्माकम् **अघम् अप शोशुचत्** विनश्यतु ।

सुक्षेत्रिया । शोभनं क्षेत्रं सुक्षेत्रम् । तद्विषयेच्छा सुक्षेत्रिया । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । व्यत्ययेन इत्वम् । क्यचन्तात् 'अ प्रत्ययात्' इति भावे अकारप्रत्ययः । ततः टाप् । 'सुपां सुलुक्' इति तृतीयाया लुक् । एवमुत्तरत्रापि । यद्वा । शोभनं क्षेत्रमस्यास्तीति सुक्षेत्रम् । 'इयाडियाजीकाराणामुपसङ्ख्यानम्' (पा.सू.७.१.३९.१) इति तृतीयाया डियाजादेशः ॥ २ ॥

**सिद्धाञ्जनम्– सुक्षेत्रिया** शोभनक्षेत्रेच्छया, क्षेत्रं च अन्नमयादियुक्तं शरीरं बोध्यम् । **सुगातुया** शोभनमार्गेच्छया, दिव्ययात्रामार्गः राक्षसादिशत्रुशून्यः सुगमः स्यादिति इच्छया, **वसूया च** वसु धनं तदिच्छया, वासहेतुभूतसम्पन्निमित्तभूतया च **यजामहे** पूजयामः अग्निम् । अन्यत्समानम् ।

क्षुक्षेत्रिया– शोभनं क्षेत्रं सुक्षेत्रं, तद्विषया इच्छा सुक्षेत्रिया, तृतीयाया लुक् । एवमुत्तरत्रापि ॥

## ऋक्संहिता पदपाठसहिता

**प्र यद् भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥ ३ ॥**
**प्र । यत् । भन्दिष्ठः । एषाम् । प्र । अस्माकासः । च । सूरयः । अप । नः । शोशुचत् । अघम् ॥ ३ ॥**

**स्कन्द– प्र यत्** इति व्यत्ययेन नपुंसकता । योऽयं प्रकर्षेण **भन्दिष्ठः** । भन्दिरर्चतिकर्मा (निघ.३,१४) स्तोतृतमः **एषाम्** । अनुदात्तत्वादादेशोऽयं प्रकृतस्याग्नेः । व्यत्ययेन चैकवचनस्य स्थाने बहुवचनम् । अस्याग्नेः । न च केवलोऽहमेव । किं तर्हि । अस्माकासः च अस्मदीयाश्च

पुत्राः पौत्राश्च पितृपितामहप्रपितामहा वा येऽस्याग्नेः भन्दिष्ठाः । कीदृशाः । **सूरयः** स्तोतृनामैतत् (निघ.३।१६) । स्तुतिकरणस्वभावकाः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तेषां सर्वेषाम् **अप नः शोशुचत् अघम्** । केचित्तु एषामिति बहुवचनश्रुतेरङ्गिरःप्रभृतीनामयं प्रतिनिर्देश इति मन्यन्ते । तत्रैवमेकवाक्यता योज्या । योऽग्निः प्रकर्षेण स्तुत्यतमः एषामङ्गिरःप्रभृतीनाम्, अस्मदीयाश्च पितृपितामहप्रपितामहाः अङ्गिरःप्रभृतयो यस्याग्नेः प्रकर्षेण स्तोतारः, सः **अप नः** शोशुचत् **अघम्** इति ।। ३ ।।

**वेङ्कटमाधव–** यस्मादहम् एषाम् स्तोतॄणाम् अतिशयेन स्तोता, यस्मात् च आस्माकीनाः स्तोतारः प्रस्तुवन्ति ।। ३ ।।

**मुद्गल– यत्** यथा **एषाम्** स्तोतॄणां मध्येऽयं कुत्सः **प्र भन्दिष्ठाः** प्रकर्षेण स्तोतृतमः एवम् **अस्माकासः** अस्माकीनाः **सूरयः** स्तोतारश्च प्रकर्षेण स्तोतृतमा भवन्ति । अन्यत् समानम् ।।

**सायण– यत्** यथा **एषां** स्तोतॄणां मध्येऽयं कुत्सः **प्र भन्दिष्ठः** प्रकर्षेण स्तोतृतमः एवम् **अस्माकासः** आस्माकीनाः **सूरयः** स्तोतारः **च** प्रकर्षेण स्तोतृतमा भवन्ति । अन्यत् समानम् ।

भन्दिष्ठः । भन्दतिः स्तुतिकर्मा । 'भदि कल्याणे सुखे च' इति तु धातुः । अस्मात् तृजन्तात् 'तुश्छन्दसि' इति इष्ठन् । 'तुरिष्ठेमेयःसु' इति तृलोपः । अस्माकासः । अस्माकं सम्बन्धिनः आस्माकाः । 'तस्मिन्नणि च युष्माकास्माकौ' (पा.सू.४.३.२) इति अस्माकादेशः । छान्दसोऽण्प्रत्ययस्य लोपः । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः । 'आज्जसेरसुक्' । स्थानिवदादेशोऽपि मकारात् परस्य आकारस्य उदात्तत्वम् । यद्वा षष्ठीबहुवचनेऽस्माकं शब्दस्य मध्योदात्तस्य दृष्टत्वात् स एव आचार्येण अतिदिश्यते ।। ३ ।।

**सिद्धाञ्जनम्– यत्** यथा **एषाम्** ऋषीणां स्तोतृणां मध्ये अयं कुत्सः **प्र भन्दिष्ठः** प्रकर्षेण कल्याणतमः, स्तोतृतम इति वा, एव **अस्माकासः** अस्माकीनाः **सूरयः च** विद्वांसश्च 'प्र भन्दिष्ठाः' भवन्ति । अन्यत्समानम् ।

भन्दिष्ठः–भन्दतिः स्तुतिकर्मा, भदि कल्याणे सुखे च, अस्मात् तृजन्तात् तुश्छन्दसीति इष्ठन्, तुलोपश्छन्दसि । अस्माकासः–अण् प्रत्ययलोपश्छान्दसः, आज्जसेरसुक् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**प्र यत् ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥ ४ ॥**
प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयम् । अप । नः । शोशुचत् । अघम् ॥ ४ ॥

**स्कन्द–** **प्र यत्** इति व्यत्ययेन नपुंसकता एकवचनञ्च । प्रकर्षेण ये **ते** तव हे **अग्ने! सूरयः** स्तोतारः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ते **जायेमहि** । प्रजाः प्राप्नुयामेत्यर्थः । षष्ठीनिर्देशादत्र प्रसादेन स्वभूता वेति वाक्यशेषः । तव प्रसादेन स्वभूता वा **वयम्** । किञ्च **अप नः** ॥ ४ ॥

**वेङ्कटमाधव–** यस्मात् **आग्ने!** तव स्तोतारः प्रजायन्ते । वयम् च तथा स्तोतारः सन्तः **प्र जायेमहि** ॥ ४ ॥

**मुद्गल–** हे **आग्ने! यत्** यस्मात् **ते** तव **सूरयः** स्तोतारः प्रजायन्ते । पुत्रपौत्रादिरूपेण बहुविधा भवन्ति । ततः **वयम्** च **ते** स्तोतारः सन्तः **प्र जायेमहि** पुत्रपौत्रादिरूपेण भवेम । अन्यत् समानम् ॥ ४ ॥

**सायण–** हे **अग्ने! यत्** यस्मात् **ते** तव **सूरयः** स्तोतारः प्रजायन्ते पुत्रपौत्रादिरूपेण बहुविधा भवन्ति ततः **वयं** च **ते** तव स्तोतारः सन्तः **प्र जायेमहि** पुत्रपौत्रादिभिरुपेता भवेम ।

जायेमहि । प्रार्थनायां लिङ् । श्यनि 'ज्ञाजनोर्जा' इति जादेशः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्–** हे **अग्ने! यत्** यस्मात् **ते** तव सम्बन्धिनः स्तोतारः **सुरयः** विद्वांसः **प्र** प्रजायन्ते, तस्मात् **वयं** च वयमपि **ते** त्वदीयाः सन्तः **प्रजायेमहि** सूरयो भवेम । अन्यत्समानम् ।

जायेमहि– प्रार्थनायां लिङः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**प्र यद॒ग्नेः सह॑स्वतो वि॒श्वतो॒ यन्ति॑ भा॒नवः॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ५ ॥**
प्र । यत् । अ॒ग्नेः सह॑स्वतः । वि॒श्वतः॑ । यन्ति॑ । भा॒नवः॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥ ५ ॥

**स्कन्द– यत्** इति षष्ठ्या लुग्द्रष्टव्यः । यस्य **अग्नेः सहस्वतः** बलवतः **विश्वतः** सर्वतः **प्र यन्ति** प्रकर्षेण गच्छन्ति **भानवः** दीप्तयः सः **अप नः** ॥ ५ ॥

**वेङ्कटमाधव–** यस्मात् **अग्नेः भानवः** सर्वतः **प्र यन्ति** बलवतः ॥ ५ ॥

**मुद्गल– सहस्वतः** शत्रूनभिभवतः **अग्नेः भानवः** दीप्तयः **विश्वतः** सर्वतः सर्वस्मादपि प्रदेशात् **प्र यन्ति** प्रकर्षेणोद्गच्छन्ति । **यत्** यस्मादेवं तस्मात् तेनाग्नितेजसा **नः** अस्मदीयम् **अघम् अप शोशुचत्** नश्यतु ॥ ५ ॥

**सायण– सहस्वतः** सहनवतः शत्रूनभिभवतः **अग्नेः भानवः** दीप्तयः **विश्वतः** सर्वतः सर्वस्मादपि प्रदेशात् **प्र यन्ति** प्रकर्षेणोद्गच्छन्ति । **यत्** यस्मादेवं तस्मात्तेनाग्नितेजसा अस्मदीयम् **अघं** नश्यतु ।

यन्ति । 'इणो यण्' (पा.सू.६.४.८१) इति यणादेशः ॥ ५ ॥

**सिद्धाञ्जनम्– सहस्वतः** सहनवतः, अभिभवतः पापानां इति शेषः, **अग्नेः भानवः** दीप्तयः **विश्वतः** सर्वतः **प्रयन्ति** प्रकर्षेण गच्छन्ति, यत् यस्मादेवं तस्मात् अग्नितेजसा **'नः अघं अप शोशुचत्'** ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं हि वि॑श्वतोमुख वि॒श्वतः॑ परि॒भूरसि॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ६ ॥**
त्वम् । हि । वि॒श्व॒तः॒ऽमु॒ख॒ । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥ ६ ॥

**स्कन्द–** हिशब्दो यस्मादर्थे । यस्मात् **त्वम्** हे **विश्वतोमुख!** सर्वतोमुख! **विश्वतः** सर्वतः

स्तोतॄणां **परिभूः** परिगृहीता **असि** । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मात् **अप नः** ।। ६ ।।

**वेङ्कटमाधव– त्वम् हि** सर्वतोमुख! सर्वतः परिभवसि ।। ६ ।।

**मुद्गल–** हे **अग्ने! त्वम् हि** त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति । अतो हे **विश्वतोमुख!** अग्ने! विश्वतः सर्वतः सर्वस्मादपि उपद्रवजातात् **परिभूः असि** अस्माकं परिगृहीता भव । रक्षको भवेत्यर्थः । अन्यत् समानम् ।।

**सायण–** हे अग्ने! **त्वं हि** त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तत्र मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति । अतो हे **विश्वतोमुख!** अग्ने, **विश्वतः** सर्वतः सर्वस्मा-दप्युपद्रवजातात् **परिभूरसि** अस्माकं परिग्रहीता भव । रक्षको भवेत्यर्थः । अन्यत् समानम् ।।

**सिद्धाञ्जनम्–** हे **अग्ने! त्वम् हि** त्वं खलु **विश्वतोमुख** सर्वतोज्वाल, **विश्वतः** सर्वतः **परिभूः असि** अस्माकं परिग्रहीता भवसि, रक्षको भवेत्यर्थः । परिपूर्वस्य भवतेः परिग्रहार्थः प्रागुक्तः । अन्यत्समानम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघम् ।। ७ ।।**
द्विषः । नः । विश्वतःऽमुख । अति । नावाऽइव । पारय । अप । नः । शोशुचत् । अघम् ।। ७ ।।

**स्कन्द– द्विषः नः** द्वेष्टॄन् अस्माकं हे **विश्वतोमुख! अति** । द्विष इति कर्मश्रुतेरतीति चोपसर्गाद्योग्यक्रियापदाध्याहारः । अतीत्य **नावेव पारय** । यथा कश्चित् कञ्चिन्नावा पारये-देवमस्मान् त्वं पारय । सर्वाभिप्रेतानां पारं नयेत्यर्थः । किञ्च **अप नः** ।। ७ ।।

**वेङ्कटमाधव–** शत्रून् अस्माकं सर्वतोमुख! नावेव **अति पारय** ।। ७ ।।

**मुद्गल–** हे **विश्वतोमुख!** सर्वतोमुखाग्ने! **नावेव** नावा नदीमिव **नः** अस्माकम् **द्विषः** शत्रून् **अति पारय** अतिक्रमय्य शत्रुरहितं प्रदेशं प्रापय । अन्यत् समानम् ।। ७ ।।

**सायण–** हे **विश्वतोमुख!** सर्वतोमुखाग्ने **नावेव** नावा नदीमिव **द्विषः** शत्रून् **नः** अस्मान् **अति पारय** अतिक्रमय्य शत्रुरहितं प्रदेशं प्रापय ।

नावेव । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । पारय । 'पार तीर कर्मसमाप्तौ ।। ७ ।।

**सिद्धाञ्जनम्–** हे **विश्वतोमुख!** सर्वतोमुखाग्ने, **नावेव** नावा नदीमिव **द्विषः** शत्रून् **नः** अस्मान् **अति पारय** अतिक्रमय्य दूरं प्रापय । अन्यत्समानम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**स नः सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघम् ।। ८ ।।**
**सः । नः । सिन्धुम्ऽइव । नावया । अति । पर्ष । स्वस्तये । अप । नः । शोशुचत् । अघम् ।। ८ ।।**

**स्कन्द–** यं त्वाम् अस्तोष्म **सः नः** अस्मान् **सिन्धुमिव नावया** यथा कश्चित् कश्चित् सिन्धुं नावा पारयेत् एवम् **अति पर्ष** सुष्ठु पारय **नः** स्वस्तये अविनाशाय । किञ्च **अप** ।।

**वेङ्कटमाधव– सः** अस्मान् नदीमिव नावा अति पारय शत्रून् अविनाशाय ।। ८ ।।

**मुद्गल–** हे अग्ने! **सः** त्वम् **नः** अस्मान् **नावया** नावा सिन्धुमिव नदीमिव **स्वस्तये** क्षेमार्थम् **अति पर्ष** शत्रून् अतिक्रमय्य पालय । शत्रुरहितं प्रदेशमस्मान् प्रापयेत्यर्थः । त्वत्प्रसादात् **नः** अस्माकम् **अघम्** पापं च **अप शोशुचत्** अस्मत्तोऽपक्रम्यास्मच्छत्रुः शोकयुक्तो भवतु ।।

**सायण–** पूर्वोक्त एवार्थः पुनरपि दाढर्याय प्रार्थ्यते । हे अग्ने! **सः** त्वं **नः** अस्मान् **नावया** नावा **सिन्धुमिव** नदीमिव **स्वस्तये** क्षेमार्थम् **अति पर्ष** शत्रून् अतिक्रमय्य पालय । शत्रुरहितं प्रदेशम् अस्मान् प्रापयेत्यर्थः । त्वत्प्रसादात् **नः** अस्माकम् **अघं** पापं च **अप शोशुचत्** अस्मत्तोऽपक्रम्यास्मच्छत्रुः शोकयुक्तो भवतु ।

नावया । 'आङ्याजयारां चोपसङ्ख्यानम्' (पा.म.७.१.३९.१) इति तृतीयाया अयारादेशः । 'उपोत्तमं रिति' (पा.सू.६.१.२१७) इति अकारस्य उदात्तत्वम् । पर्ष । 'पॄ पालनपूरणयोः' । लोटि 'बहुलं छन्दसि' इति शपः श्लोरभावः । 'सिब्बहुलं लेटि' इति बहुलवचनात् सिप् । गुणः । 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** हे **अग्ने! सः** स त्वं **नः** अस्मान् **नावया** नावा **सिन्धुमिव** नदीमिव **स्वस्तये** क्षेमार्थं **अतिपर्ष** शत्रूनतिक्रमय्य उद्दिष्टं स्थानं प्रापय । अन्यत्गतम् ।

पर्ष–पृ पालनपूरणयोः, लोटि छन्दसि शपः श्लोरभावः, बहुलवचनात् सिप् ॥ ८ ॥

॥ इति प्रथमाष्टके सप्तमाध्याये पञ्चमो वर्गः ॥

## ॥ अथ षष्ठो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-९८)

(३ कुत्स आङ्गिरसः । अग्निः, वैश्वानरोऽग्निर्वा । त्रिष्टुप्)

**वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।**
**इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ १ ॥**
**वैश्वानरस्य । सुऽमतौ । स्याम । राजा । हि । कम् । भुवनानाम् । अभिऽश्रीः ।**
**इतः । जातः । विश्वम् । इदम् । वि । चष्टे । वैश्वानरः । यतते । सूर्येण ॥ १ ॥**

**स्कन्द–** 'वैश्वानरस्येति वैश्वानरीयम्' (बृ.दे.३,१२९) । 'वैश्वानरस्य सुमतौ' इत्येतत्सूक्तं वैश्वानरदेवताकम् । वैश्वानरगुणोऽस्याग्निर्देवता, न शुद्ध इत्यर्थः । विश्वानरौ मध्यमोत्तमावुच्येते, ताभ्यां प्रभवतीति वैश्वानरोऽयमग्निः । अशनिनाभिहन्यमानात् वृक्षात् योऽग्निर्गृह्यते, स वैद्युतान् प्रभवति । यस्तु आदित्याभिमुखे आदर्शे मणौ वा, स आदित्यात् प्रभवति । तेन विश्वानर-प्रभवत्वादग्नेरिदं गुणाभिधानम् **वैश्वानरस्य** इति । वैश्वानरगुणस्याग्नेः **सुमतौ** शोभनायामनुग्राह्यबुद्धौ वयम् **स्याम** इत्याशास्महे । कस्मात् । उच्यते । **राजा हि कम्** हिशब्दो यस्मादर्थे । कमिति निपातः पदपूरणः । यस्माद्राजा ईश्वरो वैश्वानरः । कस्य । **भुवनानाम्** लोकानां भूतजातानां वा । **अभिश्रीः** आश्रयणीयः । इतः ओषधिवनस्पतिभ्योऽरणिभ्यां वा **जातः** सन् **विश्वम् इदम् वि चष्टे** पश्यतिकर्माऽयम् (निघ.३,१४) । पश्यति प्राणिनां कृताकृतप्रत्यवेक्षत्वात् । अन्तर्ण्यर्थो वा सामर्थ्याच्चक्षिः । दर्शयति प्रकाशयतीत्यर्थः । किञ्च **वैश्वानरो यतते** यती प्रयत्ने । प्रयत्नेन चात्र तत्पूर्वकत्वात् गमनं लक्ष्यते । गत्यर्थ एव वा सामर्थ्याद् यततिः । शुद्धोऽपि च सोपसर्गार्थे द्रष्टव्यः । सङ्गच्छते **सूर्येण** सह । कथम् । अमुतो रश्मय आदित्यादध

आगच्छन्ति । इतोऽस्यार्चिष उद्गच्छन्ति । तयोर्भासोः संसर्गं दृष्ट्वा मन्त्रदृगेवमाह– वैश्वानरो यतते सूर्येण इति ।। १ ।।

**वेङ्कटमाधव– वैश्वानरस्य** कल्याण्यां मतौ वयम् **स्याम** । **राजा हि** असौ भूताना-मभिश्रयणीयः **इतः जातः** सर्वमभिविपश्यति । **वैश्वानरः** संयतते सूर्येण । प्रातः आदित्यत्मना जायमानः सर्वं पश्यति । ततः अमुष्य रश्मयः प्रादुर्भवन्ति, अतः अस्यार्चीषि । तयोः भासोः सङ्गमं दृष्ट्वा वदति– संयतते इति (या,७,२३) ।। १ ।।

**मुद्गल–** 'वैश्वानरस्य' इति तृचं पञ्चमं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । वैश्वानर-गुणकोऽग्निः शुद्धाग्निर्वा देवता ।

**वैश्वानरस्य** विश्वेषां नरणां लोकान्तरनेतृत्वेन सम्बन्धिनोऽग्नेः **सुमतौ** शोभनाया-मनुग्रहात्मिकायां बुद्धौ **स्याम** अनुग्राह्यत्वेन वर्तमाना भवेम । **हि कम्** इत्येतत् हिशब्दार्थे । स हि वैश्वानरः **अभिश्रीः** अभिश्रयणीयः आभिमुख्येन सेवितव्यः सन् **भुवनानाम्** सर्वेषां भूतजातानाम् **राजा** स्वामी भवति । यः **वैश्वानरः** अग्निः **इतः** अस्मात् अरणिद्वयात् **जातः** जातमात्र एव **इदम् विश्वम्** सर्वं जगत् **वि चष्टे** विशेषेण पश्यति । प्रातरुद्यता सूर्येण च **यतते** सङ्गच्छते । एवम्भूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति सम्बन्धः ।। १ ।।

**सायण–** 'वैश्वानरस्य' इति तृचं पञ्चमं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्– 'वैश्वानरस्य तृचं वैश्वानरीयम्' इति । व्यूढस्य चतुर्थेऽहन्याग्निमारुते इदं सूक्तं वैश्वानरीयनिविद्धानम् । 'व्यूळ्हश्चेत्' इति खण्डे सूत्रितम्– 'वैश्वानरस्य सुमतौ क ई व्यक्ताः' (आश्व.श्रौ.८.८) इति ।।

**वैश्वानरस्य** विश्वेषां नराणां लोकान्तरनेतृत्वेन स्वामित्वेन वा सम्बन्धिनोऽग्नेः **सुमतौ** शोभनायामनुग्रहात्मिकायां बुद्धौ **स्याम** अनुग्राह्यत्वेन वर्तमाना भवेम । **हि कम्** इत्येतत् हिशब्दार्थे । स हि वैश्वानरः **अभिश्रीः** अभिश्रयणीयः आभिमुख्येन सेवितव्यः सन् **भुवनानां** सर्वेषां भूतजातानां **राजा** स्वामी भवति । यः **वैश्वानरः** अग्निः **इतः** अस्मादरणिद्वयात् जातमात्रः एव **इदं** सर्वं जगत् **वि चष्टे** विशेषेण पश्यति प्रातरुद्यता **सूर्येण** च **यतते** संयतते सङ्गच्छते । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' (तै.ब्रा.२.१.२.१०) इति तैत्तिरीयकम् । यद्वा ।

पार्थिवस्याग्नेस्तेजांस्युद्गच्छन्ति सूर्यकिरणाश्चाधोमुखं प्रसरन्ति । तयोः संगमनं दृष्ट्वा 'वैश्वानरो यतते सूर्येण' इति ऋषिर्ब्रूते । तथा च यास्कः- 'अमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसंगं दृष्ट्वैवमवक्ष्यत्' (निरु.७.२३) इति । एवम्भूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति सम्बन्धः ।

वैश्वानस्य । विश्वेषां नराणां सम्बन्धी । 'नरे संज्ञायाम्' (पा.सू.६.३.१२९) इति पूर्वपदस्य दीर्घत्वम् । 'तस्येदम्' इति अण् । सुमतौ । शोभना मतिः सुमतिः । 'तादौ च' इति गतेः प्रकृतिस्वरे प्राप्ते 'मन्क्तिन्' इत्यादिना उत्तरपदान्तोदात्तत्वम् । ननु तत्र 'कारकात्' इत्यनुवृत्तेर्गतेरुत्तरस्य क्तिनो न प्राप्नोति । एवं तर्हि मतिर्मननम् । भावे क्तिन् । शोभनं मननं यस्यां बुद्धौ सा सुमतिः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । चष्टे । 'चक्षिङ् व्यक्तायां वाचि' । अयं पश्यतिकर्मा च । अदादित्वात् शपो लुक् । 'स्कोः संयोगाद्योः' इति कलोपः । यतते । 'यती प्रयत्ने' ।। १ ।।

**सिद्धाञ्जनम्–** वैश्वानरस्येति तृचं पञ्चमं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्निर्देवता ।

**वैश्वानरस्य** विश्वेषां नराणां सम्बन्धी, तत्र आत्मभावेन स्वामित्वेन न वर्तनात्, तस्याग्नेः **सुमतौ** शोभनायां बुद्धौ **स्याम** अनुग्राह्यत्वेन वर्तमाना भवेम । **हि कम्** एतद्धिशब्दार्थे, स हि **वैश्वानरः अभिश्रीः** अभिश्रयणीयः आभिमुख्येन सेवितव्यः सन् **भुवनानाम्** सर्वेषां जगतां भूतजातानां च **राजा** स्वामी भवति । सः **इतो जातः** अस्मादुपासकात् प्रादुर्भूतः **इदम् विश्वम्** परिदृश्यमानं सर्वं जगत् **वि चष्टे** विशेषेण पश्यति, एवं पश्यत् सर्वस्य द्रष्टा भूत्वा **सूर्येण** उत्तमस्थानेन सत्यज्योतिरात्मना **यतते** सङ्गच्छते । यजमानव्यष्टौ एकत्र प्रादुर्भूतः सर्वत्र व्यापको द्रष्टा च भूत्वा स्वीयमूलस्थानभूतेनोर्ध्वेन ज्योतिषा सङ्गतो भवति ।

वैश्वानरस्य– नरो संज्ञायामिति पूर्वपदस्य दीर्घत्वं, तस्येदमित्यण् । **चष्टे**–चक्षिङ् व्यक्तायां वाचि, अयं पश्यतिकर्मा च ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।**
**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ।। २ ।।**

**पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्याम् । पृष्टः । विश्वाः । ओषधीः । आ । विवेश । वैश्वानरः । सहसा । पृष्टः । अग्निः । सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ।।**

**स्कन्द– पृष्टः** इति पृच्छतेरर्चतिकर्मणो रूपम् । पृष्टः स्तुतोऽग्निः **दिवि** । केन । सामर्थ्यात् देवैः । **पृष्टः अग्निः पृथिव्याम्** । केन । सामर्थ्यात् मनुष्यैः । सर्वस्तोतृभिश्च **पृष्टः** सन् **विश्वाः ओषधीः आ विवेश** । सर्वास्वोषधीष्वन्तर्लीन इत्यर्थः । केन पुनः पृष्टः । उच्यते । **वैश्वानरः सहसा पृष्टः अग्निः** 'सहः' (निघ.२,९) इति बलनाम । स्तोतृगतेन स्तुतिकरण-सामर्थ्येन । स्वगतया बलवत्तया स्तुत इत्यर्थः । य एवंरूपः सः नः अस्मान् **दिवा सः** एव रिषः हिंसातः हिंसितुर्वा सकाशात् **पातु** रक्षतु **नक्तम्** रात्रौ ।। २ ।।

**वेङ्कटमाधव–** द्युलोके संस्पृष्टः भूम्यां च **पृष्टः** एव **विश्वाः ओषधीः** आविवेश **वैश्वानरः** बलेन सम्पृक्तः । अस्मान् **अग्निः** अहनि रात्रौ च हिंसकात् रक्षतु ।। २ ।।

**मुद्गल–** अयम् **वैश्वानरः अग्निः दिवि** द्युलोके आदित्यात्मना **पृष्टः** संस्पृष्टः तथा **पृथिव्याम्** भूमौ गार्हपत्यादिरूपेण **पृष्टः** संस्पृष्टः तथा **विश्वाः** सर्वाः **ओषधीः पृष्टः** संस्पृष्टः **सः अग्निः आ विवेश** पाकार्थम् अन्तः प्रविष्टवान् । अन्तःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते । **सहसा** परेषामसाधारणेन बलेन **पृष्टः** संस्पृष्टः **वैश्वानरः नः** अस्मान् **दिवा** अह्नि **रिषः** हिंसतः शत्रोः **पातु** । तथा वैश्वानरः **नक्तम्** रात्रावपि अस्मान् हिंसकात् पातु ।। २ ।।

**सायण–** चातुर्मास्यान्वारम्भणीया वैश्वानरपार्जन्या । तस्यां वैश्वानरस्य हविषः 'पृष्टो दिवि' इति याज्या । 'चातुर्मास्यानि' इति खण्डे सूत्रितं– 'पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्रगायत' (आश्व.श्रौ.२.१५) इति ।

अयं वैश्वानरः **अग्निः दिवि** द्युलोके आदित्यात्मना **पृष्टः** संस्पृष्टः यद्वा निषिक्तो निहितो वर्तते । तथा **पृथिव्यां** भूमौ गार्हपत्यादिरूपेण **पृष्टः** संस्पृष्टो निहितो वा । तथा **विश्वाः** सर्वाः **ओषधीः पृष्टः** संस्कृष्टः सः अग्निः **आ विवेश** पाकार्थमन्तः प्रविष्टवान् । अन्तःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते । **सहसा** परेषामसाधारणेन बलेन **पृष्टः** संस्पृष्टः वैश्वानरः **नः** अस्मान् **दिवा** अह्नि **रिषः** हिंसतः शत्रोः **पातु** रक्षतु । तथा **सः** वैश्वानरः **नक्तं** रात्रावप्यस्मान् हिंसकात् पातु ।

पृष्टः । 'स्पृश संस्पर्शने' । छान्दसः सकारलोपः । यद्वा । 'पृषु सेचने' । निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । दिवि । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । पृथिव्याम् । 'उदात्तयणः' इति विभक्तिरुदात्ता । रिषः । 'रिष हिंसायाम्' । 'क्विप् च' इति क्विप् । 'सावेकाचः' इति पञ्चम्या उदात्तत्वम् ॥ २ ॥

**सिद्धाञ्जनम्– अग्निः** अयं वैश्वानरः **दिवि** द्युलोके **पृष्टः** निषिक्तः निहितः । तथा **पृथिव्याम्** इह च **पृष्टः** निषिक्तो निहितो वर्तते । स एवम्भूतः **विश्वाः ओषधीः** सर्वाः भूसारस्य आविष्कर्त्रीः भूजन्मनः वानस्पत्यसम्पदः **पृष्टः** संस्पृष्टः **सः** अग्निः **आ विवेश** अन्तःप्रविष्टः, परिपाकसम्पादनाय । **सः वैश्वानरः अग्निः** एवंगुणविशिष्टोऽग्निर्वैश्वानरः **सहसा** बलेन **पृष्टः** निषिक्तः सुन् **नः** अस्मान् **दिवा नक्तम्** अहर्निशं, सर्वदेत्यर्थः **रिषः** हिंसकात् पापात् **पातु** रक्षतु ।

पृष्टः–पृषु सेचने, निष्ठायां यस्य विभाषेति इट्प्रतिषेधः । रिषः–रिष हिंसायाम्, क्विप् ॥

## ऋक्संहिता पदपाठसहिता

**वैश्वा॑नर॒ तव॒ तत् स॒त्यम॑स्त्व॒स्मान् रायो॑ म॒घवा॑नः सचन्ताम् ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ३ ॥**
वैश्वा॑नर । तव॑ । तत् । स॒त्यम् । अ॒स्तु॒ । अ॒स्मान् । राय॑ः । म॒घऽवा॑नः । स॒च॒न्ता॒म् ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धु॑ः । पृ॒थि॒वी । उ॒त ॥३॥

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसन्बन्धौ यच्छब्दोऽध्याहर्तव्यः । हे **वैश्वानर!** यद्वयं ब्रूमः **तत् सत्यम् अस्तु तव** । त्वं तत् सत्यतया प्रतिपद्यस्व, प्रतिपद्य च सम्पादयेत्यर्थः । किं तत् । उच्यते । **अस्मान् रायः** धनानि **मघवानः** धनवन्तश्च **सचन्ताम्** सेवन्ताम् । धनान्यस्माकं भवन्तु राजानश्च परिचारकभूता भवन्त्वित्यर्थः । **तत् नः** इत्याद्युक्तार्थम् (ऋ.१,१४,१६ द्र.) ॥

**वेङ्कटमाधव– वैश्वानर! तव तत् सत्यम्** कर्म स्तोतृषु भवतु । अस्मान् धनानि धनवन्तः च सेवन्ताम् ॥ ३ ॥

**मुद्गल–** हे **वैश्वानर! तव तत्** त्वदीयं तत् अस्माभिः क्रियमाणं कर्म **सत्यम् अस्तु** तथा अवितथफलं भवतु । ततः **अस्मान् मघवानः** धनवन्तः **रायः** धनवदतिप्रियाः पुत्राः

**सचन्ताम्** सेवन्ताम् । एवं यदस्माभिः प्रार्थितम् **नः** अस्मदीयं तत् **मित्रः वरुणः** रात्र्यभिमानी **अदितिः** देवमाता **सिन्धुः** स्यन्दनशीलोदकाभिमानी देवः । **उत** समुच्चये । एते सर्वे मित्रादयः **ममहन्ताम्** पूजयन्ताम् पालयन्तामित्यर्थः ॥ ३ ॥

**सायण–** हे **वैश्वानर! तव तत्** त्वदीयं तत् अस्माभिः क्रियमाणं कर्म **सत्यमस्तु** अवितथफलं भवतु । ततः **अस्मान् मघवानः** मघवन्तः धनवन्तः **रायः** धनवदतिप्रियाः पुत्राः **सचन्तां** सेवन्ताम् । एवं यदस्माभिः प्रार्थितं **नः** अस्मदीयं **तत् मित्रः** अहरभिमानी देवः **वरुणः** रात्र्यभिमानी **अदितिः** अदीना देवमाता सिन्धुः स्यन्दनशीलोदकाभिमानी देवः । उतशब्दः समुच्चये । एते सर्वे मित्रादयः **ममहन्तां** पूजयन्ताम् पालयन्तामित्यर्थः ॥ ३ ॥

**सिद्धाञ्जनम्–** हे **वैश्वानर! तव तत् सत्यम्** त्वदीयं तच्छब्दवाच्यं सत्यं ज्योतिः **अस्तु** अस्माकं प्राप्यं भवतु । **मघवानः** महनीयेन धनेन युक्ताः **रायः**, समृद्धिरूपधनविशेषाः दिव्याः **अस्मान् सचन्ताम्** सेवन्ताम्, उत्तमसत्यप्राप्तौ ईदृशा रायः सुगमा एव । एवं यदस्माभिः प्रार्थितं तत् मित्रादयो मामहन्तामित्यादि गतम् ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-९९)

(१ कश्यपो मारीचः । अग्निः, जातवेदा अग्निर्वा । त्रिष्टुप्)

**जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥**
जातऽवेदसे । सुनवाम । सोमम् । अरातिऽयतः । नि । दहाति । वेदः । स । नः । पर्षत् । अति । दुःगानि । विश्वा । नावाऽइव । सिन्धुम् । दुःऽइता । अति । अग्निः ॥

**स्कन्द–** अतः परं कश्यपार्षम् उत्सृष्टाध्ययनमेकाधिकं सूक्तसहस्रम् । तस्यैतदेकर्चमाद्यं सूक्तम् । एवं हि भगवान् शौनक आह– 'पूर्वा पूर्वा सहस्रस्य सूक्तानामेकभूयसाम् । जातवेदस इत्याद्यं कश्यपार्षस्य शुश्रुम' इति । यस्यैकाधिकानां सूक्तानां सहस्रस्य कश्यपार्षस्य सर्वसूक्तेषु पूर्वा पूर्वेषा ऋक् जातवेदस इत्याद्यमेकर्चमित्येतद्द्वयमपि श्रुतवन्त एव । नाधीतवन्त इत्यर्थः । 'जातवेदस्यम्' । जातवेदोदेवताकमेतत् सूक्तम् । जातवेदा इत्येवंगुणोऽस्याग्निर्देवता न शुद्ध

इत्यर्थः । **जातवेदसे** वेद इति धननाम प्रज्ञापर्यायो वा । उत्पन्नधनाय उत्पन्नप्रज्ञाय वा । अग्नये **सुनवाम** वयम् **सोमम्** । किं कारणम् । उच्यते । यस्मात् **अरातीयतः** अरातिरदानं हविषः, तां कामयमानस्य । सोममददत्त इत्यर्थः । **नि दहाति** नियमेन दहत्यग्निः । विनाशयतीत्यर्थः । किम् । **वेदः** धनं ज्ञानं वा । अथवा अरातिशब्द शत्रुवचनः । दहातीत्यपि आशिषि लिङर्थे लेट् । अस्मच्छत्रुतां कामयमानस्य स्वभूतं धनं नियमेन दहत्वग्निरित्याशास्मह इत्यर्थः । किञ्च **सः नः दुरिता अति अग्निः** अतिशब्द उपसर्गः **पर्षत्** इत्याख्यातात् पुरस्तादपक्रष्टव्यः । सोऽस्मानति पारयतु । अतिक्रमयत्वित्यर्थः । कीदृशानि । **अति दुर्गाणि** दुरतिक्रमाणीत्यर्थः । **विश्वा** सर्वाणि । कथम् । **नावा इव सिन्धुम्** यथा कश्चित् काश्चिन्नावा नदीमतिक्रामयेत् । कानि । पापानि ।। १ ।।

**वेङ्कटमाधव–** कश्यपो मारीचः । जातधनाय **सुनवाम सोमम्** । सोऽरातित्वमिच्छतः भस्मीकरोति धनम् । **सः** अस्मान् विश्वानि **दुर्गाणि** स्थानानि **नावा** नदीम् इव कर्णधारः अतितरतु दुःखानि च इति ।। १ ।।

**मुद्गल–** जातवेदसे' इत्येकर्चं षष्ठं सूक्तम् । मरीचिपुत्रः सर्वेषां वेदित्रेऽग्नये लतारूपम् सोमम् सुनवाम अभिषुणवाम । जातवेदोगुरकोऽग्निः शुद्धाग्निर्वा देवता ।

**जातवेदसे** जातानाम् उत्पत्तिमतां सर्वेषां वेदित्रेऽग्नये लतारूपम् **सोमम् सुनवाम** अभिषुणवाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । सोऽग्निः **अरातीयतः** अरातीं शत्रुमिव अस्मान् आचरतः शत्रोः **वेदः** धनं **नि दहाति** नितरां दहतु भस्मीकरोतु । अपि च **सः** अग्निः **नः** अस्मान् **विश्वा** विश्वानि सर्वाणि **दुर्गाणि** दुर्गमनानि भोक्तुमशक्यानि दुःखानि **अति पर्षत्** अतिपारयतु । अतिक्रमय्य दुःखरहितं सुखं प्रापयतु । दृष्टान्तः । **नावा इव सिन्धुम्** यथा कश्चित् कर्णधारः ग्राहादिभिः दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा **दुरिता** दुरितानि दुःखहेतुभूतानि पापानि अस्मान् अग्निः **अति** पारयतु ।। १ ।।

**सायण–** 'जातवेदसे' इति एकर्चं षष्ठं सूक्तं मरीचिपुत्रस्य कश्यपस्यार्षं त्रैष्टुभम् । जातवेदोगुणकोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्– 'जातवेदस एका जातवेदस्य-मेतदादीन्येकभूयांसि सूक्तसहस्रमेतत्तु कश्यपार्षम्' इति । अहर्गणेषु द्वितीयादिष्वहःस्वाग्निमारुते

जातवेदस्यनिविद्धानात् पूर्वमेषा शंसनीया । सूत्रितं च– 'जातवेदसे सुनवास सोममित्याग्निमारुते जातवेदस्यानाम्' (आश्व.श्रौ.७.१) इति ।

**जातवेदसे** जातानामुत्पत्तिमतां सर्वेषां वेदित्रे यद्वा जातैः सर्वैः प्राणिभिर्ज्ञायमानाय जातधनाय जातप्रज्ञाय वा अग्नये लतारूपं **सोमं सुनवाम** अभिषुणुयाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । सः अग्निः **अरातीयतः** अरातिं शत्रुमिवास्मानाचरतः शत्रोः **वेदः** धनं **नि दहाति** नितरां दहतु भस्मीकरोतु । अपि च **सः** अग्निः **नः** अस्मान् **विश्वा** विश्वानि सर्वाणि **दुर्गाणि** दुर्गमनानि भोक्तुमशक्यानि दुःखानि **अति पर्षत्** अतिपारयतु अतिक्रमय्य दुःखरहितं सुखं प्रापयतु । तत्र दृष्टान्तः । **नावेव सिन्धुम्** । यथा कश्चित् कर्णधारो ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा **दुरिता** दुरितानि दुःखहेतुभूतानि पापानि अस्मान् **अग्निः अति** पारयतु । दुःखनिमित्तात् पापादपि अस्मानुत्तारयत्वित्यर्थः । अत्र निरुक्तं– 'जातवेदाः कस्मात् जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो वा जातविद्यो वा जातप्रमो वा यत्तज्जातःपशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति हि ब्राह्मणम्' (निरु.७.१९) इत्यादि ।

जातवेदसे । जातानि वेत्तीति जातवेदाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् कारकपूर्वात् वेत्तेरसुन् पूर्वपदप्रकृतिस्वरत्वं च । अरातीयतः । न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुः । तमिव अस्मानाचरति । 'उपमानादाचारे' (पा.सू.३.१.१०) इति उपमानभूतात् कर्मणः क्यच् । क्यजन्तात् लटः शतृ । 'शतुरनुमः' इति ङसः उदात्तत्वम् । दहाति । 'दह भस्मीकरणे' । लेटि आडागमः । विद्यते लभ्यते इति वेदः धनम् । 'विद्लृ लाभे' । औणादिकः कर्मणि असुन् । पर्षत् । 'पृ पालनपूरणयोः' । अस्मात् अन्तर्भावितण्यर्थात् लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । दुर्गाणि । दुःखेन गम्यते एष्विति 'सुदरोधिकरणे' इति गमेः डः ॥ १ ॥

**सिद्धाञ्जनम्–** 'जावेदस' इत्येकर्चं षष्ठं सूक्तम्, मरीचिपुत्रस्य कश्यपस्यार्षम् त्रैष्टुभम्, जातवेदोगुणकोऽग्निर्देवता । ऋक्संहितायां इदमेकमेव एकर्चं सूक्तमित्यत्र विशेषोऽवधेयः । तान्त्रिकैरुपात्तेषु वेदमन्त्रेषु दुर्गामन्त्रत्वेनायं मन्त्रो गृहीत इति च बोध्यम् ।

**जातवेदसे** जातानां सर्वेषां वेदित्रे **सोमम्** सर्वानुभूतिरसं **सुनवाम** अभिषुणवाम, संस्कृत्य समर्पयेम । सः अग्निः **अरातीयतः** शत्रुमिवास्मानाचरतः, अस्मासु शत्रुत्वमाचरतः राक्षसादेः इत्यर्थः **वेदः** ज्ञानं धनं वा **निदहाति** नितरां दहतु, पापात्मनां ज्ञाने सति महत् कष्टं साधुलोकस्य देवपरायणस्य, तेषां ज्ञानविनाशे सर्वक्षेमं भवति । **सः अग्निः** जातवेदाः **नः** अस्मान् **विश्वा** सर्वाणि **दुर्गाणि** दुर्गमनानि स्थानानि दुःखानि च **अति पर्षत्** अतिक्रमय्य दुर्गतिरहितं सुखं प्रापयतु । तत्र दृष्टान्तः– **इव** यथा **नावा** नौकया **सिन्धुम्** नदीं कर्णधारः तारयति, तथा **दुरिता** दुरितानि पापानि **अति** तारयत्वस्मान् ।

दहाति–दहतेः लेट्यडागमः । पर्षत्–पृ पालनपूरणयोः, अस्मादन्तर्भावितण्यर्थाल्लेट्यडागमः, लेटि सिप् ।। १ ।।

।। इति प्रथमाष्टके सप्तमाध्याये सप्तमो वर्गः ।।

## ।। अथ अष्टमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-१००)

(१९ वार्षागिराः ऋज्राश्वाऽम्बरीष–सहदेव-भयमान-सुराधसः । इन्द्रः । त्रिष्टुप्)

**स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।**
**सतीनसत्वा हव्यो भरेषु मरुत्वान् नो भवत्विन्द्र ऊती ।। १ ।।**

सः । यः । वृषा । वृष्ण्येभिः । सम्ऽओकाः । महः । दिवः । पृथिव्याः । च । सम्ऽराट् । सतीनऽसत्वा । हव्यः । भरेषु । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। १ ।।

**स्कन्द–** 'सूक्तं स यो वृषेत्येतत् पञ्च वार्षागिरा विदुः । निरुक्ता नामधेयैः स्वैरपि चैतत्त्यदित्यृचि (षड्गुरुशिष्यः ऋअ.२,१,१००)। 'स यो वृषा' इत्येतत् सूक्तं पञ्च ऋषयः वृषागिरः पुत्रा विदुः जानन्ति दृष्टवन्त इत्यर्थः । ते तु निरुक्ताः स्वैर्नामधेयैः 'एतत्त्यत इन्द्र वृष्णे'(ऋ.१.१००,१७) इत्यस्यामृचि ऋज्राश्वः अम्बरीषः सहदेवः भयमानः सुराधा इत्येते । तत ऐन्द्रमुत्तरम् । यज्जातवेदस्यं पूर्वमुक्तं तस्मादनन्तरमैन्द्रमिदं सूक्तम् । सः इति तच्छब्दश्चतुर्थे पादे सम्बन्धयितव्यः । **यः** इन्द्रः **वृषा** वर्षिता कामानाम् । स्तोतृभ्यो दातेत्यर्थः । **वृष्ण्येभिः**

**समोकाः** वृष्ण्यमित्यपठितमपि बलनाम । उच समवाये । बलैः समवेतः । अत्यन्तबलवानित्यर्थः । **महः** महत्याः **दिवः** पृथिव्या **च सम्राट्** ईश्वरः । सतीनसत्वा 'सतीनम्'(निघं.१,१२) इत्युदकनाम । 'षणु दाने' । वृष्टिलक्षणस्योदकस्य दाता । **हव्यः भरेषु** जयार्थमाह्वातव्यः सङ्ग्रामेषु । सः **मरुत्वान्** मरुद्भिः सहितः **नः** अस्माकम् **भवतु इन्द्रः ऊती** अविता रक्षिता ।।

**वेङ्कटमाधव–** ऋषयः तेषां गोत्रं च सूक्ते भविष्यन्ति । सः **यः** वर्षिता वर्षणकुशलैः मरुद्भिः सहितः महतः **दिवः पृथिव्याः च** ईशानः सनितजलः ह्वातव्यः सङ्ग्रामेषु **मरुत्वान् नः भवतु इन्द्रः** अस्मिन् युद्धे रक्षणाय ।। १ ।।

**मुद्गल–** 'स यो वृषा' इत्येकोनविंशत्यृचं सप्तमं सूक्तम् । वृषागिरो महाराजस्य पुत्राः ऋज्राश्वाम्बरीषसहदेवभयमानसुराधसः पञ्च राजऋषय ऋषयः । त्रिष्टुप्छन्दः । इन्द्रो देवता । शत्रुभिरपहृतासु गोषु तैः सह युद्धार्थं निर्गच्छन्त ऋज्राश्वादयोऽनेन सूक्तेन इन्द्रमस्तुवन् ।।

**यः** इन्द्रः **वृषा** कामानां वर्षिता **वृष्ण्येभिः** वृष्णिभवैर्वीर्यैः **समोकाः** सम्यक् समवेतः सङ्गतः **महः** महतः **दिवः** द्युलोकस्य **पृथिव्याः** प्रथिताया भूमेः **च सम्राट्** ईश्वरः **सतीनसत्वा** उदकस्य सत्वा सादयिता **भरेषु** सङ्ग्रामेषु **हव्यः** सर्वैः स्तोतृभिराह्वातव्यः । एवम्भूतो मरुत्वान् मरुद्भिः युक्तः सः इन्द्रः **नः** अस्माकम् **ऊती** ऊतये रक्षणाय भवतु ।। १ ।।

**सायण–** 'स यो वृषा' इति एकोनविंशत्यृचं सप्तमं सूक्तम् । अत्रानुक्रम्यते– 'स यो वृषैकोना वार्षागिरा ऋज्राश्वाम्बरीषसहदेवभयमानसुराधसः' इति । वृषागिरो महाराजस्य पुत्रभूताः ऋज्राश्वादयः पञ्च राजर्षयः सह इदं सूक्तं ददृशुः । अतस्तेऽस्य सूक्तस्य ऋषयः । उक्तं ह्यार्षानुक्रमण्याम्– 'सूक्तं स यो वृषेत्येतत् पञ्च वार्षागिरा विदुः । नियुक्ता नामधेयैः स्वैरपि चैतत्त्यदित्यृचि' इति । अनादेशपरिभाषया त्रिष्टुप् । इन्द्रो देवता । दशरात्रस्य षष्ठेऽहनि मरुत्वतीये इदं सूक्तम् । तथा च सूत्रितं– 'यं त्वं रथमिन्द्र स यो वृषेन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम्' (आश्व.श्रौ.८.१) इति ।

**यः** इन्द्रः **वृषा** कामानां वर्षिता **वृष्ण्येभिः** वृष्णि भवैर्वीर्यैः **समोकाः** सम्यक् समवेतः सङ्गतः **महः** महतः **दिवः** द्युलोकस्य **पृथिव्याः** प्रथिताया भूमेः **च सम्राट्** ईश्वरः **सतीन-सत्वा** । सतीनम् इति उदकनाम । उदकस्य सत्वा सादयिता गमयिता **भरेषु** सङ्ग्रामेषु **हव्यः**

सर्वैः स्तोतृभिराह्वातव्यः एवम्भूतः **मरुत्वान्** मरुद्भिर्युक्तः **सः इन्द्रः नः** अस्माकम् **ऊती** ऊतये रक्षणाय भवतु ।

वृष्ण्येभिः । वृषञ्शब्दात् 'भवे छन्दसि' इति यत् । 'अल्लोपोऽनः' इति अकारलोपः । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न भवति । महः । 'महं पूजायाम्' । क्विप् । यद्वा । महच्छब्दे अच्छब्दलोपः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । सम्राट् । 'मो राजि समः क्वौ' (पा.सू.८.३.२५) इति राजतौ क्विबन्दे उत्तरपदे समो मकारस्य मकारादेशः । मकारस्य च मकारवचनमनुस्वारबाधनार्थम् । सतीनसत्वा । 'षद्लृ विशरणगत्यवसादनेषु' । मेघेषु निषीदतीति सतीनं वृष्ट्युदकम् । औणादिकः ईनप्रत्ययस्तकारान्तदेशश्च । यद्वा । सती माध्यमिका वाक् । सा इना ईश्वरा यस्य तत्सतीनम् । व्यत्ययेन पुंवद्भावाभावः । तत्सत्वा । सदेः अन्तर्भावितण्यर्थात् 'प्र ईरसद्योस्तुट् च' (उ.सू.४.५५३) इति औणादिको वनिप् तुडागमश्च । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । मरुत्वान् । 'झयः' इति मतुपो वत्वम् । ऊती । 'ऊतियूति' इत्यादिना क्तिनः उदात्तत्वम् । 'सुपां सुलुक्' इति चतुर्थ्याः पूर्वसवर्णदीर्घः ।।

**सिद्धाञ्जनम्**– 'स यो वृषे'त्येकविंशत्यृचं सप्तमं सूक्तम् । वार्षागिराः ऋज्राश्व–अम्बरीषसहदेव–भयमान–सुराधसः ऋषयः । त्रिष्टुप् छन्दः, इन्द्रो देवता ।

**यः** इन्द्रः **वृषा** वर्षिता अभीष्टानां दिव्यसम्पदां **वृष्ण्येभिः** वृष्णि **भवैर्वीर्यैः समोकाः** सं सङ्गतं ओकः, स्थानं यस्य सः, वीर्यैः समवेतः, **महः** महतः **दिवः** द्युलोकस्य **पृथिव्याः च** प्रथितायाः पृथुलायाः भूमेश्च **सम्राट्** ईश्वरः, **सतीनसत्वा** सतीनं सत्यसम्बन्धि ज्योति-र्बलादिकं तस्य सत्वा आसादयिता प्रापयिता । सायणस्तु 'सतीनं वृष्ट्युदकं, यद्वा सती माध्यमिका वाक् इना ईश्वरा यस्य तत् सतीनं तत्सत्वा' इति व्याचष्टे । अस्मत्पक्षे तु, 'सत्' शब्दात् औणादिक ईनप्रत्ययः, दकारस्य व्यत्ययेन तकारः छान्दसः, **भरेषु** यजनेषु **हव्यः** आह्वातव्यः एवम्भूतः **मरुत्वान्** मरुद्भिर्युक्तः **सः इन्द्रः नः** अस्माकं **ऊती** ऊतये, चतुर्थ्याः पूर्वसवर्णदीर्घः, वर्धनाय, रक्षणाय वा, **भवतु** ।

वृष्ण्येभिः–वृषन्शब्दात् भवे छन्दसीति यत् । सतीनसत्वा–सतीनस्य व्युत्पादितलक्षणस्य सत्वा आसादयिता, सदेरन्तर्भावितण्यर्थात् औणादिको वनिप् तुडागमश्च ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।**
**वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान् नो भवत्विन्द्र ऊती ।। २ ।।**
यस्य । अनाप्तः । सूर्यस्यऽइव । यामः । भरेऽभरे । वृत्रऽहा । शुष्मः । अस्ति । वृषन्ऽतमः । सखिऽभिः । स्वेभिः । एवैः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। २ ।।

**स्कन्द–** **यस्य** इन्द्रस्य **अनाप्तः** अप्राप्तपूर्वः केनचिच्छत्रुणा **सूर्यस्य इव यामः** रथः । यस्य **भरेभरे** तत्रतत्र सङ्ग्रामे **वृत्रहा शुष्मः** शत्रुहननसमर्थश्च बलम् **अस्ति** । यच्छब्द-श्रुतेस्तच्छब्दोऽध्याहार्यः । सः **वृषन्तमः** अतिशयेन वर्षिता । **सखिभिः स्वेभिः** आत्मीयैः मरुदाख्यैः सह । कीदृशैः । **एवैः** एवशब्दोऽत्र काम्यवचनः पालयितृवचनो वा । कामयितव्यैः पालयितृभिर्वा । **मरुत्वान्** ।। २ ।।

**वेङ्कटमाधव–** यं गच्छन्तं सूर्यम् इव अन्ये न व्याप्नुवन्ति । यस्य वा सङ्ग्रामेसङ्ग्रामे शत्रुहन्तृ बलम् अस्ति । वर्षितृतमः स्वैः **सखिभिः** गन्तृभिः मरुद्भिः सहितः ।। २ ।।

**मुद्गल–** **यस्य** इन्द्रस्य **यामः** गतिः **अनाप्तः** परैरप्राप्तः **सूर्यस्य** इव यथा सूर्यस्य गतिः अन्यैः न प्राप्तुं शक्यते तद्वत् । **स्वेभिः** आत्मीयैः **एवैः** गमनशीलैः **सखिभिः** मित्रभूतैः मरुद्भिः सह **वृषन्तमः** अतिशयेन कामानां वर्षिता **भरेभरे** सर्वेषु सङ्ग्रामेषु **वृत्रहा** शत्रूणां हन्ता **शुष्मः** सर्वेषामसुराणां शोषकः । एवम्भूतो यः इन्द्रः **अस्ति** विद्यते सः **मरुत्वान्** इन्द्रः **नः** अस्माकम् **ऊती** रक्षणाय भवतु ।। २ ।।

**सायण–** **यस्य** इन्द्रस्य **यामः** गतिः **अनाप्तः** परैरप्राप्ता **सूर्यस्येव** । यथा सूर्यस्य गतिरन्यैर्न प्राप्तुं शक्यते तद्वत् । **स्वेभिः** आत्मीयैः **एवैः** गमनशीलैः **सखिभिः** मित्रभूतैर्मरुद्भिः सह **वृषन्तमः** अतिशयेन कामानां वर्षिता **भरेभरे** सर्वेषु सङ्ग्रामेषु **वृत्रहा** शत्रूणां हन्ता **शुष्मः** सर्वेषामसुराणां शोषकः एवंभूतो यः इन्द्रः **अस्ति** विद्यते सः **मरुत्वान् इन्द्रः नः** अस्माकं रक्षणाय **भवतु** ।

यामः । 'या प्रापणे' । 'अर्तिस्तुसु' इत्यादिना भावे मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । शुष्मः । 'शुष शोषणे' । 'अविसिविसिशुषिभ्यः कित्' (उ.सू.१.१४१) इति मन्प्रत्ययः ।

नित्त्वादाद्युदात्तत्वम् । अस्ति । यद्वृत्तयोगादनिघातः । वृषन्तमः । वृषञ्शब्दादुत्तरस्य तमपो 'नाद्घस्य' (पा.सू.८.२.१७) इति नुट् । एवैः । 'इण् गतौ' । 'ईण्शीङ्भ्यां वन्' ।। २ ।।

**सिद्धाञ्जनम्– यस्य** इन्द्रस्य **यामः** गमनं **अनाप्तः** अप्राप्तः परैः **सूर्यस्येव** सूयस्य गतिर्यथा नान्यैः प्राप्तुं शक्यते तद्वत् । **स्वेभिः** आत्मीयैः **एवैः** गमनशीलैः **सखिभिः** समानाख्यानैः सहायभूतैः मरुद्भिः सह **वृषन्तमः** अतिशयेन वर्षिता **भरेभरे** सर्वेषु यजनेषु **वृत्रहा** वृत्रस्यासुरस्य हन्ता **शुष्मः** बलवान् शोषणोऽसुराणां, एवम्भूतो य इन्द्रः **अस्ति**, मरुत्वानित्याद्यन्यत्समानम् ।

यामः–यातेः भावे मन् । शुष्मः–शुष शोषणे, मन्प्रत्ययः । वृषन्तमः–वृषन्शब्दात् उत्तरस्य तमपो नाद्घस्येति नुट् । एवैः–एतेः, इण्शीङ्भ्यां वन् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः ।**
**तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान् नो भवत्विन्द्र ऊती ।। ३ ।।**
दिवः । न । यस्य । रेतसः । दुघानाः । पन्थासः । यन्ति । शवसा । अपरिऽइताः ।
तरत्ऽद्वेषाः । ससहिः । पौंस्येभिः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। ३ ।।

**स्कन्द– दिवः** इति पञ्चमी । नशब्द उपरिष्टादुपचारः उपमार्थीयत्वात् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (या.७,३९) इति पदपूरणः । **यस्य** इत्येतत् **शवसा** इत्येतेन सम्बध्यते । द्युलोकात् **यस्य** इन्द्रस्य बलेन **रेतसः** रेतांसि वृष्टिलक्षणान्युदकानि **दुघानाः** क्षरन्तः **पन्थासः** वृष्टिपतनमार्गाः **यन्ति** पृथिवीं प्रति गच्छन्ति । **अपरीताः** अपगताः वृष्टिप्रतिबन्धकारैरसुरादिभिर-प्राप्ताः । द्युलोकाद् यस्य प्रसादेन स्वैः पथिभिरप्रतिबन्धा वृष्टिः पततीत्यर्थः । यच्छन्दश्रुते-स्तच्छन्दोऽध्याहार्यः । सः **तरद्द्वेषाः** तरति द्वेषांसीति तरद्द्वेषाः । तरिश्चात्र प्लवनार्थः । प्लवनं च गमनं प्लवतेर्गत्यर्थत्वात् । शुद्धोऽपि चाभिपूर्वार्थो द्रष्टव्यः । वधार्यो वा सामर्थ्यात्तरतिः । द्वेष्टॄणां शत्रूणां वधार्थमभिगन्ता हन्ता वेत्यर्थः । **सासहिः** अत्यर्थमभिभविता शत्रूणाम् । **पौंस्येभिः** स्वैः बलैः । **मरुत्वान्** ।। ३ ।।

**वेङ्कटमाधव–** द्युलोकस्येव **यस्य** उदकानि क्षरन्तः रश्मयः **यन्ति** बलेन शत्रुभिः अपरिवृताः, स तीर्णशत्रुः सहनशीलः बलैः ।। ३ ।।

**मुद्गल– यस्य** इन्द्रस्य **पन्थासः** रश्मयः **रेतसः** वृष्ट्युदकानि **दुघानाः** दुहन्तः प्रवर्षन्तः **यन्ति** निर्गच्छन्ति । द्युलोकादिवस्ततः प्रसरन्ति । दृष्टान्तः । **दिवः न** यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वन्तो नभस्थलान्निर्गच्छन्ति तद्वत् । कीदृशा रश्मयः । **शवसा** बलेन सहिताः **अपरीताः** परैरनभिगताः । दुष्प्रापा इत्यर्थः । सोऽयमिन्द्रः **तरद्वेषाः** द्वेषांसि शत्रून् तरन् । जितशत्रुक इत्यर्थः । **पौंस्येभिः** बलैः सहितः **सासहिः** शत्रूणामभिभविता । एवम्भूतः **मरुत्वान्** इन्द्रः **नः** अस्माकं रक्षणाय भवतु ।। ३ ।।

**सायण– यस्य** इन्द्रस्य **पन्थासः** रश्मयः **रेतसः** वृष्ट्युदकानि **दुघानाः** दुहन्तः प्रवर्षन्तः **यन्ति** निर्गच्छन्ति द्युलोकादितस्ततः प्रसरन्ति । तत्र दृष्टान्तः । **दिवो न** । यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वन्तः नभःस्थलान्निर्गच्छन्ति तद्वत् । कीदृशा रश्मयः । **शवसा** बलेन सहिताः **अपरीताः** परैरनभिगताः दुष्प्रापा इत्यर्थः । सोऽयम् इन्द्रः **तरद्वेषाः** द्वेषांसि शत्रूंस्तरन् जितशत्रूक इत्यर्थः । **पौंस्येभिः** बलैः **ससहिः** शत्रूणामभिभविता एवम्भूतः **मरुत्वान् इन्द्रः नः** अस्माकं रक्षणाय भवतु ।

रेतसः । रेत इति उदकनाम । रीयते गच्छतीति रेतः । 'री गतिरेषणयोः' । 'स्रुरीभ्यां तुट् च' (उ.सू.४.६४१) इति असुन् तुडागमश्च शसो व्यत्ययेन ङसादेशः । दुघानाः । 'दुह प्रपूरणे' । कर्तरि लटः शानच् । अदादित्वात् शपो लुक् । व्यत्ययेन घत्वम् । वृषादेराकृति-गणत्वात् आद्युदात्तत्वम् । पन्थासः । पतन्तीति पन्थानो रश्मयः । 'पतेस्थ च' (उ.सू.४. ४५२) इति इनिप्रत्ययस्थकारान्तादेशश्च । जसि 'पथिमथ्यृभुक्षामात्' इति व्यत्ययेन आत्वम् । 'आज्जसेरसुक्' । यद्वा । पन्थान इत्यत्र वर्णव्यापत्त्या नकारस्य सकारः । 'पथिमथोः सर्वनाम-स्थाने' इति आद्युदात्तत्वम् । ससहिः । 'षह अभिभवे' । 'उत्सर्गश्छन्दसि' इति वचनात् 'आदृगमहन' इति किप्रत्ययः । लिङ्वद्भावात् द्विर्वचनम् ।। ३ ।।

**सिद्धाञ्जनम्– यस्य** इन्द्रस्य **पन्थासः** मार्गाः **दिवो न रेतसः** द्युलोकस्य सारांशानिव तेजोबलादीन् **दुघानाः** दुहन्तः प्रवर्षन्तः प्रसारयन्तः **यन्ति** गच्छन्ति, इन्द्रस्य गमनमार्गाः द्युलोकसारैरार्द्रा इव तेजोबलादिप्रसरा भवन्तीत्यर्थः । ते च पन्थासः **शवसा** दीप्तेन बलेन सहिताः **अपरीताः** परैरनभिगताः । सोऽयमिन्द्रः **तरद्वेषाः** द्वेषांसि तरन् जितवैरिवर्ग इत्यर्थः **पौस्येभिः** बलैः **सासहिः** अभिभविता शत्रूणाम् । अन्यत्समानम् ।

रेतसः—रीयते गच्छतीति रेतः, सुरीभ्यां तुट् रेति असुन् तुडागमश्च । दुघानाः—दुह प्रपूरणे, शानच्, अदादित्वात् शपो लुक्, व्यत्ययेन घत्वम् । पन्थासः—पन्थानः, आज्जसेरसुक् । सासहिः—षह अभिभवे, लिड्वद्भावाद् द्विर्वचनं, छन्दसि किप्रत्ययः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**सो अङ्गिरोभिरङ्गिरस्तमो भूद् वृषा वृषभिः सखिभिः सखा सन् ।**
**ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान् नो भवत्विन्द्र ऊती ।। ४ ।।**
**सः । अङ्गिरःऽभिः । अङ्गिरःऽतमः । भूत् । वृषा । वृषऽभिः । सखिऽभिः । सखा । सन् । ऋग्मिऽभिः । ऋग्मी । गातुऽभिः । ज्येष्ठः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।।**

**स्कन्द– सः** इन्द्रः **अङ्गिरोभिः** ऋषिभिः **अङ्गिरस्तमः** सोऽयमित्यभिसम्बन्धादङ्गिर-सम्बन्धिन्ययमङ्गिरःशब्दोऽत्र द्रष्टव्यः । अतिशयेनाङ्गिरसां स्तुत्यतया सम्बन्धी **भूत्** भवति । **वृषा** वर्षिता । कीदृशैरङ्गिरोभिः । **वृषभिः** वर्षणस्वभावकैः **सखिभिः** आत्मनः **सखा** । कस्य । सामर्थ्यादङ्गिरसामेव सर्वस्तोतॄणां वा । **सन्** शोभनः । **ऋग्मिभिः** ऋग्मो 'ऋच स्तुतौ' । अर्चनमृक् स्तुतिः, तद्वद्भिः स्तुतिमान् । **गातुभिः** गन्तृभिः मेघानसुरान् वा प्रति । **ज्येष्ठः** ऋद्धतमः प्रशस्यो वाऽतिशयेन । किञ्च **मरुत्वान्** ।। ४ ।।

**वेङ्कटमाधव–** अङ्गिरस्सु जातः अङ्गिरोभ्यः वरिष्ठः अभवत् इन्द्रः पुमांश्च पुम्भ्यः अतिशयेन **सखा** स्तोतव्यः गातव्येभ्यः अतिशयेन गेयः ।। ४ ।।

**मुद्गल– सः** इन्द्र **अङ्गिरोभिः** अङ्गन्ति गच्छन्तीति अङ्गिरसो गन्तारः, तेभ्योऽपि **अङ्गिरस्तमः भूत्** अतिशयेन गन्ता भवति । **वृषभिः** वृषा वर्षितृभ्योऽपि अतिशयेन वर्षिता । **सखिभिः** समानख्यानेभ्यो मित्रभूतेभ्योऽपि **सखा** अतिशयेन हितकारी । एवम्भूतः **सन् ऋग्मिभिः** अर्चनीयेभ्योऽपि ऋग्भो अर्चनीयो भवति । **गातुभिः ज्येष्ठः** गातव्येभ्यः स्तोतव्येभ्योऽपि ज्येष्ठः अतिशयेन स्तोतव्यः । एवंगुणविशिष्टः **मरुत्वान्** इन्द्रः अस्माकं रक्षणाय भवतु ।। ४ ।।

**सायण– सः** इन्द्रः **अङ्गिरोभिः** । अङ्गन्ति गच्छन्तीति अङ्गिरसो गन्तारः । तेभ्योऽपि **अङ्गिरस्तमः भूत्** अतिशयेन गन्ता भवति । **वृषभिः वृषा** वर्षितृभ्योऽप्यतिशयेन वर्षिता

**सखिभिः** समानख्यानेभ्यो मित्रभूतेभ्योऽपि **सखा** अतिशयेन हितकारी एवम्भूतः **सन् ऋग्मिभिः** अर्चनीयेभ्योऽपि **ऋग्मी** अर्चनीयो भवति । **गातुभिः** गातव्येभ्यः स्तोतव्येभ्योऽपि **ज्येष्ठः** अतिशयेन स्तोतव्यः एवंगुणविशिष्टः **मरुत्वान् इन्द्रः** रक्षणाय भवतु ।

अङ्गिरोभिः । 'अगि रगि लगि गत्यर्थाः' । अङ्गिरा अप्सराः (उ.सू.४.६७५-६७६) इति औणादिकः असुन्प्रत्ययो निपात्यते । इदमादिषु सर्वत्र पञ्चम्यर्थे तृतीया । ऋग्मिभिः । 'ऋच स्तुतौ' । सम्पदादिलक्षणो भावे क्विप् । मत्वर्थीयो मिनिः । पदत्वात् कुत्वं जश्त्वं च । गातुभिः । 'गा स्तुतौ' । 'कमिमनिजनि' इत्यादिना कर्मणि तुप्रत्ययः ।। ४ ।।

**सिद्धाञ्जनम्–** अङ्गिरस्तत्वविचारे 'सर्वथा आङ्गिरसं तत्त्वं अग्निवैभवसम्बन्धी'त्युपपादितम् । **सः** इन्द्रः **अङ्गिरोभिः** अङ्गिरोभ्यः, पञ्चम्यर्थे तृतीया, अग्निवैभवभूतेभ्योऽपि **अङ्गिरस्तमः** अतिशयेन अङ्गिराः **वृषभिः वृषा** वर्षितृभ्योऽपि अतिशयेन वर्षिता । **सखिभिः** मित्रभूतेभ्योऽपि **सखा** अतिशयेन मित्रभूतो हितकारी **भूत्** भवति । एवम्भूतः **सन्** भवन् **ऋग्मिभिः** ऋगात्मक-मन्त्रयुक्तेभ्यः ऋषिभ्यः **ऋग्मी** अतिशयेन ऋग्युक्तः । **गातुभिः** गातुभ्यः स्तोतव्येभ्योऽपि **ज्येष्ठः** अतिशयेन स्तोतव्यः । एवङ्गुणविशिष्टो मरुत्वानित्यादि गतम् ।

ऋग्मिभिः–मत्वर्थीयो मिनिः । गातुभिः–गा स्तुतौ, कमिमनीत्यादिना कर्मणि तुप्रत्ययः ।।

## ऋक्संहिता पदपाठसहिता

**स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।**
**सनीळेभिः श्रवस्यानि तूर्वन् मरुत्वान् नो भवत्विन्द्र ऊती ।। ५ ।।**
**सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् । सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। ५ ।।**

**स्कन्द– सः** इन्द्रः **सूनुभिः न** पुत्रैरिव कश्चित् **रुद्रेभिः** पितृशब्देनेदं सोऽयमित्यभि-सम्बन्धात् पुत्राणामभिधानम् । रुद्रपुत्रैर्मरुद्भिः सह । **ऋभ्वा** 'ऋभुः' (निघ.३,१५) इति मेधा-विनाम । व्यत्ययेन चात्रैकवचनम् । ऋभुभिर्मेधाविभिः । **नृषाह्ये** नरो यत्राभिभूयन्ते स नृषाह्यः सङ्ग्रामस्तत्र । **सासह्वान्** अत्यर्थमभिभवन् । **अमित्रान्** वैरिणः असुरादीन् । न चैतदेव केवलं कुर्वन् । किं तर्हि । **सनीळेभिः** 'नीळम्' (निघ.३,४) इति गृहनाम । **श्रवस्यानि** श्रवोऽन्नं

तत्र साधूनि **श्रवस्यानि** मेघवृन्दानि । तानि वृष्टिप्रदानद्वारेणान्नस्य जनकत्वात्तत्र साधूनि । **तूर्वन्** तूर्वतिर्हिंसार्थः । समानस्थानैर्मरुद्भिः सह मेघवृन्दानि च घ्नन्नित्यर्थः । **मरुत्वान्** ।।

**वेङ्कटमाधव–** स पुत्रैः इव मरुद्भिः भासमानः अभिभवन् शत्रून् युद्धे समानस्थानैर्मरुद्भिः अन्ननिमित्तान्युदकानि प्रेरयन् ।। ५ ।।

**मुद्गल– सूनुभिः न** पुत्रैरिव **रुद्रेभिः** रुद्रपुत्रैर्मरुद्भिर्युक्तः **ऋभ्वा** महान् । एवम्भूतः सः इन्द्रः **नृषाह्ये** नृभिः पुरुषैः सोढव्ये सङ्ग्रामे **अमित्रान्** शत्रून् **सासह्वान्** अभिभूतवान् । अपि च **सनीळेभिः** समानविलयैर्मरुद्भिः सह **श्रवस्यानि** 'श्रवः' (निघ.२,७) इति अन्ननाम । तद्धेतुभूतानि उदकानि **तूर्वन्** मेघात् प्रच्यावयन् **मरुत्वान् इन्द्रः** अस्माकं रक्षणाय भवतु ।।

**सायण– सूनुभिर्न** पुत्रैरिव **रुद्रेभिः** रुद्रपुत्रैर्मरुद्भिर्युक्तः **ऋभ्वा** महान् एवम्भूतः **सः** इन्द्रः **नृषाह्ये** नृभिः पुरुषैः सोढव्ये संग्रामे **अमित्रान्** शत्रून् **ससह्वान्** अभिभूतवान् । अपि च **सनीळेभिः** समाननिलयैर्मरुद्भिः सह **श्रवस्यानि** । श्रव इत्यन्ननाम । तद्धेतुभूतान्युदकानि **तूर्वन्** मेघात् प्रच्यावयन् **मरुत्वान् इन्द्रः** अस्माकं रक्षणाय भवतु ।

नृषाह्ये । 'षह मर्षणे' । 'शकिसहोश्च' (पा.सू.३.१.९९) इति कर्मणि यत् । 'अन्येषामपि दृश्यते' इति संहितायां धात्वकारस्य दीर्घत्वम् । 'यतोऽनावः' इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । ससह्वान् । 'षह अभिभवे' । लिटः कसुः । अभ्यासदीर्घत्वं छान्दसम् । अमित्रान् । मित्राणि एषु न सन्तीति अमित्राः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । सनीळेभिः । समानं नीळं येषां ते सनीळाः । 'समानस्य च्छन्दसी' इति सभावः ।। ५ ।।

**सिद्धाञ्जनम्– सूनुभिर्न** पुत्रैरिव **रुद्रेभिः** रुद्रपुत्रैर्मरुद्भिर्युक्तः **ऋभ्वा** महान् **सः** इन्द्रः **नृषाह्ये** नृभिः पुरुषैः बलिभिः सोढव्ये सङ्ग्रामे **अमित्रान्** शत्रून् **ससह्वान्** अभिभूतवान् । अपि च **सनीळेभिः** समाननिलयैः मरुद्भिः द्वारा **श्रवस्यानि** दिव्यश्रवणहेतुभूतान् आवेशशक्तिविशेषान् **तूर्वन्** प्रच्यावयन् । मरुत्वानित्यादि गतम् ।

इन्द्रः शुद्धसत्त्वप्रधानभूतमनोभूमेः पतिः । तस्य भ्रातरः सखायः पुत्रा इव भवति मरुतः, यैस्तीव्रकर्मभिर्यजमानस्य धीवृत्तीर्दिव्यावेशशक्तिप्रचोदिताः विधत्त इन्द्रः । नृषाह्ये–षह मर्षणे, कर्मणि यत् । ससह्वान्–षह अभिभवे, लिटः कसुः ।। ५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये अष्टमो वर्गः ।।

## ।। अथ नवमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स मन्युमीः समदनस्य कर्ताऽस्माकेभिर्नृभिः सूर्यं सनत् ।**
**अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान् नो भवत्विन्द्र ऊती ।। ६ ।।**
**सः । मन्युऽमीः । सऽमदनस्य । कर्ता । अस्माकेभिः । नृऽभिः । सूर्यम् । सनत् । अस्मिन् । अहन् । सत्ऽपतिः । पुरुऽहूतः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। ६ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'प्रजापतेः पुत्रो मन्युर्नाम । तं प्रजापतिः सैनापत्ये नियुक्तवान् । तेन सहेन्द्रोऽसुरान् निजघान' इति । तदेतदुच्यते– **सः मन्युमीः** इति । मीञ् हिंसायाम् । मन्युना सह मिनातीति मन्युमीः । क्रोधनाम वा मन्युशब्दः (निघ.२,१३) । क्रोधेन शत्रूणां हिंसिता । **समदनस्य कर्ता** समद् इति सङ्ग्रामस्य नामसु पठितम् (तनिघ. २,१७) । समच्छब्दस्य समदनशब्दः पर्यायो द्रष्टव्यः । सङ्ग्रामस्य कर्ता । **अस्माकेभिः तृभिः** अस्मदीयैर्मनुष्यैः ऋत्विगाख्यैः सह । **सूर्यम्** आदित्यम् **सनत्** सम्भजताम् । सूर्यस्य हि यागादिकर्मनिर्वृत्तिः फलम् । तदर्थं ह्यसावुदेति । सर्वः सूर्य उदिते यागं निर्वर्तयति । तेनासौ सम्भक्तो भवति नान्येन । अतोऽत्र सूर्यं सनदिति सम्भजनेन तदुदयफलभूतयागनिर्वृत्तिः प्रतिपाद्यते । अस्मदीयैः ऋत्विग्भिः सह देवतात्वमापन्न इन्द्रः सूर्योदयफलभूतमस्मदीयं यागं निर्वर्तयत्वित्यर्थः । कस्मिन् काले । उच्यते । **अस्मिन् अहन्** यागदिवसे । कीदृश **इन्द्रः** । उच्यते । **सत्पतिः** सतां पालयिता । **पुरुहूतः** बहुभिराहूतः । किञ्च **मरुत्वान्** ।। ६ ।।

**वेङ्कटमाधव– सः** शत्रूणाम् अभिमातिहा सङ्ग्रामस्य कर्ता अस्मदीयैः भटैः **सूर्यम्** संयोजयतु **अस्मिन्** युद्धदिवसे **सत्पतिः पुरुहूतः** ।। ६ ।।

**मुद्गल– सः इन्द्रः मन्युमीः** मन्योः कोपस्य निर्माता । अपि च **समदनस्य** सङ्ग्रामस्य कर्ता **सत्पतिः** सतां पालयिता **पुरुहूतः** बहुभिर्यजमानैराहूतः । एवङ्गुणविशिष्टः सः **अस्मिन् अहन्** अस्मिन् दिवसे **अस्माकेभिः** आस्माकैः अस्मदीयैः **नृभिः** पुरुषैः **सूर्यम्** सूर्यप्रकाशम् **सनत्** सम्भक्तं करोतु । शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु । स च **मरुत्वान्** इन्द्रः अस्माकं रक्षणाय भवतु ।। ६ ।।

**सायण–** शत्रुभिरपहृतासु गोषु तैः सह युद्धार्थं विनिर्गताः ऋज्राश्वादयोऽनेन सूक्तेनेन्द्र-मस्तुवन् । **सः** इन्द्रः **मन्युमीः** मन्योः कोपस्य निर्माता । यद्वा । अभिमन्यमानस्य शत्रोर्हिंसकः । अपि च **समदनस्य** संग्रामस्य **कर्ता सत्पतिः** सतां पालयिता **पुरुहूतः** बहुभिर्यजमानैराहूतः एवंगुणविशिष्टः सः **अस्मिन् अहन्** अस्मिन् दिवसे **अस्माकेभिः** अस्माकैः अस्मदीयैः **नृभिः** पुरुषैः **सूर्यं** सूर्यप्रकाशं **यनत्** सम्भक्तं करोतु । शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु । स च **मरुत्वान् इन्द्रः** अस्माकं रक्षणाय भवतु ।

मन्युमीः । मन्युं मिनातीति मन्युमीः । मीञ् हिंसायाम्' । क्विप् । समदनस्य । सह माद्यन्त्यस्मिन्निति समदनः सङ्ग्रामः । 'मदी हर्षे' अधिकरणे ल्युट् । 'सहस्य सः संज्ञायाम्' (पा.सू.६.३.७८) इति सभावः । अस्माकेभिः । 'तस्मिन्नणि च युष्माकास्माकौ' इति अणि अस्मच्छब्दस्य अस्माकादेशः । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः । 'बहुलं छन्दसि' इति भिस ऐसभावः । स्वरस्तु 'प्रास्माकासश्च सूरयः' (ऋ.सं.१.९७.३) इत्यत्रोक्तः । सनत् । 'वन षण' सम्भक्तौ' । लेटि अडागमः । अहन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । सत्पतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ६ ।।

**सिद्धाञ्जनम्– सः** पूर्वोक्तगुणविशिष्ट इन्द्रः, **मन्युमीः** मन्यो कोपस्य हिंसकः, असुरादीनां शत्रूणां मतेः ज्ञानस्य वा । **समदनस्य** सह माद्यन्ति अस्मिन्, संग्रामः, तस्य कर्ता शत्रुभिर्युद्धस्य कारकः, **सत्पतिः** सतां व्याकृतानां सर्वेषां भूतजातानां वस्तूनां च पतिः पालयिता । **पुरुहूतः** पुरुभिः बहुभिः स्तोतृभिराहूतः **अस्मिन् अहन्** अस्मिन् दिवसे **अस्माकेभिः** अस्मदीयैः **नृभिः** बलिभिः पुरुषैः **सूर्यं** उत्तमज्योतिरात्मानं **सनत्** सम्भक्तं करोतु, अस्मदीयाः बलाढ्याः स्तोतारः इन्द्रस्य साहाय्यात् सूर्यं सम्भजन्तु, दिव्यं प्रकाशं लभन्ताम् । एवम्भूतो मरुत्वानिन्द्रः रक्षत्वस्मानित्यादि गतम् ।

मन्युभीः–मीञ् हिंसायाम्, क्विप् । अस्माकेभिः–छान्दसः, आस्माकीनैः । सनत्–लेटि अडागमः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**तमूतयो रणयच्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम् ।**
**स विश्वस्य करुणस्येश एको मरुत्वान् नो भवत्विन्द्र ऊती ।। ७ ।।**

**तम् । ऊतयः । रणयन् । शूरऽसातौ । तम् । क्षेमस्य । क्षितयः । कृण्वत । त्राम् । सः । विश्वस्य । करुणस्य । ईशे । एकः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥**

**स्कन्द– तम्** इन्द्रम् **ऊतयः** मरुदादिसेना ऊतय इहोच्यन्ते । ताः **रणयन्** रमयन्ति शब्दयन्ति वा **शूरसातौ** सङ्ग्रामे । **तम्** एव **क्षेमस्य** अविनाशस्य **क्षितयः** मनुष्याः **कृण्वत** यागैः स्तुतिभिश्च कुर्वन्ति **त्राम्** त्रातारं सर्वदा अपरित्यक्तारम् । यागैः स्तुतिभिश्च सर्वदा मनुष्याः क्षेमस्य कर्तारं कुर्वन्तीत्यर्थः । **सः** एव **विश्वस्य करुणस्य** करुणशब्दः करणशब्दस्य कर्मनाम्नः पर्यायो द्रष्टव्यः । सर्वस्य कर्मणः **ईशे एकः** एक एवेष्टे । सर्वकर्मणां वृष्टिनिबन्धनत्वात् वृष्टेश्च केवलेन्द्रायत्तत्वात् । किञ्च **मरुत्वान्** ॥ ७ ॥

**वेङ्कटमाधव– तम्** मरुतः रमयन्ति युद्धे । तमेव **क्षेमस्य** त्रातायं मनुष्याः अकृण्वत । **सः विश्वस्य** कर्मणः **एकः** एव ईष्टे ॥ ७ ॥

**मुद्गल– तम्** इन्द्रम् **शूरसातौ** शूरैः वीरपुरुषैः सम्भजनीये सङ्ग्रामे **ऊतयः** गन्तारो मरुतः **रणयन्** रमयन्ति । अपि च **क्षितयः** मनुष्याः **तम्** इन्द्रम् **क्षेमस्य** रक्षणीयस्य सर्वस्य धनस्य **त्राम्** त्रातारम् **कृण्वत** कुर्वन्ति । देवतान्तरादस्य कोऽतिशय इति चेद् उच्यते । **सः** इन्द्रः **विश्वस्य** सर्वस्य **करुणस्य** अभिमतफलनिष्पादनरूपस्य कर्मणः **एकः** असहाय एव **ईशे** ईष्टे । अन्यत् पूर्ववत् ॥ ७ ॥

**सायण– तम्** इन्द्रं **शूरसातौ** शूरैर्वीरपुरुषैः सम्भजनीये सङ्ग्रामे **ऊतयः** गन्तारो मरुतः **रणयन्** रमयन्ति । यद्वा । 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपं शब्दमिन्द्रमुद्दिश्य कुर्वन्ति । अपि च **क्षितयः** मनुष्याः **तम्** इन्द्रं **क्षेमस्य** रक्षणीयस्य सर्वस्य धनस्य **त्रां** त्रातारं रक्षितारं **कृण्वत** कुर्वन्ति । देवतान्तरादस्य कोऽतिशयः इति चेत् उच्यते । **सः** इन्द्रः **विश्वस्य** सर्वस्य **करुणस्य** अभिमतफलनिष्पादनरूपस्य कर्मणः **एकः** असहाय एव **ईशे** ईष्टे । अन्यत् पूर्ववत् ।

ऊतयः । अवतेर्गत्यर्थात् 'कृत्यल्युटो बहुलम्' इति कर्तरि क्तिन् । 'तितुत्र' इति इट्-प्रतिषेधः । 'ज्वरत्वर' इत्यादिना वकारस्योपधायाश्च ऊठ् । 'ऊतियूति' इत्यादिना क्तिन उदात्त-त्वम् । यद्वा । कर्तरि क्तिन् । रणयन् । रमतेर्हेतुमण्णिजन्तात् वर्तमाने छान्दसो लङ् । अन्त्य-विकारश्छान्दसः । यद्वा । रण शब्दार्थः । अस्मात् णिजन्तात् पूर्ववत् लङ् । त्राम् । 'त्रैङ्

पालने । त्रायते इति त्राः । 'क्विप् च' इति चशब्देन दृशिग्रहणानुकर्षणान्निरुपपदादपि क्विप् । करुणस्य । 'डुकृञ् करणे' । 'कृवृतृदारिभ्य उनन्' (उ.सू.३.३३३) इति भावः उनन् । व्यत्ययेन प्रत्ययाद्युदात्तत्वम् । ईशे । 'ईश ऐश्वर्ये' । 'लोपस्य आत्मनेपदेषु' इति तलोपः ।।

**सिद्धाञ्जनम्– तम्** इन्द्रं **शूरसातौ** शूरैः सम्भजनीये, देवासुरसङ्ग्रामरूपे यजमानस्य यजनयात्रोद्यमे, **ऊतयः** रक्षकाः इन्द्रसखाः मरुतः **रणयन्** रमयन्ति । अपि च **क्षितयः** पृथिव्यादिलोकवासिनो जनाः **तम् क्षेमस्य** लब्धस्य सर्वस्य **त्राम्** त्रातारं **कृण्वत** कुर्वन्ति । **सः एकः** इन्द्रः **विश्वस्य** सर्वस्य **करुणस्य** कर्मणः **ईशे** ईश्वरो भवति । अन्यत्पूर्ववत् ।

ऊतयः–अवतेः कर्तरि क्तिन् । रणयन्–रमतेः हेतुमण्णिजन्ताद्वर्तमाने छान्दसो लङ् । त्राम्–त्रैङः पालने, क्विप् । करुणस्य–करोतेः, भावे उनन् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय ।**
**सो अन्धे चित् तमसि ज्योतिर्विदन् मरुत्वान् नो भवत्विन्द्र ऊती ।। ८ ।।**
**तम् । अप्सन्त । शवसः । उत्ऽसवेषु । नरः । नरम् । अवसे । तम् । धनाय । सः । अन्धे । चित् । तमसि । ज्योतिः । विदत् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।।**

**स्कन्द– तम्** इन्द्रम् **अप्सन्त** । भस भत्सर्नदीप्त्योः । स्तुतिभिर्दीपयन्ति । उत्तेजयन्तीत्यर्थः । क्व । उच्यते । **शवसः** उत्सवेषु 'शवः' (निघ.२,९) इति बलनाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः षष्ठीबहुवचनान्तश्च । बलवतामुत्सवभूतेषु सङ्ग्रामेषु । बलवतां हि सङ्ग्राम उत्सव एव । अथवा उत्सवेष्वित्युच्छब्दः अभीत्येतस्य स्थाने । बलस्य सम्बन्धिष्वभिषवेषु । बलेन येषु यज्ञेष्वभिषूयते सोमस्तत्रेत्यर्थः । के । **नरः** मनुष्याः । कीदृशम् । **नरम्** मनुष्याकारम् । किमर्थम् । **अवसे** पालनाय । अथवैवमन्यथास्या ऋचोऽर्थयोजना । अप्सन्तेति भसेः प्सातेर्वा भक्षणार्थस्येदं रूपम् । शवस इत्यप्यन्तर्णीतमत्वर्थं प्रथमाबहुवचनान्तं द्रष्टव्यम् । बलवन्तो भक्षयन्त्युत्सवेषु । बलवन्तो मनुष्या उत्सवेष्वपि **तम्** एवेन्द्रमुपजीवन्तीत्यर्थः । किमर्थम् । अवसे तर्पणायात्मनः । तमेव **धनाय** । किञ्च **सः अन्धे चित्** अपि **तमसि ज्योतिः** सूर्याख्यम् **विदत्** ज्ञातवान् लब्धवान् वा । तदुक्तं 'वृत्रं यदिन्द्र' (ऋ.१,५१४) इति । किञ्च **मरुत्वान्** ।।

**वेङ्कटमाधव– तम्** व्याप्नुवन् बलस्य उद्योगेषु मनुष्याः नेतारं रक्षणार्थं तमेव धनार्थम् । **सः युद्धे अन्धे तमसि** सञ्जाते प्रकाशं लम्भयति ।। ८ ।।

**मुद्गल– नरः** नेतारः स्तोतारः **शवसः** बलस्य सम्बन्धिषु **उत्सवेषु** सङ्ग्रामेषु **नरम्** जयस्य नेतारम् **तम्** इन्द्रम् **अप्सन्त** आप्नुवन्ति । किमर्थम् । **अवसे** अन्नार्थम् **धनाय** धनार्थं च **तम्** इन्द्रं प्राप्नुवन्ति । यस्मात् **सः** इन्द्रः **तमसि** दृष्टिप्रतिबन्धके **अन्धे चित्** आध्यानरहिते चित्तव्यामोहकरेऽपि सङ्ग्रामे **ज्योतिः** विजयलक्षणं प्रकाशम् **विदत्** लम्भयति । तस्मात् तमेव प्राप्नुवन्तीत्यर्थः । अन्यत् समानम् ।। ८ ।।

**सायण– नरः** नेतारः स्तोतारः **शवसः** बलस्य सम्बन्धिषु **उत्सवेषु** सङ्ग्रामेषु **नरं** जयस्य नेतारं **तम्** इन्द्रम् **अप्सन्त** आप्नुवन्ति । किमर्थम् । **अवसे** अन्नार्थं रक्षणार्थं वा । तथा **धनाय** धनार्थं च **तम्** इन्द्रं प्राप्नुवन्ति । यस्मात् **सः** इन्द्रः **तमसि** दृष्टिप्रतिबन्धके **अन्धे चित्** आध्यानरहिते चित्तव्यामोहकरेऽपि सङ्ग्रामे **ज्योतिः** विजयलक्षणं प्रकाशं **विदत्** लम्भयति । तस्मात् तमेव प्राप्नुवन्तीत्यर्थः । अन्यत् समानम् ।

अप्सन्त । 'आप्लृ व्याप्तौ' । लङि व्यत्ययेन आत्मनेपदम् । व्यत्ययेन क्सप्रत्ययः । व्यत्ययेन धातोर्ह्रस्वत्वम् । विदत् । 'विद्लृ लाभे' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने छान्दसो लुङ् । लृदित्त्वात् च्लेः अङादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ।। ८ ।।

**सिद्धाञ्जनम्– नरः** नेतारः बलिनः पुरुषाः यजमानाः **नरम्** नेतारं बलाढ्यं **तम्** इन्द्रं **शवसः** उज्ज्वलस्य बलस्य सम्बन्धिषु **उत्सवेषु** सङ्ग्रामेषु **अवसे** रक्षणाय **अप्सन्त** आप्नुवन्ति, आश्रयन्त इति भावः । **धनाय** दिव्याय धनाय च **तम्** आश्रयन्ते । **सः** इन्द्रः **अन्धे चित्** आध्यानरहिते अविद्यामयेऽपि **तमसि** दर्शनरहिते सान्द्रे व्यापिन्यप्रकाशे **ज्योतिः** उत्तमं सौरं प्रकाशघनं **विदत्** लम्भयति । यद्यपि सृष्टौ लोकभूमिकासंस्थानापेक्षया उत्तमः सूर्यः तमसः परस्ताल्लोकानतीत्य ज्वलति, तथापि सर्वेश्वरस्य तस्य सर्वान्तर्यामित्वात् अन्धे तमसि च स गुप्तो भवति । तस्मात्तमस्यपि स लभ्यः इन्द्रप्रसादात् । अन्यत्समानम् ।

अप्सन्त–आप्नोतेः, लङि व्यत्ययेनात्मनेपदं तथा क्सन्प्रत्ययश्च, धातोः ह्रस्वत्वं च । विदत्–विन्दतेः, लुङः छान्दसः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**स स॒व्येन॑ यमति॒ व्राध॑तश्चि॒त् स दक्षि॒णे संगृ॑भीता कृ॒तानि॑ ।**
**स की॒रिणा॑ चि॒त् सनि॑ता॒ धना॑नि म॒रुत्वा॑न् नो भवत्विन्द्र॑ ऊ॒ती ॥ ९ ॥**
सः । स॒व्येन॑ । य॒म॒ति॒ । व्राध॑तः । चि॒त् । सः । द॒क्षि॒णे । सम्ऽगृ॑भीता । कृ॒तानि॑ ।
सः । की॒रिणा॑ । चि॒त् । सनि॑ता । धना॑नि । म॒रुत्वा॑न् । न॒ः । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥

**स्कन्द– सः** इन्द्रः **सव्येन** हस्तेन **यमति** नियच्छति । गृह्णातीत्यर्थः । **व्रायतः** चित् 'व्राधन्' (निघ,३,३) इति महन्नाम । महतोऽपि शत्रून् । **सः** एव दक्षिणेन हस्तेन **सङ्गृभीता कृतानि** करोतिरत्र सामर्थ्यात् स्वीकरणे द्रष्टव्यः । सङ्ग्रहणशीलः स्वीकृतानाम् । महतोऽपि शत्रूनयत्नेन निगृह्णातीत्यर्थः । **सः** एव **कीरिणा चित्** स्तोतृनामैतत् (निघ.३,१६) चतुर्थ्यर्थे चात्र तृतीया । स्तोत्रे । चित् शब्दाद् यष्ट्रे च । **सनिता धनानि** 'षणु दाने' । दानशीलो धनानाम् । नित्यं धनानि ददातीत्यर्थः । किञ्च **मरुत्वान्** ॥ ९ ॥

**वेङ्कटमाधव– सः** वामेन हस्तेन अभिवर्धमानान् शत्रून् नियच्छति । **सः दक्षिणे** हस्ते यजमानैः **कृतानि** हवींषि सङ्गृह्णाति । **सः** स्तोतारमुद्दिश्य भजते शत्रुधनानि ॥ ९ ॥

**मुद्गल– सः** इन्द्रः **सव्येन** वामहस्तेन **व्राधतः चित्** हिंसतो महतः शत्रूनपि **यमति** नियमयति । तथा **सः** इन्द्रः **दक्षिणे** दक्षिणेन हस्तेन यजमानैः **कृतानि** हवींषि **सङ्गृभीता** सङ्ग्रहीता सङ्गृह्णाति । अपि च **सः** इन्द्रः **कीरिणा चित्** कीर्तयित्रा स्तोत्रा च स्तुतः सन् **धनानि सनिता** प्रदानशीलो भवति । हविःप्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः । शिष्टं स्पष्टम् ॥ ९ ॥

**सायण– सः** इन्द्रः **सव्येन** वामहस्तेन एकहस्तेन **व्राधतश्चित्** हिंसतः महतः शत्रूनपि **यमति** नियमयति । तथा **सः** इन्द्रः **दक्षिणे** दक्षिणपार्श्वस्थेन हस्तेनैकेन यजमानैः **कृतानि** हवींषि **संगृभीता** संगृह्णाति । अपि च **सः** इन्द्रः **कीरिणा चित्** कीर्तयित्रा स्तोत्रा च स्तुतः सन् **धनानि सनिता** प्रदानशीलो भवति । हविष्प्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः । शिष्टं स्पष्टम् ।

यमति । 'यम उपरमे' । णिचि अमन्तत्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् ।

'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । व्राधतः । 'वृधु वृद्धौ' । अस्मात् अतिप्रत्ययः औणादिकः आमागमश्च । वृषादित्वादाद्युदात्तत्वम् । सङ्गृभीता । 'ग्रह उपादाने' । लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'लिङः सलोपः' इति सलोपः । ग्रहिज्यादिना सम्प्रसारणम् । 'हृग्रहोर्भः' इति भत्वम् । 'द्व्यचोऽतस्तिङः' इति दीर्घः । सनिता । 'षणु दाने' । ताच्छीलिकः तृन् । धनानि । 'न लोकाव्यय:' इति षष्ठीप्रतिषेधः ।। ९ ।।

**सिद्धाञ्जनम्– सः** इन्द्रः **सव्येन** वामेन हस्तेन **व्राधतः चित्** प्रवृद्धान् शत्रूनपि **यमति** नियमयति । **सः** इन्द्रः **दक्षिणे** सव्येतरेण हस्तेन **कृतानि** यजमानैरर्पितानि **सम् गृभीता** सङ्गृहीता सङ्गृह्णाति । अतिबलस्येन्द्रस्य वामहस्तः अलं शत्रुदमनाय । दक्षिणहस्तेन सङ्ग्रहणं भक्तेष्वादरातिशयं द्योतयति । **सः** इन्द्रः **कीरिणा चित्** स्तोत्राऽपि स्तुतः **धनानि सनिता** धनानां प्रदानशीलो भवति । यजमान इव सर्वार्पणं अकृत्वापि भक्त्या स्तोत्रं कुर्वतो जनस्य च धनमनुगृह्णाति । अन्यत् समानम् ।

यमति–यम उपरमे, णिच् छान्दसः । व्राधतः–वृधु वृद्धौ, अस्मादतिप्रत्यय औणादिक आमागमश्च ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**स ग्रामे॑भिः सनि॑ता स रथे॑भिर्वि॒दे विश्वा॑भिः कृ॒ष्टिभि॒र्न्व१॒॑द्य ।**
**स पौंस्ये॑भिरभि॒भूरश॑स्तीर्म॒रुत्वा॑न् नो भवत्विन्द्र॑ ऊ॒ती ।। १० ।।**

**सः । ग्रामे॑भिः । सनि॑ता । सः । रथे॑भिः । वि॒दे । विश्वा॑भिः । कृ॒ष्टिऽभि॑ः । नु । अ॒द्य । सः । पौंस्ये॑भिः । अ॒भि॒ऽभूः । अश॑स्तीः । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु । इन्द्रः॑ । ऊ॒ती ।।**

**स्कन्द– ग्रामेभिः** रथेभिः इति द्वितीयार्थे तृतीया । **सः** ग्रामान् **सनिता** दाता **सः** एव रथान् इत्येवमहम् **विदे** जानामि । **विश्वाभिः** कृष्टिभिः सर्वाभिः मनुष्यजातिभिः सह । **नु** क्षिप्रम् । **अद्य** साम्प्रतमित्यर्थः । **सः** एव **पौंस्येभिः** स्वैर्बलैः **अभिभूः** अभिभविता **अशस्तीः** अशंसितॄणाम् । किञ्च **मरुत्वान्** ।। १० ।।

**वेङ्कटमाधव– सः** सैनिकैः भजते शत्रून् सः रथैः । ज्ञायते च विश्वैः मनुष्यैः अस्मिन् अहनि क्षिप्रम् । सः बलैः अभिभवति शत्रून् ।। १० ।।

**मुद्गल– सः** इन्द्रः ग्रामेभिः मरुत्सङ्घैः सह **सनिता** फलानां प्रदाता भवति । **सः** च अद्य अस्मिन् अहनि **नु** क्षिप्रम् **विश्वाभिः कृष्टिभिः** सर्वैर्मनुष्यैः **रथेभिः** इन्द्रसम्बन्धिभिः रथैः करणभूतैः **विदे** विज्ञायते । अपि च **सः** इन्द्रः **पौंस्येभिः** स्वकीयैर्बलैः **अशस्तीः** अशंसनीयान् शत्रून् **अभिभूः** अभिभवन् वर्तते । **मरुत्वान् सः** इन्द्रः **नः** अस्माकम् रक्षणाय भवतु ।। १० ।।

**सायण– सः** इन्द्रः **ग्रामेभिः** मरुत्सङ्घैः सह **सनिता** फलानां प्रदाता भवति । **सः** च **अद्य** अस्मिन्नहनि **नु** क्षिप्रं **विश्वाभिः कृष्टिभिः** सर्वैर्मनुष्यैः **रथेभिः** इन्द्रसम्बन्धिभिः रथैः करणभूतैः **विदे** विज्ञायते । अपि च **सः** इन्द्रः **पौंस्येभिः** स्वकीयैर्बलैः **अशस्तीः** अशंसनीयान् शत्रून् **अभिभूः** अभिभवन् वर्तते । **मरुत्वान्** सः **इन्द्रः नः** अस्माकं रक्षणाय भवतु ।

ग्रामेभिः । 'बहुलं छन्दसि' इति भिस ऐसभावः । 'ग्रामादीनां च' (फि.सू.३८) इत्याद्युदात्तत्वम् । विदे । 'विद ज्ञाने' । कर्मणि लट् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'लोपस्त आत्मनेपदेषु' इति तलोपः ।। १० ।।

**सिद्धाञ्जनम्– सः** इन्द्रः **ग्रामेभिः** सङ्घैः मरुतामिति शेषः, मरुद्गणैः **सनिता** प्रदाता अभिमतस्य भवति । **सः** स च **अद्य** इदानीं **नु** क्षिप्रं **विश्वाभिः कृष्टिभिः** सर्वैः देवार्थं कृषिशीलैः उद्योगपरैरार्यैः **रथेभिः** इन्द्रसम्बन्धिभिः करणभूतैः **विदे** विज्ञायते । अपि च **सः** इन्द्रः **पौंस्येभिः** पौंस्यैः स्वकीयैर्बलैः **अशस्तीः** अशंसनीयान् शत्रून् **अभिभूः** अभिभवन् वर्तते । अन्यद्गतम् ।

विदे–विद ज्ञाने, कर्मणि लट्, विकरणस्य लुक् ।। १० ।।

**।। इति प्रथमाष्टके सप्तमाध्याये नवमो वर्गः ।।**

## ।। अथ दशमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स जामिभिर्यत् समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।**
**अपां तोकस्य तनयस्य जेषे मरुत्वान् नो भवत्विन्द्र ऊती ।। ११ ।।**

**सः । जामिऽभिः । यत् । समऽअजाति । मीळ्हे । अजामिऽभिः । वा । पुरुहूतः । एवैः । अपाम् । तोकस्य । तनयस्य । जेषे । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। ११ ।।**

**स्कन्द– सः जामिभिः** समानजातीयैः सह **यत्** यस्मात् **समजाति** 'अज गतिक्षेपणयोः' । सङ्गच्छते । **मीळ्हे** सङ्ग्रामे । **अजामिभिः** वा असमानजातीयैर्वा सह । अतिबलत्वात् समानजातीयैरसमानजातीयैश्च सह युध्यत इत्यर्थः । कीदृशः । **पुरुहूतः एवैः** एवाः कामाः तैर्निमित्तभूतैः बहुभिराहूतः । अभिलषितकामप्राप्त्यर्थं बहुभिर्यजमानैराहूत इत्यर्थः । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मादतिबलत्वात् **अपाम् तोकस्य तनयस्य जेषे** तुमर्थेऽयं सेप्रत्ययः । जयश्चात्र प्राप्तिरभिप्रेता । अपां पुत्रान् पौत्रांश्च जेतुम् । प्राप्तुमित्यर्थः । किञ्च **मरुत्वान्** ।।

**वेङ्कटमाधव– सः** बन्धुभिः यदि सङ्गच्छते सङ्ग्रामे **अजामिभिः वा पुरुहूतः** मरुद्भिः । **अपाम्** पुत्रस्य पौत्रस्य च जयाय भवति । लम्भयति वृष्टिम्, पुत्रपौत्रौ च रक्षति ।।११।।

**मुद्गल– पुरुहूतः** बहुभिर्यजमानैराहूतः सः इन्द्रः **मीळ्हे** सङ्ग्रामे । 'मीळ्हम्' (निघ.२,१०) इति धननाम । तद्धेतुत्वात् सङ्ग्रामोऽपि मीळ्हशब्देनोच्यते । **जामिभिः** बन्धुभिः **अजामिभिः वा** बान्धवरहितैर्वा **एवैः** युद्धार्थं मरुद्भिः सह **यत्** यदा **समजाति** सङ्गच्छते । तेषाम् उभयविधानाम् **अपाम्** इन्द्रं प्राप्नुवतां पुरुषाणाम् **तोकस्य** पुत्रस्य **तनयस्य** तत्पुत्रस्य च **जेषे** जयप्राप्तये सः **इन्द्रः** भवति । किन्तु वक्तव्यम् अस्माकं स्तोतृतमानां जयो भवतीति । अन्यत् समानम् ।। ११ ।।

**सायण– पुरुहूतः** बहुभिर्यजमानैराहूतः **सः** इन्द्रः **मीळ्हे** सङ्ग्रामे । मीळ्हम् इति धननाम । तद्धेतुत्वात् सङ्ग्रामोऽपि मीळ्हशब्देनोच्यते । **जामिभिः** बन्धुभिः **अजामिभिर्वा** बान्धवरहितैर्वा **एवैः** युद्धार्थं मरुद्भिः सह **यत्** यदा **समजाति** सङ्गच्छते । तेषाम् उभयविधानाम् **अपाम्** इन्द्रं प्राप्नुवतां पुरुषाणां **तोकस्य** पुत्रस्य **तनयस्य** तत्पुत्रस्य च **जेषे** जयप्राप्तये सः **इन्द्रः** भवति । किमु वक्तव्यम् अस्माकं स्तोतृतमानां जयो भवतीति । अन्यत् समानम् । समजाति । 'अज गतिक्षेपणयोः' । लेटि आडागमः । जेषे । 'जि जये' । औणादिकः सप्रत्ययः । चतुर्थ्यर्थे सप्तमी । यद्वा । 'जेषृ णेषृ प्रेषृ गतौ' । 'क्विप् च' इति क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्– पुरुहूतः** बहुभिराहूतः **सः** इन्द्रः **मीळ्हे** सेचने, अभीष्टदिव्यरसवर्षणे, निमित्तसप्तमी । **जामिभिः** सहजन्मभिः देवैः मरुद्भिर्वा **अजामिभिर्वा** तदितरैर्वा सह **एवैः** स्वीयैराशुगमनैः **यत्** यदा समजाति सङ्गच्छते, तदा अपाम् ज्योतिर्बलादिवाहिनीनां, **तोकस्य** अपत्यस्य **तनयस्य** तन्सन्तानस्य च, सर्वथा विस्तारस्य **जेषे** विजयाय स भवति । अन्यत्समानम् ।

समजाति–अज गतिक्षेपरयोः, लेट्याडागमः । जेषे–जि जये, औणादिकः सप्रत्ययः, चतुर्थ्यर्थे सप्तमी ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**स व॒ज्रभृ॒द् द॑स्यु॒हा भी॒म उ॒ग्रः स॒हस्र॑चेताः श॒तनी॑थ॒ ऋभ्वा॑ ।**
**च॒म्रीषो॒ न शव॑सा॒ पाञ्च॑जन्यो म॒रुत्वा॑न् नो भव॒त्विन्द्र॑ ऊ॒ती ।। १२ ।।**
**सः । व॒ज्र॒ऽभृ॒त् । द॒स्यु॒ऽहा । भी॒मः । उ॒ग्रः । स॒हस्र॑ऽचेताः । श॒तऽनी॑थः । ऋभ्वा॑ ।**
**च॒म्रीषः॑ । न । शव॑सा । पाञ्च॑ऽजन्यः । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ।।**

**स्कन्द– सः** इन्द्रः **वज्रभृत्** वज्रस्य धारयिता । **दस्युहा भीमः** उग्रः **सहस्रचेताः** 'सहस्रम्' (निघ.३,१) इति बहुनाम । बहुप्रज्ञः । **शतनीथः** 'शतम्' (निघ.३,१) इति बहुनाम । नीथशब्दोऽपि स्तुतिवचनः । बहुस्तुतिः । **ऋग्वा** अपठितमपि महन्नामैतत् द्रष्टव्यम् । महांश्च । **चम्रीषः न शवसा पाञ्चजन्यः** चमेः रातेश्च चम्रीषः राजा अग्निर्वा इहोच्यते । स हि सर्वमत्ति ददाति च । पञ्चजनाः 'निषादपञ्चमाश्चत्वारो वर्णाः' तेभ्यो हितः पाञ्चजन्यः । 'बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते' (पाम.४,३,६०) इत्येवं हितार्थे ञ्यप्रत्ययो द्रष्टव्यः छान्दसत्वात् । यथा राजाऽग्निर्वा स्वेन बलेन पञ्चभ्योऽपि जनेभ्यो हितः तद्वदिन्द्र इत्यर्थः । किञ्च **मरुत्वान्** ।। १२ ।।

**वेङ्कटमाधव– सः वज्रभृत्** असुराणां हन्ता भयङ्करः उद्गूर्णः सहस्रप्रज्ञः शतनयनः दीप्तः सोमः इव बलेन पञ्चजनहितः ।। १२ ।।

**मुद्गल– सः** इन्द्रः **वज्रभृत्** अन्यैः धर्तुमशक्यस्य वज्रस्य भर्ता **दस्युहा** दस्यूनाम् उपक्षपयितॄणाम् असुराणां हन्ता **भीमः** सर्वेषां भयहेतुः **उग्रः** उद्गूर्णतेजाः सहस्रचेताः

बहुविधज्ञानः । सर्वज्ञः इत्यर्थः । **शतनीथः** बहुस्तुतिः **ऋभ्वा** उरु भासमानः **चम्रीषः** न चम्वां चमसे रसात्मनाऽवस्थितः सोम इव शवसा बलेन पाञ्चजन्यः गन्धर्वाप्सरसो देवा असुरा रक्षांसि पञ्चजनाः । तेषु रक्षकत्वेन भवः । एवम्भूतः सः **मरुत्वान्** इन्द्रः **नः** अस्माकं रक्षणाय भवतु ।। १२ ।।

**सायण– सः** इन्द्रः **वज्रभृत्** अन्यैर्धर्तुमशक्यस्य वज्रस्य भर्ता **दस्युहा** दस्यूनामुपक्षपयितृणामसुराणां हन्ता **भीमः** सर्वेषां भयहेतुः **उग्रः** उद्गूर्णतेजाः **सहस्रचेताः** बहुविधज्ञानः सर्वज्ञ इत्यर्थः । **शतनीथः** बहुस्तुतिर्बहुविधप्रापणो वा **ऋभ्वा** उरु भासमानो महान् वा **चम्रीषो न** चम्वां चमसे रसात्मनावस्थितः सोम इव **शवसा** बलेन **पाञ्चजन्यः** । गन्धर्वा अप्सरसो देवा असुरा रक्षांसि पञ्चजनाः । निषादपञ्चमाश्चत्वारो वर्णा वा । तेषु रक्षकत्वेन भवः । एवम्भूतः सः **मरुत्वान् इन्द्रः नः** अस्माकं रक्षणाय भवतु ।

दस्युहा । 'बहुलं छन्दसि' इति हन्तेः क्विप् । भीमः । 'ञिभी भये' । 'भीमादयोऽपादाने' (पा.सू.३.४.७४) इति उपादाने 'भियः षुग्वा' (उ.सू.१.१४५) इति मक् । शतनीथः । 'णीञ् प्रापणे' । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ.सू.२.१५९) इति क्थन्प्रत्ययः । चम्रीषः । 'इष गतौ' । चम्वामिष्यति गच्छतीति चम्रीषः । इगुपधलक्षणः कप्रत्ययः । वर्णव्यापत्त्या रेफो दीर्घश्च । यद्वा चमेरौणादिक ईषन्प्रत्ययः । पूर्ववत् रेफः । पाञ्चजन्यः । भवार्थे 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' (का.४.३.५८.१) इति ञ्यप्रत्ययः । ञित्त्वात् आद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्– सः** इन्द्रः **वज्रभृत्** दुर्भरस्य वज्रस्य भर्ता **दस्युहा** दस्यूनां उपक्षपयितृणां पापानामसुराणां वा हन्ता **भीमः** भयजनको दुष्टानां **उग्रः** उद्गूर्णतेजाः **सहस्रचेताः** सहस्रं चेतांसि यस्य सः, बहुविधचेतनायुक्तः **शतनीथः** बहुविधप्रापणः **ऋभ्वा** महान् **चम्रीषो न** चमसे यजमानशरीरलक्षणे रसात्मना अवस्थितः सोम इव शवसा दीप्यमानबलेन युक्तः **पाञ्चजन्यः** पञ्चजनेषु पृथिव्यादिभूमिकासु पञ्चसु जनेषु भवः वर्तमान इत्यर्थः । अन्यत्समानम् ।

भीमः–बिभेतेः, भियः षुग्वेति मक् । शतनीथः–णीञ् प्रापे, क्थन्प्रत्ययः । चम्रीषः–इष गतौ, चम्वां इष्यतीति चम्रीषः, इगुपधलक्षणः कः, वर्णव्यापत्त्या रेफो दीर्घश्च ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**तस्य वज्रः क्रन्दति स्मत् स्वर्षा दिवो न त्वेषो रवथः शिमीवान् ।**
**तं सचन्ते सनयस्तं धनानि मरुत्वान् नो भवत्विन्द्र ऊती ।। १३ ।।**
तस्य । वज्रः । क्रन्दति । स्मत् । स्वःऽसाः । दिवः । न । त्वेषः । रवथः । शिमीऽवान् ।
तम् । सचन्ते । सनयः । तम् । धनानि । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।।

**स्कन्द– तस्य** इन्द्रस्य स्वभूतः **वज्रः क्रन्दति** असुरान् घ्नन् शब्दं करोति । **स्मत्** प्रशस्तः । स्वर्षाः स्वशब्दः सर्वपर्यायः । 'वन षण सम्भक्तौ' । सर्वस्य शत्रोः सम्भक्ता । **दिवः न** द्युलोकस्येव च तस्येन्द्रस्य **त्वेषः** दीप्तिः **रवथः** रवशब्दश्च गर्जितलक्षणः **शिमीवान्** 'शिमि' (निघ.२,१) सति कर्मनाम । वृष्टिलक्षणेन कर्मणा तद्वान् । **तम्** इन्द्रम् **सचन्ते** सेवन्ते **सनयः** लाभाः दानानि वा । **तम्** एव **धनानि**, स एव लभते ददाति वा धनानि च तस्यैव सन्तीत्यर्थः । किञ्च **मरुत्वान्** ।। १३ ।।

**वेङ्कटमाधव– तस्य वज्रः** शब्दं करोति ।। शोभनः इव दीप्तः शब्दः कर्मवान् । इन्द्रम् **तम्** सेवन्ते दानानि, **तम् धनानि** ।। १३ ।।

**मुद्गल– तस्य** इन्द्रस्य **वज्रः स्मत्** भृशम् **क्रन्दति** शत्रून् आक्रन्दयति । रोदयतीत्यर्थः । य इन्द्रः स्वर्षाः शोभनस्योदकस्य दाता **दिवो न** दिवः सम्बन्धी सूर्य इव **त्वेषः** दीप्तः **रवथः** शब्दस्य गर्जनलक्षणस्य कर्ता **शिमीवान्** 'शिमी' इति कर्मनाम । लोकानुग्राहकेण कर्मणा युक्तः **तम्** इन्द्रम् **सनयः** धनस्य दानानि **सचन्ते** सेवन्ते । तथा **तम् धनानि** च सेवन्ते । सः **मरुत्वान्** इन्द्रः **नः** अस्माकं रक्षणाय भवतु ।। १३ ।।

**सायण– तस्य** इन्द्रस्य **वज्रः** कुलिशः **स्मत्** भृशं **क्रन्दति** शत्रूनाक्रन्दयति रोदयतीत्यर्थः । य इन्द्रः **स्वर्षाः** शोभनस्योदकस्य दाता **दिवो न** दिवः सम्बन्धी सूर्य इव **त्वेषः** दीप्तः **रवथः** शब्दस्य गर्जनलक्षणस्य कर्ता **शिमीवान्** । शिमी इति कर्मनाम । लोकानुग्राहकेण कर्मणा युक्तः **तम्** इन्द्रं **सनयः** धनस्य दानानि **सचन्ते** सेवन्ते । तथा **तं धनानि** च सेवन्ते । सः **मरुत्वान्** **इन्द्रः नः** अस्माकं रक्षणाय भवतु ।

क्रन्दति । 'कदि क्रदि क्लदि आह्वाने रोदने च' । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात्

'णेरनिटि' इति णिलोपः' । स्वर्षाः । सुपूर्वात् अर्तेः विच् । सुष्ठु अर्ति गच्छतीति स्वरुदकम् । तत्सनोतीति स्वर्षाः । 'षणु दाने' । जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । 'सनोतेरनः' (पा.सू.८.३.१०८) इति षत्वम् । त्वेषः । 'त्विष दीप्तौ' । पचाद्यच् । रवथः । 'रु शब्दे' । 'शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः' (उ.सू.३.३९३) इति अथप्रत्ययः । गुणावादेशौ । सनयः । सनोतेर्भावे औणादिक इप्रत्ययः ।। १३ ।।

**सिद्धाञ्जनम्– तस्य** इन्द्रस्य **वज्रः** कुलिशः शत्रुघातकमायुधं **क्रन्दति स्मत्** क्रन्दयति भृशं शत्रून् । यः इन्द्रः **स्वर्षाः** स्वः, अव्ययं, स्वर्गं सनोति ददातीति स्वर्षाः । **दिवो न** द्युस्थानसम्बन्धी सूर्य इव **त्वेषः** दीप्तः, उज्ज्वलः । **रवथः** शब्दस्य असुरभेदनगर्जनस्य कर्ता **शिमीवान्** लोकानुग्रहार्थककर्मयुक्तः । **तम्** तथाभूतं **सनयः** दानानि, सर्वाणि यजमानैरर्पितानि **सचन्ते** सेवन्ते, प्राप्नुवन्ति । तथा **तम् धनानि** सर्वाणि धनानि च तदधीनानि सन्ति आश्रयन्ते । अन्यत्समानम् ।

क्रन्दति–णेरनिटीति णिलोपः । त्वेषः–त्विष दीप्तौ, पचाद्यच् । रवथः–रु शब्दे, शीङ्शपीत्यादिभ्यः अथप्रत्ययः, गुणावादेशौ । सनयः–सनोतेः, औणादिक इप्रत्ययः ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**यस्याजस्रं शवसा मानमुक्थं परिभुजद् रोदसी विश्वतः सीम् ।**
**स पारिषत् क्रतुभिर्मन्दसानो मरुत्वान् नो भवत्विन्द्र ऊती ।। १४ ।।**
यस्य । अजस्रम् । शवसा । मानम् । उक्थम् । परिभुजत् । रोदसी इति । विश्वतः । सीम् । सः । पारिषत् । क्रतुऽभिः । मन्दसानः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। १४ ।।

**स्कन्द– यस्य** इन्द्रस्य **अजस्रम्** सततम् **शवसा** स्वेन बलेन **मानम्** निर्माणं जन्म वा । **उक्थम्** प्रशस्यम् । **परिभुजत्** भुज पालनाभ्यवहारयोः । परिपालयति । **रोदसी** द्यावापृथिव्यौ । **विश्वतः** सर्वतः । **सीम्** सर्वे । यः सततं स्वेन बलेन प्रशस्यः जन्मन एव प्रभृति सर्वतः कृत्स्ने द्यावापृथिवी परिपालयतीत्यर्थः । **सः पारिषत्** 'पॄ पालनपूरणयोः' । पूरयतु अस्मान् । **क्रतुभिः** प्रज्ञाभिः । अत्यन्तप्रज्ञान् अस्मान् करोत्वित्यर्थः । **मन्दसानः** मन्दतिरर्चतिकर्मा (निघ.३,१४)। स्तूयमानोऽस्माभिः । किञ्च **मरुत्वान्** ।। १४ ।।

**वेङ्कटमाधव– यस्य** अनवरतम् **शवसा मानम्** अतिप्रशस्यम् **परिभुजत्** द्यावापृथिव्यौ । सर्वत एव परिगृह्य स्वयमेव द्यावापृथिव्योः ईश्वरः भवति । **सः** पारयतु कर्मभिः मोदमानः अस्मान् ।। १४ ।।

**मुद्गल– यस्य** इन्द्रस्य **उक्थम्** प्रशस्यम् **शवसा मानम्** बलेन सर्वस्य परिच्छेदकम् **रोदसी** द्यावापृथिव्यौ **विश्वतः सीम्** सर्वतः **अजस्रम्** अनवरतम् **परिभुजत्** परितः सर्वतो भुनक्ति पालयति । **सः** इन्द्रः **क्रतुभिः** अस्माभिः कृतैर्यागैः **मन्दसानः** मोदमानः सन् **पारिषत्** अस्मान् दुरितात् पारयतु ।। १४ ।।

**सायण– यस्य** इन्द्रस्य **उक्थं** प्रशस्यं **शवसा मानं** बलेन सर्वस्यं परिच्छेदकं सर्वेषां बलस्योपमानभूतं वा **रोदसी** द्यावापृथिव्यौ **विश्वतः सीं** सर्वतः **अजस्रम्** अनवरतं **परिभुजन्** परितः सर्वतो भुनक्ति पालयति **सः** इन्द्रः **क्रतुभिः** अस्माभिः कृतैर्यागैः **मन्दसानः** मोदमानः सन् **पारिषत्** अस्मान् दुरितात् पारयतु ।

उक्थम् । 'वच परिभाषणे' । 'पातृतुदिवचि' इत्यादिना कर्मणि थक् । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । परिभुजत् । 'भुज पालनाभ्यवहारयोः' । लेटि अडागमः । व्यत्ययेन शः । पारिपत् । 'पार तीर कर्मसमाप्तौ' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । तस्य आर्धधातुकत्वात् इट् । व्यत्ययेन णिलोपः । मन्दसानः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ.सू.२.२४४) इति असानच्प्रत्ययः ।।

**सिद्धाञ्जनम्– यस्य** इन्द्रस्य **अजस्रम्** अनवरतं **शवसा** बलेन **मानम्** सर्वस्य परिच्छेदकं **उक्थम्** स्तोत्रं तेन उक्थार्हत्वं लक्ष्यते प्रशंसनीयत्वं, प्राशस्त्यमिति यावत् । **रोदसी** द्यावापृथिव्यौ **विश्वतः सीम्** सर्वतः **परिभुजत्** परितो भुनक्ति, सर्वतः पालयति । यस्येन्द्रस्य 'मानं' सर्वस्य बलस्य परिच्छेदकं मानभूतं प्रमाणभूतं प्राशस्त्यं 'रोदसी' सर्वतः पालयति, **सः** इन्द्रः **ऋतुभिः** प्राज्ञैः कर्मभिः अस्मदीयैः **मन्दसानः** मोदमानः सन् **पारिषत्** पारयतु अस्मान् दुरितादिति शेषः । अन्यत्समानम् ।

परिभुजत्–भुज पालनाभ्यवहरणयोः, लेट्यडागमः, व्यत्ययेन शः । पारिषत्–पार तीर कर्मसमाप्तौ, लेट्यडागमः, सिप् शिलोपश्च छान्दसौ । मन्दसानः–मन्दतेः ऋञ्जिवृधीत्यादिभ्यः किदित्यसानच्प्रत्ययः ।। १४ ।।

'णेरनिटि' इति णिलोपः' । स्वर्षाः । सुपूर्वात् अर्तेः विच् । सुष्ठु अर्ति गच्छतीति स्वरुदकम् । तत्सनोतीति स्वर्षाः । 'षणु दाने' । जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । 'सनोतेरनः' (पा.सू.८.३.१०८) इति षत्वम् । त्वेषः । 'त्विष दीप्तौ' । पचाद्यच् । रवथः । 'रु शब्दे' । 'शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः' (उ.सू.३.३९३) इति अथप्रत्ययः । गुणावादेशौ । सनयः । सनोतेर्भावे औणादिक इप्रत्ययः ।। १३ ।।

**सिद्धाञ्जनम्– तस्य** इन्द्रस्य **वज्रः** कुलिशः शत्रुघातकमायुधं **क्रन्दति स्मत्** क्रन्दयति भृशं शत्रून् । यः इन्द्रः **स्वर्षाः** स्वः, अव्ययं, स्वर्गं सनोति ददातीति स्वर्षाः । **दिवो न** द्युस्थानसम्बन्धी सूर्य इव **त्वेषः** दीप्तः, उज्ज्वलः । **रवथः** शब्दस्य असुरभेदनगर्जनस्य कर्ता **शिमीवान्** लोकानुग्रहार्थककर्मयुक्तः । **तम्** तथाभूतं **सनयः** दानानि, सर्वाणि यजमानैरर्पितानि **सचन्ते** सेवन्ते, प्राप्नुवन्ति । तथा **तम् धनानि** सर्वाणि धनानि च तदधीनानि सन्ति आश्रयन्ते । अन्यत्समानम् ।

क्रन्दति–णेरनिटीति णिलोपः । त्वेषः–त्विष दीप्तौ, पचाद्यच् । रवथः–रु शब्दे, शीङ्शपीत्यादिभ्यः अथप्रत्ययः, गुणावादेशौ । सनयः–सनोतेः, औणादिक इप्रत्ययः ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**यस्याजस्रं शवसा मानमुक्थं परिभुजद् रोदसी विश्वतः सीम् ।**
**स पारिषत् क्रतुभिर्मन्दसानो मरुत्वान् नो भवत्विन्द्र ऊती ।। १४ ।।**
**यस्य । अजस्रम् । शवसा । मानम् । उक्थम् । परिभुजत् । रोदसी इति । विश्वतः । सीम् । सः । पारिषत् । क्रतुऽभिः । मन्दसानः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ।। १४ ।।**

**स्कन्द– यस्य** इन्द्रस्य **अजस्रम्** सततम् **शवसा** स्वेन बलेन **मानम्** निर्माणं जन्म वा । **उक्थम्** प्रशस्यम् । **परिभुजत्** भुज पालनाभ्यवहारयोः । परिपालयति । **रोदसी** द्यावापृथिव्यौ । **विश्वतः** सर्वतः । **सीम्** सर्वे । यः सततं स्वेन बलेन प्रशस्यः जन्मन एव प्रभृति सर्वतः कृत्स्ने द्यावापृथिवी परिपालयतीत्यर्थः । **सः पारिषत्** 'पॄ पालनपूरणयोः' । पूरयतु अस्मान् । **क्रतुभिः** प्रज्ञाभिः । अत्यन्तप्रज्ञान् अस्मान् करोत्वित्यर्थः । **मन्दसानः** मन्दतिरर्चतिकर्मा (निघ.३,१४)। स्तूयमानोऽस्माभिः । किञ्च **मरुत्वान्** ।। १४ ।।

**वेङ्कटमाधव–** **यस्य** अनवरतम् **शवसा मानम्** अतिप्रशस्यम् **परिभुजत्** द्यावापृथिव्यौ । सर्वत एव परिगृह्य स्वयमेव द्यावापृथिव्योः ईश्वरः भवति । **सः** पारयतु कर्मभिः मोदमानः अस्मान् ।। १४ ।।

**मुद्गल–** **यस्य** इन्द्रस्य **उक्थम्** प्रशस्यम् **शवसा मानम्** बलेन सर्वस्य परिच्छेदकम् **रोदसी** द्यावापृथिव्यौ **विश्वतः सीम्** सर्वतः **अजस्रम्** अनवरतम् **परिभुजत्** परितः सर्वतो भुनक्ति पालयति । **सः** इन्द्रः **क्रतुभिः** अस्माभिः कृतैर्यागैः **मन्दसानः** मोदमानः सन् **पारिषत्** अस्मान् दुरितात् पारयतु ।। १४ ।।

**सायण–** **यस्य** इन्द्रस्य **उक्थं** प्रशस्यं **शवसा मानं** बलेन सर्वस्यं परिच्छेदकं सर्वेषां बलस्योपमानभूतं वा **रोदसी** द्यावापृथिव्यौ **विश्वतः सीं** सर्वतः **अजस्रम्** अनवरतं **परिभुजन्** परितः सर्वतो भुनक्ति पालयति **सः** इन्द्रः **क्रतुभिः** अस्माभिः कृतैर्यागैः **मन्दसानः** मोदमानः सन् **पारिषत्** अस्मान् दुरितात् पारयतु ।

उक्थम् । 'वच परिभाषणे' । 'पातॄतुदिवचि' इत्यादिना कर्मणि थक् । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । परिभुजत् । 'भुज पालनाभ्यवहारयोः' । लेटि अडागमः । व्यत्ययेन शः । पारिपत् । 'पार तीर कर्मसमाप्तौ' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । तस्य आर्धधातुकत्वात् इट् । व्यत्ययेन णिलोपः । मन्दसानः । 'मदि स्तुतिमोदमद-स्वप्रकान्तिगतिषु' । 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ.सू.२.२४४) इति असानच्प्रत्ययः ।।

**सिद्धाञ्जनम्–** **यस्य** इन्द्रस्य **अजस्रम्** अनवरतं **शवसा** बलेन **मानम्** सर्वस्य परिच्छेदकं **उक्थम्** स्तोत्रं तेन उक्थार्हत्वं लक्ष्यते प्रशंसनीयत्वं, प्राशस्त्यमिति यावत् । **रोदसी** द्यावापृथिव्यौ **विश्वतः सीम्** सर्वतः **परिभुजत्** परितो भुनक्ति, सर्वतः पालयति । यस्येन्द्रस्य 'मानं' सर्वस्य बलस्य परिच्छेदकं मानभूतं प्रमाणभूतं प्राशस्त्यं 'रोदसी' सर्वतः पालयति, **सः** इन्द्रः **ऋतुभिः** प्राज्ञैः कर्मभिः अस्मदीयैः **मन्दसानः** मोदमानः सन् **पारिषत्** पारयतु अस्मान् दुरितादिति शेषः । अन्यत्समानम् ।

परिभुजत्–भुज पालनाभ्यवहरणयोः, लेट्यडागमः, व्यत्ययेन शः । पारिषत्–पार तीर कर्मसमाप्तौ, लेट्यडागमः, सिप् णिलोपश्च छान्दसौ । मन्दसानः–मन्दतेः ऋञ्जिवृधीत्यादिभ्यः किदित्यसानच्प्रत्ययः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**न यस्य॑ दे॒वा दे॒वता॒ न मर्ता॒ आप॑श्च॒न शव॑सो अन्त॒माप॑ुः ।**
**स प्र॒रिक्वा॒ त्वक्ष॑सा॒ क्ष्मो दि॒वश्च॑ म॒रुत्वा॑न् नो भवत्विन्द्र ऊ॒ती ।। १५ ।।**
न । यस्य॑ । दे॒वाः । दे॒वता॑ । न । मर्ता॑ः । आप॑ः । च॒न । शव॑सः । अन्त॑म् । आ॒पुः ।
सः । प्र॒ऽरिक्वा॑ । त्वक्ष॑सा । क्ष्मः । दि॒वः । च॒ । म॒रुत्वा॑न् । न॒ः । भ॒व॒तु॒ । इन्द्र॑ः ।
ऊ॒ती ।। १५ ।।

**स्कन्द– न यस्य देवाः** इन्द्रस्य कृत्स्नदेवाः, नान्याऽपि काचित् **देवता** । **न** अपि **मर्ताः** मनुष्याः । **आपः चन** चनेति निपातो वाशब्दार्थे द्रष्टव्यः । आपो वा **शवसः** बलस्य **अन्तम् आपुः** प्राप्नुवन्ति । यस्येन्द्रस्य न कश्चिदपि बलस्यान्तं जानाति । बलस्य वा सदृशो नास्तीत्यर्थः । **सः प्ररिक्वा** अतिरिक्तः । केन । **त्वक्षसा** तक्षू त्वक्षू तनूकरणे । शत्रुतनूकरेण बलेन । **क्ष्मः दिवः च** पृथिव्या दिवश्च सकाशात् । **मरुत्वान्** ।। १५ ।।

**वेङ्कटमाधव– न यस्य देवाः** ईश्वरा भवन्ति देवत्वस्य नापि मर्त्याः । **आपः** अपि बलस्य **अन्तम्** न आपुः । **सः** प्रेरकः बलेन द्यावापृथिव्योः ।। १५ ।।

**मुद्गल– देवता** देवस्य दानादिगुणयुक्तस्य **यस्य** इन्द्रस्य **शवसः** बलस्य **अन्तम्** अवसानम् **देवाः** वस्वाद्या देवगणाः **न आपुः** नाऽऽनशिरे । तथा **मर्ताः** मनुष्या नापुः । **आपः चन** आपोऽपि न प्राऽऽपुः । **सः** तादृश इन्द्रः **त्वक्षसा** शत्रूणां तनूकर्त्रा आत्मीयेन बलेन **क्ष्मः** पृथिव्याः **दिवा च** स्वर्गस्य च **प्ररिक्वा** प्रकर्षेण रेचको भवति । लोकद्वयादप्यस्य बलमतिरिच्यत इत्यर्थः । **मरुत्वान्** मरुद्भिर्युक्तः **सः** इन्द्रः **नः** अस्माकम् **ऊती** ऊतये रक्षणाय भवतु ।।

**सायण– देवता** देवस्य दानादिगुणयुक्तस्य **यस्य** इन्द्रस्य **शवसः** बलस्य **अन्तम्** अवसानं **देवाः** वस्वाद्या देवगणाः **न आपुः** न आनशिरे तथा **मर्ताः** मनुष्याः **आपश्चन** आपोऽपि **न** प्रापुः । **सः** तादृश इन्द्रः **त्वक्षसा** शत्रूणां तनूकर्त्रा आत्मीयेन बलेन **क्ष्मः** पृथिव्याः **दिवश्च** स्वर्गस्य च **प्ररिक्वा** प्रकर्षेण रेचको भवति । लोकद्वयादप्यस्य बलमतिरिच्यते इत्यर्थः । मरुद्भिर्युक्तः सः **इन्द्रः नः** अस्माकम् **ऊती** ऊतये रक्षणाय भवतु ।

देवता । देव एव देवता । 'देवात्तल्' इति स्वार्थे तल् । 'सुपां सुलुक्' इति षष्ठ्या

लुक् । मर्ताः । 'मृङ् प्राणत्यागे' । 'असिहसि' इत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । प्ररिका । 'रिचिर् विरेचने' । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । क्ष्मः । क्ष्मा इति पृथिवी-नाम । 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागात् इष्टसिद्धिः इत्यभिधानात् ङसि भसंज्ञायामाकारलोपः । यद्वा । 'क्ष्मायी विधूनने' । अस्मात् 'क्विप् च' इति क्विप् । वेरपृक्त-लोपात् पूर्वं वलि लोपः । अन्यत् समानम् । उदात्तनिवृत्तिस्वरेण विभक्तेः उदात्तत्वम् ।।

**सिद्धाञ्जनम्– देवता** देव एव देवता स्वार्थे तल्, षष्ठ्या लुक्, देवस्य द्योतमानस्य **यस्य** इन्द्रस्य सम्बन्धिनः **शवसः** बलस्य **अन्तम्** अवसानं देवाः **न आपुः** नानशिरे । तथा **मर्ताः** मनुष्याः **आपश्चन** आपो देव्योऽपि **न** न प्रापुः । **सः** तादृश इन्द्रः **त्वक्षसा** तनूकर्त्रा, स्वबलेन, शत्रूणामिति शेषः, **क्ष्मः** पृथिव्याः **दिवः च** स्वर्गस्य च **प्ररिका** प्रकर्षेण रेचको भवति । लोकद्वयादप्यतिरिच्यते बलमस्य । अन्यत्पूर्ववत् ।

प्ररिकारिचिर् विरेचने, वनिप् । त्वक्षसा–त्वक्षू तनूकरणे, असुन् । क्ष्मः–क्ष्मेति पृथिवीनाम, आतो धातोरित्यत्र योगविभागादिष्टसिद्धिरित्यभिधानात् ङसि भसंज्ञायामाकारलोपः ।। १५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये दशमो वर्गः ।।

## ।। अथ एकादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।**
**वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ।। १६ ।।**
**रोहित् । श्यावा । सुमत्ऽअंशुः । ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य । वृषण्ऽवन्तम् । बिभ्रती । धूःऽसु । रथम् । मन्द्रा । चिकेत । नाहुषीषु । विक्षु ।। १६ ।।**

**स्कन्द– रोहित्** रोहितवर्णका सामर्थ्यादिन्द्रस्य स्वभूता बडवा । **श्यावा** श्याववर्णा च । **सुमदंशुः** सुमच्छब्दोऽत्र स्मच्छब्देन समानार्थः प्रशस्तवचनः । अंशुशब्दो रश्मिवचनः । प्रशस्तरश्मिः । **ललामीः** ललामशब्दः श्रेष्ठवचनः पुण्ड्रवचनो वा । अत्यन्तश्रेष्ठा सपुण्ड्रा वा । **द्युक्षा** द्युलोकनिवासिनी दीप्तिनिवासभूता वा । **राये ऋज्राश्वस्य** ऋज्राश्वग्रहणेन तत्प्रभृतयः

पश्चापि वार्षागिरा लक्ष्यन्ते । अस्माकमृज्राश्वप्रभृतीनां वार्षागिराणां धनार्थमित्यर्थः । किं कुर्वती । **बिभ्रती** धूर्षु रथम् रथधुरासु रथं धारयन्ती । अस्माकमृज्राश्वप्रभृतीनां धनार्थमिन्द्रेण स्वरथधुरासु नियुक्ता सतीत्यर्थः । कीदृशी । **मन्द्रा** हर्षवती । किं करोति । **वषण्वन्तम् चिकेत** वृषशब्दो वृष्टिवचनः, तद्वन्तमिन्द्रं जानाति । वृष्टिकारिणमिन्द्रं तत्रारूढं जानातीत्यर्थः । क्व । उच्यते । **नाहुषीषु विक्षु** 'नहुषः'(निघ२,३) इति मनुष्यनाम । तेषु भवासु नाहुषीषु नहुषनाम्नो वा राज्ञः स्वभूतासु विक्षु मनुष्यजातिषु ब्राह्मणादिकासु । सप्तमीनिर्देशात् वर्तमानमिति शेषः । मनुष्यलोकमायातम् । ब्राह्मणानां मध्ये वर्तमानमित्यर्थः । अथवा रोहिच्छ्यावेत्याहुतिरभिधीयते न वडवा । सोमाज्यपुरोडाशहविर्लक्षणा लोहितवर्णा श्याववर्णा चात्यन्तश्रेष्ठाहुतिरुज्ज्वलरूपत्वात् प्रशस्तरश्मिः धनार्थमस्माकमृज्राश्वप्रभृतीनां वृषाण्वन्तमिन्द्रं चिकेत । अन्तर्णीतण्यर्थोऽत्र केततिर्द्रष्टव्यः । लोडर्थे लिट् । केतयतु ज्ञापयतु । धनमृज्राश्वप्रभृतिभ्यो देहीत्येवमिन्द्रं ब्रवीत्वित्यर्थः । बिभ्रती धूर्षु रथं गच्छत इन्द्रस्य धुरि गृहीत्वा रथम् । निरुन्धानेत्यर्थः । शिष्टपद-योजना तु सदृशी । अथवा रोहिच्छ्यावेत्यादीनि मन्द्रा इत्यस्य विशेषणानि । मन्द्रशब्दः स्तुतिवचनः मन्दतेरर्चतिकर्मत्वात् । इन्द्रं प्रत्यारोहतीति रोहित् । श्यैङ् वृद्धौ । श्यायत इति श्यावा । इन्द्रारोहिणी परिवृद्धा च मन्द्रा स्तुतिः धनार्थमस्माकम् ऋज्राश्वप्रभृतीनामिन्द्रं ज्ञापयतु । शिष्टपदयोजना पूर्ववत् ।। १६ ।।

**वेङ्कटमाधव–** पञ्चानां भ्रातॄणाम् अश्वा वर्णतः निर्दिश्यन्ते । **रोहित् श्यावा** कल्याणदीप्तिः पुण्ड्रवती दीप्ता ऋज्राश्वस्य ज्येष्ठस्य धनाय भवन्तु । वर्षवन्तम् ऋज्राश्वेन अधिष्ठितम् । **रथम् धूर्षु बिभ्रती** मदयन्ती नहुषकुलजातासु प्रजासु ऋज्राश्वस्य वडवा प्रादुरभूत् ।। १६ ।।

**मुद्गल– रोहित्** रोहितवर्णा **श्यावा** श्यामवर्णा । उभयोः पार्श्वयोः उभयविधवर्णयुक्तेत्यर्थः । **सुमदंशुः** सुमत् स्वतः प्रांशुः अतिदीर्घावयवा **ललामीः** पुण्ड्रवती **द्युक्षा दिवि** द्युलोके कृतनिवासा **ऋज्राश्वस्य** एतत्संज्ञस्य राजर्षेः **राये** धनार्थम् **वृषण्वन्तम्** वृष्णा सेक्त्रा इन्द्रेण युक्तम् **रथम् धूर्षु** युगसम्बन्धिषु वहनप्रदेशेषु **बिभ्रती** वहन्ती मन्द्रा सर्वेषाम् आह्लादकरी अश्वपङ्क्तिः **नाहुषीषु** नहुषा मनुष्याः तत्सम्बन्धिनीषु **विक्षु** सेनालक्षणासु प्रजासु **चिकेत** ज्ञायते । ईदृश्या अश्वपङ्क्त्या युक्त इन्द्रः सङ्ग्रामेषु अनुग्राहकतया प्रादुर्भवतीत्यर्थः ।। १६ ।।

**सायण– रोहित्** रोहितवर्णा **श्यावा** श्यामवर्णा । उभयोः पार्श्वयोरुभयविधवर्णयुक्तेत्यर्थः । **सुमदंशुः** सुमत् स्वतः प्रांशुः । उक्तं च यास्केन– 'सुमत् स्वयमित्यर्थः' (निरु.६.२२) इति । अतिदीर्घावयवा **ललामीः** पुण्ड्रवती अश्वभूषणयुक्ता वा **द्युक्षा** दिवि द्युलोके कृतनिवासा **ऋज्राश्वस्य** एतत्संज्ञस्य राजर्षेः **राये** दनार्थं **वृषण्वन्तं** वृष्णा सेक्त्रा इन्द्रेण युक्तं **रथं धूर्षु** युगसम्बन्धिषु वहनप्रदेशेषु **बिभ्रती** वहन्ती **मन्द्रा** सर्वेषाम् आह्लादकरी अश्वपङ्क्तिः **नाहुषीषु** । नहुषा मनुष्याः । तत्सम्बन्धिनीषु **विक्षु** सेनालक्षणासु प्रजासु **चिकेत** ज्ञायते । ईदृश्याश्वपङ्क्त्या युक्त इन्द्रः सङ्ग्रामेष्वनुग्राहकतया प्रादुर्भवतीत्यर्थः ।

ललामीः । ललामशब्दात् 'छन्दसीवनिपौ' (पा.सू.५.२.१०९.२) इति मत्वर्थीय ईकारः । अङ्यन्तत्वात् सुलोपाभावः । द्युक्षा । 'क्षि निवासगत्योः' । औणादिको डप्रत्ययः । ततः टाप् । ऋज्राश्वस्य । 'ऋज गतिस्थानार्जनोपार्जनेषु' । 'ऋज्रेन्द्र' इत्यादिना रक्प्रत्ययान्तो निपातितः । ऋज्रा गतिमन्तोऽश्वा यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वृषण्वन्तम् । 'अनो नुट्' (पा.सू.८.२.१६) इति मतुपो नुट् । चिकेत । 'कित ज्ञाने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लिट् । व्यत्ययेन तिप् ।। १६ ।।

**सिद्धाञ्जनम्– रोहित्** रोहितवर्णा **श्यावा** श्यामवर्णा, पार्श्वद्वये द्विविधवर्णयुक्तेत्यर्थः । क्रियाशक्तिद्योतकः रोहितः, आकाशवत् सर्वावरणद्योतकः श्यामश्च वर्णः, एवमिन्द्राश्वपङ्क्तिद्वयस्य प्राणबलोपलक्षणस्य वर्णभेदार्थो बोध्यः । **सुमदंशुः** स्वतः प्रांशुरिति यास्कमनुसृत्य सायणः, सुखं शुभं वा 'सुमत्,' अंशुः किरणः, अवयवार्थः, शोभनावयवा सुमदंशुरश्वपङ्क्तिरित्यर्थः । **ललामीः** अश्वभूषणयुक्ता **द्युक्षा** द्युलोके कृतवासा **ऋज्राश्वस्य** एतत्संज्ञकस्य मन्त्रद्रष्टृणामेकस्यर्षेः (ऋज्रः ऋजुगमनोऽश्वो यस्य स इति अक्षरार्थः) **राये** सम्पदर्थं **वृषण्वन्तम्** वृष्णा वर्षित्रा इन्द्रेण युक्तं **रथम् धूर्षु** वहनप्रदेशेषु युगसम्बन्धिषु **बिभ्रती** वहन्ती **मन्द्रा** आह्लादकरी अश्वपङ्क्तिः **नाहुषीषु** नहुषाः मनुष्याः, तत्सम्बन्धिनीषु **विक्षु** प्रजासु **चिकेत** ज्ञायते । ऋज्राश्वमृषिमनुग्रहीतुमिन्द्रः रथाश्वयुक्तः द्युस्थोऽपि मानुषविशुद्धज्ञानगोचरतां गत इति भावः ।

ललामीः–ललामशब्दात् चन्दसि मत्वर्थीय ईकारः, सुलोपाभावश्च । द्युक्षा–क्षि निवासगत्योः, औणादिको डप्रत्ययः, ततष्टाप् । वृषण्वन्तम्–अनो नुडिति मतुपो नुट् । चिकेत–कित ज्ञाने, छन्दसि कर्मणि लिट्, व्यत्ययेन तिप् ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**एतत् त्यत् त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः ।**
**ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ।। १७ ।।**
**एतत् । त्यत् । ते । इन्द्र । वृष्णे । उक्थम् । वार्षागिराः । अभि । गृणन्ति । राधः ।**
**ऋज्रऽअश्वः । प्रष्टिऽभिः । अम्बरीषः । सहऽदेवः । भयमानः । सुऽराधाः ।। १७ ।।**

**स्कन्द– त्यत् ते** इति समानार्थौ । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यत् जन्मन एव प्रभृति करिष्याम इति सङ्कल्पितवन्तः **एतत् त्यत् ते इन्द्र वृष्णे** वृष्णे इति तादर्थ्ये चतुर्थी । तव वर्षयितुरर्थाय । त्वां वर्षवितारं स्तोतुमित्यर्थः । हे **इन्द्र! उक्थम्** स्तोत्रम् **वार्षागिराः** वृषागीर्नाम ऋषिः, तस्य पुत्राः । **अभिगृणन्ति** गृणातिरर्चतिकर्माऽन्यत्र, इह तु सामर्थ्यादुच्चारणार्थः । आभिमुख्येनोच्चारयन्ति । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । कीदृशम् । उच्यते । **राधः** धननामैतत् (निघ.२,१०) । अन्तर्णीतमत्वर्थं चैतद् द्रष्टव्यम् । हविर्लक्षणेन धनेन धनवत् । हविस्संयुक्तमित्यर्थः । कतमे । उच्यते । एकस्तावत् **ऋज्राश्वः** कीदृशः । **प्रष्टिभिः** प्रष्टिशब्दोऽन्यत्र एकस्यामेव धुरि यो द्वितीयो बलीवर्द, अश्वो वा नियुज्यते तस्य वाचकः । इह तु पृच्छ्यतेऽसाविति प्रष्टिः प्रख्यात उच्यते । प्रथमार्थे चैषा तृतीया । अत्यन्तप्रख्यात इत्यर्थः । न केवलम् ऋज्राश्व एव । **अम्बरीषः सहदेवः भयमानः सुराधा** इत्येते च । अथवा प्रष्टिभिरिति नेदम् ऋज्राश्वस्य विशेषणम् । किं तर्हि । तृतीयाश्रुतेः प्रसिद्धिबलाद् राध इति च कर्मश्रुतेर्योग्यार्थमत्र क्रियापदमध्याहार्यम् । वार्षागिरास्त्वदर्थं स्तोत्रमुच्चारयन्ति । तच्चोच्चारयन्तो धनं प्रष्टिभिर्वहेयुः । तावद्धनं देहि यावच्छकटेन एकैकस्यां धुरि द्वौ बलीवर्दौ नियुज्य वोढुं शक्यते नैकैकमित्यर्थः ।। १७ ।।

**वेङ्कटमाधव–** तद् इदं तव वर्षितुः इन्द्रस्य स्तोत्रं वृषागिरः पुत्राः उच्चारयन्ति प्रीणनम् । **ऋजाश्वः** पार्श्वयोः स्थितैः स्तोत्रम् उच्चारयति । पार्श्वस्थानां नामानि अम्बरीषः इति ।।१७।।

**मुद्गल–** हे **इन्द्र! वृष्णे** वृष्णः कामानां वर्षितुः **ते** तव **त्यत्** तत् **एतत् उक्थम्** स्तोत्रम् **राधः** संराधकं त्वत्प्रीतिहेतु **वार्षागिराः** वृषागिरोः राज्ञः पुत्रा ऋज्राश्वादयः **अभिगृणन्ति** आभिमुख्येन वदन्ति । वार्षागिरा इत्येतत् विवृणोति । ऋज्राश्वः एतत्संज्ञो राजऋषिः **प्रष्टिभिः** पार्श्वस्थैरन्यैर्ऋषिभिः सह सन्द्रमस्तोत् । के ते पार्श्वस्थाः । अम्बरीषादयश्चत्वारो राजर्षयः ।।

**सायण–** हे **इन्द्र! वृष्णे** कामानां वर्षितुः **ते** तव **त्यत्** तत् **एत उक्थं** स्तोत्रं **राधः** संराधकं त्वत्प्रीतिहेतु **वार्षागिराः** वृषागिरो राज्ञः पुत्रा ऋज्राश्वादयः **अभि गृणन्ति** आभिमुख्येन वदन्ति । वार्षागिरा इत्येतत् विवृणोति । **ऋज्राश्वः** एतत्संज्ञो राजर्षिः ।

वार्षागिराः । 'तस्यापत्यम्' (पा.सू.४.१.९२) इति अण्प्रत्ययः । गृणन्ति । 'गॄ शब्दे' । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । राधः । 'राध साध संसिद्धौ' । राध्नोति समृद्धो भवत्यनेनेति राधः । करणेऽसुन् । ऋज्राश्वः । ऋज्राः गतिमन्तोऽश्वा यस्य स तथोक्तः । अम्बरीषः । 'अबि शब्दे' । औणादिक ईषन्प्रत्ययः (उ.सू.४.४६९) । सहदेवः । देवैः सह वर्तते इति सहदेवः । 'वोपसर्जनस्य' इति विकल्पनात् सभावाभावः । भयमानः । 'ञिभी भये' । अस्मात् अन्तर्भावितण्यर्थात् व्यत्ययेन शानच् । 'बहुलं छन्दसि' इति शपः श्लेरभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । सुराधाः । राधः इति धननाम । शोभनं राधो यस्य । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् ।। १७ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! वृष्णे** वर्षित्रे **ते** तुभ्यं **त्यत्** एतत् तदेतत् **राधः** संराधकं **उक्थम्** स्तोत्रं **वार्षागिराः** वृषागिरोऽपत्यानि पुमांसः ऋज्राश्वादयः अभिगृणन्ति आभिमुख्येन वदन्ति । **ऋज्राश्वः** एतत्संज्ञः ऋषिः **प्रष्टिभिः** पार्श्वस्थैर्ऋषिभिः सह अस्तौदिन्द्रम् । के ते पार्श्वस्था राजर्षयः? अम्बरीषादयः ।

राधः–राध साध संसिद्धौ, राध्नोति समृद्धो भवत्यनेनेति राधः, करणे असुन् । ऋज्राश्वः– गतः पूर्वस्याम् । अम्बरीषः–अबि शब्दे, औणादिक ईषन्प्रत्ययः । सहदेवः–देवैः सह वर्तते । भयमानः–बिभेतेः, अन्तर्भावितण्यर्थात् व्यत्ययेन शानच् ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ।**
**सनत् क्षेत्रं सखिभिः श्वित्न्येभिः सनत् सूर्यं सनदपः सुवज्रः ।। १८ ।।**
दस्यून् । शिम्यून् । च । पुरुहूतः । एवैः । हत्वा । पृथिव्याम् । शर्वा । नि । बर्हीत् ।
सनत् । क्षेत्रम् । सखिऽभिः । श्वित्न्येभिः । सनत् । सूर्यम् । सनत् । अपः । सुऽवज्रः ।।

**स्कन्द–** दस्यून् दस्युशब्दोऽत्र उपक्षपणार्हवचनः दस्यते क्षयार्थत्वात् । ये च योद्धुमुपस्थिताः

ते उपक्षपणमर्हन्ति नेतरे । योद्धुमुपस्थितान् उपक्षपयितव्यान् वृत्रादीनसुरान् । **शिम्यून् च** 'शिमी' (निघ.२,१) इति कर्मनाम । युशब्दोऽप्यत्र तद्वदर्थे । कर्मवतश्च । स्वव्यापारनिरतांश्च । युद्धपराङ्मुखानित्यर्थः । **पुरुहूतः** बह्वाहूत इन्द्रः । **एवैः** तैस्तैः कामैः गमनैर्वा । **हत्वा पृथिव्याम्** हन्तिरत्र गत्यर्थः । पृथिवीशब्दोऽपि 'अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या.२,५) इति पृथिव्येकदेशभूतेषु असुरपुरेषु द्रष्टव्यः । गत्वा असुरपुरेष्वित्यर्थः । **शर्वा** शरुशब्द शरपर्यायः । शरेण । **नि बर्हीत्** हतवान् । हत्वा च **सनत्** । सम्भक्तवानित्यर्थः । किम् । उच्यते । **क्षेत्रम्** असुराणां स्वभूतम् । असुराणां स्वभूतान् विषयानित्यर्थः । न च केवलः । किं तर्हि । **सखभिः** मरुदाख्यैः सह । कीदृशैः । **श्वित्न्येभिः** । श्वेतैरित्यर्थः । अथवा शु इति आशु इति च क्षिप्रनामनी (निघ.२,२५) । एतिरपि गत्यर्थः । शु य एति स श्वित्यस्तै । क्षिप्रगामिभिरित्यर्थः । **सनत् सूर्यम्** सूर्यं च सम्भक्तवान् । तदेतत् सव्येनाप्युक्तम्– 'वृत्रं यदिन्द्र शवसावधीरहिम्' (ऋ,१,५१,४) इति । **सनत् अपः** वृष्टिलक्षणाश्चापः सम्भक्तवान् । **सुवज्रः** शोभनेन च वज्रेण युक्त इन्द्रः ।। १८ ।।

**वेङ्कटमाधव–** उपक्षपयितृन् भेतृन् च **पुरुहूतः** मरुद्भिः सह **हत्वा पृथिव्याम्** हिंसक निबर्हयतु । हन्तिर्गमनार्थः । प्रयच्छतु **क्षत्रम्** मरुद्भिः प्रवृद्धैः, **सनत् सूर्यम्, सनत्** उदकानि च इन्द्रः ।। १८ ।।

**मुद्गल– पुरुहूतः** बहुभिर्यजमानैराहूत इन्द्रः **एवैः** गमनशीलैर्मरुद्भिर्युक्तः सन् **पृथिव्याम्** भूमौ वर्तमानान् **दस्यून्** उपक्षपयितृन् शत्रून् **शिम्यून्** च शमयितृन् शमनकारिणो राक्षसादींश्च **हत्वा** प्रहृस्य तदनन्तरम् **शर्वा** हिंसकेन वज्रेण **नि बर्हीत्** अवधीत् । एवं शत्रून् निरस्य **श्वित्यभिः** श्वेतवर्णैरलङ्करणेन दीप्ताङ्गैः **सखिभिः** मित्रभूतैर्मरुद्भिः सह **क्षेत्रम्** शत्रूणां स्वभूतां भूमिम् **सनत्** समभाक्षीत् । तथा वृत्रेण तिरोहितम् **सूर्यम्** तस्य वृत्रस्य हननेन **सनन्** अभजत् । प्राप्तवानित्यर्थः । तथा **सुवज्रः** शोभनवज्रयुक्त इन्द्रो वृत्रेण निरुद्धाः **अपः** वृष्ट्युदकानि **सनत्** समभजत् ।। १८ ।।

**सायण– पुरुहूतः** बहुभिर्यजमानैराहूत इन्द्रः **एवैः** गमनशीलैर्मरुद्भिर्युक्तः सन् **पृथिव्यां** भूमौ वर्तमानान् **दस्यून्** उपक्षपयितृन् शत्रून् **शिम्यूंश्च** शमयितृन् वधकारिणो राक्षसादींश्च **हत्वा** प्रहृत्य तदनन्तरं **शर्वा** हिंसकेन वज्रेण **नि बर्हीत्** अवधीत् । निबर्हयतिर्वधकर्मा । एवं शत्रून्निरस्य

**श्वित्न्येभिः** श्वेतवर्णैरलङ्कारेण दीप्ताङ्गैः **सखिभिः** मित्रभूतैर्मरुद्भिः सह **क्षेत्रं** शत्रूणां स्वभूतां भूमिं **सनत्** समभाक्षीत् । तथा वृत्रेण तिरोहितं **सूर्यं** तस्य वृत्रस्य हननेन **सनत्** अभजत प्राप्तवानित्यर्थः । तथा **सुवज्रः** शोभनवज्रयुक्त इन्द्रो वृत्रेण निरुद्धाः **अपः** वृष्ट्युदकानि सनत् समभजत ।

दस्यून् । 'दसु उपक्षये' । 'यजिमनिशुन्धिदसिजनिभ्यो युः' । वृषादित्वात् आद्युदात्तत्वम् । शिम्यून् । 'शमु उपशमे' । शमयति सर्वं तिरस्करोतीति राक्षसादिः शिम्युः । औणादिको युन्प्रत्ययः । वर्णव्यापत्त्या अकारस्य इत्वम् । शर्वा । 'शॄ हिंसायाम्' । 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । 'सुपां सुलुक्' इति तृतीयाया डादेशः । सनत् । 'वन षण सम्भक्तौ' । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । श्वित्न्येभिः । 'श्विता वर्णे' । औणादिको नक्प्रत्ययः । श्वित्नं शुक्लवर्णमर्हन्तीति श्वित्न्याः । 'छन्दसि च' इति यः । सुवज्रः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥ १८ ॥

**सिद्धाञ्जनम्– पुरुहूतः** बहुभिर्यजमानैराहूतः इन्द्रः **एवैः** स्वकीयैर्मरुद्भिर्युक्तः **दस्यून्** उपक्षपयितृन् असुरान् **शिम्यून्** च यजनस्य शमयितृन् विघातकान् राक्षसादींश्च **हत्वा** प्रहस्य **पृथिव्याम्** भूमौ वर्तमानान् दस्युशिम्युप्रतिनिधीन् च **शर्वा** हिंसकेन वज्रेणायुधेन **निवर्हीत्** अवधीत् । एते चासुरादयः न भूमिष्ठाः, किन्तु बहुसोपानयुक्ते वितते मध्यमस्थाने प्राणलोके तेषां वासः सञ्चारश्च । तत्र प्राणमयान्तरिक्षप्रपञ्चे ऊर्ध्वभूमिका वासभूरसुराणाम् । तदधोभूमिका राक्षसानां, तदधश्च पृथिव्याः सन्निकृष्टा भूमिका भूतपिशाचादीनाम् । यद्यपि असुरादीनां वासो मध्यमस्थाने, तथापि तैः स्वकीयचेष्टाभिः पृथिवी समाक्रान्ता सती मानुषेषु जनेषु असुरादीनां प्रातिनिध्यं दुर्भरवेदनयाऽनुभवति । तादृशं पार्थिवं पापं दुःखमपि मरुत्वानिन्द्रः प्रध्वंसयतीत्युक्तम् । तथा असुरादीनां वधं कृत्वा, ततः किं कृतवानिन्द्रः? **श्वित्न्येभिः** श्वेतैः शुभ्रैः सर्वथा नैर्मल्यद्योतकैः वर्णैरुपेतैः **सखिभिः** सहायभूतैः देवभक्तैर्यजमानैः सह **क्षेत्रम्** शत्रुभिः पूर्वमाक्रान्तं पार्थिवं क्षेत्रं **सनत्** समभाक्षीत् तथा वृत्रेणावृतं उपरुद्धं वा **सूर्यम्** उत्तमज्योतिरात्मानं **सनत्** अभजत । तथा **अपः** ज्योतिर्बलादिवाहिनीश्च **सनत्** प्राप्तवान् यजमानाय, सः **सुवज्रः** शोभनवज्रयुक्त इन्द्रः ।

शिम्यून्-शम उपरमे, शमयति, औणादिको युनुप्रत्ययः, अकारस्येत्वं वर्णव्यापत्त्या । शर्वा–शृ हिंसायाम्, वनिप्, तृतीयाया डादेशः । श्वित्न्येभिः–श्विता वर्णे, औणादिको नक्प्रत्ययः, छन्दसि चेति यः ॥ १८ ॥

## ऋक्संहिता पदपाठसहिता

**विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १९ ॥**
विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । सिन्धुः । पृथिवी । उत । द्यौः ॥ १९ ॥

**स्कन्द– विश्वाहा** सर्वदा **इन्द्रः अधिवक्ता** आज्ञापयिता **नः अस्तु** । तत्प्रसादाच्च **अपरिह्वृताः** हरतिरन्यत्रास्तिकर्मा कौटिल्यार्थो वा, इह तु सामर्थ्याद्धिंसार्थः । अहिंसिताः केनचित् **सनुयाम** 'षणु दाने' । दानेन चात्र तत्पूर्वको लाभो लक्ष्यते । लभेमहीत्यर्थः । किम् । उच्यते । **वाजम्** अन्नम् **तत् नः मित्रः** इत्याद्युक्तार्थम् (ऋ.१,९४,१६ द्र.) ॥ १९ ॥

**वेङ्कटमाधव– सर्वदा इन्द्रः** अस्माकम् **अधिवक्ता अस्तु** । अहिसिताः शत्रुभिः भजेमहि अन्नम् ॥ १९ ॥

**मुद्गल– विश्वाहा** सर्वकालम् **नः** अस्माकम् **इन्द्रः अधिवक्ता अस्तु** सर्वदाऽस्माकम् इन्द्रः पक्षपातवचनयुक्तो भवतु । वयम् **अपरिह्वृताः** अकुटिलगतयः सन्तः **वाजम्** हविर्लक्षणमन्नम् **सनुयाम** सम्भजामहे । यदनेन सूक्तेनास्माभिः प्रार्थितम् **तत्** मित्रावरुणादयश्च **ममहन्ताम्** पूजितं कुर्वन्तु ॥ १९ ॥

**सायण– विश्वाहा** सर्वकालं **नः** अस्माकम् **इन्द्रः अधिवक्ता अस्तु** । अधिवचनं पक्षपातेन वचनम् । यथोक्तं– 'ब्राह्मणायाधिब्रूयात्' (तै.सं. २.५.११.९) इति । सर्वदास्माकमिन्द्रः पक्षपातवचनयुक्तो भवतु । वयं च **अपरिह्वृताः** अकुटिलगतयः सन्तः **वाजं** हविर्लक्षणमन्नं **सनुयाम** सम्भजामहे । यदनेन सूक्तेनास्माभिः प्रार्थितं **तत्** मित्रादयः ममहन्तां पूजितं कुर्वन्तु ।

विश्वाहा । विश्वान्यहानि विश्वाहानि । अत्यन्तसंयोगे द्वितीया । 'शेश्छन्दसि बहुलम्' इति

शेर्लोपः । उपधादीर्घत्वं नलोपः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । अपरिह्वृताः । 'ह्वृ कौटिल्ये' । निष्ठायाम् 'अपरिह्वृताश्च' (पा.सू. ७.२.३२) इति निपातनात् हुभावाभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । सनुयाम । 'षणु दाने' । लिङि तनादित्वात् उप्रत्ययः । 'वन षण सम्भक्तौ' इत्यस्मात् वा व्यत्ययेन उप्रत्ययः ।। १९ ।।

**सिद्धाञ्जनम्–** **विश्वाहा** सर्वदेत्यर्थे निपातितः, सर्वकालं **इन्द्रः** देवराट् **नः** अस्माकं **अधिवक्ता** अस्मत्पक्षवर्ती सन्, अस्मानधिष्ठाय वक्ता **अस्तु** भवतु, अस्मद्वचनेऽपि तस्यैव वचनं राजताम् । ततश्च वयं **अपरिह्वृताः** अकुटिलगतयः ऋजुवर्तिनः सन्तः **वाजम्** सर्वविधां समृद्धिं **सनुयाम** सम्भजेमहि । तन्नो मित्र इत्यादि व्याख्यातम् । (१.९४.१६) ।। १९ ।।

।। इति प्रथमाष्टके सप्तमाध्याये एकादशो वर्गः ।।

## ।। अथ द्वादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-१०१)

(११ कुत्स आङ्गिरसः । इन्द्रः (१ गर्भस्राविण्युपनिषद्) । जगतीः । ८-११ त्रिष्टुप्)

**प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।**
**अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ।। १ ।।**

प्र । मन्दिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः । निःऽअहन् । ऋजिश्वना ।
अवस्यवः । वृषणम् । वज्रऽदक्षिणम् । मरुत्वन्तम् । सख्याय । हवामहे ।। १ ।।

**स्कन्द–** अतः परममितर्षेः कुत्सस्यैवार्षम् । चत्वार्यैन्द्राणि सूक्तानि । **प्र**-शब्दः **अर्चत** इत्याख्यातेन सम्बन्धयितव्यः । **मन्दिने** मन्दतिरर्चतिकर्मा (निघ.३,१४) । मन्दः स्तुतिः, तद्वान् मन्दी । तादर्थ्ये चैषा चतुर्थी । स्तुतिमत इन्द्रस्यार्थाय । स्तुत्यमिन्द्रं स्तोतुमित्यर्थः । **पितुमत्** 'पितुः' (निघ.२,७) इत्यन्ननाम । हविर्लक्षणान्नसंयुक्तं **प्रार्चत** अर्चतिरन्यत्र स्तुत्यर्थः, इह तु सामर्थ्यादुच्चारणार्थः । ऋत्विजां चायं प्रैषः पुत्रपौत्रप्रभृतीनां वा । प्रोच्चारयत हे ऋत्विजः! मत्पुत्रपौत्रप्रभृतयः! वा । **वचः** स्तुतिलक्षणम् । किं कृतवानिन्द्रः । उच्यते । **यः कृष्णगर्भाः** कृष्णो नामासुरः, स गर्भभूतोऽन्तर्गतो यासां सेनानां ताः कृष्णगर्भाः । कृष्णसहिता इत्यर्थः ।

ताः **निरहन्** निष्कृष्य हतवान् । **ऋजिश्वना** ऋजिश्वा नाम विदथिनः पुत्रः । तेन सह । अथवा ऋजु शवति गच्छतीति ऋजिश्वा वज्रः, तेन । अथवा वृष्टिलक्षणा आपः कृष्णगर्भाः कृष्णवर्णस्य मेघस्य गर्भभूतत्वात् । ताः निरहन् । हन्तिर्गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । मेघान्निर्गमितवान् । ऋजिश्वना ऋजुगामिना वज्रेण । वयमपि **अवस्यवः** पालनकामाः **वृषणम्** वर्षितारम् **वज्रदक्षिणम्** वज्रो दक्षिणो यस्य स वज्रदक्षिणः तं वज्रदक्षिणम् । दक्षिणेन हस्तेन गृहीतवज्रम् इत्यर्थः । **मरुत्वन्तम्** मरुद्भिः सहितमिन्द्रम् **सख्याय** मनुष्याणां देवैः सह स्तुत्यस्तोतृलक्षणः सम्बन्धः सख्यं तदर्थम् हवामहे । स्तोतुमाह्वयाम इत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** कुत्सः । प्रोच्चारयत माद्यते इन्द्राय सोमयुक्तं स्तोत्रम् । **यः** ऋजिश्वानं राजानमुद्दिश्य कृष्णासुरगर्भाः तद्भार्याः च **निरहन्** । कृष्ण गर्भः यासां ताः **कृष्णगर्भाः** । ता हत्वा तेन भार्यासु निषिक्तान् गर्भान् अपि अहन् । पालनेच्छवः वर्षितारं वज्रयुक्तदक्षिणहस्तम् **मरुत्वन्तम्** सख्यसिद्ध्यर्थम् **हवामहे** । कुत्सस्य इन्द्रः सखा अभवत् इति । 'आ दस्युघ्ना मनसा याह्यस्तम्' (ऋ.४,१६,१०) इत्यत्रोक्तम् ।। १ ।।

**मुद्गल–** 'प्र मन्दिने' इति एकादशर्चम् अष्टमं सूक्तम् । आङ्गिरसः कुत्स ऋषिः । अष्टम्याद्याश्चतस्रः त्रिष्टुभः शिष्टा जगत्यः । इन्द्रो देवता । आद्या गर्भस्राविण्युपनिषत् ।।

हे **ऋत्विजः! मन्दिने** स्तुतिमते स्तोतव्यायेन्द्राय **पितुमत्** हविर्लक्षणान्नेनोपेतम् **वचः** स्तुतिलक्षणं वचनम् **प्र अर्चत** प्रकर्षेणोच्चारयत । **यः इन्द्रः ऋजिश्वना** एतत्संज्ञकेन राज्ञा सख्या सहितः सन् **कृष्णगर्भाः** कृष्णो नाम कश्चिदसुरः तेन निषिक्तगर्भाः तदीया भार्याः **निरहन्** अवधीत् । कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्या अप्यवधीदित्यर्थः । **अवस्यवः** रक्षणेच्छवो वयम् **वृषणम्** कामानां वर्षितारम् **वज्रदक्षिणम्** वज्रयुक्तेन दक्षिणेन हस्तेनोपेतम् **मरुत्वन्तम्** इन्द्रम् **सख्याय** सख्युः कर्मणे **हवामहे** आह्वयामहे ।। १ ।।

**सायण–** 'प्र मन्दिने' इति एकादशर्चमष्टमं सूक्तमाङ्गिरसस्य कुत्सस्याषम् । अष्टम्याद्याश्चतस्रस्त्रिष्टुभः शिष्टाः सप्त जगत्यः । इन्द्रो देवता । तथा चानुक्रान्तं– 'प्रमन्दिन एकादश कुत्स आद्या गर्भस्राविण्युपनिषच्चतुस्त्रिष्टुबन्तम्' इति । दशरात्रस्य नवमेऽहनि मरुत्वतीये एतत्सूक्तम् । 'विश्वजितः' इति खण्डे सूत्रितं– 'प्र मन्दिन इमा उ त्वेति मरुत्वतीयम्' (आश्व.श्रौ.८.७) इति ।

हे ऋत्विजः **मन्दिने** स्तुतिमते स्तोतव्यायेन्द्राय **पितुमत्** हविर्लक्षणेनान्नेनोपेतं **वचः** स्तुतिलक्षणं वचनं **प्र अर्चत** प्रकर्षेणोच्चारयत । **यः** इन्द्रः **ऋजिश्वना** एनत्संज्ञकेन राज्ञा सख्या सहितः सन् **कृष्णगर्भाः** । कृष्णो नाम कश्चिदसुरः । तेन निषिक्तगर्भास्तदीयाः भार्याः **निरहन्** अवधीत् । कृष्णमसुरं हत्वा पुत्राणाम् अपि अनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्याः अप्यवधीदित्यर्थः । **अवस्यवः** रक्षणेच्छवो वयं **वृषणं** कामानां वर्षितारं **वज्रदक्षिणं** व्रजयुक्तेन दक्षिणहस्तेनोपेतं तं **मरुत्वन्तम्** इन्द्रं **सख्याय** सख्युः कर्मणे **हवामहे** आह्वयामहे ।

मन्दिने । 'मदि स्तुतिमोदमदस्वप्रकान्तिगतिषु' । औणादिकः इनिप्रत्ययः । तदुक्तं यास्केन– 'मन्दी मन्दतेः स्तुतिकर्मणः' (निरु.४.२४) इति । पितुमत् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । कृष्णगर्भाः कृष्णेन निषिक्ताः गर्भाः यासु तास्तथोक्ताः । 'परादिश्छन्दसि बहुलम्' इति पूर्वपदान्तोदात्तत्वम्' । अवस्यवः । अवेरौणादिको भावेऽसुन् । अवः इच्छति अवस्यति । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । वृषणम् । 'वा षपूर्वस्य निगमे' इति विकल्पनादुपधादीर्घाभावः । सख्याय । सख्युः कर्म सख्यम् । 'सख्युर्यः' इति यप्रत्ययः । हवामहे । ह्वेञो लटि 'बहुलं छन्दसि' इति संप्रसारणम् ।। १ ।।

**सिद्धाञ्जनम्–** 'प्र मन्दिन' इत्येकादशर्चं अष्टमं सूक्तं कुत्सस्य आर्षम् । अष्टम्या-द्याश्चतस्रस्त्रिष्टुभः, शिष्टाः सप्त जगत्यः, इन्द्रो देवता ।

हे **सखायः!** यजमानाः, मन्दिने स्तोतव्यायेन्द्राय **पितुमत्** रसभरितं **वचः** स्तोत्रं **प्र अर्चत** प्रकर्षेणोच्चारयत । **यः** इन्द्रः **ऋजिश्वना** एतत्संज्ञकेन राज्ञा इति सायणः, ऋजुगमनयुक्तः सर्वथा आर्जवसम्पन्नो यजमानः ऋजिश्वा (१.५१.५), तेन सख्या **कृष्णगर्भाः** कृष्णः वृत्रो भवति, कश्चनासुर इति सायणः, तेन निषिक्तगर्भास्तदीया भार्याः **निरहन्** अवधीत्, वृत्रं निस्सन्तानं निरवशेषं कर्तुं तद्भार्यावध इत्युक्तिः । **अवस्यवः** रक्षणेच्छवो वयं **वृषणम्** वर्षितारं **वज्रदक्षिणम्** वज्रेण स्वप्रकाशायुधेन सदसद्विवेचनसमर्थं, वज्रयुक्तदक्षिणहस्तोपेतमिति सायणः । एवम्भूतं **मरुत्वन्तम्** मरुद्गणयुक्तं **सख्याय** अस्माकं सख्युः कर्मणे **हवामहे** आह्वयामः । सर्वे गताः ।।

## ऋक्संहिता पदपाठसहिता

**यो व्यंसं जाहृषाणेनं मन्युना यः शम्बरं यो अहन् पिप्रुमव्रतम् ।**
**इन्द्रो यः शुष्णमशुषं न्यावृणङ् मरुत्वन्तं सख्याय हवामहे ।। २ ।।**

**यः । विऽअंसम् । जाहृषाणेन । मन्युना । यः । शम्बरम् । यः । अहन् । पिप्रुम् । अव्रतम् । इन्द्रः । यः । शुष्णम् । अशुषम् । नि । अवृणक् । मरुत्वन्तम् । सख्याय । हवामहे ।। २ ।।**

**स्कन्द– यो व्यंसम्** व्यंसनामानमसुरं **जाहृषाणेन** अत्यर्थं हृष्यता **मन्युना** मन्युनाम्ना प्रजापतिपुत्रेण सह । अथवा 'मन्युः' (निघ.२,१३) इति क्रोधनाम । अत्यर्थं हृष्यता क्रोधेन । प्रविकसता क्रोधेनेत्यर्थः । **यः** च **शम्बरम्** शम्बरनामानमसुरम् । **यः** च **अहन् पिप्रुम्** पिप्रुनामानमसुरम् **अव्रतम्** अकर्माणम् । भयान्निश्चेष्टमित्यर्थः । **इन्द्रः यः** यश्चेन्द्रः **शुष्णम्** शुष्णनामानमसुरम् **अशुषम्** अशोष्यम् । अन्येन केनचित् हन्तुमशक्यमित्यर्थः । **नि अवृणक्** 'वृणक्ति' (निघ.२,९१) इति वधकर्मा । निहतवान् । यच्छन्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तम् **मरुत्वन्तम्** ।। २ ।।

**वेङ्कटमाधव– यः व्यंसम्** असुरं विकसता क्रोधेन **अहन्, यः शम्बरम् यः** वा **पिप्रुम्** अयजमानम् । **इन्द्रः यः शुष्णम्** अन्यैः अशोष्यम् निहतवान् इति ।। २ ।।

**मुद्गल– यः** इन्द्रः **जहृषाणेन** प्रवृद्धेन **मन्युना** क्रोधेन **व्यंसम्** विगतभुजं वृत्रम् **अहन्** अवधीत् । अपि च **यः** इन्द्रः **शब्दरम्** एतत्संज्ञमसुरं चावधीत् । तथा **अव्रतम्** व्रतस्य यागादेः कर्मणो विरोधिनम् **पिप्रुम्** एतत्संज्ञं चासुरम् **यः** इन्द्रः अवधीत् । किञ्च **यः** इन्द्रः **अशुषम्** शोषकरहितम् **शुष्णम्** सर्वस्य जगतः शोषकम् एतत्संज्ञमसुरम् **नि अवृणक्** न्यवर्जयत् । समूलं हतवानित्यर्थः । तम् **मरुत्वन्ताम्** इन्द्रम् **सख्याय** आह्वयामहे ।। २ ।।

**सायण– यः** इन्द्रः **जहृषाणेन** प्रवृद्धेन **मन्युना** क्रोधेन **व्यंसं** विगतभुजं वृत्रम् **अहन्** अवधीत् । अपि च **यः** इन्द्रः **शम्बरम्** एतत्संज्ञमसुरं चावधीत् । तथा **अव्रतं** व्रतस्य यागादेः कर्मणो विरोधिनं **पिप्रुम्** एतत्संज्ञमसुरं च **यः** इन्द्रोऽवधीत् । किञ्च **यः इन्द्रः अशुषं** शोषकरहितं **शुष्णं** सर्वस्य जगतः शोपकमेतत्संज्ञमसुरं **नि अवृणक्** न्यवर्जयत् । समूलं हतवानित्यर्थः । तं **मरुत्वन्तम्** इन्द्रं **सख्याय** आह्वयामहे ।

व्यंसम् । विगतः अंसो यस्मात् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणः 'उदात्त-स्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । जहृषाणेन । 'हृष तुष्टौ' । अत्र वृद्ध्यर्थः ।

'छन्दसि लिट्, 'लिटः कानज्वा' इति तस्य कानजादेशः । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् । चित्त्वादन्तोदात्तत्वम् । अशुषम् । 'शुष शोषणे' । इगुपधलक्षणः कः । शुषाः शोषका न सन्त्यस्येति अशुषः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । अवृणक् । 'वृजी वर्जने' । रौधादिकः ।। २ ।।

**सिद्धाञ्जनम्– यः** इन्द्रः **जहृषाणेन** प्रवृद्धेन **मन्युना** कोपेन **व्यंसम्** (१.३२) विगतभुजं वृत्रम् **अहन्** अवधीत् । **यः शम्बरम्** एतन्नामकमसुरं, तथा **अव्रतम्** व्रतं कर्म, तद्रहितं **पिप्रुम्** एतन्नामकं असुरं च **यः** अहन् । **यः इन्द्रः अशुषम्** शोषकरहितं **शुष्णम्** सर्वस्य शोषकं असुरं **न्यवृणक्** न्यवर्जयत् निर्मूलं कृतवान्, तं मरुत्वन्तमित्यादि पूर्ववत् । अत्र शम्बरासुरादीनां गूढार्थोऽवधेयः, शुष्णः (१.११.७) पिप्रुः (१.५१.५) शम्बरः (१.५१.६) ।

जहृषाणेन–हृष तुष्टौ, अत्र वृद्ध्यर्थ इति सायणः, हर्ष उद्रेके, उपचर्यते, तर्हि उद्रिक्तेन मन्युना इति सङ्गच्छते । अवृणक्–वृजी वर्जने, रुधादिः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**यस्य॒ द्यावा॑पृथि॒वी पौंस्यं॑ म॒हद् यस्य॑ व्र॒ते वरु॑णो॒ यस्य॒ सूर्यः॑ ।**
**यस्येन्द्र॑स्य॒ सिन्ध॑वः॒ सश्च॑ति व्र॒तं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ।। ३ ।।**
**यस्य॑ । द्यावा॑पृथि॒वी इति॑ । पौंस्य॑म् । म॒हत् । यस्य॑ । व्र॒ते । वरु॑णः । यस्य॑ । सूर्यः॑ ।**
**यस्य॑ । इन्द्र॑स्य । सिन्ध॑वः । सश्च॑ति । व्र॒तम् । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ।। ३ ।।**

**स्कन्द– यस्य** इन्द्रस्य **द्यावापृथिवी** दिवं पृथिवीं च प्रति **पौंस्यम्** सेनालक्षणं बलम् । किम् । साकाङ्क्षत्वात् **सश्चति** इत्येतत् तृतीयपादस्थमाख्यातं सर्वत्रानुषक्तव्यम् । सश्चतीत्ययं गच्छतिकर्मा (निघ.२,१४) । अप्रतिहतं गच्छतीत्यर्थः । **यस्य** च **व्रते** वृष्टिलक्षणे कर्मणि सति **वरुणः** सश्चति । किं प्रति । प्रकृतत्वात् द्यावापृथिव्यावेव प्रति यज्ञान् वा प्रति । वृष्टौ हि सत्यां यज्ञाः प्रवर्तन्ते । तांश्च प्रति देवता गच्छन्ति । **यस्य** च व्रते **सूर्यः** सश्चति यज्ञान् प्रति उदयास्तमयदेशौ वा प्रति । **यस्य** च **इन्द्रस्य सिन्धवः** सश्चति । व्यत्ययेन चेदमेकवचनम् । उदकेन पूर्णाः समुद्रं प्रति गच्छन्ति । **व्रतम्** सप्तम्यर्थे प्रथमैषा । व्रते वृष्टिलक्षणे कर्मणि सतीत्यर्थः । तम् **मरुत्वन्तम्** ।। ३ ।।

**यः । विऽअंसम् । जाहृषाणेन । मन्युना । यः । शम्बरम् । यः । अहन् । पिप्रुम् । अव्रतम् । इन्द्रः । यः । शुष्णम् । अशुषम् । नि । अवृणक् । मरुत्वन्तम् । सख्याय । हवामहे ।। २ ।।**

**स्कन्द– यो व्यंसम्** व्यंसनामानमसुरं **जाहृषाणेन** अत्यर्थं हृष्यता **मन्युना** मन्युनाम्ना प्रजापतिपुत्रेण सह । अथवा 'मन्युः' (निघ.२,१३) इति क्रोधनाम । अत्यर्थं हृष्यता क्रोधेन । प्रविकसता क्रोधेनेत्यर्थः । **यः** च **शम्बरम्** शम्बरनामानमसुरम् । **यः** च **अहन् पिप्रुम्** पिप्रुनामानमसुरम् **अव्रतम्** अकर्माणम् । भयान्निश्चेष्टमित्यर्थः । **इन्द्रः यः** यश्चेन्द्रः **शुष्णम्** शुष्णनामानमसुरम् **अशुषम्** अशोष्यम् । अन्येन केनचित् हन्तुमशक्यमित्यर्थः । **नि अवृणक्** 'वृणक्ति' (निघ.२,९१) इति वधकर्मा । निहतवान् । यच्छन्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तम् **मरुत्वन्तम्** ।। २ ।।

**वेङ्कटमाधव– यः व्यंसम्** असुरं विकसता क्रोधेन **अहन्, यः शम्बरम् यः** वा **पिप्रुम्** अयजमानम् । **इन्द्रः यः शुष्णम्** अन्यैः अशोष्यम् निहतवान् इति ।। २ ।।

**मुद्गल– यः** इन्द्रः **जहृषाणेन** प्रवृद्धेन **मन्युना** क्रोधेन **व्यंसम्** विगतभुजं वृत्रम् **अहन्** अवधीत् । अपि च **यः** इन्द्रः **शब्दरम्** एतत्संज्ञमसुरं चावधीत् । तथा **अव्रतम्** व्रतस्य यागादेः कर्मणो विरोधिनम् **पिप्रुम्** एतत्संज्ञं चासुरम् **यः** इन्द्रः अवधीत् । किञ्च **यः** इन्द्रः **अशुषम्** शोषकरहितम् **शुष्णम्** सर्वस्य जगतः शोषकम् एतत्संज्ञमसुरम् **नि अवृणक्** न्यवर्जयत् । समूलं हतवानित्यर्थः । तम् **मरुत्वन्ताम्** इन्द्रम् **सख्याय** आह्वयामहे ।। २ ।।

**सायण– यः** इन्द्रः **जहृषाणेन** प्रवृद्धेन **मन्युना** क्रोधेन **व्यंसं** विगतभुजं वृत्रम् **अहन्** अवधीत् । अपि च **यः** इन्द्रः **शम्बरम्** एतत्संज्ञमसुरं चावधीत् । तथा **अव्रतं** व्रतस्य यागादेः कर्मणो विरोधिनं **पिप्रुम्** एतत्संज्ञमसुरं च **यः** इन्द्रोऽवधीत् । किञ्च **यः इन्द्रः अशुषं** शोषकरहितं **शुष्णं** सर्वस्य जगतः शोपकमेतत्संज्ञमसुरं **नि अवृणक्** न्यवर्जयत् । समूलं हतवानित्यर्थः । तं **मरुत्वन्तम्** इन्द्रं **सख्याय** आह्वयामहे ।

व्यंसम् । विगतः अंसो यस्मात् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणः 'उदात्त-स्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । जहृषाणेन । 'हृष तुष्टौ' । अत्र वृद्ध्यर्थः ।

'छन्दसि लिट्', 'लिटः कानज्वा' इति तस्य कानजादेशः । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् । चित्त्वादन्तोदात्तत्वम् । अशुषम् । 'शुष शोषणे' । इगुपधलक्षणः कः । शुषाः शोषका न सन्त्यस्येति अशुषः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । अवृणक् । 'वृजी वर्जने' । रौधादिकः ।। २ ।।

**सिद्धाञ्जनम्–** **यः** इन्द्रः **जहृषाणेन** प्रवृद्धेन **मन्युना** कोपेन **व्यंसम्** (१.३२) विगतभुजं वृत्रम् **अहन्** अवधीत् । **यः** **शम्बरम्** एतन्नामकमसुरं, तथा **अव्रतम्** व्रतं कर्म, तद्रहितं **पिप्रुम्** एतन्नामकं असुरं च **यः** अहन् । **यः** **इन्द्रः** **अशुषम्** शोषकरहितं **शुष्णम्** सर्वस्य शोषकं असुरं **न्यवृणक्** न्यवर्जयत् निर्मूलं कृतवान्, तं मरुत्वन्तमित्यादि पूर्ववत् । अत्र शम्बरासुरादीनां गूढार्थोऽवधेयः, शुष्णः (१.११.७) पिप्रुः (१.५१.५) शम्बरः (१.५१.६) ।

जहृषाणेन–हृष तुष्टौ, अत्र वृद्ध्यर्थ इति सायणः, हर्ष उद्रेके, उपचर्यते, तर्हि उद्रिक्तेन मन्युना इति सङ्गच्छते । अवृणक्–वृजी वर्जने, रुधादिः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**यस्य॒ द्यावा॑पृथि॒वी पौंस्यं॑ म॒हद् यस्य॑ व्र॒ते वरु॑णो॒ यस्य॒ सूर्यः॑ ।**
**यस्येन्द्र॑स्य॒ सिन्ध॑वः॒ सश्च॑ति व्र॒तं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ।। ३ ।।**
यस्य॑ । द्यावा॑पृथि॒वी इति॑ । पौंस्य॑म् । म॒हत् । यस्य॑ । व्र॒ते । वरु॑णः । यस्य॑ । सूर्यः॑ ।
यस्य॑ । इन्द्र॑स्य । सिन्ध॑वः । सश्च॑ति । व्र॒तम् । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ।। ३ ।।

**स्कन्द–** **यस्य** इन्द्रस्य **द्यावापृथिवी** दिवं पृथिवीं च प्रति **पौंस्यम्** सेनालक्षणं बलम् । किम् । साकाङ्क्षत्वात् **सश्चति** इत्येतत् तृतीयपादस्थमाख्यातं सर्वत्रानुषक्तव्यम् । सश्चतीत्ययं गच्छतिकर्मा (निघ.२,१४) । अप्रतिहतं गच्छतीत्यर्थः । **यस्य** च **व्रते** वृष्टिलक्षणे कर्मणि सति **वरुणः** सश्चति । किं प्रति । प्रकृतत्वात् द्यावापृथिव्यावेव प्रति यज्ञान् वा प्रति । वृष्टौ हि सत्यां यज्ञाः प्रवर्तन्ते । तांश्च प्रति देवता गच्छन्ति । **यस्य** च व्रते **सूर्यः** सश्चति यज्ञान् प्रति उदयास्तमयदेशौ वा प्रति । **यस्य** च **इन्द्रस्य** **सिन्धवः** सश्चति । व्यत्ययेन चेदमेकवचनम् । उदकेन पूर्णाः समुद्रं प्रति गच्छन्ति । **व्रतम्** सप्तम्यर्थे प्रथमैषा । व्रते वृष्टिलक्षणे कर्मणि सतीत्यर्थः । तम् **मरुत्वन्तम्** ।। ३ ।।

**वेङ्कटमाधव– यस्य** द्यावापृथिव्यौ **महत्** वीर्यम् अनुवर्तेते । **यस्य व्रते सूर्यः वरुणः** च व्यापृतौ भवतः । **यस्य इन्द्रस्य** नद्योऽपि कर्म **सश्चति** अभिगच्छन्ति । छान्दसो नकारलोपः ।। ३ ।।

**मुद्गल– यस्य** इन्द्रस्य **महत्** विपुलम् **पौंस्यम्** बलम् **द्यावापृथिवी** द्यावापृथिव्यौ अनुवर्तेते । तथा **यस्य** इन्द्रस्य **व्रते** नियमरूपे कर्मणि **वरुणः** वर्तते । स वरुणोऽपि इन्द्रस्य नियमनं नातिक्रामतीत्यर्थः । अपि च **सूर्यः** अपि **यस्य** इन्द्रस्य व्रते वर्तते । तथा **यस्य इन्द्रस्य व्रतम्** कर्म **सिन्धवः सश्चति** । नद्य इन्द्रेणानुशिष्टा प्रवहन्तीत्यर्थः । तम् **मरुत्वन्तम्** इन्द्रम् **सख्याय** आह्वयामहे ।। ३ ।।

**सायण– यस्य** इन्द्रस्य **महत्** विपुलं **पौंस्यं** बलं द्यावापृथिवी द्यावापृथिव्यावनुवर्तेते । **यस्य** चेन्द्रस्य **व्रते** नियमरूपे कर्मणि **वरुणः** वर्तते । वरुणोऽपीन्द्रस्य नियमनं नातिक्राम-तीत्यर्थः । अपि च **सूर्यः** अपि **यस्य** इन्द्रस्य व्रते वर्तते । तथा **यस्य इन्द्रस्य व्रतं** कर्म **सिन्धवः** नद्यः **सश्चति** । वचनव्यत्ययः । गच्छन्ति । सश्चतिर्गतिकर्मा । इन्द्रेणानुशिष्टाः प्रवहन्तीत्यर्थः । तं **मरुत्वन्तम्** इन्द्रं **सख्याय** आह्वयामहे ।

द्यावापृथिवी । द्यौश्च पृथिवी च द्यावापृथिव्यौ । 'दिवो द्यावा' इति द्यावादेशः । स चाद्यु-दात्तो निपातितः । पृथिवीशब्दो ङीष्प्रत्ययान्तः अन्तोदात्तः । 'देवताद्वन्द्वे च' इत्युभयपद-प्रकृतिस्वरत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ।। ३ ।।

**सिद्धाञ्जनम्– यस्य** इन्द्रस्य **महत्** विपुलं **पौंस्यम्** बलं **द्यावापृथिवी** द्यावापृथिव्यौ 'अनुवर्तेते' इति सायणीयोऽध्याहारः । नायमावश्यकः, इन्द्रस्य महत् पौंस्यं द्यौश्च पृथिवी च भवति, तदधीनत्वात्तयोः । **यस्य व्रते** नियमात्मके धर्मे कर्मणि वा **वरुणः** वर्तते । **यस्य** व्रते **सूर्यः** वर्तते । **यस्य इन्द्रस्य, व्रतम्** नियतं कर्म धर्मं वा **सिन्धवः** स्यन्दमाना आपः सश्चति, वचनव्यत्ययः, सश्चन्ति गच्छन्ति सेवन्त इति यावत् । तं मरुत्वन्तमित्यादि पूर्ववत् ।।

## ऋक्संहिता पदपाठसहिता

**यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः ।**
**वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ।। ४ ।।**

**यः । अश्वानाम् । यः । गवाम् । गोऽपतिः । वशी । यः । आरितः । कर्मणिऽकर्मणि । स्थिरः । वीळोः । चित् । इन्द्रः । यः । असुन्वतः । वधः । मरुत्वन्तम् । सख्याय । हवामहे ।। ४ ।।**

**स्कन्द– यः च अश्वानाम् गवाम् च वशी** ईशिता । कीदृशः । **गोपतिः** गोशब्दोऽत्राब्वचनः सोमवचनो वा स्तोतृवचनो वा । पतिशब्दोऽप्यधिपतिवचनः पालयितृवचनो वा । अपां वा सोमस्य वा स्तुतीनां वा स्तोतॄणां वा अधिपतिः पालयिता वेत्यर्थः । **यः च आरितः** रि गतावित्यस्याङ्पूर्वस्येदं रूपम् । आगत इत्यर्थः । पदकारस्त्ववग्रहाकरणात् अर्तेर्यङ्लुगन्तस्येदं रूपं मन्यते । तस्य हि यङ्लुकि 'उरत्' (पा.७,४,६६) इत्यभ्यासऋकारस्यात्त्वम् । 'रुग्रिकौ च लुकि' (पा.७,४,९१) इति । निष्ठायामिट् । छान्दसत्वादृकारस्य यणादेशः । 'रो रि' (पा.८,३,१४) इत्यभ्यासस्य रेफस्य लोपः । 'ढ्रलोपे पूर्वस्य' (पा.६,३,१११) इति दीर्घत्वम् । आरितः । ण्यन्तस्य वा पुगभावः छान्दसत्वात् । अत्यर्थं पुनःपुनर्वा आगतः गमितो वा यजमानैरित्यर्थः । क्व । उच्यते । कर्मणिकर्मणि यज्ञाख्ये । सर्वयज्ञेष्वित्यर्थः । आरितश्च सन् स्थिरः आ यज्ञपरिसमाप्तेरविचाली । **वीळोः चित्** संस्तब्धस्यापि अत्यन्तदृढस्यापि असुरादेः **इन्द्रो यः असुन्वतः** सोमाभिषवमकुर्वतः वधः हन्ता । तम् **मरुत्वन्तम्** ।। ४ ।।

**वेङ्कटमाधव– यः अश्वानाम् गवाम्** च पतिः स्वतन्त्रः । यः वा सञ्जातारायुधः युद्धेयुद्धे स्थिरः । **यः** च **इन्द्रः** दृढस्यापि **असुन्वतः** हन्ता ।। ४ ।।

**मुद्गल– यः** इन्द्रः **अश्वानाम्** पतिरधिपतिः । तथा **यः** इन्द्रः **गवाम् गोपतिः** सर्वासां गवामधिपतिर्भवति । **वशी** अपराधीनः । स्वतन्त्र इत्यर्थः । अपि च **यः** इन्द्रः **कर्मणिकर्मणि** सर्वेषु कर्मसु **स्थिरः** नैश्चल्येनावतिष्ठमानः **आरितः** स्तुतिभिः प्रत्यृतः प्राप्तो भवति । **यः** च **इन्द्रः असुन्वतः** सुन्वतां यागानुष्ठातॄणां विरोधिनः **वीळोः चित्** दृढस्यापि शत्रोः **वधः** हन्ता । तम् **मरुत्वन्तम्** इन्द्रम् **सख्याय** आह्वयामहे ।। ४ ।।

**सायण– यः** इन्द्रः **अश्वानां** पतिरधिपतिः । तथा **यः** इन्द्रः **गोपतिः** । न केवलमेकस्या गोः किन्तु सर्वासामित्याह **गवाम्** इति । सर्वासां गवाम् अधिपतिर्भवति । **वशी** अपराधीनः । स्वतन्त्र इत्यर्थः । अपि च **यः** इन्द्रः **कर्मणिकर्मणि** सर्वेषु कर्मसु **स्थिरः** नैश्चल्येनावतिष्ठमानः

**आरितः** स्तुतिभिः प्रत्यृतः प्राप्तो भवति । 'आरितः प्रत्यृतः स्तोमान्' (निरु.५.१५) इति निरुक्तम् । **यः** च **इन्द्रः असुन्वतः** सुन्वतां यागानुष्ठातॄणां विरोधिनः **वीळोश्चित्** दृढस्यापि शत्रोः **वधः** हन्ता तं **मरुत्वन्तम्** इन्द्रं **सख्याय** आह्वयामहे ।

गवाम् । 'न गोश्वन्साववर्ण' इति विभक्त्युदात्तत्वस्य प्रतिषेधः । गोपतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । आरितः । 'ऋ गतौ' । अस्मात् ण्यन्तात् निष्ठा । आगमानुशासनस्यानित्यत्वात् पुगभावः । यद्वा । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम्' (पा.म.३.१.२२.३) इति विहितस्य यङः 'यङोऽचि च' इत्यत्र चशब्देन बहुलग्रहणानुकर्षणादनैमित्तिके लुकि प्रत्ययलक्षणेन 'सन्यङोः' इति ऋ इत्येतस्य द्विर्वचने उरदत्वहलादिशेषयोः सतोः 'रुग्रिकौ च लुकि' इति रुक् । ततो निष्ठायां छान्दस इडागमः । ऋकारस्य यणादेशः । 'रो रि' इति अभ्यासरेफलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घत्वम् । वधः । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् 'हनश्च वधः' इति कर्तरि अप् वधादेशश्च । स चादन्तः । अतो लोपे उदात्तनिवृत्तिस्वरेण प्रत्ययस्य उदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्– यः** इन्द्रः **अश्वानाम्** मूर्तानां प्राणबलानां पतिः, तथा **यः** इन्द्रः **गवाम्** सर्वेषां चिद्रश्मीनां पतिः, **गोपतिः** विशिष्टायाः सर्वोत्कृष्टायाः गोः चिन्मरीचेः पतिः अधिपतिः भवति । **वशी** स्वतन्त्रः **यः** इन्द्रः **कर्मणिकर्मणि** सर्वत्र कर्मणि **स्थिरः** नैश्चल्येनावस्थितः, **आरितः** 'स्तोमान् प्रत्यृतः' इति यास्कः, स्तुतिभिः प्रापितः । **यः इन्द्रः असुन्वतः** अयज्वनः यजनविरोधिनः **वीळोश्चित्** दृढस्य बलिनोऽपि **वधः** हन्ता, तं मरुत्वन्तमित्यादि पूर्ववत् ।

आरितः–ॠ गतौ, अस्मात् ण्यन्तान्निष्ठा । वधः–कृत्यल्युटो बहुलमिति वचनात् हनश्च वध इति कर्तर्यप् वधादेशश्च ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**यो विश्व॑स्य॒ जग॑तः प्राण॒तस्पति॒र्यो ब्र॒ह्मणे॑ प्रथ॒मो गा अवि॑न्दत् ।**
**इन्द्रो॒ यो दस्यूँ॒रध॑राँ अ॒वाति॑रन् म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ५ ॥**

यः । विश्व॑स्य । जग॑तः । प्रा॒ण॒तः । पति॑ः । यः । ब्र॒ह्मणे॑ । प्र॒थ॒मः । गाः । अवि॑न्दत् । इन्द्र॑ः । यः । दस्यू॑न् । अध॑रान् । अ॒व॒ऽअति॑रत् । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥

**स्कन्द–** **यो विश्वस्य** सर्वस्य **जगतः** जङ्गमस्य **प्राणतः** प्राणिवर्गस्य **पतिः** स्वामी पालयिता वा । **यः** च **ब्रह्मणे** ब्रह्मशब्दोऽत्र ब्राह्मणशब्दपर्यायः तत्प्रभृतिवर्णोपलक्षणार्थश्चेह द्रष्टव्यः । तादर्थ्ये चैषा चतुर्थी । ब्राह्मणादीनां चतुर्णामपि वर्णानामर्थाय । मरुदादिभ्यः **प्रथमः** पणिभिरसुरैरपहृताः सतीः **गा अविन्दत्** लब्धवान् । **यः** च **इन्द्रः दस्यून्** अनार्यान् **अधरान्** अधोवर्तिनोऽपि । न्यूनानित्यर्थः । **अवातिरत्** अदतिरतिर्वधकर्मा (निघ.२,१९) । हतवान् । तम् **मरुत्वन्तम्** ॥ ५ ॥

**वेङ्कटमाधव–** **यः विश्वस्य** गच्छतः **प्राणतः** च **पतिः** । **यः** वा अङ्गिरोभ्यः पूर्वम् एव पशून् **अविन्दत्** पणिभिः अपहृतान् । **इन्द्रः यः दस्यून् अधरान्** कृत्वा अवाहन् ॥

**मुद्गल–** **यः इन्द्रः विश्वस्य** जगतः गच्छतः **प्राणतः** प्रश्वसतः प्राणिजातस्य **पतिः** स्वामी । **यः** च **ब्रह्मणे** ब्राह्मणजातिभ्योऽङ्गिरोभ्यः **प्रथमः** अन्येभ्यो देवेभ्यः पूर्वभावी सन् पणिभिरपहृताः **गाः अविन्दत्** अलभत । अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैः युद्ध्वा गाः स्वयमलभतेत्यर्थः । अपि च **यः इन्द्रः दस्यून्** उपक्षपयितृन् **अधरान्** निकृष्टान् कृत्वा **अवातिरत्** अवधीत् । तम् **मरुत्वन्तम्** इन्द्रम् **सख्याय** आह्वयामहे ॥ ५ ॥

**सायण–** **यः** इन्द्रः **विश्वस्य जगतः** गच्छतः **प्राणतः** प्रश्वसतः प्राणिजातस्य **पतिः** स्वामी **यः** च **ब्रह्मणे** ब्राह्मणजातिभ्योऽङ्गिरोभ्यः **प्रथमः** अन्येभ्यो देवेभ्यः पूर्वभावी सन् पणिभिरपहृताः **गाः अविन्दत्** अलभत । अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैर्युद्ध्वा गाः स्वयमलभतेत्यर्थः । अपि च **यः इन्द्रः दस्यून्** उपक्षपयितृनसुरान् **अधरान्** निकृष्टान् कृत्वा **अवातिरत्** अवधीत् । अवतिरतिर्वधकर्मा । तं **मरत्वन्तरम्** इन्द्रं **सख्याय** आह्वयामहे ।

जगतः । 'गम्लृ सृप्लृ गतौ' । 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ.सू.२.२४१) इति अतिप्रत्ययान्तो निपातितो जगच्छब्द आद्युदात्तः । प्राणतः । 'श्वस प्राणने, अन च' । अस्मात् लटः शतृ । अदादित्वात् शपो लुक् । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्–** **यः** इन्द्रः **विश्वस्य** सर्वस्य **जगतः** गच्छतः **प्राणतः** प्रश्वसतः प्राणिजातस्य **पतिः** अधिपतिः । **यः** इन्द्रः **ब्रह्मणे** ब्रह्मात्मने अङ्गिरःप्रभृतये ऋषये **प्रथमः** अन्येभ्यो देवेभ्यः

पूर्वभावी सन् **गाः** पणिभिरपहृत्य बलादिभिर्गोपिताः गाः चिद्रश्मीन् गुहासु गूढं निक्षिप्तान्, **अविन्दत्** स्वयमलभत, अङ्गिरस्तत्त्वविचारे समुपन्यस्तमिदम् । **यः इन्द्रः दस्यून्** उपक्षपयितृनसुरान् **अधरान्** निकृष्टान् कृत्वा **अवातिरत्** अवधीत्, तं मरुत्वन्तमित्यादि समानम् ।

जगतः–गच्छतेः, अतिप्रत्ययान्तो निपात्यते । प्राणतः–श्वस प्राणने अन च, अस्मात् लटः शतृ ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

**यः शूरे॑भि॒र्हव्यो॒ यश्च॑ भी॒रुभि॒र्यो धाव॑द्भि॒र्हूयते॒ यश्च॑ जि॒ग्युभिः॑ ।**
**इन्द्रं॒ यं विश्वा॒ भुव॑ना॒भि सं॒द॒धुर्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥ ६ ॥**
**यः । शूरे॑भिः । हव्यः॑ । यः । च॒ । भी॒रुऽभिः॑ । यः । धाव॑त्ऽभिः । हू॒यते॑ । यः । च॒ । जि॒ग्युऽभिः॑ । इन्द्र॑म् । यम् । विश्वा॑ । भुव॑ना । अ॒भि । स॒म्ऽद॒धुः । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वाम॒हे ॥ ६ ॥**

**स्कन्द– यः** शूरैः **हव्यः** जयार्थमाह्वातव्यः । **यश्च भीरुभिः** आत्मरक्षार्थमाह्वातव्यः । **यः च धावद्भिः हूयते** । **यः च जिग्युभिः** शत्रून् जितवद्भिः जयार्थमाहूयते । **यम् च इन्द्रम् विश्वा** भुवना सर्वाणि भूतजातानि **अभि सन्दधुः** तस्यतस्याभिलषितस्य दानार्थं ध्यायन्ति । तम् **मरुत्वन्तम्** ॥ ६ ॥

**वेङ्कटमाधव– यः** शूरैः **भीरुभिः** च ह्वातव्यः । **यः** पलायमानैः **हूयते**, **यः** च जयशीलैः । **इन्द्रम् यम्** सर्वाण्येव भूतानि आत्मकार्यार्थम् **अभि सन्दधुः** ॥ ६ ॥

**मुद्गल– यः** इन्द्रः **शूरेभिः** शौर्योपेतैः पुरुषैः **हव्यः** योद्धुमाह्वातव्यः । **यः च भीरुभिः** भयशीलैः कातरैः पुरुषैः सहायार्थमाह्वातव्यः । अपि च **यः** इन्द्रः **धावद्भिः** पराजयेन पलायमानैः **हूयते** रक्षार्थमाहूयते । **यः च जिग्युभिः** प्राप्तजयैराहूयते । **यम् च इन्द्रम् विश्वा भुवना** सर्वाणि भूतजातानि स्वेषुस्वेषु कार्येषु **अभि सन्दधुः** आभिमुख्येन स्थापयन्ति । तम् **मरुत्वन्तम्** इन्द्रम् **सख्याय** आह्वयामहे ॥ ६ ॥

**सायण– यः** इन्द्रः **शूरेभिः** शौर्योपेतैः पुरुषैः **हव्यः** योद्धुमाह्वातव्यः । **यश्च भीरुभिः** भयशीलैः कातरैः पुरुषैः सहायार्थमाह्वातव्यः । अपि च **यः** इन्द्रः **धावद्भिः** पराजयेन

पलायमानैः **हूयते** रक्षार्थमाहूयते । **यश्च जिग्युभिः** प्राप्तजयैराहूयते । यं च **इन्द्रं विश्वा भुवना** सर्वाणि भूतजातानि स्वेषु स्वेषु कार्येषु **अभि सन्दधुः** आभिमुख्येन स्थापयन्ति । तं **मरुत्वन्तम्** इन्द्रं **सख्याय** आह्वयामहे ।

शूरेभिः । 'बहुलं छन्दसि' इति भिस ऐसभावः । हव्यः । ह्वयतेः 'अचो यत्' इति यत् । 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । गुणे 'धातोस्तन्निमित्तस्यैव' इति अवादेशः । भीरुभिः । 'भियः क्रुक्लुकनौ' (पा.सू.३.२.१७४) इति क्रुप्रत्ययः । धावद्भिः । 'सृ गतौ' । सर्तेः वेगितायां शपि 'पाघ्रा' इत्यादिना धावादेशः । शपः पित्त्वात् अनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । जिग्युभिः । 'जि जये' । लिटः क्वसुः । द्विर्वचने 'सन् लिटोर्जेः' इति अभ्यासादुत्तरस्य जकारस्य कुत्वम् । भिसि अयस्मयादित्वेन भत्वात् 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । चान्दसोऽन्त्यलोपः ॥ ६ ॥

**सिद्धाञ्जनम्– यः** इन्द्रः **शूरेभिः** शौर्ययुक्तैः यजमानैः **हव्यः** आह्वातव्यः । **यश्च भीरुभिः** कातरैः सहायार्थं आह्वातव्यः । **यः धावद्भिः** पलायनपरैः **हूयते** आहूयते रक्षार्थं, **यश्च जिग्युभिः** प्राप्तजयैः पुरुषैराहूयते, विविधमवस्थितैः, पुरुषैः तत्तदुपकाराय सेवनीयो विश्वसनीयश्च इन्द्र इति विवक्षा । **यम् इन्द्रम् विश्वा भुवना** सर्वाणि भूतजातानि अभिसन्दधुः आभिमुख्येन स्तापयन्ति, तं मरुत्वन्तमित्यादि गतम् ।

हव्यः–ह्वयतेः, अचो यत्, बहुलं छन्दसीति सम्प्रसारणम्, गुणः, धातोस्तन्निमित्तस्येति अवादेशः । जिग्युभिः–जयतेः, लिटः क्वसुः, वसोः सम्प्रसारणम् ॥ ६ ॥

॥ इति प्रथमाष्टके सप्तमाष्टके सप्तमाध्याये द्वादशो वर्गः ॥

## ॥ अथ त्रयोदशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

**रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः ।**
**इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ॥ ७ ॥**
रुद्राणाम् । एति । प्रऽदिशा । विऽचक्षणः । रुद्रेभिः । योषा । तनुते । पृथु । ज्रयः ।
इन्द्रम् । मनीषा । अभि । अर्चति । श्रुतम् । मरुत्वन्तम् । सख्याय । हवामहे ॥ ७ ॥

**स्कन्द– रुद्राणाम्** 'यामन् रुद्रस्य सूनवः सुदंससः' (ऋ.१,८५,१) इति प्रयोगदर्शनाद् रुद्रस्य पुत्रा मरुतः । तेऽत्र सोऽयमित्यभिसम्बन्धात् पितृशब्देन रुद्रशब्देन प्रत्याय्यन्ते । रुद्रपुत्राणां मरुताम् **प्रदिशा** प्र इत्येष आ इत्येतस्य स्थाने । आदेशेन, वचनेनेत्यर्थः । **एति** गच्छतीन्द्रः । अथवा 'रुद्रः' (निघ.३,१६) इति स्तोतृनाम । स्तोतॄणामादेशेन गच्छति । यत्र यत्र मरुतः स्तोतारो वा ब्रुवन्ति तत्र तत्रेन्द्रो गच्छति, नान्यत्रेत्यर्थः । कीदृशः । **विचक्षणः** पण्डितः विद्रष्टा वा सर्वस्य । किञ्च **रुद्रेभिः** रुद्रपुत्रैर्मरुद्भिः सहेन्द्रस्य **योषा** सोमाहुतिलक्षणा **तनुते** विस्तारयति । **पृथु** विस्तीर्णमपि सत् **ज्रयः** ज्रयतिर्गतिकर्मा (निघ.२,१४) । गमनं वेगम् । मरुद्भिः सह इन्द्रस्य यज्ञं प्रति गच्छतः पिपासिता सोमाहुतिः विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः । यदा रुद्र इति स्तोतृनाम तदा तृतीयानिर्देशात् प्रदास्यमानेति वाक्यशेषः । स्तोतृभिः ऋत्विग्भिः प्रदास्यमाना सोमाहुतिः यज्ञं प्रति गच्छत इन्द्रस्य विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः । किञ्च **इन्द्रम् मनीषा** स्तुतिः **अभि अर्चति** अभिष्टौति । **श्रुतम्** विख्यातम् । किञ्च **मरुत्वन्तम्** ।। ७ ।।

**वेङ्कटमाधव–** मरुतां गच्छति मार्गप्रदेशनेन विद्रष्टा । मरुद्भिः सम्मिश्रयिता विस्तीर्णं वेगं करोति । **इन्द्रम्** वाक् अभिष्टौति ।। ७ ।।

**मुद्गल– विचक्षणः** सूर्यात्मना प्रकाशमान इन्द्रः **रुद्राणाम्** रुद्रपुत्राणाम् अध्यात्मं प्राणरूपेण वर्तमानानां मरुताम् **प्रदिशा** प्रदेशनेन मनुष्येभ्यः प्रदानेन सह **एति** अन्तरिक्षे गच्छति । अपि च **रुद्रेभिः** अधिभूतं वर्तमानैः रुद्रपुत्रैर्मरुद्भिः **योषा** माध्यमिका वाक् **पृथु** विस्तीर्णम् **ज्रयः** वेगम् **तनुते** विस्तारयति । प्रसङ्गादत्र मरुतां स्तुतिः । तैर्मरुद्भिः सह वर्तमानम् **श्रुतम्** प्रख्यातं सूर्यात्मानम् **इन्द्रम् मनीषा** स्तुतिलक्षणा वाक् **अभि अर्चति** आभिमुख्येन स्तौति । तम् **मरुत्वन्तम् इन्द्रम्** वयम् **सख्याय** आह्वयामहे ।। ७ ।।

**सायण– विचक्षणः** सूर्यात्मना प्रकाशमान इन्द्रः **रुद्राणां** रुद्रपुत्राणाम् अध्यात्मं प्राणरूपेण वर्तमानानां मरुताम् । यद्वा । रोदयितॄणां प्राणानाम् । प्राणा हि शरीरात् निर्गताः सन्तो बन्धुजनान् रोदयन्ति । **प्रदिशा** प्रदेशनेन मनुष्येभ्यः प्रदानेन सह **एति** अन्तरिक्षे गच्छति । तथा चाम्नायते– 'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति' (तै.आ.१.१४.१) इति । अपि च **रुद्रेभिः** अधिभूतं वर्तमानैः रुद्रपुत्रैर्मरुद्भिः **योषा** माध्यमिका वाक् **पृथु** विस्तीर्णं

**ज्रयः** वेगं **तनुते** विस्तारयति । प्रसङ्गादत्र मरुतां स्तुतिः । तैर्मरुद्भिः सह वर्तमानं **श्रुतं** प्रख्यातं सूर्यात्मानम् **इन्द्रं मनीषा** स्तुतिलक्षणा वाक् **अभ्यर्चति** आभिमुख्येन स्तौति । तं **मरुत्वन्तम्** इन्द्रं **सख्याय** आह्वयामहे ।

प्रदिशा । 'दिश अतिसर्जने' । सम्पदादिलक्षणो भावे क्विप् । ज्रयः । 'जि ज्रि अभिभवे' । ज्रीयतेऽभिभूयतेऽनेनेति ज्रयो वेगः । करणे असुन् । मनीषा । ईषाअक्षादित्वात् प्रकृतिभावः ।।

**सिद्धाञ्जनम्– विचक्षणः** प्रकाशमानः सूर्य इव द्रष्टा सर्वस्य, इन्द्रः **रुद्राणाम्** रुद्राः मरुतः अन्तरिक्षस्थानाः प्राणदेवाः तेषां **प्रदिशा** प्रदेशेन प्रकृष्टेन विशालेन अन्तरिक्षमार्गेण **एति** गच्छति । केचन इन्द्रः सूर्यात्मना वर्ण्यत इत्याहुः, नेदमावश्यकम् । इन्द्रः तृतीयस्थानोऽपि, तं मरुतां क्षेत्रे अन्तरिक्षे प्राणलोके ऋषिः पश्यति । **रुद्रेभिः** मरुद्भिः प्राणदेवैः करणभूतैः **योषा** वाक्, इन्द्रस्याह्वात्री, **पृथु** विस्तीर्णं **ज्रयः** वेगं **तनुते** विस्तारयति, ततः **श्रुतम्** प्रख्यातं **इन्द्रम् मनीषा** स्तुतिलक्षणा वाक् **अभ्यर्चति** आभिमुख्येन स्तौति । प्रथमं मरुतां क्षेत्रे इन्द्रदर्शनं, ततः मरुत्साहाय्येन बलेन वाचो वेगविस्तारः, पश्चात् ऋषिः इन्द्रमभिमुकं स्तोति । अन्यत्समानम् ।

ज्रयः–जिज्रि अभिभवे, ज्रीयते अभिभूयतेऽनेनेति ज्रयो वेगः, करणे असुन् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**यद् वा मरुत्वः परमे सधस्थे यत् वावमे वृजने मादयासे ।**
**अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः ।। ८ ।।**

**यद् । वा । मरुत्वः । परमे । सधऽस्थे । यत् । वा । अवमे । वृजने । मादयासे ।**
**अतः । आ । याहि । अध्वरम् । नः । अच्छ । त्वाऽया । हविः । चकृम । सत्यऽराधः ।।**

**स्कन्द–** यत्-शब्दोऽत्र यदिशब्दस्यार्थे । यदि वा हे **मरुत्वः! परमे सधस्थे** सह तिष्ठन्ति यस्मिन् देवताः स सधस्थो यज्ञ इहाभिप्रेतः । विप्रकृष्टे यज्ञ इत्यर्थः । **यत् वा अवमे** अन्तिकनामैतत् (निघ २,१६) । सन्निकृष्टे यज्ञे । कीदृशे । **वृजने** 'वृजी वर्जने' । वर्जिते दोषैः । अविगुण इत्यर्थः । अथवा 'वृजनम्' (निघ.२,९) इति बलनाम । सामर्थ्याच्चान्तर्णीत-मत्वर्थम्, बलवति । सारवतीत्यर्थः । **मादयासे** मदतिरत्र सामर्थ्यात्तृप्त्यर्थः । तर्पयस्यात्मानम् । स्वार्थिको वाऽत्र णिच् । तृप्यसीत्यर्थः । **अतः आ याहि अध्वरम्** यज्ञम् **नः** अस्माकं

स्वभूतम् । **अच्छ** आप्तुम् । अनुभवितुमित्यर्थः । किं कारणम् । उच्यते । यस्मात् **त्वाया** त्वत्काम्यया । महत्या त्वद्विषयया श्रद्धयेत्यर्थः । **हविः** सवनीयपुरोडाशादिलक्षणम् **चकृम** कृतवन्तो वयं हे **सत्यराधः!** सत्यधन! ॥ ८ ॥

**वेङ्कटमाधव–** यदि वा **मरुत्वः! परमे** स्थाने दिवि, **यत्** वा अवमे **सधस्थे** कस्मिंश्चन युद्धे माद्यसि । **अतः आ याहि** अस्माकं यज्ञं प्रति । त्यत्कामनया **हविः चकृत** सत्यधन! ॥

**मुद्गल–** हे **मरुत्वः!** मरुद्भिर्युक्तेन्द्र! **परमे** उत्कृष्टे **सधस्थे** सहस्थाने गृहे **यत्** वा यदि वा **मादयासे** तृप्तो वर्तसे । **यत् वा** यदि वा **अवमे** अर्वाचीने **वृजने** गृहे **मादयासे** । **अतः** अस्मात् उभयविधात् स्थानात् **नः** अस्माकम् **अध्वरम्** यज्ञम् **अच्छ** आभिमुख्येन **आ याहि** आगच्छ । हे **सत्यराधः!** सत्यधन! **त्वाया** त्वत्कामनया वयम् **हविः चकृम** कृतवन्तः ॥

**सायण–** हे **मरुत्वः!** मरुद्भिर्युक्तेन्द्र, **परमे** उत्कृष्टे **सधस्थे** सहस्थाने गृहे **यद्वा** यदि वा **मादयासे** तृप्तो वर्तसे । **यद्वा** यदि वा **अवमे** अर्वाचीने **वृजने** । वृज्यते रिक्तीक्रियतेऽस्मिन् धनमिति वृजनं गृहम् । तस्मिन् मादयासे । **अतः** अस्मादुभयविधात् स्थानात् **नः** अस्माकं **अध्वरं** यज्ञम् **अच्छ** आभिमुख्येन **आ याहि** आगच्छ । हे **सत्यराधः!** सत्यधन, **त्वाया** त्वत्कामनया वयं **हविश्चकृम** कृतवन्तः ।

मरुत्वः । 'मतुवसो रुः' इति सम्बुद्धौ नकारस्य रुत्वम् । सधस्थे । 'सुपि स्थः' इति कप्रत्ययः । 'सध मादस्थयोश्छन्दसि' इति सहस्य सधादेशः । मादयासे । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी । लेटि आडागमः । त्वाया । त्वामात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'प्रत्योत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । व्यत्ययेन दकारस्य आत्वम् । 'अ प्रत्ययात्' इति अकारप्रत्ययः । 'सुपां सुलुक्' इति तृतीयाया लुक् ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **मरुत्वः!** मरुत्वन्निन्द्र, **परमे** उत्तमे दिव्ये **सधस्थे** सहस्थाने देवसदने **यद्वा** यदि वा **मादयासे** तृप्तो वर्तसे, **यद्वा** यदि वा **अवमे** अधस्तादिह पार्थिवे **वृजने** गृहे, मानवावासस्थाने 'मादयासे,' **अतः** अस्मादुभयविधात् स्थानात्, **नः** अस्माकं **अध्वरम्** दिव्ययात्रात्मकं यज्ञं **अच्छ** आभिमुख्येन **आ याहि** आगच्छ । हे **सत्यराधः!** सत्यसमृद्धियुक्त, **त्वाया** त्वत्कामनया वयं **हविश्चकृम** हव्यं कृतवन्तः ।

सधस्थे–छन्दसि सहस्य सधादेशः । मादयासे–मद तृप्तियोगे, लेट्याडागमः । त्वाया–त्वामात्मन इच्छति, सुप आत्मनः क्यच्, प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशः, व्यत्येन दकारस्यात्वं, सुपां सुलुगिति तृतीयाया लुक् ॥ ८ ॥

**नीतिमञ्जरी–** उक्तं कर्तव्यमित्याह–

**उक्तं चैव प्रकर्तव्यं हिंसायुक्तं भवेद्यदि ।**
**पश्वादिहिंसनं कुत्स ऋषिराह तमध्वरम् ॥ २९ ॥**

यदि हिंसायुक्तं वधयुक्तं भवेत्तर्हि यदुक्तं श्रुतिस्मृत्युक्तं तत्पुरुषेणावश्यमेव कर्तव्यम् । 'सोम एवैष प्रत्यक्षं यत्पशुरुदकपेयमिव ह स्याद्यदेष आलभ्येनेति' (कौ.ब्रा.१२।६) यदुक्तं तत्कर्तव्यमेवेति । यस्मिन्यज्ञे पश्वादीनां पशुपलाशाश्वत्थवरणकादीनां हिंसनं भवति तथापि कुत्स ऋषिस्तं हिंसायुक्तं यज्ञं– 'यद्वा मरुत्वः' इत्यस्याम् अध्वरं ध्वरतिर्हिंसा तद्रहितमाह–

तत्र ऋक्– (ऋ.१.१०१.८)

**यद्वा मरुत्वः परमे सधस्थे यद्वाऽवमे वृजने मादयासे ।**
**अत आयाह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः ॥**

कुत्सस्त्रिष्टुभा इन्द्रं तुष्टाव । उत्तमे छन्दोमे मरुत्वनीये विनियुक्तम् । अष्टाचत्वारिंशत्खण्डे गायत्साम (ऋ.१.१७३) प्रमन्दिन । (ऋ.१.१०१) इति सूत्रितम् (सां.श्रौ.सू.१०.११.६)

ऋचोऽयमर्थः । हे **मरुत्वः** । मतुवसोरिति (पा.८.३.१) सम्बुद्धौ नस्य रुत्वम् । मरुद्भिर्युक्तेन्द्र **परमे** उत्कृष्टे **सधस्थे** सहस्थाने गृहे 'सध मादस्थयोः' इति (पा.६.३.९६) सहस्य सधादेशः । यद्वा यदि वा **अवमे** अर्वाचीने नीचीने **वृजने** वृज्यते रिक्तीक्रियते धनमस्मिन्निति वृजनं गृहम् । तस्मिन्मादयासे तृप्तो वर्तसे । 'मद तृप्तौ' **अतो**ऽस्मादुभयविधात्स्थानात् **नो**ऽस्माकम् **अध्वरं** हिंसारहितं यज्ञम् । तथा यास्कः– 'अध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा–तत्प्रतिषेध (नि.१.८) इति । तथा दीर्घतमाश्च व्यर्थहिंसाया अभावान् 'न वा उ एतन्म्रियसे'. (ऋ.१.१६२.२१) इति जीवन्तमिव स्तौति । तस्मादध्वरं हिंसारहितं यज्ञं **अच्छ** आभिमुख्यत आयाहि आगच्छ । अच्छाभेराप्तुमिति शाकपूणेर्मतम् (नि.५.२८) हे **सत्यराधः!** सत्यधन **त्वाया** त्वत्कामनया वयं **हविश्चकृम** कृतवन्तः ।

चकृम दधिम मदतादित्वाद् (ऋ.प्रा.८.१९) दीर्घः ।

'अथ सर्वा ह वै देवताः पशुमालभ्यमानं समुपगच्छन्ते मम नामेति' (कौ.ब्रा.१०।६) । 'अत्रैव पशवो हिंस्या' इत्यादिश्रुतिस्मृत्युदितं मारणमपि हिंसा नेति सिद्धम् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**त्वायेन्द्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः ।**
**अधा नियुत्वः सगणो मरुद्भिरस्मिन् यज्ञे बर्हिषि मादयस्व ॥ ९ ॥**
त्वाऽया । इन्द्र । सोमम् । सुसुम । सुऽदक्ष । त्वाऽया । हविः । चकृम । ब्रह्मऽवाहः ।
अध । नियुत्वः । सऽगणः । मरुत्ऽभिः । अस्मिन् । यज्ञे । बर्हिषि । मादयस्व ॥ ९ ॥

**स्कन्द–** पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यस्माच्छब्दोऽध्याहार्यः । यस्मात् **त्वाया** त्वत्काम्यया । महत्या स्वद्विषयया श्रद्धया इत्यर्थः । हे **इन्द्र! सोमम् सुषुम सुदक्ष!** सुबल! **त्वाया** एव च सवनीयपुरोडाशादि **हविः चकृम** । हे **ब्रह्मवाहः!** स्तुतिलक्षणं ब्रह्म उह्यते प्राप्यते यस्मिन् स ब्रह्मवाहाः, तस्य सम्बोधनं हे ब्रह्मवाहः! । **अध** एतस्मात् कारणात् हे **नियुत्वः!** नियुतोऽश्वाः, तद्वन्! **सगणः** मरुद्भिः । मरुद्गणेन सहेत्यर्थः । **अस्मिन्** अस्मदीये यज्ञे **बर्हिषि** वेद्यां स्तीर्णे **मादयस्व** तर्पयात्मानं तृप्य वा ॥ ९ ॥

**वेङ्कटमाधव– त्वाया इन्द्र! सोमम्** सुतवन्तः शोभनबल! । **त्वाया** पुरोडाशम् **चकृम** स्तोत्रवाह! । अथ अश्ववन्! मरुद्भिः सहितः **अस्मिन्** यज्ञे **बर्हिषि** आसीनः तृप्य ॥ ९ ॥

**मुद्गल–** हे **सुदक्ष!** शोभनबल! **इन्द्र! त्वाया** त्वत्कामनया **सोमम् सुषुम** अभिषुतवन्तो वयम् । हे **ब्रह्मवाहः** । ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमान! प्राप्यमाण! **इन्द्र! त्वाया** त्वत्कामनया सवनीयपुरोडाशलक्षणम् **हविः चकृम** कृतवन्तः । हे **नियुत्वः!** नियुतोऽश्वाः, तद्वन्निन्द्र! **अध** अथानन्तरम् मरुद्भिः सप्तगणरूपैः तत्संज्ञैर्देवैः **सगणः** गणसहितः सन् **अस्मिन्** वर्तमाने यज्ञे **बर्हिषि** आस्तीर्णे दर्भे उपविश्य **मादयस्व** तृप्तो भव ॥ ९ ॥

**सायण–** हे **सुदक्ष!** शोभनबल, **इन्द्र त्वाया** त्वत्कामनया **सोमं सुषुम** अभिषुतवन्तो वयम् । हे **ब्रह्मवाहः!** ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमान प्राप्यमाणेन्द्र **त्वाया** त्वत्कामनया

आहवनीये पुरोडाशलक्षणं **हविश्चकृम** कृतवन्तः : हे **नियुत्वः** । नियुतोऽश्वाः । तद्वन्निन्द्र **अधा** अनन्तरं **मरुद्भिः** सप्तगणरूपैरेतत्संज्ञैर्देवैः **सगणः** गणसहितः सन् अस्मिन् वर्तमाने **यज्ञे बर्हिषि** आस्तीर्णे दर्भे उपविश्य **मादयस्व** तृप्तो भव ।

सुषुम । 'षुञ् अभिषवे' । लिटि क्रादिनियमप्राप्तस्य इटः 'अनित्यमागमशासनम्' इति वचनादभावः ॥ ९ ॥

**सिद्धाञ्जनम्**– हे **सुदक्ष**! शोभनविवेकबल **इन्द्र**, **त्वाया** त्वत्कामनया **सोमम् सुषुम** अभिषुतवन्तो वयम् । हे **ब्रह्मवाहः**! ब्रह्मणा मन्त्रेण उह्यमान प्राप्यमाणेन्द्र, **त्वाया** त्वत्कामनया **हविः चकृम** हव्यं कृतवन्तो वयम् । हे **नियुत्वः**! वायोरश्वाः नियुतः, तद्वान् इन्द्रः सम्बोध्यते प्राणबलाढ्यत्वद्योतनाय । **अध** अथ **मरुद्भिः सगणः** मरुद्गणसहितः सन् **अस्मिन् यज्ञे बर्हिषि** आस्तीर्णे सिद्धे अन्तरे वेदिस्थाने उपविश्य मादयस्व तृप्तो भव ॥ सुषुम–षुञ् अभिषवे, छान्दसो लिट् ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने ।**
**आ त्वा सुशिप्र हरयो वहन्तूशन् हव्यानि प्रति नो जुषस्व ॥ १० ॥**
**मादयस्व । हरिऽभिः । ये । ते । इन्द्र । वि । स्यस्व । शिप्रे इति । वि । सृजस्व । धेने इति । आ । त्वा । सुऽशिप्र । हरयः । वहन्तु । उशन् । हव्यानि । प्रति । नः । जुषस्व ॥ १० ॥**

**स्कन्द– मादयस्व** तर्पयात्मानं तृप्य वा **हरिभिः** अश्वैः सह । **ये ते** तव स्वभूताः हे **इन्द्रः**! केन प्रकारेण । **वि स्यस्व शिप्रे** स्यतिरुपसृष्टो विमोचने । शिप्रे हनू इहोच्येते । हविर्भक्षणाय हनू विमुञ्च । प्रेरयेत्यर्थः । **वि सृजस्व धेने** 'धेट् पाने' इत्यस्य दधातेर्वा धेने जिह्वोपजिह्विके इहाभिप्रेते । निधीयते च तयोः रसः । जिह्वोपजिह्विके अपि रसास्वादनाय विसृज । प्रेरयेत्यर्थः । तदर्थं च **त्वा** त्वाम् हे **सुशिप्र** । क्षिप्रे हनू नासिके वा इहोच्यते (या.६,१७) 'शिप्राः शीर्षसु वितता हिरण्ययोः' (ऋ.५,५४,११) इति प्रयोगदर्शनात् शिरस्त्राणवचनो वा इह शिप्राशब्दः । सुहनो! सुनस! सुशिरस्त्राण! वेत्यर्थः । **हरयः** अश्वाः

**आ वहन्तु** । आनीतश्च सन् त्वम् **उशन्** कामयमानः अस्मदीयानि **हव्यानि प्रति नः जुषस्व** प्रतिसेवस्वास्मान् अभिलषितफलप्रदानेन ।। १० ।।

**वेङ्कटमाधव–** माद्य अश्वैः सह, **ये** तवाश्वाः स्वभूताः । सोमपानार्थम् हनू मोचय । वि सृजस्य च जिह्वोपजिह्विके । सुहनो! त्वाम् **आ वहन्तु हरयः** । कामयमानः **हव्यानि** अस्माकम् **प्रति** सेवस्व ।। १० ।।

**मुद्गल–** हे **इन्द्र! हरिभिः** अश्वैः सह **मादयस्व** तृप्तो भव । **ये ते** तव स्वभूताः तदर्थम् **शिप्रे** हनू संहते **वि स्यस्व** सोमपानार्थं विवृते कुरु । तथा **धेने** पानसाधनभूते जिह्वोपजिह्विके **वि सृजस्व** सोमपानार्थं विश्लिष्टे कुरु । हे **सुशिप्र!** शिप्रे हनू । शोभनशिप्रावन्निन्द्र! **त्वा** त्वाम् **हरयः** अश्वाः **आ वहन्तु** अस्मदीयं यज्ञं प्रापयन्तु । त्वं च **उशन्** अस्मान् कामयमानः **नः** अस्माकम् **हव्यानि** हवींषि **प्रति जुषस्व** प्रत्येकं सेवस्व, मा उदासिष्ठाः ।। १० ।।

**सायण–** हे **इन्द्र! हरिभिः** अश्वैः सह **मादयस्व** तृप्तो भव । **ये ते** तव स्वभूतास्तदर्थं **शिप्रे** हनू संहते **वि ष्यस्व** सोमपानार्थं विवृते कुरु । तथा **धेने** पानसाधनभूते जिह्वोपजिह्विके **वि सृजस्व** सोमपानार्थं विश्लिष्टे कुरु । हे **सुशिप्र!** 'शिप्रे हनू नासिके वा' । 'शोभनशिप्रेन्द्र **त्वा** त्वां **हरयः** अश्वाः **आ वहन्तु** अस्मदीयं यज्ञं प्रापयन्तु । त्वं च **उशन्** अस्मान् कामयमानः **नः** अस्माकं **हव्यानि** हवींषि **प्रति जुषस्व** प्रत्येकं सेवस्व मा उदासिष्ठाः ।

विष्यस्व । 'षो अन्तकर्मणि' । व्यत्ययेन आत्मनेपदम् । दिवादित्वात् श्यन् । 'ओतः श्यनि' (पा.सू.७.३.७१) इति ओकारलोपः । 'उपसर्गात्सुनोति' इति षत्वम् ।। १० ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! हरिभिः** त्वदीयैरश्वैः सह **मादयस्व** तृप्तो भव, **ये ते** ये तव स्वभूताः त्वदर्थं वर्तन्ते, तैर्हरिभिरिति सम्बन्धः । **शिप्रे** हनू संहते **विष्यस्व** विवृते कुरु, सोमपानाय । तथा **धेने** धेना वाङ्नाम, तया जिह्वा लक्ष्यते, रसग्रहणसाधनभूते प्रजिह्विके **विसृजस्व** विश्लिष्टे कुरु । हे **सुशिप्र!** शोभनशिप्रेन्द्र, **त्वा** त्वां **हरयः** अश्वाः **आवहन्तु** अस्मान् प्रापयन्तु । त्वं च **उशन्** कामयमानः **नः** अस्मदीयानि **हव्यानि प्रतिजुषस्व** प्रत्येकं सेवस्व, उदासीनो मा भूः । विष्यस्व–षो अन्तकर्मणि, उपसर्गात् सुनोतीति षत्वं, व्यत्ययेनात्मनेपदम् ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वाजम् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥**
**मरुत्ऽस्तोत्रस्य । वृजनस्य । गोपाः । वयम् । इन्द्रेण । सनुयाम । वाजम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥**

**स्कन्द–** मरुद्भिः सह स्तोत्रं यस्य तत् **मरुत्स्तोत्रस्य** । **वृजनस्य** बलनामैतत् (निघ. २,९) । सेनालक्षणस्येन्द्रबलस्य । **गोपाः** गोपायितव्याः रक्ष्याः **वयम्** । **इन्द्रेण** हेतुना । इन्द्रेणानुगृह्यमाणा इत्यर्थः । **सनुयाम** 'षणु दाने' । दानेन चात्र तत्पूर्वको लाभो लक्ष्यते । लभेमहीत्यर्थः । किम् । **वाजम्** अन्नम् । **तत् नः मित्रः** इत्याद्युक्तार्थम् (ऋ.१,९४,१६ द्र.) ॥ ११ ॥

**वेङ्कटमाधव–** मरुद्भिः सहितं स्तोत्रं यस्य शत्रूणां छेत्तः तस्य गोप्याः **वयम्** । तेन अन्नं लभेमहि इति ॥ ११ ॥

**मुद्गल– मरुत्स्तोत्रस्य** मरुद्भिः सह स्तोत्रं यस्य स मरुत्स्तोत्रस्तस्य, **वृजनस्य** शत्रूणां क्षेप्तुरिन्द्रस्य सम्बन्धिनः **गोपाः** गोपायनीया रक्षणीयाः **वयम्** तेन **इन्द्रेण वाजम्** अन्नम् **सनुयाम** लभेमहि । यदेतदस्माभिः प्रार्थितम् **नः** अस्मदीयम् **तत्** मित्रादयः द्यावापृथिव्यौ च **ममहन्ताम्** पूजितं कुर्वन्तु ॥ ११ ॥

**सायण– मरुत्स्तोत्रस्य** । मरुद्भिः सह स्तोत्रं यस्य स मरुत्स्तोत्रः । तस्य **वृजनस्य** शत्रूणां क्षेप्तुरिन्द्रस्य सम्बन्धिनः **गोपाः** गोपायनीयाः रक्षणीयाः **वयं** तेन **इन्द्रेण वाजम्** अन्नं **सनुयाम** लभेमहि । यदेतदस्माभिः प्रार्थितं **नः** अस्मदीयं **तत्** मित्रादयो द्यावापृथिव्यौ च **ममहन्तां** पूजितं कुर्वन्तु ।

वृजनस्य । 'वृजी वर्जने' । 'कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः' इति क्युप्रत्ययः ॥ ११ ॥

**सिद्धाञ्जनम्– मरुतस्तोत्रस्य** मरुद्भिः सह स्तोत्रं यस्य तस्येन्द्रस्य **वृजनस्य** अस्मासु वासस्थानभूतस्य गृहस्य, **गोपाः** रक्षितारः **वयम्** अस्मदीयं शरीरादिकं इन्द्रदासगृहं, तदीयत्वेन

तस्य "वृजनस्य" तदर्थं गोपायितारः वयमित्यर्थः । **इन्द्रेण** देवेन **वाजम्** समृद्धिं सनुयाम लभेमहि । तन्नो मित्र इत्यादि गतम् ।। ११ ।।

।। इति प्रथमाष्टके सप्तमाध्याये त्रयोदशो वर्गः ।।

## ।। अथ चतुर्दशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-१०२)

(११ कुत्स आङ्गिरसः । इन्द्रः जगतीः । ११ त्रिष्टुप्)

**इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत् त आनजे ।**
**तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ।। १ ।।**

**इमाम् । ते । धियम् । प्र । भरे । महः । महीम् । अस्य । स्तोत्रे । धिषणा । यत् । ते । आनजे । तम् । उत्ऽसवे । च । प्रऽसवे । च । ससहिम् । इन्द्रम् । देवासः । शवसा । अमदन् । अनु ।।**

**स्कन्द–** **इमाम् ते** तव **धियम्** कर्म स्तुतिलक्षणम् । स्तुतिमित्यर्थः । **प्र भरे** प्रहरामि । उच्चारयामीत्यर्थः । **महः** महतः **महीम्** महतीम् । कस्मात् । उच्यते । **अस्य** आत्मन एवायं परोक्षरूपेण निर्देशः । अस्य कुत्साख्यस्यर्षेः अस्य वा यजमानस्य स्वभूते **स्तोत्रे धिषणा** स्तुतिलक्षणा वाक् **यत्** यस्मात् **ते** द्वितीयार्थे षष्ठी । त्वाम् **आनजे** अञ्जेर्गत्यर्थस्येदं रूपम् । गता प्राप्ता । यस्मात् पूर्वमपि अहम् अयं यजमानो वा त्वां स्तुतवानित्यर्थः । किञ्च **तम्** प्रकृतम् **उत्सवे च प्रसवे च सासहिम्** सर्वजनसाधारणः इन्द्रमहादिः उत्सवः । प्रात्यात्मिकोऽभ्युदयः प्रसवः । तयोरुभयोरपि । तत्प्रतिबन्धकराणां शत्रूणामभिभवितारं भवन्तम् **इन्द्रम्** । केन सासहिम् । उच्यते । **शवसा** स्वेन बलेन । देवा मरुदादयो देवाः **अमदन्** तृप्यन्तु । **अनु** 'तृतीयार्थे' (पा.१,४,८५) इत्येवम् अनुशब्दः कर्मप्रवचनीयः । सहार्थश्च तृतीयार्थः । तं सासहिम् इन्द्रम् इत्येतैश्च द्वितीयान्तैः सहास्य सम्बन्धः । तेन सासहिना भवतेन्द्रेण सहेत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** इदम् **ते** कर्म प्रभरामि महतः महत्, **अस्य** कुत्सस्य **स्तोत्रे** तव बुद्धिः

यस्मात् आगता । **तम्** युद्धापवर्गे उपक्रमे च शत्रूणां सहनशीलम् **इन्द्रम्** देवाः बलं दृष्ट्वा **अनु अमदन्** मरुतः ।। १ ।।

**मुद्गल–** 'इमां ते' इत्येकादशर्चं नवमं सूक्तम् । कुत्स ऋषिः । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । इन्द्रो देवता ।।

हे **इन्द्र! महः** महतः **ते** तव **इमाम्** इदानीं क्रियमाणाम् **महीम्** महतीम् अत्यन्तोत्कृष्टाम् **धियम्** स्तुतिम् **प्र भरे** प्रकर्षेण सम्पादयामि । **ते** तव **धिषणा** त्वदीया बुद्धिः **अस्य** मम स्तोतुः **स्तोत्रे** स्तुतौ **यत्** यस्मात् **आनजे** अक्ता संश्लिष्टासीत् । तस्मात् तव प्रियां स्तुतिं करोमीत्यर्थः । उत्तरोऽर्धर्चः परोक्षकृतः । **सासहिम्** शत्रूणाम् अभिभवितारं पूर्वोक्तम् **इन्द्रम् देवासः** कर्मसु दीव्यन्त ऋत्विजः **शवसा** स्तुतिभिः कीर्तितेन बलेन **अनु अमदन्** अनुक्रमेण हर्षं प्रापयन् । किमर्थम् । **उत्सवे च** उत्सवार्थम् अभिवृध्यर्थम् **प्रसवे च** धनानाम् उत्पत्त्यर्थं च ।। १ ।।

**सायण–** 'इमां ते' इति एकादशर्चं नवमं सूक्तं कुत्सस्यार्षमैन्द्रम् । अन्त्या त्रिष्टुप् शिष्टा दश जगत्यः । तथा चानुक्रान्तम्– 'इमां तेऽन्त्या त्रिष्टुप्' इति विनियोगो लैङ्गिकः ।

हे इन्द्र! **महः** महतः **ते** तव **इमाम्** इदानीं क्रियमाणां **महीं** महतीम् अत्यन्तोत्कृष्टां **धियं** स्तुतिं **प्र भरे** प्रकर्षेण सम्पादयामि । **ते** तव **धिषणा** त्वदीया बुद्धिः **अस्य** मम स्तोतुः **स्तोत्रे** स्तुतौ **यत्** यस्मात् **आनजे** अक्ता संश्लिष्टासीत् । तस्मात् तव प्रियां स्तुतिं करोमीत्यर्थः । उत्तरोऽर्धर्चः परोक्षकृतः । **ससहिं** शत्रूणामभिभवितारं पूर्वोक्तं **तम् इन्द्रं देवासः** कर्मसु दीव्यन्तः ऋत्विजः **शवसा** स्तुतिभिः कीर्तितेन बलेन **अनु अमदन्** अनुक्रमेण हर्षं प्रापयन् । किमर्थम् । **उत्सवे च** उत्सवार्थमभिवृद्ध्यर्थं **प्रसवे च** धनानां वृष्ट्युदकानां वा उत्पत्त्यर्थं च ।

आनजे । 'अञ्जू व्यक्तिम्रक्षणगतिषु' । अस्मात् कर्मणि लिट् । द्विर्वचनहलादिशेषौ । 'अत आदेः' इति अभ्यासस्य आत्वम् । 'तस्मान्नुड्द्विहलः' (पा.सू.७.४.७१) इति नुट् । व्यत्ययेन उपधानकारलोपः । उत्सवे । प्रसवे । 'पू प्रेरणे' । 'ऋदोरप्' इति भावे अप् । 'निमित्तात्कर्मसंयोगे' (पा.सू.२.३.३६.६) इति सप्तमी । थाथादिना उत्तरपदान्तोदात्तत्वम् । ससहिम् । 'षह अभिभवे' । 'आदृगमहन' इत्यत्र 'उत्सर्गश्छन्दसि' इति वचनात् किप्रत्ययः । लिड्वद्भावात्

द्विर्वचनम् । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् । अमदन् । 'मदी हर्षे' । हेतुमति णिच् । 'मदी हर्षग्लपनयोः' इति घटादिषु पाठात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः ।। १ ।।

**सिद्धाञ्जनम्**– 'इमां त' इत्येकादशर्चं नवमं सूक्तं कुत्सस्यार्षं ऐन्द्रं, अन्त्या त्रिष्टुप्, शिष्टा जगत्यः ।

हे इन्द्र! **महः** महतः **ते** तव **इमाम् महीम् धियम्** सद्यः आविर्भवन्तीं महतीमुत्कृष्टां धीशब्दलक्षितां स्तुतिवाचं **प्रभरे** प्रकर्षेण सम्पादयामि । **ते** तव **धिषणा** धारयित्री बुद्धिः **अस्य** मम **स्तोत्रे** प्रकृते स्तोत्रे **यत्** यस्मात् **आनजे** आसक्ता संश्लिष्टासीत्, तस्मात् तव प्रीणयित्रीं स्तुतिं करोमीत्यर्थः । अथ परोक्षकृतः उत्तरोऽर्धर्चः । **ससहिम्** अभिभवितारं शत्रूणां **तम् इन्द्रम्** पूर्वोक्तं **देवासः** सर्वे देवाः **शवसा** ज्वलता बलेन **अन्वमदन्** अनुक्रमेण हर्षं प्रापयन्, प्रापयन्ति, लडर्थे लङ छन्दसि । किमर्थम्? **उत्सवे च** अभ्युदयार्थ, निमित्तसप्तमी, **प्रसवे च** दिव्यानां लोकहितानां ज्योतिर्बलादीनां वृष्ट्यर्थं, उत्पत्त्यर्थम् ।

आनजे–अनक्तेः कर्मणि लिट् । ससहिम्–षह अभिभवे, लिड्वद्भावाद् द्विर्वचनं, किप्रत्ययः ।।

## ऋक्संहिता पदपाठसहिता

**अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।**
**अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ।। २ ।।**
**अस्य । श्रवः । नद्यः । सप्त । बिभ्रति । द्यावाक्षामा । पृथिवी । दर्शतम् । वपुः । अस्मे इति । सूर्याचन्द्रमसा । अभिऽचक्षे । श्रद्धे । कम् । इन्द्र । चरतः । विऽतर्तुरम् ।।**

**स्कन्द– अस्य** इन्द्रस्य **श्रवः** कीर्तिम् **नद्यः** गङ्गाद्याः **सप्त बिभ्रति** । धारयन्तीत्यर्थः । **द्यावाक्षामा** द्यावापृथिव्यौ । **पृथिवी** अन्तरिक्षनामैतत् (निघ.१,३) । अन्तरिक्षं च । न च केवलं श्रवः । किं तर्हि । **दर्शतं वपुः** 'वपुः' (निघ ३,७) इति रूपनाम । शरीरवचनो वा वपुःशब्दः दर्शनीयं च रूपं शरीरं वा । अतिमहत्त्वादस्येन्द्रस्य कीर्तिं वपुश्च गङ्गाद्याः सप्त नद्यः त्रयश्च लोकाः धारयन्ति । अथवा 'वपुः' (निघ १,१२) इत्युदकनाम । 'श्रवः' (निघ.२,७) इत्यप्यन्ननाम । अन्नकारणत्वाच्चोदकमत्र श्रवः इत्युच्यते । अस्य स्वभूतम्

अन्नकारणं वृष्टिलक्षणमुदकं दर्शनीयं सप्त नद्यः त्रयोऽपि लोकाः धारयन्तीत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । **अस्मे** अस्माकं **सूर्याचन्द्रमसौ अभिचक्षे** प्रकाशाय दर्शनाय **श्रद्धे** श्रद्धधातेरुत्साहकर्मण इदं रूपम् अहोरात्रप्रविभागायत्तसम्यगाहारपरिणामनिमित्ताय चोत्साहाय च **कम्** सुखाय च हे **इन्द्र!** त्वत्प्रसादादेव **चरतः** नियतेनोदयास्तमयादिलक्षितेन मार्गेण गच्छतः । **वितर्तुरम्** त्वरतेस्तरतेर्वा यङ्लुगन्तस्येदं रूपम् । विविधं त्वरितं तीर्णं वा । अत्यन्तशीघ्रम् अत्यन्तद्रुतं वेत्यर्थः । सूर्याचन्द्रमसावस्मान् दर्शनोत्साहसुखार्थम् अहोरात्रप्रविभागं कर्तुं त्वत्प्रसादेनोदयास्तमयादिरूपेण गच्छत इत्यर्थः ।। २ ।।

**वेङ्कटमाधव– अस्य** कीर्तिं वृष्टिलक्षणमुदकं **सप्त नद्यः** धारयन्ति । द्यावाभूम्यौ अन्तरिक्षं च दर्शनीयं रूपं धारयन्ति । अस्माकं सूर्याचन्दमसौ इन्द्रप्रेरितौ अभिदर्शनाय सत्यत्वं श्रद्धातुं शीघ्रम् **चरतः** । **कम्** इति पूरणम् ।। २ ।।

**मुद्गल– अस्य** इन्द्रस्य **श्रवः** कीर्तिम् **सप्त** 'इमं मे गङ्गे' (ऋ १०,७५,५) इत्यस्यामृचि प्राधान्येन प्रतिपादिता गङ्गाद्याः सप्त **नद्यः बिभ्रति** धारयन्ति । वृत्रहननेन इन्द्रस्य यत् वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयन्तीत्यर्थः । अपि च **द्यावाक्षामा** द्यावापृथिव्यौ **पृथिवी** अन्तरिक्षम् च अस्य सूर्यात्मना वर्तमानस्य इन्द्रस्य **दर्शतम्** सर्वैः प्राणिभिर्दर्शनीयम् **वपुः** प्रकाशात्मकं रूपं धारयन्ति । किञ्च धारयन्ति । किञ्च हे **इन्द्र! अस्मे** अस्माकम् **अभिचक्षे** द्रष्टव्यानां पदार्थानाम् आभिमुख्येन प्रकाशनार्थम् **श्रद्धे कम्** श्रद्धार्थम् । चक्षुषा दृष्टे हि वस्तुनीदं सत्यमिति श्रद्धोत्पद्यते । कं पादपूरणम् । तदुभयार्थम् **सूर्याचन्द्रमसा वितर्तुरम्** परस्परं व्यतिहारेण तरणं पुनःपुनः गमनं यथा भवति तथा **चरतः** वर्तेते । त्वमेव तद्रूपः सन् वर्तस इत्यर्थः ।। २ ।।

**सायण– अस्य** इन्द्रस्य **श्रवः** यशः कीर्तिं **सप्त** 'इमं मे गङ्गे' इत्यस्यामृचि प्राधान्येन प्रतिपादिता गङ्गाद्याः सप्तसङ्ख्याकाः **नद्यः बिभ्रति** धारयन्ति । वृत्रहननेन इन्द्रस्य यत् वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयन्तीत्यर्थः । अपि च **द्यावाक्षामा** द्यावापृथिव्यौ । **पृथिवी** इति अन्तरिक्षनाम । अन्तरिक्षं चास्य सूर्यात्मना वर्तमानस्येन्द्रस्य **दर्शतं** सर्वैः प्राणिभिर्दर्शनीयं **वपुः** । रूपनामैतत् । प्रकाशात्मकं रूपं धारयन्ति । किञ्च हे **इन्द्र अस्मे** अस्माकम् **अभिचक्षे** द्रष्टव्यानां पदार्थानामाभिमुख्येन प्रकाशनार्थं **श्रद्धे कं** श्रद्धार्थम् । चक्षुषा दृष्टे हि वस्तुनि इदं

सत्यमिति श्रद्धोत्पद्यते । कमित्येतत् पादपूरणम् । तदुभयार्थं सूर्याचन्द्रमसौ **वितर्तुरं** परस्परव्यतिहारेण तरणं पुनःपुनर्गमनं यथा भवति तथा **चरतः** । वर्तेते । त्वमेव तद्रूपः सन् वर्तसे इत्यर्थः ।

अस्य । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । द्यावाक्षामा । द्यौश्च क्षामा च । 'दिवो द्यावा' इति द्यावादेशः । 'सुपां सुलुक्' इति विभक्तेः डादेशः । 'देवताद्वन्द्वे च' इति उभयपद-प्रकृतिस्वरत्वम् । दर्शतम् । 'भृमृदृशि' इत्यादिना अतच् । सूर्याचन्द्रमसा । सूर्यश्च चन्द्रमाश्च । 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः । 'सुपां सुलुक्' इति विभक्तेः आकारः । चन्द्रमः शब्दो दासीभारादित्वात् पूर्वपदप्रकृतिस्वरेण मध्योदात्तः । अतो 'देवताद्वन्द्वे च' इति प्राप्तस्य उभयपदप्रकृतिस्वरस्य 'नोत्तरपदेऽनुदात्तादावपृथिवी' इति प्रतिषेधः । अभिचक्षे । चक्षेः प्रकाशनार्थात् सम्पदादिलक्षणो भावे क्विप् । तादर्थ्ये चतुर्थी । श्रद्धे । दृशिग्रहणात् दधातेर्भावे विच् । चतुर्थ्येकवचने 'आतो धातोः' इति आकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । वितर्तुरम् । तरतेर्यङ्लुगन्तात् औणादिकः कुरच् । 'बहुलं छन्दसि' इति उत्वम् ।। २ ।।

**सिद्धाञ्जनम्– अस्य** इन्द्रस्य **श्रवः** श्रूयमाणं, श्रुतं यशः, दिव्यं वैभवमिति यावत् **सप्त नद्यः** सप्तसङ्ख्याकाः ज्योतिर्बलादिप्रवाहिण्यः स्यन्दमाना आपः, भूरादिसप्तलोकात्मकविश्व-सत्ताशक्तयः, **बिभ्रति** धारयन्ति प्रकाशयन्ति स्वव्यापारैरिति भावः । **द्यावाक्षामा** द्यावापृथिव्यौ **पृथिवी** पृथुला विस्तीर्णा अन्तरिक्षस्थाना विततभूश्च **दर्शतम्** दर्शनीयं अस्य **वपुः** शरीरं, रूपं वा भवति । त्रैलोक्यमस्य वपुरिति स्पष्टं मूलं, सायणस्तु अन्यथा ब्रूते अध्याहारैः । हे **इन्द्र! अस्मे** अस्माकं **अभिचक्षे** दृष्टये जगतः प्रदर्शनाय, प्रकाशनायेति यावत्, **श्रद्धे** श्रद्धार्थं च **कम्** पदपूरणम् । **सूर्याचन्द्रमसौ** सूर्यश्चन्द्रमाश्च **वितर्तुरम्** परस्परव्यतिहारेण तरणं पुनः पुनर्गमनं यथा भवति तथा **चरतः** वर्तेते । त्रैलोक्यमिन्दस्य वपुः, तदन्तर्गतौ सोमसूर्यौ इन्द्रवैभवद्योतकौ अस्मभ्यं जगतः प्रकाशकौ, श्रद्धाजनकौ च भवतः । एतावानिन्द्रस्य महिमा ।

द्यावाक्षामादिवो द्यावादेशः, विभक्तेर्डादेशः । दर्शतम्–दृशेः अतच् । अभिचक्षे–चक्षेः प्रकाशनार्थात् सम्पदादिलक्षणः क्विप्, तादर्थ्ये चतुर्थी । श्रद्धे–दृशिग्रहणाद्धातेर्भावे विच्, चतुर्थ्येकवचने आतो धातोरित्याकारलोपः । वितर्तुरम्–तरतेर्यङ्लुगन्तात् औणादिकः कुरुच्, बहुलं छन्दसीत्युत्वम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तं स्मा रथं मघवन् प्राव सातये जैत्रं यं ते अनुमदाम संगमे ।
आजा न इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ।। ३ ।।**
**तम् । स्म । रथम् । मघऽवन् । प्र । अव । सातये । जैत्रम् । यम् । ते । अनुऽमदाम । समऽगमे । आजा । नः । इन्द्र । मनसा । पुरुऽस्तुत । त्वायत्ऽभ्यः । मघऽवन् । शर्म । यच्छ । नः ।। ३ ।।**

**स्कन्द– स्म** इति पदपूरणः । **तम् रथम्** हे **मघवन्! प्र अव** अवतिरत्र गत्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अस्मान् प्रति गमय **सातये** सम्भजनायास्माकम् । कतमम् । उच्यते । **जैत्रम्** जयशीलम् **यम् ते** स्वभूतम् **अनुमदाम** । अनुरभीत्येतस्य स्थाने । मदतिरर्चतिकर्मा (निघ.३,१४) । अभिष्टवामेत्याशास्महे **सङ्गमे** प्राप्तौ सत्याम् । प्राप्तं सन्तमित्यर्थः । **आजा** सङ्ग्रामे सङ्ग्रामस्थानीये वा यज्ञे **नः** अस्माकं स्वभूते । हे **इन्द्र! मनसा** प्रसन्नेन चित्तेन हे **पुरुष्टुत!** बहुभिः स्तोतृभिः स्तुत! **त्वायद्भ्यः** त्वत्कामेभ्यः हे **मघवन्!** धनवन्! **शर्म** सुखं गृहं वा **यच्छ** देहि **नः** अस्मभ्यम् ।। ३ ।।

**वेङ्कटमाधव– तम् स्म रथम् मघवन्!** प्रतिगच्छ धनं दातुम्, **जैत्रम् यम्** त्वदीयं वयं स्तुमः **सङ्गमे** सङ्ग्रामे अस्मभ्यम् **मनसा** बहुस्तुत! त्वत्कामेभ्यः सुखं प्रयच्छ । पुनः **नः** पूरणम् ।। ३ ।।

**मुद्गल–** हे **मघवन्!** धनवन्निन्द्र! **सातये** अस्माकं धनलाभाय **तम् स्म** तमेव **रथम् प्र अव** प्रेरय वर्तय । **नः** अस्माकम् **मनसा** बुद्ध्या **पुरुष्टुत!** हे बहुशः स्तुतेन्द्र! **ते** तव स्वभूतम् **जैत्रम्** जयनशीलम् **यम्** रथम् **सङ्गमे** शत्रुभिः सह सङ्गमने **आजा** युद्धे सति **अनुमदाम** वयमनुक्रमेण स्तुमः । अपि च हे **मघवन्!** इन्द्र! **त्वायद्भ्यः** त्वां कामयमानेभ्यः **नः** अस्मभ्यम् **शर्म** सुखम् **यच्छ** देहि ।। ३ ।।

**सायण–** हे **मघवन्!** धनवन् इन्द्र **सातये** अस्माकं धनलाभाय **तं स्म** तमेव **रथं प्राव** प्रेरय वर्तय । **नः** अस्माकं **मनसा** बुद्ध्या **पुरुष्टुत** बहुशः स्तुतेन्द्र **ते** तव स्वभूतं **जैत्रं** जयशीलं **यं** रथं **सङ्गमे** शत्रुभिः सह सङ्गमने **आजा** युद्धे सति **अनुमदाम** वयमनुक्रमेण स्तुमः । अपि च हे **मघवन्! त्वायद्भ्यः** त्वां कामयमानेभ्यः **नः** अस्मभ्यं **शर्म** सुखं **यच्छ** देहि ।

अव । 'अत्र रक्षणगतिकान्ति' इत्युक्तत्वादवतिरत्र गत्यर्थः । सङ्गमे । 'ग्रहवृदृनिश्चिगमश्च' इति कर्मणि अप् । थाथादिना उत्तरपदान्तोदात्तत्वम् । आजा । 'सुपां सुलुक्' इति सप्तम्या डादेशः । त्वायद्भ्यः । 'सुप आत्मनः क्यच्' । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । व्यत्ययेन दकारस्य आत्वम् । वयजन्तात् लटः शतृ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे सति क्यचा सहैकादेशे 'एकादेश उदात्तेन' इति तस्य उदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **मघवन्!** इन्द्र, **सातये** लब्धये अभीष्टानां **तम् स्म** तमेव **रथम्** रंहणशीलं गमनसाधनं **प्राव** प्रकर्षेण गच्छ, वर्तयेत्यर्थः । **नः** अस्माकं **मनसा** मननेन ध्यानेन **पुरुष्टुत** बहुशः स्तुत **इन्द्र, ते** तव स्वीयं **जैत्रम्** जयशीलं **यम्** यं रथं **सङ्गमे** शत्रुभिः सह सङ्घर्षे आजा **आजौ** युद्धे सति **अनुमदाम** अनुक्रमेण वयं स्तुमः । अपि च हे **मघवन्! त्वायद्भ्यः** त्वां कामयमानेभ्यः **नः** अस्मभ्यं **शर्म** शरणं सुखं वा **यच्छ** देहि ।

अवबह्वर्थत्वादत्र गत्यर्थः । आजा–सप्तम्या डादेशः । त्वायद्भ्यः–प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशः, सुप आत्मनः क्यच्, तस्मात् लटः शतृ ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।**
**अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन् वृष्ण्या रुज ।। ४ ।।**
वयम् । जयेम । त्वया । युजा । वृतम् । अस्माकम् । अंशम् । उत् । अव । भरेऽभरे । अस्मभ्यम् । इन्द्र । वरिवः । सुऽगम् । कृधि । प्र । शत्रूणाम् । मघऽवन् । वृष्ण्या । रुज ।। ४ ।।

**स्कन्द–** **वयम् जयेम** इत्याशास्महे **त्वया युजा** युज्यतेऽसाविति युक् सहाय उच्यते । त्वया सहायेन । **वृतम्** वर्ततेऽसाविति वृत् सेनोच्यते गमनस्वभावकत्वात्, तां वृतम् । शत्रुसेनामित्यर्थः । किञ्च **अस्माकम्** स्वभूतम् **अंशम्** सङ्ग्रामकारिसमुदायैकदेशम् । अस्मदीय-मित्यर्थः । **उत् अव** उदित्येतत् समित्येतस्य स्थाने । अवती रक्षणार्थः । संरक्ष । **भरेभरे** सङ्ग्रामेसङ्ग्रामे । किञ्च **अस्मभ्यम्** षष्ठ्यर्थे एषा चतुर्थी । अस्माकं हे **इन्द्र! वरिवः सुगम्** सुगमित्यपठितमपि सुखनाम इह द्रष्टव्यम् । 'अथा यज्ञाय गृणते सुगं कृधि' (ऋ१,९४,९)

इति यथा । धनं च सुखं च । **कृधि** कुरु ' देहीत्यर्थः । अथवा सुखमभिगम्यते प्राप्यत इति सुगं सुलभमुच्यते । धनस्य चेदं विशेषणम् । धनं सुगं स्वधिगमं सुलभं कुरु । यथा वयं सुखं लभेमहि तथा कुर्वित्यर्थः । किञ्च **अस्मच्छत्रूणाम्** हे **मघवन्! वृष्ण्या** अपठितमपि बलनामैतत् । बलानि **प्र रुज** रुजो भङ्गे । प्रकर्षेण भङ्ग्धि ।। ४ ।।

**वेङ्कटमाधव– वयम् जयेम त्वया** सहायेन अभिकाङ्क्षितं धनम् । **अस्माकम् अंशम्** त्वमुद्रमय सङ्ग्रामेसङ्ग्रामे । **अस्मभ्यम् इन्द्र!** धनं शोभनगमनं कुरु । **प्र रुज शत्रूणाम्** वीर्याणि **मघवन्!** ।। ४ ।।

**मुद्गल–** हे **इन्द्र! युजा** अस्माभिर्युक्तेन सहायभूतेन **त्वया वृतम्** आवृण्वन्तं शत्रुम् **वयम्** स्तोतारः **जयेम** अभिभवेम । अपि च **भरेभरे** सङ्ग्रामेसङ्ग्रामे **अस्मकम् अंशम्** अस्मदीयभागम् **उत् अव** शत्रुकृतपीडापरिहारेणोत्कष्टं रक्ष । तथा हे **इन्द्र! वरिवः** धनम् **अस्मभ्य् सुगम्** सुगमं सुप्रापम् **कृधि** कुरु । तथा हे **मघवन्! शत्रुणाम्** अस्मदुपद्रवकारिणाम् **वृष्ण्या** वृष्ण्यानि वीर्याणि **प्र रुज** प्रभङ्ग्धि । बाधस्वेत्यर्थः ।। ४ ।।

**सायण–** हे **इन्द्र! युजा** अस्माभिर्युक्तेन सहायभूतेन **त्वया वृतं** आवृण्वन्तं शत्रुं **वयं** स्तोतारः **जयेम** अभिभवेम । अपि च **भरेभरे** सङ्ग्रामेसङ्ग्रामे **अस्माकम् अंशम्** अस्मदीयं भागम् **उदव** शत्रुकृतपीडापरिहारेणोत्कृष्टं रक्ष । तथा हे **इन्द्र! वरिवः** धनम् **अस्मभ्यं सुगं** सुगमं सुप्रापं **कृधि** कुरु । तथा हे **मघवन्! शत्रूणाम्** अस्मदुपद्रवकारिणां **वृष्ण्या** वृष्ण्यानि वीर्याणि **प्र रुज** प्रभङ्धि बाधस्वेत्यर्थः ।

वृतम् । 'वृञ् वरणे' । 'क्विप् च' इति क्विप् । तुगागमः । सुगम् । 'सुदुरोरधिकरणे' इति गमेः डप्रत्ययः । कृधि । 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिः । रुज । 'रुजे भङ्गे' । तौदादिकः ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! युजा** अस्माभिर्युक्तेन **त्वया** सहायभूतेन **वृतम्**, आवृण्वन्तं शत्रुं असुरादिं **वयम्** त्वद्योगिनो यजमानाः **जयेम** अभिभवेम । अपि च **भरेभरे** यजने यजने प्रतियजनं, यजनस्य दिव्ययात्रात्मकत्वात् । यजनोपधातुकैः देवद्विड्भिस्तत्र दिव्ययात्रायां मार्गे सङ्ग्रामः सङ्घटते । भरो यज्ञ इति क्वचित् सङ्ग्राम इति क्वचिच्च सायणीयव्याख्यानं भवति । अस्मत्पक्षानुसारेण विरोधः परिह्रियते । **अस्माकम् अंशम्** अस्मदीयं भागं **उदव** उत्कृष्टं यथा

भवति तथा रक्ष, प्रापय, यजनयात्रामार्गे बहूनि सोपानानि ऊर्ध्वारोहणार्थानि भवन्ति, तस्मादस्मदीयं दैव्यं भागं शत्रूणामसुराणां अपावरणेन समुद्धृत्य उत्कर्षं प्रापय । एवं एकैकमपि यजनं यजमानभागस्य उत्कर्षकं भवति । हे इन्द्र! **अस्मभ्यम्** अस्मदर्थं **वरीवः** स्थानं, अवकाश–सुख–परिचर्यादीनामन्यतमो भवति वरिवः शब्दार्थः (१.५९.५) गम्यं स्थानं **सुगम्** सुगमं, सुप्रापं **कृधि** कुरु । तथा **मघवन्, शत्रूणाम्** विरोधिना **वृष्ण्या** वृष्ण्या वृष्ण्यानि वीर्याणि **प्ररुज** प्रकर्षेण भङ्ग्धि, बाधस्वेत्यर्थः ।

वृतम्–वृञ् वरणे, क्विप्, तुगागमः । सुगम्–सुदुरोरधिकरणे इति गमेर्डप्रत्ययः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः ।**
**अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हीन्द्र निभृतं मनस्तव ।। ५ ।।**
**नाना । हि । त्वा । हवमानाः । जनाः । इमे । धनानाम् । धर्तः । अवसा । विपन्यवः । अस्माकम् । स्म । रथम् । आ । तिष्ठ । सातये । जैत्रम् । हि । इन्द्र । निऽभृतम् । मनः । तव ।। ५ ।।**

**स्कन्द– नाना** पृथक् । हिशब्दः पदपूरणः । **त्वा हवमानाः** अत्र शानच्छ्रुतेः साकाङ्क्षत्वात् प्रतीक्षन्ते तिष्ठन्ति वेति वाक्यशेषः । त्वामाह्वयन्तः प्रतीक्षन्ते तिष्ठन्ति वा । के । उच्यते । **जनाः इमे** 'जनः' (निघ.२,३) इति मनुष्यनाम । इमे मनुष्याः अस्मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा । हे **धनानाम् धर्तः!** स्तोतृषु धारयितः! स्तोतृभ्यो धनानां दातरित्यर्थः । केन निमित्तेन । **अवसा** पालनेन तर्पणेन वा निमित्तेन । पालनार्थं तर्पणार्थं वेत्यर्थः । कीदृशः । उच्यते । **विपन्यवः** विपन्युरिति मेधाविनाम (निघ.३,१५) । मेधाविनः । एतत् ज्ञात्वा **अस्माकं स्म सातये** स्मेति पदपूरणः एवार्थे वा । जयनशीलं च हे **इन्द्र! निभृतम्** अविचलम् **मनः तव** । शत्रुजयनशीलश्च आश्रितोपकारे च स्थिरं मनस्तवेत्यर्थः ।।

**वेङ्कटमाधव–** तत्र तत्र हि त्वामाह्वयमानाः **इमे जनाः धनानाम्** धर्तः! इन्द्र! रक्षणार्थं मेधाविनः । तत्र त्वम् **अस्माकम्** भजनाय **रथम् आ तिष्ठ** । जयशीलम् **हि** युयुत्सतः **तव मनः** अविचालि चेति ।। ५ ।।

**मुद्गल–** हे **धनानाम् धर्तः!** गोहिरण्यादिरूपाणां द्रव्याणां धारयितरिन्द्र! **विपन्यवः** स्तोतारः **इमे जनाः अवसा** रक्षणेन हेतुना **त्वा हवमानाः** त्वाम् आह्वयन्तः **नाना हि** विभिन्नाः खलु । तेषां मध्ये **अस्माकम् स्म** अस्माकमेव **सातये** धनदानाय **रथम् आ तिष्ठ** आरोह । हे **इन्द्र! निभृतम्** अव्याकुलम् **तव मनः** चित्तम् **जैत्रम् हि** जयशीलं खलु । शत्रून् जित्वास्मभ्यं धनं दातुं समर्थमित्यर्थः ।। ५ ।।

**सायण–** हे **धनानां धर्तः!** गोहिरण्यादिरूपाणां द्रव्याणां धारयितः इन्द्र, **विपन्यवः** । स्तोतृनामैतत् । स्तोतारः **इमे जनाः अवसा** रक्षणेन हेतुना **त्वा हवमानाः** त्वामाह्वयन्तः नाना **हि** विभिन्नाः खलु । तेषां मध्ये **अस्माकं स्म** अस्माकमेव **सातये** धनदानाय **रथम् आ तिष्ठ** आरोह । हे **इन्द्र! निभृतम्** अव्याकुलं **तव मनः** चित्तं **जैत्रं हि** जयशीलं खलु । शत्रून् जित्वास्मभ्यं धनं दातुं समर्थमित्यर्थः ।

सातये । 'षणु दाने' । क्तिनि 'जनसनखनां सञ्झलोः' इति आत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **धनानाम् धर्तः!** बहुविधानां धनानां धारयितः, इन्द्र, **विपन्यवः** स्तोतारः **इमे जनाः अवसा** रक्षणाय, चतुर्थ्यर्थे तृतीया, **त्वा** त्वां **नाना हि** विभिन्नतया खलु बहुधेत्यर्थः **हवमानाः** आह्वयन्तो भवन्ति । तत्र स्वकीयप्रार्थनामाह– **अस्माकम् स्म** अस्माकं तु सैषा प्रार्थनाविदा । हे इन्द्र! **सातये** लब्धव्यस्य लब्धये **रथम् आतिष्ठ** रथमारोह । **निभृतम्** निश्चलं ध्रुवं **तव मनः** त्वदीयं चेतः **जैत्रम् हि** जयशीलं खलु । असुरादीन् वैरिणोऽपोह्य दिव्यस्वं तेजोबलज्ञानादिकं गवाश्वादिलक्षणं तैरपहृतं जित्वा दातुं नः समर्थ हि तव चित्तम् ।। ५ ।।

।। इति **प्रथमाष्टके** सप्तमाध्याये चतुर्दशो वर्गः ।।

## ।। अथ पञ्चदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः ।**
**अकल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिषासवः ।। ६ ।।**

गोऽजिता । बाहू इति । अमितऽक्रतुः । सिमः । कर्मन्ऽकर्मन् । शतम्ऽऊतिः ।

खजम्ऽकरः । अकल्पः । इन्द्रः । प्रतिऽमानम् । ओजसा । अथ । जनाः । वि । ह्वयन्ते । सिसासवः ॥ ६ ॥

**स्कन्द–** 'अथा जना वि ह्वयन्ते' इति एतस्माच्छब्दसमानार्थाथशब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्मात् **गोजिता** असुरादीनां स्वभूतानां गवां जेतारौ **बाहू** अस्येन्द्रस्य । यस्माच्चायम् **अमितक्रतुः** अपरिमितकर्मा वा अपरिमितप्रज्ञो वा । **सिमः** 'षिञ् बन्धने' इत्यस्यैतद्रूपम् । बन्धकाश्चासुराणाम् । यस्माच्च **कर्मन्कर्मन्** कर्मणिकर्मणि यज्ञाख्ये **शतमूतिः** 'शतम्' (निघ.३,१) इति बहुनाम । बहुपालनः । बहुप्रकारपालनकारीत्यर्थः । **खजंकरः** सङ्ग्रामकारी च यस्माच्च **अकल्पः इन्द्रः** कल्पनं कल्पः, तद्रहितोऽकल्पः । अतिशयवद्देवतामाहात्म्यान्नानारूपप्रतिपत्तेः नियतेनैकरूपेण एवंरूपो नामेन्द्रः इति परिकल्पयितुमशक्य इत्यर्थः । अथवा पितृकल्पो मातृकल्प इत्यादिषु सादृश्यार्थत्वदर्शनात् कल्पशब्द इह सदृशपर्यायो द्रष्टव्यः । सदृशरहितोऽकल्पः । नेन्द्रस्य कश्चित् सदृशोऽस्तीत्यर्थः । प्रतिमानम् उपमानभूतश्च सर्वस्य ओजसा स्वेन बलेन । अथ एतस्मात् कारणात् जनाः सर्वे मनुष्याः **वि ह्वयन्ते** विविध ह्वयन्ति । कम् । प्रकृतत्वाद् इन्द्रम् । **सिषासव** सम्भक्तुमिच्छन्तः तेन प्रदीयमानान् सर्वानभिप्रेतानर्थान् ॥ ६ ॥

**वेङ्कटमाधव–** पशूनां जेतारौ **बाहू** भवतः । अमितप्रज्ञश्च भवति बन्धकः कर्मणिकर्मणि बहुरक्षः युद्धस्य कर्ता । अनुपमः बलेन सर्वेषां प्रतिद्वन्द्वी भवति । **अथ** एनम् **जनाः वि ह्वयन्ते** सम्भक्तुम् इच्छन्तः ॥ ६ ॥

**मुद्गल–** हे **इन्द्र!** तव **बाहू** हस्तौ **गोजिता** जयेन गवां लम्भयितारौ । त्वं च **अमितक्रतुः** अपरिच्छिन्नज्ञानः **सिमः** श्रेष्ठः **कर्मन्कर्मन्** स्तोतॄणां कर्मणिकर्मणि उपस्थिते **शतमूतिः** बहुविधरक्षणोपेतः । **खजंकरः** खजति मथ्नाति पुरुषानिति खजः सङ्ग्रामः, तस्य कर्ता । अकल्पः कल्पेनान्येन रहितः । स्वतन्त्र इत्यर्थः । **ओजसा** सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण **प्रतिमानम्** प्रतिनिधित्वेन मीयमानः । यस्माद् एवङ्गुणविशिष्टः इन्द्रः, **अथ** अतः कारणात् **सिषासवः** धनं लब्धुकामा **जनाः** तम् **वि ह्वयन्ते** विविधमाह्वयन्ति ॥ ६ ॥

**सायण–** हे इन्द्र! तव **बाहू** हस्तौ **गोजिता** जयेन गवां लम्भयितारौ । त्वं च **अमितक्रतुः** अपरिच्छिन्नज्ञानः **सिमः** श्रेष्ठः । तथा च शाट्यायनकं– 'सिम इति वै श्रेष्ठमाचक्षते' इति । यद्वा । सिमः शत्रूणां बन्धकः । **कर्मन्कर्मन्** स्तोतॄणां कर्मणिकर्मण्युपन्थिते **शतमूतिः**

बहुविधरक्षणोपेतः **ग्वजङ्करः** । खजति मथ्नाति पुरुषानिति खजः सङ्ग्रामः । तस्य कर्ता । **अकल्पः** कल्पेनान्येन रहितः । स्वतन्त्र इत्यर्थः । **ओजसा** सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण **प्रतिमानं** प्रतिनिधित्वेन मीयमानः । यस्मादेवङ्गुणविशिष्टः **इन्द्रः अथ** अतः कारणात् **सिषासवः** धनं लब्धुकामाः **जनाः वि ह्वयन्ते** विविधमाह्वयन्ति ।

गोजिता । गा जयतः इति गोजितौ । 'सुपां सुलुक्' इति विभक्तेः आकारः । सिमः । 'षिञ् बन्धने' । अस्मादौणादिको मक् । ग्वजङ्करः । 'ग्वज मन्थे' । पचाद्यच् । 'क्षेमप्रियमद्रेऽण च' (पा.सू.३.२.४४) इति चशब्दस्यानुक्तसमुच्चयार्थत्वात् ग्वजशब्दोपपदादपि करोतेः खच् । 'अरुर्द्विषदजन्तस्य' इति मुम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । अकल्पः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सिषासवः । 'वन षण संभक्तौ' । सनि 'सनीवन्तर्ध' इति विकल्पनात् इडभावः । 'जनसनखनां सञ्झलोः' इति आत्वम् । द्विर्वचनादि । 'सनाशंसभिक्ष उः' (पा.सू.३.२.१६८) इति उप्रत्ययः । सति शिष्टत्वात् तस्यैव स्वरः शिष्यते ।। ६ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **बाहू** तव भुजौ **गोजिता** गोजितौ गवां जयेन लम्भयितारौ । त्वं च **अमितक्रतुः** अपरिच्छिन्नप्रज्ञः, अत एव **सिमः** बन्धको यज्ञविरोधिनाम्, सिमः श्रेष्ठ इति वाजसनेयकवचनं उदाहृतं सायणीये । **कर्मनुकर्मन्** कर्मणि कर्मणि **शतमूतिः** बहुविधरक्षणोपेतः, एकैकमपि त्वदीयं कर्म यजमानरक्षणाय भवतीत्यर्थः । **खजङ्करः** खजति मथ्नाति पुरुषानिति खजः सङ्ग्रामः तस्य कर्ता । **अकल्पः** कल्पेनान्येन रहितः, अद्वितीयः, **ओजसा**, षष्ठ्यर्थे तृतीया, सर्वस्यापि ओजसो बलस्य **प्रतिमानम्** प्रतिनिधिश्च, एवम्भूतः **इन्द्रः** । अथ अस्मात्कारणात् **सिषासवः** सनितुं सम्भक्तुमिच्छवः दिव्यत्वस्य सम्भजनकामाः **जनाः वि ह्वयन्ते** विविधमाह्वयन्ति ।

गोजिता–विभक्तेराकारः । सिमः–षिञ् बन्धने, औणादिको मक् । खजङ्करः–खज मन्थे, करोतेः पचाद्यच्, अरुर्द्विषदजन्तस्येति मुम् । सिषासवः–षण सम्भक्तौ, सति सनीवन्तर्धेति विकल्पनात् इडभावः, जनसनखनां सन्झलोरित्यात्वम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**उत् ते॑ श॒तान्म॑घव॒न्नुच्च॒ भूय॑स॒ उत् स॒हस्रा॑द् रिरिचे कृ॒ष्टिषु॒ श्रवः॑ ।**
**अ॒मा॒त्रं त्वा॑ धि॒षणा॑ तित्विषे म॒ह्यधा॑ वृ॒त्राणि॑ जिघ्नसे पुरन्दर ।। ७ ।।**

उत् । ते । शतात् । मघऽवन् । उत् । च । भूयसः । उत् । सहस्रात् । रिरिचे । कृष्टिषु । श्रवः । अमात्रम् । त्वा । धिषणा । तित्विषे । मही । अध । वृत्राणि । जिघ्नसे । पुरम्ऽदर ।। ७ ।।

**स्कन्द–** **रिरिचे** इत्याख्यातं प्रत्युच्छब्दमनुषक्तव्यम् । उद्रिच्यते अतिरिच्यत इत्यर्थः । **ते तव शतात् मघवन्! उत् च** अतिरिच्यते **भूयसः** बहुतरात् । शतद्वयात् शतत्रयाद्वेत्यर्थः । **उत् सहस्रात् रिरिचे** सहस्राच्चातिरिच्यते । **कृष्टिषु** कृष्टिरिति मनुष्यनाम (निघ.२,३) । निर्धारणे चैषा सप्तमी । मनुष्याणां मध्ये । **श्रवः** कीर्तिरन्नं धनं वा । अथवा श्रवश्शब्दोऽत्र सामर्थ्यात् बलवचनः । शवश्शब्दस्य वा बलनाम्नो रेफ उपजनः । बलमित्यर्थः । किञ्च **अमात्रम्** मात्राशब्दः परिमाणवचनः । अपरिमाणमत्यन्तमहान्तम् **त्वा धिषणा** स्तुतिलक्षणा वाक् **तित्विषे** दीपयति । वृत्रहननयोत्तेजयतीत्यर्थः । **मही** महती । उत्तेजनानन्तरं च **वृत्राणि** शत्रून् **जिघ्नसे** हंसि त्वम् हे **पुरन्दर!** असुरपुराणां दारयितः! ।। ७ ।।

**वेङ्कटमाधव–** सङ्ग्रामे मनुष्यशतस्य या कीर्तिः भवति ततोऽपि अतिरिक्तं तव यशः । **उत् च** द्विशतात् त्रिशतात् च, **उत सहस्रात्** । मनुष्यमध्ये त्वाम् अपरिमाणबलं महती स्तुतिः दीपयति । अथ त्वम् शत्रून् हंसि पुरणां दारयितः! ।। ७ ।।

**मुद्गल–** हे **मघवन्!** धनवन्निन्द्र! **कृष्टिषु** स्तोतृषु मनुष्येषु त्वया दीयमानम् **श्रवः** यदन्नमस्ति तत् **शतात्** शतसङ्ख्याकात् धनात् **उत् रिरिचे** उद्रिक्तमधिकं भवति । अपि च **भूयसः** शतसङ्ख्याकादपि बहुतराद् धनात् **उत्** रिरिचे अधिकं भवति । किं बहुना । **सहस्रात्** सहस्रसङ्ख्याकादपि **उत्** रिरिचे । त्वया दत्तं तदन्नम् अक्षयमित्यर्थः । अपि च **अमात्रम्** मात्रयेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकम् **त्वा** त्वाम् **मही** महती **धिषणा** अस्मदीया स्तुतिलक्षणा वाक् **तित्विषे** दीपयति । त्वत्साम्बन्धिनो गुणान् प्रकाशयति । हे **पुरन्दर!** शत्रूणां पुरां दारयितरिन्द्र! **अध** स्तुत्यनन्तरम् **वृत्राणि** आवरकान् शत्रून् **जिघ्नसे** हंसि विनाशयसि च ।। ७ ।।

**सायण–** हे **मघवन्!** धनवन्निन्द्र, **कृष्टिषु** स्तोतृषु मनुष्येषु त्वया दीयमानं **श्रवः** यदन्नमस्ति तत् **शतात्** शतसङ्ख्याकाद्धनात् **उत् रिरिचे** उद्रिक्तमधिकं भवति । अपि च **भूयसः** शतसङ्ख्याकादपि बहुतराद्धनात् **उत्** रिरिचे अधिकं भवति । किं बहुना । **सहस्रात्**

सहस्रसङ्ख्याकादपि **उत्** रिरिचे । त्वया दत्तं तदन्नमक्षयमित्यर्थः । अपि च **अमात्रं** मात्रयेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकं त्वां **मही** महती **धिषणा** अस्मदीया स्तुतिलक्षणा वाक् **तित्विषे** दीपयति । त्वत्सम्बन्धिनो गुणान् प्रकाशयति । हे **पुरन्दर!** शत्रूणां पुरां दारयितरिन्द्र **अध** स्तुत्यनन्तरं **वृत्राणि** आवरकान् शत्रून् **जिघ्नसे** हंसि विनाशयसि ।

रिरिचे । 'रिचिर् विरेचने' । कर्मणि लिट् । तित्विषे । 'त्विष दीप्तौ' । जिघ्नसे । हन्तेर्लेटि व्यत्ययेन आत्मनेपदम् । 'लेटोऽडाटौ' इति अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'गमहन' इत्यादिना उपधालोपः । स्थानिवद्भावात् द्विर्वचनादि । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । पुरन्दर । 'पूःसर्वयोर्दारिसहोः' (पा.सू.३.२.४१) इति खच् । 'खचि ह्रस्वः' (पा.सू. ६.४.९४) इति ह्रस्वत्वम् । वाचंयमपुरन्दरौ च' (पा.सू.६.३.६९) इति निपातनात् अम् ।।

**सिद्धाञ्जनम्–** हे **मघवन्!** धनाढ्येन्द्र, **कृष्टिषु** कर्षणशीलेषु उद्योगिषु, उद्युक्तेषु मनुष्येष्विति यावत्, **ते** तव सम्बन्धि **श्रवः** यशः, वैभवमित्यर्थः, **शतात् उद्रिरिचे** शतसङ्ख्याकात् त्वदीयवैभवभेदात् उद्रिक्तं अधिकं भवति, तव श्रवसो विजृम्भणं शतविधं ततोऽप्यधिकं भवतीत्यर्थः । अपि च **भूयसः च** बहुतरात् श्रवसोऽपि **उत्** उद्रिरिचे । **सहस्रात्** सहस्रसङ्ख्याकादपि **उत्** उद्रिक्तं भवति । **अमात्रम्** मात्रारहितं, मात्रा इयत्ता तद्वर्जितं **त्वा** त्वां **मही** महती **धिषणा** अस्मदीया ध्यानलक्षणा धीः स्तुतिर्वाग्वा **तित्विषे** दीपयति, त्वदीयविभवानाविष्करोति । **अध** अनन्तरं एवमुद्दीपितस्त्वं हे **पुरन्दर!** पुराणामासुराणां दारयितः, **वृत्राणि** आवरकाणि उपरोधकानि धनानि आसुराणि तमांसि **जिघ्नसे** हंसि, प्रध्वंसयति ।

रिरिचे–रिचिर् विरेचने, कर्मणि लिट् । तित्विषे–त्विष दीप्तौ । जिघ्नसे–हन्तेः लेटि व्यत्ययेनात्मनेपदं, अडागमः, शपः शलुः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमीर्नृपते त्रीणि रोचना ।**
**अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिन्द्र जनुषा सनादसि ।। ८ ।।**

त्रिविष्टिऽधातु । प्रतिऽमानम् । ओजसः । तिस्रः । भूमीः । नृऽपते । त्रीणि । रोचना ।
अति । इदम् । विश्वम् । भुवनम् । ववक्षिथ । अशत्रुः । इन्द्र । जनुषा । सनात् । असि ।।

उत् । ते । शतात् । मघऽवन् । उत् । च । भूयसः । उत् । सहस्रात् । रिरिचे । कृष्टिषु । श्रवः । अमात्रम् । त्वा । धिषणा । तित्विषे । मही । अध । वृत्राणि । जिघ्नसे । पुरम्ऽदर ।। ७ ।।

**स्कन्द–** **रिरिचे** इत्याख्यातं प्रत्युच्छब्दमनुषक्तव्यम् । उद्रिच्यते अतिरिच्यत इत्यर्थः । **ते तव शतात् मघवन्! उत् च** अतिरिच्यते **भूयसः** बहुतरात् । शतद्वयात् शतत्रयाद्वेत्यर्थः । **उत् सहस्रात् रिरिचे** सहस्राच्चातिरिच्यते । **कृष्टिषु** कृष्टिरिति मनुष्यनाम (निघ.२,३) । निर्धारणे चैषा सप्तमी । मनुष्याणां मध्ये । **श्रवः** कीर्तिरन्नं धनं वा । अथवा श्रवश्शब्दोऽत्र सामर्थ्यात् बलवचनः । शवश्शब्दस्य वा बलनाम्नो रेफ उपजनः । बलमित्यर्थः । किञ्च **अमात्रम्** मात्राशब्दः परिमाणवचनः । अपरिमाणमत्यन्तमहान्तम् **त्वा धिषणा** स्तुतिलक्षणा वाक् **तित्विषे** दीपयति । वृत्रहननयोत्तेजयतीत्यर्थः । **मही** महती । उत्तेजनानन्तरं च **वृत्राणि** शत्रून् **जिघ्नसे** हंसि त्वम् हे **पुरन्दर!** असुरपुराणां दारयितः! ।। ७ ।।

**वेङ्कटमाधव–** सङ्ग्रामे मनुष्यशतस्य या कीर्तिः भवति ततोऽपि अतिरिक्तं तव यशः । **उत् च** द्विशतात् त्रिशतात् च, **उत सहस्रात्** । मनुष्यमध्ये त्वाम् अपरिमाणबलं महती स्तुतिः दीपयति । अथ त्वम् शत्रून् हंसि पुरणां दारयितः! ।। ७ ।।

**मुद्गल–** हे **मघवन्!** धनवन्निन्द्र! **कृष्टिषु** स्तोतृषु मनुष्येषु त्वया दीयमानम् **श्रवः** यदन्नमस्ति तत् **शतात्** शतसङ्ख्याकात् धनात् **उत् रिरिचे** उद्रिक्तमधिकं भवति । अपि च **भूयसः** शतसङ्ख्याकादपि बहुतराद् धनात् उत् रिरिचे अधिकं भवति । किं बहुना । **सहस्रात्** सहस्रसङ्ख्याकादपि **उत्** रिरिचे । त्वया दत्तं तदन्नम् अक्षयमित्यर्थः । अपि च **अमात्रम्** मात्रेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकम् **त्वा** त्वाम् **मही** महती **धिषणा** अस्मदीया स्तुतिलक्षणा वाक् **तित्विषे** दीपयति । त्वत्साम्बन्धिनो गुणान् प्रकाशयति । हे **पुरन्दर!** शत्रूणां पुरां दारयितरिन्द्र! **अध** स्तुत्यनन्तरम् **वृत्राणि** आवरकान् शत्रून् **जिघ्नसे** हंसि विनाशयसि च ।। ७ ।।

**सायण–** हे **मघवन्!** धनवन्निन्द्र, **कृष्टिषु** स्तोतृषु मनुष्येषु त्वया दीयमानं **श्रवः** यदन्नमस्ति तत् **शतात्** शतसङ्ख्याकाद्धनात् **उत् रिरिचे** उद्रिक्तमधिकं भवति । अपि च **भूयसः** शतसङ्ख्याकादपि बहुतराद्धनात् उत् रिरिचे अधिकं भवति । किं बहुना । **सहस्रात्**

सहस्रसङ्ख्याकादपि **उत्** रिरिचे । त्वया दत्तं तदन्नमक्षयमित्यर्थः । अपि **च अमात्रं** मात्रयेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकं त्वां **मही** महती **धिषणा** अस्मदीया स्तुतिलक्षणा वाक् **तित्विषे** दीपयति । त्वत्सम्बन्धिनो गुणान् प्रकाशयति । हे **पुरन्दर!** शत्रूणां पुरां दारयितरिन्द्र **अध** स्तुत्यनन्तरं **वृत्राणि** आवरकान् शत्रून् **जिघ्नसे** हंसि विनाशयसि ।

रिरिचे । 'रिचिर् विरेचने' । कर्मणि लिट् । तित्विषे । 'त्विष दीप्तौ' । जिघ्नसे । हन्तेर्लेटि व्यत्ययेन आत्मनेपदम् । 'लेटोऽडाटौ' इति अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'गमहन' इत्यादिना उपधालोपः । स्थानिवद्भावात् द्विर्वचनादि । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । पुरन्दर । 'पूःसर्वयोर्दारिसहोः' (पा.सू.३.२.४१) इति खच् । 'खचि ह्रस्वः' (पा.सू. ६.४.९४) इति ह्रस्वत्वम् । वाचंयमपुरन्दरौ च' (पा.सू.६.३.६९) इति निपातनात् अम् ॥

**सिद्धाञ्जनम्–** हे **मघवन्!** धनाढ्येन्द्र, **कृष्टिषु** कर्षणशीलेषु उद्योगिषु, उद्युक्तेषु मनुष्येष्विति यावत्, **ते** तव सम्बन्धि **श्रवः** यशः, वैभवमित्यर्थः, **शतात् उद्रिरिचे** शतसङ्ख्याकात् त्वदीयवैभवभेदात् उद्रिक्तं अधिकं भवति, तव श्रवसो विजृम्भणं शतविधं ततोऽप्यधिकं भवतीत्यर्थः । अपि च **भूयसः च** बहुतरात् श्रवसोऽपि उत् उद्रिरिचे । **सहस्रात्** सहस्रसङ्ख्याकादपि उत् उद्रिक्तं भवति । **अमात्रम्** मात्रारहितं, मात्रा इयत्ता तद्वर्जितं **त्वा** त्वां **मही** महती **धिषणा** अस्मदीया ध्यानलक्षणा धीः स्तुतिर्वाग्वा **तित्विषे** दीपयति, त्वदीयविभवानाविष्करोति । **अध** अनन्तरं एवमुद्दीपितस्त्वं हे **पुरन्दर!** पुराणामासुराणां दारयितः, **वृत्राणि** आवरकाणि उपरोधकानि धनानि आसुराणि तमांसि **जिघ्नसे** हंसि, प्रध्वंसयति ।

रिरिचे–रिचिर् विरेचने, कर्मणि लिट् । तित्विषे–त्विष दीप्तौ । जिघ्नसे–हन्तेः लेटि व्यत्ययेनात्मनेपदं, अडागमः, शपः शलुः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमीर्नृपते त्रीणि रोचना ।**
**अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिन्द्र जनुषा सनादसि ॥ ८ ॥**
त्रिविष्टिऽधातु । प्रतिऽमानम् । ओजसः । तिस्रः । भूमीः । नृऽपते । त्रीणि । रोचना । अति । इदम् । विश्वम् । भुवनम् । ववक्षिथ । अशत्रुः । इन्द्र । जनुषा । सनात् । असि ॥

**स्कन्द–** धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः । देवपितृमनुष्योपभोग्यास्त्रयोऽपि विष्टा व्याप्ताः येन तत् **त्रिविष्टिधातु** । यदायत्तास्त्रयोऽपि शरीरस्थितिहेतवोऽन्नरसा इत्यर्थः । अथवा त्रयो धातवः शीतोष्णवर्षाणि त्रयो वा लोकाः, तेषु सन्धीयते, व्याप्ता येन तत् त्रिविष्टिधातु । किं पुनस्तत् । सामर्थ्यलक्षणं बलम् । कीदृशम् । **प्रतिमानम्** उपमानभूतं सर्वस्य **ओजसः** बलस्य । **तिस्रः भूमीः** भूमिशब्देनात्र साहचर्यात् त्रयो लोका उच्यन्ते । त्रीन् लोकानित्यर्थः । हे **नृपते!** मनुष्याणां पालयितः! **त्रीणि रोचना** त्रीणि च दीप्तिस्वभाविकानि ज्योतींषि । कानि । आग्नेयं वैद्युतं सौर्यं च । **इदम् विश्वम् भुवनम्** इदं सर्वं भूतजातम् **अति ववक्षिथ** वहतेरिदं साभ्यासस्य रूपम् । सुष्ठु वहसि धारयतीत्यर्थः । किञ्च **अशत्रुः** शत्रुशब्दोऽत्र शातयितृवचनः क्रियाशब्दः । शातयितृरहितस्त्वं हे **इन्द्र! जनुषा** जन्मनैव । **सनात्** चिरन्तनः **असि** । जन्मन एव प्रभृति न तव कश्चिद्विनाशने समर्थ इत्यर्थः ।।

**वेङ्कटमाधव–** त्रिभिः शुल्बै निर्मिता रज्जुः दृढतमा अच्छेद्या भवति तादृश इन्द्रः **ओजसः** च प्रतिद्वन्द्वी भवति । तादृश त्वं नृणां स्वामिन्! **तिस्रः भूमीः त्रीणि** च तेजांसि **अति** वहसि । किं बहुना सर्वम् **भुवनम्** अतिवहसि । जन्मनैव चिरात् प्रभृति शत्रुवर्जितः भवसि इति ।। ८ ।।

**मुद्गल–** हे **नृपते!** नृणां पालयितरिन्द्र! त्वम् **ओजसः** सर्वेषां प्राणिनां बलस्य **प्रतिमानम्** प्रतिनिधिरसि । कीदृशम् । **त्रिविष्टिधातु** धातुशब्दो रज्जुभागवचनः । यथा त्रिविष्टिः त्रिगुणिता रज्जुः द्रढीयसी, एवमिन्द्रोऽपि दृढतर इत्यर्थः । किञ्च त्वम् **तिस्रः भूमीः** त्रीन् लोकान् **त्रीणि रोचना** त्रीणि तेजांसि दिवि आदित्याख्यम्, अन्तरिक्षे वैद्युतरूपमग्निं, पृथिव्याम् आहवनीयादिरूपेण वर्त्तमानं पार्थिवमग्निम् एवं त्रीन् लोकान् त्रीणि तेजांसि **अति ववक्षिथ** अतिशयेन वोढुमिच्छसि अपि च **इदम् विश्वम्** सर्वम् भुवनम् भूतजातं च अतिवोढुमिच्छसि । सर्वस्य जगत पालनेन त्वमेव **सर्वेषां** निर्वाहको भवसीत्यर्थः । यस्मात् हे **इन्द्र!** त्वम् **सनात्** चिरकालादारभ्य **जनुषा** जन्मना जन्मप्रभृति **अशत्रुः** सपत्नरहितः **असि** ।। ८ ।।

**सायण–** हे **नृपते!** नृणां पालयितरिन्द्र त्वम् **ओजसः** सर्वेषां प्राणिनां बलस्य **प्रतिमानं** प्रतिनिधिरसि । कीदृशं प्रतिमानम् । **त्रिविष्टिधातु** । धातुशब्दो रज्जुभागवचनः । यथा 'त्रिधातु पञ्चधातु वा शुल्बं करोति' इति । यथा त्रिविष्टिस्त्रिगुणिना रज्जुः द्रढीयसी एवमिन्द्रोऽपि दृढतर

इत्यर्थः । किञ्च त्वं **तिस्रो भूमीः** त्रीन् लोकान् **त्रीणि रोचना** त्रीणि तेजांसि दिवि आदित्याख्यम् अन्तरिक्षे वैद्युतरूपमग्निं पृथिव्याम् आहवनीयादिरूपेण वर्तमानं पार्थिवमग्निम् एवं त्रीन् लोकान् त्रीणि तेजांसि च **अति ववक्षिथ** अतिशयेन वोढुमिच्छसि । अपि च **इदं विश्वं** सर्वं **भुवनं** भूतजातं चातिवोढुमिच्छसि । सर्वस्य जगतः पालनेन त्वमेव सर्वेषां निर्वाहकः भवसीत्यर्थः । यस्मात् हे **इन्द्र!** त्वं **सनात्** चिरकालादारभ्य **जनुषा** जन्मना जन्मप्रभृति **अशत्रुः** सपत्नरहितः असि ।

त्रिविष्टिधातु । त्रिधा त्रिप्रकारेण विष्ट्या प्रवेशनेन विधीयते क्रियते इति त्रिविष्टिधातुः त्रिगुणिता रज्जुः । विशेभवि क्तिन् । धाञः 'सितनिगमिमसि' (उ.सू.१.६९) इत्यादिना कर्मणि तुन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अत्र दृढरज्जुवाचकः शब्दस्तद्गतं दार्ढ्यं लक्षयित्वा तद्वति प्रतिमाने वर्तते । यथा माणवकेऽग्निशब्दः । तिस्रः । शसि 'त्रिचतुरोः स्त्रियाम्' इति तिस्रादेशः अन्तोदात्तः । 'अचि र ऋतः' इति रेफादेशे 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । ववक्षिथ । 'वह प्रापणे' इत्यस्मात् इच्छासनि ढत्वकत्वषत्वानि । 'सन्यतः' इति इत्वाभावश्छान्दसः । छान्दसे लिटि 'अमन्त्रे' इति निषेधात् आम्प्रत्ययाभावः । जनुषा । 'जनेरुसिः' ॥

**सिद्धाञ्जनम्–** हे **नृपते!** नृणां नेतृणां पते अधिपते पालयितः, इन्द्र, त्वं **ओजसः** बलस्य सर्वस्यापि **प्रतिमानम्** प्रतिनिधिर्भवसि । कीदृशं प्रतिमानम्? **त्रिविष्टिधातु** त्रिधा विष्ट्या प्रवेशनेन धीयते इति त्रिविष्टिधातुः त्रिधा भूरादिस्थानत्रये इन्द्रबलस्य प्रवेशनेनास्य धारणमित्यर्थः । 'यथा त्रिगुणितरज्जुर्द्रढीयसी तथा इन्द्रोऽपि दृढतर इति' सायणीयम् । अत्र तिस्रो भूमीरित्यादिश्रवणात् त्रिकोपन्यासः अस्मदुक्तार्थस्य प्रोद्बलको भवति । किञ्च त्वं **तिस्रो भूमीः** त्रीन् लोकान् भूरादीन् **त्रीणि रोचना** त्रीणि ज्योतीषि, लोकत्रयप्रकाशकानि अग्निवाय्वादित्यात्मकानि दैवतानि तेजांसि । सर्वेषां देवानां तैजसरूपत्वात्, **अति ववक्षिथ** अतिशयेन वोढुमिच्छति । **इदम् विश्वम् भुवनम्** सर्वमिदं भूतजातं च अतिवोढुमिच्छसि । यस्मात् त्वं हे **इन्द्र, जनुषा** जन्मना **सनात्** चिरात् **अशत्रुरसि** विरोधिरहितोऽसि ।

त्रिविष्टिधातु-विशेर्भावे क्तिन्, धाञः कर्मणि तुप्रत्ययः । ववक्षिथ-वहतेः इच्छासनि ढत्वकत्वषत्वानि, सन्यत इतीत्वाभावश्छाचन्दसः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**त्वां दे॒वेषु॑ प्रथ॒मं ह॑वामहे॒ त्वं ब॑भूथ॒ पृत॑नासु सास॒हिः ।**
**सेमं नः॑ का॒रुमु॑पम॒न्युमु॒द्भिद॒मिन्द्रः॑ कृणोतु प्रस॒वे रथं॑ पु॒रः ।। ९ ।।**
त्वाम् । दे॒वेषु॑ । प्र॒थ॒मम् । ह॒वा॒म॒हे॒ । त्वम् । ब॒भू॒थ॒ । पृत॑नासु । स॒स॒हि । स । इ॒मम् ।
न॒ । का॒रुम् । उ॒प॒ऽम॒न्युम् । उ॒त्ऽभिद॑म् । इन्द्रः॑ । कृ॒णोतु॑ । प्र॒ऽस॒वे । रथ॑म् । पु॒र ।।

**स्कन्द–** देवेषु इति निर्धारण एषा सप्तमी । **त्वाम्** देवानां मध्ये **प्रथमम्** वयम् **हवामहे** । किञ्च **त्वम् बभूथ** भवसि **पृतनासु** सङ्ग्रामेषु **सासहिः** अभिभविता शत्रूणाम् । परोऽर्धर्चः परोक्षकृतत्वात् भिन्नं वाक्यम् । **सः** प्रकृत इन्द्रः **इमम् नः कारुम् उपमन्युम् अद्भिदम्** नः इत्येकवचनस्य स्थाने बहुवचनम् । इमं मामिति सर्वत्र चात्र पुर इत्येतेन अव्ययेन अप्रत्ययेन योगात् षष्ट्यर्थे द्वितीया । अस्य मम कुत्सनाम्नः ऋत्विजो वा । कारुम् । स्तोतृनामैतत् (निघ.३,१६) । स्तोतुः । उपमन्युम् । मन्युशब्दोऽत्र मन्यतेः कान्तिकर्मणो द्रष्टव्यः, न क्रोध-नाम । उपगतकामस्य । प्रार्थनावत इत्यर्थः । उद्भिदम् उद्भेत्तुः । अपूर्वाणां स्तुतीनां जनयितुरित्यर्थः । पुनः अग्रतः इन्द्रः आत्मीयम् **रथम् कृणोतु** करोतु । **प्रसवे** प्रकृष्टः सवो यज्ञः प्रसवस्तत्र । प्रकृष्टेऽस्मिन् यज्ञ इत्यर्थः ।। ९ ।।

**वेङ्कटमाधव– त्वाम्** देवानां मध्ये **प्रथमम् हवामहे** । त्वम् अभव सङ्ग्रामेषु सोढा । **सः इन्द्रः** अस्माकं कर्तारम् उपमन्तारम् उद्भेदकम् आत्मीयम् **रथम्** युद्धारम्भे अग्रतः **कृणोतु** ।।

**मुद्गल–** हे इन्द्र! देवेषु **प्रथमम्** श्रेष्ठम् **त्वाम् हवामहे** यागार्थम् आह्वयामहे । तथा **त्वम् पृतनासु** सङ्ग्रामेषु **सासहिः बभूथ** शत्रूणाम् अभिभवितासि । उत्तरार्धः परोक्षकृतः । **सः इन्द्रः नः** अस्माकम् **कारुम्** स्तुतीनां कर्तारम् **उपमन्युम्** उपमन्तारं सर्वज्ञम् **उद्भिदम्** शत्रूणाम् उद्भेतारम् **इमम्** एवंगुणविशिष्टं पुत्रम् **कृणोतु** करोतु । अपि च **प्रसवे** युद्धोत्पत्तावस्मदीयम् **रथम् पुरः** अन्येभ्यो रथेभ्यः पुरतो वर्तमानं करोतु ।। ९ ।।

**सायण–** हे इन्द्र! **देवेषु प्रथमं** श्रेष्ठं **त्वां हवामहे** यागार्थमाह्वयामहे । तथा **त्वं पृतनासु** सङ्ग्रामेषु **ससहिः बभूथ** शत्रूणामभिभवितासि । उत्तरार्धः परोक्षकृतः । **सः इन्द्रः नः** अस्माकं **कारुं** स्तुतीनां कर्तारम् **उपमन्युम्** उपमन्तारं सर्वज्ञम् **उद्भिदं** शत्रूणामुद्भेत्तारम् **इमम्**

एवङ्गुणविशिष्टं पुत्रं **कृणोतु** करोतु । अपि च **प्रसवे** युद्धोत्पत्तावस्मदीयं **रथं पुरः** अन्येभ्यो रथेभ्यः पुरतो वर्तमानं करोतु । यद्वा । कारुमित्यादीनि रथविशेषणानि । कारुं युद्धस्य कर्तारम् उपमन्युम् उपगतेन प्राप्तेन मन्युना क्रोधेन युक्तम् उद्भिदं मार्गेऽवस्थितानां वृक्षादीनामुद्भेत्तारमतिशयेन भङ्क्तारम् ।

बभूथ । 'बभूथा ततन्थ जगृम्भ ववर्थेति निगमे' इति निपातनात् इडभावः । स इमम् । 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोपः । प्रसवे । 'षूङ् प्राणिप्रसवे' । ऋदोरप् । थाथादिना उत्तरपदान्तोदात्तत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** हे इन्द्र, **देवेषु प्रथमम्** अग्रगण्यं **त्वाम् हवामहे** आह्वयामः यजनार्थम् । **त्वम्** त्वमपि **पुतनासु** संग्रामेषु **ससहिः** अभिभविता शत्रूणां **बभूथ** भवसि । अथ परोक्षकृतः अर्धर्चः । **सः इन्द्रः** तादृश इन्द्रः **इमम् रथम् नः** अस्माकं **पुरः** पुरस्तादग्र इत्यर्थः । **कृणोतु** वर्तमानं करोतु । कदा? **प्रसवे** गवादिलाभार्थकयुद्धोत्पत्तौ सत्याम् । कीदृशं रथम् ? **कारुम्** कर्तारं कर्तव्यक्रियासमर्थं, **उपमन्युम्** उपगतेन प्राप्तेन मन्युना क्रोधेन युक्तं वेगद्योतकमिदं **उद्भिदम्** उद्भेत्तारं प्रतिबन्धकानाम् । बभूथ-बभूथेत्यादीनां इडभावो निपात्यते । सेमम्- स इमं, सोऽचि लोपे चेत् पादपूरणमिति सुलोपः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं जिगेथ न धना रुरोधिथार्भेष्वाजा मघवन् महत्सु च ।**
**त्वामुग्रमवसे सं शिशीमस्यथा न इन्द्र हवनेषु चोदय ।। १० ।।**

त्वम् । जिगेथ । न । धना । रुरोधिथ । अर्भेषु । आजा । मघऽवन् । महत्ऽसु । च ।
त्वाम् । उग्रम् । अवसे । सम् । शिशीमसि । अथ । नः । इन्द्र । हवनेषु । चोदय ।।

**स्कन्द– त्वम्** जयसि । जित्वा च **न धना रुरोधिथ** स्तोतृभ्यो न धनानि निरुणत्सि । सर्वाणि ददासीत्यर्थः । क्व पुनर्जयामि उच्यते । **अर्भेषु आजा** अर्भशब्दोऽल्पवचनः । दभ्रमर्भकम् इति स्वार्थिककप्रत्ययान्तमल्पनामसु (निघ.३,२) पठितम् । आजिशब्दोऽपि सङ्ग्रामवचनः । अल्पेषु सङ्ग्रामेषु । हे **मघवन्! महत्सु च** । एतज्जानन्तो वयम् **त्वाम् उग्रम्** अप्रसह्यम् **अवसे** तर्पणाय **सम् शिशीमसि** । स्तुतिभिः संस्कृतं इत्यर्थः । अथ एतस्मात्कारणात् **नः** अस्मान् हे **इन्द्र! हवनेषु** होमेषु **चोदय** । जुह्वतामस्माकं प्रतिपद्यस्वेत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** **त्वम्** जयसि न च धनानि रुणत्सि क्षुद्रेषु **मघवन्! महत्सु च** पुरुषेषु । यः सङ्ग्रामोऽस्माकं भवति तस्मिन् **त्वाम्** उद्गूर्णं रक्षणाय स्तोत्रैः तीक्ष्णीकुर्मः । अथ अस्मान् **इन्द्र!** तस्मिन् सङ्ग्रामे स्वयमेव **चोदय** हवनेषु सत्सु इति ।। १० ।।

**मुद्गल–** हे **इन्द्र!** त्वम् **जिगेथ** शत्रून् जयसि । तथा **धना** शत्रुभ्योऽपहृतानि धनानि **न रुरोधिथ** नावरुणत्सि । स्तोतृभ्यः प्रयच्छसीत्यर्थः । हे **मघवन्!** धनवन्निन्द्र! **अर्भेषु** अल्पेषु **आजा** आजिषु सङ्ग्रामेषु **सहत्सु च** प्रौढेषु च **अवसे** अस्माकं रक्षणार्थम् **उग्रम्** उद्गूर्णम् अधिकबलम् **त्वाम् सम् शिशीमसि** स्तोत्रैस्तीक्ष्णीकुर्मः । अथ अनन्तरं हे **इन्द्र!** त्वम् **हवनेषु** युद्धार्थमाह्वानेषु सत्सु आगत्य **नः** अस्मान् **चोदय** सङ्ग्रामेषु प्रेरय । जयं प्रापयेत्यर्थः ।।१०।।

**सायण–** हे इन्द्र! त्वं **जिगेथ** शत्रून् जयसि । तथा **धना** शत्रुभ्योऽपहृतानि धनानि **न रुरोधिथ** नावरुणत्सि । स्तोतृभ्यः प्रयच्छसीत्यर्थः । हे **मघवन्!** धनवन्निन्द्र, **अर्भेषु** अल्पेषु **आजा** आजिषु सङ्ग्रामेषु **महत्सु च** प्रौढेषु सङ्ग्रामेषु च **अवसे** अस्माकं रक्षणार्थम् **उग्रम्** उद्गूर्णम् अधिकबलं **त्वां सं शिशीमसि** स्तोत्रैस्तीक्ष्णीकुर्मः । **अथ** अनन्तरं हे **इन्द्र!** त्वं **हवनेषु** युद्धार्थमाह्वानेषु सत्सु आगत्य **नः** अस्मान् **चोदय** सङ्ग्रामेषु प्रेरय । जयं प्रापयेत्यर्थः ।

जिगेथ । 'जि जये' । लिटि थलि क्रादिनियमात् प्राप्तस्य इटः 'अचस्तास्वत्थल्यनिटो नित्यम्' (पा.सू.७.२.६१) इति प्रतिषेधः । 'सन्लिटोर्जेः' इति अभ्यासादुत्तरस्य जकारस्य कुत्वम् । रुरोधिथ । क्रादिनियमात् इट् । आजा । 'सुपां सुलुक्' इति सप्तमीबहुवचनस्य डादेशः । शिशीमसि । 'शो तनूकरणे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'आदेचः' इति आत्वम् । द्विर्वचने 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । 'ई हल्यधोः' इति ईकारान्तादेशः । इदन्तोमसिः ।। १० ।।

**सिद्धाञ्जनम्–** हे इन्द्र, **त्वम् जिगेथ** त्वं जयसि शत्रून्, **धना** अस्माकं प्राप्तव्यानि ज्योतिर्बलादिलक्षणानि धनानि **न रुरोधिथ** नावरुणत्सि, तेषां अस्मान्प्रति प्रापणे तवानुग्रहो वर्तत एव । हे **मघवन्!** धनवन् **अर्भेषु** अल्पेषु **महत्सु च** प्रौढेषु च **आजा** आजौ आजिषु संग्रामेषु, वचनव्यत्ययः, **अवसे** रक्षणाय **उग्रम्** अधिकबलं **त्वाम् संशिशीमसि** सम्यक् तीक्ष्णीकुर्मः, तपसा ध्यानेन स्तोत्रेण च । **अथ** अनन्तरं हे **इन्द्र! हवनेषु** अस्माभिः क्रियमाणेषु आह्वानेषु **नः** अस्मान् **चोदय** प्रेरय कर्तव्यं उद्दिश्य ।

जिगेथ-जयतेः लिट् छान्दसः । रुरोधिथ-क्रादिनियमादिट् । शिशीमसि-शो तनूकरणे, विकरणस्य श्लुः ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिहृताः सनुयाम वाजम् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। ११ ।।**
**विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽहृताः । सनुयाम । वाजम् ।**
**तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ।।**

**स्कन्द–** विश्वाहा इत्याद्युक्तार्थम् (ऋ १,१००,१९ इ.) ।। ११ ।।

**वेङ्कटमाधव–** ऋ१,१००,१९, द्र. ।। ११ ।।

**मुद्गल– विश्वाहा** सर्वकालम् **नः इन्द्रः अधिवक्ता अस्तु** सर्वदाऽस्माकम् इन्द्रः पक्षपातवचनयुक्तो भवतु । वयं च **अपरिहृताः** अकुटिलगतयः सन्तः **वाजम्** हविर्लक्षणमन्नम् **सनुयाम** सम्भजामहे । यदनेन सूक्तेनास्माभिः प्रार्थितम् **तत्** मित्रावरुणादयः **ममहन्ताम्** पूजितं कुर्वन्तु ।। ११ ।।

**सायण–** व्याख्यातेयं 'रोहिच्छ्यावा' इति वर्गे (ऋ.सं.१.१००.१९) । इन्द्रः सर्वेष्वहःस्वस्माकं पक्षपातेन वक्ता भवतु । वयं चाकुटिलगतयः सन्त इन्द्रेण दत्तमन्नं लभामहे । यदस्माभिः प्रार्थितम् अस्मदीयं तन्मित्रादयः पूजितं कुर्वन्तु ।। ११ ।।

**सिद्धाञ्जनम्–** व्याख्यातेयं स यो वृषेति सूक्तस्यान्ते ।। ११ ।।

।। इति प्रथमाष्टके सप्तमाध्याये पञ्चदशो वर्गः ।।

## ।। अथ षोडशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम्-१०३)

(८ कुत्स आङ्गिरसः । इन्द्रः । त्रिष्टुप्)

**तत् त इन्द्रियं परमं पराचैरधारयन्त कवयः पुरेदम् ।**
**क्षमेदमन्यद् दिव्य१न्यदस्य समी पृच्यते समनेव केतुः ।। १ ।।**

**तत् । ते । इन्द्रियम् । परमम् । पराचैः । अधारयन्त । कवयः । पुरा । इदम् । क्षमा । इदम् । अन्यत् । दिवि । अन्यत् । अस्य । सम् । ईमिति । पृच्यते । समनाऽईव । केतुः ।। १ ।।**

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदस्माकं स्तोत्रमभिप्रेतम् **तत् ते** तव स्वभूतम् **इन्द्रियम्** । इन्द्रजुष्टत्वादिन्द्रियं सेनालक्षणं बलम् इहोच्यते । अथवा इन्द्रियशब्दोऽत्र वीर्यवचनः, सामर्थ्याच्चान्तर्णीतमत्वर्थः । वीर्यवत् सेनालक्षणं बलम् । कीदृशम् । उच्यते । **परमम्** उत्कृष्टम् । **पराचैः** अञ्चतिर्गत्यर्थः । परागमनैः प्राप्तिभिः । यत्र यत्र व्यवस्थितं तत्र तत्रेत्यर्थः । **अधारयन्त** स्तुत्यर्थं हविष्प्रदानार्थं च धारितवन्तः । अथवा 'इन्द्रियम्, वसु' (निघ.२,१०) इति धननामसु पाठाद् इन्द्रियशब्दोऽत्र धनवचनः । यत् स्तोतारः प्रार्थयन्ते तत्ते धनं परम पराचैः । त्वत्समीपं प्राप्येत्यर्थः । अधारयन्त आत्मना धारितवन्तः । लब्धवन्त इत्यर्थः । के । **कवयः** मेधाविनः । **पुरा** पूर्वेष्वपि कालेषु । कतमत् । **इदम्** सूक्तेऽस्मिन् मनसि वा यत् सन्निहितम् । परोऽर्धर्चो भिन्नं वाक्यम् । **क्षमा इदम् अन्यत्** 'क्षमा (निघ.१,१) इति पृथिवीनाम । सप्तम्याश्चायमाकार आदेशः । अन्यशब्दोऽत्र एकशब्दपर्यायः । पृथिव्यामिदमेकं सेनालक्षणं बलं धनं वा । **दिवि अन्यत्** अन्यत्तु द्युलोके । **अस्य** इन्द्रस्य । तच्चोभयमपि **सम् ईम् पृच्यते** ईमिति पदपूरणः । सम्पृच्यते । केन सह । यदि बलं ततः सामर्थ्यात् परस्परेण । अथ धनं ततः स्तोतृभिः । कथम् । **समना इव केतुः** सम्यङ् मन्यते जानात्यर्थमिति समना अन्तःकरणाख्या बुद्धिरिहोच्यते । 'केतुः' (निघ.३,९) इति प्रज्ञानाम । बुद्ध्येव ज्ञानम् । यथा मनसा तत्रैवान्तर्लयेन सर्वात्मना वा ज्ञानं सम्पृच्यते । एवं पृथिव्यां दिवि च इन्द्रसेना परस्परेण स्तोतृभ्यो दीयमानं धनं स्तोतृभिः सह सम्पृच्यते इत्यर्थः ।। १ ।।

**वेङ्कटमाधव– तत्** तव बलम् उत्तमम् अपराङ्मुखम् **अधारयन्त** प्राज्ञाः पुरा **इदम्** । यत् **इदम्** इदानीं दृश्यते तत् च बलं क्षमायां भवति किञ्चित् **दिवि** च **अन्यत्** इन्द्रस्य । तत् च इदम् उभयं सङ्ग्रामे ध्वजो ध्वजेन इव सम्पृक्तं भवति । उभयं समं बुद्धौ प्रतिभाति इति ।।

**मुद्गल–** 'तत् ते' इत्यष्टर्चं दशमं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

हे इन्द्र! **ते** त्वदीयम् **परमम्** उत्कृष्टम् **तत्** प्रसिद्धम् **इदम्** वर्तमानम् इन्द्रियम् बलम् **पुरा** पूर्वस्मिन् काले **कवयः** क्रान्तदर्शिनः स्तोतारः **पराचैः** पराचीनं पराङ्मुखं युद्धाभिमुखमेव **अधारयन्त** धृतवन्तः । अपि च **अस्य** इन्द्रस्य अन्यत् एकम् **इदम्** अग्न्याख्यं ज्योतिः **क्षमा** क्षमायां भूमौ वर्तते । अन्यद् एकं सूर्याख्यम् । **दवि** द्युलोके । **इम्** तदिदमुभयविधमिन्द्रस्य ज्योतिः **सम् पृच्छते** परस्परं संयुज्यते । रात्रावादित्योऽग्निना संयुक्तो भवति, अहनि त्वग्निः सूर्येण सङ्गच्छते । 'अग्निं वावादित्यः सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे.....उद्यन्तं वावादित्यमग्निरनुसमारोहति । तस्माद्धूम एवाग्नेर्दिवा ददृशे' (तै.ब्रा.२ १,२,६,७) इति श्रुतेः । अनयोः परस्परं सङ्गमने दृष्टान्तः । **समनेव केतुः** यथा समने सङ्ग्रामे युध्यमानयोरुभयोः केतुर्ध्वजः ध्वजान्तरेण संयुज्यते तद्वत् ।। १ ।।

**सायण–** 'तत्ते' इति अष्टर्चं दशमं सूक्तं कुत्सस्यार्षमैन्द्रं त्रैष्टुभम् । तथा चानुक्रान्तं– 'तत्तेऽष्टौ' इति । तृतीये छन्दोमे निष्केवल्ये इदं सूक्तं निविद्धानम् । 'विश्वजितः' इति खण्डे सूत्रितं– 'तत्त इन्द्रियमिति निष्केवल्यम्' (आश्व.श्रौ.८.७) इति ।

हे इन्द्र! **ते** त्वदीयं **परमम्** उत्कृष्टं **तत्** प्रसिद्धम् इदं वर्तमानम् **इन्द्रियं** बलं **पुरा** पूर्वस्मिन् काले **कवयः** क्रान्तदर्शिनः स्तोतारः **पराचैः** पराचीनं पराङ्मुखम् । यद्वा । पराचैः पराञ्चनैः परागमनैर्युक्तम् । युद्धाभिमुखमेव **अधारयन्त** धृतवन्तः । अपि च **अस्य** इन्द्रस्य **अन्यत्** एकम् **इदम्** अग्न्याख्यं ज्योतिः **क्षमा** क्षमायां भूमौ वर्तते । **अन्यत्** अप्येकं सूर्याख्यं **दिवि** द्युलोके । ई तदिदमुभयविधमिन्द्रस्य ज्योतिः सं पृच्यते परस्परं संयुज्यते । रात्रावादित्योऽग्निना संयुक्तो भवति । 'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' इति श्रुतेः । अहनि त्वग्निः सूर्येण सङ्गच्छते । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे' (तै.ब्रा.२.१.२, ९-१०) इति श्रुतेः । अनयोः परस्परसङ्गमने दृष्टान्तः । **समनेव केतुः** ।

समनशब्दः सङ्ग्रामवाची । यथा समने सङ्ग्रामे युध्यमानयोः उभयोः केतुर्ध्वजो ध्वजान्तरेण संयुज्यते तद्वत् ।

इन्द्रियम् । इन्द्रस्य लिङ्गं बलम् । 'इन्द्रियमिन्द्रलिङ्गम्' इति घच्प्रत्ययान्तो निपात्यते । पराचैः । अव्ययमेतत् उच्चैर्नीचैरिति यथा । यास्कस्त्वाह– 'पराचैः पराञ्चनैः' (निरु.११.२५) इति । क्षमा । 'सुपां सुलुक्' इति सप्तम्या लुक् । ईमो मलोपः सांहितिकश्छान्दसः । समनेव । 'षम ष्टम अवैक्लव्ये' । 'अन्येभ्योऽपि दृश्यते' (पा.सू.३.३.१३०) इति युच् । 'सुपां सुलुक्' इति सप्तम्या आकारः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति समासः ।। १ ।।

**सिद्धाञ्जनम्**– 'तत्त' इत्यष्टर्चं दशमं सूक्तं कुत्सस्यार्षमैन्द्रं त्रैष्टुभम् ।

हे इन्द्र! **ते** त्वदीयं **परमम्** उत्कष्टं **तत्** **इदम्** प्रसिद्धं **इन्द्रियम्** इन्द्रलिङ्गं **कवयः** द्रष्टारः सत्यश्रुतः ऋषयः **पराचैः** उच्चैर्नीचैरिव अव्ययं, पराञ्चनैरिति यास्कः परागमनैः तमसः परस्तात् गतैः, अत्यन्तमुच्चैरिति यावत्, **पुरा** चिरन्तनात्कालात् **अधारयन्त** धृतवन्तः । इन्द्रस्य लिङ्गं बलं अतीन्द्रियदर्शिभिः बहोः कालाद् दृष्टम् । **अस्य** बलवैभवं तेजो वा **इदम्** **अन्यत्** प्रत्यक्षं दृश्यमानं एकं **क्षमा** क्षमायां पृथिव्यां भवति, आग्नेयं ज्योतिरिति प्राहुः । **दिवि** द्युलोके **अन्यत्** एकं सौरं ज्योतिश्च । पार्थिवं ज्योतिरग्निः दिव्यं ज्योतिस्तु सूर्यः । **ईम्** एवमुभयविधं इन्द्रलिङ्गं द्यावापृथिव्योः ज्योतिर्द्वयात्मना **सम्पृच्यते** परस्परं संयुज्यते । ऊर्ध्वस्य सौरज्योतिषः अधोऽग्निस्वरूपे सङ्क्रमनं अधरस्याग्नेयज्योतिषः ऊर्ध्वगतेः सौरज्योतिषि सङ्क्रमनं च परस्पर-व्यतिहारेण भवतः । तत्र दृष्टान्तः– **समनेव** **केतुः** समने सङ्ग्रामे केतुः ध्वज इव, पक्षप्रतिपक्षयोः सङ्क्रमने यथा ध्वजः प्रज्ञापकं लिङ्गं, लक्षणं भवति तद्वत् ।

यजमानस्यान्तर्जातः प्रज्वलितो महान् ऋतुरग्निः ऊर्ध्वं प्रतिष्ठते, उत्तमं दिव्यं सौरं ज्योतिरधोऽवतरति यजमानं प्रति । एवमुभयोः सङ्क्रमनं इन्द्रलिङ्गस्य द्योतकं भवति ।। इन्द्रियम्– इन्द्रियं इन्द्रलिङ्गमिति घच्प्रत्ययान्तो निपात्यते । क्षमा–सप्तम्या लुक् । समना इव–षम ष्टम वैक्लव्ये, अस्माद्युच्, सप्तम्या आकारः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**स धारयत् पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज ।**
**अहन्नहिमभिनद्रौहिणं व्यहन् व्यंसं मघवा शचीभिः ।। २ ।।**
**सः । धारयत् । पृथिवीम् । पप्रथत् । च । वज्रेण । हत्वा । निः । अपः । ससर्ज । अहन् । अहिम् । अभिनत् । रौहिणम् । वि । अहन् । विऽअंसम् । मघऽवा । शचीभिः ।।**

**स्कन्द– सः** इन्द्रः **धारयत्** पृथिवीम् **पप्रथत्** च प्रथयति च । **वज्रेण** मेघम् हत्वा **निः अपः ससर्ग** निष्टृष्य विसृजति क्षिपति वृष्टिलक्षणाः अपः । **अहन् अहिम्** हतवान् चाहिनामानमसुरम् । **अभिनत् रौहिणम्** रौहिणनामानं चापरमसुरं शतशर्करं भिन्नवान् । हतवानित्यर्थः । **वि अहन् व्यंसम्** व्यंसनामानं चापरमसुरं विविधमहन् । **मघवा** धनवान् इन्द्रः **शचीभिः** स्वाभिः प्रज्ञाभिर्वधाद्यैर्वा कर्मभिः ।। २ ।।

**वेङ्कटमाधव– सः** धारयति **पृथिवीम्** विस्तीर्णां च चक्रे । **वज्रेण** हत्वा मेघात् **अपः निः ससर्ज । अहन् अहिम् । अभिनत्** च **रौहिणम्** असुरम् । **वि अहन्** व्यंसासुरम् **मघवा** प्रज्ञाभिः ।। २ ।।

**मुद्गल– सः** इन्द्रः **पृथिवीम्** असुरैः पीडितां भूमिम् **धारयत्** धृतवान् । पीडाराहित्येन स्थितामकरोदित्यर्थः । तदनन्तरम् **पप्रथत्** च तां भूमिं विस्तीर्णामकरोत् । अपि च **वज्रेण** आयुधेन हन्तव्यान् वृत्रादीन् **हत्वा अपः** वृष्ट्युदकानि **निः ससर्ज** मेघात् निर्गमयामास । एतदेव स्पष्टीक्रियते । **अहिम्** अन्तरिक्षे वर्तमानं मेघम् **अहन्** वज्रेण वर्षणार्थम् अताडयत् । **रौहिणम्** रौहिणो नाम कश्चिदसुरस्तम् **वि अभिनत्** व्यदारयत् । अपि च **मघवा** धनवान् इन्द्रः **शचीभिः** आत्मीयैर्युद्धकर्मभिः **व्यंसम्** विगतभुजं वृत्रासुरम् **अहन्** अवधीत् ।। २ ।।

**सायण– सः** इन्द्रः **पृथिवीम्** असुरैः पीडितां भूमिं **धारयत्** धृतवान् । पीडाराहित्येन स्थिताम् अकरोदित्यर्थः । तदनन्तरं **पप्रथच्च** तां भूमिं विस्तीर्णामकरोत् । अपि च **वज्रेण** आयुधेन हन्तव्यान् वृत्रादीन् **हत्वा अपः** वृष्ट्युदकानि **निः ससर्ज** मेघान्निर्गमयामास । एतदेव स्पष्टीक्रियते । **अहिम्** अन्तरिक्षे वर्तमानं मेघम् **अहन्** वज्रेण वर्षणार्थमताडयत् । **रौहिणम्** । रौहिणो नाम कश्चिदसुरः । तं च **वि अभिनत्** व्यदारवत् । अपि च **मघवा** धनवानिन्द्रः **शचीभिः** आत्मीयैर्युद्धकर्मभिः **व्यंसं** विगतभुजं वृत्रासुरम् **अहन्** अवधीत् ।

पप्रथत् । पृथुं करोति प्रथयति । 'तस्करोति' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य कार्यम्' (पा.सू.६.४.१५५.१) इति वचनात् 'र ऋतो हलादेर्लघोः' (पा.सू.६.४.१६१) इति ऋकारस्य रत्वम् । 'टेः' इति टिलोपः । तस्य स्थानिवद्भावात् वृद्ध्यभावः । प्रथयतेर्लुङि चङि णिलोपः । द्विर्वचने 'चङयन्यतरस्याम्' (पा.सू.६.१.२१८) इति चङः पूर्वस्योदात्तत्वम् । न णिलोपस्य स्थानिवत्त्वं, 'न पदान्त' इत्यादिना स्वरविधिं प्रति तन्निषेधात् । पूर्वपदस्य असमानवाक्यस्थत्वात् निघाताभावः ।। २ ।।

**सिद्धाञ्जनम्– सः** इन्द्रः **पृथिवीम्** असुराद्याक्रमणैरार्तां **धारयत्** धृतवान् । स्वीयबलेन तां दृढामकरोदित्यर्थः । ततः परं **पप्रथत् च** तां पृथुलां विस्तीर्णां चाकरोत् । अपि च **वज्रेण** असुरादीनां आवरकाणां उपरोधकानां वृत्रादीनां वदसाधनेन ज्वलद्वललक्षणेनायुधेन **हत्वा** हन्तव्यान् निहत्य **अपः** तेजोबलादिलक्षणाः अपः **निः ससर्ज** निर्गमयामास । सामान्येनोक्तमर्थं विशेषेण स्पष्टीकरोति । **अहिम् अहन्** हतवान्, मेघमिति स्थूलः पक्षः तेनापां निःसर्जनं भवति । **रौहिणम्** एतन्नामकमसुरमिति सायणः, वृत्रस्य बन्धुरवस्थाभेदो वा, अन्यन्ततमोघनस्य कृष्णवर्णस्य वृत्रस्य अचलवत् स्थितस्य वज्रप्रहारस्वीकारारम्भे चलने सति रोहितवर्णः भवति, एवं तामसस्य वृत्रस्य राजसत्वं रोहिणशब्देन लक्ष्यते । तथाभूतं रोहितवर्णं वृत्रं **व्यभिनत्** व्यदारयत् । अपि च **मघवा** इन्द्रः **शचीभिः** शक्तिभिः स्वकीयाभिः **व्यंसम्** विगतभुजं तमेवाहिं वृत्रं **अहन्** अवधीत् । अत्रापि वृत्र एव व्यंसः अवस्थान्तरं प्राप्तः, अहिरिव सर्पणशीलः भुजनाशादनन्तरमपि क्रियायुक्तः दुश्चेष्टितः, तं बह्वीभिः शक्तिभिः प्रध्वंसयामासेन्द्रः ।

पप्रथत्–प्रथयतेर्लुङ, चङि णिलोपः, द्विवचनादिकं छान्दसम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**स जातूभर्मा श्रद्दधान ओजः पुरो विभिन्दन्नचरद् वि दासीः ।**
**विद्वान् वज्रिन् दस्यवे हेतिमस्यार्यं सहो वर्धया द्युम्नमिन्द्र ।। ३ ।।**
सः । जातूऽभर्मा । श्रत्ऽदधानः । ओजः । पुरः । विऽभिन्दन् । अचरत् । वि । दासीः ।
विद्वान् । वज्रिन् । दस्यवे । हेतिम् । अस्य । आर्यम् । सहः । वर्धय । द्युम्नम् । इन्द्र ।।

**स्कन्द– सः** इन्द्रः **जातूभर्मा** वृष्टिद्वारेण सर्वजन्तूनां भर्ता । **श्रद्धधानः ओजः**

अवितथमिति सम्भावता श्रद्धा । आत्मनो बलमवितथं सम्भावयन् । कश्चिदप्यसुरं प्रति मम बलं न प्रतिहन्यत इत्येवं सम्भावयन्नित्यर्थः । असुराणां स्वभूताः **पुरः विभिन्दन् वि अचरत्** विचरति । कीदृशः । **दासीः** दस्यतिः क्षयार्थः । क्षपणार्हाः । अत्यन्तं वृद्धा इत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । **विद्वान्** जानन् । किम् । सामर्थ्यात् दस्योः दस्युतामार्याणां वा भक्तताम् । हे **वज्रिन्! दस्यवे** दस्युशब्दोऽत्रानार्यवचनः । तादर्थ्य एषा चतुर्थी । अनार्यस्यार्थाय । अनार्यं हन्तुमित्यर्थः । **हेतिम्** वज्रनामैतत् (निघ.२,२०) । आत्मीयं वज्रम् । **अस्य** क्षिप । आर्यम् षष्ठ्यर्थे द्वितीयैषा । आर्यस्य च । **सहः** बलम् **वर्धय** । न च केवलं सहः । **द्युम्नम्** यशो वान्नं वा धननाम वा, द्युम्नशब्दः । यशोऽन्नधनानां चान्यतमं हे **इन्द्र!** ।। ३ ।।

**वेङ्कटमाधव– सः** सन्जातभरणः **श्रद्धधानः** बलं पुराणि **विभिन्दन्** विचरति आसुराणि । जानंस्त्वम् **इन्द्र!** कुत्सस्य शत्रवे वज्रं सृज । आनृशस्यं बलं यशश्च वर्धय ।। ३ ।।

**मुद्गल– जातूभर्मा** जातू इत्यशनिनाम । भर्म आयुधम् । अशनिरूपम् आयुधं यस्य स तथोक्तः । **ओजः** ओजसा बलेन निष्पाद्यं कार्यम् **श्रद्धधानः** आदरतिशयेन कामयमानः । एवम्भूतः स इन्द्रः **दासीः** दस्युसम्बन्धीनि **पुरः** पुराणि **विभिन्दन्** विनाशयन् **वि अचरत्** विविधम् आगच्छत् । हे **वज्रिन्!** वज्रवन्निन्द्र! **विद्वान्** स्तुतीः विजानत् त्वम् **अस्य** स्तोतुः **दस्यवे** उपक्षयकारिणे शत्रवे **हेतिम्** विसृजेति शेषः । अपि च हे **इन्द्र! आर्यम् सहः** आर्या विद्वांसः स्तोतारः तदीयं बलम् **वर्धय** अतिवृद्धं कुरु । तथा **द्युम्नम्** तदीयं यशश्च प्रवर्धय ।।

**सायण– जातूभर्मा** । जातू इत्यशनिमाचक्षते । भर्म आयुधम् । अशनिरूपमायुधं यस्य स तथोक्तः । यद्वा जातानां प्रजानां भर्ता । **ओजः** ओजसा बलेन निष्पाद्यं कार्यं **श्रद्धधानः** आदरातिशयेन कामयमानः एवम्भूतः **सः** इन्द्रः **दासीः** दस्युसम्बन्धीनि **पुरः** पुराणि **विभिन्दन्** विनाशयन् **वि अचरत्** विविधमगच्छत् । हे **वज्रिन्!** वज्रवन् इन्द्र **विद्वान्** स्तुतीः विजानंस्त्वम् **अस्य** स्तोतुः **दस्यवे** उपक्षयकारिणे शत्रवे **हेतिम्** आयुधं विसृजेति शेषः । अपि च हे **इन्द्र! आर्यं सहः** । आर्या विद्वांसः स्तोतारः । तदीयं बलं **वर्धय** अतिवृद्धं कुरु । तथा **द्युम्नं** तदीयं यशश्च प्रवर्धय ।

जातूभर्मा । 'जनी प्रादुर्भावे' । 'अन्येष्वपि दृश्यते' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि डप्रत्ययः । जान् तूर्वतीति जातूः । 'तुर्वी हिंसार्थः' । क्विपि 'राल्लोपः' इति वलोपः । भ्रियते इति भर्म । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । जातूः भर्म यस्य । छान्दसो रेफलोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पक्षान्तरे तु जनेर्निष्ठा । 'जनसनखनाम्' इति आत्वम् । जातं सर्वं भर्म भर्तव्यं येन । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्णव्यापत्त्या अकारस्य ऊकारः ।। ३ ।।

**सिद्धाञ्जनम्– जातूभर्मा** सकृदेव प्रयुक्तोऽयं ऋग्वेदे, जातू इत्यशनिनामेति सायणः, तर्हि भर्म आयुधं भवति, वज्रायुध इत्यर्थः **सः इन्द्रः ओजः** ओजसि, सप्तम्या लुक्, स्वकीये बले **श्रद्धधानः** दृढविश्वासयुक्तः सन् **दासीः** दस्यूनां असुरादीनां सम्बन्धिनीः **पुरः** पुरीः, शत्रुपुराणीत्यर्थः **विभिन्दन्** विध्वंसयन् **व्यचरत्** विविधं यथेच्छं सञ्चरति । हे **वज्रिन्! इन्द्र,** वज्रवन्निन्द्र, **विद्वान्** विजानंस्त्वं **अस्य** यजमानस्य स्तोतुः **दस्यवे** उपक्षपयित्रे शत्रवे **हेतिम्** आयुधं विसृजेति शेषः, तथा अस्य **आर्यम् सहः** आर्याः विद्वांसः उद्योगिनः तदीयं बलं **वर्धय** प्रवृद्धं कुरु, तथा **द्युम्नम्** तदीयं यशः शोभाप्रसरं च वर्धय ।

जातूभर्मा–जनी प्रदुर्भावे इत्यस्मात् जातूः, बिभर्तेः भर्मेति च कथञ्चित् रूपावतारः क्रियते पूर्वव्याख्यातृभिः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् ।**
**उपप्रयन् दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ।। ४ ।।**

तत् । ऊचुषे । मानुषा । इमा । युगानि । कीर्तेन्यम् । मघऽवा । नाम । बिभ्रत् ।
उपऽप्रयन् । दस्युऽहत्याय । वज्री । यत् । ह । सूनुः । श्रवसे । नाम । दधे ।। ४ ।।

**स्कन्द– तत्** इति कर्मणः **ऊचुषे** इति सम्प्रदानस्य च साकाङ्क्षत्वाद् योग्यक्रियापदाध्याहारः । तदाचष्टे इव । **ऊचुषे** स्तुतीरुक्तवते । स्तोत्रे इत्यर्थः । कस्मिन् काले ऊचुषे । उच्यते । **मानुषा इमा युगानि** युगशब्दः कालवचनः । सर्वत्र चात्र सप्तम्यर्थे प्रथमा । मनुष्याणां सम्बन्धिषु स्तोत्रेषु पौर्णमास्यमावास्यादिषु यागकालेषु । किमाचष्टे इव । उच्यते । **कीर्तेन्यम्** कीर्तनीयम्

आत्मीयम् **नाम मघवा** धनवानिन्द्रः । **बिभ्रत्** धारयत् । किम् । नामैव वा प्रकृतत्वात् कृत्स्नं वा जगत् । किं कुर्वन् आचष्टे इव । उच्यते । **उपप्रयन्** उपगच्छन् **दस्युहत्याय** अनार्यननाय । **वज्री** गृहीतवज्रः । अनन्यकर्तृकं हि दस्युहननम् । तत्कुर्वन् अयम् अहमिन्द्र इत्येवमात्मीयं नाम कथयतीवेत्यर्थः । कतमत् नाम । उच्यते । **यत् ह** हशब्दः पदपूरणः । सूनुः पुत्रः स्वस्या मातुरदित्याः । **श्रवसे** कीर्त्यर्थम् **नाम दधे** धारयति । कतमत् पुनस्तत् । इन्द्र इति । तद्धि अस्य सर्वस्तोतृभिः कीर्त्यर्थमुपात्तम् । अथवा यद्ध सूनुरिति यच्छब्दो यदाशब्दस्यार्थे । 'श्रवः' (निघ.२,७) इत्यप्यन्ननाम । नामशब्दोऽप्युदकनाम (निघ.१,२२) । दधे इत्यपि धारयतिर्दानार्थः । अनन्यकर्तृकं दस्युहननं कुर्वन् आत्मीयं नामाचष्टे इव । यदा च सस्य-लक्षणायान्नाय वृष्टिलक्षणमुदकं ददाति तदा आचष्टे इवेत्यर्थः । अथवा यद् सूनुरिति यच्छब्द इन्द्रस्य प्रतिनिर्देशकः । व्यत्ययेन तु नपुंसकता । य इन्द्रः श्रवसे नाम दधे स आचष्टे इति ॥

**वेङ्कटमाधव– तत्** वदते नाम दिवसाः एते शोभना भवन्ति कीर्तनीयम् **मघवा नाम** इन्द्राख्यम् **बिभ्रत्** । उपगच्छन् दस्युहननाय **वज्री यत् नाम** अन्नस्य कीर्तेः वा प्रेरकः धारयति तत् **ऊचुषे** इति ॥ ४ ॥

**मुद्गल– नाम** शत्रूणां नामकम् **तत्** इन्द्रस्य बलम् **ऊचुषे** उक्तवते स्तुवते यजमानाय **कीर्तेन्यम्** कीर्तनीयं स्तुत्यं नामकं तद्बलम् **बिभ्रत्** धारयन् **मघवा** धनवानिन्द्रः **मानुषा** मनुष्याणां सम्बन्धीनि **इमा** इमानि दृश्यमानानि **युगानि** अहोरात्रसङ्घनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः । किं पुनः तन्नाम । दस्युहत्याय दस्यूनां वृत्रादीनां हननाय **उपप्रयन्** गृहसमीपात् निर्गच्छन् **वज्री** वज्रवान् **सनुः** शत्रूणां प्रेरयिता इन्द्रः **यत् ह** यत्खलु **नाम** शत्रुणां नामकम् **श्रवसे** जयलक्षणाय यशसे **दधे** धृतवान् ॥ ४ ॥

**सायण– नाम** शत्रूणां नामकं **तत्** इन्द्रस्य बलम् **ऊचुषे** उक्तवते स्तुवते यजमानाय **कीर्तेन्यं** कीर्तनीयं स्तुत्यम् । नामकं तद्बलं **बिभ्रत्** धारयन् **मघवा** धनवानिन्द्रः **मानुषा** मनुष्याणां सम्बन्धीनि **इमा** इमानि दृश्यमानानि **युगानि** अहोरात्रसङ्घनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः । किं पुनस्तन्नाम । **दस्युहत्याय** दस्यूनां वृत्रादीनां हननाय **उपप्रयन्** गृहसमीपान्निर्गच्छन् **वज्री** वज्रवान् **सूनुः** शत्रूणां प्रेरयितेन्द्रः **यद्ध** यत् खलु **नाम** शत्रूणां नामकं **श्रवसे** जयलक्षणाय यशसे **दधे** धृतवान् ।

ऊचुषे । 'ब्रूञ् व्यक्तायां वाचि' । 'ब्रुवो वचिः' । लिटः क्वसुः । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । चतुर्थ्येकवचने भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासि-वसिघसीनां च' इति षत्वम् । क्वसुप्रत्ययाद्युदात्तत्वम् । कीर्तेन्यम् । 'कृत संशब्दने' । 'कृत्यार्थे तवैकेन्' इति केन्यप्रत्ययः । मघवा । मघशब्दात् 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । बिभ्रत् । 'डु भृञ् धारणपोषणयोः' । शतरि जुहोत्यादित्वात् शपः श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । 'अभ्यस्तानामादिः' इत्या-द्युदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्– कीर्तेन्यम्** कीर्तनीयं स्तुत्यं **नाम** सन्द्रबलगर्भितं अन्येभ्यो देवेभ्यो विलक्षणं इन्द्रस्वात्मविशेषकं नामधेयं **बिभ्रत्** धारयन् **मघवा** इन्द्रः **तत्** इन्द्रबललक्षकं नाम **ऊचुषे** उक्तवते स्तुवते यजमानाय **इमा मानुषा युगानि** इमानि मानुषाणि कालपरिच्छेदात्मकानि युगपदवेदनीयानि विधत्त इति शेषः । अत्र कृतादियुगचतुष्टयस्य विधाता सूर्यात्मना इन्द्र इति सायणीय आशयः । इदमत्र विचारणीयम् । ऋग्वेदे कृतत्रेतादीनां नामापि न श्रूयते, ऐतरेयब्राह्मण एव प्रथममेतानि कृतादिनामानि श्रूयन्ते । अपि च ''ऊचुषे'' स्तुवते जनाय मानुषाणि युगानि विधत्त इति उपहसनीयं वचनम् । स्तुवतः अस्तुवतो वा जनस्य युगानि प्रवर्तितान्येव भवन्ति । कथं यजमानस्य स्तुवत एव इन्द्रः युगानि करोति, नान्यस्येति शक्यं वदितुम्? तर्हि कथं अन्वयः सूपपादः स्यादिति चेत्, ब्रूमः । ''तत् ऊचुषे'' स्तुवते यजमानाय ''मानुषा इमा युगानि'' मनुष्यसम्बन्धीनि इमानि सन्ततं प्रवर्तमानानि युगानि असङ्ख्यातानि अतीतानि, भवन्ति, भविष्यन्ति च, कालाध्वनोरत्यन्तसंयोगे द्वितीया, सर्वं मानुषमानं कालं 'कीर्तेन्यम्' कीर्तनीयं ''नाम'' रहस्यं वीर्यवत्तरं नाम येन ऋषिभिस्तपोबलादाहूत इन्द्रः प्रसीदति । तादृशं नाम 'बिभ्रत्' धारयन् 'मघवा' इन्द्रः प्रवर्तत उति शेः । तन्नामोच्चारयते यजमानाय प्रसीदति कर्तव्यं करोतीति भावः । एवमनावश्यकाध्याहारसनाथं अमूलव्याख्यानं परिहार्यम् । अथ उत्तरोऽर्धर्चः सुगमार्थो भवति । तदूचुष इत्युक्तम् । किं तत्? **यद्ध** यत् खलु **नाम** पूर्वोक्तलक्षणं (कर्म) इन्द्रः **दधे** धृतवान् । कीदृशः? **श्रवसे सूनुः** श्रवणं, यशो वा भवति, स्वविभवप्रसारायेत्यर्थः, सूनुः प्रेरकः पुत्रो वा, स्तोतुः प्रेरको भवन्, (स्तोतुः पुत्रो भवन् वा) पुनः कीदृशः? **उपप्रयन्** स्तोतुः समीपं प्रतिष्ठामानः **दस्युहत्याय** असुरस्य शत्रोर्वधाय **वज्री** वज्रायुधोपेतः ।

ऊचुषे–ब्रूञ् व्यक्तायां वाचि, ब्रुवो वचिः, लिटः कसुः, चतुर्थ्येकवचनम् । कीर्तेन्यम्–कृत संशब्दने, कृत्यार्थे केन्यप्रत्ययः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**तर्दस्येदं पंश्यता भूरिं पुष्टं श्रदिन्द्रंस्य धत्तन वीर्याय ।**
**स गा अंविन्दत् सो अंविन्ददश्वान्त्स ओषधीः सो अपः स वनानि ।। ५ ।।**
**तत् । अस्य । इदम् । पश्यत । भूरि । पुष्टम् । श्रत् । इन्द्रंस्य धत्तन । वीर्याय । सः । गाः । अविन्दत् । स : । अविन्दत् । अश्वान् । सः । ओषधीः । सः । अपः । सः । वनानि ।।**

**स्कन्द–** तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यत् सेनालक्षणं बलं सर्वासुरान् हन्ति, **तत् अस्य** इन्द्रस्य स्वभूतं बलम् **इदम् पश्यत** हे ऋषयः! ब्राह्मणा वा । **भूरि** बहु **पुष्टम्** सुसम्पन्नम् । अथवा इदं भूरीत्येतत्सम्बद्ध एव यच्छब्दोऽध्याहर्तव्यः । अस्य इति तु षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः । यदिदं भूरि भूतजातं तदस्येन्द्रस्य प्रसादेन पुष्टं पश्यतेति । किञ्च **इन्द्रस्य श्रत् धनत्त वीर्याय** द्वितीयार्थे एषा चतुर्थी । श्रद्धत्त एवेन्द्रस्य वीर्यम् । वीर्यवानिन्द्र इत्येतद् वितथं प्रतिपद्यध्वमित्यर्थः । **सः** इन्द्रोऽसुरादीनां स्वभूताः **गाः अविन्दत्** लब्धवान् । **सः अविन्दत् अश्वान्** । **सः ओषधीः** महाप्रभावाः सञ्जीवन्यादयः । **सः अपः** अमृतरसाद्युदकानि । **सः वनानि** सदा पुष्पफलानि । अथवा विन्दतीति लाभेन तद्धेतुभूतं दानमात्रं लक्ष्यते । स इन्द्रः स्तोतृभ्यो गवादीनि ददातीत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** **तत्** इन्द्रस्य इन्द्रियं बहु अम्लानम् **पश्यत श्रत्** च अस्मै **वीर्याय धत्तन** सत्यमसौ बलवान् इति । श्रद्धधानस्य कार्याणि प्रदर्शयति **सः गाः** इति । **वनानि** धनानि इति ।। ५ ।।

**मुद्गल–** हे ऋत्विग्यजमानलक्षणा जनाः! **अस्य** इन्द्रस्य **तत् इदम्** वीर्यम् **पुष्टम्** प्रवृद्धम् अत एव **भूरि** विस्तीर्णम् **पश्यत** आलोकयत । तस्मै च **वीर्याय श्रत् धत्तन** बहुमानं कुरुत । किं पुनस्तद्वीर्यमिति चेद् उच्यते । सः इन्द्रः पणिभिरपहृताः **गाः** येन वीर्येण **अविन्दत्** अलभत । तथा तैरपहृतान् **अश्वान् सः** इन्द्रो येन **अविन्दत्** । अपि च **सः** इन्द्रः **ओषधीः**

ओषध्युपलक्षितां सर्वां भूमिं येन वीर्येणालभत । तथा वृत्रेण निरुद्धाः **अपः** वृष्ट्युदकानि **सः** इन्द्रो येनालभत । तथा **वनानि** वननीयानि सम्भजनीयानि धनानि **सः** इन्द्रो येन वीर्येण प्राप्नोत् ।। ५ ।।

**सायण–** हे ऋत्विग्यजमानलक्षणा जनाः **अस्य इन्द्रस्य तत्** इदं वीर्यं **पुष्टं** प्रवृद्धम् । अत एव **भूरि** विस्तीर्णं **पश्यत** आलोकयत् । तस्मै च **वीर्याय श्रत् धत्तन** बहुमानं कुरुत । किं पुनस्तद्वीर्यमिति चेत् उच्यते । **सः** इन्द्रः पणिभिरपहृताः **गाः** येन वीर्येण **अविन्दत्** अलभत । तथा तैरपहृतान् **अश्वान् सः** इन्द्रो येन **अविन्दत्** । अपि च **सः** इन्द्रः **ओषधीः** ओषध्युपलक्षितां सर्वां भूमिं येन वीर्येणालभत । तथा वृत्रेण निरुद्धाः **अपः** वृष्ट्युदकानि **सः** इन्द्रो येनालभत । तथा **वनानि** वननीयानि सम्भजनीयानि धनानि **सः** इन्द्रो येन वीर्येण प्राप्नोत् ।

धत्तन । 'तप्तनप्तनथनाश्च' इति तस्य तनादेशः । अविन्दत् । 'विद्लृ लाभे' । 'शे मुचादीनाम्' इति नुम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **सखायः!** यजमानलक्षणाः, **अस्य इन्द्रस्य** पूर्वोक्तगुणविशिष्टस्य **तदिदम्** वीर्यं **पुष्टम्** प्रवृद्धं अत एव **भूरि** विस्तीर्णं **पश्यत** आलोकयत । तस्यैव वीर्याय **श्रत् धत्तन** तद्वीर्ये श्रद्धां बद्ध्वा बहुमानं कुरुत । किं पुनस्तद्वीर्यम्? उच्यते । **सः गाः अविन्दत्** येन वीर्येणेन्द्रः पणिभिरपहृताः गाः अलभत । चिद्रश्मिलक्षणा इमा इति स्मर्तव्यम् । **सः अश्वान् अविन्दत्** प्राणबलात्मानोऽश्वाः, तानलभत । **सः ओषधीः** पृथिव्या अन्तःसाराविष्कृतीः **सः अपः** तेजोबलादिवाहिनीः **सः वनानि** वननीयानि काङ्क्षितानि सर्वाणि सुखानि च अलभत ।।

।। इति प्रथमाष्टक सप्तमाध्याये षोडशो वर्ग ।।

## ।। अथ सप्तदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम् ।**
**य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ।। ६ ।।**

भूरिऽकर्मणे । वृषभाय । वृष्णे । सत्यऽशुष्माय । सुनवाम । सोमम् । यः । आऽदृत्य । परिपन्थीऽइव । शूरः । अयज्वनः । विऽभजन् । एति । वेदः ।। ६ ।।

**स्कन्द–** बहूनि वृत्रवधादीनि कर्माणि यस्य स भूरिकर्मा तस्मै **भूरिकर्मणे वृषभाय** वृषभसदृशाय । केन सादृश्येन । भीमत्वेन । कुतः । सामर्थ्यात् 'आशुः शिशानो वृषभो न भीमः' (ऋ.१०,१०३,१) इति च मन्त्रान्तरदर्शनात् । **वृष्णे** वर्षित्रे । **सत्यशुष्माय** सर्वासुरान् प्रत्यविसंवादिबलाय । सर्वत्र च तादर्थ्ये चतुर्थी । भीमत्वादिगुणस्येन्द्रस्यार्थाय । **सुनवाम** वयम् **सोमम्** । **यः** किं करोति इन्द्र इत्युच्यते । यः **आदृत्य** महान्तमादरं कृत्वा । **परिपन्थीव शूरः** । परिपन्थी चोर उच्यते । यथा चोरः कश्चित् शूरः कुतश्चिद्धनमपहृत्य स्वेभ्यः सैनिकेभ्यो विभजेद् एवम् । **अयज्वनः** अयष्टुः स्वभूतं यष्टृभ्यः **विभजन् एति** यज्ञान् प्रति गच्छतीन्द्रः । किं विभजन् । **वेदः** धनम् ।। ६ ।।

**वेङ्कटमाधव–** वृत्रवधादिबहुकर्मणे **वृषभाय** सेक्त्रे सत्यबलाय **सुनवाम सोमम्** । **यः** विदार्य मार्गनिरोधक इवापहर्ता शूरः अयजमानस्य धनं विलोपयन् गच्छति ।। ६ ।।

**मुद्गल–** **भूरिकर्मणे** बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय **वृषभाय** वृषभवत् सर्वेषु देवेषु श्रेष्ठाय **वृष्णे** सेचनसमर्थाय **सत्यशुष्माय** अवितथबलायेन्द्राय तदर्थम् **सोमम् सुनवाम** होमार्थं रसरूपं करवाम । **शूरः** शौर्योपेतः **यः** इन्द्रः **आदृत्य** धनविषयमादरं कृत्वा **अयज्वनः** अयजमानस्य **वेदः** धनम् **विभजन्** तस्मादयजमानाद्विभक्तं कुर्वन् अपहरन् **एति** । यजमानेभ्यस्तद्धनं दातुं गच्छति । दृष्टान्तः । **परिपन्थीव** यथा मार्गनिरोधकश्चोरो गच्छतां पुण्यपुरुषाणां धनं बलात्कारेणापहृत्य गच्छति तद्वत् ।। ६ ।।

**सायण–** **भूरिकर्मणे** बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय **वृषभाय** वृषभवत् सर्वेषु देवेषु श्रेष्ठाय **वृष्णे** सेचनसमर्थाय **सत्यशुष्माय** अवितथबलायेन्द्राय तदर्थं **सोमं सुनवाम** होमार्थं रसरूपं करवाम । **शूरः** शौर्योपेतः **यः** इन्द्रः **आदृत्य** धनविषयमादरं कृत्वा **अयज्वनः** अयजमानस्य **वेदः धनं विभजन्** तस्मात् अयजमानाद्विभक्तं कुर्वन्नपहरन् एति । यजमानेभ्यस्तद्धनं दातुं गच्छति । तत्र दृष्टान्तः । **परिपन्थीव** । यथा मार्गनिरोधकश्चोरो गच्छतां पुण्यपुरुषाणां धनं बलात्कारेणापहृत्य गच्छति तद्वत् ।

आदृत्य । 'दृङ् आदरे' । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा.सू.७.१.३७) । तस्य स्थानिवद्भावेन कृत्त्वे सति 'ह्रस्वस्य पिति कृति' इति तुक् । परिपन्थीव । 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (पा.सू.५.२.८९) इति इनिप्रत्ययान्तो निपात्यते ।। ६ ।।

**सिद्धाञ्जनम्– भूरिकर्मणे** विविधेन प्रभूतेन कर्मणा युक्ताय **वृषभाय** वृषभवत् देवानां मध्ये श्रेष्ठाय **वृष्णे** सेचनसमर्थाय **सत्यशुष्माय** अवितथबलायेन्द्राय **सोमम् सुनवाम** सोमाभिषवं करवाम । **शूरः** शौर्योपेतः **यः** इन्द्रः **आदृत्य** आदरं कृत्वा **अयज्वनः** अयजमानस्य अदेव्यस्य शत्रोः **वेदः** धनं ज्ञानं वा **विभजन्** तस्मादयज्वनः विभक्तं कुर्वन्, अपहरन् **एति** गच्छति । तत्र दृष्टान्तः– **परिपन्थी इव** यथा मार्गनिरोधकश्चोरः गच्छतां पुरुषाणां धनमपहृत्यं गच्छति तद्वत् ।

परिपन्थीव–छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरीति इनिप्रत्ययान्तो निपात्यते ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**तदिन्द्र प्रेव वीर्यं चकर्थ यत् ससन्तं वज्रेणाबोधयोऽहिम् ।**
**अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ।। ७ ।।**

तत् । इन्द्र । प्रऽईव । वीर्यम् । चकर्थ । यत् । ससन्तम् । वज्रेण । अबोधयः । अहिम् । अनु । त्वा । पत्नीः । हृषितम् । वयः । च । विश्वे । देवासः । अमदन् । अनु । त्वा ।।

**स्कन्द– तत्** त्वं हे **इन्द्र! प्रेव वीर्यम् चकर्थ** प्रकर्षेण वीरकर्म कृतवानसि । यत् कतमत् । उच्यते । **यत् ससन्तम्** सप्त स्वप्ने । शौर्यमदेनावमत्य देवान् निश्चिन्तं सन्तम् । **वज्रेण अबोधयः** वधार्थमुत्थापितवानसि **अहिम्** अहिनामानमसुरम् । किञ्च **अनु त्वा अमदन्** इति परस्ताच्छ्रुतम् आख्यातपदमिहानुषक्तव्यम् । मदतिश्चात्र सामर्थ्यान्मोदनार्थो गत्यर्थो वा । अनुमोदितवन्तः अनुगतवन्तो वा त्वाम् । अथवा मदतिरर्चतिकर्म (निघ. ३.१४) अनु इत्येष समित्येतस्य स्थाने । संस्तुतवन्तः त्वाम् । **हृषितम्** शत्रुहननेन प्राप्तहर्षम् । अथवा अनुशब्दोऽत्र 'तृतीयार्थे' (पा.१,४,५८) इत्येवं कर्मप्रवचनीयः । सहार्थश्चात्र तृतीयार्थः । मदतिरपि तृप्त्यर्थः । त्वया सोमपानात् प्राप्तहर्षेण सहातृप्यन्नित्यर्थः । केऽमदन् । उच्यते । **पत्नीः** स्वभार्याः देवपत्न्यो वा । **वयः च** गन्तृत्वात् पक्षिसादृश्याद् वा मरुतोऽत्र वय उच्यन्ते । ते च । न च केवलाः पत्नीः मरुतः च । **विश्वे देवासः अमदन् अनु त्वा** ।। ७ ।।

**वेङ्कटमाधव– तत् इन्द्र!** त्वं प्रकर्षेण आत्मीयम् **वीर्यम्** प्रकाशितवान् इव । यत् त्वं स्वपन्तम् अहिम् अहत्वा प्रबुद्धः सन् कामं युध्यतु इति हस्तस्थेन आयुधेन बोधितवान् असि । तदा त्वां हृष्टम् **अनु अमदन्** देवपत्न्यः छन्दांसि च मरुतः च ।। ७ ।।

**मुद्गल–** हे **इन्द्र! तत् वीर्यम्** वीरकर्म **प्र इव चकर्थ** प्रख्यातमिवाकार्षीः । किं पुनस्तद्वीर्यम् । **ससन्तम्** स्वपन्तं मदोन्मत्तम् **अहिम्** वृत्रम् **वज्रेण** कुलिशेन **यत्** येन वीर्येण त्वम् **अबोधयः** प्रबुद्धः सन् मया सह युद्धं करोतु इति जागरितवानसि । **हृषितम्** तादृशस्य वृत्रस्य हननेन प्राप्तहर्षम् **त्वा** त्वाम् **अनु** पश्चात् **पत्नीः** देवपत्न्यः **अमदन्** हर्षं प्राप्ताः । अपि च **वयः च** गमनशीला मरुतोऽपि तथा **विश्वे देवासः** अन्ये च सर्वे देवाः **त्वा** त्वाम् **अनु** पश्चात् **अमदन्** अमाद्यन् ।। ७ ।।

**सायण–** हे **इन्द्र! तत् वीर्यं** वीरकर्म **प्रेव चकर्थ** प्रख्यातमिवाकार्षीः । किं पुनस्तद्वीर्यम् । **ससन्तं** स्वपन्तं मदोन्मतम् **अहिं** वृत्रं **वज्रेण** कुलिशेन **यत्** येन वीर्येण त्वम् **अबोधयः** । प्रबुद्धः सन् मया सह युद्धं करोत्विति **हृषितं** तादृशस्य वृत्रस्य हननेन प्राप्तहर्षं त्वाम् । **अनु** पश्चात् **पत्नीः** देवपत्न्यः **अमदन्** हर्षं प्राप्ताः । अपि च **वयश्च** गमनशीला मरुतोऽपि तथा **विश्वे देवासः** अन्ये च सर्वे देवाः त्वाम् **अनु** पश्चात् अमदन् अमाद्यन् ।

ससन्तम् । 'षस स्वप्ने' । अदादित्वात् शपो लुक् । पत्नीः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । अमदन् । 'मदी हर्षे' । व्यत्ययेन शप् ।। ७ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! तद्वीर्यम्** तद्वीरकर्म **प्रेव चकर्थ** प्रख्यातमिवाकार्षीः । **यत्** यतः वीर्येण त्वं **ससन्तम्** स्वपन्तं **अहिम्** वृत्रं **वज्रेण** कुलिशप्रयोगेण **अबोधयः** प्रबुद्धं, युद्धाय जागरितं कृतवानसि । **हृषितम्** वृत्रप्रबोधेन सम्प्राप्तहर्षं **त्वा** त्वां **अनु** पश्चात् **पत्नीः** देवपत्न्यः **अमदन्** हृष्टा अभवन् । तथा **वयश्च** गमनशीला मरुतो देवाः **विश्वे देवासः** विश्वे देवाश्च **त्वा अनु** अमदन् ।

ससन्तम्–षस स्वप्ने, अस्मात् शतृ । पत्नीः–वा छन्दसीति पूर्वसवर्णदीर्घत्वम् । अमदन्– मदी हर्षे, अमाद्यन्, व्यत्ययेन शप् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदावधीर्वि पुरः शम्बरस्य ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। ८ ।।**

**शुष्णम् । पिप्रुम् । कुयवम् । वृत्रम् । इन्द्र । यदा । अवधीः । वि । पुरः । शम्बरस्य । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥**

**स्कन्द–** कदा पुनरन्वमदन् । उच्यते । शुष्णमित्यादीन्यसुराणां नामधेयानि । **शुष्णम् पिप्रुम् कुयवम्** वृत्रम् च हे **इन्द्र! यदा वि अवधीः** विविधं हतवानसि । **पुरः** च **शम्बरस्य** स्वभूताः । तदा अन्वमदन्नित्येवमस्यार्धर्चस्य यदाशब्दश्रुतेः साकाङ्क्षत्वात् पूर्वस्या ऋच उत्तरेणार्धर्चेन एकवाक्यता । 'तत् नः मित्रः' इत्यत्र तु तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यद्वयमिच्छामः **तत् नः मित्रः** इत्याद्युक्तार्थम् (ऋ १,९४,१६ द्र.) ॥ ८ ॥

**वेङ्कटमाधव– यदा** त्वं शुष्णादीनसुरान् **अवधीः**, यदा वा **शम्बरस्य पुरः**, तदा अन्वमदन् इति इन्द्रस्य वीर्याणि दर्शयति सूक्ते ॥ ८ ॥

**मुद्गल–** हे **इन्द्र!** त्वं शुष्णादींश्चतुरोऽसुरान् **यदा अवधीः** हतवानसि तदानीम् **शम्बरस्य** असुरस्य **पुरः** नगराणि विदारितवानसि । असुराणां मुख्येषु हतेषु तेषु अन्यान्यपि असुरपुराणि विदीर्णान्यासन्नित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयम् **तत्** मित्रादयः **ममहन्ताम्** पूजितं कुर्वन्तु ॥ ८ ॥

**सायण–** हे **इन्द्र!** त्वं शुष्णादींश्चतुरोऽसुरान् **यदा अवधीः** हतवानसि तदानीं **शम्बरस्य** असुरस्य **पुरः** नगराणि विदारितवानसि । असुराणां मुख्येषु हतेष्वन्यान्यप्यसुरपुराणि विदीर्णानि आसन्नित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयं **तत्** मित्रादयः **ममहन्तां** पूजितं कुर्वन्तु ।

शुष्णम् । 'शुष शोषणे' । अन्तर्भावितण्यर्थात् 'तृषिशुषिरसिभ्यः किच्च' (उ.सू.३.२९२) इति नप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । पिप्रुम् । 'पॄ पालनपूरणयोः, पृ इत्येके' । औणादिकः कुप्रत्ययः । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वे सति शप् । जुहोत्यादित्वात् श्लुः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । कुयवम् । यवो यवनं मिश्रणम् । कुत्सितं यवनमस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । शम्बरस्य । शमयतीति शम्ब आयुधम् । 'शमेर्वन्' (उ.सू.४.५३४) । ततो मत्वर्थीयो रप्रत्ययः ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **इन्द्र!** त्वं **शुष्णम् पिप्रुम् कुयवम् वृत्रम्** शुष्णादीन् चतुरोऽसुरान् **यदा अवधीः** यदा हतवानसि, तदा **शम्बरस्य** असुरस्य **पुरः वि** पुराणि विदारितवानसि ।

शुष्णादीनामसुराणां स्वरूपाणि धात्वर्थानुसारेण प्राग्विवृतानि । तन्नो मित्र इत्यादि पूर्वं व्याख्यातम् ।

कुयवम्–यवो यवनं मिश्रणं, कुत्सितं यवनमस्येति कुयवस्तम् ।। ८ ।।

**नीतिमञ्जरी–** द्वेषदुष्टं मनो न कार्यमित्याह–

**द्वेषदुष्टं मनः कार्यं पुंसा नात्महितैषिणा ।**
**इन्द्रोऽवधीद्द्विषः पिप्रुकुयवशुष्णशम्बरान् ।। २६ ।।**

आत्महितमिच्छतीति आत्महितैषी तेन आत्महितैषिणा पुंसा द्वेषेण दुष्टं मनो न कार्यम् । पिप्रुकुयवादीनां द्विषां दृष्टान्तेन दृढयति । यथा पिप्रुकुयवशुष्णशब्दरादीन् इन्द्रोऽवधीत्– हनो वध लिङि (पा.२.४.४२) 'लुङि च' (पा.२.४.४३) इति वधादेशः । यतः एतान् द्विषः एतेषां केषामित्याह । ऋजिश्वनः पिप्रुर्द्विट्– कुयवशुष्णौ कुत्सस्य द्विषौ । अम्बरो दिवोदासस्यातिथिग्वस्य । यो दिवोदासः सोऽतिथिग्वः ।

त्वं प्रियो नृमणः प्रारुजः पुरः । (ऋ.१.५१.५)
त्वं प्रिप्रुं मृगयं शूशुवांसमृजिश्वने । (ऋ.४.१६.१३)

इति पिप्रोर्द्विट्त्वे निगमौ ।

त्वं ह त्यदिन्द्र कुत्समावः । (ऋ.७.१९.२)
स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय (ऋ.२.१९.६)

इति शुष्णस्य कुवयस्य द्विट्त्वे निगमौ ।

दिवोदासाय शम्बरम् । (ऋ.९.६१.२)
अरन्धयोऽतिथिग्वाय शम्बरम् । (ऋ.१.५१.६)

इति शम्बरस्य द्विट्त्वे निगमौ ।

अनुक्ता अन्ये बहवः । इन्द्र एतेभ्यो ऋजिश्वादिभ्यो एतान् पिप्रादीन् द्विषोऽवधीत् ।

तत्र ऋक् (ऋ.१.१०३.८)

शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदाऽवधीर्वि पुरः शम्बरस्य ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुःपृथिवी उत द्यौः ॥

कुत्सस्त्रिष्टुभा इन्द्रं स्तौति । उत्तमे छन्दोमे विनियुक्तम् । तत्त इन्द्रियम् (ऋ.१.१०३) अहं भुवम् (ऋ.१०.४८) इति सूत्रम् । (सां.श्रौ.सू.१०.११.७)

ऋचोयमर्थः । हे **इन्द्र!** त्वं शुष्णादीन् चतुरो द्विषः असुरान् **यदाऽवधीः** हतवानसि । तदानीं शम्बरस्यासुरस्य **पुरः** नगराणि विदारितवानसि । यदनेन सूक्तेन उक्तं प्रार्थितं **तत्** नोऽस्माकं मित्रादयो देवाः **ममहन्तां** पूजितं कुर्वन्तु ।

मामहन्ताम्–मह पूजायाम् । श्रावयादित्वाद्दीर्घः (ऋ.प्र.९.३१) इति इन्द्रेण द्विषो हतास्तस्माद्द्वेषो न कर्तव्य इत्युक्तम् ॥ ८ ॥

॥ इति प्रथमाष्टके सप्तमाध्याये सप्तदशो वर्गः ॥

## ॥ अथ अष्टादशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

### (सूक्तम्-१०४)

(९ कुत्स आङ्गिरसः । इन्द्रः । त्रिष्टुप्)

**योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा ।**
**विमुच्या वयोऽवसायाश्वान् दोषा वस्तोर्वहीयसः प्रपित्वे ॥ १ ॥**
**योनिः । ते । इन्द्र । निऽसदे । अकारि । तम् । आ । नि । सीद । स्वानः । न अर्वा ।**
**विऽमुच्य । वयः । अवऽसाय । अश्वान् । दोषा । वस्तोः । वहीयसः । प्रऽपित्वे ॥ १ ॥**

**स्कन्द– योनिः** योनिशब्दोऽत्र स्थानवचनः । उपवेशनस्थानं वेद्याख्यम् । **ते** तव हे **इन्द्र! निषदे** निषदनाय । उपवेशनार्थमित्यर्थः । **अकारि** कृतमस्माभिः । **तम् आ** तमिति कर्मश्रुतेः आ इति चोपसर्गाद्योग्यक्रियापदाध्याहारः । तं योनिमागत्य **नि षीद** उपविश । **स्वानः न अर्वा** आगमनस्येयमुपमा । स्वनतिः शब्दार्थः । स्वनति स्वान्यते वा असाविति स्वानः । 'अर्वा' (निघ.१,१४) इति अश्वनाम । यथा हेषन् अश्ववारेण वा शब्दायमानोऽश्वः शीघ्रमागच्छेत्

तद्वच्छीघ्रमागत्येत्यर्थः । **विमुच्य वयः** मुञ्चतिर्गत्यर्थः । अश्वान् सारथिं च प्रति वान्तीति वयः अश्वप्रग्रहा इहाभिप्रेताः । द्वितीयार्थे प्रथमा । अश्वप्रग्रहांश्च विमुच्य । कुतः सामर्थ्यादश्वेभ्यः । **अवसाय अश्वान्** अवपूर्वोऽयं स्यतिर्विमोचने (या.१,१७) । अश्वांश्च विमुच्य । कुतः । सामर्थ्याद्योक्त्रेभ्यः रथाद्वा । कीदृशान् । **दोषा वस्तोः वहीयसः** रात्रावहनि चातिशयेन वोढ्नून् । क विमुच्य । **प्रपित्वे** आसन्ननामैतत् । वेद्या आसन्ने देशे । अथवा प्रपित्वे इति कालस्य प्रतिनिर्देशः । निषीदेत्येतेन चास्य सम्बन्धः । आसन्ने यागकाले निषीदेति ।। १ ।।

**वेङ्कटमाधव–** आसनं तव **इन्द्र!** निषदनाय कृतम् । तम् योनिं गृहे आगत्य उपविश शब्दं कुर्वन् इव अश्वः व्रजम् । अश्वबन्धनानि **विमुच्य** अवसाय च **अश्वान्** रात्रौ अहनि च अतिशयेन वोढृत् तव अभिप्राप्तौ ।। १ ।।

**मुद्गल–** 'योनिः' इति नवर्चम् एकादशं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।।

हे **इन्द्र! योनिः** वेद्याख्यं स्थानम् **ते** तव **निषदे** निषदनाय उपवेशनाय **अकारि** कृतम् अस्माभिः प्रकल्पितमभूत् । **तम्** योनिम् **आ नि षीद** शीघ्रमागत्य तत्रोपविश । शीघ्रमागमने दृष्टान्तः । **स्वानः** न **अर्वा** अर्वेत्यश्वनाम । यथा अश्वः स्वानः हेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत् । किं कृत्वा । **वयः** अश्वबन्धनार्थान् रश्मीन् **विमुच्य** रथाद् विश्लिष्य तथा **अश्वान्** रथे योजितांश्च च तुरगान् **अवसाय** विमुच्य । कीदृशानश्वान् । **प्रपित्वे** यागकाले प्राप्ते **दोषा** रात्रौ **वस्तोः** च **वहीयसः** आदरातिशयेन वोढृन् ।। १ ।।

**सायण–** 'योनिः' इति नवर्चम् एकादशं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् ऐन्द्रम् । 'योनिर्नव' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः ।

हे **इन्द्र! योनिः** वेद्याख्यं स्थानं **ते** तव **निषदे** निषदनाय उपवेशनाय **अकारि** कृतमस्माभिः प्रकल्पितमभूत् । **तं** योनिम् **आ नि षीद** शीघ्रमागत्य तत्रोपविश । शीघ्रागमने दृष्टान्तः । **स्वानो नार्वा** । अर्वा इति अश्वनाम । यथाश्वः स्वानो हेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत् । किं कृत्वा । **वयः** अश्वबन्धनार्थान् रश्मीन् **विमुच्य** रथाद्विश्लिष्य तथा अश्वान् रथे योजितांश्च तुरगान् **अवसाय** विमुच्य । अत्र निरुक्तम्– 'अवसायाश्वानिति

स्यतिरुपसृष्टो विमोचने' (निरु.१.१७) इति । कीदृशानश्वान् । **प्रपित्वे** यागकाले प्राप्ते । 'प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते' (निरु.३.२०) इति यास्कः । **दोषा** रात्रौ **वस्तोः** अहनि च **वहीयसः** आदरातिशयेन वोढृन् ।

निषदे । सदेः सम्पदादिलक्षणो भावे क्विप् । स्वानः । 'स्यमु स्वन ध्वन शब्दे' । बहुलवचनात् कर्तरि घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । वयः । वियन्ति रथेन सह सङ्गच्छन्ते इति विशब्देन रश्मयः उच्यन्ते । वी गत्यादिषु । औणादिकः इप्रत्ययः टिलोपश्च । द्वितीयार्थे प्रथमा । अवसाय । 'षो अन्तकर्मणि' । 'आदेचः' इति आत्वम् । 'समासेऽनञ्पूर्वे' इति क्त्वो ल्यबादेशः । वहीयसः । 'वह प्रापणे' । तृजन्तात् वोढृशब्दात् 'तुश्छन्दसि' इति ईयसुन् । 'तुरिष्ठेमेयःसु' इति तृलोपे कर्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् तदाश्रितस्य ओत्वस्याप्यभावे तृलोप एव क्रियते ।। १ ।।

**सिद्धाञ्जनम्**– 'योनिरि'ति नवर्चमेकादशं सूक्तं कुत्सस्यार्षं त्रैष्टुभं ऐन्द्रम् ।

हे **इन्द्र! योनिः** वेदिस्थानीयं अन्तरासनं **ते** तव **निषदे** निषदनाय उपवेशनाय **अकारि** कृतम् । **तम्** योनिं, अन्तःसिद्धमासनं **आ निषीद** आगत्य तत्रोपविश । तत्र दृष्टान्तः–**स्वानः अर्वा न** हर्षेण हेषाशब्दं कुर्वन्नश्वः यथा स्वीयं स्थानमागच्छति, तद्वत् । **प्रपित्वे** 'प्रपित्वे प्राप्ते' इति यास्कः, यजनकाले प्राप्ते, **दोषा वस्तोः** नक्तंदिवं निरन्तरं विश्रमवर्जं **वहीयसः** अतिशयेन वोढृन् **अश्वान्** वाहान् **अवसाय** विमुच्य रथादिति शेषः, **वयः** अश्वबन्धनार्थान् रश्मीन् **विमुच्य** रथाद्विश्लिष्य च योनिं निषीदेति सम्बन्धः । अत्राश्वाः क्रियाशक्तिमूलभूताः प्राणबलात्मानः, तन्नियामकाः ''वयः'' प्रज्ञावृत्तिविशेषाः ज्ञानप्रकाशाः, एवं ज्ञानक्रिया-शक्तिद्वयोपेते रंहणशीले रथे इन्द्र आगच्छति यजमानस्यान्तराविश्य प्रवेष्टुम् ।

निषदे–सदेः सम्पदादिलक्षणो भावे क्विप् । स्वानः–स्वनतेः, बहुलवचनात् कर्तरि घञ् । अवसाय–अवपूर्वात् स्यतेः । वहीयसः–वह प्रापणे, तृजन्ताद्वोढृशब्दात् तुश्छन्दसीतीयसुन् ।।

## ऋक्संहिता पदपाठसहिता

**ओ त्ये न॒र इन्द्र॑मू॒तये॑ गु॒र्नू चि॒त्तान्त्स॒द्यो अध्व॑नो ज॒गम्या॑त् ।**
**दे॒वासो॑ म॒न्युं दास॑स्य श्च॒म्नन् ते न॒ आ व॑क्षन्त्सुवि॒ताय॒ वर्ण॑म् ।। २ ।।**

**ओ इति । त्ये । नरः । इन्द्रम् । ऊतये । गुः । नु । चित् । तान् । सद्यः । अध्वनः । जगम्यात् । देवासः । मन्युम् । दासस्य । श्चम्नन् । ते । नः । आ । वक्षत् । सुविताय । वर्णम् ॥ २ ॥**

**स्कन्द–** **ओ** इति आङः उकारेण सहैकादेशः आ । उ ओ इति । उकारश्च पदपूरणः । आकारस्तु गुः इत्याख्यातेन सम्बन्धयितव्यः । **त्ये** इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । ये स्तोतृयोग्याः सर्वे **नरः** अस्मत्पुत्रपौत्रलक्षणाः ऋत्विग्लक्षणा वा मनुष्याः । **इन्द्रम् ऊतये** तर्पणाय पालनाय वा । आ गुः आ इत्येष समित्येतस्य स्थाने मर्यादायां वा । गायतिरप्यर्चतिकर्मा (निघ.३,१४) । संस्तुवन्ति । मर्यादया वा स्तुवन्तीत्यर्थः । एतत् ज्ञात्वा **नू चित्** निपातौ । नु इति पुराणवचनः । चिदिति पदपूरणः । पुराणानेवात्मनः स्तोतॄन् तान् प्रति । **सद्यः** यस्यां वेलायामाह्वयन्ते तस्यामेव । **अध्वनः** । तृतीयार्थे षष्ठी । स्वेनागमनमार्गेण **जगम्यात्** गच्छतु । किञ्च हे **देवासः** देवशब्दोऽत्र दीव्यतेः स्तुत्यर्थस्य स्तोतृवचनः । पुरस्ताच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । ये स्तोतारः क्रोधम् **दासस्य** उपक्षपयितव्यस्य स्वशत्रोः । **श्नथन्** अमेरदनार्थस्येदं रूपम् । इन्द्रप्रसादेन भक्षयन्ति । इन्द्रप्रसादेन क्रुद्धमपि स्वशत्रुम् अयत्नेनैव त्रासयन्तीत्यर्थः । **ते नः** अस्माकं स्वभूताः पुत्रपौत्रादय ऋत्विजो वा **आ वक्षन्** नित्यमावहन्त्वित्याशास्महे । **सुविताय** सुगमनाय **वर्णम्** वरणीयमिन्द्रम् । अथवा वर्णशब्दः पीतवचनः अन्तर्णीतमत्वर्थश्च । पीतेन वर्णेन तद्वन्तमिन्द्रमित्यर्थः । तथा ह्यैतिहासिकाः पीतवर्णमिन्द्रं चित्रकर्मसु लेखयन्ति । अथवा देवा अत्र मरुतोऽभिप्रेताः न स्तोतारः । ये देवा मरुतः मन्युं दासस्य श्नथन् तेऽपि इन्द्रप्रसादेनैव इन्द्रेण सह नः अस्मान् प्रति आ वक्षन् आवहन्तु प्रापयन्तु सुविताय वर्णं वरणीयं श्वेतेन वा वर्णेन वर्णवन्तमात्मानम् । मरुतः अपि इन्द्रेण सहागच्छन्त्वित्यर्थः ॥ २ ॥

**वेङ्कटमाधव–** अमी मनुष्याः **इन्द्रम्** रक्षणाय अभिगताः शीघ्रम् एव **तान्** इन्द्रः युद्धमार्गात् पारयतु । **देवासः** मननम् असुरस्य शोषयन्तु । **ते** अस्माकम् आवहन्तु अभ्युदयाय वारकमिन्द्रम् ॥ २ ॥

**मुद्गल–** **त्ये** ते **नरः** यज्ञस्य नेतारो यजमानाः **ऊतये** रक्षणाय **इन्द्रम् ओ** आ उ इत्येतत् निपात द्वयसमुदायः आकारार्थः । आ **गुः** आगच्छन्ति । स चेन्द्रः आगतान् **तान् नू चित्**

क्षिप्रम् **सद्यः** तदानीमेव **अध्वनः** अनुष्ठानमार्गान् **जगम्यात्** गमयतु प्रापयतु । **देवासः** सर्वे देवाः **दासस्य** उपक्षपयितुरसुरस्य **मन्युम्** क्रोधम् **श्वम्नन्** भक्षयन्तु हिंसन्त्वित्यर्थः । अपि च । **ते** देवाः **नः** अस्माकम् **सुविताय** सुष्ठु प्राप्तव्याय यज्ञाय **वर्णम्** अनिष्टनिवारकमिन्द्रम् **आ वक्षन्** आवहन्तु आनयन्तु ॥ २ ॥

**सायण– त्ये** ते **नरः** यज्ञस्य नेतारो यजमानाः **ऊतये** रक्षणाय **इन्द्रम् ओ** । आ उ इत्येतन्निपातद्वयसमुदायः आकारार्थः । **आ गुः** आगच्छन्ति । स चेन्द्र आगतान् **तान् नू चित्** क्षिप्रं **सद्यः** तदानीमेव **अध्वनः** अनुष्ठानमार्गान् **नगम्यात्** गमयतु प्रापयतु । **देवासः** सर्वे देवाः **दासस्य** उपक्षपयितुः असुरस्य **मन्युं** क्रोधं **श्वम्नन्** भक्षयन्तु हिंसन्त्वित्यर्थः । अपि च **ते** देवाः **नः** अस्माकं **सुविताय सुष्टु** प्राप्तव्याय यज्ञाय **वर्णम्** अनिष्टनिवारकमिन्द्रम् **आ वक्षन्** आवहन्तु आनयन्तु ।

जगम्यात् । गमेः अन्तर्भावितण्यर्थात् लिङि 'बहुलं छन्दसि' इति शपः श्लुः । श्नम्नन् । 'चमु अदने' । लेटि व्यत्ययेन श्ना । शकारोपजनश्छान्दसः । यद्वा । श्नम्नातिः प्रकृत्यन्तरं हिंसार्थं द्रष्टव्यम् । वक्षन् । 'वह प्रापणे' । लेटि 'सिब्बहुलं लेटि' इति सिप् । ढत्वकत्वषत्वानि । सुविताय । सुपूर्वदितेः कर्मणि निष्ठा । तन्वादित्वात् उवङ् । 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । वर्णम् । 'वृञ् वरणे' । अस्मादन्तर्भावितण्यर्थात् 'कृजृवृसिद्रुपन्यनिस्वपिभ्यो नित्' (उ.सू.३.२९०) इति नप्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥ २ ॥

**सिद्धाञ्जनम्– त्ये** ते प्रसिद्धाः **नरः** नेतारः, बलिनो देवाः, यजमाना इति सायणः, उत्तरत्र ''ते देवासः आ वक्षन्'' इति पठितत्वात्, नरो देवा इत्येवोपपन्नम् । **ऊतये** स्वीयाय यजमाने अभिवर्धनाय **इन्द्रम्** देवराजं **ओ** आ उ इति निपातद्वयसमुदाय आकारार्थः **आगुः** आगच्छन्ति, स चेन्द्रः **नू चित्** क्षिप्रं **सद्यः** इदानीमेव तान् आगतान् **अध्वनः** यजनयात्रामार्गान् **जगम्यात्** गमयतु प्रापयतु । मार्गेषु असुरचेष्टितविध्वंसनाय देवान् तत्र प्रापयत्वित्युक्तम् । **देवासः** सर्वे देवाः **दासस्य** उपक्षपयितुरसुरस्य **मन्युम्** मननयुक्तं क्रोधभावं **श्चम्नन्** भक्षयन्तु, हिंसन्तु । अपि च **ते** देवाः **नः** अस्माकं **सुविताय** दुरितप्रतिद्वन्द्विने कल्याणाय भद्रप्राप्तये **वर्णम्** वर्णनीयं रूपं, प्रकाशं तेज इति यावत् **आवक्षन्** आनयन्तु । 'वर्णं अनिष्टनिवारकमिन्द्र'मिति सायणीयव्याख्या । अन्यत्र सायण एव वर्णो वर्णनीयं रूपं, वर्णः प्रकाश इत्यनेकशो व्याचष्टे ।

जगम्यात्–गमेरन्तर्भावितण्यर्थात् लिङि बहुलं छन्दसीति शपः श्लुः । श्चम्नन्–चमु अदने, लेटि व्यत्ययेन श्ना, शकारोपजनश्छान्दसः । वक्षन्–वहेः लेट् । वर्णम्–वृञ् वरणे ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन् ।**
**क्षीरेण स्नातः कुयवस्य योषे हते ते स्यातां प्रवणे शिफायाः ॥ ३ ॥**
**अव । त्मना । भरते । केतऽवेदाः । अव । त्मना । भरते । फेनम् । उदन् ।**
**क्षीरेण । स्नातः । कुयवस्य । योषे इति । हते इति । ते इति । स्याताम् । प्रवणे ।**
**शिफायाः ॥ ३ ॥**

**स्कन्द–** **अव** इत्युपसर्गोऽधोभावे । **भरते** इति बिभर्तेर्वा धारणार्थस्य हरतेर्वा प्रापणार्थस्य रूपम् । अधो धारयति प्रापयति वा । पृथिव्यां पातयतीत्यर्थः । किम् । सामर्थ्यात् मेघस्थमुदकम् **त्मना** आत्मनैव इन्द्रः । कीदृशः । **केतवेदाः** 'केतः' (निघ ३,९) इति प्रज्ञानाम । स्तोतृ-प्रज्ञानां वेदिता । भक्तिज्ञ इत्यर्थः । अथवा 'वेदः' (निघ.३,१०) इति धननाम । प्रज्ञाधनः । न च केवालमुदकम् । किं तर्हि । **अव त्मना भरते फेनम् उदन्** उदन्नित्युदकशब्दस्योदादेशः । सप्तम्याश्चात्र लुक् । यस्तत्रोदके फेनः तमपि । सफेनं कृत्स्नमुदकमित्यर्थः । किञ्च **क्षीरेण स्नातः** 'क्षीरम्' (निघ.१,३) इति उदकनाम । परस्ताच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । ये उदकेन स्नातः **कुयवस्य** कुयवनाम्नोऽसुरस्य **योषे** स्त्रियौ । भार्ये इत्यर्थः । **हते ते स्याताम्** लङर्थे लिङ् । ते अपि हते आस्ताम् । दारा अपि कुयवस्य हता इत्यर्थः । क्व । उच्यते । **प्रवणे** निम्ने प्रदेशे । ह्रद इत्यर्थः । कस्याः **शिफायाः** शिफा नामासुरस्य पुर्यां नदी तस्याः ॥

**वेङ्कटमाधव–** स्वयमेव कुयवः प्रज्ञाधनः उदकमपहरति **फेनम्** च उदकस्थम् । तत्र तस्य भार्ये उदकेन स्नानं कुरुतः । ते त्वत्प्रसादात् **इन्द्र! हते स्याताम्** । शिफाख्याया नद्याः **प्रवणे** निम्ने । सा यत्र **पतति** समुद्रं प्रविशति तत्रेति ॥ ३ ॥

**मुद्गल–** **केतवेदाः** केतं ज्ञातं वेदः परेषां धनं येन स तादृशः कुयवनामासुरः **त्मना** आत्मना स्वयमेव **अव भरते** ज्ञातं परेषां धनम् अपहरति । अपि स सोऽसुरः **उदन्** उदकेऽन्तर्वर्तमानः सन् **फेनम्** फेनयुक्तमुदकम् आत्मना स्वयमेव **अव भरते** अपहरति । **क्षीरेण** क्षरणशीलेन

तेनापहृतेनोदकेन **कुयवस्य** असुरस्य **योषे** भार्ये **स्नातः** स्नानं कुर्वाते । ते तादृश्यौ स्त्रियौ **शिफायाः** शिफा नाम नदी । तस्याः **प्रवणे** निम्ने प्रवेष्टुमशक्येऽगाधप्रदेशे **हते** नष्टे **स्याताम्** भवेताम् । हे **इन्द्र!** त्वं परेषां धनमपहृत्य अत्मैर्दुरवगाहे उदकस्य मध्ये वर्तमानं कुयवं सकुटुम्बम् अवधीरित्यर्थः ।। ३ ।।

**सायण– केतवेदाः** केतं ज्ञातं वेदः परेषां धनं येन स तादृशः कुयवनामासुरः **त्मना** आत्मना स्वयमेव **अव भरते** ज्ञातं परेषां धनमपहरति । अपि च सोऽसुरः **उदन्** उदकेऽन्तर्वर्तमानः सन् **फेनं** फेनयुक्तमुदकमात्मना स्वयमेव **अव भरते** अपहरति । **क्षीरेण** क्षरणशीलेन तेनापहृतेनोदकेन **कुयवस्य** असुरस्य **योषे** भार्ये **स्नातः** स्नानं कुर्वाते । तादृश्यौ स्त्रियौ **शिफायाः** । शिफा नाम नदी । तस्याः **प्रवणे** निम्ने प्रवेष्टुमशक्येऽगाधप्रदेशे **हते** नष्टे **स्यातां** भवेताम् । हे इन्द्र त्वं परेषां धनमपहृत्य अन्यैर्दुरवगाहे उदकस्य मध्ये वर्तमानं कुयवं सकुटुम्बमवधीरित्यर्थः । त्मना । 'मन्त्रेष्वाड्यादेरात्मनः' इत्याकारलोपः । भरते । 'हृञ् हरणे' । 'हृग्रहोर्भः' इति भत्वम् । केतवेदाः । 'कित ज्ञाने' । कर्मणि घञ् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । उदन् । 'पद्दन्' इत्यादिनोदकशब्दस्य उदन्नादेशः । 'सुपां सुलुक्' इति सप्तम्या लुक् ।। ३ ।।

**सिद्धाञ्जनम्–** रहस्यार्थविज्ञानायेदं वक्तव्यम् । परार्धमपरार्धमिति द्विधा विभक्ता विश्वसता । तत्र परार्धं सत्यं नित्यं स्वतःप्रकाशं ऋतज्योतिरावासस्थानं भूमिकाविशेषोपेतं, अत एव सोपानयुक्तं च भवति । अपरार्धं तु भूरादि त्रैलोक्यं, अनृतप्रपञ्चयुक्तं भूमिकाभिर्युक्तं सोपानवच्च भवति । यद्यपि इदं त्रैलोक्यं ऋतप्रतिद्वन्द्वि प्रोक्तं, तथापि ऋतानृतयोः संयोजनं भवति, तेन मिश्रणेन व्यामोहजनकव्याकुलत्वं आपद्यते । यथा ऊर्ध्वं परार्धे ऋतस्य ज्योतिषः घनत्वं पदे पदे आरोहे प्रवृद्धं घनं च भवति, तथा त्रैलोक्ये अवरोहक्रमेण अनृतस्य असत्यप्रकाशस्य घनत्वं पृथिव्या-मात्यन्तिकं च भवति । तदत्र त्रैलोक्ये मध्यमस्थाने भुवर्लोकाख्ये क्रियाशक्तिमूलस्थानभूतप्राण-बलावसथे ऋतज्योतिःसम्बन्धिनां देवानां तद्विरोधिनां अनृतराज्याधिकारिणामसुराणां च सङ्ग्रामो भवति, यतः त्रैलोक्येऽपि ऊर्ध्वसोपानेषु द्युसन्निहितेषु अनृतस्य आसुरबलस्य चात्यन्तन्यूनता अभावो वा भवति, ऋतस्य तत्प्रकाशबलादेः संनिकर्षात् । मध्यमस्थान एव आसुराणि दुर्गाणि पुराणि । तत्रैव असुरवैभवानामिदं एकं भवति, यत् ऋतज्योतिषः अवराहे तस्यानृतेन मिश्रणं

भवति । अस्य फलितं तु सत्याभासः ज्योतिराभासः, ऋतस्य अन्यथा प्रदर्शनं, अनृतस्य ऋतरूपतया च । असुरैर्देवभोग्यानां गवादेः सोमरसस्य च स्वायत्तीकरणेन स्योपभोगायोपयोजनं च भवति । एवं ज्योतिर्बलादिलक्षणाः आपश्च स्वार्थं अत्रैवोपयुज्यन्ते असुरैः । बहूनामसुराणां वृत्रादीनां कुयव एकः, यस्य ऋतानतमिश्रणं मुख्ये व्यापारः । इदं चावधेयम्, यद्यथा वेदान्तिनो मन्यन्ते 'अविद्यादोषसहिता विद्या न तु अत्यन्तविद्याभावः' इति, तथा अनृतं नात्यन्तिक ऋताभावः, किं तु दोषदूषितं ऋतमिति । तदिदं ऋतानृतयोः कुत्सितस्य मिश्रणस्याधिकारिको यथार्थनामा कुयवः, यमत्र उत्तरस्यां च शृणुमः ।। अथ ऋचोऽस्या अक्षरार्थकथनेन तात्पर्यं सुगमं भवेत् ।।

**केतवेदाः** केतं ज्ञातं वेदः धनं ज्ञानं वा परेषामिति शेषः येन सः, अस्यासुरस्य शत्रुविषयकज्ञानं जायत इत्यर्थः, अत एव कपटयुक्तिं प्रयुङ्क्ते, प्रयोक्तुं समर्थः । तादृशः कुयवः **त्मना** आत्मना स्वयमेव इतरसाहाय्यनिरपेक्षं **अवभरते** अपहरति परस्वं देवधनम् । तथा **उदन्** उदके, प्राणबलभरिते मध्यमस्थानगते जले अन्तवर्तमानः **फेनम्** नवनवं प्रवहत् अत एव फेनयुक्तं ज्योतिर्बलादिलक्षणं उदकं **त्मना** आत्मना स्वयमेव **अवभरते** अपहरति स्वार्थोपयोगाय । ईदृशस्य **कुयवस्य** असुरस्य **योषे** भार्ये, भार्याद्वयं प्राणक्रियात्मिका ज्ञानप्रकाशात्मिका चेति शक्तिद्वयस्य द्योतकं भवति । ऋतवतां देवानामिव अनृतवतां असुराणां च प्रकाशो बलमिति द्विविधा शक्तिः उपभोग्या अनृतभरिता भार्या भवति । एवम्भूते कुयवभार्ये **क्षीरेण** पयसा **स्नातः** मज्जतः । आसुरीं समृद्धिं द्योतयति क्षीरेण स्नानं, न तु जलेन । **ते** उभे कुयवभार्ये उक्तलक्षणे **शिफायाः** शिफा काचन नदीति सायणः । सकृदेव श्रूयते । निर्वचनं न दत्तम्, तस्याः **प्रवणे** निम्नप्रदेशे **हते नष्टे स्याताम्** भवेताम् । 'शिफाजटे' इति नामलिङ्गानुशासनम् । ''अधो रोहन्ति शाखाः शिफाः, शिफाख्या शाखावरोहोऽश्वत्थादेरित्युपाध्यायः'' इति क्षीरस्वामी । तर्हि एतदुक्तं भवति– यत् ऊर्ध्वं मूले प्रस्थाय पृथिव्यामवसितस्यावरोहस्य ततोऽपि निम्ने महान्धकारे पाताले कुयवस्य द्विविधाऽपि शक्तिः पततु, नश्यत्विति ।

त्मना–मन्त्रेष्वाकारलोपः । भरते–हृञ् हरणे, हस्य भत्वम् । उदन्–उदकस्य उदन्नादेशः, सप्तम्या लुक् । शिफा– 'शिनोति शेते वा शिफा' इति क्षीरस्वामी ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।**
**अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ।। ४ ।।**
**युयोप । नाभिः । उपरस्य । आयोः । प्र । पूर्वाभिः । तिरते । राष्टि । शूरः । अञ्जसी । कुलिशी । वीरऽपत्नी । पयः । हिन्वानाः । उदऽभिः । भरन्ते ।। ४ ।।**

**स्कन्द– युयोप** इति युपिर्मोहनार्थः । पाणिभिः कीलाभिश्च हन्यमानस्य मूढा **नाभिः उपरस्य** उपरशब्दोऽत्र उपरिवर्तिवचनः न मेघनाम । शूराणामुपरिवर्तिनः । अत्यन्तशूरस्येत्यर्थः । कस्य । सामर्थ्याद्वृत्रस्य वा अन्यस्य कस्यचिदुपरस्य । **आयोः**, 'छन्दसीणः' (पा.उ.१,२) इत्येवमौणादिक उण् प्रत्ययः भूतकाले द्रष्टव्यः । युद्धार्थमागतस्य । कदा । उच्यते । **प्र पूर्वाभिः तिरते** अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यदा पूर्वाभिः पूर्ववृत्ताभिः । काभिः । स्त्रीलिङ्गनिर्देशात् हतिभिः । चिरन्तनैरेव पाणिकीलाप्रहारैरित्यर्थः । प्र तिरते 'अनतिरति' (निघ २,१९) इति वधकर्मसु पाठात् तिरतिरत्र वधार्थः । भूते लट् । प्रकर्षेणातिरत् । हतवानित्यर्थः । कः । प्रकरणादिन्द्रः । कीदृशः । **राष्टि शूरः** अत्राप्येकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यो राष्टि राजते ईष्टे सर्वस्य शूरश्च सः । यदा चिरन्तनैरेव पाणिकीलाप्रहारैः वृत्रमन्यं वा कञ्चिदसुरं प्रकर्षेण हतवान् तदास्य हन्यमानस्य मूढा नाभिरित्येवं सर्वेषामेकवाक्यता । तदैव च **अञ्जसी कुलिशी वीरपत्नी** इत्येवन्नामानस्तिस्रोऽसुरस्य भार्याः **पयः हिन्वानाः** 'पयः' (नि.१,१२) इति उदकनाम । बहुवचनस्थान एकवचनम् । हिनोतिरपि गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थः । उदकानि गमयन्त्यः । वहन्त्य इत्यर्थः । **उदभिः** तैः उदकैः **भरन्ते** अयमपि भूत एव काले द्रष्टव्यः । मूर्छितं सन्तं मूर्च्छाव्यावृत्यर्थमसिञ्चन्नित्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** पिहितम् आसीत् निर्गमनस्थानं मेघस्य गमनशीलस्य कुयवासुरेण । **पूर्वाभिः** अद्भिः वृद्धो भवति शिफानदीस्थाभिः कुयवः राजते च ताभिः शूरः । तं च **अञ्जसी कुलिशी वीरपत्नी** इति तिस्रः उदकं प्रेरयन्त्यः तद्भार्याः तैः उदकैः प्रेरयन्ति ।। ४ ।।

**मुद्गल– उपरस्य** उदकस्य मध्ये सुप्तस्यावस्थितस्य **आयोः** परेषाम् उपद्रवार्थम् इतस्ततो गच्छतः कुयवस्यासुरस्य **नाभिः** सन्नद्धम् आवासस्थानम् **युयोप** गूढमासीत् । यथान्यैर्न दृश्यते सोऽसुरः तथाऽकरोदित्यर्थः । अपि च **पूर्वाभिः** पूरयित्रीभिरात्मनापहृताभिरद्भिः **प्र तिरते**

सोऽसुरः प्रवर्धते । स च **शूरः** शौर्योपेतः **राष्टि** राजते च । आत्मीयेन शौर्येण लोके प्रख्यातो भवतीत्यर्थः । तम् इमम् असुरम् **अञ्जसी** आञ्जस्योपेता **कुलिशी** कुलं शातयन्ती **वीरपत्नी** वीरस्य पालयित्री एतत्संज्ञिकाः तिस्रो नद्यः **पयः** पयसा तत्सम्बन्धिना सारभूतेनोदकेन **हिन्वानाः** प्रीणयन्त्यः **उदभिः** आत्मीयैरुदकैः **भरन्ते** धारयन्ति ॥ ४ ॥

**सायण– उपरस्य** उदकमध्ये उप्तस्य अवस्थितस्य **आयोः** परेषामुपद्रवार्थमितस्ततो गच्छतः कुयवस्यासुरस्य **नाभिः** संनद्धम् आवसनस्थानं **युयोष** गूढमासीत् । यथान्यैर्न दृश्यते सोऽसुरस्तथाकरोदित्यर्थः । अपि च पूर्वाभिः पूरयित्रीभिरात्मनापहृताभिरद्भिः **प्र तिरते** सोऽसुरः प्रवर्धते । स च **शूरः** शौर्योपेतः **राष्टि** राजते च । आत्मीयेन शौर्येण लोके प्रख्यातो भवतीत्यर्थः । तमिममसुरम् **अञ्जसी** आञ्जस्योपेता **कुलिशी** कुलं शातयन्ती **वीरपत्नी** वीरस्य पालयित्री एतत्सञ्ज्ञिकास्तिस्रो नद्यः **पयः** पयसा तत्सम्बन्धिना सारभूतेनोदकेन **हिन्वानाः** प्रीणयन्त्यः उदभिः, आत्मीयैरुदकैः **भरन्ते** धारयन्ति ।

युयोप । 'युप विमोहने' । नाभिः । 'नहो भश्च' (उ.सू.४.५६५) इति इञ्प्रत्ययः । राष्टि । 'राजृ दीप्तौ' । 'बहुलं छन्दसि' इति शपो लुक् । व्रश्चादिना षत्वे ष्टुत्वम् । पयः **'सुपां सुलुक्'** इति तृतीयाया लुक् । हिन्वानाः । हिविः प्रीणनार्थः । इदित्त्वात् नुम् । अस्मात्ताच्छीलिकश्चानश् । आगमानुशासनस्यानित्यत्वात् मुगभावः । चानशो लसार्वधातुकत्वाभावात् तत्स्वराभावे चित्स्वर एव शिष्यते ॥ ४ ॥

**सिद्धाञ्जनम्– उपरस्य** उपरि मध्यमस्थाने उदके वर्तमानस्य **आयोः** गन्तुः, इतस्ततः सञ्चरतः कुयवस्य **नाभिः** सन्नद्धो मुख्य आवासप्रदेशः **युयोप** गूढ आसीत्, यथा अन्येन जानीयुः तथा निजावासस्थानं सोऽसुरः कृतवान् । अपि च सः **पूर्वाभिः** पूर्वमपहृताभिरद्भिः **प्रतिरते** प्रवर्धते । देवस्वानि ज्योतिर्बलादिलक्षणानि उदकानि अपहृत्य तैः प्रवर्धते । **शूरः** शौर्योपेतः सः **राष्टि** राजते च, स्वीयशौर्येण दीप्तः प्रख्यातो भवति । **अञ्जसी लिशी वीरपत्नी** एतास्तिस्रः स्यन्दमाना आपः, स्वभावतः शुद्धा दिव्याश्च, अधुना कुयवासुराधीनाः सत्यः तमसुरं **पयः** पयसा, तृतीयाया लुक्, तत्सारभूतेनोदकेन **हिन्वानाः** प्रीणयन्त्यः **उदभिः** उदकैः **भरन्ते** धारयन्ति ।

अञ्जसी–अञ्जस्योपेतेति सायणः । अन्यत्र तेनैव यदुक्तं तदुपपन्नतरम् ''अञ्जसीनां स्तुतिं विन्दति'' (१०.३२.७) 'ऋजुना मार्गेण गन्तव्यानामपां मार्गं लभत' इति । तस्मात् अञ्जसी दिव्यस्वभावात् ऋजुपथगामिनी आप्या धारा, सा असुरायत्ता तं धारयति । एवं कुलिशी कूलं शातयतीति सायणः, कुलिशस्येन्द्रायुधत्वात् तत्सम्बन्धिनी, व्यत्ययेन ईकारान्तः छान्दसः, तथा वीरपत्नी सरस्वत्याः विशेषणं भवति ''पावीरवी........सरस्वती वीरपत्नी धियं धात्'' इत्यत्र तस्मादेषा वीरस्य इन्द्रस्य (प्रजापतेरिति सायणः) पत्नी । एवं तिस्रोऽपि सिन्धवो दिव्यास्तमसुरं कुयवं पोषयन्ति ।

युयोप–युप् विमोहने । नाभिः–नहो भश्चेतीञ्प्रत्ययः । राष्टि–राजृ दीप्तौ, शपो लुक्, व्रश्चादिना षत्वे ष्टुत्वम् । हिन्वानाः–हिविः प्रीणनार्थः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् ।**
**अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ।। ५ ।।**
**प्रति । यत् । स्या । नीथा । अदर्शि । दस्योः । ओकः । न । अच्छ । सदनम् । जानती । गात् । अध । स्म । नः । मघऽवन् । चर्कृतात् । इत् । मा । नः । मघाऽइव । निष्षपी । परा । दाः ।। ५ ।।**

**स्कन्द–** **यत्** यस्मात् **स्या** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । या त्वया काङ्क्षिता सा नीथा स्तुतिरत्र नीथोच्यते । 'नीथाविदो जरितारः' (ऋ ३,१२,५) इति यथा । स्तुतिः **प्रति अदर्शि** प्रतिशब्दोऽत्र धात्वर्थानुवादी । अस्माभिर्दृष्टा । आलोचिता कृतेत्यर्थः । कृता च सती **दस्योः ओकः न अच्छ** ओक इति निवासस्थानमुच्यते । अच्छेत्याप्तुमित्यस्यार्थे । यथा कश्चिद्राजा स्वस्य शत्रोः निवासस्थानमाप्तुं महता यत्नेन शीघ्रं गच्छेत्, एवम् **सदनम्** सर्वस्तुतीनां स्थानमाश्रयं भवन्तम् **जानती गात्** गता प्राप्ता । **अध** एतस्मात्कारणात् । स्म इति पदपूरणः । हे **मघवन्! नः** तृतीयार्थे षष्ठी । अस्माभिः । **चर्कृतात्** अत्यर्थं कृताम् । कस्मात् । सामर्थ्यादपराधात् । **इत्** शब्दस्तु पदपूरणः । **मा नः** अस्मान् **परा दाः** ददातिरत्र सामर्थ्याद्विनाशार्थः परित्यागार्थो वा । विनीनशः परित्याक्षीर्वा । कथम् । **मघा इव निष्षपी**

सपतेः स्पृशतिकर्मणोऽर्चतिकर्मणो वा सपं प्रजननमिहोच्यते तेन हि स्त्री स्पृश्यते । स्तुत्यं च तत् सुखकरत्वात् प्रजासन्तानकरत्वाच्च । अथवा पसः प्रजननमुच्यते । तथाहि अध्वर्यूणां सौत्रामणीमन्त्रेषु प्रयोगो दृश्यते 'आनन्दनन्दावाण्डौ मे । भगः सौभाग्यं पसः' (तै.ब्रा.२,६,५,६) इति । पस एवाद्यान्त्याक्षरविपर्ययेण सपमित्युच्यते । निगर्तः सपः कोशान्निष्षपः तद्वान्निष्षपी । वेश्यासम्भोगसक्तहृदयः । स यथा वेश्याभ्यो ददत् धनानि विनाशयति परित्यजति वा, मा नस्त्वं तथा परादा इति ।। ५ ।।

**वेङ्कटमाधव– प्रत्यदर्शि** यस्मात् सेयं स्रुतिर्मार्गः गृहमिव अभि कश्चन प्रदर्शकः तस्य **दस्योः सदनम्** अवगच्छन्ती गच्छति । यथा कस्यचिद् गृहमार्गमन्य उपदिशन्नग्रे गच्छति, एवं कुयवस्य आवासं प्रज्ञापयन्ती तत्र गच्छति । एवं मार्गे ज्ञाते सति **मघवन्!** त्वम् अस्माकम् अत्यन्तात् परिचरणाद् हेतोः अस्मान् **मा परा दाः** यथा विनिर्गतशिश्नः कामचरणार्थम् उत्सृष्टशिश्नः धनानि परादादाति स्त्रीभ्यः ।। ५ ।।

**मुद्गल– यत्** यदा **नीथा** नयनहेतुभूता **स्या** सा पदवी मार्गः **प्रति अदर्शि** अस्माभिर्दृष्टाऽभूत् । सा च पदवी **दस्योः** उपक्षपयितुः कुयवस्यासुरस्य **सदनम्** गृहम् **अच्छ** आभिमुख्येन **गात्** गता प्राप्ता । दृष्टान्तः । **जानती** स्वकीयं वत्सम् अभिजानती गौः **ओकः न** निवासस्थानं स्वकीयं गोष्ठं यथा ऋजु प्राप्नोति, तद्वत् मार्गोऽपि असुरगृहं प्राप्त इत्यर्थः । **अध स्म** अथानन्तरमेव हे **मघवन्!** धनवन्निन्द्र! **चर्कृतात्** पुनःपुनः तेनासुरेण कृतात् उपद्रवात् **नः** अस्मान् रक्षेति शेषः । **इद्** अवधारणे । अस्मान् रक्षैव । **नः** अस्मान् **मा परा दाः** मा परित्याक्षीः । अस्माभिः ज्ञातेन मार्गेण गत्वा अस्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः । दृष्टान्तः । **मघेव निष्षपी** यथा विनिर्गतसपो विनिर्गतशेपः यथेष्टचारी दासीपतिः मघा इव यथा धनानि अस्थाने परित्यजति तथाऽस्मान् मा परित्याक्षीरित्यर्थः ।। ५ ।।

**सायण– यत्** यदा **नीथा** नयनहेतुभूता **स्या** सा पदवी **प्रति अदर्शि** अस्माभिर्दृष्टाभूत् सा च पदवी **दस्योः** उपक्षपयितुः कुयवस्यासुरस्य **सदनं** गृहम् **अच्छ** आभिमुख्येन **गात्** गता प्राप्ता । तत्र दृष्टान्तः । **जानती** स्वकीयं वत्सम् अभिजानती गौः **ओको न** निवासस्थानं स्वकीयं गोष्ठं यथा ऋजु प्राप्नोति । तद्वन्मार्गोऽप्यसुरगृहं प्राप्त इत्यर्थः । **अध स्म** अथानन्तरमेव हे **मघवन्!** धनवन्निन्द्र **चर्कृतात्** पुनःपुनस्तेनासुरेण कृतादुपद्रवात् **नः** अस्मान् रक्षेति शेषः ।

इत् इत्यवधारणे । अस्मान् रक्षैव **नः** अस्मान् **मा परा दाः** मा परित्याक्षीः । अस्माभिर्ज्ञातेन मार्गेण गत्वा अस्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः । तत्र व्यतिरेको दृष्टान्तोऽभिधीयते । **मघेव निष्षपी** । यथा विनिर्गतसपो विनिर्गतशेषः यथेष्टचारी दासीपतिः मघेव यथा धनान्यस्थाने परित्यजति तथास्मान् मा परित्याक्षीरित्यर्थः । अत्र निरुक्तं– 'निष्पपी स्त्रीकामो भवति विनिर्गतसपः । सपः सपतेः स्पृशतिकर्मणः । मा नो मघेव निष्षपी परा दाः । स यथा धनानि विभजति मा नस्त्वं तथा परा दाः' (निरु.५.१६) इति ।

नीथा । 'णीञ् प्रापणे' । 'हनिकुपिनीरमिकाशिभ्यः क्थन्' इति करणे क्थन्प्रत्ययः । गात् । एतेर्लुङि 'इणो गा लुङि' इति गादेशः । 'गातिस्था' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । चर्कृतात् । करोतेर्यङ्लुगन्तात् 'निष्ठा' इति क्तप्रत्ययः । मघाऽइव । 'शेश्छन्दसि' इति शेर्लोपः ।' निष्पपी । 'षप समवाये' । सपति समवैति योन्या सङ्गच्छते इति सपः शेषः । पचाद्यच् । निर्गतो नित्योद्धृतः सपः शेषो यस्य स स्त्रीव्यसनी निष्पपः । वर्णव्यापत्त्या ईकारः । दाः । 'डुदाञ् दाने' । लुङि 'गातिस्था' इति सिचो लुक् । 'न माङ्योगे' इत्यडभावः ।। ५ ।।

**सिद्धाञ्जनम्– यत्** यदा **नीथा** नयनस्य प्रापणस्य करणभूता साधनभूता या **स्या** सा पदवी **प्रति अदर्शि** दृष्टा भवत्यस्माभिः, सा च पदवी **दस्योः** असुरस्य कुयवस्य **सदनम्** गृहं **अच्छ** आभिमुख्येन **गात्** गता प्राप्ता । तत्र दृष्टान्तः– **जानती** गन्तव्यं गोष्ठमभिजानती गौः **ओको न** स्वीयं स्थानं यथा निरन्तरायं प्राप्नोति तद्वत् पदवीं असुरस्य गूढं वासस्थानं प्राप्नोति । तादृशी पदवीं दृेटाऽस्माभिः । **अध स्म** अथानन्तरमेव हे **मघवन्!** धनवन्निन्द्र, **चर्कृतात्** पुनः पुनः असुरेण कृताद् दुःखात् **नः** अस्मान् रक्षसि इति शेषः, इत् अवधारणे । मार्गदर्शनं अस्माकं भक्तानां कर्तव्यं, तदनन्तरकरणीयं असुरवधेनास्माकं रक्षणं इन्द्रस्य देवस्य कर्तव्यम् । **नः** अस्मान् **मा परादाः** मा परित्याक्षीः । तत्र दृष्टान्तः– **निष्षपी** निर्गतसपः स्वच्छन्दचारी पुरुषः **मघेव** धनानि यथा अस्थाने परित्यजति तया मा त्याक्षीरस्मान् ।

नीथा–णीञ् प्रापणे, करणे क्तप्रत्यय; । चर्कृतात्–करोतेर्यङ्लुगन्तान्निठा । मघा इव– शेर्लोपः । निष्पपी–षप समवाये, सपति समवैति सपः, शेषः, पचाद्यच्, निर्गतः सपो यस्य सः, वर्णव्यापत्त्या ईकारः । दाः–डुदाञ् दाने, लुङ् ।। ५ ।।

**नीतिमञ्जरी**– अनुक्तं सुखरूपमपि हिंसेत्याह–

**अनुक्तं च न कर्तव्यं सुखरूपं भवेद्यदि ।**
**परस्त्रीणां हि सम्भोगात्कुत्स आहेति निष्षपी ।। २७ ।।**

यत्कर्म अनुक्तं श्रुतिस्मृत्योर्निषिद्धं तत्सुखरूपमपि यदि हिंसा न भवेत् तन्न कर्तव्यम् । कुतः । परस्त्रीणां सम्भोगाद्धि यस्मात्कुत्सः निष्षप स अस्पृश्य इत्याह–

तत्र ऋक्– (ऋ.१.१०४.५)

**प्रति यत्स्या नीथाऽदर्शि दस्योरोको नाच्छा सदनं जानती गात्**
**अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः**

परस्मै सुखं दत्वा पुण्यवान्, परस्मै दुःखं दत्त्वा पापवान् इति यदुक्तं तदत्र विपरीतं भवति । उक्तत्वात् । यदुक्तम् 'अग्नीषोमीयं पशुमालभेत' इत्यादिभिर्वाक्यैस्तद् दुःखरूपमपि स्वर्गसाधनं भवति । यन्निषिद्धं परस्त्रीसम्भोगजनितसुखादि तत्सुखरूपमपि नरकाय भवति– इत्येतत्सम्यगुक्तम् ।

कुत्सस्त्रिष्टुभा इन्द्रं तुष्टाव । ऋचोऽयमर्थः– हे **मघवन्!** धनवन्निन्द्र । **यत्** यदा **नीथा** नयनहेतुभूता **स्या** सा पदवी अस्माभिः **प्रत्यदर्शि** दृष्टाऽभूत् । सा च पदवी **दस्योः** उपक्षपयितुः कुयवस्य असुरस्य **सदनं** गृहं **अच्छ** आभिमुख्येन **गात्** गता प्राप्ता । तत्र दृष्टान्तः । **जानती** स्वकीयं वत्समभिजानती गौः **ओको न** । ओकः निवासस्थानं स्वकीयं गोष्ठम् । ओक इति निवासनाम । (नि.३।३) इति यास्कः । यथा प्राप्नोति तद्वन्मार्गोऽप्यसुरस्य गृहं प्राप्तः । अथानन्तरमेव **चर्कृतात्** पुनः पुनस्तेनासुरेण कृतात् उपद्रवात् **नो**ऽस्मान् रक्षेति शेषः । इत् पूरणार्थः । मिताक्षरेष्वनर्थकाः कमीमिद्विति (नि.१।९) । रक्षयित्वा नोऽस्मभ्यं **निष्षपी** स्त्रीकामो भवति तस्य **मघेव** धनानि इव **परा दाः** स निष्षपी अस्पृश्यो जारो भूत्वा धनानि विनाशयति । यथा अस्थाने परित्यजति तद्वत् ।

मा परा दाः–डुदाञ् दाने–गातिस्थेति (पा.२।४) सिचो लुक् । बहुलं छन्दस्यमाङ्योगेऽपि (पा.६।४।७५) इत्यडभावः ।

निष्षपी स्त्रीकामो भवति विनिर्गतसपः । सपः सपतेः स्पृशतिकर्मणः । इति यास्कः (नि.५।१६) ।

अच्छेति 'सुतायाहीति (ऋ.प्रा.७।६) दीर्घः ।

स्म–दधिममदतेति (ऋ.प्रा.८।१५) दीर्घः ।

अनुक्तं सुखरूपमपि न कार्यमिति निष्षपीदृष्टान्तेन दर्शिनम् ।। ५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये अष्टादशो वर्गः ।।

## ।। अथ एकोनविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स त्वं न॑ इन्द्र सूर्ये॒ सो अ॒प्स्व॑नागा॒स्त्व आ भ॑ज जीवशं॒से ।**
**मान्त॑रां भुज॒मा री॑रिषो नः श्रद्धि॑तं ते मह॒त इ॑न्द्रि॒याय॑ ।। ६ ।।**

**सः । त्वम् । नः॒ । इ॒न्द्र॒ । सूर्ये॑ । सः । अ॒प्ऽसु । अ॒ना॒गाः॒ऽत्वे । आ । भ॒ज॒ । जी॒व॒ऽशं॒से ।**
**मा । अन्त॑राम् । भुज॑म् । आ । रि॒रि॒षः॒ । नः॒ । श्रद्धि॑तम् । ते॒ । म॒ह॒ते । इ॒न्द्रि॒याय॑ ।।**

**स्कन्द–** य उक्तगुणोऽसि **सः त्वम् नः** अस्मान् हे **इन्द्र! सूर्ये** सूर्येणात्र तद्विषयं दर्शनं प्रतिपाद्यते । सर्वत्र तादर्थ्यचतुर्थ्यर्थे सप्तमी । सूर्यदर्शनाय । सूर्यदर्शनद्वारेणाविकलेन्द्रियत्वमुच्यते । अविकलेन्द्रियत्वार्थमित्यर्थः । **सः** एव **अप्सु** वृष्टिलक्षणाभ्योऽद्भ्यः । वृष्ट्यर्थमित्यर्थः । **अनागास्त्वे** अनागास्त्वाय । अपापत्वार्थं चेत्यर्थः । **आ भज** आ इत्येष समित्येतस्य स्थाने । सम्भज । **जीवशंसे** जीवो जीवितम् । आशंस्यते प्रार्थ्यतेऽसाविति शंसः । जीविताय आशंसितस्य चेत्यर्थः । अथवा सूर्ये अप्सु जीवशंसे इत्यत्र स्वार्थ एव सप्तमी । सूर्येण तु तत्सम्बद्धो द्युलोक उच्यते । अप्स्वित्यप्छब्दोऽन्तरिक्षनाम (निघ.१,३) । जीवशंसे इत्यपि पार्थिवो लोक उच्यते । तत्र ह्यतिशयेन जीवितमाशंस्यते । सूर्यसम्बद्धे द्युलोकेऽन्तरिक्षे च जीविताशंसाबहुले च पार्थिवे लोके अनागास्त्वाय त्वमस्मान् सम्भजेत्यर्थः । किञ्च **अन्तराम् भुजम्** अन्तराशब्दः सन्निकृष्टवचनः । सन्निकृष्टं चैहलौकिकं भोगम् । **आ रीरिषः** आकारोऽत्र ईषदर्थे । मा ईषदपि हिंसीः । **नः** अस्माकम् । किं कारणम् । उच्यते । यस्मात् **श्रद्धितम्** श्रद्धधातोरुत्साहार्थस्येदं रूपम् । श्रद्धितमस्माभिः । त्वत्स्तुतिकरणे यस्मादस्माभिरुत्साहः कृत इत्यर्थः । किमर्थम् । **ते** तव **महते इन्द्रियाय** वीर्याय । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते– तव महते इन्द्रियायेति । अथवा श्रद्धितं ते इति पूर्वानपेक्षोऽयं पादो भिन्नमेव वाक्यम् । उत्साहस्तव महते वीयायेति ।। ६ ।।

**वेङ्कटमाधव– सः त्वम्** अस्मान् **इन्द्र सूर्ये आ भज** । सः एव उदकेषु तथाऽदारिद्र्ये । तथा जीविताशंसनं च सफलं कुरु अस्माकम् । किञ्च अस्माकम् अन्तरतमम् अन्नम् ईषदपि मा हिंसीः । अस्माभिः तव **महते** बलाय श्रद्धानमिदं कृतम् अयम् अस्मान् रक्षतीति ।।६।।

**मुद्गल–** हे **इन्द्र! सः त्वम् नः** अस्मान् **सूर्ये** सर्वस्य प्रेरके आदित्ये **आ भज** आभाजय आभिमुख्येन भक्तान् सम्भक्तान् कुरु । तथा सः त्वम् **अप्सु** अब्देवतासु अस्मानाभाजय । अपि च **जीवशंसे** जीवैः प्राणिभिः शंसनीये कामयितव्ये **अनागास्त्वे** अपापत्वे पापराहित्ये अस्मानाभाजय । अपि च **नः** अस्माकम् **अन्तराम्** गर्भरूपेण अन्तर्वर्तमानाम् **भुजम्** पालयित्रीं प्रजाम् **आ** समन्तात् **मा रीरिषः** मा हिंसीः । **ते** तव **महते** प्रभूताय **इन्द्रिया** बलाय **श्रद्धितम्** अस्माभिः श्रद्धानं कृतम् । त्वदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः । तस्मात् तादृशफलयुक्तस्त्वं मा रीरिष इति पूर्वेण सम्बन्धः ।। ६ ।।

**सायण–** हे **इन्द्र! सः त्वं नः** अस्मान् **सूर्ये** सर्वस्य प्रेरके आदित्ये **आ भज** आभाजय आभिमुख्येन भक्तान् सम्भक्तान् कुरु । तथा **सः** त्वम् **अप्सु** अब्देवतासु अस्मानाभाजय । अपि च **जीवशंसे** जीवैः प्राणिभिः शंसनीये कामयितव्ये **अनागास्त्वे** अपापत्वे पापराहित्येऽस्मानाभाजय । अपि च **नः** अस्माकम् **अन्तरां** गर्भरूपेण अन्तर्वर्तमानां **भुजं** पालयित्रीं प्रजाम् आ समन्तात् **मा रीरिषः** मा हिंसीः । **ते** तव **महते** प्रभूताय **इन्द्रियाय** बलाय **श्रद्धितम्** अस्माभिः श्रद्धानं कृतम् । त्वदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः । तस्मात्तादृशबलयुक्तस्त्वं मा रीरिष इति पूर्वेण सम्बन्धः ।

अनागास्त्वे । न विद्यते आगः पापं यस्य सोऽनागाः । तस्य भावस्तत्त्वम् । छान्दस उपधादीर्घः । जीवशंसे । 'शंसु स्तुतौ' । कर्मणि घञ् । थाथादिना उत्तरपदान्तोदात्तत्वम् । भुजम् । भुनक्ति पालयतीति भुक् प्रजा । क्विप् । रीरिषः । 'रिष हिंसायाम्' । स्वार्थे ण्यन्तात् अस्मात् लुङि चङि णिलोपे उपधाह्रस्वत्वादीनि । छान्दसं पदकालीनमभ्यासह्रस्वत्वम् । श्रद्धितम् । श्रच्छब्दस्य ऊर्यादित्वेन (पा.सू.१.४.६१) गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! सः त्वम्** तादृशस्त्वं **नः** अस्मात् **सूर्ये** सर्वस्य प्रेरके सवितरि

**आभज** आभिमुख्येन भजय भक्तान् कुरु, रहस्यं तु, सर्ये उत्तमे ज्योतिषि अस्माकं भागं सम्पादयेति बोध्यम् । प्रायशः वेदे, अजतेर्भागशब्दनिष्पत्तेः, देवेषु यजमानस्य भागसम्पत्तेश्च भजनस्य विभजनार्थो गुप्तो भवति । एवं **अप्सु** तेजोबलादिलक्षणासुः **सः** स त्वं नः आभज । तथा **जीवशंसे** जीवैः शंसनीये कामयितव्ये **अनागास्त्वे** अपापत्वे पारिशुद्ध्ये भागं नः सम्पादय । **नः** अस्माकं **अन्तराम्** अन्तर्वर्तमानां अनाविर्भूतां आविर्भाविनीं **भुजम्** पालयित्रीं दिव्यसम्पद्रूपां अस्मत्सन्ततिं **आ** समन्तात् **मा रिरिषः** मा हिंसीः । **ते** तव **महते** बृहते **इन्द्रियाय** इन्द्रलिङ्गभूताय बलाय **श्रद्धितम्** श्रद्धानं कृतम्, तव सर्वोत्कृष्टे बले बद्धा नः श्रद्धा ।

अनागास्त्वे–न विद्यते आगः पापं यस्य तस्यानागसो भावस्तस्मिन्, उपधादीर्घश्छान्दसः । जीवशंसे–शंसु स्तुतौ, कर्मणि घञ् । भुजे–भनक्तेः, क्विप् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**अधा॑ मन्ये॒ श्रत् ते॑ अस्मा अधायि॒ वृषा॑ चोदस्व मह॒ते धना॑य ।**
**मा नो॒ अकृ॑ते पुरुहूत॒ योना॒विन्द्र॒ क्षुध्य॑द्भ्यो वय॑ आसु॒तिं दाः ।। ७ ।।**
**अध॑ । मन्ये॑ । श्रत् । ते॒ । अ॒स्मै । अ॒धा॒यि॒ । वृषा॑ । चो॒द॒स्व॒ । म॒ह॒ते । धना॑य । मा । नः॒ । अकृ॑ते । पु॒रु॒ऽहू॒त॒ । योनौ॑ । इन्द्र॑ । क्षुध्य॑त्ऽभ्यः । वयः॑ । आ॒ऽसु॒तिम् । दाः॒ ।।**

**स्कन्द–** अधशब्दोऽत्र पदपूरणः, अपि चेत्यस्य वा स्थाने । अपि च **मन्ये श्रत्** 'मन्यते' (निघ.२,६) इति कान्तिकर्मा । 'श्रत्' (निघ.३,१०) इत्यपि सत्यनाम । सत्यमिदं कमायेऽहम् । किम् । उच्यते । **अस्मै अधायि** अस्मै इति सन्निहितस्येन्द्रस्य प्रतिनिर्देशः । अधायोति लिङर्थे लुङ् । तुभ्यमस्मै इन्द्राय मयाऽऽदीयेतेति । किम् । सामर्थ्यात् सोमादिहविः । एतत् ज्ञात्वा **वृषा चोदस्व** प्रत्यक्षकृतोऽयं मन्त्रः । वृषेति च नामन्त्रितम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं वर्षिता स चोदयास्मान् । तासु तासु क्रियासु प्रेरयेत्यर्थः । किमर्थम् । **महते धनाय** महतो धनस्यार्थाय । महद्धनं लब्धुमित्यर्थः । किञ्च **मा नः** अस्मान् **अकृते योनौ** असंस्कृते अयोग्ये स्थाने हे **पुरुहूत!** साकाङ्क्षत्वात् प्रापय इति वाक्यशेषः । योग्यं नः स्थानं देहि मा अयोग्यमित्यर्थः । हे **इन्द्र! क्षुध्यद्भ्यः** क्षुध बुभुक्षायाम् । बुभुक्षमाणेभ्योऽस्मभ्यम् । **वयः** आसुतिम् दाः 'वयः' इत्यन्ननाम । आसुतिशब्दो रसवचनः । अन्नञ्च रसञ्च घृतक्षीरादिकं देहि ।। ७ ।।

**वेङ्कटमाधव**– सम्प्रति त्वाम् अहं स्तौमि । **श्रत् अधायि** च अस्मै तुभ्यं मया । स त्वम् अस्मान् वर्षिता **महते धनाय** चोदय । बहुभिराहूत! मा अस्मान् अपर्याप्ते गृहे प्रवेशय । **इन्द्र!** बुभुक्षमाणेभ्यः अस्मभ्यम् अन्नम् अन्यांश्च रसान् देहि ।। ७ ।।

**मुद्गल**– हे **इन्द्र! अध** अथानन्तरम् मन्ये त्वां मनसा जानामि । **ते** तव अस्मै बलाय **श्रत् अधायि** अस्माभिः श्रद्धा कृता । त्वदीयबलविषयमादरातिशयेन स्तोत्रं कृतमित्यर्थः । **वृषा** कामानां वर्षिता स त्वम् **महते** प्रौढाय **धनाय चोदस्व** चोदय अस्मान् प्रेरय । हे **पुरुहूत!** बहुभिर्यजमानैराहूत! **इन्द्र! अकृते** अनिष्पादिते धनशून्ये **योनौ** गृहे **नः** अस्मान् **मा धाः** मा निधेहि । धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः । अपि च हे इन्द्र! **क्षुध्यद्भ्यः** बुभुक्षितेभ्योऽन्येभ्योऽपि स्तोतृभ्यः **वयः** अन्नम् **आसुतिम्** पेयं क्षीरादिकञ्च **दाः** देहि ।। ७ ।।

**सायण**– हे इन्द्र! **अध** अथ अनन्तरं **मन्ये** त्वां मनसा जानामि । **ते** तव **अस्मै** बलाय **श्रत् अधायि** अस्माभिः श्रद्धा कृता । त्वदीयबलविषयमादरातिशयेन स्तोत्रं कृतमित्यर्थः । **वृषा** कामानां वर्षिता स त्वं **महते** प्रौढाय **धनाय चोदस्व** चोदय अस्मान् प्रेरय । हे **पुरुहूत!** पुरुभिर्बहुभिर्यजमानैराहूत इन्द्र **अकृते** अनिष्पादिते धनशून्ये **योनौ** । गृहनामैतत् । गृहे **नः** अस्मान् **मा** धाः निधेहि । धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः । अपि च हे **इन्द्र! क्षुध्यद्भ्यो** बुभुक्षितेभ्योऽन्येभ्योऽपि स्तोतृभ्यः **वयः** अन्नम् **आसुतिं** पेयं क्षीरादिकं च **दाः** देहि ।

अधायि । दधातेः कर्मणि लुङि च्लेश्चिणम् । 'आतो युक् चिण्कृतोः' इति युक् । क्षुध्यद्भ्यः । 'क्षुध बुभुक्षायाम्' । दिवादित्वात् श्यन् । नित्त्वादाद्युदात्तत्वम् ।। ७ ।।

**सिद्धाञ्जनम्**– हे **इन्द्र! अध** अथानन्तरमेव, **मन्ये** जानामि त्वाम् **ते** तव **अस्मै** बलाय **श्रदधायि** श्रद्धा कृता, त्वदीयबले दृढो विश्वासो नः । **वृषा** वर्षिता त्वं **महते** बृहत उत्कृष्टाय **धनाय** दिव्याय धनाय **चोदस्व** चोदयस्व, प्रेरयास्मान् । **पुरुहूत** बहुभिराहूत, **इन्द्र अकृते** अनिष्पादिते **योनौ** वासस्थाने, दिव्यसम्पद्रिक्ते स्थाने **नः** अस्मान् **मा** मा धाः, मा निधेहि । **क्षुध्यद्भ्यः** देवभोजनाय सञ्जातक्षुद्भ्यः स्तोतृभ्यः **वयः** बलं, अत्र बलार्थो युक्तः यथा 'वयोधाः बलस्य धर्मा' इत्यादौ, देवभुक्तेर्बलमवश्यम् । **आसुतिम्** पेयं सोमरसं च **दाः** देहि ।

अधायि–दधातेः कर्मणि लुङ् । क्षुध्यद्भ्यः–क्षुध बुभुक्षायाम्, दिवादिः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**मा नो॑ वधीरिन्द्र॒ मा परा॑ दा॒ मा नः॑ प्रि॒या भोज॑नानि॒ प्र मो॑षीः ।**
**आ॒ण्डा मा नो॑ मघवञ्छक्र॒ निर्भे॒न्मा न॒: पात्रा॑ भेत् स॒हजा॑नुषाणि ।। ८ ।।**
**मा । न॒: । व॒धीः । इ॒न्द्र॒ । मा । परा॑ । दा॒: । मा । न॒: । प्रि॒या । भोज॑नानि । प्र । मो॒षीः । आ॒ण्डा । मा । न॒: । म॒घ॒ऽव॒न् । श॒क्र॒ । निः । भे॒त् । मा । न॒: । पात्रा॑ । भे॒त् । स॒ह॒ऽजा॑नुषाणि ।। ८ ।।**

**स्कन्द– मा नः वधीः** हे **इन्द्र! मा परादाः** परि त्याक्षीः । मा च **नः प्रिया भोजनानि** प्रियाणि धनानि **प्र मोषीः** अप हार्षीः । किञ्च **आण्डा** अण्डसादृश्यादत्राऽऽण्डानि जातमात्राणि गर्भावस्थितानि वा अपत्यान्युच्यन्ते । तानि **मा नः** हे **मघवन्!** शक्र! **निः भेत्** निर्बिभिदः विनीनशः । **मा नः पात्रा भेत्** । पतन्तीति पात्राणि गमनसमर्थान्यपत्यानि, तान्यपि । न चैतान्येव केवलानि । किं तर्हि । **सहजानुषाणि** जानुभ्यां सनन्ति सम्भजन्ते भूमिमिति जानुषाणि रिङ्गन्ति यान्यपत्यानि तान्युच्यन्ते । तैस्सह ।। ८ ।।

**वेङ्कटमाधव– मा** अस्मान् **वधीः इन्द्र!** मा च परि त्याक्षीः मा च अस्माकं प्रियाणि अन्नानि अपहार्षीः । अण्डस्थानि मा अस्माकम् **मघवन्!** शक! **निः भेत्, मा** च अस्माकं शिक्षितपतनान्यपत्यानि, सहजातानि च मा भिदः ।। ८ ।।

**मुद्गल–** हे **इन्द्र! नः** अस्मान् **मा वधीः** मा हिंसीः । सर्वदा रक्षेत्यर्थः । अपि च **मा परा दाः** मा परित्याक्षीः । परादानं परित्यागः । अस्मत्कृतां पूजां सदा गृहाणेत्यर्थः । अपि च **नः** अस्माकम् **प्रिया** प्रियाणीप्सितानि **भोजनानि** उपभोग्यानि धनानि **मा प्र मोषीः** माऽपहार्षीः । अस्मास्वेव धनानि यथा स्युः तथा कुर्वित्यर्थः । तथा हे **मघवन्!** धनवन्! **शक्र!** सर्वकार्यशक्तेन्द्र! **नः** अस्माकम् **आण्डा** अण्डसम्बन्धीनि गर्भरूपेण निषिक्तानि अपत्यानि **मा निः भेत्** मा भिदः । गर्भरूपेण अवस्थितान् अस्मत्पुत्रान् रक्षेत्यर्थः । तथा **नः** अस्माकम् **सहजानुषाणि** आधाने सहोत्पन्नानि **पात्रा** पात्राणि स्रुवादीनि **मा निः भेत्** मा भिदः ।।

**सायण–** हे **इन्द्र! नः** अस्मान् **मा वधीः** मा हिंसीः । सर्वदा रक्षेत्यर्थः । अपि च **मा परा दाः** मा परित्याक्षीः । परादानं परित्यागः । अस्मत्कृतां पूजां सर्वदा गृहाणेत्यर्थः ।

अपि च **नः** अस्माकं **प्रिया** प्रियाणीप्सितानि **भोजनानि** उपभोग्यानि धनानि **मा प्र मोषीः** मापहार्षीः । अस्मास्वेव धनानि यथा स्युस्तथा कुर्वित्यर्थः । तथा हे **मघवन्!** धनवन् **शक्र** सर्वकार्यशक्तेन्द्र **नः** अस्माकम् **आण्डा** अण्डसम्बन्धीनि गर्भरूपेण निषिक्तान्यपत्यानि **मा भेत्** मा भिनः । गर्भरूपेणावस्थितान् अस्मत्पुत्रान् रक्षेत्यर्थः । **मा च नः पात्रा** । पतन्ति गच्छन्ति गमनसमर्थानि यानि तान्यपत्यानि पात्राणि । तानि च मा **भेत्** मा भिदः । **सहजानुषाणि** । जानुभ्यां यानि भूमिं सनन्ति गच्छन्तीत्यर्थः । तानि जानुषाणि । तैः सहितानि मा विनीनशः ।

वधीः । हन्तेर्माङि 'लुङि च' इति वधादेशः । स चादन्तः । सिच् । 'अतो लोपः' इत्यकारलोपः । तस्य स्थानिवद्भावात् 'अतो हलादेः' इति वृद्ध्यभावः । 'इट ईटि' इति सिचो लोपः । मोषीः । 'मुष स्तेये' । लुङि सिचः इट् । 'नेटि' इति वृद्धिप्रतिषेधः । भेत् । 'भिदिर् विदारणे' । लङि सिपि 'बहुलं छन्दसि' इति विकरणस्य लुक् । लगूपधगुणः । 'हल्ङ्याब्भ्यः' सिपो लोपः ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **इन्द्र! नः** अस्मान् **मा वधीः** मा हिंसीः । **मा परादाः** मा परित्याक्षीः **नः** अस्माकं **प्रिया** प्रियाणि **भोजनानि** उपयोग्यानि वस्तूनि धनानि वा **मा प्र मोषीः** मापहार्षीः । हे **मघवन्!** इन्द्र, **शक्र** शक्त सर्वशक्त, **नः** अस्माकं **आण्डा** अण्डसम्बन्धीनि गर्भरूपेणान्तरवस्थितानि अनाविर्भूतानि आविष्कारं प्राप्तव्यानि दिव्यसम्पत्प्रभवाणि **मा निर्भेत्** मा भिनः **नः** अस्माकं **सहजानुषाणि** जनुषः सम्बन्धीनि जानुषाणि, जनुषा सहोत्पन्नानीत्यर्थः **पात्रा** पात्राणि अस्मासु अन्तराधारभूतानि अन्तरङ्गाणि **मा भेत्** मा भिनः ।

वधीः–लुङ्, तथा मोषीः भेत् च । सर्वत्र न माङ्योग इति अडागमप्रतिषेधः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।**
**उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥ ९ ॥**

अर्वाङ् । आ । इहि । सोमऽकामम् । त्वा । आहुः । अयम् । सुतः । तस्य । पिब । मदाय । उरुऽव्यचाः । जठरे । आ । वृषस्व । पिताऽइव । नः । शृणुहि । हूयमानः ॥

**स्कन्द–** **अर्वाङ्** अस्मदभिमुखम् **एहि** । किं कारणम् । यस्मात् **सोमकामम् त्वा आहुः** सर्वजनाः । **अयम्** अस्माभिः **सुतः** सोमः । **तस्य पिब** तस्य चैकदेशं स्वांशलक्षणम् पिब **मदाय** मदार्थम् । केन प्रकारेण । उच्यते । **उरुव्यचाः** व्यचश्शब्दो व्याप्तिवचनः शाकपूणिना पठितः । प्रत्यक्षकृतश्चायं मन्त्रः । अरुव्यचा इति च नेदमामन्त्रितम् । अतो यत्तच्छब्दावध्या-हृत्यैकवाक्यता नेया । यस्त्वमुरुव्यचा बहुव्याप्तिः विस्तीर्णव्याप्तिर्वा । सर्वव्यापीत्यर्थः । स त्वम् **जठरे** स्वे उदरे **आ वृषस्व** आसिञ्च सोमम् । बहुसोममुदरे प्रक्षिपेत्यर्थः । **पिता इव नः** पितेव च पुत्राणामस्माकं त्व सर्वदा **शृणुहि हूयमानः** शृणु आहूयमानोऽस्माभिः ।। ९ ।।

**वेङ्कटमाधव–** अभिमुखम् आगच्छ । **सोमकामम् आहुः** त्वां **जनाः** । **अयम्** च **सुतः** सोमः तम् **पिब मदाय** । बहुव्याप्तिः त्वम् **जठरे** आसिञ्चस्व । **पिता इव** च अस्मान् शृणु **हूयमानः** ।। ९ ।।

**मुद्गल–** हे **इन्द्र!** त्वम् **अर्वाङ्** अस्मदभिमुखः सन् **एहि** आगच्छ । किं कारणमिति चेत्, यस्मात् **त्वा** त्वाम् **सोमकामम्** सोमविषयाभिलाषम् **आहुः** पुराविदः कथयन्ति । **अयम्** अस्मदीयः सोमः **सुतः** ऋत्विग्भिरभिषुतः । अत आगच्छेत्यर्थः । आगत्य च **मदाय** हर्षार्थम् **तस्य** तम् अस्मदीयमभिषुतं सोमम् **पिब** । एतदेव स्पष्टीक्रियते । **उरुव्यचाः** उरु विस्तीर्णं व्यचः व्यापनं यस्य तादृशो महावयवो भूत्वा **जठरे** आत्मीय उदरे **आ वृषस्व** सोममासिञ्च । आ समन्तात् पूरयेत्यर्थः । एवम्भूतस्त्वम् **हूयमानः** स्तुतिभिराहूयमानः सन् **पिता इव** पुत्राणां वाक्यानि यथा पिता शृणोति तथा **नः** अस्माकं वाक्यानि **शृणुहि** शृणु ।। ९ ।।

**सायण–** माध्यन्दिने सवने 'अर्वाङेहि' इत्येषा पोतुः प्रस्थितयाज्या । सूत्रितं च– अर्वाङेहि सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङ्' (आश्व.श्रौ.५.५) इति ।

हे **इन्द्र!** त्वम् **अर्वाङ्** अस्मदभिमुखः सन् **एहि** आगच्छ । किं कारणमिति चेत् यस्मात्त्वां **सोमकामं** सोमविषयाभिलाषम् **आहुः** पुराविदः कथयन्ति । **अयम्** अस्मदीयः सोमः **सुतः** ऋत्विग्भिरभिषुतः । अत आगच्छेत्यर्थः । आगत्य च **मदाय** हर्षार्थं **तस्य** तम् अस्मदीयमभिषुतं सोमं पिब । एतदेव स्पष्टीक्रियते । **उरुव्यचाः** उरु विस्तीर्णं व्यचो व्यापनं यस्य तादृशो महावयवो भूत्वा **जठरे** आत्मीये उदरे **आ वृषस्व** सोममासिञ्च । आ समन्तात् पूरयेत्यर्थः ।

एवम्भूतस्त्वं **हूयमानः** स्तुतिभिराहूयमानः सन् **पितेव** पुत्राणां वाक्यानि शृणोति तथा **नः** अस्माकं वाक्यानि शृणुहि शृणु ।

सोमकामम् । सोमविषयः कामः अभिलाषो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । आहुः । 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (पा.सू.३.४.८४) इति झेः उसादेशः धातोराहादेशश्च । तस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । मदाय । 'मदी हर्षे' । 'मदोऽनुपसर्गे' इति भावे अप् । उरुव्यचाः । 'व्यच व्याजीकरणे' । औणादिकः असिप्रत्ययः । 'व्यचेः कुटादित्वमनसि' (का.१.२.१.१) इति वचनात् ङित्त्वाभावेन सम्प्रसारणाभावः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा । उरु विचति व्याप्नोतीति उरुव्यचाः । कृदुत्तरपदप्रकृतिस्वरत्वम् । वृषस्व । 'वृष सेचने' । व्यत्ययेनात्मनेपदशप्रत्ययौ । शृणुहि । 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' इति हेर्लुगभावः ।। ९ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! त्वं **अर्वाङ्** अस्मदभिमुखः सन् **एहि** आगच्छ । **त्वा** त्वां **सोमकामम्** सोमाभिलाषं, सोमरतं **आहुः** पुराविद ऋषयः प्राहुः । तदिदानीं **अयम् सुतः** सोमोऽभिषुतः । **मदाय** हर्षाय **तस्य** तं सोमं **पिब** । **उरुव्यचाः** उरु विस्तीर्णं व्यचो व्यापनं यस्य स त्वं **जठरे** उदरे **आवृषस्व** आसिञ्च सोमं, समन्तात्पूरय । **हूयमानः** स्तुतिभिराहूयमानः सन् **पिता इव** पिता पुत्राणां वचांसि यथा सावधानः प्रीत्या शृणोति तथा **नः** अस्माकं वचांसि **शृणुहि** ।

वृषस्व–व्यत्ययेनात्मनेपदम् ।। ९ ।।

।। इति प्रथमाष्टके सप्तमाध्याये एकोनविंशो वर्गः ।।

## ।। अथ विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(१०५-सूक्तम्)

(१९ त्रित आप्त्यः । कुत्स आङ्गिरसो वा । विश्वे देवाः । पङ्क्तिः । ९ यवमध्या महाबृहती । १९ त्रिष्टुप्)

**चन्द्रमा अप्स्व१न्तरा सुपर्णो धावते दिवि ।**
**न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ।। १ ।।**

चन्द्रमाः । अप्ऽसु । अन्तः । आ । सुऽपर्णः । धावते । दिवि । न । वः । हिरण्यऽनेमयः । पदम् । विन्दन्ति । विऽद्युतः । वित्तम् । मे । अस्य । रोदसी इति ॥

**स्कन्द–** 'चन्द्रमास्सूक्तमाप्त्यं वा त्रितं प्रति बभावृषिम्', 'चन्द्रमाः' इत्येतत्सूक्तम् आप्त्यपुत्रं वा त्रितनामानमृषिं प्रतिभाति कुत्समेव वा । त्रितेन कुत्सेन वैतत् दृष्टमित्यर्थः । 'त्रीण्यतो वैश्वदेवानि' अतः पराणि त्रीणि सूक्तानि वैश्वदेवानि । अत्र सूक्ते इतिहासमाचक्षते– 'आप्त्यस्य ऋषेः त्रयः पुत्रा बभूवुः एकतो द्वितस्त्रित इति । ते यष्टुकामाः स्वान् याज्यान् गा ययाचिरे । ता आदाय सरस्वत्यास्तीरेण पथा गच्छतः तान् परस्मिन् कूले निषण्णो रात्रौ वृको ददर्श । दृष्ट्वा चोत्थाय अभिमुखः सारस्वतीरप उत्तरन् तांस्त्रासयामास । तेषां नश्यतां त्रितो निर्जले पांसुभिः वीरुद्भिः तृणैश्चावृते महत्यन्धकूपे पपात एकतद्वितौ तु सह गोभिः गृहं जग्मतुः । अथ कूपस्थस्येयं चिन्ता बभूव अकृतसोमयागस्य मृत्युर्न श्रेयसे । तत् क उपायः स्यात्, येनाहमिहस्थः सोमं पिबेयमिति । चिन्तयन्नेव यदृच्छया तत्र लम्बमानां वीरुधं ददर्श । तां सोम इति सङ्कल्प्य योगैश्वर्यात् मनसा शिष्टान्यग्न्यादीनि साधनानि परिसङ्कल्प्य शर्करा ग्राव्णः कृत्वा ताभिस्तां वीरुधमभिषुत्य यागार्थं देवान् आजुहाव । ते आह्वानकारणमनवबुध्यमाना आविग्ना बभूवुः । अथ तदाह्वानं बृहस्पतिः शुश्राव । स देवानुवाच । त्रितस्य वर्तते यज्ञस्तत्र गच्छाम इति । अथ तत्र सर्वे देवा जग्मुः । तानागतान् कूपादुत्तारणार्थी त्रितः क्रमेण तुष्टाव चन्द्रमाः इत्यादिना' इति । **चन्द्रमाः अप्स्वन्तः** अपां मध्ये । साकाङ्क्षत्वात् स्थित इति वाक्यशेषः । अम्मये स्वमण्डले स्थित इत्यर्थः । कीदृशः । **सुपर्णः** 'पृण प्रीणने' इत्यस्यैतद्रूपम् । सुष्ठु प्रीणयिता । आह्लादयिता मनसामित्यर्थः । अथवा सुपर्णशब्दो रश्मिनाम (निघ.१,५) सामर्थ्याच्चात्र अन्तर्णीतमत्वर्थः । रश्मिमान् । किं करोति । उच्यते । **आ धावते** मर्यादया सर्वकालं गच्छति । क्व । उच्यते । **दिवि** द्युलोके । **न वः** न तु युष्माकम् । **हिरण्यनेमयः!** नेमी रथचक्रधारोच्यते । हिरण्यमय्यो नेमयो यासां ता हिरण्यनेमयः, तासां सम्बोधनं हिरण्यनेमयः । **पदम्** पादनिधानात्तदाकारं यत् कर्दमादावुपजायते तत् पदम् इत्युच्यते । तत् जनाः **विन्दन्ति** लभन्ते । जनाः पश्यन्तीत्यर्थः । हे **विद्युतः!** चन्द्रमा उदकमये स्वमण्डले व्यवस्थितः सर्वदा दिवि गच्छन् उपलभ्यते, युष्माकं तु हे विद्युतः । चन्द्रमा उदकमये स्वमण्डले व्यवस्थितः सर्वदा दिवि गच्छन् उपलभ्यते, युष्माकं तु हे विद्युतः! वर्षाभ्योऽन्यत्र पदमपि नोपलभ्यत इत्यर्थः । **वित्तम् मे अस्य** विद ज्ञाने । श्रवणेन च यत् ज्ञानं तदिहाभिप्रेतम् । अस्येत्यपि

सन्निहितत्वात् स्तोत्रस्य प्रतिनिर्देशः । द्वितीयार्थे च षष्ठी शृणुतं ममेदं स्तोत्रमत्यर्थः । अथवा अस्येति दुःखस्य प्रतिनिर्देशः । विजानीतं ममेदं कूपनिपतनमिति । विज्ञापनं चेदमुत्तारणार्थं क्रियते, विजानीतमिदं दुःखम् । विज्ञाय चार्तानुग्रहस्वभावकतया मामितः कूपादुत्तारयतमित्यर्थः । हे **रोदसी!** द्यावापृथिव्यौ! ॥ १ ॥

**वेङ्कटमाधव–** त्रित आस्यः । आपेय इति कठाः । आप्य इति ब्राह्मणम् । अथ शाट्यायनकम्– 'आस्यान् सातं नयतः अरण्ये पिपासा अविन्दत् । ते धन्वन् कूपम् अविन्दन् । तं न द्वितोऽवरोढुमकामयत, नैकतः । त्रितः अवारोहत् । तौ यदा अपिबताम्, अतृप्यताम् । अथ हैनं तदैव रथचक्रेणापिधाय गोभिः प्रैताम् । सोऽकामयतोदितः इमां गातुं नाथं विन्देयेति । रात्रौ कूपे पतितस्त्रितः तत्र चन्द्रमसो रश्मीन् अपश्यत् । वदति– **दिवि** उदकस्य मध्ये युष्माकम् आधारभूतः **चन्द्रमाः** सुपतनः **आ धावते** । तथा सति हिरण्यसदृशपर्यन्ताः तस्य **विद्युतः न वः** युष्माकं जनाः **पदम्** लभन्ते । कूपस्थिता न लभन्ते प्रकाशम् । जानीतं मे इदं परिदेवनं द्यावापृथिव्यौ! ॥ १ ॥

**मुद्गल–** 'चन्द्रमाः' इत्येकोनविंशत्यृचं द्वादशं सूक्तम् । अपां पुत्रः कूपे पतितः त्रित ऋषिः कुत्सो वा । तथाचोभयोः कूपपात आम्नायते । 'त्रितः कूपेऽवहितः' (ऋ.१,१०५,१७) इति 'काटे निबाळ्ह ऋषिरह्वदूतये' (ऋ.१,१०६,६) इति च । त्रितस्य अपां पुत्रत्वम् तैत्तिरीयाः स्पष्टमामनन्ति– 'तत एकतोऽजायत, स द्वितीययभ्यपातयत् । ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत । यदद्भ्योऽजायन्त । तदाप्यानामाप्यत्वम्' (तै.ब्रा.३,२,८,१०-११) इति । अन्त्या त्रिष्टुप् । 'स मा तपन्ति' (ऋ.१,१०५,८) इत्येषा यवमध्या महाबृहती । आद्यौ द्वावष्टाक्षरौ पादौ, द्वादशाक्षरः तृतीयः, ततो द्वावष्टाक्षरौ, सा यवमध्या महाबृहती । 'चत्वारोऽष्टका जागतश्च महाबृहती' (ऋअ.१,९९) इत्युक्त्वा 'मध्ये चेद्यवमध्या' (ऋअ १,९,१०) इति उक्तलक्षणोपेतत्वात् । शिष्टाः पङ्क्तयः । विश्वेदेवा देवताः ।

**अप्सु** अन्तरिक्ष्यासु उदकमये मण्डले **अन्तः** मध्ये वर्तमानः **सुपर्णः** शोभनपतनः चन्द्रमाः **दिवि** द्युलोके **आ धावते** एकेनैव प्रकारेण धावते शीघ्रं गच्छति । तादृशस्य चन्द्रमसः सम्बन्धिनः **हे हिरण्यनेमयः** सुवर्णसदृशपर्यन्ताः **विद्युतः!** विद्योतमाना रश्मयः! **वः** युष्माकम् **पदम्** पादस्थानीयम् अग्रम् **न विन्दन्ति** मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभन्ते । अत

इदमनुचितम् । तस्मात् कूपात् मामुत्तारयेत्यर्थः । अपि च हे **रोदसी!** द्यावापृथिव्यौ! **अस्य** मे मदीयं कूपपतनरूपं यदिदं दुःखं तत् **वित्तम्** अवगच्छतम् । मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा अस्मात् कूपात् मामुत्तारयतमित्यर्थः ।। १ ।।

**सायण–** 'चन्द्रमाः' इति एकोनविंशत्यृचं द्वादशं सूक्तम् । अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वा आर्षम् । तथा चोभयोः कूपपातः आम्नायते– 'त्रितः कूपेऽवहितः' (ऋ.सं.१.१०५.१७) 'काटे निबाळ्ह ऋषिरह्वदूतये (ऋ.सं.१.१०६.६) इति च । त्रितस्य च अपां पुत्रत्वं तैत्तिरीयाः स्पष्टमामनन्ति– 'तत एकतोऽजायत स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत स तृतीयमभ्यपातयन् ततस्त्रितोऽजायत यददभ्योऽजायन्त तदाप्यानामाप्यत्वम्' (तै.ब्रा.३.२.८.१०-११) इति । तमेतमाप्यं 'त्रितस्तद्वेदाप्त्यः' (ऋ.सं.१.१०५.९) इति तकारोपजनेन वयमधीमहे इति । अन्त्या त्रिष्टुप् । 'सं मा तपन्ति' इत्येषा यवमध्या महाबृहती । आद्यौ द्वावष्टाक्षरौ पादौ द्वादशाक्षरस्तृतीयस्ततो द्वावष्टाक्षरौ सा यवमध्या महाबृहती । 'चत्वारोऽष्टका जागतश्च महाबृहती' (अनु.९.९) इत्युक्त्वा 'मध्ये चेद्यवमध्या' (अनु.९.१०) इत्युक्तलक्षणोपेतत्वात् । शिष्टाः पङ्क्तयः । विश्वे देवाः देवता । तथा चानुक्रान्तं– 'चन्द्रमा एकोनाप्त्यस्त्रितो वा वैश्वदेवं हि पाङ्क्तमन्त्या त्रिष्टुप् अष्टमी महाबृहती यवमध्या' इति । 'हि' इत्यभिधानादिदमादीनि त्रीणि सूक्तानि वैश्वदेवानि । विनियोगः । अत्र शाट्यायनिन इतिहासमाचक्षते–एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः । ते कदाचिन्मरुभूमावरण्ये वर्तमानाः पिपासया सन्तप्तगात्राः सन्त एकं कूपमविन्दन् । तत्र त्रिताख्यः एको जलपानाय कूपं प्राविशत् । स्वयं पीत्वा इतरयोश्च कूपादुदकमुद्धृत्य प्रादात् । तौ तदुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपं च रथचक्रेण पिधाय प्रास्थिषाताम् । ततः कूपे पतितः स त्रितः कूपादुत्तरीतुमशक्नुवन् सर्वे देवा मामुद्धरन्त्विति मनसा सस्मार । ततस्तेषां स्तावकमिदं सूक्तं ददर्श । तत्र रात्रौ कूपस्यान्तश्चन्दमसो रश्मीन् पश्यन् परिदेवयते ।

**अप्सु** आन्तरिक्षासु उदकमये मण्डले **अन्तः** मध्ये वर्तमानः **सुपर्णः** शोभनपतनः । यद्वा । सुपर्ण इति रश्मिनाम । सुषुम्णाख्येन सूर्यरश्मिना युक्तः **चन्द्रमाः दिवि** द्युलोके **आ धावते** । आङ् मर्यादायाम् । एकेनैव प्रकारेण धावते शीघ्रं गच्छति । तादृशस्य चन्द्रमसः सम्बन्धिनो हे **हिरण्यनेमयः!** सुवर्णसदृशपर्यन्ताः । यद्वा । हितरमणीयप्रान्ताः । **विद्युतः** विद्योतमाना

रश्मयः **वः** युष्माकं **पदं** पादस्थानीयमग्रं **न निन्दन्ति** मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभन्ते । अतः इदमनुचितम् । तस्मात् कूपात् मामुत्तारयतेत्यर्थः । अपि च हे **रोदसी!** द्यावापृथिव्यौ **मे** मदीयम् **अस्य** इदं स्तोत्रं **वित्तं** जानीतम् । यद्वा । मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतम् । मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वा अस्मात् कूपात् मामुत्तारयतमित्यर्थः ।

चन्द्रमाः । चन्द्रमाह्लादनं सर्वस्य जगतो निर्मिमीते इति चन्द्रमाः । 'चन्द्रे माङो डित्' (उ.सू.४.६६७) इति असुन् । दासीभारादिषु पाठात् पूर्वपदप्रकृतिस्वरत्वम् । धावते । 'सृ गतौ' । 'पाघ्रा' इत्यादिना वेगितायां धावादेशः । व्यत्ययेन आत्मनेपदम् । वित्तम् । 'विद ज्ञाने' । लोटि अदादित्वात् शपो लुक् । पादादित्वात् 'तिङ्ङतिङ' इति निघाताभावः । अस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'चन्द्रमा' इत्येकोनविंशत्यृचं द्वादशं सूक्तम् । आप्त्यस्त्रित ऋषिः कुत्सो वा, उभयोः कूपपात आम्नायते, 'त्रितः कूपेऽवहितो देवान् हवत ऊतये' इत्यत्रैव सूक्ते (१०५. १७) । 'इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळ ऋषिरह्वदूतये' (१.१०६.६) इति । विश्वे देवा देवता । अन्त्या त्रिष्टुप्, सं मा तपन्तीत्येषा यवमध्या महाबृहती, शिष्टाः पङ्क्तयः । त्रितकुत्सयोः इन्द्रसम्बन्धित्वं च समानम् । यथा पाण्डवार्जुनस्य विशिष्टं श्रीकृष्णसख्यं महाभारतप्रसिद्धम्, तथा कुत्सस्य इन्द्रसख्यम् । कुत्स ऋषिरित्यसंशयम् । त्रितोऽपि ऋषिरेवेति मन्त्रवर्णेभ्योऽवगम्यते । बहुषु स्थलेषु स तृतीयस्थानो देव इति च ज्ञायते । तर्हि ऋषिस्त्रितो देवभावं प्राप्तस्तृतीयस्थाने इन्द्रकार्यनिर्वाही भवति, यथा ऋषय अङ्गिरसः नित्या आग्नेयज्वाला देवा भवन्ति । त्रितमधिकृत्य शाट्यायनिभिराख्यातमितिहासमुदाहृत्य सायणीयं सूक्तव्याख्यानं प्रवर्तते । तत्र एकतो द्वितस्त्रित इति ऋषयस्त्रयो मरुभूमौ पिपासयार्ताः कूपमेकमविन्दन् । त्रितः कूपं प्रविष्टो जलं पीत्वा इतराभ्यामुदकमुद्धृत्य प्रादात् । तौ च पीत्वा त्रितं कूपे पातयित्वा रथचक्रेण कूपं पिधाय प्रस्थितौ । अस्यां दशायां विश्वान् देवान् स्तौति स्वात्मानं कूपादुद्धार-यितुम् । अत्र कथा विरमतु, तत्त्वं तु बोद्धव्यम् । सायणीये भाष्ये त्रितः त्रिषु स्थानेषु तायमानः, ततो व्याप्तः तृतीयस्थानगतः, त्रिषु स्थानेषु वर्तमान इत्येवञ्जातीयकैर्वचनैर्विवृतः । तृतीयः

इदमनुचितम् । तस्मात् कूपात् मामुत्तारयेत्यर्थः । अपि च हे **रोदसी!** द्यावापृथिव्यौ! **अस्य मे** मदीयं कूपपतनरूपं यदिदं दुःखं तत् **वित्तम्** अवगच्छतम् । मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा अस्मात् कूपात् मामुत्तारयतमित्यर्थः ॥ १ ॥

**सायण–** 'चन्द्रमाः' इति एकोनविंशत्यृचं द्वादशं सूक्तम् । अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वा आर्षम् । तथा चोभयोः कूपपातः आम्नायते– 'त्रितः कूपेऽवहितः' (ऋ.सं.१.१०५.१७) 'काटे निबाळ्ह ऋषिरह्वदूतये (ऋ.सं.१.१०६.६) इति च । त्रितस्य च अपां पुत्रत्वं तैत्तिरीयाः स्पष्टमामनन्ति– 'तत एकतोऽजायत स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत स तृतीयमभ्यपातयन् ततस्त्रितोऽजायत यदद्भ्योऽजायन्त तदाप्यानामाप्यत्वम्' (तै.ब्रा.३.२.८.१०-११) इति । तमेतमाप्यं 'त्रितस्तद्वेदाप्त्यः' (ऋ.सं.१.१०५.९) इति तकारोपजनेन वयमधीमहे इति । अन्त्या त्रिष्टुप् । 'सं मा तपन्ति' इत्येषा यवमध्या महाबृहती । आद्यौ द्वावष्टाक्षरौ पादौ द्वादशाक्षरस्तृतीयस्ततो द्वावष्टाक्षरौ सा यवमध्या महाबृहती । 'चत्वारोऽष्टका जागतश्च महाबृहती' (अनु.९.९) इत्युक्त्वा 'मध्ये चेद्यवमध्या' (अनु.९.१०) इत्युक्तलक्षणोपेतत्वात् । शिष्टाः पङ्क्तयः । विश्वे देवाः देवता । तथा चानुक्रान्तं– 'चन्द्रमा एकोनाप्त्यस्त्रितो वा वैश्वदेवं हि पाङ्क्तमन्त्या त्रिष्टुप् अष्टमी महाबृहती यवमध्या' इति । 'हि' इत्यभिधानादिदमादीनि त्रीणि सूक्तानि वैश्वदेवानि । विनियोगः । अत्र शाट्यायनिन इतिहासमाचक्षते–एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः । ते कदाचिन्मरुभूमावरण्ये वर्तमानाः पिपासया सन्तप्तगात्राः सन्त एकं कूपमविन्दन् । तत्र त्रिताख्यः एको जलपानाय कूपं प्राविशत् । स्वयं पीत्वा इतरयोश्च कूपादुदकमुद्धृत्य प्रादात् । तौ तदुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपं च रथचक्रेण पिधाय प्रास्थिषाताम् । ततः कूपे पतितः स त्रितः कूपादुत्तरीतुमशक्नुवन् सर्वे देवा मामुद्धरन्त्विति मनसा सस्मार । ततस्तेषां स्तावकमिदं सूक्तं ददर्श । तत्र रात्रौ कूपस्यान्तश्चन्द्रमसो रश्मीन् पश्यन् परिदेवयते ।

**अप्सु** आन्तरिक्षासु उदकमये मण्डले **अन्तः** मध्ये वर्तमानः **सुपर्णः** शोभनपतनः । यद्वा । सुपर्ण इति रश्मिनाम । सुषुम्णाख्येन सूर्यरश्मिना युक्तः **चन्द्रमाः दिवि** द्युलोके **आ धावते** । आङ् मर्यादायाम् । एकेनैव प्रकारेण धावते शीघ्रं गच्छति । तादृशस्य चन्द्रमसः सम्बन्धिनो हे **हिरण्यनेमयः!** सुवर्णसदृशपर्यन्ताः । यद्वा । हितरमणीयप्रान्ताः । **विद्युतः** विद्योतमाना

रश्मयः **वः** युष्माकं **पदं** पादस्थानीयमग्रं **न निन्दन्ति** मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभन्ते । अतः इदमनुचितम् । तस्मात् कूपात् मामुत्तारयतेत्यर्थः । अपि च हे **रोदसी!** द्यावापृथिव्यौ **मे** मदीयम् **अस्य** इदं स्तोत्रं **वित्तं** जानीतम् । यद्वा । मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतम् । मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वा अस्मात् कूपात् मामुत्तारयतमित्यर्थः ।

चन्द्रमाः । चन्द्रमाह्लादनं सर्वस्य जगतो निर्मिमीते इति चन्द्रमाः । 'चन्द्रे माङो डित्' (उ.सू.४.६६७) इति असुन् । दासीभारादिषु पाठात् पूर्वपदप्रकृतिस्वरत्वम् । धावते । 'सृ गतौ' । 'पाघ्रा' इत्यादिना वेगितायां धावादेशः । व्यत्ययेन आत्मनेपदम् । वित्तम् । 'विद ज्ञाने' । लोटि अदादित्वात् शपो लुक् । पादादित्वात् 'तिङ्ङतिङ' इति निघाताभावः । अस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'चन्द्रमा' इत्येकोनविंशत्यृचं द्वादशं सूक्तम् । आप्त्यस्त्रित ऋषिः कुत्सो वा, उभयोः कूपपात आम्नायते, 'त्रितः कृपेऽवहितो देवान् हवत ऊतये' इत्यत्रैव सूक्ते (१०५. १७) । 'इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळ ऋषिरह्वदूतये' (१.१०६.६) इति । विश्वे देवा देवता । अन्त्या त्रिष्टुप्, सं मा तपन्तीत्येषा यवमध्या महाबृहती, शिष्टाः पङ्क्तयः । त्रितकुत्सयोः इन्द्रसम्बन्धित्वं च समानम् । यथा पाण्डवार्जुनस्य विशिष्टं श्रीकृष्णसख्यं महाभारतप्रसिद्धम्, तथा कुत्सस्य इन्द्रसख्यम् । कुत्स ऋषिरित्यसंशयम् । त्रितोऽपि ऋषिरेवेति मन्त्रवर्णेभ्योऽवगम्यते । बहुषु स्थलेषु स तृतीयस्थानो देव इति च ज्ञायते । तर्हि ऋषिस्त्रितो देवभावं प्राप्तस्तृतीयस्थाने इन्द्रकार्यनिर्वाही भवति, यथा ऋषय अङ्गिरसः नित्या आग्नेयज्वाला देवा भवन्ति । त्रितमधिकृत्य शाट्यायनिभिराख्यातमितिहासमुदाहृत्य सायणीयं सूक्तव्याख्यानं प्रवर्तते । तत्र एकतो द्वितस्त्रित इति ऋषयस्त्रयो मरुभूमौ पिपासयार्ताः कूपमेकमविन्दन् । त्रितः कूपं प्रविष्टो जलं पीत्वा इतराभ्यामुदकमुद्धृत्य प्रादात् । तौ च पीत्वा त्रितं कूपे पातयित्वा रथचक्रेण कूपं पिधाय प्रस्थितौ । अस्यां दशायां विश्वान् देवान् स्तौति स्वात्मानं कूपादुद्धार-यितुम् । अत्र कथा विरमतु, तत्त्वं तु बोद्धव्यम् । सायणीये भाष्ये त्रितः त्रिषु स्थानेषु तायमानः, ततो व्याप्तः तृतीयस्थानगतः, त्रिषु स्थानेषु वर्तमान इत्येवञ्जातीयकैर्वचनैर्विवृतः । तृतीयः

त्रिधाभूतो वा त्रितः । अन्नमयत्वं प्राप्तश्चिन्मयः पुरुषः एकतः प्रथमस्थानः । प्राणमयत्वं प्राप्तश्चिन्मयः द्वितः द्वितीयस्थानः शुद्धमनोमयत्वं प्राप्तस्तु तृतीयः त्रितः । आर्भवसूक्ते (१.२० अन्यत्र च प्रागुक्तं अन्नमयप्राणमयपुरुषयोरुद्धारः रसप्राप्तिः । कृतकृत्यस्य मनोमयस्य पुरुषस्य त्रितस्य निर्गमनं पुनरूर्ध्वगमनं च देवानां साहाय्यमपेक्षेते । अतः परं धीमद्भिरूह्यम् ॥

तत्र प्रारम्भ एव चन्द्रमा इति प्रथमर्चि अर्थावबोधे महत् कष्टं वर्तत एव, अत एव बहुधा व्याख्यातारः स्थूलार्थपराः प्राञ्चोऽधुनातनाश्च व्याचक्षते । चन्द्रमाः न स्थूलश्चन्द्रः क्षपाकरः, किं तु आह्लादको रसमयः सोमः । समं प्रति "इत्था चन्द्रमसो गृहे" (१.८४.१५) "गन्धर्वस्य ध्रुवे पदे" (१.२२.१४) इत्यत्र व्याख्यायामुक्तम् । "चन्द्राग्राः अर्णाः आह्लादकं हिरण्यं वा अग्रे यासां ता नद्यः" (५.४१.१४) इति सायणः । एवं अन्यत्र च बहुशः चन्द्रशब्दस्य हिरण्यार्थत्वं आह्लादनार्थत्वं च सायण एव व्याचष्टे । तस्मात् तादृश आह्लादकः सोमो रसमयः अप्सु अन्तर्वर्तते यत्र त्रित ऋषिर्जातोऽधुना वर्तमानश्च ब्रवीति । नेदं कूपोदकम् कूपश्चेत् न स्थूलो भौतिकः, किं तु पूर्वोक्तलक्षणः, स्वभावतो रसवर्जिते जडे अन्नमये देहे अपां ज्योतिर्बलादिलक्षणानां आविष्कारः ।

**चन्द्रमाः** आह्लादकः सोमः **अप्सु अन्तः** अपां अन्तः गूढं वर्तते, जानामि । यद्यपि सः अपामन्तरप्रकाशो वर्तते, तथापि सः **सुपर्णः** शोभनपतनो रश्मिः सन् **दिवि** अन्तरिक्षे **आ धावते** समन्ताद्गच्छति, वेगेन सर्वतो व्याप्तो भवति । अयं च सुपर्णः सूर्यरश्मिर्वा प्रसिद्धः, वस्तुतस्तु स ऋतरश्मिः ऋतसूर्यः, अत एव हिरण्यवर्णत्वं चन्द्रत्वं च । हे **हिरण्यनेमयः!** हिरण्मयपर्यन्ताः, **विद्युतः** विद्योतमानाः सुपर्णप्रभाविसराः, **वः** युष्माकं **पदम्** मूलं उद्भवस्थानं तमसस्परस्तात्सत्यज्योतिरेव सर्वासां हिरण्यनेमीनां प्रभाणां पदम्, **न विन्दन्ति** मदीयानि करणानि न प्राप्नुवन्ति । यद्यपि अन्तरप्सु आनन्दमयः सोमः सुपर्णः सन् दिवि सर्वतो गतो भवति, यद्यपि हिरण्यवर्णास्तत्प्रभाश्च लक्ष्यन्त एव, तथापि तासां मूलं स्थानं तृतीयस्थानादप्यूर्ध्वं 'गन्धर्वस्य ध्रुवे पदे' 'चन्द्रमसो गृहे' इत्येवमादिवर्णनविषयभूतं सत्यं ज्योतिर्बृहत् तु मया मदीयैः करणैः अन्तरैर्बाह्यैश्च न लब्धम् । तस्मात् विश्वेषां देवानां साहाय्येन तत्प्राप्तिं प्रार्थये । हे **रोदसी!** द्यावापृथिव्यौ, **अस्य** स्तुवतः **मे** मम वाचं अवस्थां वा **वित्तम्** जानीतम्, मद्विषये कर्तव्यमनुग्रहीतुम् । पृथिवी अन्नमयत्वं प्राप्ता अधरा पृथुला विस्तीर्णा चित्, ऊर्ध्वस्थानां सर्वासां

चिन्मयभूमिकानां धारयित्री । द्यौस्तु शुद्धमनस्त्वं प्राप्ता तृतीयस्थाना द्योतमाना ऊर्ध्वा चित् । एवमुभे चितौ प्रार्थिते सत्यौ ऋषिव्यक्तौ सम्पूर्णविकासाय प्रभवतः ।

चन्द्रमाः–चन्द्रमाह्लादनं सर्वस्य जगतः मिमीते निर्मिमीत इति चन्द्रमाः, चन्द्रे मो डित् इत्यसुन् । धावते–सृ गतौ पाघ्रेत्यादिना वेगितायां धावादेशः, व्यत्ययेनात्मनेपदम् । वित्तम्–वेत्तेः, लोटि अदादित्वात् शपो लुक्, मध्यमद्विवचनम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अर्थमिद् वा उ अर्थिन आ जाया युवते पतिम् ।**
**तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ।। २ ।।**
**अर्थम् । इत् । वै । ऊँ इति । अर्थिनः । आ । जाया । युवते । पतिम् । तुञ्जाते इति । वृष्ण्यम् । पयः । परिऽदाय । रसम् । दुहे । वित्तम् । मे । अस्य रोदसी इति ।। २ ।।**

**स्कन्द–** इत् वै उ इति निपातास्त्रयोऽपि पदपूरणाः । द्यावापृथिव्योश्च परस्तात् पुरस्ताच्च सङ्कीर्त्यमानत्वाद् अयमप्यर्धर्चो द्यावापृथिव्य एव । वैश्वदेवत्वाद्वा सूक्तस्य वैश्वदेवः । द्यावापृथिव्योः विश्वेषां देवानां वा प्रसादेन **अर्थम्** यथाभिप्रेतम् **अर्थिनः** सर्वे, **जाया** च स्वम् **पतिम् आ युवते** यु मिश्रणे । आमिश्रयन्ति । आत्मना सह प्राप्नुवन्तीत्यर्थः । किञ्च **तुञ्जाते** तुञ्जतिर्दानकर्मा (निघ.३,२०) । दत्तं सर्वप्राणिभ्यः । के । द्विवचननिर्देशात् द्यावापृथिव्यौ । किम् । **वृष्ण्यम् पयः** । वृष्ण्यमित्यपठितमपि बलनाम । सामर्थ्याच्चात्र तत्कारणे तच्छब्दप्रयोग । 'पय' (निघ.१,१२) इत्युदकनाम । पुष्टिलक्षणस्य बलस्य कारणभूतं वृष्टिलक्षणमुदकम् । कथं पुनर्वृष्टिलक्षणमुदकं द्यौः पृथिवी वा ददाति । उच्यते । दिवो हि वृष्टिः पतति । यच्च वृष्टेर्हेतुभूतं यज्ञादिकर्म तत् पृथिव्यां क्रियते । अतस्तयोर्वृष्टिहेतुत्वात् ते एव वृष्टिलक्षणमुदकं दत्तमिति व्यपदिश्यते । किञ्च परिदाय रसम् दुहे परीति सर्वतोभावे (या.१,३) ददातिरपि शुद्धस्सन् आङ्पूर्वो द्रष्टव्य । 'रसः' (निघ १,१२) इति उदकनाम । रश्मिभिः सर्वतः आदायोदकं दुहे वृष्ट्यर्थं क्षरति । कोऽसौ । सामर्थ्यात् आदित्यः । स हि रश्मिभिः सर्वतः उदकमादाय वृष्ट्यर्थं मध्यमाय ददाति । **वित्तम् मे** इत्याद्युक्तार्थम् ।। २ ।।

**वेङ्कटमाधव–** अभिलषितम् **अर्थम्** अर्थिनः लभन्ते । स्त्री च **पतिम्** आश्रयते ।

द्यावापृथिव्यौ च वर्षणनिमित्तं स्वसारं मनुष्येभ्यः प्रयच्छतः । आदित्यश्च रश्मिभिः सर्वत आदाय **उदकम्** क्षरतीति मुमूर्षोः परिदेवनमिति ।। २ ।।

**मुद्गल–** अर्थिनः धनमपेक्षमाणाः पुरुषाः **अर्थम् इत् वै** अपेक्षितं धनं प्राप्नुवन्त्येव । नाहं प्राप्नोमि । उ पूरणम् । अपि च **जाया** अन्यदीया भार्या **पतिम्** स्वपतिम् **आ युवते** आभिमुख्येन प्राप्नोति । मदीया तु मद्विरहात् हताऽऽसीत् । अपि च संयुक्तौ तौ जायापती **वृष्ण्यम्** वीर्यरूपम् **पयः** उदकम् **तुञ्जाते** प्रजननाय अन्योऽन्यसङ्घटनेन प्रेरयतः । तदनन्तरम् **रसम्** पुरुषस्य सारभूतं वीर्यम् **पारदाय** गर्भरूपेण धृत्वा **दुहे** दुग्धे पुत्ररूपेण जनयति । मम तु पुत्रोऽपि नोत्पद्यते । अत इदं मदीयं दुःखं हे द्यावापृथिव्यौ! जानीतम् ।। २ ।।

**सायण– अर्थिनः** धनमपेक्षमाणाः पुरुषाः **अर्थमिद्वै** अपेक्षितं धनं प्राप्नुवन्त्येव । नाहं प्राप्नोमि । उ इत्येतत् पादपूरणम् । अपि च **जाया** अन्यदीया भार्या पतिं स्वपतिम् **आ युवते** आभिमुख्येन प्राप्नोति । मदीया तु मद्विरहात् हता आसीत् । अपि च संयुक्तौ तौ जायापती **वृष्ण्यं** वीर्यरूपं **पयः** उदकं **तुञ्जाते** प्रजननाय अन्योन्यसङ्घट्टनेन प्रेरयतः । तदनन्तरं **रसं** पुरुषस्य सारभूतं वीर्यं **परिदाय** गर्भाशयेनादाय गर्भरूपेण धृत्वा **दुहे** दुग्धे पुत्ररूपेण जनयति । मम तु पुत्रोऽपि नोत्पद्यते । अत इदं मदीयं दुःखं हे द्यावापृथिव्यौ जानीतम् ।

उ । 'उञः' (पा.सू.१.१.१७) इति शाकल्यस्य मतेन प्रगृह्यत्वात् 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावः । युवते । 'यु मिश्रणे' । व्यत्ययेनात्मनेपदम् । शब्लुकि प्राप्ते व्यत्ययेन शः । तुञ्जाते । 'तुजि पिजि हिंसाबलदाननिकेतनेषु' । इदित्त्वात् नुम् । व्यत्ययेन श्नम् । श्नान्नलोपः । दुहे । 'दुह प्रपूरणे' । 'लोपस्त आत्मनेपदेषु' इति तलोपः ।। २ ।।

**सिद्धाञ्जनम्– अर्थिनः** तत्तदर्थिनः धनादिकमपेक्षमाणाः पुरुषाः **अर्थमिद्वै** अपेक्षितं धनादिकं प्राप्नुवन्त्येव उ पादपूरणम् । **जाया** भार्या **पतिम्** स्वभर्तारं **आयुवते** आभिमुख्येन प्राप्नोति, पतिसंयोगं प्राप्नोति । संयुक्तौ च स्त्रीपुरुषौ **वृष्ण्यम्** सेचनसमर्थबलजन्यं **पयः** वीर्यं **तुञ्जाते** प्रेरयतः । यथा एवं लोके **तत्तत्कामाः** स्वोद्योगबलात् तत्तत्सिद्ध्युपायान् प्रयुञ्जते, तथा अहमपि तत्पदलाभकामः **परिदाय** परितः अप्सु वर्तमानात् चन्द्रमसः सोमात् बलमादाय **रसम्** सारभूतं अमृतं दुहे आविष्करोमि । वित्तमित्यादि पूर्ववत् । अस्या ऋचोऽर्थान्तरसाधनाय अमूला

अध्याहारा अवलम्बिताः सायणीये, व्याकरणं चोल्लङ्घितं यथा 'दुहे' इत्यत्र 'दुग्धे' युवतिरिति द्वितीयपादस्थं पदं कर्तृपदमित्यभिधाय दुहेर्लटि उत्तमपुरुषं प्रथमपुरुषं 'दुग्धे' इति कृत्वा 'लोपस्त आत्मनेपदेष्विति तलोपः' इति च साधितम् । एवमर्थतः शब्दतश्च बह्वन्याय्यं लक्ष्यते, विस्तरभयान्नेह विमृश्यते ।

युवते–यु मिश्रणे, व्यत्येनात्मनेपदम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**मो षु देवा अदः स्व१र्स्व पादि दिवस्परि ।**
**मा सोम्यस्य शंभुवः शूने भूम कदा चन वित्तं मे अस्य रोदसी ।। ३ ।।**
**मो इति । सु । देवाः । अदः । स्वः । अव । पादि । दिवः । परि । मा । सोम्यस्य । शम्ऽभुवः । शूने । भूम । कदा । चन । वित्तम् । मे । अस्य । रोदसी इति ।।३।।**

**स्कन्द– मो** इति माशब्दस्य उञा सहैकादेशः । उञ् चात्र पदपूरणः । **सु** इत्यपि पदपूरण एव । मा हे **देवाः! अदः स्वः** स्वश्शब्दः सर्वपर्यायः । इदं सर्वमस्मत्प्रभवं पुत्रपौत्रादिकुलम् । **अवपादि** अधः पतत् दिवः द्युलोकात् । स्वर्गात् प्रच्युत्य नरकं मा गादित्यर्थः । **परि** शब्दस्तु 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । मा सोम्यस्य सोमसम्पादिनः शम्भुवः 'शम्' (निघ.३,६) इति सुखनाम । भवतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः प्राप्त्यर्थो वा । सुखं यदात्मनो भावयति जनयति प्रापयति वा तत् शम्भु, तस्य शम्भुवः । सोमयाजिनः सुखिनश्च पितृपितामहादिकुलस्य तत्प्रभवत्वेन सम्बन्धिनः सन्तो वयमित्यर्थः । **शूने भूम** शूनं वृद्धं श्वयतेर्वृद्ध्यर्थत्वात् । यच्च वृद्धं नेष्यते, तदिह परिगृह्यते । किं पुनस्तत् । दुःखं पापं वा । दुःखपापशब्दयोर्वान्यतरपर्यायः शूनशब्दः । द्वितीयार्थे चैषा सप्तमी । भूमेत्यपि भवतिः प्राप्त्यर्थः । दुःखं पापं वा प्रापाम । **कदा चन** कदाचिदपि । युवामपि **वित्तम्** ।।

**वेङ्कटमाधव–** यज्ञाभावात् एतत् सर्वम् देवाः! न स्वर्गात् **अव पादि** । न वयं सोमार्हस्य पितृगणस्य सुखस्य भावयितुः केवलत्वाय कदा चिद् अपि भवाम इति आनृण्याय यज्ञमाशास्त इति ।। ३ ।।

**मुद्गल–** हे **देवाः! स्वः** स्वर्गे वर्तमानम् **अदः** तत् अस्मदीयं पितृपितामहप्रपितामहात्मकं सन्तानम् **दिवः परि** दिवश्चोपरि वर्तमानम् **मो षु** मैव **अव पादि** अवपन्नं विपन्नं प्रभ्रष्टं मा भूत् मम पुत्राभावात् । अतो वयम् **सोम्यस्य** सोमपानार्हस्य पितृगणस्य **शम्भुवः** सुखस्य भावयितुः पुत्रस्य **शूने** अपगमने **कदा चन** कदाचिदपि **मा भूम** युष्मत्प्रसादात् मम पुत्रा जायन्ताम् । अतो माम् अस्माद् दुःखाद् उत्तारयतेत्यर्थः । हे द्यावापृथिव्यौ! युवाम् च मदीयं विज्ञापनं च जानीतम् । मो मा उ इति निपातद्वयसमुदायो मैवेत्यस्यार्थे । सु अवधारणे ।।

**सायण–** हे **देवाः! स्वः** स्वर्गे वर्तमानम् **अदः** तदस्मदीयं पितृपितामहप्रपितामहात्मकं सन्तानं **दिवस्परि** दिवश्चोपरि वर्तमानं **मो षु** मैव **अव पादि** अवपन्नं विपन्नं प्रभ्रष्टं मा भूत् मम पुत्राभावात् । पुत्रेण लोकान् जयति 'नापुत्रस्य लोकोऽस्ति' (ऐ.ब्रा.७.१३) इति श्रुतेः । अतो वयं **सोम्यस्य** सोमपानार्हस्य पितृगणस्य **शम्भुवः** सुखस्य भावयितुः पुत्रस्य **शूने** अपगमने **कदा चन** कदाचिदपि **मा भूम** । युष्मत्प्रसादात् मम पुत्रा जायन्ताम् । अतो मामस्माद्दुःखादुत्तारयतेत्यर्थः । हे द्यावापृथिव्यौ! युवां च मदीयं विज्ञापनं जानीतम् ।

मो । मा उ इति निपातद्वयसमुदायः मैवेत्यस्यार्थे । सु इत्येतदवधारणे । 'सुञः' इति षत्वम् । पादि । 'पद गतौ' । 'चिण् ते पदः' (पा.सू.३.१.६०) इति कर्तरि लुङि च्लेः चिणादेशः । दिवः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम् । सोम्यस्य । 'सोममर्हति यः' (पा.सू.४.४.१३७) इति यप्रत्ययः । शम्भुवः । भवतेरन्तर्भावितण्यर्थात् क्विप् । शूने । 'टुओश्वि गतिवृद्ध्योः' । भावे निष्ठा । 'श्वीदितो निष्ठायाम्' इति इट्प्रतिषेधः । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । 'ओदितश्च' (पा.सू. ८.२.४५) इति निष्ठानत्वम् । व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **देवाः! अदः** तत् **दिवः परि** द्युलोकादुपरि वर्तमानं **स्वः** स्वराख्यं ज्योतिः **मो षु** मैव **अव पादि** अवपन्नं विपन्नं अस्मदर्थे विनष्टं मा भूत्, अस्माकं अलभ्यं मा भूत् तदुत्तमं ज्योतिः । अपि च **सोम्यस्य** सोमार्हस्य **शम्भुवः** सुखस्य भावयितुः देववृन्दस्य **शूने** अपगमने **कदा चन** कदाचिदपि **मा भूम** यथा देवगणोऽतृप्तो भूत्वा अस्मद्विमुखो भवति, तथा मा भूम । वित्तमिति गतम् ।

मो षु–मा उ इति निपातद्वयसमुदायो मैवेत्यर्थे, सु इत्यवधारणे । पादि–पद गतौ, लुङ्, अडभावः । शूने–टु ओश्वि गतिवृद्ध्योः, भावे निष्ठा ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यज्ञं पृच्छाम्यवमं स तद् दूतो वि वोचति ।**
**क्व ऋतं पूर्व्यं गतं कस्तद् बिभर्ति नूतनो वित्तं मे अस्य रोदसी ।। ४ ।।**
**यज्ञम् । पृच्छामि । अवमम् । सः । तत् । दूतः । वि । वोचति । क्व । ऋतम् । पूर्व्यम् । गतम् । कः । तत् । बिभर्ति । नूतनः । वित्तम् । मे । अस्य । रोदसी इति ।। ४ ।।**

**स्कन्द–** तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यमग्निम् अहम् **यज्ञम् पृच्छामि** । **अवमम्** अन्तिकनामैतत् (निघ.२,१६) । अग्नेश्च विशेषणम् । सन्निकृष्टम् । सर्वयजमानानामाप्तमित्यर्थः । अथवा अवममिति यज्ञस्य विशेषणम् । सन्निकृष्टं यज्ञमिति । ममार्थे कृतम् मानसमित्यर्थः । सः अग्निः **तत्** व्यत्ययेनात्र नपुंसकता यज्ञप्रतिनिर्देशार्थत्वात् । तं यज्ञम् । **दूतः** यजमानानाम् **वि वोचति** लोडर्थेऽयं लेट् । विविधं ब्रवीतु । मह्यमुपदिशतु येनाहं सुखमविगुणं करोमीत्यर्थः । **क्व** अग्ने: **ऋतम्** सत्यम् **पूर्व्यम्** पूर्वं चिरन्तनम् **गतम्** अपयातम् । **कः** वा **तत्** इदानीं **बिभर्ति** धारयति । **नूतनः** नवोऽन्यो देवः । येन सत्येनाग्निः यष्टॄनापद्भ्यो रक्षति क्व तस्य तत् सत्यं गतमिति आत्मन आपदोऽरक्षणादुपालम्भोऽयं परिदेवना वा । **वित्तम्** ।। ४ ।।

**वेङ्कटमाधव–** यज्ञम् पृच्छामि, तत् विस्पष्टम् वदतु यज्ञः, सत्यम् एव आश्रितं रक्षतीति । यज्ञस्य पुरा दृष्टम् आनृशंस्यम् **क्व** गतम् । **कः** तत् इदानीं सम्प्रतिपन्नः बिभर्ति इति ।।४।।

**मुद्गल–** **यज्ञम्** यजनीयम् **अवमम्** सर्वेषां देवानामादिभूतं तमग्निम् **पृच्छामि** यन्मया पृष्टम् **तत्** दवानाम् **दूतः सः** अग्निः **वि वोचति** विविच्य कथयतु । किं पुनस्तत् पृच्छ्यत इति तदुच्यते । हे **अग्ने!** त्वदीयम् **पूर्व्यम्** पूर्वकालीनम् **ऋतम्** भद्रं स्तोतृभ्यः कृतं श्रेयः **क्व गतम्** कुत्रेदानीं वर्तते । **नूतनः** नवतरः त्वत्तोऽन्यः कः पुरुषः तत् भद्रम् **बिभर्ति** धारयति । यदि त्वयि अवर्तिष्यत मम ईदृशी दशाऽपि नाभविष्यत् । अतः तत् क्व गतमिति कथय ।।४।।

**सायण–** **यज्ञं** यजनीयम् **अवमं** सर्वेषां देवानामादिभूतम् । 'अग्निर्मुखं प्रथमो देवतानाम्' (ऐ.ब्रा.१.४) इति श्रुतेः । 'अग्निर्वै देवानामवमः' (ऐ.ब्रा.१.१) इति ब्राह्मणाच्च । तमग्निं

**पृच्छामि** । यन्मया पृष्टं **तत्** देवानां **दूतः सः** अग्निः **वि वोचति** विविच्य कथयतु । किं पुनस्तत् पृच्छ्यते इति चेत्, उच्यते । हे अग्ने त्वदीयं **पूर्व्यं** पूर्वकालीनम् **ऋतं** भद्रं स्तोतृभ्यः कृतं श्रेयः **क्व गतं** कुत्रेदानीं वर्तते । **नूतनः** नवतरस्त्वत्तोऽन्यः **कः** पुरुषः **तत्** भद्रं **बिभर्ति** धारयति । यदि त्वय्यवर्तिष्यत ममेदृशी दशापि नाभविष्यत् । अतस्तत् क्व गतमिति कथय ।

वोचति । 'वच परिभाषणे' । लेटि अढागमः । 'वच उम्' इति व्यत्ययेन धातोः उमागमः । क्व । 'किमोऽत्' (पा.सू.५.३.१२) इति सप्तम्यर्थे अत् । 'क्वाति' (पा.सू.७.२.१०५) इति किमः क्वादेशः । 'तित्स्वरितम्' इति स्वरितत्वम् । परेण सह 'ऋत्यकः' इति प्रकृतिभावः ॥ ४ ॥

**सिद्धाञ्जनम्– यज्ञम्** यजनीयं, **अवमम्**, अर्वाचीनं, प्रत्यासन्नं देवानां मध्ये अत्रास्मास्वादिभूतं अग्निं **पृच्छामि** पृच्छा अत्र प्रार्थनापर्यायः । **सः दूतः** स देवानां दूतः **तत्** यन्मया पृष्टं तत् **विवोचति** विविच्य कथयतु । किं तत् ? उच्यते । **पूर्व्यम्** पूर्वकालीनं सर्वदा वर्तमानं **ऋतम्** सत्यं **क्व गतम्** कुत्र गतं, ममागोचरं भवति तत् । **नूतनः** त्वत्तोऽन्यः **कः** देवः ऋतं **तत् बिभर्ति** अधुना धारयति? त्वमेव मदर्थं तद्बिभ्रच्चेत्, कथं ममागोचरं भवति तत्? वित्तमिति पूर्ववत् ।

वोचति–लेट्यडागमः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**अमी ये देवाः स्थन त्रिष्वा रोचने दिवः ।**
**कद् व ऋतं कदनृतं क्व प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी ॥ ५ ॥**
**अमी इति । ये । देवाः । स्थन । त्रिषु । आ । रोचने । दिवः । कत् । वः । ऋतम् । कत् । अनृतम् । क्व । प्रत्ना । वः । आऽहुति । वित्तम् । मे । अस्य । रोदसी इति ॥**

**स्कन्द– अमी ये** यूयं हे **देवाः! स्थन** । तिष्ठथेत्यर्थः । **त्रिषु** लोकेषु । **आरोचने दिवः** दीप्ते दिवः सम्बन्धिन्यादित्यमण्डले । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तान् पृच्छामि । **कत्** केत्यस्य पर्यायः कच्छब्दः । **क्व वः** युष्माकम् **ऋतम्** सत्यम् । **कत्** क्व वा **अनृतम्** असत्यम् । क्व वा **प्रत्ना** पुराणी वः युष्माकम् अस्मत्प्रवृत्ता **आहुतिः** । सत्यासत्यविवेकिभूता यूयं यज्वानं सन्तं मामित आपदो न रक्षथेत्येवमुपालम्भोऽयम् । **वित्तम्** ॥ ५ ॥

**वेङ्कटमाधव– अमी ये दिवः आरोचने** आदित्ये **त्रिषु** स्थानेषु पौर्वापर्यभावेन **देवाः!** भवथ । पार्थिवाः च देवगणा आदित्यतेजोभिः अवष्टब्धा वर्तन्ते एवं माध्यमिकाः । **क वः** गतम् आनृशंस्यम्, क वा शाठ्यमयजमानविषयम्, क वा अस्माभि पुरा भवद्भ्यः हुता **आहुतिः** ।। ५ ।।

**मुद्गल–** हे **देवाः! त्रिषु** पृथिव्यादिषु स्थानेषु **ये अमी** यूयम् **स्थन** वर्तमाना भवथ । यानि स्थानानि **दिवः** द्योतमानस्य सूर्यस्य **आरोचने** दीप्तिविषये वर्तन्ते । सूर्यप्रकाश्येषु तेषु स्थानेषु इत्यर्थः । तेषाम् **वः** युष्माकं सम्बन्धि स्तोतृविषयम् **ऋतम्** सत्यम् **कत्** कस्मिन्देशे वर्तते । **अनृतम्** द्वेषविषयम् असत्यं च **कत्** कुत्र गतम् । अपि च **प्रत्ना** चिरकालीना **वः** युष्माकं सम्बन्धिनी **आहुतिः** मया पूर्वमनुष्ठितो यागः **क** कुत्रासीत् । ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितयागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे । अन्यत् पूर्ववम् ।। ५ ।।

**सायण–** हे **देवाः! त्रिषु** पृतिव्यादिषु स्थानेषु **ये अमी** यूयं **स्थान** वर्तमाना भवथ । यानि स्थानानि **दिवः** द्योतमानस्य सूर्यस्य **आ रोचने** दीप्तिविषये वर्तन्ते । सूर्यप्रकाश्येषु स्थानेषु इत्यर्थः । तेषां **वः** युष्माकं सम्बन्धि स्तोतृविषयम् **ऋतं** सत्यं **कत्** कस्मिन् देशे वर्तते । **अनृतं** द्वेष्टृविषयमसत्यं च **कत्** कुत्र गतम् । अपि च **प्रत्ना** चिरकालीना **वः** युष्माकं सम्बन्धिनी **आहुतिः** मया पूर्वमनुष्ठितो यागः **क** कुत्रासीत् । ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे । अन्यत् पूर्ववत् ।

स्थन । 'तप्तनप्तनथनाश्च' इति तशब्दस्य थनादेशः । कत् । काब्दस्य वर्णव्यापत्त्या कद्भावः ।। ५ ।।

**सिद्धाञ्जनम्–** हे देवाः! **ये अमी** यूयं **दिवः** सूर्यस्य, सौरज्योतिषः **आरोचने** दीप्तिविषये, अवस्थितेषु **त्रिषु** त्रिषु स्थानेषु, दिवोऽपि त्रिस्थानोपेताः श्रूयन्ते, तस्मात्तेषु त्रिषु दिव्यलोकेषु **स्थन** वर्तमाना भवथ । तेषां **वः** युष्मत्सम्बन्धि **ऋतम्** सत्यं **कत्** कुत्र वर्तते । **अनृतम्** कत् द्वेष्टृविषयमसत्यं च केदानीम्? **प्रत्ना** चिरकालीना **वः** युष्मदर्थं **आहुतिः** यागः, मया आचरितं यजनं **क** कुत्रासीत्? किं युष्मान् न प्राप्नोत्? वित्तमित्यादि गतम् ।

स्थन–तप्तनप्तनथनाश्चेति थनादेशः । कत्–कशब्दस्य वर्णव्यापत्त्या कद्भावः ।। ५ ।।

**।। इति प्रथमाष्टके सप्तमाध्याये विंशो वर्गः ।।**

## ।। अथ एकविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**कद् व ऋतस्य धर्णसि कद् वरुणस्य चक्षणम् ।**
**कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी ।। ६ ।।**

कत् । वः । ऋतस्य । धर्णसि । कत् । वरुणस्य । चक्षसम् । कत् । अर्यम्णः । महः । पथा । अति । क्रामेम । दुःऽध्यः । वित्तम् । मे । अस्य । रोदसी इति ।। ६ ।।

**स्कन्द–** **कत् वः** क युष्माकम् **ऋतस्य धर्णसि** धारणं निस्सरति । असत्यभूताः स्थेत्यर्थ । अथवा व इति निर्धारणे षष्ठी । ऋतशब्दोऽप्यादित्यवचनः । 'धर्णसि' (निघ.२,९) इत्यपि बलनाम । क युष्माकं मध्ये आदित्यस्य भक्तानुग्रहसामर्थ्यलक्षणं बलम् । का वा **वरुणस्य चक्षणम्** । भक्ताभक्तविवेकज्ञानमित्यर्थः । क वा **अर्यम्णः** महत्त्वम् । अतिशयवद्देवता-माहात्म्यमित्यर्थः । एवमयमपि पूर्ववदुपालम्भः । **पथा अति क्रामेम दूढ्य** इतीयं त्वाशीः । युष्मत्प्रसादात् स्वगृहगमनपथेन वयमतिक्रामेमेत्याशास्महे । किम् । दूढ्यः दुर्धियः पापबुद्धीन् वृकप्रभृतीन् । **वित्तम्** ।। ६ ।।

**वेङ्कटमाधव–** क युष्माकम् आनृशंस्यस्य धारणं गतम्, क वा **वरुणस्य** पुण्यपापकृद्विषयं दर्शनम्, क वा **अर्यम्णः** दानादिविषयं महत्वम् । वयं मार्गेण कूपाद् उत्तीर्णाः दुर्बुद्धीन् **अति क्रामेम** ।। ६ ।।

**मुद्गल–** हे देवाः! **वः** युष्माकं सम्बन्धिनः **ऋतस्य** सत्यस्य अभिमतफलप्रापणस्य **धर्णसि** धारणम् **कत्** कुत्र गतम् । **वरुणस्य** अनिष्टनिवारकस्य देवस्य **चक्षणम्** अनुग्रहदृष्ट्या दर्शनम् **कत्** क गतम् । **महः** महतो महानुभावस्य **अर्यम्णः** अरीणां नियन्तुरेतत्संज्ञस्य देवस्य सम्बन्धिना **पथा** शोभनमार्गेण इष्टदेशप्रापणम् **कत्** क गतम् । एतत्सर्वं युष्मास्वेव वर्तते । न कुत्रापि गतम् । अतो वयम् **दूढ्यः** दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपरान् शत्रून् **अति क्रामेम** अतितरेम । तैः कृताद् अस्मत्कूपपातलक्षणाद् दुःखाद् वयमुत्तीर्णा भवेम । हे द्यावापृथिव्यौ । मदीयमिदं जानीतम् ।। ६ ।।

**सायण–** हे देवाः! वः युष्माकं सम्बन्धिनः **ऋतस्य** सत्यस्य अभिमतफलप्रापणस्य **धर्णसि**

धारणं **कत्** कुत्र गतम् । **वरुणस्य** अनिष्टनिवारकस्य देवस्य **चक्षणम्** अनुग्रहदृष्ट्या दर्शनं **कत्** क गतम् । **महः** महतो महानुभावस्य **अर्यम्णः** अरीणां नियन्तुः एतत्संज्ञकस्य देवस्य सम्बन्धिना **पथा** शोभनमार्गेण इष्टदेशप्रापणं **कत्** क गतम् । एतत्सर्वं युष्मास्वेव वर्तते । न कुत्रापि गतम् । अतो वयं **दूढ्यः** दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपरान् शत्रून् **अति क्रामेम** अतितरेम । तैः कृतादस्मात् कूपपातलक्षणात् दुःखात् वयमुत्तीर्णा भवेम । हे द्यावापृथिव्यौ मदीयमिदं जानीतम् ।

धर्णसि । 'धृञ् धारणे' । 'सानसिधर्णसिपर्णसि' (उ.सू.४.५४७) इत्यादिना असिच्प्रत्ययान्तः निपात्यते । अर्यम्णः । षष्ठ्येकवचने 'अल्लोपोऽनः' इत्यकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । महः । महतः अच्छब्दलोपश्छान्दसः । यद्वा । 'मह पूजायाम्' । क्विप् । उभयथापि 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । दूढ्यः । पृषोदरादिः । 'ध्यै च' इति तत्र पाठात् दुरो रेफस्य उत्वम् उत्तरपदादेः ष्टुत्वं च । 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् ॥

**सिद्धाञ्जनम्–** हे देवाः! **वः** युष्माकं सम्बन्धिनः **ऋतस्य** बृहतः सत्यस्य **धर्णसि** धारणं **कत्** क गतम्, तन्ममागोचरं संवृत्तमिदानीम् । वरुणस्य दोषादोषविचक्षणस्य देवस्य **चक्षणम्** दर्शनं **कत्** क? महान् यष्टा स्तोता देवभक्तोऽहं तस्यानुग्रहपात्रमस्मि, स इदं जानन्नपि कथं न पश्यति? **महः** महतः **अर्यम्णः** यजमानं जनं गन्तव्यमूर्ध्वं स्थानं प्रापयितुं नित्यमुद्युक्तस्य देवस्य सम्बन्धिना **पथा** मार्गेण उत्तमपदप्रापणं **कत्** क गतम्? एतत्सर्वं न क्वापि गतं वर्तत एव युष्मासु, अतो वयं **दूढ्यः** दुर्धियः पापबुद्धीन् शत्रून् असुरादीन् **अतिक्रामेम** अतितरेम । वित्तमिति शिष्टं गतम् ।

धर्णसि–सानसि इत्यादिना असिच्प्रत्ययान्तो निपात्यते । दूढ्यः–पृषोदरादिः, ध्यै चिन्तायामित्यस्मात् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**अहं सो अस्मि यः पुरा सुते वदामि कानि चित् ।**
**तं मा व्यन्त्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी ॥ ७ ॥**
अहम् । सः । अस्मि । यः । पुरा । सुते । वदामि । कानि । चित् । तम् । मा ।

व्यन्ति । आऽध्यः । वृकः । न । तृष्णऽजम् । मृगम् । वित्तम् । मे । अस्य । रोदसी इति ॥ ७ ॥

**स्कन्द– अहम् अस्मि स** मन्त्रदृक् यः पूर्वे **सुते** सोमे **वदामि** भूतेऽयं लट् । उदितवान् । **कानि चित्** कान्यपि अत्यन्तोत्कृष्टानि स्तोत्राणि । **तम् मा** मां युष्माकं स्तोतारं सन्तम् **व्यन्ति** । वेतिरत्र खादनार्थः । खादन्ति । असम्पाद्यमाना उद्वेगेन मारयन्तीवेत्यर्थः । के । उच्यते । **आध्यः** आधयः कामा उच्यन्ते । यक्ष्ये भोक्ष्ये अर्थिभ्यो दास्ये इत्येवमादयः कामाः । कथं खादन्ति । **वृकः न तृष्णजम् मृगम्** । तृष्णा जाता यस्य स तृष्णजः तृषित उच्यते । यथा वृकस्तृषितमुदकस्थानम् आगतं हरिणम् अन्यं वा मृगं कश्चित् खादति तद्वदित्यर्थः नैतद्योग्यं युष्माकं स्तोता सन्नहम् एवम् असम्पाद्यमानैः कामैः बाध्ये इत्येवमयमुपालम्भः । **वित्तम्** ॥

**वेङ्कटमाधव– अहम् सः अस्मि यः पुरा** भवताम् **सुते** सोमे स्तोत्राणि **कानि चित् वदामि** । **तम् मा** खादन्ति **आध्यः** कामा न यक्ष्ये न दास्यामि न भोक्ष्ये इति । **वृकः** श्वा तृष्णा जाता यस्य तम् **तृष्णजम्** उदकस्थानं प्रति गच्छन्तम् **मृगम्** इवेति ॥ ७ ॥

**मुद्गल–** हे देवाः! **पुरा** पूर्वस्मिन् काले **सुते** युष्मद्यागार्थं सोमे अभिषुते **कानि चित्** कतिपयानि स्तोत्राणि **यः अहम् वदामि** उक्तवानस्मि सः एवाहम् **अस्मि** न त्वन्यः कश्चित् । तस्मात् किमर्थं मां परित्यजथ । तं तादृशं माम् **आध्यः** अभिलषितपुत्राद्यप्राप्त्या जनिताः मानस्यो व्यथाः **व्यन्ति** भक्षयन्ति । दृष्टान्तः । **तृष्णजम्** जाततृष्णं पिपासन्तम् उदकं प्रति गच्छन्तम् **मृगम् वृकः न** यथा अरण्यश्वा मध्येमार्गं भक्षयति तद्वत् ॥ ७ ॥

**सायण–** हे देवाः! **पुरा** पूर्वस्मिन् काले **सुते** युष्मद्यागार्थं सोमेऽभिषुते **कानि चित्** कतिपयानि स्तोत्राणि **यः अहं वदामि** उक्तवानस्मि **सः** एवाहम् **अस्मि** न तु अन्यः कश्चित् । तस्मात् किमर्थं मां परित्यजथ । **तं** तादृशं माम् **आध्यः** अभिलषितपुत्राद्यप्राप्त्या जनिता मानस्यो व्यथाः **व्यन्ति** भक्षयन्ति । तत्र दृष्टान्तः । **तृष्णजं** जाततृष्णं पिपासन्तम् उदकं प्रति गच्छन्तं **मृगं वृको न** यथा अरण्यश्वा मध्येमार्गं भक्षयति तद्वत् । अन्यत् पूर्ववत् ।

व्यन्ति । वी गत्यादिषु । अदादित्वात् शपो लुक् । 'तन्वादीनां छन्दसि बहुलमुपसङ्ख्यानम्' इति बहुलवचनात् यण् । आध्यः । आधीयते मनसि स्थाप्यते इति आधिः । 'उपसर्गे घोः

किः' (पा.सू.३.३.९२) । 'आतो लोप इटि च' इत्याकारलोपः । 'जसादिषु च्छन्दसि वावचनम्' इति 'जसि च' इति गुणस्य विकल्पनात् अभावे यणादेशः । तृष्णजम् । 'तृष पिपासायाम्' । 'स्वपितृषोर्नजिङ्' (पा.सू.३.२.१७२) इति नजिङ् । पदकारस्त्वेवं मन्यते– 'अन्येष्वपि दृश्यते' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डप्रत्ययः । तृष्णा जाता यस्य । 'ङ्यापोः संमाच्छन्दसोर्बहुलम्' इति ह्रस्वत्वम् ॥ ७ ॥

**सिद्धाञ्जनम्–** हे देवाः! **पुरा** पूर्वं कदाचित् **सुते** सोमे अभिषुते **कानिचित्** कतिपयानि रहस्यानि वचांसि, स्तोत्राणि वा **योऽहम्** वदामि योऽहमुक्तवानस्मि, **सः** स एवाधुनापि अस्मि भक्तः । **तम्** तादृशं **मा** मां **आध्यः** आधयः अन्तरङ्गव्यथाः **व्यन्ति** भक्षयन्ति । तत्र दृष्टान्तः– **तृष्णजम्** जाततृष्णं पिपासुं उदकं प्रति गच्छन्तं **मृगम् वृको न** अरण्यश्वा यथा अर्दति, तद्वत् । शिष्टं गतम् ।

व्यन्ति–वी गत्यादिषु, अदादित्वात् शपो लुक्, जसादिषु छन्दसि गुणस्य विकल्पनात् अभावे यण् । तृष्णजम्–तृष्णा जाता यस्य तं, ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वम् ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**सं मा तपन्त्यभितः सपत्नीरिव पर्शवः । मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी ॥ ८ ॥**

**सम् । मा । तपन्ति । अभितः । सपत्नीःऽइव । पर्शवः । मूषः । न । शिश्ना । वि । अदन्ति । मा । आऽध्यः । स्तोतारम् । ते । शतऽक्रतो इति शतऽक्रतो । वित्तम् । मे । अस्य । रोदसी इति ॥ ८ ॥**

**स्कन्द– सम् मा तपन्ति** तपिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । मां सन्तापयन्ति **अभितः** अभिशब्दादयमुभयार्थे तसिल् । वामपार्श्वतो दक्षिणपार्श्वतश्चेत्यर्थः । अथवा अग्रतः पृष्ठतश्चेत्यर्थः । **सपत्नीरिव** यथा सपत्न्य एकं भर्तारमात्मानमेव वा परस्परतः सन्तापयन्ति तद्वत् । काः सन्तापयन्ति । उच्यते । **पर्शवः** कूपभित्तयः । इष्टका वा इह पर्शव उच्यन्ते । ताः हि कूपस्य पर्शुस्थानीयाः । इमाः कूपभित्तय इष्टका वेत्यर्थः । किञ्च **मूषः न शिश्ना** मूषशब्दोऽत्र मूषिकशब्दपर्यायः । शिश्नमित्यपि ष्णा शौचे, ष्णै वेष्टन इत्यनयोरन्यतरस्य रूपम् । कथम् ।

धात्वादेः सकारस्य शकारश्छान्तसत्वात् । 'घनर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (पा. वा.३,३,५८) इति कर्मणि कप्रत्ययः । 'द्विर्वचनप्रकरणे कृञादीनां के' (पा.वा ६,१,१२) इति द्विर्वचनम् । 'अर्तिपिपर्त्योश्च' (पा.७,४,७७) इत्यभ्यासस्येत्वम् । एवं शिश्नमिति भवति । किं पुनरत्र शिश्नशब्देनोच्यते । वायितं सूत्रम् । तद्धि शौचार्हं भवति अन्नगन्धित्वात् । वेष्टितं च तन्तुवाययन्त्रे । अथवा शिश्नशब्दः प्रजननवचनः । इह तु तत्सादृश्यात् पुच्छं शिश्नमुच्यते । मूषिको वायितानि सूत्राणि पुच्छानि वा तैलभाण्डे घृतभाण्डे वा प्रक्षिप्य ततश्चोद्धृत्य व्यत्ति । एवम् **वि अदन्ति** विविधं अदन्ति स्वादन्ति माम् **आध्यः** यागादिकामाः । **स्तोतारम्** सन्तम् **ते** तव हे **शतक्रतो!** **बहुकर्मन्!** बहुप्रज्ञ वेन्द्र! नैतद्योग्यं यत्तव स्तोता सन्नहम् एवम् असम्पद्यमानैः कामैः बाध्ये इत्येवमुपालम्भः । **वित्तम्** ।। ८ ।।

**वेङ्कटमाधव– सम् तपन्ति** माम् **अभितः** सपत्नीमिव सपत्न्यः कूपपर्शवः । मूषिकाः इव अस्नातानि **सूत्राणि वि अदन्ति** । स्वाङ्गाभिधानं वा स्यात् शिश्नानि व्यदन्ति इति । सन्तपन्ति **मा आध्यः** कामाः **स्तोतारम् ते शतक्रतो!** यथा प्रजननानि वेष्टनत्वचावृतानि, तद्वत् कामा मां परिवृण्वन्ति ।। ८ ।।

**मुद्गल–** ऐन्द्रेषा । हे इन्द्र! **पर्शवः** पार्श्वास्थीनि अत्र सामर्थ्यात् पार्श्वस्थानीयाः कूपभित्तयः मा माम् **अभितः** सर्वतः **सम् तपन्ति** सम्यक् पीडयन्ति । दृष्टान्तः । **सपत्नीरिव** समान एकः पतिर्यासां ताः सपत्न्यः यथा एकं पतिम् अभितः पीडयन्ति । हे **शतक्रतो!** बहुविधकर्मन् । **इन्द्र! ते** तव **स्तोतारम् मा** माम् **आध्यः** असम्पद्यमानैर्यागदानादिभिरुत्पादिताः मानस्यः पीडाः **वि अदन्ति** विवधं भक्षयन्ति । दृष्टान्तः । **मूषः न** यथा मूषिकाः **शिश्ना** शिश्नेन कुविन्देन वायितानि अन्नरसेनालिप्तानि सूत्राणि भक्षयन्ति, एवं माम् आधयः भक्षयन्ति । न चैतत् हे इन्द्र! तव स्तोतुर्न्याय्यम् । तस्मात् कूपात् मामुत्तारय । अन्यत् समानम् ।। ८ ।।

**सायण–** ऐन्द्रेषा । हे इन्द्र! **पर्शवः** पार्श्वास्थीनि अत्र सामर्थ्यात् पर्शुस्थानीयाः कूपभित्तयः **मा** माम् **अभितः** सर्वतः **सं तपन्ति** सम्यक् पीडयन्ति । तत्र दृष्टान्तः । **सपत्नीरिव** । समानः एकः पतिर्यासां ताः सपत्न्यो यथैकं पतिमभितः पीढ्यन्ति । परस्परं वा पीढ्यन्ते । हे **शतक्रतो!** बहुविधकर्मन् बहुविधप्रज्ञ वा इन्द्र **ते** तव **स्तोतारं** माम् **आध्यः** असम्पद्यमानैर्याग-दानादिभिरुत्पादिताः मानस्यः पीडाः **व्यदन्ति** विविधं भक्षयन्ति । तत्र दृष्टान्तः । **मूषो न**

यथा मूषिकाः **शिश्ना** शिश्नानि कुविन्देन वायिनानि अन्नरसेन आलिप्तानि सूत्राणि भक्षयन्ति । यद्वा । शिश्नशब्देन प्रजननमेवोच्यते । तच्चोपचारात् पुच्छे वर्तते । यथा स्वकीयानि पुच्छानि घृततैलादिभाण्डे प्रक्षिप्य ऊर्ध्वमुत्कृष्य व्यदन्ति लिहन्तीत्यर्थः । एवं माम् आधयो भक्षयन्ति । न चैतत् हे इन्द्र! तव स्तोतुर्न्याय्यम् । तस्मात् कूपात् मामुत्तारय । अन्यत् समानम् । अत्र निरुक्तं– 'सन्तपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्यात् । शिश्नानि व्यदन्तीति' (निरु.४.६) इति ।

सपत्नीः । 'नित्यं सपत्न्यादिषु' (पा.सू.४.१.३५) इति पतिशब्दस्य नकारान्तादेशः । ङीप् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । मूषः । 'मुष स्तेये' । क्विपि छान्दसो दीर्घः । तथा च यास्कः– 'मूषो मूषिका इत्यर्थः । मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव' (निरु.४.५) इति । शिश्ना । 'ष्णा शौचे' । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति कः । वर्णव्यापत्त्या सकारस्य शकारः । 'कुञादीनां के द्वे भवत इति भवत इति वक्तव्यम्' (का.६.१.१२.१) इति द्विर्वचनम् । 'बहुलं छन्दसि' इत्यभ्यासस्य इत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** एषा ऐन्द्री । हे इन्द्र! **पर्शवः** पार्श्वास्थीनि **मा** मां **अभितः** सर्वतः **सन्तपन्ति** सम्यक् पीडयन्ति । तत्र दृष्टान्तः– **सपत्नीरिव** समानः पतिर्यासां ताः, सपत्न्यो यथा एकं पतिं पीडयन्ति परस्परं च पीड्यन्ते । हे **शतक्रतो**! बहुकर्मन् बहुविधप्रज्ञ वेन्द्र, **ते** तव **स्तोतारम् मा** मां **आध्यः** अन्तर्व्यथाः **व्यदन्ति** विविधं भक्षयन्ति । तत्र दृष्टान्तः– **मूषो न** यथा मूषिकाः **शिश्ना** शिश्नानि कुविन्दलिप्तानि सूत्राणि भक्षयन्ति, अथवा शिश्नशब्देन प्रजननमेवच्यते तच्चोपचारात् पुच्छे वर्तते, यथा तैलादिलिप्तं स्वपुच्छमूर्ध्वमुत्कृष्य लिहन्ति इति द्विधा सायणीयम्, अपरोक्तमेव वरम् । शिष्टं गतम् ।

मूषः–मुष स्तेये, क्विपि छान्दसो दीर्घः । शिश्ना–ष्णा शौचे इत्यस्मान्निष्पादयन्ति पूर्वे छान्दसाः, शिनोतेरित्यार्वाचीनाः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता ।**
**त्रितस्तद् वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ।। ९ ।।**

**अमी इति॑ । ये । स॒प्त । र॒श्मयः॑ । तत्र॑ । मे॒ । नाभिः॑ । आऽत॑ता । त्रि॒तः । तत् । वेद॑ । आ॒प्त्यः । सः । जा॒मि॒ऽत्वाय॑ । रे॒भ॒ति॒ । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥**

**स्कन्द– अमी ये सप्त रश्मयः** आदित्यरश्मयः । तत्र तेषु **मे** मम **नाभिः अतता** नाभिशब्दोऽत्र प्राणमात्रोपलक्षणार्थो द्रष्टव्यः । प्राणः । आतता अवबद्धाऽऽयत्तेत्यर्थः । तच्चैतत् **त्रितः** नाम ऋषिः **वेद । आप्त्यः** आप्त्यपुत्रः । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः । अहं त्रितो वेद्मीत्यर्थः । कौत्सत्वेऽस्य सूक्तस्याऽविरुद्ध एव परोक्षेण निर्देशः । विद्वांश्च सः त्रितः **जामित्वाय** जामिशब्दः समानजातीयवचनः । समानजातीयत्वार्थम् । ताद्भाव्य-प्रतिपत्त्यर्थमित्यर्थः । **रेभति** अर्चतिकर्माऽयम् (निघ.३,१४) । स्तौति रश्मीन् । **वित्तम्** ॥९॥

**वेङ्कटमाधव– अमी ये सप्त** आदित्यरश्मयः तेषु मम **नाभिः आतता** । ते हि सर्वेषां नाभिषु सम्बद्धा भवन्ति । तमिममर्थम् अपां पुत्रः **त्रितः** जानाति । सः तेन आदित्येन **जामित्वाय** तद् अनुपालयितुं स्तौति तान् रश्मीन् इति ॥ ९ ॥

**मुद्गल– ये अमी** द्युलोके वर्तमानाः **सप्त** सप्तसङ्ख्याकाः **रश्मयः** सूर्यस्य किरणाः सन्ति **तत्र** तेषु सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु मे मदीया **नाभिः आतता** सम्बद्धा । ऋषिरात्मानमेव परोक्षतया निर्दिशति । **त्रितः** तीर्णतमः तिरस्कृताज्ञानः **आप्त्यः** अपां पुत्रः ऋषिः **तत्** पूर्वोक्तं वृत्तान्तम् **वेद** विजानाति, नान्यः । सः जानन् ऋषिः **जामित्वाय** कूपात् निर्गन्तृत्वाय **रेभति** तान् रश्मीन् स्तौति । अन्यत्समानम् ॥ ९ ॥

**सायण– ये अमी** द्युलोके वर्तमानाः सप्तसङ्ख्याकाः **रश्मयः** सूर्यस्य किरणाः सन्ति **तत्र** तेषु सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु **मे** मदीया **नाभिः आतता** सम्बद्धा । ऋषिरात्मानमेव परोक्षतया निर्दिशति । **त्रितः** तीर्णतमस्तिरस्कृताज्ञानः **आप्त्यः** अपां पुत्रः ऋषिः **तत्** पूर्वोक्तं वृत्तान्तं **वेद** जानाति नान्यः । **सः** जानन्नृषिः **जामित्वाय** कूपान्निर्गन्तृत्वाय **रेभति** तान् रश्मीन् स्तौति । अन्यत् समानम् ।

आतता । तनोतेः कर्मणि निष्ठा । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । जामित्वाय । जमतिर्गतिकर्मा । जमति गच्छतीति जामिः । औणादिक इण्प्रत्ययः । तस्य भावस्तत्त्वम् । रेभति । 'रेभृ शब्दे' । भौवादिकः ॥

**सिद्धाञ्जनम्–** **ये अमी** दिव्ये धामनि वर्तमानाः **सप्त रश्मयः** सप्ततत्त्वात्मकाः सौरघृणयः सन्ति **तत्र** तेषु रश्मिषु **मे** मदीया **नाभिः** सन्नद्धं चक्रस्य मध्यमिव प्रधानस्थानं मूलभूमिरिति यावत् **आतता** समन्ताद्व्याप्ता भवति, अत्रैव मम सङ्कोचो बन्धः कष्टं च, तत्र तु मदीया मूलस्थानभूः विमुक्ता वितता । एतद्विज्ञायैव ऋषिराह परोक्षतया । **तत्** पूर्वोक्तं **आप्त्यः** अपां पुत्रः **त्रितः** तृतीयस्थाने ततः एतत्संज्ञको मन्त्रद्रष्टा ऋषिः **वेद** जानाति । **सः** त्रितः **जामित्वाय** भ्रातृत्वाय देवानां बन्धुत्वाय **रेभति** स्तौति । शिष्टं पूर्ववत् ।

रेभति–रेभ शब्दे, भौवादिकः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः । देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ।। १० ।।**

**अमी इति । ये । पञ्च । उक्षणः । मध्ये । तस्थुः । महः । दिवः । देवऽत्रा । नु । प्रऽवाच्यम् । सध्रीचीनाः । नि । ववृतुः । वित्तम् । मे । अस्य । रोदसी इति ।। १० ।।**

**स्कन्द–** **अमी ये पञ्च उक्षणः** सेक्तारः । स्वेनस्वेन व्यापारेण वर्षितार इत्यर्थः । कतमे । 'तत्र इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा' (ऋ.१,०७,३) इत्यस्यामृचि ये पञ्च निगदिताः । **मध्ये तस्थुः** तिष्ठन्ति **महः दिवः** द्युलोकस्य । **देवत्रा** 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा.५,४,५६) इति बाहुलकादयं त्रादेशः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तेषां देवानां नु क्षिप्रम् **प्रवाच्यम्** प्रकर्षेण वक्तव्यं स्तोत्रमस्माभिः । तच्चोच्यमानं श्रोतुम् **सध्रीचीनाः** सहस्यायं सध्रिरादेशोऽञ्चतावुत्तरपदे । अञ्चतिर्गत्यर्थः । सहाञ्चन्तीति सध्रीचीनाः । सहगमनशीला इत्यर्थः । **नि ववृतुः** अस्मान् प्रति निवर्तन्ताम् । माऽन्यतो गमन् । अस्मान् प्रत्यागच्छन्त्वित्यर्थः । **वित्तम्** ।। १० ।।

**वेङ्कटमाधव–** 'तत्र इन्द्रस्तद् वरुणः' इत्यस्याम् ऋचि वक्ष्यमाणाः **पञ्च अमी** वर्षितारः **ये मध्ये दिवः** तिष्ठन्ति । तेषु देवेषु क्षिप्रं मया अभिलषितं वाच्यम् । ते सहभूताः निवर्तन्तां मां प्रति ।। १० ।।

**मुद्गल– उक्षणः** सेक्तारः कामाभिवर्षुकाः **पञ्च** अग्निर्वायुः सूर्यश्चन्द्रमा विद्युदित्येवं पञ्चसङ्ख्याकाः **ये अमी दिवः** महतो विस्तीर्णस्य द्युलोकस्य **मध्ये तस्थुः** तिष्ठन्ति आसते । **देवत्रा** देवेषु **नु** क्षिप्रम् **प्रवाच्यम्** प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रं प्रति **सध्रीचीनाः** सह अञ्चन्तो युगपदागच्छन्तः ते देवाः मदीयं परिचरणं स्वीकुर्वन्ति । तदनन्तरम् **नि ववृतुः** तृप्ताः सन्तो निवर्तन्ते च । अन्यत् समानम् ॥ १० ॥

**सायण– उक्षणः** सेक्तारः कामाभिवर्षकाः **पञ्च** । 'तन्न इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविता चनो धात्' (ऋ.सं.१.१०७.३) इत्यर्धर्चेन प्रतिपादिताः पञ्चसङ्ख्याका देवाः । यद्वा । अग्निर्वायुः सूर्यश्चन्द्रमा विद्युदित्येवं पञ्चसङ्ख्याकाः । तथा च शाट्यायनकम्– 'एतान्येव पञ्च ज्योतींषि यान्येषु लोकेषु दीप्यन्ते । अग्निः पृथिव्यां वायुरन्तरिक्षे च आदित्यो दिवि चन्द्रमा नक्षत्रे विद्युदप्सु' इति । नक्षत्रे नक्षत्रलोके । अप्सु मेघस्थोदकेषु । तैत्तिरीयेऽप्येवमाम्नातम्– 'अग्निः पृथिव्यां वायुरन्तरिक्षे सूर्यो दिवि चन्द्रमा दिक्षु नक्षत्राणि स्वर्लोके' (तै.आ.१.२०.१) इति । **ये अमी** पञ्चसङ्ख्याका देवाः **महो दिवः** महतो विस्तीर्णस्य द्युलोकस्य **मध्ये तस्थुः** तिष्ठन्ति आसते **देवत्रा** देवेषु **नु** क्षिप्रं **प्रवाच्यं** प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रं प्रति **सध्रीचीनाः** सहाञ्चन्तो युगपदागच्छन्तस्ते देवाः मदीयं परिचरणं स्वीकुर्वन्ति । तदनन्तरं **नि ववृतुः** तृप्ताः सन्तो निवर्तन्ते च । अन्यत् समानम् ।

उक्षणः । 'वा पपूर्वस्य निगमे' इत्युपधादीर्घाभावः । देवत्रा । 'देवमनुष्य' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः । प्रवाच्यम् । वाचयतेः 'अचो यत्' । 'णेरनिटि' इति णिलोपः । 'यतोऽनावः' इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । सध्रीचीनाः । सहाञ्चन्तीति सध्र्यञ्चः । ते एव सध्रीचीनाः । सहपूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । 'सहस्य सध्रिः' (पा.सू.६.३.९५) इति सध्र्यादेशः । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वार्थे स्वप्रत्ययः । ववृतुः । 'वृतु वर्तने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । व्यत्ययेन परस्मैपदम् । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् ॥ १० ॥

**सिद्धाञ्जनम्– उक्षणः** सेक्तारो देवाः **पञ्च** पञ्चसङ्ख्याका **ये अमी** देवाः **महः** महतः बृहतः **दिवः** द्युलोकस्य **मध्ये तस्थुः** तिष्ठन्ति, आसते । अत्र देवपञ्चकं बहुधा विकल्पेन व्याचक्षते । साक्षादृतसम्बन्धि 'मित्रो वरुणोऽर्यमा भगश्चे'ति देवताचतुष्टयं अधिकृत्य प्रथमेऽनुवाके

समुपन्यस्तं, तेन सह त्रैलोक्यदेवानां राजा इन्द्रश्चेति पश्च देवा इत्यत्र बोध्यम् । **देवत्रा** देवेषु **नु** क्षिप्रं **प्रवाच्यम्** प्रशंसनीयं मदीयं स्तोत्रं देवाराधनं वा इत्यध्याहारः । **सध्रीचीनाः** सहाश्चन्तो युगपदागच्छन्तो देवास्ते स्वीकृत्य **निववृतुः** तृप्ताः निवर्तन्ते । अन्यत्समानम् ।

देवत्रा–सप्तम्यर्थे त्राप्रत्ययः । सध्रीचीनाः–सहस्य सध्रिरादेशः ।। १० ।।

।। इति प्रथमाष्टके सप्तमाध्याये एकविंशो वर्गः ।।

## ।। अथ द्वाविंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**सुपर्णा एत आसते मध्य आरोधने दिवः । ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी ।। ११ ।।**

**सुऽपर्णाः । एते । आसते । मध्ये । आऽरोधने । दिवः । ते । सेधन्ति । पथः । वृकम् । तरन्तम् । यह्वतीः । अपः । वित्तम् । मे । अस्य । रोदसी इति ।। ११ ।।**

**स्कन्द– सुपर्णाः** सुपर्ण इति रश्मिनाम (निघ.१,५) । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहार्यः । ये रश्मयः **एते आसते** तिष्ठन्ति तन्मध्ये **आरोधने दिवः** आरोहति मर्यादया रुणद्धि वा तमांसीत्यारोधनमादित्यमण्डलमिहाभिप्रेतम् । यदेतद्दिवः मध्ये आदित्यमण्डलं तत्रेत्यर्थः । **ते सेधन्ति** सेधतिर्गतिकर्मा (निघ.२,१४) । सामर्थ्याच्चान्तर्णीतण्यर्थः । शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । लोडर्थे लट् । अपगमयन्तु । **पथः** अस्मद्गमनमार्गादिमम् **वृकम् तरन्तम्** अस्मान् भक्षयितुमुत्तरन्तम् । **यह्वतीः** यह्वशब्दस्य महन्नाम्नः पर्यायो यह्वच्छब्दो द्रष्टव्यः । महतीरेताः सारस्वतीः **अपः** । **वित्तम्** ।। ११ ।।

**वेङ्कटमाधव–** सुपतनाः **एते** रश्मयः निवसन्ति स्वर्गलोकस्य अपिधान आदित्यमण्डले । **ते** निषेधन्ति मार्गात् अनुगच्छन्तम् **वृकम्,** यः पशुषु हृतेषु मां भक्षयितुम् कूपे अवरूढं दृष्ट्वा सरस्वत्याः परस्मात् कूलात् तस्या महतीः **अपः** तरन् तं कश्चन वृकम् इति ।। ११ ।।

**मुद्गल– सुवर्णाः** शोभनपतनाः **एते** सूर्यरश्मयः **आरोधने** सर्वस्यावरके व्याप्ते **दिवः** अन्तरिक्षस्य **मध्ये आसते** वर्तन्ते, **ते** सूर्यरश्मयः **पथः** मार्गात् **वृकम्** अरण्यश्वानम् **सेधन्ति**

निवारयन्ति । कीदृशम् । **यह्वतीः** महतीः **अपः तरन्तम्** अतिक्रान्तम् । कूपपतनात्पूर्वं त्रितं दृष्ट्वा एनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुराजगाम स च सूर्यरश्मीन् दृष्ट्वा अयमवसरो न भवतीति निववृते । अतो रश्मयो वृकं निषेधन्तीत्युच्यते । निष्प्रभं कुर्वन्तीत्यर्थः ।। ११ ।।

**सायण– सुपर्णाः** । रश्मिनामैतत् । शोभनपतनाः **एते** सूर्यरश्मयः **आरोधने** सर्वस्यावरके व्याप्ते **दिवः** अन्तरिक्षस्य **मध्ये आसते** वर्तन्ते । **ते** सूर्यरश्मयः **पथः** मार्गात् **वृकम्** अरण्यश्वानं **सेधन्ति** निषेधन्ति निवारयन्ति । कीदृशम् । **यह्वतीः** महतीः **अपः तरन्तम्** अतिक्रामन्तम् । कूपपतनात्पूर्वं त्रितं दृष्टा एनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुः आजगाम । स च सूर्यरश्मीन् दृष्ट्वा अयमवसरो न भवतीति निववृते । अतो रश्मयो वृकं निषेधन्तीत्युच्यते । यास्कपक्षे तु आप इत्यन्तरिक्षनाम । यह्वतीरपो महदन्तरिक्षं पयः पथा द्वादशराश्यात्मना मार्गेण तरन्तं वृकं चन्द्रमसं सूर्यरश्मयो निषेधन्ति । अहनि हि सूर्यरश्मिभिः निरुद्धश्चन्द्रमा निष्प्रभो दृश्यते । अतो निष्प्रभं कुर्वन्तीत्यर्थः ।

आरोधने । आरुध्यते आव्रियतेऽनेनेति आरोधनम् । करणे ल्युट् । सेधन्ति । 'षिधु गत्याम्' । अयं केवलोऽपि निपूर्वार्थे द्रष्टव्यः । पथः । पञ्चम्येकवचने 'भस्य टेर्लोपः' इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यास्कपक्षे तु तृतीयार्थे व्यत्ययेन पञ्चमी । यह्व इति महन्नाम । अस्मादाचारार्थे 'सर्वप्रातिपदिकेभ्यः' (पा.म.३.१.११.३) इति क्विप् । ततो लटः शतृ । 'उगितश्च' इति ङीप् । आगमानुशासनस्यानित्यत्वात् नुमभावः । 'शतुरनुमः' इति नदीम्वरो व्यत्ययेन न प्रवर्तते ।। ११ ।।

**सिद्धाञ्जनम्– सुपर्णाः** सौरा रश्मयः **एते** ममान्तर्दृष्टिगोचराः **आरोधने** सर्वस्यावरके **दिवः** महतो द्युलोकस्य **मध्ये आसते** वर्तन्ते । **ते** रश्मयः **वृकम्** छेदकं असुरं **पथः** मार्गात् **सेधन्ति** निषेधन्ति निवारयन्ति । दिव्ययात्रायामूर्ध्वं गच्छतो यजमानान् मार्गे प्रतिरुध्य आच्छेत्तुं आगच्छति वृकोऽसुरः । तदर्थं प्रवहन्तीर्नदीश्च तरति । तदेवाह । कीदृशं वृकम्? **यह्वतीः** महतीः **अपः** नदीः **तरन्तम्** अतिक्रामन्तम् । जीवत एव ऋषेस्त्रितस्योर्ध्वयात्रायां वृकस्य प्रतिषेधः देवानुग्रहात् सिद्ध्यति । इमाश्च आपः ऊर्ध्वस्थानाः लाक्षणिक्यः, न तु भौमाः स्थूलाः । शिष्टं पूर्ववत् ।

यह्वतीः–यह्व इति महन्नाम, अस्मादाचारार्थे सर्वप्रातिपादिकेभ्य इति क्विप्, ततो लटः शतृ, उगितश्चेति ङीप्, आगमानुशासनस्यानित्यत्वान्नुमभावः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम् । ऋतमर्षन्ति सिन्धवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी ॥ १२ ॥**

**नव्यम् । तत् । उक्थ्यम् । हितम् । देवासः । सुऽप्रवाचनम् । ऋतम् । अर्षन्ति । सिन्धवः । सत्यम् । ततान । सूर्यः । वित्तम् । मे । अस्य । रोदसी इति ॥ १२ ॥**

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदस्माभिः कर्तुमुपक्रान्तम् **नव्यम्** नवम् । अन्यैः स्तोतृभिरकृतपूर्वमित्यर्थः । **तत् उक्थ्यम्** उक्थ्यशब्दोऽत्र उक्थपर्यायः स्तोत्रवचनः, न प्रशस्यवचनः । युष्मत्स्तोत्रम् । कीदृशम् । **हितम्** । कस्मै । सामर्थ्यादस्मदभिप्रेतकरत्वात् अस्मभ्यम्, युष्मभ्यं वा वीर्यवृद्धिकरत्वात् । तत् हे **देवासः** । **सुप्रवाचनम्** सुष्ठु प्रवाचनार्हम् । अत्यन्तोत्कृष्टं चेत्यर्थः । अथवैवमन्यथास्यार्धर्चस्यार्थयोजना । युष्माकं माहात्म्यं नव्यम् । नौतेरर्चतिकर्मण इदं रूपम् । स्तुत्यम् । तत् प्रशस्यम् उक्थ्यं च हितं च स्तोतृभ्यः हे देवासः! सुप्रवाचनं सुष्ठु प्रवाचनार्हम् । प्रख्यापनार्हमित्यर्थः । परोऽर्धर्चो भिन्नं वाक्यम् । **ऋतम् अर्षन्ति** 'ऋतम्' (निघ १,१२) इत्युदकनाम । अर्षन्तीत्यपि ऋषी गतावित्यस्य चान्तर्णीतण्यर्थस्य व्यत्ययेनायं शप् । अर्तेर्वान्तर्णीतण्यर्थस्य लेटीदं रूपम् । उदकं गमयन्ति वहन्तीत्यर्थः । **सिन्धवः** नद्यः । अथवा ऋतशब्दोऽत्र यज्ञवचनः आदित्यवचनो वा । सिन्धवो रश्मय उच्यन्ते । यज्ञमादित्यं वा प्रति रश्मयो गच्छन्तीत्यर्थः । **सत्यम् ततान सूर्यः** सूर्योऽपि सत्यम् अविसंवादि स्वं ज्योतिस्त्रिष्वपि लोकेषु विस्तारयति । **वित्तम्** ॥ १२ ॥

**वेङ्कटमाधव–** नवतरम् उक्थार्हम् तत् स्तोत्रं भवत्सु निहितं देवाः! शोभनप्रवाचनम् । उदकम् गमयन्ति नद्यः भवद्भिः प्रहिताः । सूर्यः च तेजोभिः **सत्यम्** विस्तारयति ॥ १२ ॥

**मुद्गल–** हे **देवासः**! देवाः । **नव्यम्** नवतरम् **उक्थ्यम्** प्रशस्यं स्तुत्यर्हम् **सुप्रवाचनम्** सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवम्भूतम् **तत्** भवदीयं बलम् **हितम्** युष्मासु निहितम् । अतो युष्मदीयेन बलेन **सिन्धवः** स्यन्दनशीला नद्यः **ऋतम्** उदकम् **अर्षन्ति** आलस्यराहित्येन सर्वदा प्रेरयन्ति । अशोष्याः सत्यः प्रवहन्तीत्यर्थः । तथा **सूर्यः सत्यम्** सर्वदा विद्यमानं स्वकीयं तेजः **ततान** आतनोति विस्तारयति । अन्यत् समानम् ॥ १२ ॥

**सायण–** हे **देवासः!** देवाः **नव्यं** नवतरम् **उक्थ्यं** स्तुत्यर्हं **सुप्रवाचनं** सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवम्भूतं **तत्** भवदीयं बलं **हितं** युष्मासु निहितम् । अतो युष्मदीयेन बलेन **सिन्धवः** स्यन्तनशीला नद्यः **ऋतम्** उदकम् **अर्षन्ति** आलस्यराहित्येन सर्वदा प्रेरयन्ति । अशोष्याः सत्यः प्रवहन्तीत्यर्थः । तथा **सूर्यः सत्यं** सर्वदा विद्यमानं स्वकीयं तेजः **ततान** आतनोति विस्तारयति । अन्यत् समानम् ।

सुप्रवाचनम् । 'वच परिभाषणे' । अस्मात् ण्यन्तात् 'अन्येभ्योऽपि दृश्यते' इति खलर्थे युच् । अर्षन्ति । अर्तेर्लेटि 'सिब्बहुलं लेटि' इति सिप् । गुणः । ततान । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **देवासः!** देवा, **नव्यम्** नवतरं **उक्थ्यम्** स्तुत्यर्हं प्रशस्यं **सुप्रवाचनम्** सुष्ठु वाचयितुं शक्यं **तत्** भवदीयं प्रसिद्धं बलं **हितम्** निहितं युष्मासु । तस्मात्तेन बलेन **सिन्धवः** स्यन्दनशीला ज्योतिर्बलादिवाहिन्यः **ऋतम्** तत्सत्यं **अर्षन्ति** प्रेरयन्ति अस्मान् प्रति, अस्मान् प्रापयन्ति । तथा **सूर्यः** सर्वस्य प्रेरकः सविता च **सत्यम्** स्वकीयं ज्योतिः **ततान** विस्तारयति, अन्यद्गतम् ।

सुप्रवाचनम्–वच परिभाषणे, अस्मात् ण्यन्तात् खलर्थे युच् । अर्षन्ति–अर्तेर्लेटि सिप्, गुणः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यम् । स नः सत्तो मनुष्वदा देवान् यक्षि विदुष्टरो वित्तं मे अस्य रोदसी ।। १३ ।।**

**अग्ने । तव । त्यत् । उक्थ्यम् । देवेषु । अस्ति । आप्यम् । सः । नः । सत्तः । मनुष्वत् । आ । देवान् । यक्षि । विदुःऽतरः । वित्तम् । मे । अस्य । रोदसी इति ।। १३ ।।**

**स्कन्द–** तच्छब्दसमानार्थत्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदिदमस्माभिः कर्तुं प्रक्रान्तम् हे **अग्ने! तव त्यत्** तत् **उक्थ्यम्** स्तोत्रम् **देवेषु** निर्धारणे एषा सप्तमी । देवानां मध्ये । **अस्ति आप्यम्** अस्ति च ज्ञातित्वं तवास्माभिः सह । ज्ञातिश्च त्वमस्माकमित्यर्थः । सर्वयजमानानां हि ज्ञातिभूतोऽग्निः । तद्धिरण्यस्तूपेनोक्तम्– 'आपिः पिता प्रमतिः सोम्यानाम्'

(ऋ १,३१,१६) इति । य ईदृशोऽसि, **सः नः** तादर्थ्ये एषा चतुर्थी । अस्माकमर्थाय । **सत्तः** होतृत्वेन निषण्णः । होता भूत्वेत्यर्थः । कथम् । **मनुष्वत्** मनुष्यवत् । **आ** मर्यादायामाकारः । मर्यादया **देवान् यक्षि** यज । **विदुष्टरः** अतिशयेन विद्वान् । किम् । सामर्थ्यात् यष्टॄन् वाऽस्माकं वा भक्तताम् । **वित्तम्** ।। १३ ।।

**वेङ्कटमाधव– अग्ने! तव** एतत् प्रशस्यम् **देवेषु** ज्ञातेयम् **अस्ति**, सः त्वम् अस्माकं मनुष्यवद् वेद्यां निषण्णः **देवान्** यज विद्वत्तरः ।। १३ ।।

**मुद्गल–** हे **अग्ने! तव उक्थ्यम्** प्रशस्यम् **त्यत्** श्रुतिषु प्रसिद्धम् **आप्यम्** आपिर्बन्धुः, तस्य भावः । बान्धवम् **देवेषु** दानादिगुणयुक्तेषु इन्द्रादिषु **अस्ति** विद्यते । तस्मात् **सः** तादृशः **विदुष्टरः** विद्वत्तरः त्वम् **नः** अस्माकं यज्ञे **सत्तः** निषण्णः सन् **देवान्** तान् इन्द्रादीन् **आ** शास्त्रमर्यादया **यक्षि** यज हविर्भिः पूजय । तत्र दृष्टान्तः । **मनुष्वत्** यथा मनूनां यज्ञे तद्वत् । अन्यत् पूर्ववत् ।। १३ ।।

**सायण–** हे **अग्ने! तव उक्थ्यं** प्रशस्यं **त्यत्** श्रुतिप्रसिद्धम् **आप्यम्** । आपिर्बन्धुः । तस्य भावः । बान्धवं **देवेषु** दानादिगुणयुक्तेष्विन्द्रादिषु **अस्ति** विद्यते । तस्मात् **सः** तादृशः **विदुष्टरः** विद्वत्तरस्त्वं **नः** अस्माकं यज्ञे **सत्तः** निषण्णः सन् **देवान्** तानिन्द्रादीन् **आ** शास्त्रमर्यादया **यक्षि** यज हविर्भिः पूजय । तत्र दृष्टान्तः । **मनुष्वत्** । यथा मनूनां यज्ञे तद्वत् । अन्यत् पूर्ववत् ।

आप्यम् । 'आप्लृ व्याप्तौ' । अस्मात् ण्यन्तात् 'अच इः' इति इप्रत्ययः । ब्राह्मणादित्वात् ष्यञ् । सत्तः । 'नसत्तनिषत्त' (पा.सू.८.२.६१) इति निपातनात् निष्ठानत्वाभावः । छान्दसो निशब्दलोपो द्रष्टव्यः । मनुष्वत् । मनेरौणादिक उसिप्रत्ययः । 'तत्र तस्येव' (पा.सू५.१.११६) इति षष्ठ्यर्थे वतिः । 'नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम्' (पा.सू.१.४.१८.३) इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । यक्षि । 'बहुलं छन्दसि' इति शपो लुक् । व्रश्चादिषत्वे कुत्वषत्वे । विदुष्टरः । विद्वस्शब्दात् तरपि अयस्मयादित्वेन भत्वात् 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ।। १३ ।।

**सिद्धाञ्जनम्–** हे **अग्ने! उक्थ्यम्** प्रशस्यं **तव** त्वत्सम्बन्धि **त्यत्** तत् प्रसिद्धं **आप्यम्**

आपिर्बन्धुः तस्य भावः, बन्धुत्वं **देवेषु** इन्द्रादिषु **अस्ति** वर्तते । तस्मात् **विदुष्टरः** विद्वत्तरः देवरहस्यवित् **सः** तादृशस्त्वं **नः** अस्माकं यजने **सतः** निषण्णः सन् **देवान् आ यक्षि** देवानाहूय यज पूजय । **मनुष्वत्** यथा मनोर्यज्ञे तद्वत् पूजय । शिष्टं पूर्ववत् ।

सत्तः–निष्ठानत्वाभावो निपातितः । मनुष्वत्–मनोरौणादिक उसिप्रत्ययः, षष्ठ्यर्थे वतिः । यक्षि–छन्दसि शपो लुक् । विदुष्टरः–विद्वस्-शब्दात् तरपि वसोः सम्प्रसारणम् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः । अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ।। १४ ।।**

**सत्तः । होता । मनुष्वत् । आ । देवान् । अच्छ । विदुःऽतरः । अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः । वित्तम् । मे । अस्य । रोदसी इति ।। १४ ।।**

**स्कन्द– सत्तः होता मनुष्वत्** मनुष्यवद्धोतृत्वेन निषण्णः । **आ** मर्यादया **देवान् अच्छ** आप्तुम् । यष्टुमित्यर्थः । **विदुष्टरः अग्निः हव्या** हवींषि **सुसूदति** संस्करोति । **वेदः देवेषु** देवानां मध्ये **मेधिरः** यज्ञवान् । यज्ञकारीत्यर्थः । **वित्तम्** ।। १४ ।।

**वेङ्कटमाधव–** निषण्णः **होता** वेद्याम् । **मनुष्वत्** विद्वत्तरः **अग्निः** हव्यानि आदाय **देवान्** प्रति प्रेरयति **देवः देवेषु** यज्ञियः ।। १४ ।।

**मुद्गल– मतुष्वत्** मनोरिव अस्माकं यज्ञे **सत्तः** निषण्णः **होता** देवानामाह्वाता **विदुष्टरः** विद्वत्तरः **देवः** दानादिगुणयुक्तः **देवेषु** सर्वेषु इन्द्रादिषु मध्ये **मेधिरः** मेधावी एवम्भूतः **अग्निः** तान् देवान् **अच्छ** आभिमुख्येन **हव्या** हव्यानि अस्मदीयानि हवींषि । मर्यादायाम् आकारः । शास्त्रमर्यादया यथाशास्त्रम् **सुसूदति** प्रेरयति । अन्यत् समानम् ।। १४ ।।

**सायण– मनुष्वत्** मनोरिवास्माकं यज्ञे **सत्तः** निषण्णः **होता** देवानामाह्वाता **विदुष्टरः** विद्वत्तरः **देवः** दानादिगुणयुक्तः **देवेषु** सर्वेष्विन्द्रादिषु मध्ये **मेधिरः** मेधावी एवम्भूतः **अग्निः** तान् **देवान् अच्छ** आभिमुख्येन **हव्या** हव्यानि अस्मदीयानि हवींषि । मर्यादायामाकारः । शास्त्रमर्यादया यथाशास्त्रं **सुषूदति** प्रेरयतु । अन्यत् समानम् ।

सुषूदति । 'षूद क्षरणे' । लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । मेधिरः । 'मेधारथाभ्यामिरनिरचौ वक्तव्यौ' (पा.सू.५.२.१०९.३) इति मत्वर्थीय इरन् ।। १४ ।।

**सिद्धाञ्जनम्– मनुष्वत्** मनोरिवास्माकं यजने **सत्तः** निषण्णः **होता** आह्वाता **विदुष्टरः** विद्वत्तरः **देवः** द्योतमानः **देवेषु** इन्द्रादिषु **मेधिरः** मेधावीं **अग्निः** एवम्भूतोऽग्निः **देवान्** तान् **अच्छ** आभिमुख्येन **हव्या** हव्यानि अस्मदीयान्यर्पणानि **आ सुषूदति** आहूय प्रेरयतु । वित्तमित्यादि गतम् ।

सुषूदति–षूद क्षरणे, लेट्यडागमः । मेधिरः–मेधाशब्दान्मत्वर्थीय इरन्प्रत्ययः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे । व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ।। १९ ।।**

ब्रह्म । कृणोति । वरुणः । गातुऽविदम् । तम् । ईमहे । वि । उर्णोति । हृदा । मतिम् । नव्यः । जायताम् । ऋतम् । वित्तम् । मे । अस्य । रोदसी इति ।। १९ ।।

**स्कन्द–** तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यः **ब्रह्म** स्तुतिलक्षणम् **कृणोति** करोति । करोतिरन्तर्णीतण्यर्थः । कारयति कामान् स्तोतृभिरात्मानं स्तावयतीत्यर्थः । कः । **वरुणः गातुविदम्** गमनस्य वेदितारम् । यज्ञान् प्रति गन्तुं ज्ञातारमित्यर्थः । **तम् ईमहे** याचामहे । किम् । उच्यते । **वि ऊर्णोति** लोढर्थेऽयं लट् । प्रकाशयतु । **हृदा** षष्ठ्यर्थे एषा तृतीया । अस्मद्धृदयस्य । **मतिम्** ज्ञानम् । मम मनसो ज्ञानमुत्पादयत्वित्यर्थः । **नव्यः** स्तुत्यश्च **जायताम्** । क्व । **ऋतम्** सप्तम्यर्थे द्वितीया । ऋते यज्ञे मदीये । अथवा तृतीयपादः प्रथमपादानन्तरं योजयितव्यः । य ब्रह्म कृणोति वरुणः यश्च प्रकाशादिकरणेन सर्वप्राणिनां व्यूर्णोति हृदस्य मतिं घटादिविषयं ज्ञानं तं वयमीमहे । नव्यो जायताम् ऋते अस्मदीये इति । **वित्तम्** ।।

**वेङ्कटमाधव–** स्तोतृभ्यः परिवृढं कर्म 'वरुणः करोति' । मार्गस्य लम्भयितारम् **तम्** वयम् अभियाचामहे कूपाद् उत्तरणम् । स हृदयेनैव सुमतिं स्तोतृभ्यः प्रकाशयति । सत्कृत्यः सन् अधुना अस्माकम् अस्मिन् कूपे पूर्णम् उदकं जनयतु ।। १९ ।।

**मुद्गल–** यः **वरुणः** अनिष्टस्य निवारयिता देवः **ब्रह्म** परिवृढं तद्रक्षणरूपं कर्म **कृणोति** करोति **तम्** तादृशम् **गातुविदम्** गातोर्मार्गस्य दुःखानां निवारकस्य लम्भयितारं वरुणम् **ईमहे** अभिमतफलं याचामहे । तस्मै वरुणाय अयम् अस्मदीयः स्तोता **हृदा** हृदयेन **मतिम्** मननीयां स्तुतिम् **वि ऊर्णोति** विवृणोति प्रकाशयति उच्चारयतीत्यर्थः । सोऽयम् **नव्यः** स्तुत्यो वरुणोऽस्माकम् **ऋतम् जायताम्** सत्यभूतोऽस्तु ।। १५ ।।

**सायण–** यः **वरुणः** अनिष्टस्य निवारयिता देवः **ब्रह्म** परिवृढं तद्रक्षणरूपं कर्म **कृणोति** करोति **तं** तादृशं **गातुविदं** गातोर्मार्गस्य दुःखनिवारकस्य लम्भयितारं वरुणम् ईमहे अभिमतफलं याचामहे । ईमहे इति याञ्चाकर्मा । तस्मै वरुणाय अयमस्मदीयः स्तोता **हृदा** हृदयेन **मतिं** मननीयां स्तुतिं **व्यूर्णोति** विवृणोति प्रकाशयति उच्चारयतीत्यर्थः । सोऽयं **नव्यः** स्तुत्यो वरुणोऽस्माकम् **ऋतं जायतां** सत्यभूतोऽस्तु ।

ब्रह्म । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । गातुविदम् । 'विद्लृ लाभे' । अन्तर्भावितण्यर्थात् क्विप् । ईमहे । 'ईङ् गतौ' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । हृदा 'पटन्' इत्यादिना हृदयशब्दस्य हृदादेशः ।। १५ ।।

**सिद्धाञ्जनम्– वरुणः** निवारकः पापानां, प्रसिद्धो देवः **ब्रह्म** मन्त्रात्मकं वचः **कृणोति** करोति, ऋषिर्मन्त्रं पश्यति, तद्दर्शनकारको भगवान् वरुणः, स एवं सर्वं दिव्यं मार्गं रक्षति । **गातुविदम्** गातोर्मार्गस्य लम्भयितारं **तम्** वरुणम् **ईमहे** याचामहे । तस्मै देवाय **हृदा** हृदयेन **मतिम्** मननीयां स्तुतिं **व्यूर्णोति** विवृणोति, प्रकाशयति । ऋषेः स्तोतुः हृदयेन द्वारेण मन्त्रं प्रकाशयति, अत एव 'ब्रह्म कृणोति वरुणः' इति प्रथमे पादे । **नव्यः** स्तुत्यः तादृशः स देवः **ऋतम्** सत्यं, **जायताम्** अस्माकं प्रसन्नः सत्यभूतो भवतु । शिष्टं पूर्ववत् ।

ईमहे–ईङ् गतौ, अत्र याञ्चाकर्मा, विकरणस्य लुक् ।। १५ ।।

**।। इति प्रथमाष्टके सप्तमाध्याये द्वाविंशो वर्गः ।।**

## ।। अथ त्रयोविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**असौ यः पन्थां आदित्यो दिवि प्रवाच्यं कृतः । न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ।। १६ ।।**

**असौ । यः । पन्थाः । आदित्यः । दिवि । प्रऽवाच्यम् । कृतः । न । सः । देवाः । अतिऽक्रमे । तम् । मर्तासः । न । पश्यथ । वित्तम् । मे । अस्य । रोदसी इति ।।१६।।**

**स्कन्द– पन्थाः** इति पततेर्गत्यर्थस्य गन्तृवचनो न मार्गशब्दपर्यायः । अन्तर्णीतमत्वर्थो वा । **असौ यः** उदयास्तमयलक्षितेन मार्गेण गन्ता तद्वान् वा **आदित्यः प्रवाच्यम्** । व्यत्ययेनात्र नपुंसकता प्रकर्षेण स्तुतिवचनार्हः । **दिवि** प्रकाशकारणार्थम् **कृतः** स्थापितः । केन । सामर्थ्याद्युष्माभिर्वा देवैर्वा विधात्रा वा । **न सः** हे **देवाः! अतिक्रमे** कृत्यार्थेऽयं केन् प्रत्ययः । अतिक्रमयितव्यः । प्रथमं स्तोतव्य इत्यर्थः । अथवा पन्था इति पथिशब्दो मार्गवचनः एव । आदित्यशब्दस्तु आदित्यस्याऽयम् आदित्य इति इदमर्थे ण्यप्रत्ययो द्रष्टव्यः । एवमर्थयोजना । असौ यः पन्था आदित्यस्य स्वभूतः प्रकर्षेण स्तुतिवचनार्हः कृतः । केन । सामर्थ्यादादित्येनैव भवद्भिर्वा देवैर्विधात्रा वा । न स हे देवाः अतिक्रमयितव्यः । केन । सामर्थ्यादादित्येनैव । तमादित्यो नातिक्रामतीत्यर्थः । **तम्** आदित्यं तत्पथं वा हे **मर्तासः!** मनुष्याः! **न पश्यथ** न जानीथ । अहं सम्यङ् जानामि न यूयमित्यर्थः । **वित्तम्** ।। १६ ।।

**वेङ्कटमाधव–** सर्वेषां स्तोत्रार्थम् यः अयम् आदित्याख्यः **पन्थाः दिवि कृतः** । **सः देवाः** मनुष्यैः क्षुद्रैः अतिक्रमितुं न शक्यते । **तम्** इमं मनुष्याः! **न पश्यथ** अभ्युदयावहम् ।। १६ ।।

**मुद्गल– पन्थाः** सततगामी **यः असौ आदित्यः दिवि** द्युलोके **प्रवाच्यम्** प्रकर्षेण वचनं यथा भवति तथा **कृतः** निर्मितः । तथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमान इत्यर्थः । हे **देवाः! सः** यमादित्यः युष्माभिरपि **न अतिक्रमे** अतिक्रमितुं न शक्यः । युष्मज्जीवनस्य तदायत्तत्वात् । सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते । कालेषु च यागाः क्रियन्ते । यागेषु च सत्सु भवतां जीवनम् । अतो युष्माभिरपि असौ नातिक्रमितव्यः । एवं च सति हे **मर्तासः!** पापकृतो मनुष्याः! **तम्** महानुभावं सूर्यम् **न पश्यथ** न जानीथ । एतच्च कूपे पातयित्वा निर्गतौ एकतद्वितौ प्रति निन्दनम् । अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां जानीथ इति ।। १६ ।।

**सायण– पन्थाः** सततगामी । यद्वा । ब्रह्मलोकं गच्छतामुपासकानां मार्गभूतः । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' (मु.उ.१.२.११) इति श्रुतेः । एवम्भूतः **यः असौ आदित्यः दिवि** द्युलोके **प्रवाच्यं** प्रकर्षणवचनं यथा भवति तथा **कृतः** निर्मितः । यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमानः' इत्यर्थः । हे **देवाः! सः** अयमादित्यो युष्माभिरपि **न अतिक्रमे** अतिक्रमितुं न शक्यः । युष्मज्जीवनस्य तदायत्तत्वात् । सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते । कालेषु च यागाः क्रियन्ते । यागेषु च सत्सु भवतां जीवनम् । अतो युष्माभिरप्यसौ नातिक्रमितव्यः । एवं च सति हे **मर्तासः!** पापकृतो मनुष्याः **तं** महानुभावं सूर्यं **न पश्यथ** सूर्यं न जानीथ । एतच्च कूपे पातयित्वा निर्गतौ एकतद्वितौ प्रति निन्दनम् । अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां न जानीथः इति ।

पन्थाः । 'पत्लृ गतौ' । 'पतेस्थ च' सति इनिप्रत्ययः । 'पथिमथ्यृभुक्षामात्' इति आत्वम् । 'इतोऽत्सर्वनामस्थाने' (पा.सू.७.१.८६) इति अत्वम् इकारस्य । 'थो न्थः' (पा.सू.७.१.८७) । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । प्रवाच्यम् । वक्तेर्ण्यन्तात् 'अचो यत्' इति भावे यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । अतिक्रमे । 'क्रमु पादविक्षेपे' । 'कृत्यार्थे तवैकेन्' इति केन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। १६ ।।

**सिद्धाञ्जनम्– पन्थाः** मार्गभूतः सत्यलोकं गच्छतां पुण्यात्मनां **योऽसौ आदित्यः दिवि** यो द्युलोके आदित्यात्मना व्यवस्थितः सन् **प्रवाच्यम्** प्रकर्षेण वचनं यथा भवति तथा **कृतः** निर्मितः, हे **देवाः! सः** आदित्यः **अतिक्रमे न** अतिक्रमितुं युष्माभिरपि न शक्यः । **तम्** आदित्यं हे **मर्तासः!** हे मर्त्याः **न पश्यथ** यूयं न पश्यथ, अहं तु पश्यामि जानामीत्यर्थः । नायं बाह्यः सूर्यः लौकिकश्चेत् सर्वेऽपि मर्त्याः पश्येयुः । वित्तमिति पूर्ववत् ।

प्रवाच्यम्–वक्तेर्ण्यन्तादचो यदिति भावे यत् । अतिक्रमे–क्रमु पादविक्षेपे, कृत्यार्थे तवैकेनिति केनप्रत्ययः ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**त्रितः कूपेऽवहितो देवान् हवत ऊतये । तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ।। १७ ।।**

**त्रितः । कूपे । अवंऽहितः । देवान् । हवते । ऊतये । तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तम् । मे । अस्य । रोदसी इति ॥ १७ ॥**

**स्कन्द– त्रितः** नामर्षिः **कूपे अवहितः** अधो निहितः । पतित इत्यर्थः । **देवान् हवते ऊतये** भूतेऽत्र लट् द्रष्टव्यः । आहूतवान् । यदि कुत्सस्येदमार्षं ततोऽविरुद्ध एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । अथ तत् त्रितस्येदमार्षम्, तत्र आत्मन एव परोक्षरूपेण प्रथमपुरुषेण निर्देश इति व्याख्यातव्यम् । अहं त्रितनामा देवानाहूतवानित्यर्थः । किमर्थम् । ऊतये अस्मिन् मानसे यज्ञे सोमेन तर्पणाय पालनाय वाऽऽत्मनः । तदाह्वानं श्रुतवान् **बृहस्पतिः कृण्वन्** हेतावयं शतृप्रत्ययो द्रष्टव्यः । प्रयोजनस्य हेतुत्वेन विवक्षा । करणेन हेतुना । कर्तुमित्यर्थः । किम् । सामर्थ्याद्रक्षणं वोत्तारणं वा । क्रियासामान्यत्वाद्वा करोतिरेव रक्षणार्थं उत्तारणार्थो वा । रक्षितुमुत्तारयितुं वेत्यर्थः । कुतः । **अंहूरणात्** अंहुशब्दः अंहश्शब्दपर्यायस्तद्वान् अंहुरः । कः पुनरसौ । यदि रक्षणमत्र विवक्षितं ततः पापकर्मकारित्वाद् वृकः । अथोत्तरणं ततः उद्वेगकरैस्तृणादिभिरुपेतत्वात्कूपः । अंहुर एवांहूरणः । स्वार्थिको नशब्दः ताद्धितो दीर्घस्तु छान्दसत्वात् । पापकर्मकारिणो वृकाद् उद्वेगकरतृणाद्युपेताद् वा कूपादित्यर्थः । उरु क्रियाविशेषणमेतत् । विस्तीर्णम् । रक्षितुमुत्तारयितुं वा चिरमित्यर्थः । **वित्तम्** ॥ १७ ॥

**वेङ्कटमाधव–** यदा अस्य सूक्तस्य कुत्स एव द्रष्टा इति दर्शनम् तदानीमियं योजना पुरा । अहम् इव **त्रितः कूपे** पतितः सन् देवान् **हवते** स्म रक्षणाय तदानीं तस्य वचनम् **बृहस्पति** एव **शुश्राव**, तस्य आह्वानात्? तस्य विस्तीर्णं गमनमार्गं **कृण्वन्** ॥ १७ ॥

**मुद्गल– कूपे अवहितः** पातितः **त्रितः** एतत्संज्ञक ऋषिः **ऊतये** रक्षणाय **देवान् हवते** स्तुतिभिराकारयति । यदेतत् त्रितस्याह्वानम् । **बृहस्पतिः** बृहतां महतां देवानां रक्षक एतत्संज्ञको देवः **तत्** आह्वानम् । **शुश्राव** श्रुतवान् । किं कुर्वन् । **अंहूरणात्** अंहसः पापरूपादस्मात् कूपपातादुन्नीय **उरु** विस्तीर्णं शोभनम् **कृण्वन्** कुर्वन् ॥ १७ ॥

**सायण– कूपेऽवहितः** पातितः **त्रितः** एतत्संज्ञः ऋषिः **ऊतये** रक्षणाय **देवान् हवते** स्तुतिभिराकारयति । यदेतत् त्रितस्याह्वानं **बृहस्पतिः** बृहतां महतां देवानां रक्षकः एतत्संज्ञो देवः **तत्** आह्वानं **शुश्राव** श्रुतवान् । किं कुर्वन् । **अंहूरणात्** अंहसः पापरूपादस्मात् कूपपातादुन्नीय **उरु** विस्तीर्णं शोभनं **कृण्वन्** कुर्वन् ।

हवते । ह्वयतेर्लटि 'बहुलं छन्दसि' इति सम्प्रसारणम् । शब्गुणावादेशाः । ऊतये । 'ऊतियूति इत्यादिना क्तिन उदात्तत्वम् । बृहस्पतिः । 'तद्बृहतोः करपत्योः' (पा.सू.६.१.१५७.ग) इति पारस्करादिषु पाठात् सुट्तलोपौ । 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् । अंहूरणात् । 'अहि गतौ' । इदित्त्वात् नुम् । 'खर्जिपिञ्ज्यादिभ्य ऊरोलचौ' (उ.सू.४.५३०) इति भावे ऊरप्रत्ययः । दुःखप्राप्तिहेतुभावा गतिरस्यास्तीति पामादिलक्षणो मत्वर्थीयो नः (पा.सू.५.२.१००) । आङ्पूर्वात् हन्तेर्वा रूपमुन्नेयम् ।। १७ ।।

**सिद्धाञ्जनम्–** **कूपे** नायं कूपो बाह्यः, अन्नमये नीरसे जडे अपां उद्भवः । इदं च सूक्तप्रारम्भे विवृतम् । **अवहितः** अवस्थितः **त्रितः** तृतीयस्ताने ततः व्याप्तः पुरुषः, अन्नमयोद्धाराय जडेऽवरुह्यावस्थित इत्यर्थः । **देवान्** विश्वान् देवान् **ऊतये** रक्षायै **हवते** आह्वयति **तत्** आह्वानं **बृहस्पतिः** मन्त्रवाक्पतिर्देवः **शुश्राव** श्रुतवान् । किं कुर्वन्? **अंहूरणात्** पापात् जडकूपात्मकात् त्रितस्योद्गमनसौलभ्याय **उरु** **कृण्वन्** कूपद्वारं विस्तीर्णं कुर्वन् । वित्तमित्यादि पूर्ववत् ।

हवते–ह्वयतेर्लटि छान्दसं सम्प्रसारणम् । अंहूरणात्–अंहस्-शब्दात् ऊरप्रत्ययः, मत्वर्थीयो नः, आङ्पूर्वात् हन्तेर्वा रूपमित्येके ।। १७ ।।

**नीतिमञ्जरी–** यदि भ्राता द्विट् स शत्रुरित्याह–

**अन्यः सुहृज्जनो भ्राता शत्रुर्भ्राता सहोदरः ।**
**अश्विभ्यां तारितो भुज्युस्त्रितः कूपे निपातितः ।। २८ ।।**

अन्यो यः सुहृज्जनः प्रीतिकरः स एव भ्राता । सहोदरोऽपि समानोदरोऽपि यद्यप्रीतिकरः द्विट् स एव भ्राता शत्रुः । एतमर्थमुदाहरणतया दृढयति । यथाऽश्विभ्यां सुहृद्भ्यां प्रीतिकराभ्यां भुज्युस्तौग्र्यस्तारितः समुद्रात् । भ्रातृत्वं कृतमित्यर्थः । तदग्रे तुग्रो ह भुज्युमिति (ऋ.१।११६।३) दर्शयिष्यते । अत्र तु भ्रातृभ्यां सहोदराभ्यां द्वितैकताभ्यां त्रितः कनीयान् कूपे निपातितः शत्रुत्वं कृतं तद्वदामः ।

तत्र ऋक् (ऋ.१.१०५.१७)

**त्रितः कूपेऽवहितो देवान्हवत ऊतये ।**
**तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ।**

(उपरिष्टाद्वर्ण्यमान इतिहासो बृहद्देवतायां किञ्चिद्भेदेन परिदृश्यते । अत एव नीतिमञ्जर्यां हस्तलिखितपुस्तके नोल्लिखितः) । स यथा–

बृहद्देवता– (अ.३ श्लो.१३२–१३७)

**त्रितं गास्त्वनुगच्छन्तं शूराः सालावृकीसुताः ।**
**कूपे प्रक्षिप्य गाः सर्वास्तत एवापजह्रिरे　　।। १३२ ।।**

**स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः ।**
**देवांश्चावाहयत्सर्वांस्तच्छुश्राव बृहस्पतिः　　।। १३३ ।।**

**आगच्छतोऽथ तान् दृष्ट्वा क्व वसत्यस्य तत्त्वतः ।**
**सर्वदृत्त्वश्च वरुणस्यार्यम्णश्चेत्युपालभत्　　।। १३४ ।।**

**कूपेष्टकाभिर्वणितान्यङ्गान्येवाभवन्मम ।**
**दृष्ट्वा सर्वानहं स्तौमि यद्यप्येको न पश्यति　　।। १३५ ।।**

**बृहस्पतिप्रचोदिता विश्वे देवगणास्त्रयः ।**
**जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुः सह　　।। १३६ ।।**

**बृहस्पतिस्त्रितस्यैतज्ज्ञानं विज्ञानमेव च ।**
**तृचेनान्त्येन सूक्तस्य जगादर्षिरसाविति　　।। १३७ ।।**

(ऋ.१।१०५।१६-१८)

तत्रेतिहासः– एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो भ्रातरो बभूवुः । ते कदाचिन्मरुभूमावरण्ये वर्तमाना पिपासासन्तप्तगात्राः सन्त एकं कूपमविन्दन् । तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत् । स्वयं पीत्वा इतरयोश्च पानाय कूपादु(दकमु)द्धृत्य प्रादात् । तौ तदुदकं पीत्वा त्रितं कूपे पातयित्त्वा तदीयं धनं सर्वमपहृत्य कूपकं (कूपञ्च) रथचक्रेण पिधाय प्रास्थिपाताम् । ततः कूपे पतितः सन् स त्रितः कूपादुत्तरीतुमशक्नुवन् सर्वे देवा मामुद्धरन्त्विति मनसा सस्मार ततस्तेषां स्तावकमिदं सूक्तं ददर्श । तत्र रात्रौ कूपस्यान्तश्चन्द्रमसो रश्मीन् पश्यन् परिदेवयते ।

कुत्सः त्रितो वाऽनोन सूक्तेन विश्वान्देवान् स्तौति ।

तथा चानुक्रमणी– ''चन्द्रमा एकोनास्यस्त्रितो वा वैश्वदेवं हि पाङ्क्तमन्त्या त्रिष्टुबष्टमी महाबृहती यवमध्या'' इति ।

तत्र यास्कः (नि.४।६) ''त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ । तत्र ब्रह्मेतिहास-मिश्रमृङ्मिश्रं गाथामिश्रं भवति । त्रितस्तीर्णतमो मेधया बभूव अपि वा सङ्ख्यानामैवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः'' इति ।

ऋचोऽयमर्थः । **कूपे अवहितः** पातितः **त्रितः** एतत्संज्ञ ऋषिः **ऊतये** रक्षणाय **देवान् हवते** स्तुतिभिराकारयति । **तत्** एतदाह्वानं **बृहस्पतिः** देवः **शुश्राव** श्रुतवान् । किं कर्तुं शुश्राव । **अंहूरणात्** पापरूपादस्मात् कूपात् । अंहुरोऽहस्वानंहूरणमित्यप्येतस्य भवति इति यास्कः (नि.६।२७) । उन्नीय **उरु** विस्तीर्णं शोभनं **कृण्वन्** कुर्वन् **रोदसी** द्यावापृथिव्यौ **मे** मम **अस्य** कूपपतितस्य यदुःखं तद्वित्तं जानीतम् ।

कूपेऽवहितः– यकाराद्यक्षरं परं वकाराद्यपीति (ऋ.प्रा.२।१४) वपरत्वात् पूर्वरूपम् । इति भ्रातृभ्यां शत्रुत्वं कृतमित्युक्तम् ॥ १७ ॥

## ऋक्संहिता पदपाठसहिता

**अरुणो मा सकृद् वृकः पथा यन्तं ददर्श हि । उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥ १८ ॥**

**अरुणः । मा । सकृत् । वृकः । यन्तम् । ददर्श । हि । उत् । जिहीते । निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी । वित्तम् । मे । अस्य । रोदसी इति ॥ १८ ॥**

**स्कन्द– अरुणः** आरक्तवर्णः **सकृत् वृकः** यथा स्वगृहगमनमार्गेण यन्तं गृहं प्रति गच्छन्तम् **मा** मां ददर्श दृष्टवान् । **हि**-शब्दस्तु पदपूरणः । **उज्जिहीते निचाय्य** ओहाङ् गतौ । भूते चात्र लट् द्रष्टव्यः । निचायतिरपि दर्शनार्थः प्रसिद्धः । दृष्ट्वा चोर्ध्वमगमत् । उदित इत्यर्थः । कथम् । **तष्टेव पृष्ट्यामयी** पृष्टिरिति पृष्टमुच्यते । तस्यामयं रोगः । तद्वान् पृष्ट्यामयी । यथा तक्षा नित्यकुटिलत्वादुपजातपृष्ठवेदनः तदपगमनार्थमुत्तिष्ठेत् तद्वदित्यर्थः । **वित्तम्** ॥ १८ ॥

**वेङ्कटमाधव–** तृषितं मां मार्गेण गच्छन्तं पृष्ठतः स्थितः कश्चित् **अरुणः वृकः** ददर्श

**हि** । दृष्ट्वा च गमनार्थम् **उत् जिहीते** । यथा **तष्टा** अनवरततक्षणात् जातपृष्ठवेदनः सन् उत्तिष्ठति तदवद् इति । यास्कपक्षे त्वुदितश्चन्द्रमा इति मन्त्रार्थः । तदुक्तम् 'वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा । ....अरुण आरोचनो मासकृत् मासानां चार्धमासानां च कर्ता भवति चन्द्रमाः । वृकः पथा यन्तं ददर्श नक्षत्रगणम् । अभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमाः । तक्ष्णुवन् इव पृष्ठरोगी' (या.५,२०-२१) इति ।। १८ ।।

**मुद्गल– अरुणः** अरुणवर्णः लोहितवर्णः **वृकः** अरुण्यश्वा **सकृत्** एकवारम् **पथा यन्तम्** मार्गेण गच्छन्तम् **मा** माम् **ददर्श हि** दृष्ट्वान् । हि इति पूरणः । **निचाय्य** दृष्ट्वा च मां जिघृक्षुः सन् **उज्जिहोते** उद्गच्छति स्म । दृष्टान्तः । **तष्टा इव पृष्ट्यामयी** । यथा तक्षणजनितपृष्ठक्लेशः तष्टा वर्धकी तदपनोदनाय ऊर्ध्वाभिमुखो भवति तद्वत् । हे द्यावापृथिव्यौ! मदीयमिमं वृत्तान्तं जानीतम् । अन्मत् पूर्ववत् ।। १८ ।।

**सायण–** अरुणवर्णः लोहितवर्णः **वृकः** अरण्यश्वा **सकृत्** एकवारं **पथा यन्तं** मार्गेण गच्छन्तं मां **ददर्श हि** दृष्टवान् । हिः पादपूरणः । **निचाय्य** दृष्ट्वा च मां जिघृक्षुः सन् **उज्जिहीते** उद्गच्छति स्म । तत्र दृष्टान्तः । **तष्टेव पृष्ट्यामयी** । यथा तक्षणजनितपृष्ठक्लेशः तष्टा वर्धकिः तदपनोदनाय ऊर्ध्वाभिमुखो भवति । तद्वत् । हे द्यावापृथिव्यौ मदीयमिदं दुःखं **वित्तं** जानीतम् । यद्वा । वृक इति ववृतज्योतिष्कः चन्द्रमाः उच्यते । अरुणः आरोचमानः कृत्स्नस्य जगतः प्रकाशकः मासकृत् मासार्धमासर्त्वयनसंवत्सरादीन् कालविशेषान् कुर्वन् । तिथिविभागज्ञानस्य चन्द्रगत्यधीनत्वात् । स चन्द्रमाः आकाशमार्गे **यन्तं** गच्छन्तं नक्षत्रगणं ददर्श । हिरवधारणे । नक्षत्रगणमेव ददर्श न कूपपतितं मामित्यनादरो द्योत्यते । यदि मां पश्येत् उद्धरेत् कूपात् । निचाय्य नक्षत्रगणं दृष्ट्वा चोज्जिहीते । येन नक्षत्रेण संयुज्यते तेन सहोद्गच्छति । न मामभि-गच्छतीत्यर्थः । अन्यत् पूर्ववत् ।

अत्र मासकृत् इति यास्कः एकं पदं मन्यते शाकल्यस्तु पदद्वयम् । तस्मिन्पक्षेऽयमर्थः । दक्षप्रजापतेर्दुहितृभूताः स्वभार्याः अश्विन्याद्यास्तारकाः पुनःपुनर्ददर्श । मां सकृदेव पश्यतीति सकृद्दृष्ट्वा चोज्जिहीते । ताराभिः सहोर्ध्वमेव गच्छति । न मां कूपादुत्तारयति । अत इदमनुचितम् । हे द्यावापृथिव्यौ मदीयमिमं वृत्तान्तं जानीतम् ।

अत्र निरुक्तं– 'वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा । अरुण आरोचनः मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी' (निरु.५.२०-२१) इति ।

सकृत् । 'एकस्य सकृच्च' (पा.सू.५.४.१९) इति क्रियाभ्यावृत्तिगणने निपातितः । वृकः । 'वृञ् वरणे' । 'सृवृभूशुषिमुषिभ्यः कित्' (उ.सू.३.३२१) इति कप्रत्ययः । जिहीते । 'ओहाङ् गतौ' । जौहोत्यादिकः । 'भृञामित्' इति अभ्यासस्य इत्वम् । निचाय्य । 'चायृ पूजानिशामनयोः' । अत्र दर्शनार्थो धातूनामनेकार्थत्वात् । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । पृष्ट्यामयी । 'स्पृश संस्पर्शने' । स्पृश्यतेऽनेनेति स्पृष्टिः । छान्दसो वर्णलोपः । पृष्टावामयः पृष्ट्यामयः । तद्वान् पृष्ट्यामयी ।। १८ ।।

**सिद्धाञ्जनम्– अरुणः** लोहितवर्णः राजसक्रियाद्योतनार्थकः, **वृकः** छेदकः असुरः **पथा** मार्गेण **यन्तम्** गच्छन्तं ऊर्ध्वं दिवं प्रति, **मा** मां **सकृत्** एकवारं **ददर्श हि** दृष्टवान् खलु । अनेन जीवतामृषीणां ऊर्ध्वं दिव्यं धाम प्रति गमनं पुनरागमनं च साधारणमभूत् तेषां रहोयागमार्गे इति बोध्यम् । इदं च पूर्वमनुभूतं मयेति ब्रूते ऋषिः । सः **निचाय्य** दृष्ट्वा मां जिघृक्षन् **उज्जिहीते** उद्गच्छति स्म । यद्यपि स उद्गतः, ततोऽप्यहमुद्गततर आसं देवानामनुग्रहबलात्, तस्मात् केवलं उत्पश्यन्नवर्तत । क इव? **तक्षा इव** यथा वर्धकिः **पृष्टिऽआमयी** तक्षणजनितपृष्ठक्लेशः तद्दुःखापनोदनायोर्ध्वाभिमुखो भवति, तद्वत् । अत्रापि प्रागृषेरूर्ध्वप्रयाणं आसीदिति गम्यते । वित्तमिति समानम् ।

सकृत्–एकस्य सकृच्चेति क्रियाभ्यावृत्तिगणने निपातितः । जिहीते–ओहाक् त्यागे, जुहोत्यादिः । पृष्ट्यामयी–स्पृश संस्पर्शने, पृष्टिः पृष्ठं, स्पृश्यतेऽनेनेति पृष्टिः छान्दसो वर्णलोपः, पृष्टौ आमयः, तद्वान् ।। १८ ।।

## ऋक्संहिता पदपाठसहिता

**एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। १९ ।।**

एना । आङ्गूषेण । वयम् । इन्द्रऽवन्तः । अभि । स्याम । वृजने । सर्वऽवीराः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥

**स्कन्द–** **एना**-शब्दो अनेनेत्यस्यार्थे । अङ्गशब्दः शरीरावयववचनः । 'उष दाहे' । अङ्गान्योषति दहतीति अङ्गोषोऽन्धकूपः । स हि सम्बाधत्वात् पीडयत्यङ्गानि । अङ्गोष एवाऽऽङ्गूषः । छान्दसत्वादोकारस्य ऊकारः । अङ्गूषे भव आङ्गूषः सोमः । अथवा ओघोष्यतेऽसाविति आघोषः स्तोमः । आघोषः एवाङ्गूषः । छान्दसौ वर्णागमव्यत्ययौ । **एना आङ्गूषेण** इति च उभयत्र हेतौ तृतीया । अनेन कूपे प्रकल्पितेन सोमेन स्तोमेन वा हेतुना । **वयम् इन्द्रवन्तः** । इन्द्रः सहायभूतो येषां ते इन्द्रवन्तः । इन्द्रेण अनुगृह्यमाणा इत्यर्थः । **अभि स्याम** अभिभवेम शत्रूनित्याशास्महे । क्व । **वृजने** । वृज्यते दोषैरिति वृजनः अविगुणो यज्ञः, तत्र । अथवा वृजनशब्दो बलनाम (निघ.२,९) । सामर्थ्यादन्तर्णीतमत्वर्थः । सेनादिलक्षणेन बलेन तद्वति । सङ्ग्रामे इत्यर्थः । **सर्ववीराः** वीरैः पुत्रैः पौत्रैश्चोपेताः । **तत् नः मित्रः** इत्याद्युक्तार्थम् (ऋ. १,९४,१६ द्र.) ॥ १९ ॥

**वेङ्कटमाधव–** अनेन स्तोत्रेण **वयम् इन्द्रवन्तः** सन्तः अभिभवेम युद्धे शत्रून् अखण्डितास्मदीयवीराः । अत्र वदन्ति–

'त्रितं गास्त्वनुगच्छन्तं क्रूराः सालावृकीसुताः ।
कूपे प्रक्षिप्य गाः सर्वाः तत एवापजह्रिरे ॥
स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः ।
देवांश्चावाहयत्सर्वांस्तच्छुश्राव बृहस्पतिः ॥
बृहस्पतिप्रचोदिता विश्वे देवगणास्त्रयः ।
जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुस्सह ॥
कुत्सश्च कूपे पतितस्तेनैवेहानुधावति ।
सूक्तेन त्रितदृष्टेन स्वयं वा दृष्टवानिदम् ॥
त्रित एवाथवा द्रष्टा ननु कुत्सस्य दर्शने ।
विरुध्यतेऽरुणो मेति माशब्दस्तत्र का गतिः ॥
उच्यते पदकारस्य त्रितस्यार्षमिदं मतम् ।
अन्यथाऽपि पदच्छेदस्तत्र यास्केन दर्शितः' ॥ इति ॥

**मुद्गल– आङ्गूषेण** आघोषणयोग्येन **एना** एतेन स्तोत्रेण हेतुभूतेन **इन्द्रवन्तः** अनुग्राहकेणेन्द्रेण युक्ताः **सर्ववीराः** सर्वैर्वीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तः वयम् **वृजने** सङ्ग्रामे **अभि स्याम** शत्रून् अभिभवेम । **तत् इदम्** अस्मदीयं वचनं मित्रादयः ममहन्ताम् पूजयन्तु । पालयन्त्वित्यर्थः । उत देवतासमुच्चये ।। १९ ।।

**सायण– एना** अनेन **आङ्गूषेण** आघोषणयोग्येन स्तोत्रेण हेतुभूतेन **इन्द्रवन्तः** अनुग्राहकेणेन्द्रेण युक्ताः **सर्ववीराः** सर्वैर्वीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तः **वयं वृजने** सङ्ग्रामे **अभि स्याम** शत्रूनभिभवेम । **तत्** इदमस्मदीयं वचनं मित्रादयः **ममहन्तां** पूजयन्तु पालयन्त्वित्यर्थः । उतशब्दो देवतासमुच्चये । अत्र यास्कः– 'आङ्गूषः स्तोम आघोषः । अनेन स्तोमेन वयमिन्द्रवन्तः' (निरु.५.११) इति ।

एना । 'द्वितीयाटौःस्वेनः' (पा.सू.२.४.३४) इति तृतीयायाम् इदम एनादेशः । 'सुपां सुलुक्' इति विभक्तेः आजादेशः । चित्स्वरेणान्तोदात्तत्वम् । आङ्गूषेण । आङ्पूर्वात् घुषेः कर्मणि घञ् । आङो ङकारलोपाभावश्छान्दसः । घोषशब्दस्य गूषभावश्च पृषोदरादित्वात् । थाथादिना उत्तरपदान्तोदात्तत्वम् । स्याम । अस्तेः प्रार्थनायां लिङि 'श्नसोरल्लोपः' इति अकारलोपः । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (पा.सू.८.३.८७) इति षत्वम् ।। १९ ।।

**सिद्धाञ्जनम्– एना** अनेन **आङ्गूषेण** आघोषणार्हेण स्तोत्रेण हेतुना **इन्द्रवन्तः** इन्द्रयुक्ताः **वयम् सर्ववीराः** सर्वविधवीर्योपेताः सन्तः **वृजने** सङ्ग्रामे असुरजयार्थके **अभि स्याम** अभिभवेम शत्रून् देवद्वेषिणः । तन्नो मित्र इत्यादि व्याख्यातम् ।

एना–इदम एनादेशः, विभक्तेराजादेशः । आङ्गूषेण–आङ्पूर्वात् घुषेः कर्मणि घञ्, घस्य गः अन्यच्च सर्वं छान्दसम् ।। १९ ।।

।। इति प्रथमाष्टके सप्तमाध्याये त्रयोविंशो वर्गः ।

।। इति प्रथमे मण्डले पञ्चदशाऽनुवाकः ।।

## ।। अथ चतुर्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् १०६)

(७ कुत्स आङ्गिरसो । विश्वे देवाः । जगती । ७ त्रिष्टुप्)

**इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमू॒तये॒ मारु॑तं॒ शर्धो॒ अदि॑तिं हवामहे ।**
**रथं॒ न दु॒र्गाद् व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ।। १ ।।**

**इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । ऊ॒तये॑ । मारु॑तम् । शर्धः॑ । अदि॑तिम् । ह॒वा॒म॒हे॒ । रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न ।। १ ।।**

**स्कन्द–** **इन्द्रम्** च **मित्रम्** च **वरुणम्** च **अग्निम्** च **ऊतये** तर्पणाय पालनाय वाऽऽत्मनः **मारुतम्** च **शर्धः** सेनालक्षणं बलम् **अदितिम्** च **हवामहे** आह्वयामः । किञ्च **रथम् न दुर्गात्** यथा रथी दुर्गात् प्रदेशाद्रथं रक्षति एवं हे **वसवः! सुदानवः!** शोभनदातारः! शोभनदानाः! वा **विश्वस्मात्** सर्वस्मात् **अंहसः** पापात् **नः** अस्मान् **निः पिपर्तन** पॄ पालनपूरणयोः । निश्चयेन पालयत रक्षत । यथा वयं केनचिदपि पापेन न सम्बध्यामहे तथा कुरुतेत्यर्थः ।।

**वेङ्कटमाधव–** कुत्सः! इन्द्रादीन् **मारुतम्** च वेगं रक्षणार्थं **हवामहे** । एषु चाहूयमानेषु यूयं च **वसवः! रथम्** इव सारथयः **दुर्गात्**, अस्मान् सर्वस्मात् पापात् **निः** पारयत ।। १ ।।

**मुद्गल–** षोडशोऽनुवाके दश सूक्तानि । तत्र 'इन्द्रम्' इति सप्तर्चं प्रथमं सूक्तम् । अनुवर्तमानत्वात् कुत्स ऋषिः । त्रितस्तु वाविशिष्टत्वात् तत्रैव विकल्पितः । तेनेह नानुवर्तते । अन्त्या त्रिष्टुप् । शिष्टा जगत्यः । विश्वे देवाः देवता ।।

**ऊतये** रक्षणाय वयमिन्द्रादीन् **मारुतम् शर्धः** मरुत्समूहरूपं बलं च **हवामहे** आह्वयामहे । **वसवः!** निवासयितारः! **सुदानवः!** शोभनदाना इन्द्रादयः! **विश्वस्मात्** सर्वस्मात् **अंहसः** पापात् **नः** अस्मान् **निः पिपर्तन** निर्गमय्य पालयत । दृष्टान्तः । **रथम् न दुर्गात्** गन्तुमशक्यात् निम्नोन्नतात् स्थानात् सारथयो यथा रथं पालयन्ति तद्वत् ।। १ ।।

**सायण–** षोडशेऽनुवाके दश सूक्तानि । तत्र 'इन्द्रम्' इति सप्तर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते– 'इन्द्रं मित्रं सप्त त्रिष्टुबन्तम्' इति । अनुवर्तमानत्वात् कुत्स ऋषिः । त्रितस्तु वाविशिष्टत्वात् तत्रैव विकल्पितो नानुवर्तते । अन्त्या त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । विश्वे देवा देवतेत्युक्तम् । विनियोगो लैङ्गिकः ।

**ऊतये** रक्षणाय वयमिन्द्रादीन् **मारुतं शर्धः** मरुत्समूहरूपं बलं च **हवामहे** आह्वयामहे । **वसवः** निवासयितारः **सुदानवः** शोभनदानाः इन्द्रादयः **विश्वस्मात्** सर्वस्मात् **अंहसः** पापात् । **नः** अस्मान् **निष्पिपर्तन** निर्गमय्य पालयत । तत्र दृष्टान्तः । **रथं न दुर्गात्** । गन्तुमशक्या- निम्नोन्नतात् स्थानात् सारथयो यथा रथं पालयन्ति तद्वत् ।

पिपर्तन । 'पृ इत्येके' । लोटि 'तप्तनप्तनथनाश्च' इति तस्य तनवादेशः । पित्त्वेन ङित्त्वाभावात् गुणः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** षोडशेऽनुवाके दश सूक्तानि । तत्र 'इन्द्रमि'ति सप्तर्चं प्रथमं सूक्तम् । कुत्स ऋषिः, जगती छन्दः, अन्त्या त्रिष्टुप्, विश्वे देवा देवता ।

**इन्द्रम् मित्रम् वरुणम् अग्निम्** एतान् देवान् **मारुतम् शर्धः** मरुत्सम्बन्धि बलं मरुद्गणं वा, तथा **अदितिम्** अखण्डसत्त्वभूतां सर्वदेवमातरं च **ऊतये** रक्षायै **हवामहे** आह्वयामः । **वसवः** निवासयितारः **सुदानवः** शोभनदानोपेताः, हे देवाः, **नः** अस्मान् **विश्वस्मात्** सर्वस्मात् **अंहसः** पापात् **निष्पिपर्तन** निर्गमय्य पालयत । तत्र दृष्टान्तः– **दुर्गात्** गन्तुं दुःखेन शक्यात् निम्नोन्नतात् प्रदेशात् **रथम् न** रथं यथा सारथयः पालयन्ति, तद्वत् ।

पिपर्त्तन–पालनार्थात् पिपर्तेर्लोटि तनबादेशः, अर्तिपिपर्त्योश्चेति अभ्यासस्य इत्वम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शंभुवः ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।। २ ।।**

ते । आदित्याः । आ । गत । सर्वऽतातये । भूत । देवाः । वृत्रऽतूर्येषु । शम्ऽभुवः ।
रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ।।

**स्कन्द– ते आदित्याः** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यान् परया भक्त्या आह्वयामि यूयं ते हे **आदित्याः! आ गत** आगच्छत । किमर्थम् । सर्वतातये 'सर्वदेवात्तातिल्' (पा.४,४,१४२) इत्येवं स्वार्थे तातिल्प्रत्ययः । सर्वस्मै अस्मद्यागाय । अथवा तनोतेस्तातिशब्दो यागसन्ततिवचनः । सर्वस्यै यागसन्तत्यै । सर्वानस्मद्यागान् अविघ्नेन सम्पादयितुमित्यर्थः । किञ्च **भूत** भवत अस्माकं हे **देवाः! वृत्रतूर्येषु** वृत्रतूर्यशब्दः सङ्ग्रामनाम (निघ २,१७) । सङ्ग्रामेषु शंभुवः 'शम्' (निघ.३,६) इति सुखनाम । भवतिरप्यत्र सामर्थ्यादन्तर्णीतण्यर्थः । सुखस्य भावयितारः । शत्रुजयलक्षणं सुखम् अस्मान् प्रापयतेत्यर्थः । किञ्च **रथं न** ।। २ ।।

**वेङ्कटमाधव– ते** यूयम् **आदित्याः!** आ गच्छत यज्ञाय । भवत च **देवाः!** सङ्ग्रामेषु सुखस्य भावयितारः ।। २ ।।

**मुद्गल–** हे **आदित्याः!** अदितेः पुत्राः! **देवाः! ते** यूयम् **सर्वतातये** सर्वैर्वीरपुरुषैः **तातये** तताय विस्तारिताय युद्धाय । युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः । **आ गत** आगच्छत । अपि च **वृत्रतूर्येषु** सङ्ग्रामेषु **शम्भुवः** सुखस्य भावयितारः **भूत** भवत ।। २ ।।

**सायण–** हे **आदित्याः!** अदितेः पुत्राः **देवाः ते** यूयं **सर्वतातये** सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय । युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः । **आ गत** आगच्छत । अपि च **वृत्रतूर्येषु** । सङ्ग्रामनामैतत् । सङ्ग्रामेषु **शम्भुवः** सुखस्य भावयितारः **भूत** भवत ।

गत । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् ।। २ ।।

**सिद्धाञ्जनम्–** हे **आदित्याः!** देवाः, ते तादृशा यूयं **आगत** आगच्छत । **सर्वतातये** सर्वैस्तायनाय सर्वैः कर्तव्याय प्रयासाय **भूत** सहायाः भवत । **वृत्रतूर्येषु** वृत्राः असुराः तूर्याः हिंस्याः येषु तेषु युद्धेषु **शम्भुवः** सुखस्य भावयितारो भवत । रथं न दुर्गेति व्याख्यातम् ।

गत–गमेर्लोट् शपो लुक् छन्दसि विकल्पनात् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।। ३ ।।**
अवन्तु । नः । पितरः । सुऽप्रवाचनाः । उत । देवी इति । देवपुत्रे इति देवऽपुत्रे । ऋतऽवृधा । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ।। ३ ।।

**स्कन्द– अवन्तु** पालयन्तु **नः** अस्मान् **पितरः** । कीदृशाः । **सुप्रवाचनाः** प्रोच्यन्ते देवतागुणाः अनेनेति प्रवाचनं स्तोत्रम् । छान्दसं दीर्घत्वम् । शोभनं प्रवाचनं येषां ते सुप्रवाचनाः । सुस्तुतय इत्यर्थः । न च केवलाः पितरः । किं तर्हि । **उत देवी** देव्यावपि द्यावापृथिव्यौ । कीदृश्यौ । **देवपुत्रे** देवाः पुत्रभूता ययोस्ते देवपुत्रे । देवानां मातृभूते इत्यर्थः । **ऋतावृधा** सत्यस्य यज्ञस्य उदकस्य वा स्वेन स्वेन व्यापारेण वर्धयित्र्यौ । किञ्च **रथं न** इत्याद्युक्तार्थम् ।।

**वेङ्कटमाधव–** रक्षन्तु अस्मान् **पितरः** सुस्तोत्राः । अपि च देव्यौ द्यावापृथिव्यौ यज्ञस्य वर्धयित्र्यौ ययोः सर्वे देवाः पुत्राः ते देवपुत्रे ।। ३ ।।

**मुद्गल– नः** अस्मान् **पितरः** अग्निष्वात्तदयः **अवन्तु** रक्षन्तु । कीदृशाः । **सुप्रवाचनाः** सुखेन प्रवक्तुं स्तोतुं शक्याः । **उत** अपि च **देवपुत्रे** देवाः सर्वे पुत्रस्थानीया ययोस्ते **ऋतावृधा** ऋतस्य सत्यस्य वर्धयित्र्यौ **देवी** देवानादिगुणयुक्ते द्यावापृथिव्यौ अस्मात् रक्षताम् । अन्यत् समानम् ।। ३ ।।

**सायण– नः** अस्मान् **पितरः** अग्निष्वात्तादयः **अवन्तु** रक्षन्तु । कीदृशाः । **सुप्रवाचनाः** सुखेन प्रवक्तुं स्तोतुं शक्याः । **उत** अपि च **देवपुत्रे** देवाः सर्वे पुत्रस्थानीया ययोस्ते **ऋतावृधा** ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यौ **देवी** देवनादिगुणयुक्ते द्यावापृथिव्यौ अस्मान् रक्षताम् । अन्यत् समानम् ।

देवी । 'वा चन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ऋतावृधा । वृधेरन्तर्भावितण्यर्थात् क्विप् । 'सुपां सुलुक्' इति विभक्तेः आकारः ।। ३ ।।

**सिद्धाञ्जनम्– नः** अस्मान् **पितरः** पूर्वे ऋषयः **अवन्तु** रक्षन्तु । कीदृशाः? **सुप्रवाचनाः** सुखेन प्रवक्तुं शक्याः । **उत** अपि च **देवपुत्रे** देवाः पुत्राः ययोस्ते **ऋतावृधा** ऋतस्य वर्धयित्र्यौ **देवी** देव्यौ, द्यावापृथिव्यौ इति सायणः, तर्हि, ऊर्ध्वा मनोमयत्वं प्राप्ता चित् द्यौः, अधरा अन्नमयत्वस्य धारयित्री स्थूला चित् पृथिवी, अस्मान् रक्षताम् उभयोः सङ्गतयोः पुत्रस्थानीया देवाः यजमाने प्रादुर्भवन्ति । रथं नेति पूर्ववत् ।

देवी–देव्यौ, वा छन्दसीति पूर्वसवर्णदीर्घत्वम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।। ४ ।।**
**नराशंसम् । वाजिनम् । वाजयन् । इह । क्षयत्ऽवीरम् । पूषणम् । सुम्नैः । ईमहे । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ।।**

**स्कन्द– नराशंसम्** नराशंसोऽग्निर्यज्ञो वा तम्, **वाजिनम्** हविर्लक्षणेन स्तोतृभ्यो देयेन वा अन्नेन तद्वन्तम् **वाजयन्** 'वाजयति' (निघ.३,१४) इत्यर्चतिकर्मा । बहुवचनस्य स्थाने एकवचनम् । स्तुवन्तः इह कर्मणि । न च केवलं नराशंसम् । किं तर्हि । **क्षयद्वीरं पूषणम्** 'क्षि निवासगत्योः' । वीराणां निवासयिता क्षयद्वीरः । षष्ठीसमासे छान्दसः पूर्वनिपातः क्षयच्छब्दस्य । पूषा ह्यस्तं गच्छन् सर्ववीरान् स्वेस्वे स्थाने निवासयति तेनासौ क्षयद्वीर इत्युच्यते । तं क्षयद्वीरं पूषणं **सुम्नैः** 'सुम्नम्' (निघ.३,६) इति सुखनाम । सुखैर्हविर्भिः स्तोत्रैर्वा । **ईमहे** याचामहे । किम् । सामर्थ्यादभिप्रेतम् । अथवा सुम्नैरित्येषैव द्वितीयार्थे तृतीया । सुखानि याचामह इति । किञ्च **रथम् न** ।। ४ ।।

**वेङ्कटमाधव– नराशंसम्** अग्निं वयं हविष्मन्तम् अर्चयन्तः अस्मिन् कर्मणि क्षपितवीरं बलिनं पूषणं च ।। ४ ।।

**मुद्गल– नराशंसम्** नरैः शंसनीयम् **वाजिनम्** अन्नवन्तमग्निम् **वाजयन्** उपवाजयन् प्रज्वलयन् इह अस्मिन् काले स्तौमीति शेषः । तथा **क्षयद्वीरम्** अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्ते एवंरूपम् **पूषणम्** पोषकं देवम् **सुम्नैः** सुखकरैः स्तोत्रैर्हेतुभूतैः **ईमहे** याचामहे अभीष्टं प्रार्थयामहे । अन्यत् समानम् ।। ४ ।।

**सायण– नराशंसं** नरैः शंसनीयं **वाजिनम्** अन्नवन्तमग्निं **वाजयन्** उपवाजयन् प्रज्वलयन् **इह** अस्मिन् काले स्तौमीति शेषः । तथा **क्षयद्वीरम्** अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्ते एवंरूपं **पूषणं** पोषकं देवं **सुम्नैः** सुखकरैः स्तोत्रैर्हेतुभूतैः **ईमहे** याचामहे अभीष्टं प्रार्थयामहे ।

नराशंसम् । 'उभे वनस्पत्यादिषु' इति युगपदुभयपदप्रकृतिस्वरत्वम् । नरशब्दः 'ऋदोरप्' इति अबन्त आद्युदात्तः । निपातनात् दीर्घः । शंसशब्दो घञन्त आद्युदात्तः । वाजयन् । 'वज व्रज गतौ' । अस्मात् णिच् । क्षयद्वीरम् । 'क्षि क्षये' । लटः शतृ । शपि प्राप्ते व्यत्ययेन शः । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वेन ङित्त्वाभावात् गुणायादेशौ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । 'अतो गुणे' इति पररूपत्वे 'एकादेश उदात्तेन' इति एकादेश उदात्तः । क्षयन्तो वीरा यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्– नराशंसम्** नरैः बलिभिः पुरुषैः शंसनीयं **वाजिनम्** समृद्धिमन्तं **वाजयन्** समर्थयन् विशेषतो ज्वलयन् इह अस्मिन् यजने स्तौमि । **क्षयद्वीरम्** क्षयन्तो वीरो यस्मिन् तमतिबलाढ्यं **पूषणम्** पोषकं देवं **सुम्नैः** सुखकरैः वचोभिः **ईमहे** याचामहे । रथं नेति पूर्ववत् ।

क्षयद्वीरम्–क्षि क्षये, लटः शतृ, शपि प्राप्ते व्यत्ययेन शः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत् ते मनुर्हितं तदीमहे ।**
**रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।। ५ ।।**
बृहस्पते । सदम् । इत् । नः । सुऽगम् । कृधि । शम् । योः । यत् । ते । मनुःऽहितम् । तत् । ईमहे । रथम् । न दुःऽगात् । वसवः । सुःदानवः । विश्वत्मात् । नः । अंहसः । निः । पिपर्तन ।। ५ ।।

**स्कन्द– बृहस्पते! सदम् इत्** सदमिति सदेत्यस्य पर्यायः । इच्छब्दोऽत्र एवार्थे । सदैव **नः** अस्माकम् **सुगम् कृधि** सुगमित्यपठितमपि सुखनाम द्रष्टव्यम् । 'अस्मभ्यमिन्द्र वरिवः सुगं कृधि' (ऋ.१,१०२,४) इति यथा । सुखं कुरु । न च केवलं सुखम् । किं तर्हि । **शम्** शमं च । कस्य । सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम् । **योः** यौतिः पृथग्भावार्थः । पृथग्भावं च । असम्बन्धं चेत्यर्थः । केन । सामर्थ्यादुत्पित्सुभिरनिष्टैः । अथवा सुखमधिगम्यत

इति सुगं सुलभमत्रोच्यते । शं योरित्येताभ्यां चास्य सम्बन्धः । स्वधिगमम् उत्पन्नरोगाद्युपशमम् उत्पित्स्वनिष्ठासम्बन्धं च नः कुर्वित्यर्थः । **यत् ते** तव **मनुर्हितम्** मनुष्यहितं च किञ्चित् **तत्** सर्वम् **ईमहे** वयम् । किञ्च **रथम् न** ।। ५ ।।

**वेङ्कटमाधव– बृहस्पते!** सदा एव अस्माकं सुखं कुरु । **यत्** तव **शम्** च **योः** च मनुष्यहितं **तत्** याचामहे ।। ५ ।।

**मुद्गल– बृहस्पते! सदम्** इत् सदैव **नः** अस्माकम् **सुगम्** सुखम् **कृधि** कुरु । अपि च **ते** तव स्वभूतम् **शम्** शमनीयानां रोगाणाम् उपशमनम् **योः** पृथक्कर्तव्यानां भयानां यावनं पृथक्करणम् **मनुर्हितम्** मनुना ब्रह्मणा हितं त्वय्यवस्थापितम् एवंविधं शमनं यावनं च यदस्ति **तत् ईमहे** याचामहे । अन्यत् समानम् ।। ५ ।।

**सायण– बृहस्पते सदमित्** सदैव **नः** अस्माकं **सुगम्** सुखनामैतत् । सुखं **कृधि** कुरु । अपि च **ते** तव स्वभूतं **शं** शमनीयानां रोगाणामुपशमनं **योः** पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं **मनुर्हितं** मनुना ब्रह्मणा हितं त्वय्यवस्थापितम् । यद्वा । मनुष्याणामनुकूलम् । एवंविधं शमनं यावनं च **यत्** अस्ति **तदीमहे** याचामहे ।

सुगम् । सुष्ठु गम्यतेऽस्मिन्निति सुगम् । 'सुदुरोरधिकरणे' इति गमेर्डः । शं योः इत्येतत् पदद्वयं यास्केनैवं व्याख्यातं– 'शमनं च रोगाणां यावनं च भयानाम्' (निरु.४.२१) इति । मनुर्हितम् । मनेरौणादिक उसिन्प्रत्ययः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्– बृहस्पते, सदमित्** सदैव **नः** अस्माकं, **योः शम्** देवान् कामयमानस्य शमरूपं यत् सुखं वर्तते तत् **सुगम्** सुप्रापं **कृधि** कुरु । **ते** तव स्वभूतं **मनुर्हितम्** मनुना ब्रह्मणा हितं व्यवस्थापितं **यत्** शान्तिमुखं भवति **तत् ईमहे** प्रार्थयामहे । शंयोरिति पदद्वयं 'शमनं च रोगाणां यावनं च भयानाम्' इति यास्केन व्याख्यातम् । तदनुसारेण सायणीयम् । रथं नेति पूर्ववत् ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रं॑ कुत्सो॑ वृत्र॒हणं॒ शची॒पतिं॑ का॒टे निबा॑ळ्ह॒ ऋषि॑रह्वदू॒तये॑ ।**
**रथं॒ न दु॒र्गाद् व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ।। ६ ।।**

**इन्द्र॑म् । कुत्सः॑ । वृ॒त्र॒हन॑म् । श॒ची॒ऽपति॑म् । का॒टे । निऽबा॑ळ्हः । ऋषिः॑ । अ॒ह्व॒त् । ऊ॒तये॑ । ई॒म॒हे । रथ॑म् । न दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न ।। ६ ।।**

**स्कन्द–** द्वितीयपादस्थम् अह्वत् इत्याख्यातं साकाङ्क्षत्वात् प्रथमपादेऽप्यनुषक्तव्यम् । **इन्द्रम् कुत्सः अह्वत्** आहूतवान् कुत्सनामायमृषिः । आत्मन एवायं परोक्षरूपेण प्रतिनिर्देशः । अह कुत्साख्य ऋषिराहूतवानित्यर्थः । कीदृशम् । **वृत्रहणम्** वृत्रस्य हन्तारम् । **शचीपतिम्** शच्याख्यायाः स्वभार्यायाः भर्तारम् । कर्मनाम वा शचीशब्दः (निघ.२,१) । सर्वयाग-कर्मणामधिपतिम् । न केवलं कुत्सः । किं तर्हि । **काटे निबाळ्हः ऋषिः अह्वत्** 'काटः' (निघ.३,२३) इति कूपनाम । निबाळ्हः इति निश्शब्दः प्रकर्षे । निश्शुष्कं निरुतमिति यथा । अतिशयेन बाध्यतेऽसाविति निबाळ्हः । कूपेऽतिसम्बाधत्वात् कूपस्यातिशयेन बाध्यमानस्त्रितो नामापर ऋषिराहूतवानित्यर्थः । किमर्थम् । **ऊतये** तर्पणाय पालनाय वाऽऽत्मनः । किञ्च **रथम् न** ।। ६ ।।

**वेङ्कटमाधव–** **इन्द्रम्** कूपे पतितः कूपे निबध्यमनो वा **कुत्सः** ऋषिः कर्मपतिम् शत्रूणां हन्तारं रक्षणाय **अह्वत्** ।। ६ ।।

**मुद्गल–** **काटे** कूपे **निबाळ्हः** निपातितः **कुत्सः** ऋषिः ऊतये रक्षणाय **इन्द्रम् अह्वत्** आह्वयति स्म । कीदृशम् । **वृत्रहणम्** शत्रूणां हन्तारम् **शचीपतिम्** 'शची' (निघ.२,१) इति कर्मनाम । सर्वेषां कर्मणां पालयितारम् ।। ६ ।।

**सायण–** काटः इति कूपनाम । तस्मिन् **निबाळ्हः** निपातितः **कुत्सः ऋषिः ऊतये** रक्षणाय **इन्द्रम् अह्वत्** आह्वयन्ति स्म । कीदृशम् । **वृत्रहणं** वृत्राणां शत्रूणां हन्तारं **शचीपतिम्** । शचीति कर्मनाम । सर्वेषां कर्मणां पालयितारम् । यद्वा । शच्या देव्याः भर्तारम् ।

शचीपतिम् । वनस्पत्यादिषु पाठादुभयपदप्रकृतिस्वरत्वम् । शचीशब्दः शार्ङ्गरवादिङीनन्त आद्युदात्तः । निबाळ्हः । 'बाहृ प्रयत्ने' । नीत्युपसर्गवशात् पतने वर्तते । निष्ठायाम् 'अनित्यमागमशासनम्' इति इडभावः । ढत्वधत्वादीनि । यद्वा 'क्षुब्धस्वान्त' (पा.सू.७.२.१८) इत्यादौ भृशार्थे इडभावो निपात्यते । अत्र च बाढशब्दो भृशत्वोपेते पतने सामर्थ्याद्वर्तते ।

'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अह्वत् । 'लिपिसिचिह्वश्च' (पा.सू.३.१.५३) इति लुङि च्लेरङादेशः । 'आतो लोप इटि च' इत्याकारलोपः ॥ ६ ॥

**सिद्धाञ्जनम्–** काट इति कूपनाम । **काटे** कूपे **निबाळ्हः** नितरां कृतप्रयासः, बाहृ प्रयत्ने इति धातोर्निष्पन्नः, न तु पतितः पातितो वा, एवं अस्मदुक्ततात्पर्यमुपपन्नं भवति । **ऋषिः कुत्सः**, अत एव त्रितः कुत्स एव स्यादित्यनुमानम् । **वृत्रहनम्** वृत्रस्य हन्तारम् **शचीपतिम्** शच्याः पतिं, सर्वकर्मसु शक्तं, **इन्द्रम्** देवराजं **ऊतये** रक्षायै **अह्वत्** आह्वयति स्म । अन्यत्समानम् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥**
**देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौ ॥**

**स्कन्द–** **देवैः** इन्द्रादिभिः सह **नः** अस्मान् **देवी अदितिः नि पातु** नियमेन रक्षतु । न च केवला । किं तर्हि । **देवः** च सविता वा आदित्यो वा अन्यो वा कश्चित् सर्वप्राणिनाम् **त्राता** अस्मानपि **त्रायताम् अप्रयुच्छन्** युच्छ प्रमादे । अप्रमाद्यन् । महताऽऽदरणेत्यर्थः । **तत् नः** ॥ ७ ॥

**वेङ्कटमाधव–** **देवैः** सह **देवी अदितिः** अस्मान् रक्षतु, **देवः त्राता** सविता च **त्रायताम्** अप्रमाद्यन्निति ॥ ७ ॥

**मुद्गल–** **देवी** दानादिगुणयुक्ता **अदितिः** देवमाता **देवैः** दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह **नः** अस्मान् **नि पातु** नितरां रक्षतु । **देवः** दीप्यमानः **त्राता** सर्वेषां रक्षकः सविता **अप्रयुच्छन्** अप्रमाद्यन् अस्मद्रक्षणे जागरूकः सन् **त्रायताम्** अस्मान् पालयतु । यदनेन सूक्तेनास्माभिः प्रार्थितम् **नः** अस्मदीयम् **तत्** मित्रादयः षट् देवताः **ममहन्ताम्** पूजयन्तु ॥ ७ ॥

**सायण–** **देवी** दानादिगुणयुक्ता **अदितिः** अखण्डनीया अदीना वा देवमाता **देवैः**

दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह **नः** अस्मान् **नि पातु** नितरां रक्षतु । **देवः** दीप्यमानः **त्राता** सर्वेषां रक्षकः सविता **अप्रयुच्छन्** अप्रमाद्यन् अस्मद्रक्षणे जागरूकः सन् **त्रायताम्** अस्मान् पालयतु । यदनेन सूक्तेनास्माभिः प्रार्थितं **नः** अस्मदीयं **तत्** मित्रादयः षड्देवताः **ममहन्तां** पूजयन्तु ।

त्रायताम् । 'त्रैङपालने' । भौवादिकः । अप्रयुच्छन् । 'युच्छ प्रमादे' । अस्मात् लटः शतृ । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– देवी अदितिः** देवमाता **देवैः** स्वीयैः पुत्रैः सह **नः** अस्मान् **निपातु** नितरां रक्षतु । **त्राता** सर्वस्य रक्षकः **देवः** सविता **अप्रयुच्छन्** अप्रमाद्यन्, सर्वदा अस्मद्विषये जागरूकः सन् **त्रायताम्** पालयत्वस्मान् । तन्नो मित्र इति प्राग्व्याख्यातम् ।

अप्रयुच्छन्–युच्छ प्रमादे ।। ७ ।।

**।। इति प्रथमाष्टके सप्तमाध्याये चतुर्विंशो वर्गः ।।**

## ।। अथ पञ्चविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् १०७)**

**(३ कुत्स आङ्गिरसः । विश्वे देवाः । त्रिष्टुप्)**

**यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।**
**आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ।। १ ।।**
**यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः । भवत । मृळयन्तः ।**
**आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ।। १ ।।**

**स्कन्द–** अयं मदीयः **यज्ञः** युष्माकम् **देवानाम् प्रति एति सुम्नम्** सुखं प्रति साधनतामागच्छति । इष्टैः हविर्भिः स्तुतिभिश्च सम्बन्धात् सुखकरतां प्रतिपद्यत इत्यर्थः । यत एवमतो ब्रवीमि । हे **आदित्यासः! भवत** अस्माकम् **मृळयन्तः** प्रथमासमानाधिकरणोऽयं

शतृप्रत्ययः छान्दसत्वात् । सुखयितार इत्यर्थः । अथवा भवतेति भवतिः सामर्थ्यात् प्राप्त्यर्थः । प्राप्नुत । इमं वशम् आगच्छतेत्यर्थः । किञ्च **वः** युष्माकम् **सुमतिः** शोभनानुग्रहात्मिका बुद्धिः **अर्वाची** अस्मदभिमुखी **आ ववृत्यात्** पुनःपुनरावर्तेतेत्याशास्महे । **अंहोः चित्** पापस्यापि । निकृष्टस्यापि यष्टुरित्यर्थः । **या वरिवोवित्तरा** 'वरिव' (निघ. २,१०) इति धननाम । विन्दतिर्लाभार्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । धनस्यातिशयेन लम्भयित्री । **असत्** भवति । निकृष्टायाऽपि यष्ट्रे वा धनमतिशयेन ददातीत्यर्थः ।। १ ।।

**वेङ्कटमाधव– यज्ञः देवानाम्** सुखम् **प्रति** गच्छति । आदित्याः! **भवत** सुखयन्तोऽस्मान् । युष्माकम् अस्मद्विषया **सुमतिः** पुनःपुनरावर्तताम् । अत्यन्तपापस्य अपि दरिद्रस्य **या** अत्यन्तं धनस्य लम्भयित्री भवति ।। १ ।।

**मुद्गल–** 'यज्ञो देवानम्' इति तृचं द्वितीयं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । विश्वे देवा देवता ।।

अस्मदीयः **यज्ञः देवानाम्** इन्द्रादीनाम् **सुम्नम्** सुखम् **प्रति एति** प्राप्नोतु । अपि च हे **आदित्यासः!** आदित्याः! **मृळयन्तः** अस्मान् सुखयन्तः **भवत** । तथा वः युष्माकम् **सुमतिः** शोभना मतिः भद्राऽनुग्रहपरा बुद्धिः **अर्वाची** अस्मदभिमुखी **आ ववृत्यात्** आवर्तताम् । **या** मतिः **अंहोः चित्** दारिद्र्यं प्राप्तस्यापि पुरुषस्य **वरिवोवित्तरा** 'वरिवः' इति धननाम । अतिशयेन धनस्य लम्भयित्री **असत्** भवेत्, सैषा मतिरस्मान् रक्षितुं वर्ततामित्यर्थः ।। १ ।।

**सायण–** 'यज्ञो देवानाम्' इति तृचं द्वितीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभं वैश्वदेवम् । 'यज्ञस्तृचम्' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ।

अस्यदीयः **यज्ञो देवानाम्** इन्द्रादीनां **सुम्नं** सुखं **प्रत्येति** प्राप्नोतु । अपि च हे **आदित्यासः!** आदित्याः **मृळयन्तः** अस्मान् सुखयन्तः **भवत** । तथा **वः** युष्माकं **सुमतिः** शोभना मतिः भद्रानुग्रहपरा बुद्धिः **अर्वाची** अस्मदभिमुखी **आ ववृत्यात्** आवर्तताम् । **या** मतिः **अंहोश्चित्** दारिद्र्यं प्राप्तस्यापि पुरुषस्य **वरिवोवित्तरा** । वरिवः इति धननाम । अतिशयेन धनस्य लभयित्री **असत्** भवेत् । सैषा मतिरस्मान् रक्षितुं वर्ततामित्यर्थः ।

भवत । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति आदित्यास इति पादादौ वर्तमानस्य आमन्त्रितस्य अविद्यमानवत्त्वेनास्य पादादित्वात् 'अपादादौ' इति पर्युदासात् निघाताभावः । मृळयन्तः । 'मृड सुखने' । ण्यन्तात् लटः शतृ । शप् । 'छन्दस्युभयथा' इति शतुः आर्ध-धातुकत्वेन अदुपदेशात् लसार्वधातुकानुदात्तत्वाभावे शतुः स्वरः शिष्यते । ववृत्यात् । 'वृतु वर्तने' । लिङि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपः श्लुः । अंहोः । 'अहि गतौ' । इदित्त्वात् नुम् । औणादिक उप्रत्ययः । वरिवोवित्तरा । 'विद्लृ लाभे' । 'अस्मा-दन्तर्भावितण्यर्थात् क्विप् । तत आतिशायनिक तरप् । असत् । 'अस भुवि' । लेटि अडागमः ।।

**सिद्धाञ्जनम्–** 'यज्ञो वेदानामि'ति तृचं द्वितीयं सूक्तं, कुत्सस्यार्षं त्रैष्टुभं वैश्वदेवम् ।।

**यज्ञः** अस्मदीयः **देवानाम्** इन्द्रादीनां **सुम्नम् प्रति** सुखं प्रति **एति** गच्छतु । **आदित्यासः** हे अदितिपुत्राः देवाः, **मृळयन्तः** सुखयन्तः युष्मानाश्रितान् **भवत** । तथा वः युष्माकं **सुमतिः** शोभना भक्तानुग्रहात्मिका बुद्धिः **अर्वाची** अस्मदभिमुखी सती **आववृत्यात्** आवर्तताम् । **या** सुमतिः **अंहोश्चित्** पापादपि उद्धृत्य **वरिवोवित्तरा** वरिवः परिचरणं सुखं वा, तस्यातिशयेन लम्भयित्री **असत्** भवेत् ।

ववृत्यात्–वृतु वर्तने, लिङ, व्यत्ययेन परस्मैपदं, छन्दसि शपः श्लुः । अंहोः–अहि गतौ, इदित्वान्नुम्, औणादिक उप्रत्ययः । वरिवोवित्तरा–विद्लृ लाभे । असत्–अस भुवि, लेट् ।।

## ऋक्संहिता पदपाठसहिता

**उप॑ नो दे॒वा अव॒सा ग॑मन्त्वङ्गि॑रसां॒ साम॑भिः स्तू॒यमा॑नाः ।**
**इन्द्र॑ इन्द्रि॒यैर्म॒रुतो॑ म॒रुद्भि॑रादि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ।। २ ।।**
उप॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । आङ्गि॑रसाम् । साम॑ऽभिः । स्तू॒यमा॑नाः ।
इन्द्रः॑ । इ॒न्द्रि॒यैः । म॒रुतः॑ । म॒रुत्ऽभिः॑ । आ॒दि॒त्यैः । नः॒ । अदि॑तिः । शर्म॑ । य॒ंस॒त् ।।

**स्कन्द– नः** अस्मान् **देवाः** इन्द्रादयः **अवसा** पालनेन तर्पणेन वा । तर्पणार्थं पालनार्थं वेत्यर्थः । **उप आ गमन्तु** उपागच्छन्तु । **अङ्गिरसाम् सामभिः स्तूयमानाः** अङ्गिरसामिति 'अत्रिभृगुकुत्सवरिष्ठ गोतमाङ्गिरोभ्यश्च' (पा.२,४,६५) इत्येवं बहुषु लुप्तप्रत्ययकमपत्यप्रत्ययान्तं द्रष्टव्यम् । पुत्रपौत्राद्यपेक्षया बहुवचनम् । सामशब्दोऽपि सामसम्बन्धात् सामसादृश्याद्वा

स्तोत्रवचनः । अस्माकमङ्गिरोऽपत्यभूतानां कुत्सप्रभृतीनां स्वभूतैः सामसम्बन्धिभिः सुखकरत्वादिना सादृश्येन वा सामसदृशैरेतैः स्तूयमाना इत्यर्थः । आगत्य च **इन्द्रः इन्द्रियैः** इन्द्रजुष्टा अत्रेन्द्रियशब्देन उच्यन्ते । ये इन्द्रस्य प्रियाः देवास्तैस्सहेन्द्र इत्यर्थः । **मरुतः मरुद्भिः** मरुद्भिरिति मरुत्साहचर्यात् मरुज्जुष्टा उच्यन्ते । ये मरुतां प्रियास्तैस्सह मरुत इत्यर्थः । **आदित्यैः** च सह **नः** अस्मभ्यम् **अदितिः शर्म** गृहं वा सुखं वा **यंसत्** यच्छतु ददातु ।। २ ।।

**वेङ्कटमाधव–** उपगच्छन्तु अस्मान् **देवाः** रक्षणेन सह **अङ्गिरसाम् सामभिः स्तूयमानाः** । **इन्द्रः** बलैः, **मरुतः** च प्राणैः, **आदित्यः** च **अदितिः** अस्मभ्यं सुखं यच्छतु ।। २ ।।

**मुद्गल–** **देवाः** दानादिगुणयुक्ताः सर्वे देवाः **अवसा** रक्षणेन युक्ताः **नः** अस्मान् स्तोतॄन् **उप आ गमन्तु** उपागच्छन्तु प्राप्नुवन्तु । कथम्भूताः । **अङ्गिरसाम्** एतत्संज्ञकानाम् ऋषीणां सम्बन्धिभिः **सामभिः** प्रगीतैः मन्त्रैः **स्तूयमानाः** । अपि च **इन्द्रः इन्द्रियैः** धननामैतत् (निघ.२,१०) । स्वसम्बन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मान् आगच्छतु । तथा **मरुतः** सप्तगणरूपा एकोनपञ्चाशत्सङ्ख्याकाः ईदृङ् चान्यादृङ् चेत्येवमादिनामानो देवाः **मरुद्भिः** स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैर्वायुभिः सह अस्मान् आगच्छन्तु । अपि च **अदितिः** देवमाता **आदित्यैः** स्वपुत्रैः सह **नः** अस्मान् **शर्म यंसत्** सुखं प्रयच्छतु ।। २ ।।

**सायण–** **देवाः** दानादिगुणयुक्ताः सर्वे देवाः **अवसा** रक्षणेनास्मभ्यं दातव्येनान्नेन वा युक्ताः **नः** अस्मान् स्तोतॄन् **उप आ गमन्तु** उपागच्छन्तु प्राप्नुवन्तु । कथम्भूताः । **अङ्गिरसाम्** एतत्संज्ञकानामृषीणां सम्बन्धिभिः **सामभिः** प्रगीतैर्मन्त्रैः **स्तूयमानाः** । अपि च **इन्द्रः इन्द्रियैः** । धननामैतत् । स्वसम्बन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मानागच्छतु । तथा **मरुतः** सप्तगणरूपा एकोनपञ्चाशत्सङ्ख्याकाः 'ईदृङ् चान्यादृङ् च' इत्येवमादिनामानो देवाः **मरुद्भिः** स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैः वायुभिः सहास्मानागच्छन्तु । तथा **अदितिः** अखण्डनीया अदीना वा देवमाता **आदित्यैः** स्वकीयैः पुत्रैः सह **नः** अस्मभ्यं **शर्म** सुखं **यंसत्** यच्छतु ।

गमन्तु । लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति झेः आर्धधातुकत्वेन ङित्त्वाभावात् 'गमहन' इत्यादिना उपधालोपाभावः । यंसत् । 'यम उपरमे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् ।। २ ।।

**सिद्धाञ्जनम्**– **देवाः** सर्वेऽपि **अवसा** रक्षणेन युक्ताः **नः** अस्मान् **उप आगमन्तु** उपगच्छन्तु । कीदृशाः? **अङ्गिरसाम्** प्रसिद्धानां ऋषीणां **सामभिः** मन्त्रगानैः **स्तूयमानाः** । अपि च **इन्द्रः** देवराजः **इन्द्रियैः** इन्द्रलिङ्गैः स्वीयैर्बलैः युक्तः अस्मान् प्राप्नोतु तथा **मरुतः** इन्द्रभ्रातरः **मरुद्भिः** मरुद्गणैः सह अस्मान् प्राप्नुवन्तु । अथ **अदितिः** देवानां माता अखण्डस्वरूपा **आदित्यैः** स्वकीयपुत्रैः सह **नः** अस्मभ्यं **शर्म** सुखं **यंसत्** यच्छतु ।

गमन्तु–गच्छन्तु, छन्दसि उभयथा । यंसत्–यम उपरमे, लेट्, सिप् बहुलमिति सिप् ।।

## ऋक्संहिता पदपाठसहिता

**तन्न इन्द्रस्तद् वरुणस्तदग्निस्तदर्यमा तत् सविता चनो धात् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। ३ ।।**
**तत् । नः । इन्द्रः । तत् । वरुणः । तत् । अग्निः । तत् अर्यमा । तत् । सविता । चनः । धात् । तत् । नः । मित्रः । वरुणः । ममन्हताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ।। ३ ।।**

**स्कन्द**– तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यद्वयं प्रार्थयामहे पुष्टिकरम् उत्कृष्टं वा **तत् नः** अस्मभ्यम् **इन्द्रः**, **तत्** एव **वरुणः**, **तत्** एव **अग्निः**, **तत्** एव **अर्यमा**, **तत्** एव **सविता चनः** चन इत्यन्नाम (या.६,१६) । 'जारयायि, अग्रिया, चनः' (निघ.४,३) इत्यैकपदिके पठितम् । अन्नम् **धात्** ददातु । **तत् नः** ।। ३ ।।

**वेङ्कटमाधव**– तत् अस्मदभिलषितम् अस्माकम् इन्द्रः प्रयच्छतु अन्नम् । एवम् इतरे चेति ।। ३ ।।

**मुद्गल**– यदस्माभिः प्रार्थ्यमानमन्नमस्ति **तत्** तादृशम् **चनः** अन्नम् **नः** अस्मभ्यम् **इन्द्रः धात्** दधातु ददातु । एवम् **तत् वरुणः** इत्यादावपि योज्यम् । **तत्** इदम् इन्द्रादिभिर्दत्तम् अस्मदीयम् अन्नं मित्रादयः **ममहन्ताम्** पूजयन्तु ।। ३ ।।

**सायण**– यदस्माभिः प्रार्थ्यमानमन्नमस्ति । चन इत्यन्ननाम । **तत्** तादृशं **चनः** अन्नं **नः** अस्मभ्यम् **इन्द्रः धात्** दधातु ददातुः । एवं **तद्वरुणः** इत्यादावपि योज्यम् । **तत्** इदमिन्द्रादिभिर्दत्तमस्मदीयमन्नं मित्रादयः **ममहन्तां** पूजयन्तु पालयन्त्वित्यर्थः ।

चनः । 'चायृ पूजानिशामनयोः' । 'चायेरन्ने ह्रस्वश्च' (उ.सू.४.६३९) इति असुन् नुडागमश्च धातोर्ह्रस्वत्वं च । वलि लोपः । नित्त्वादाद्युदात्तत्वम् । धात् । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङ् । 'गातिस्था' इति सिचो लुक् ।। ३ ।।

**सिद्धाञ्जनम्–** यदस्माभिः प्रार्थ्यते, **तत्** तादृशं **चनः** सुखं संमदं वा **नः** अस्मभ्यं **इन्द्रः** देवः **धात्** दधातु । **तत् वरुणः** दधातु । **तत् अग्निः** दधातु । **तत् अर्यमा** दधातु । **तत् सविता** परमो देवः दधातु । तन्नो मित्रो वरुण इत्यादि व्याख्यातम् ।

धात्–छन्दसि प्रार्थनायां लुङः ।।

।। इति प्रथमाष्टके सप्तमाध्याये पञ्चविंशो वर्गः ।।

## ।। अथ षड्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् १०८)

(१३ कुत्स आङ्गिरसः । इन्द्राग्नी । त्रिष्टुप्)

**य इन्द्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे ।**
**तेन यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ।। १ ।।**
यः । इन्द्राग्नी इति । चित्रऽतमः । रथः । वाम् । अभि । विश्वानि । भुवनानि । चष्टे ।
तेन । आ । यातम् । सऽरथम् । तस्थिऽवांसा । अथ । सोमस्य । पिबतम् । सुतस्य ।।

**स्कन्द–** 'द्वे ऐन्द्राग्ने' । द्वे एते सूक्ते इन्द्राग्निदेवत्ये । **यः** हे **इन्द्राग्नी! चित्रतमः** अतिशयेन पूज्यः विचित्ररूपो वा **रथः वाम्** युवयोः **विश्वानि भुवनानि** भुवनशब्दोऽत्र लोकवचनः । सर्वान् लोकान् **अभि चष्टे** अभिपश्यति । अगतस्य दर्शनासम्भवात् दर्शनेनात्र **तद्धेतुभूतं** गमनं लक्ष्यते । सर्वान् लोकान् गच्छति । न कचिदस्य गतिः प्रतिहन्यत इत्यर्थः । अथवा भुवनशब्दोऽपि भूतवचन एव सामर्थ्याच्च यष्टृभूतेषु वर्तते नान्येषु । यागकारीणि यानि भूतानि सानि सर्वाणि अभिपश्यति । सर्वेषां यज्ञेषु गच्छतीत्यर्थः । **तेन आ यातम्** अस्मान् प्रत्यागच्छतम् । **सरथम् तस्थिवांसा** समानं स्थमधिष्ठितवन्तौ । एकस्मिन्नेव युगपदारूढावित्यर्थः ।

**अथ** अनन्तरं च **सोमस्य पिबतम् सुतस्य** द्वितीयार्थे वा षष्ठी । षष्ठीश्रुतेर्वैकदेशमिति शेषः । सोममभिषुतं सोमस्य वाभिषुतस्यैकदेशं स्वांशलक्षणं पिबतमित्यर्थः ।। १ ।।

**वेङ्कटमाधव– यः इन्द्राग्नी!** पूज्यतमः **रथः** युवयोः सर्वाणि **भुवनानि अभि** विचष्टे, **तेन** रथेन आगच्छतम् एकरथम् अधितिष्ठन्तौ । **अथ** सोमम् **पिबतम्** सुतमिति ।। १ ।।

मुद्गल.– 'य इन्द्राग्नी' इति त्रयोदशर्चं तृतीयं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । इन्द्राग्नी देवता ।।

हे **इन्द्राग्नी! चित्रतमः** अतिशयेन चायनीयः **वाम्** युवयोः सम्बन्धी **यः रथः विश्वानि भुवनानि** भूतजातानि **अभि चष्टे** आभिमुख्येन पश्यति । सुवर्णमयत्वात् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगत् भासयतीत्यर्थः । **तेन** रथेन **आ यातम्** अस्मद्यज्ञम् आगच्छतम् । तत्किं पर्यायेण । नेत्याह । **सरथम्** समानम् एकं रथम् **तस्थिवांसा** युगपदेन स्थितवन्तौ युवाम् आगच्छतम् । न पर्यायेणेत्यर्थः । **अथ** आगमनानन्तरम् **सुतस्य** ऋत्विग्भिरभिषुतम् **सोमस्य** सोमं स्वांशलक्षणम् **पिबतम्** ।। १ ।।

**सायण–** 'य इन्द्राग्नी' इति त्रयोदशर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभमैन्द्राग्नम् । तथा चानुक्रान्तं– 'य इन्द्राग्नी सप्तोनैन्द्राग्नं तु' इति । विनियोगो लैङ्गिकः ।

हे **इन्द्राग्नी! चित्रतमः** अतिशयेन चायनीयः **वां** युवयोः सम्बन्धी **यः रथः विश्वानि भुवनानि** भूतजातानि **अभि चष्टे** आभिमुख्येन पश्यति । सुवर्णमयत्वात् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगद्भासयतीत्यर्थः । **तेन** रथेन **आ यातम्** अस्मद्यज्ञमागच्छतम् । तत्किं पर्यायेण । नेत्याह । **सरथं** समानमेकं रथं **तस्थिवांसा** युगपदेव आस्थितवन्तौ युवामागच्छतं न पर्यायेणेत्यर्थः । **अथ** आगमनानन्तरं **सुतस्य** ऋत्विग्भिरभिषुतं **सोमस्य** सोमं स्वांशलक्षणं तदेकदेशं वा **पिबतम्** ।

वाम् । 'युष्मदस्मदोः षष्ठीचतुर्थी' (पा.सू.८.१.२०) इत्यादिना षष्ठीद्विवचनस्य वामादेशः । सर्वानुदात्तत्वम् । चष्टे । 'चक्षिङ् व्यक्तायां वाचि' । अत्र प्रकाशनार्थः । अदादित्वात् शपो लुक् । 'स्कोः संयोगाद्योः' इति कलोपः । 'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः

शिष्यते । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । सरथम् । समानश्चासौ रथश्च सरथः । 'समानस्य च्छन्दसि' इति सभावः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । तस्थिवांसा । 'ष्ठा गतिनिवृत्तौ' । लिटः क्वसुः । द्विर्वचनम् । 'शर्पूर्वाः खयः' । 'वस्वेकाजाद्घसाम्' इति इडागमः । 'आतो लोप इटि च' इति आकारलोपः । 'सुपां सुलुक्' इति आकारः । सोमस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ १ ॥

**सिद्धाञ्जनम्**– 'य इन्द्राग्नी' इति त्रयोदशर्चं तृतीयं सूक्तं, कुत्सस्यार्षं त्रैष्टुभमैन्द्राग्नम् ॥

हे **इन्द्राग्नी!** हे देवौ, **चित्रतमः** अतिशयेन चित्रः अद्भुतः **यः वाम्** युवयोः सम्बन्धी **रथः विश्वानि भुवनानि** सर्वाणि भूतजातानि **अभिचष्टे** आभिमुख्येन पश्यति, **तेन** रथेन **आयातम्** आगच्छतम् । कीदृशौ सन्तौ? **सरथम्** समानं एकं रथं **तस्थिवांसा** अधिष्ठितवन्तौ, आयातम् । **अथ** तथा आगमनात्परं **सुतस्य** अभिषुतस्य **सोमस्य** एकदेशं स्वं भागं **पिबतम्** ।

तस्थिवांसा–तिष्ठतेः लिटः क्वसुः द्विर्वचनं, सुपां सुलुगित्याकारः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**यावदि॒दं भुव॑नं॒ विश्व॒मस्त्यु॑रु॒व्यचा॑ वरि॒मता॑ गभी॒रम् ।**
**तावाँ॑ अ॒यं पात॑वे॒ सोमो॑ अ॒स्त्वर॑मिन्द्राग्नी॒ मन॑से यु॒वभ्या॑म् ॥ २ ॥**
याव॑त् । इ॒दम् । भुव॑नम् । विश्व॑म् । अस्ति॑ । उ॒रु॒ऽव्यचा॑ । व॒रि॒मता॑ । ग॒भी॒रम् ।
**ताव॑न् । अ॒यम् । पात॑वे । सोम॑ः । अ॒स्तु॒ । अर॑म् । इ॒न्द्रा॒ग्नी॒ इति॑ । मन॑से । यु॒वऽभ्या॑म् ॥**

**स्कन्द– यावत् इदम् भुवनम्** उदकनामैतत् (नि.१,१२) । उदकम् **विश्वम्** सर्वमेकीभूतं सत् **अस्ति** भवति । कीदृशम् । उच्यते । **उरुव्यचा वरिमता** उरु पृथु विस्तीर्णमिति पर्यायाः । व्यच इति व्याप्तिनाम शाकपूणिना पठितम् । उरु व्यचो यस्य स उरुव्यचाः । तृतीयैकवचनस्य डादेशः । वरिमतेत्यपि उरुशब्दस्य 'प्रियस्थिरस्फिरोरुबहुल' (पा.६,४,१५७) इत्येवम् इमनिच्प्रत्यये वरादेशः । इमनिचश्च 'मघवा बहुलम्' इति बाहुलकात् तकारान्तादेशः । उभयत्र चेत्थम्भूतलक्षणा तृतीया । विस्तीर्णव्याप्तिना पृथुत्वेन सम्बद्धम् इत्यर्थः । **गभीरम्** दुरवगाहम् । अगाधं चेत्यर्थः । **तावान् अयम् पातवे** पातुम् **सोमः अस्तु** इत्याशास्महे । **अरम्** अलम् ।

पर्याप्त इत्यर्थः । हे **इन्द्राग्नी!** किमर्थं पातुम् । उच्यते । **मनसे** मनश्शब्देनात्र तत्प्रभवत्वात् प्रीतिरुच्यते । तादर्थ्ये चतुर्थी । प्रीत्यर्थमित्यर्थः । केन पातुम् । उच्यते । **युवभ्याम्** ।।

**वेङ्कटमाधव– यावत् इदम् भुवनम्** सर्वं भवति बहुव्याप्तिकेन पृथुत्वेन **गभीरम्** यावत्परिमाणमिदं दृश्यमानं त्रैलोक्यात्मकं भुवनमस्ति सकलम् । **अयम् सोमः तावान् अस्तु** युवयोः पानाय । यथा युवयोः **मनसे** पर्याप्तं भवति । 'एतस्य यजुषो वीर्येण यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते न हि तदस्ति । यत्तावदेव स्यात् । यावत् जुहोति' (तै.ब्रा.३,२,६,४) इति तैत्तिरीयकम्, 'अपि गिरिमात्रं वर्धतेऽथोऽपरिमितम् एव च' इति वाजसनेयकम् (काश.२,८,२,६) इति ।। २ ।।

**मुद्गल– विश्वम्** सर्वम् **इदम् भुवनम्** जगत् **यावत् अस्ति** यावत्प्रमाणं भवति । कीदृशम् । **उरुव्यचा** विस्तीर्णव्यापनं सर्वव्यापकमित्यर्थः । तथा **वरिमता** वरिम्णा उरुत्वेनात्मीयेन गौरवेण **गभीरम्** गाम्भीर्योपेतं हे **इन्द्राग्नी! पातवे** युवाभ्याम् पातुम् **अयम् सोमः तावान् अस्तु** तावत्प्रमाणो भवतु । तथा मनसे युवयोरन्तःकरणाय **अरम्** सोमः पर्याप्तो भवतु ।। २ ।।

**सायण– विश्वं** सर्वम् **इदं भुवनं** जगत् **यावत् अस्ति** यावत्प्रमाणं भवति । कीदृशम् । **उरुव्यचा** विस्तीर्णव्यापनम् । सर्वव्यापकमित्यर्थः । तथा **वरिमता** वरिम्णा उरुत्वेनात्मीयेन गौरवेण **गभीरं** गाम्भीर्योपेतम् । हे **इन्द्राग्नी! पातवे** युवाभ्यां पातुं **सोमः तावान् अस्तु** तावत्प्रमाणो भवतु । तथा **मनसे** युवयोरन्तःकरणाय **अरं** स सोमः पर्याप्तो भवतु ।

उरुव्यचा । 'व्यच व्याजीकरणे' । असुन् । 'व्यचेः कुटादित्वमनसि' इति वचनात् ङित्त्वाभावेन सम्प्रसारणाभावः । 'स्वमोर्नपुंसकात्' (पा.सू.७.१.२३) इति सोर्लुकि प्राप्ते 'सुपां सुलुक्' इति व्यत्ययेन डादेशः । वरिमताः । 'पृथ्वादिभ्य इमानिज्वा' इति उरुशब्दात् तस्य भावः इत्यर्थे इमनिच् । 'प्रियस्थिर' इत्यादिना उरुशब्दस्य वरादेशः । पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी । 'सुपां सुलुक्' इति तृतीया लुक् । यद्वा । तृतीयायाश्छान्दसः तुडागमः । तावान् । तत्परिमाणमस्य । 'यत्तदेतेभ्यः परिमाणे वतुप्' (पा.सू.५.२.३९) । 'आ सर्वनाम्नः' इति आत्वम् । पातवे । 'पा पाने' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । अरम् । 'वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम्' (पा.म.८.२.१८) इति लत्वविकल्पः । युवभ्याम् । व्यत्ययेन आत्वाभावे 'शेषे लोपः' इति दकारलोपः ।। २ ।।

**सिद्धाञ्जनम्–** **विश्वम् इदम् भुवनम्** सर्वमिदं जगत् **उरुव्यचा** उरु विस्तीर्णं व्यचः व्यापनं यस्य तेन **वरिमता** वरिम्णा उरुत्वेन स्वात्मीयेन महत्त्वेन **गभीरम्** गाम्भीर्योपेतं सत् **यावत् अस्ति** यावत्प्रमाणं भवति, हे **इन्द्राग्नी, युवभ्याम् पातवे** युवाभ्यां पातुं **अयम् सोमः** अस्माभिर्युष्मदर्थमभिषुतः **तावानस्तु** तावत्प्रमाणो भवतु । तथा **मनसे अरम् अस्तु** अलं पर्याप्तो भवतु ।

वरिमता–अरुशब्दात् भावे इमनिच्, उरुशब्दस्य वरादेशः, तृतीयायश्छान्दसस्तुडागमः ।।

## ऋक्संहिता पदपाठसहिता

**चक्राथे हि सध्र्य१ङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः ।**
**ताविन्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ।। ३ ।।**
**चक्राथे इति । हि । सध्र्यक् । नाम । भद्रम् । सध्रीचीना । वृत्रऽहनौ । उत । स्थः ।**
**तौ । इन्द्राग्नी इति । सध्र्यञ्चा । निऽसद्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ।।**

**स्कन्द–** हिशब्दोऽत्र पदपूरणः । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहर्तव्यः । यौ **चक्राथे** वृत्रहननहविर्नयनादिना स्वेन व्यापारेण कुरुथः कृतवन्तौ वा । **सध्र्यक्** सहगामि । सर्वत्र युगपत् यातीत्यर्थः । **नाम** उदकनामैतत् (निघ.१,१२) । वृष्टिलक्षणमुदकम् । **भद्रम्** कल्याणम् । **सध्रीचीना वृत्रहणौ!** **उत** उतशब्दश्चार्थे सध्रीचीनावित्येतेन सम्बन्धयितव्यः । सहगामिनौ च यज्ञान् प्रति हे वृत्रहणौ! वृत्रस्य हन्तारौ! **स्थः** भवथः । **तौ** हे **इन्द्राग्नी! सध्र्यञ्चा** सहगामिनौ । सहागत्येत्यर्थः । **निषद्य** अस्मदीये बर्हिष्युपविश्य । **वृष्णः सोमस्य** वृष्टिहेतुत्वात् सोमो वृषोच्यते । द्वितीयार्थे वा षष्ठी । षष्ठीश्रुतेर्वैकदेशमिति शेषः । वर्षितारं सोमं वर्षितुर्वा सोमस्यैकदेशं स्वांशलक्षणम् । हे **वृषणा! आ वृषेथाम्** आसिञ्चतं स्वे उदरे । पिबतमित्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** इन्द्रः अग्निः इति एतत् नामद्वयं कल्याणं सहाञ्चनं कृतवन्तावैक्यात् । तथा युवां सहागमनौ च भवथः उपद्रवाणां हन्तारौ! **तौ** इदानीम् अस्मद्वेद्यां सङ्गतौ सन्तौ उपविश्य वर्षितारं सोमं वर्षितारौ! आसिञ्चतं जठरे इति ।। ३ ।।

**मुद्गल–** हे **इन्द्राग्नी! भद्रम्** कल्याणं नाम स्वकीयं नामधेयम् **सध्र्यक्** सहगतम् इन्द्राग्नीइत्येवं संयुक्तम् **चक्राथे** युवां कृतवन्तौ । **उत** अपि च हे **वृत्रहणौ!** वृत्रस्यासुरस्य हन्तारौ **इन्द्राग्नी!**

**सध्रीचीना** सहाञ्चन्तौ वृत्रवधार्यं सङ्गतौ **स्थः** भवथः । **हि** यस्मादेवं तस्मात् हे **वृषणा!** कामानां वर्षितारौ! इन्द्राग्नी! **तौ** युवाम् **सध्र्यञ्चा** सहितावेव सन्तौ **निषद्य** वेद्यामुपविश्य **वृष्णः** सेक्तुः **सोमस्य** आत्मीयं भागम् **आ वृषेथाम्** स्वकीये उदरे आसिञ्चेथाम् ।। ३ ।।

**सायण–** हे **इन्द्राग्नी! भद्रं** कल्याणं **नाम** स्वकीयं नामधेयं **सध्र्यक्** सहगतमिन्द्राग्नी इत्येवं संयुक्तं **चक्राथे** युवां कृतवन्तौ । **उत** अपि च हे **वृत्रहणौ!** वृत्रस्यासुरस्य हन्ताराविन्द्राग्नी **सध्रीचीना** सहाञ्चन्तौ वृत्रवधार्थं सङ्गतौ **स्थः** भवथः । **हि** यस्मादेवं तस्मात् हे **वृषणा!** कामानां वर्षिताराविन्द्राग्नी **तौ** युवां **सध्र्यञ्चौ** सहितावेव सन्तौ **निषद्य** वेद्यामुपविश्य **वृष्णः** सेक्तुः **सोमस्य** आत्मीयं भागम् **आ वृषेथां** स्वकीये उदरे आसिञ्चेथाम् ।

सध्र्यक् । सहशब्दोपपदादञ्चतेः 'ऋत्विक्' इत्यादिना किन् । 'अनिदिताम्' इति नलोपः । 'सहस्य सध्रिः' । 'अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्' (पा.सू.६.३.९५.१) इति वचनात् सध्र्यादेशोऽन्तोदात्तः । यणादेशे 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । सध्रीचीना । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वार्थे स्वः । 'सुपां सुलुक्' इति विभक्तेः आजादेशः । वृत्रहणौ । संहितायाम् आवादेशे 'लोपः शाकल्यस्य' इति वलोपः । वृषेथाम् । 'वृष सेचने' । व्यत्ययेन शः आत्मनेपदं च ।। ३ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! भद्रम्** शुभं उत्कृष्टं **नाम** स्वकीयं नामधेयं **सध्र्यक्** सहगतं संयुक्तं **चक्राये** युवां कृतवन्तौ । अग्निः पृथिव्यां इन्द्रो दिवि, एवं द्यावापृथिव्योरूर्जस्वलावध्यक्षौ नित्यसंयुक्तौ भवतः । अग्निरितो देवानाह्वातुं समर्थः, आहूतानां मुख्यो राजा इन्द्रः । **उत** अति च हे **वृत्रहनौ!** उभौ संयुक्तौ असुरं वृत्रं हतः, अत एवं सम्बोधनम् । **सध्रीचीना** सह गच्छन्तौ, **स्थः** वृत्रवधाय संयुक्तौ भवथः । **हि** यस्मादेवं तस्मात् हे **वृषणा!** वर्षितारौ इन्द्राग्नी, **तौ** युवां **सध्र्यञ्चा** सहितावेव सन्तौ **निषद्य** निषण्णौ उपविष्टौ भूत्वा **वृष्णः सोमस्य** सेक्तुः सोमस्य स्वीयं भागं **आवृषेथाम्** आसिञ्चेयां आत्मीयोदरे । सर्वे गताः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा ।**
**तीव्रैः सोमैः परिषिक्तेभिरर्वागेन्द्राग्नी सौमनसाय यातम् ।। ४ ।।**

**समऽइद्धेषु । अग्निषु । आनजाना । यतऽस्रुचा । बर्हिः । ऊँ इति । तिस्तिराणा । तीव्रैः । सोमैः । परिऽसिक्तेभिः । अर्वाक् । आ । इन्द्राग्नी इति । सौमनसाय । यातम् ।।**

**स्कन्द–** मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । **आनजाना** इत्यादीनि च नामन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्य एकवाक्यता नेया । यौ युवाम् **समिद्धेषु अग्निषु** आहवनीयादिषु आनजाना अञ्जेर्गत्यर्थस्येदं रूपम् । आगतवन्तौ । यौ च **यतस्रुचा** सर्वैः यजमानैरुद्यताः स्रुचो ययोरर्थाय तौ यतस्रुचौ । **बर्हिः उ तिस्तिराणा** उकारः पदपूरणः चार्थे वा । तिस्तिराणा इत्यपि ऋत्विक्कर्तृकस्यापि स्तरणस्य हेतुभूतत्वाद् इन्द्राग्नी एव कर्तारावुच्येते । बर्हिः स्तीर्णवन्तौ, तौ **तीव्रैः सोमैः परिषिक्तेभिः** तीव्रशब्दः कटुकवचनः तिक्तवचनो वा । परिषिक्तशब्दोऽपि दशापवित्रे सर्वतः सिक्तत्वात् दशापवित्रपरिपूतवचनः । कटुकरसैस्तिक्तरसैर्वा सोमैर्दशापवित्रेण परिपूतैः । तीव्रादिगुणान् सोमान् पातुमित्यर्थः । **अर्वाक्** क्रियाविशेषणमेतत् । अस्मदभिमुखम् । हे **इन्द्राग्नी!** **सौमनसाय** आत्मनोऽस्माकं वा प्रीत्यर्थमित्यर्थः । **आ यातम्** आगच्छतम् ।। ४ ।।

**वेङ्कटमाधव– समिद्धेषु अग्निषु** व्याप्रियमाणौ अध्वर्यू **बर्हिः** च आसनाय भवतोः तरन्तौ । तीव्रान् सोमान् परितः पात्रेषु सिक्तान् पातुमस्माकं सौमनस्यं च प्रकाशयितुम् **इन्द्राग्नी!** अभिमुखम् आगच्छतम् ।। ४ ।।

**मुद्गल– अग्निषु** गार्हपत्यादिषु अन्वाधानादिना **समिद्धेषु** सम्यगिद्धेषु दीप्तेषु सत्सु **आनजाना** हवींषि आज्येनाञ्जन्तो **यतस्रुचा** तदनन्तरं यागार्थं गृहीतस्रुचौ **बर्हिः** उ बर्हिरपि वेद्याम् **तिस्तिराणा** आस्तीर्णं कृतवन्तौ अध्वर्युप्रतिप्रस्थातारौ एवम्भूतावभूताम् । तथा सति हे **इन्द्राग्नी!** **तीव्रैः** क्षिप्रं मदकरैः **परिषिक्तेभिः** परितः सर्वैर्ग्रहचमसादिष्वासिक्तैः **सोमैः** हेतुभूतैः **अर्वाक्** अस्मदभिमुखम् **आ यातम्** आगच्छतम् । किमर्थम् । **सौमनसाय** सौमनस्याय, अस्माकम् अनुग्रहायेत्यर्थः ।। ४ ।।

**सायण– अग्निषु** गार्हपत्यादिषु अन्वाधानादिना **समिद्धेषु** सम्यगिद्धेषु दीप्तेषु सत्सु **आनजाना** हवींष्या ज्येनाञ्जन्तौ **यतस्रुचा** तदनन्तरं यागार्थं गृहीतस्रुचौ **बर्हिरु** वेद्यां बर्हिरपि **तिस्तिराणा** आस्तीर्णं कृतवन्तौ अध्वर्युप्रतिप्रस्थातारौ एवम्भूतावभूताम् । तथा सति हे इन्द्राग्नी! **तीव्रैः** क्षिप्रं मदकरैः **परिषिक्तेभिः** परितः सर्वेषु ग्रहचमसादिष्वासिक्तैः **सोमैः** हेतुभूतैः **अर्वाक्**

अस्मदभिमुखम् **आ यातम्** आगच्छतम् । किमर्थम् । **सौमनसाय** सौमनस्याय अस्माकमनुग्रहायेत्यर्थः ।

आनजाना । 'अञ्जू व्यक्तिम्रक्षणगतिषु' । लिटः कानच् । 'अनिदिताम्' इति नलोपः । द्विर्भावे 'अत आदेः' इति अभ्यासस्य दीर्घः । 'तस्मान्नुड्द्विहलः' इति अद्विहलोऽपि व्यत्ययेन नुट् । तिस्तिराणा । 'स्तृञ् आच्छादने' । पूर्ववत् कानच् । 'ऋत इद्धातोः' इति इत्वम् । द्विर्वचने 'शर्पूर्वाः खयः' । 'सुपां सुलुक्' इति सर्वत्र विभक्तेः आकारः । चित्त्वादन्तोदात्तत्वम् ॥

**सिद्धाञ्जनम्–** अस्यां कर्मपरार्थस्यावकाशं विस्पष्टं दधाति मन्त्रवर्णः । तस्मात् ''यतस्रुचा'' इत्यादीनां सङ्केतत्वं रहस्यार्थे बोद्धव्यम् । **समिद्धेषु** प्रज्वलितेषु **अग्निषु** पृथिव्यादिस्तानगतेषु ऊर्ध्वेषु सोपानेषु गच्छन्नग्निः बहुत्वं दधाति, तस्माद्बहुवचनम् । तादृशेषु अग्निविशेषेषु **आनजाना** अञ्जन्तौ, आत्मानं व्यक्तं कुर्वन्तौ **यतस्रुचा** यता उद्यता मुहुर्मुहुरुद्गता उत्कांक्षा ययोस्तौ, ऊर्ध्वं यजमानं गमयितुं तेन सह स्वयं गन्तुमभिलषन्तौ, **बर्हिः** उ वेद्यां यजमानस्यान्तरासने **तिस्तिराणा** आस्तीर्णं कृतवन्तौ, ऊर्ध्वगमने, स्वीयमासनं यजमानस्यान्तः तावेव देवौ सिद्धं कुरुतः, तथाविधा यजमानेऽनुग्रहबुद्धिः । तथाभूतौ हे **इन्द्राग्नी! तीव्रैः** क्षिप्रं हर्षप्रदैः **परिषिक्तेभिः** परितः यजमानस्याधारभूतेषु सर्वेष्वङ्गेषु सिक्तैः **सोमैः** हेतुभूतैः **अर्वाक्** अस्मदभिमुखं **सौमनसाय** सौमनस्याय अनुग्रहाय **आयातम्** आगच्छतम् ।

आनजाना–अञ्जू व्यक्तिम्रक्षणादिषु, लिटः कानच्, व्यत्ययेन नुट् । तिस्तिराणा–स्तृञ् आच्छादने, पूर्ववत् कानच्, विभक्तेराकारः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**यानी॑न्द्राग्नी च॒क्रथु॑र्वी॒र्या॑णि॒ यानि॑ रू॒पाण्यु॒त वृष्ण्या॑नि ।**
**या वां॑ प्र॒त्नानि॑ स॒ख्या शि॒वानि॒ तेभिः॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ५ ॥**

यानि॑ । इ॒न्द्रा॒ग्नी॒ इति॑ । च॒क्रथुः॑ । वी॒र्या॑णि । यानि॑ । रू॒पाणि॑ । उ॒त । वृष्ण्या॑नि ।
या । वा॒म् । प्र॒त्नानि॑ । स॒ख्या । शि॒वानि॑ । तेभिः॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ॥

**स्कन्द– यानि** हे **इन्द्राग्नी! चक्रथुः वीर्याणि** वीरकर्माणि । **यानि** चातिशयवद्देवता-माहात्म्ययोगान्नानाप्रकाराण्यात्मनः **रूपाणि** । **उत वृष्ण्यानि** वृष्ण्यमित्यपठितमपि बलनाम

वृष्टिपर्यायो वा । बलानि वृष्टीर्वा । यानि च **वाम्** युवयोः **प्रत्नानि** 'प्रत्नम्' (निघ.३,२७) इति पुराणनाम । चिरन्तनान्यस्माभिः सह **सख्या** सख्यानि **शिवानि** सुखानि **तेभिः** हेताविय तृतीया । तैर्हेतुभिः । यस्मात् वीरकर्मकरणादियुक्तौ स्थः, तस्मादित्यर्थः । **सोमस्य पिबतम् सुतस्य** ।। ५ ।।

**वेङ्कटमाधव– यानि** वृत्रवधादीनि **इन्द्राग्नी!** कृतवन्तौ, यानि च नानाशरीराणि अपि च कामप्रदानि, यानि च युवयोरस्माभिः पुराणानि शिवतमानि सख्यानि । तैः सर्वैर्हेतुभिः सोमं **पिबतम्** सुतमिति ।। ५ ।।

**मुद्गल**– हे **इन्द्राग्नी! यानि वीर्याणि** वृत्रवधादिरूपाणि **चक्रथुः** कृतवन्तौ युवाम् । **यानि** च **रूपाणि** निरूप्यमाणानि गवाश्वादीनि भूतजातानि कृतवन्तौ । इन्द्राग्निभ्यां हि सर्वं जगत् सृज्यते । इन्द्रः सूर्यात्मना वृष्टिं सृजति, अग्निश्चाहुतिद्वारा वृष्ट्युत्पादकः । वृष्टेः सकाशात् सर्वे प्राणिन उत्पद्यन्ते । **उत** अपि च यानि **वृष्ण्यानि** वृष्टिप्रदानादिरूपाणि कर्माणि कृतवन्तौ । तथा **वाम्** युवयोः सम्बन्धीनि **प्रत्नानि** चिरन्तनानि **शिवानि** शोभनानि **या** यानि **सख्या** सखित्वानि सन्ति । **तेभिः** तैः सहितौ युवाम् **सुतस्य सोमस्य** अभिषुतं सोमम् **पिबतम्** ।।

**सायण–** हे **इन्द्राग्नी! यानि वीर्याणि** वृत्रवधादिरूपाणि **चक्रथुः** कृतवन्तौ युवां **यानि** च **रूपाणि** निरूप्यमाणानि गवाश्वादीनि भूतजातानि कृतवन्तौ । इन्द्राग्निभ्यां हि सर्वं जगत सृज्यते । इन्द्रः सूर्यात्मना वृष्टिं सृजत्यग्निश्चाहुतिद्वारा वृष्ट्युत्पादकः । वृष्टेः सकाशात् सर्वे प्राणिन उत्पद्यन्ते । **उत** अपि च यानि **वृष्ण्यानि** वृष्णि भवानि वृष्टिप्रदानादिरूपाणि कर्माणि कृतवन्तौ । तथा **वां** युवयोः सम्बन्धीनि **प्रत्नानि** चिरन्तनानि **शिवानि** शोभनानि **या** यानि **सख्या** सखित्वानि सन्ति । **तेभिः** तैः सर्वैः सहितौ युवां **सुतस्य** सोमस्य अभिषुतं सोमं **विबतम्** ।

सख्या । सख्युर्भावः सख्यम् । 'सख्युर्यः' इति यप्रत्ययः । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । तेभिः । 'बहुलं छन्दसि' इति भिस ऐसभावः । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः ।। ५ ।।

**सिद्धाञ्जनम्**– हे **इन्द्राग्नी! यानि वीर्याणि** असुरवधादीनि **चक्रथुः** युवां कृतवन्तौ, **यानि**

**रूपाणि** यानि च नवनवानि दिव्यानि रूपाणि यजमाने तदर्थं च कृतवन्तौ, **उत** अपि च यानि **वृष्ण्यानि** वृष्णि भवानि, सेचनसामर्थ्योद्भवानि भक्तेषु यजमानेषु फलितानि दिव्यपुष्टिप्रकाशादीनि, **या** यानि **प्रत्नानि** चिरन्तनानि **वाम्** युवयोः **शिवानि** शुभप्रदानि सख्या सख्यानि च भवन्ति, **तेभिः** तैः सर्वैः युक्तौ सन्तौ **सुतस्य सोमस्य पिबतम्** अभिषुतं सोमं यथाभागं पिबतम् ।। ५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये षड्विंशो वर्गः ।।

## ।। अथ सप्तविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**यदब्रवं प्रथमं वां वृणानो३ऽयं सोमो असुरैर्नो विहव्यः ।**
**तां सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य ।। ६ ।।**

**यत् । अब्रवम् । प्रथमम् । वाम् । वृणानः । अयम् । सोमः । असुरैः । नः । विऽहव्यः । ताम् । सत्याम् । श्रद्धाम् । अभि । आ हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ।। ६ ।।**

**स्कन्द–** **यत्** इति सप्तम्या एकवचनस्य लुक् । यस्यां कर्मसन्ततौ । **अब्रवम्** ब्रवीम्यहम् । **प्रथमम्** अग्रे । किम् । सामर्थ्यात् स्तुतीः । कस्य । **वाम्** युवयोः । **वृणानः** वरणमभ्यर्थना । स्तुतीरस्मदीयाः शृणुतमित्यभ्यर्थयमानः । यस्यां च **अयम् सोमः असुरैः** 'असुः (वा.३,८) इति प्राणनाम । तद्वन्तोऽसुरा ऋत्विजस्तैः । **नः** अस्माकं स्वभूतैः । **विहव्यः** विविधं होतव्यः । **ताम् सत्याम् श्रद्धाम्** श्रद्धाशब्दोऽत्रान्तर्णीतमत्वर्थः । श्रद्धावतीम् । परया भक्त्या प्रारब्धामित्यर्थः । **अभि आ हि यातम्** हिशब्दः पदपूरणः । अभ्यागच्छतम् । **अथ** अभ्यागमनानन्तरं च **सोमस्य पिबतम् सुतस्य** ।। ६ ।।

**वेङ्कटमाधव–** अभिलषितं युवां **वृणानः** प्रथममेवाहं **यत्** करिष्यामीति प्रत्यज्ञासिषम् । **अयम् सोमः** अस्माकं प्राज्ञैर्ऋत्विग्भिर्विविधं युवाभ्यां होतव्यः । **ताम्** इमां मदीयाम् **श्रद्धाम्** अभ्यागच्छतम् । **अथ** सोमम् **पिबतम्** इति श्रद्दधाने मयि आगत्य पिबतमिति ।। ६ ।।

**मुद्गल–** हे इन्द्राग्नी! **प्रथमम्** कर्मोपक्रम एव **वाम्** युवाम् **वृणानः** भजमानः **यत् अब्रवम्**

सोमेन प्रीणयिष्यामीति यदवोचम् **सत्याम्** यथार्थाम् **ताम् श्रद्धाम्** श्रद्धया आदरातिशयेन कृताम् उक्तिम् **अभि** अभिलक्ष्य **आ हि यातम्** आगच्छतमेव, नोदासाथाम् । **अथ** आगमनानन्तरम् अभिषुतं सोमम् **पिबतम्** । तथा सति असुरैः हविषां प्रक्षेपकैर्ऋत्विग्भिः **अयम् नः** अस्माकम् **सोमः विहव्यः** विशेषेण होतव्यो भवति, इतरथा व्यर्थः स्यात् । तस्माद् इन्द्राग्नी! आगच्छतमित्यर्थः ॥ ६ ॥

**सायण–** हे इन्द्राग्नी! **प्रथमं** कर्मोपक्रमे एव **वां** युवां **वृणानः** सम्भजमानः यदब्रवं सोमेन प्रीणयिष्यामीति यदवोचं **सत्यां** यथार्थां **तां श्रद्धां** श्रद्धयादरातिशयेन कृतामुक्तिम् **अभि** अभिलक्ष्य **आ हि यातम्** आगच्छतमेव नोदासाथाम् । **अथ** आगमनानन्तरमभिषुतं सोमं **पिबतम्** । तथा सति **असुरैः** हविषां प्रक्षेपकैर्ऋत्विग्भिः **अयं नः** अस्माकं **सोमः विहव्यः** विशेषेण होतव्यो भवति इतरथा व्यर्थः स्यात् । तस्मादिन्द्राग्नी आगच्छतमित्यर्थः ।

वृणानः । 'वृङ् सम्भक्तौ' । लटः शानच् । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । असुरैः । 'असु क्षेपणे' । 'असेरुरन्' (उ.सू.१.४२) इति उरन्प्रत्ययः । विहव्यः । 'हु दानादनयोः' । 'अचो यत्' । गुणः । 'धातोस्तन्निमित्तस्यैव' इति अवादेशः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्–** हे इन्द्राग्नी! **वाम्** युवां **वृणानः** सम्भजमानोऽहं **प्रथमम्** यजनस्योपक्रम एव **यदब्रवम्** यदुक्तवानस्मि, किं तदुक्तम्? आह– **अयम् नः सोमः असुरैः विहव्यः** अयमस्माभिरभिषुतः सोमः देवद्वेषिभिरस्मच्छत्रुभिः विपर्ययेण होतव्यः स्यात् यदि प्राप्तकालं युवाभ्यां न स्वीक्रियेत, तस्माद्विपरीतं मा भूत्, एवमर्थकं वचः प्रागेव दत्तं मया । **सत्याम्** परमार्थां **ताम् श्रद्धाम्** आदरातिशयेन श्रद्धया कृतां प्रतिज्ञां **अभि** अभिलक्ष्य अवधाय **आ हि यातम्** आयातमेव । **अथ** आगमनादनन्तरं **सुतस्य सौमस्य पिबतम्** ।

वृणानः–वृङ सम्भक्तौ ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**यदिन्द्राग्नी मदथः स्वे दुरोणे यद् ब्रह्मणि राजनि वा यजत्रा ।**
**अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ७ ॥**

**यत् । इन्द्राग्नी इति । मदथः । स्वे । दुरोणे । यत् । ब्रह्मणि । राजनि । वा । यजत्रा । अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥**

**स्कन्द– यत्** इति निपातो यदिशब्दस्यार्थे । यदि हे **इन्द्राग्नी! मदथः** तृप्यथः । **स्वे दुरोणे** अस्मदीये गृहे । **यत्** यदि **ब्रह्मणि राजनि** वा ब्रह्मशब्दोऽत्र ब्राह्मणशब्देन समानार्थः । राजञ्छब्दोऽपि राजन्यजातिवचनः । उभयत्र च षष्ठ्यर्थे सप्तमी । ब्राह्मणस्य राजन्यस्य वा गृह इत्यर्थ । हे **यजत्रा!** यष्टव्यौ! । **अतः परि** परीति सर्वतोभावे । अतः सर्वतः । एतेभ्यः सर्वेभ्यो गृहेभ्य इत्यर्थः । **वृषणौ!** वर्षितारौ **आ हि यातम्** इत्याद्युक्तार्थम् ।। ७ ।।

**वेङ्कटमाधव– यत् इन्द्राग्नी!** तृप्यथः **स्वे** गृहे, यदि वा ब्राह्मणेषु राजसु वा । यष्टव्यौ! तत् सर्वं परिहायेहागच्छत वर्षितारौ ।। ७ ।।

**मुद्गल– यजत्रा!** यष्टव्यौ! हे **इन्द्राग्नी! स्वे दुरोणे** स्वकीये गृहे निवासस्थाने **यत्** यदि **मदथः** हृष्यथः, **यत्** यदि वा **ब्रह्मणि** ब्राह्मणे अन्यस्मिन् यजमाने हविःस्वीकरणाय आगत्य हृष्यथः, **यत्** यदि वा **राजनि** क्षत्रिये युद्धे साहाय्यं कर्तुमागत्य हृष्यथः । **अतः परि** परितोऽस्मात् हे **वृषणौ!** कामानां वर्षिताराविन्द्राग्नी! **आ यातम् हि** आगच्छतमेव, औदासीन्यं मा कार्ष्टम् । अन्यत् पूर्ववत् ।। ७ ।।

**सायण– यजत्रा** यष्टव्यौ हे **इन्द्राग्नी! स्वे दुरोणे** स्वकीये गृहे निवासस्थाने **यत्** यदि **मदथः** हृष्यथः । **यत्** यदि **वा ब्रह्मणि** ब्राह्मणे अन्यस्मिन्यजमाने हविःस्वीकरणायागत्य हृष्यथः । यदि वा **राजनि** क्षत्रिये **युद्धे साहाय्यं** कर्तुमागत्य हृष्यथः । **अतः परि** परितोऽस्मात् सर्वस्मात् स्थानात् हे **वृषणौ!** कामानां वर्षिताराविन्द्राग्नी **आ यातं हि** आगच्छतमेव । औदासीन्यं मा कार्ष्टम् । अन्यत् पूर्ववत् ।

मदथः । 'मदी हर्षे' । व्यत्ययेन शप् । यजत्रा । 'अभिनक्षि' इत्यादिना यजतेः कर्मणि अत्रन् । 'सुपां सुलुक्' इति विभक्तेः आकारः ।। ७ ।।

**सिद्धाञ्जनम्–** हे **यजत्रा!** यष्टव्यौ, **इन्द्राग्नी, स्वे दुरोणे** स्वकीये द्वारयुक्ते निवासस्थाने **यत्** यदि **मदथः** हृष्यथः । **ब्रह्मणि** ब्रह्मपदवाच्यमन्त्रयुक्ते ऋषौ तदनुग्रहे **यत्** यदि हृष्यथः **वा** यदि वा **राजनि** दीप्यमाने नरपतौ, तस्मिन् बलाधाने हृष्यथः । **अतः परि** अस्मात्

सर्वस्मादप्युपरि हे **वृषणौ!** वर्षितारौ दिव्यनेजोबलधनादीनामभीष्टानाम् **आयातम् हि** आगच्छतमेवम् । अन्यत् पूर्ववत् ।

यजत्रा–यजेः कर्मण्यत्रम् विभक्तेराकारः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**यदि॑न्द्राग्नी॒ यदु॑षु तु॒र्वशे॑षु॒ यद् द्रु॒ह्युष्वनु॑षु पू॒रुषु॒ स्थः ।**
**अत॒ः परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ।। ८ ।।**
यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । यदु॑षु । तु॒र्वशे॑षु । यत् । द्रु॒ह्युषु॑ । अनु॑षु । पू॒रुषु॑ । स्थ ।
अतः॑ । परि॑ । वृ॒ष॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ।। ८ ।।

**स्कन्द–** यदि हे **इन्द्राग्नी! यदुषु** । पञ्चान्येतानि राज्ञां नामधेयानि सोऽयमित्यभिसम्बन्धात्तदपत्ये प्रयुज्यन्ते । षष्ठ्यर्थे चात्र सर्वत्र सप्तमी । दुरोण इत्येतच्च पूर्वस्या ऋचोऽनुषज्यते । यद्वित्यादिभिरेव वा स्वामिशब्दैः स्वभूतानि गृहाण्युपलक्ष्यन्ते । यदुपुत्रगृहेष्वित्यर्थः । यदि तुर्वशेषु, यदि द्रुह्युषु यदि अनुषु यदि पूरुषु स्थः । साम्प्रतं वर्तेथे इत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** यदुप्रभृतयः बहुयज्ञाः कुत्ससमकालीना इति ।। ८ ।।

**मुद्गल–** हे **इन्द्राग्नी! यत्** यदि **यदुषु** नियतेषु परेषामहिंसकेषु मनुष्येषु **स्थः** भवथः वर्तेथे । **यत्** यदि वा **तुर्वशेषु** हिंसकेषु मनुष्येषु वर्तेथे । **यत्** यदि वा **द्रुह्युषु** द्रोहं परेषाम् उपद्रवमिच्छत्सु मनुष्येषु वर्तेथे । यदि वा **अनुषु** प्राणत्सु सफलैः प्राणैर्युक्तेषु ज्ञातृषु अनुष्ठातृषु मनुष्येषु यदि भवथः । तथा **पूरुषु** कामैः पूरयितव्येषु अन्येषु स्तोतृजनेषु यदि भवथः । **अतः परि** सर्वस्मात् स्थानात् हे कामाभिवर्षकाविन्द्राग्नी! आगच्छतमेव । अनन्तरमभिषुतं सोमम् **पिबतम्** ।। ८ ।।

**सायण–** अत्र यदुषु इत्यादीनि पञ्च मनुष्यनामानि । हे **इन्द्राग्नी! यत्** यदि **यदुषु** नियतेषु परेषामहिंसकेषु मनुष्येषु **स्थः** भवथः वर्तेथे । यदि वा **तुर्वशेषु** हिंसकेषु मनुष्येषु वर्तेथे । **यत्** यदि वा **द्रुह्युषु** द्रोहं परेषामुपद्रवमिच्छत्सु मनुष्येषु वर्तेथे । यदि वा **अनुषु** प्राणत्सु सफलैः प्राणैर्युक्तेषु ज्ञातृष्वनुष्ठातृषु मनुष्येषु । अन्येषां हि प्राणा निष्फला ज्ञानहीनत्वादनुष्ठानाभावाच्च । तेषु यदि भवथः । तथा **पूरुषु** कामैः पूरयितव्येष्वन्येषु स्तोतृजनेषु यदि भवथः । **अतः** सर्वस्मात् स्थानात् हे कामाभिवर्षकाविन्द्राग्नी आगच्छतम् । अनन्तरम् अभिषुतं सोमं **पिबतम्** ।

यदुषु । 'यम उपरमे' । नियम्यन्ते इन्द्रियाण्येभिरिति यदवः । 'यमेर्दुक् च' इति कुप्रत्ययो दुगागमश्च । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । तुर्वशेषु । तुर्वी हिंसार्थः । औणादिकः अशप्रत्ययः । द्रुह्युषु । 'द्रुह जिघांसायाम्' । सम्पदादिलक्षणो भावे क्विप् । द्रुहं परेषामिच्छन्ति । 'छन्दसि परेच्छायामपि' इति क्यच् । 'क्याच्छन्दसि' इति उप्रत्ययः । अनुषु । 'अन प्राणने' । 'अणश्च' (उ.सू.१.८) इति विधीयमान उप्रत्ययो बहुलवचनादस्मादपि भवति । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । पूरुषु । 'पूरी आप्यायने' । पूर्यन्ते इति पूरवः । औणादिक उप्रत्ययः ।। ८ ।।

**सिद्धाञ्जनम्**– हे **इन्द्राग्नी! यत्** यदि **यदुषु** प्रसिद्धेषु राजसु **स्थः** भवयः तथा **यत् तुर्वशेषु द्रुह्युषु अनुषु पूरुषु स्थः**, अतः परीत्यादि व्याख्यातम् । अत्र सायणव्याख्यानमवधेयम् । तदस्माकं पक्षस्य सामान्यतः प्रोद्बलकं भवतीति हेतोः यदुप्रभृतीनां निर्वचनं न निरूप्यते ।

तत्र सारं ब्रूमः । यदुष्वित्यादीनि पञ्च मनुष्यनामानि । यदुषु–अहिंसकेषु, यम उपरमे, नियम्यन्ते इन्द्रियाण्येभिरिति यदवः, यमेर्दुक् चेति कुप्रत्ययो दुगागमश्च । तुर्वशेषु–हिंसकेषु, तुर्वी हिंसार्थः । द्रुह्युषु–द्रोहं परेषामुपद्रवमिच्छत्सु । अनुषु–अन प्राणने, प्राणत्सु, सफलैः प्राणैर्युक्तेषु ज्ञातृषु । पूरुषु–पूरी आप्यायने, पूरयितव्येषु स्तोतृजनेषु ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ।**
**अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ।। ९ ।।**
**यत् । इन्द्राग्नी इति । अवमस्याम् । पृथिव्याम् । मध्यमस्याम् । परमस्याम् । उत । स्थः ।**
**अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ।।**

**स्कन्द**– यदि हे **इन्द्राग्नी! अवमस्याम्** । 'अवमे' (निघ.२,१६) इत्यन्तिकनाम । सन्निकृष्टायां **पृथिव्याम्** । अस्मिन्नेव लोके इत्यर्थः । यदि **मध्यमस्याम्** मध्यमायाम् । अन्तरिक्ष इत्यर्थः । **परमस्याम् उत स्थः** परमायां वा द्युलक्षणायां स्थः । **अतः परि** इत्याद्युक्तार्थम् ।।

**वेङ्कटमाधव**– अन्तरिक्षं मध्यमा पृथिवी । द्यौः परमेति ।। ९ ।।

**मुद्गल**– हे **इन्द्राग्नी! अवमस्याम् पृथिव्याम्** सन्निकृष्टायाम् अस्यां भूम्याम् **यत्** यदि **स्थः** वर्तमानौ भवथः । यदि वा **मध्यमस्याम्** पृथिव्याम् अन्तरिक्षलोके, **उत** अपि च **परमस्याम्** उत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे । **अतः** सर्वस्मात् स्थानात् हे **वृषणौ!** आगच्छतमेव । आगमनानन्तरं सुखं सोमम् **पिबतम्** ।। ९ ।।

**सायण**– हे **इन्द्राग्नी! अवमस्यां पृथिव्यां** संनिकृष्टायामस्यां भूम्यां **यत्** यदि **स्थः** वर्तमानौ भवथः । यदि वा **मध्यमस्यां** पृथिव्यामन्तरिक्षलोके । अत्र पृथिवीशब्दस्त्रिष्वपि लोकेषु वर्तते । यथा 'यो द्वितीयस्यां तृतीयस्यां पृथिव्यामस्यायुषा नाम्ना' (तै.सं.१.२.१२.१) इति । **उत** अपि च **परमस्याम्** उत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे । **अतः** सर्वस्मात् स्थानात् हे **वृषणौ!** आगच्छतम् । आगमनानन्तरं सुतं सोमं **पिबतम्** ।

अवमस्याम् । अवमशब्दादुत्तरस्य ङेर्व्यत्ययेन स्याडागमः । एवमुत्तरत्रापि ।। ९ ।।

**सिद्धाञ्जनम्**– हे **इन्द्राग्नी! अवमस्याम्** सन्निकृष्टायां **पृथिव्याम्** आरोहणक्रमे प्रथमस्थानभूतायां भूम्यां **स्थः** भवथः, तथा **मध्यमस्याम्** भुवर्लोकाख्यायां अन्तरिक्षभूतायां यदि स्थः । तथा **परमस्याम् उत** तृतीयस्थानभूतायां स्वर्लोकाख्यायां च यदि स्थः, अतः परीत्यादि समानम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**यदि॑न्द्राग्नी प॒र॒मस्यां॑ पृथि॒व्यां म॑ध्य॒मस्या॑मव॒मस्या॑मु॒त स्थः ।**
**अत॒ः परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ।। १० ।।**
यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । प॒र॒मस्या॑म् । पृ॒थि॒व्याम् । म॒ध्य॒मस्या॑म् । अ॒व॒मस्या॑म् । उ॒त । स्थः । अत॑ः । परि॑ । वृ॒ष॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ।।

**स्कन्द**– पदविपर्ययमात्रयोगात् पूर्वयैव समानार्थः ।। १० ।।

**वेङ्कटमाधव**– मकारान्तरेणापि श्रद्धाप्रकाशनायाह्वानम् ।। १० ।।

**मुद्गल**– पूर्ववद् व्याख्येयम् । एतावांस्तु विशेषः । पूर्वं भूम्यादिषु त्रिलोकेषु यौ इन्द्राग्नी तावागच्छतमित्युक्तम् । इदानीं तु द्युप्रभृतिषु अवरोहक्रमेण वर्तमानेषु त्रिषु लोकेषु यौ इन्द्राग्नी वर्तेते तावागच्छतमिति प्रार्थ्यते ।। १० ।।

**सायण–** पूर्ववद्व्याख्येयम् । एतावांस्तु विशेषः । पूर्वं भूम्यादिषु त्रिषु लोकेषु याविन्द्राग्नी तावागच्छतामित्युक्तम् । इदानीं तु द्युप्रभृतिषु अवरोहक्रमेण वर्तमानेषु त्रिषु लोकेषु यावीन्द्राग्नी वर्तेते तावागच्छतामिति प्रार्थ्यते ।। १० ।।

**सिद्धाञ्जनम्–** यदारोहक्रमेण नवम्यामुक्तं, तदवरोहक्रमेण परमं तृतीयं स्थानं प्रथमं निर्दिश्यान्ते पृथिवीस्थाने स्थ इत्युच्यते । अन्तर्यागे आरोहोऽवरोहश्च भवत इति बोध्यम् ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**यदि॑न्द्राग्नी दि॒वि ष्ठो यत् पृ॑थि॒व्यां यत् पर्व॑ते॒ष्वोष॑धीष्व॒प्सु ।**
**अत॒: परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ।। ११ ।।**
**यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । दि॒वि । स्थः । यत् । पृ॒थि॒व्याम् । यत् । पर्व॑तेषु । ओष॑धीषु । अ॒प्ऽसु । अत॑: । परि॑ । वृ॒ष॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ।। ११ ।।**

**स्कन्द–** यदि हे **इन्द्राग्नी! दिवि** द्युलोके **स्थः**, यदि **पृथिव्याम्**, यदि **पर्वतेषु**, यदि **ओषधीषु**, यदि **अप्सु** । अतः ।। ११ ।।

**वेङ्कटमाधव–** निगदव्याख्यातेति ।। ११ ।।

**मुद्गल–** हे **इन्द्राग्नी! दिवि** द्युलोके **यत्** यदि **स्थः** भवथः । **यत्** यदि वा **पृथिव्याम्** भूलोके, **यत्** यदि वा **पर्वतेषु** मेघादिषु, तथा **ओषधीषु** तिलादिषु, **अप्सु** उदकेषु चानुग्राहकतया यदि वा स्थः । हे कामाभिवर्षकौ! युवाम् **अतः** सर्वस्मात् स्थानात् आगच्छतम् । आगत्य च अभिषुतं सोमम् **पिबतम्** ।। ११ ।।

**सायण–** हे **इन्द्राग्नी! दिवि** द्युलोके **यत्** यदि **स्थः** भवथः । यदि वा **पृथिव्यां** भूलोके यदि वा **पर्वतेषु** मेर्वादिषु मेघेषु वा । तथा **ओषधीषु** तिलमाषव्रीह्यादिषु **अप्सु** उदकेषु चानुग्राहकतया यदि वा स्थः । हे कामाभिवर्षकौ युवाम् **अतः** सर्वस्मात् स्थानादागच्छतम् । आगत्य चाभिषुतं सोमं पिबतम् ।

पृथिव्याम् । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । ओषधीषु । ओषः पाक आसु धीयते

इति ओषधयः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । तच्च घञन्तमाद्युदात्तम् । 'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घः ।। ११ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! दिवि** द्युलोके **यत्** यदि **स्थः** भवथः । **यत्** यदि वा **पृथिव्याम्** भूमौ **यत्** यदि वा **पर्वतेषु ओषधीषु अप्सु** एवं सर्वत्र भवथः, अनयत् पूर्ववत् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**यदि॑न्द्राग्नी उदि॑ता सूर्य॑स्य॒ मध्ये॑ दि॒वः स्व॒धया॑ मा॒दये॑थे ।**
**अत॒: परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ।। १२ ।।**
यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । उत्ऽई॑ता । सूर्य॑स्य । मध्ये॑ । दि॒वः । स्व॒धया॑ । मा॒दये॑थे इति॑ । अत॑: । परि॑ । वृ॒ष॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒त॒म् । सु॒तस्य॑ ।।

**स्कन्द–** यदि हे **इन्द्राग्नी! उदिता** उदये अस्य **सूर्यस्य** । आदित्योदयवेलायामित्यर्थः । यदि **मध्ये दिवः** 'द्युः' (निघ.१,९) इत्यहर्नाम । मध्ये अह्नः । **स्वधया** सोमलक्षणेनान्नेन **मादयेथे** अन्येषां यजमानानां गृहेषु तर्पयथ आत्मानम् । स्वार्थिको वाऽत्र णिच् । तृप्यथः । **अतः** ।। १२ ।।

**वेङ्कटमाधव–** उदयवेलायाम् **यत् इन्द्राग्नी!** कस्यचन यज्ञे सोमेन माद्यथः, अथवा अह्नो **मध्ये** । ततः कालाद् अपि माम् एव आगच्छतं सर्वदेति ।। १२ ।।

**मुद्गल–** हे **इन्द्राग्नी! उदिता** उदितस्य **सूर्यस्य** सम्बन्धिनः **दिवः** द्योतमानस्यान्तरिक्षस्य **मध्ये** मध्यभागे **स्वधया** आत्मीयेन तेजसा **यत्** यस्मात् कारणात् **मादयेथे** तृप्तौ भवथः । तस्मात् कारणात् **अतः** सर्वस्मात् अन्तरिक्षभागात् हे कामाभिवर्षकाविन्द्राग्नी! आगच्छतम् । आगत्यानन्तरम् अभिषुतं सोमं **पिबतम्** ।। १२ ।।

**सायण–** हे **इन्द्राग्नी! उदिता** उदितस्योदयं प्राप्तस्य **सूर्यस्य** आदित्यस्य संबन्धिनः **दिवः** द्योतमानस्य अन्तरिक्षस्य **मध्ये** मध्यभागे स्वधया आत्मीयेन तेजसा हविर्लक्षणेनान्नेन वा **यत्** यस्मात् कारणात् **मादयेथे** तृप्तौ भवथः तस्मात् कारणात् **अतः** सर्वस्मादन्तरिक्षभागात् हे कामाभिवर्षकाविन्द्राग्नी आगच्छतम् । आगमनानन्तरमभिषुतं सोमं **पिबतम्** ।

उदिता । 'सुपां सुलुक्' इति षष्ठ्या डादेशः । दिवः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । मादयेथे । 'मद तृप्तियोगे' । चुरादिरात्मनेपदी ।। १२ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! उदिता** उदितस्य **सूर्यस्य** प्रादुर्भूतस्य ऋतस्य ज्योतिषः सम्बन्धिनः **दिवः** स्वर्लोकस्य **मध्ये** मुख्ये भागे **स्वधया** स्वभावधारणशक्त्या **यत्** यदि वा **मादयेथे** तृप्तौ भवथः, अन्यत्पूर्ववत् ।

उदिता–षष्ठ्या डादेशः । मादयेथे–मद तृप्तियोगे, चुरादिरात्मनेपदी ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। १३ ।।**
एव । इन्द्राग्नी इति । पपिऽवांसा । सुतस्य । विश्वा । अस्मभ्यम् । सम् । जयतम् । धनानि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ।। १३ ।।

**स्कन्द–** **एव** एवमुक्तेन प्रकारेण हे **इन्द्राग्नी! पपिवांसा** पीतवन्तौ सन्तौ **सुतस्य** सुतं सोमं सुतस्य वा सोमस्य स्वांशलक्षणमेकदेशम् **विश्वा** सर्वाणि **अस्मभ्यम्** अस्मदर्थम् । अस्मभ्यं दातुमित्यर्थः । **सम्** सम्यक् **जयतम् धनानि** । **तत् नः** इत्याद्युक्तार्थम् (ऋ.१,९४,१६, द्र.) ।। १३ ।।

**वेङ्कटमाधव–** एवम् उक्तेन प्रकारेण आगत्य सोमं पीतवन्तौ **अस्मभ्यम्** सर्वाणि **धनानि** शत्रुभ्यः सह **जयतम्** इति ।। १३ ।।

**मुद्गल–** हे **इन्द्राग्नी! सुतस्य** अभिषुतं सोमम् एव एवम् **पपिवांसा** पीतवन्तौ युवाम् **अस्मभ्यम् विश्वा** सर्वाणि **धनानि सम् जयतम्** प्रयच्छतम् । यदनेन सूक्तेन प्रार्थितम् **तत्** मित्रादयः **ममहन्ताम्** पूजयन्तु ।। १३ ।।

**सायण–** हे **इन्द्राग्नी! सुतस्य** अभिषुतं सोमम् एव एवं **पपिवांसा** पीतवन्तौ युवाम् **अस्मभ्यं विश्वा** सर्वाणि **धनानि सं जयतं** प्रयच्छतम् । यदनेन सूक्तेन प्रार्थितं **तत्** मित्रादयः **ममहन्तां** पूजयन्तु ।

पपिवांसा । 'पा पाने' । लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इति इडागमः ॥ १३ ॥

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! सुतस्य** सोमस्य, सोमं **एव** एवं **पपिवांसा** पीतवन्तौ युवां **अस्मभ्यम् विश्वा** सर्वाणि सर्वविधानि **धनानि सम् जयतम्** जित्वा यच्छतम् । तन्नो मित्रो वरुण इत्यादि गतम् ।

पपिवांसा–पा पाने, लिटः क्वसुः ॥ १३ ॥

॥ इति प्रथमाष्टके सप्तमाध्याये सप्तविंशो वर्गः ॥

## ॥ अथ अष्टविंशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् १०९)

(८ कुत्स आङ्गिरसः । इन्द्राग्नी । त्रिष्टुप्)

**वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।**
**नान्या युवत् प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥ १ ॥**
वि । हि । अख्यम् । मनसा । वस्यः । इच्छन् । इन्द्राग्नी इति । ज्ञासः । उत । वा । सऽजातान् । न । अन्या । युवत् । प्रऽमतिः । अस्ति । मह्यम् । सः । वाम् । धियम् । वाजऽयन्तीम् । अतक्षम् ॥ १ ॥

**स्कन्द– वि अख्यम्** इत्येतद् विचष्टे इत्येतस्य पश्यतिकर्मणो रूपम् । **हि**–शब्दस्तु पदपूरणः । युवामहं विविधं पश्यामि **मनसा वस्यः** वसूनि धनानि **इच्छन्** हे **इन्द्राग्नी**! कीदृशौ । उच्यते । **ज्ञासः उत वा सजातान्** अयोनिसम्बन्धा ये ज्ञातयस्त इह ज्ञास उच्यन्ते । योनिसम्बन्धाः सजाताः । व्यत्ययेन द्विवचनस्य स्थाने बहुवचनम् । ज्ञाती सजातौ च । युवामेव मम ज्ञाती युवामेव सजातावित्येवं पश्यामीत्यर्थः । अथवा ज्ञासः सजातानित्यनयोः बहुवचनान्तत्वादिन्द्राग्नीविषयत्वासम्भवात् कर्मश्रुतेश्च साकाङ्क्षत्वाद् अनादृत्येति योग्यक्रियापदाध्याहारः । ज्ञातीन् सजातींश्चानादृत्य युवां पश्यामीत्यर्थः । किञ्च **न अन्या युवत्** युवाभ्यामन्या देवता **प्रमतिः अस्ति मह्यम्** प्रमतिरिति मन्यतेरर्चतिकर्मणो रूपम् । कर्मणि चैष क्तिन् द्रष्टव्यः । मह्यमित्यपि षष्ठ्यर्थे चतुर्थी । प्रकर्षेण स्तुत्याऽस्ति मम । युवां मुक्त्वा नाहमन्या देवताः प्रकर्षेण

स्तौमीत्यर्थः । योऽहमीदृशः **सः वाम्** युवयोः **धियम्** स्तुतिं कर्म यागलक्षणं वा । यागं स्तुतिं वेत्यर्थः । कीदृशीम् । **वाजयन्तीम्** तद्वदर्थेऽत्र क्यच्प्रत्ययो द्रष्टव्यो नेच्छायाम् । 'अश्वयुर्गव्यू रथयुर्वसूयुः' (ऋ.१,५१,१४) इति यथा । हविर्लक्षणेनान्नेन तद्वतीम् । हविस्संयुक्तामित्यर्थः । **अतक्षम्** करोमि कृतवान् वा ।। १ ।।

**वेङ्कटमाधव– मनसा** अहम् अभ्युदयम् **इच्छन् वि हि** अपश्यम् । किमित्याह– **इन्द्राग्नी!** एव मातृकुलजातान् ज्ञातीन् । अपि च **सजातान्** च तावेवहमपश्यम् । तथा सति युवाभ्यां विना न अन्येन देवेन दीयमाना **प्रमतिः अस्ति मह्यम्** । तथा कृत्वाऽहं युवयोः एव अन्नम् इच्छन्तीम् अन्नप्रवणाम् **धियम्** कर्म करोमि ।। १ ।।

**मुद्गल–** 'वि हि' इत्यष्टर्चं चतुर्थं सूक्तम् । कुत्स ऋषिः । त्रिष्टुप् छन्दः । इन्द्राग्नी देवता ।

हे **इन्द्राग्नी! वस्यः** प्रशस्तं धनम् **इच्छन्** कामयमानोऽहम् **ज्ञासः** ज्ञातीन् **उत वा** अपि वा **सजातान्** समानजन्मानः ज्ञातिव्यतिरिक्ता बान्धवास्तांश्च **मनसा** बुद्ध्या **वि हि अख्यम्** युवामेव ज्ञातिरूपेण बन्धुरूपेण च व्यज्ञासिषम् । ते हि धनस्य दातारो भवन्ति । अपि च **युवत्** युवाभ्याम् **अन्या** अन्येन केनचित् **मह्यम्** दत्ता **प्रमतिः** प्रकृष्टा बुद्धिः **न अस्ति** । मदीया यैषा प्रकृष्टा बुद्धिः सा युवाभ्यामेव दत्ता । सः तादृश्या बुद्ध्या युक्तोऽहम् **वाम्** युवयोः सम्बन्धिनीम् **वाजयन्तीम्** अन्नम् अस्मभ्यम् इच्छन्तीम् **धियम्** ध्यानेन निष्पन्नां स्तुतिम् **अतक्षम्** अकार्षम् ।। १ ।।

**सायण–** 'वि हि' इत्यष्टर्चं चतुर्थं सूक्तम् । अनुक्रान्तं च– **'वि ह्यष्टौ'** इति । ऋष्याद्याः पूर्ववत् । सूक्तविनियोगो लैङ्गिकः ।

हे **इन्द्राग्नी! वस्यः** प्रशस्तं धनम् **इच्छन्** कामयमानोऽहं **ज्ञासः** ज्ञातीन् **उत वा** अपि वा **सजातान्** । समानजन्मानो ज्ञातिव्यतिरिक्ता बान्धवाः । तांश्च **मनसा** बुद्ध्या **वि ह्यख्यं** युवामेव ज्ञातिरूपेण बन्धुरूपेण च व्यज्ञासिषम् । ते हि धनस्य दातारो भवन्ति । अपि च **युवत्** युवाभ्याम् **अन्या** अन्येन केनचिन् **मह्यं** दत्ता **प्रमतिः** प्रकृष्टा बुद्धिः **न अस्ति** । मदीया यैषा प्रकृष्टा बुद्धिः सा युवाभ्यामेव दत्ता । **सः** तादृश्या बुद्ध्या युक्तोऽहं **वां** युवयोः सम्बन्धिनीं **वाजयन्तीम्** अन्नमस्मभ्यमिच्छन्तीं **धियं** ध्यानेन निष्पन्नां स्तुतिम् **अतक्षम्** अकार्षम् ।

अख्यम् । लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । वस्यः । वसुशब्दात् ईयसुन् । 'टेः' इति टिलोपः । छान्दस ईकारलोपः । ज्ञासः । सुखदुःकादिकं साम्येन जानन्तीति ज्ञासो ज्ञातयः । 'ज्ञा अवबोधने' । औणादिकोऽसुन् । व्यत्ययेन विभक्तेरुदात्तत्वम् । युवत् । 'सुपां सुलुक्' इति विभक्तेर्लुक् । द्व्यर्थाभिधायकत्वात् 'युवावौ द्विवचने' (पा.सू. ७.२.९२) इति युष्मदो मपर्यन्तस्य युवादेशः ।। १ ।।

**सिद्धाञ्जनम्–** 'वि ह्री'त्यष्टर्चं चतुर्थं सूक्तं, ऋष्याद्याः पूर्ववत् ।

हे **इन्द्राग्नी! वस्यः** वसीयः वसुमत्तरलक्षणं श्रेयः **इच्छन्** प्रेप्सन्नहं **ज्ञासः** ज्ञातीन् **उत वा** अपि वा **सजातान्** समानजन्मनः सयोनीन् भ्रातृन् अपि **मनसा** बुद्ध्या **व्यख्यम् हि** व्यज्ञासिषं, युवामेव मम ज्ञातयः सजाताश्चेति ज्ञातवानस्मि । अपि च **युवत्** युवाभ्यां **मह्यम्** दत्ता **प्रमतिः** प्रकृष्टा बुद्धिः **नः अन्या अस्ति** अन्येन न दत्ता भवति अत एव सा प्रकृष्टा भवति । यया **सः** तादृशोऽहं **वाजयन्तीम्** समर्धयन्तीं समृद्धिकारिणीं **धियम्** धिया साधनेन निष्पादितां स्तुतिं **वाम्** युवाभ्यां **अतक्षम्** अकार्षम् ।

वस्यः–वसुशब्दादीयसुन्, टिलोपः । ज्ञासः–ज्ञातयः, सुखदुःखादिकं साम्येन जानन्ति, माधातोरौणादिकः असुन्प्रत्ययः । युवत्–सुपां सुलुगिति विभक्तेर्लुक् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अश्र॑वं॒ हि भू॑रि॒दाव॑त्तरा वां॒ विजा॑मातुरु॒त वा॑ घा स्या॒लात् ।**
**अथा॒ सोम॑स्य॒ प्रय॑ती यु॒वभ्या॒मिन्द्रा॑ग्नी॒ स्तोमं॑ जनयामि॒ नव्य॑म् ।। २ ।।**
अश्र॑वम् । हि । भू॒रि॒दाव॑त्ऽतरा । वा॒म् । विऽजा॑मातुः । उ॒त । वा॒ । घ॒ । स्या॒लात् ।
अथ॑ । सोम॑स्य । प्रऽय॑ती । यु॒वऽभ्या॑म् । इन्द्रा॑ग्नी॒ इति॑ । स्तोम॑म् । ज॒न॒या॒मि॒ । नव्य॑म् ।।

**स्कन्द–** हि–शब्दो यस्मादर्थे । यस्मादहम् **अश्रवम्** श्रुतवान् । किम् । उच्यते । **भूरिदावत्तरा** बहुनो धनस्य दातारौ । कौ । उच्यते । **वाम्** युवाम् । कुतः । उच्यते । **विजामातुः** जामातृशब्दोऽत्र तद्गुणोपलक्षणार्थो द्रष्टव्यः । धनदत्ताव्यतिरिक्ताः कुलीनत्वादयः विगता जामातृगुणा यस्य स विजामाता क्रीतापतिरुच्यते । स हि विगुणत्वात् धनेनोपप्रलोभयन् अतिशयेन बहु ददाति । ततो युवां बहुदातृतरौ । न विजामातुरेव । किं तर्हि । **उत वा घ स्यालात्**

वाशब्दश्चार्थे । घशब्दः पदपूरणः । अपि च स्यालात् । स्यालो हि भगिनीप्रियचिकीर्षया भगिनीभर्त्रेऽतिशयेन बहु ददाति । ततोऽपि युवां बहुदातृतरौ । **अथ** एतस्मात् कारणात् । **सोमस्य** प्रयतां प्रयतिर्दानार्थः । सहयोगे चैषा तृतीया । सोमस्य प्रदानेन सह । **युवभ्याम्** युष्मदर्थे हे **इन्द्राग्नी! स्तोमम् जनयामि** स्तोमं च ददामि । स्तोमं च करोमीत्यर्थः । **नव्यम्** नवम् अव्यैरकृतपूर्वम् ।। २ ।।

**वेङ्कटमाधव–** अश्रौषं हि बहुदायितरौ **वाम् विजामातुः** असमाप्ताजामातुः । विजामातेति शश्वद् दाक्षिणात्याः क्रीतापतिमाचक्षते । असुसमाप्तगुण इव वरोऽभिप्रेतः (या.६,९) । अपि च **स्यालात्** स्यं शूर्पम्, तस्मात् यो लाजानावपति स स्यालः । स भगिनीप्रीत्यर्थं बहुतरं प्रयच्छति, तस्मादपि । **अथ सोमस्य** प्रदानेन युवाभ्याम् **इन्द्राग्नी! स्तोमम् जनयामि** नवतरम् ।। २ ।।

**मुद्गल–** हे **इन्द्राग्नी! वाम्** युवाम् **भूरिदावतरा** अतिशयेन धनस्य दाताराविति **अश्रवम् हि** अश्रौषं खलु । कस्मात्पुरुषात् । **विजामातुः** । श्रुताभिरूप्यादिभिर्विहीनो जामाता यथा कन्यावते बहुधनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः । **उत वा** अपि च **स्यालात्** स्यं शूर्पम्, तस्मात् लाजानावपति विवाहकाल इति स्यालः कन्याभ्राता । स यथा भगिनीप्रीत्यर्थं बहुधनं प्रयच्छति ततोऽप्यतिशयेन दाताराविन्द्राग्नी । **घ** पादपूरणः । तथा च सति **अथ** अनन्तरं हे **इन्द्राग्नी! युवभ्याम् सोमस्य प्रयती** अभिषुतस्य सोमस्य प्रदानेन सह **नव्यम्** नवतरं प्रत्यग्रम् **स्तोमम्** स्तोत्रम **जनयामि** निष्पादयामि ।। २ ।।

**सायण–** हे **इन्द्राग्नी! वां** युवां **भूरिदावत्तरा** अतिशयेन बहुधनस्य दाताराविति **अश्रवं** हि अश्रौषं खलु । कस्मात् पुरुषात् । **विजामातुः** । श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः । **उत वा** अपि च **स्यालात्** । स्यं शूर्पम् । तस्मात् लाजानावपति विवाहकाले इति स्यालः कन्याभ्राता । स यथा भगिनीप्रीत्यर्थं बहु धनं प्रयच्छति ततोऽप्यतिशयेन दाताराविन्द्राग्नी । **घ** इति पादपूरणः । तथा च सति **अथ** अनन्तरं हे **इन्द्राग्नी!** युवाभ्यां **सोमस्य प्रयती** अभिषुतस्य सोमस्य प्रदानेन सह **नव्यं** नवतरं प्रत्यग्रं **स्तोमं** स्तोत्रं **जनयामि** निष्पादयामि । अत्र निरुक्तम्– 'अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुः । विजामातेति

शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो जामाता जा अपत्यं तन्निर्माना । उत वा घा स्यालादपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः । स्याल्लाजानावपतीति वा । लाजा लाजतेः स्यं शूर्पं स्यतेः । शूर्पमशननपवनं शृणातेः शम्नातेर्वा । अथ सोमस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरम्' (निरु.६.९) इति ।

अश्रवम् । 'श्रु श्रवणे' । लङि उत्तमपुरुषैकवचने 'बहुलं छन्दसि' इति विकरणस्य लुक् । भूरिदावत्तरा । 'डुदाञ् दाने' । 'आतो मनिन्' इति वनिप् । अतिशयेन भूरिदावा भूरिदावत्तरः । 'भूरिदाव्नस्तुड्वक्तव्यः' (पा.सू.८.२.१७.२) इति तरपः तुट् । पदसंज्ञायां नलोपः । 'सुपां सुलुक्' इति विभक्तेराकारः । घ । 'ऋचि तुनुघ' इत्यादिना संहितायां दीर्घत्वम् । अथ । 'निपातस्य च' इति । प्रयती । 'यम उपरमे' । क्तिनि 'अनुदात्तोपदेश:' इत्यादिनानुनासिक-लोपः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । युवभ्याम् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'युष्मदस्मदोरनादेशे' इत्यात्वाभावः । 'शेषे लोपः' इति दकारलोपः ।। २ ।।

**सिद्धाञ्जनम्**– हे **इन्द्राग्नी! वाम्** युवां **भूरिदावत्तरा** अतिशयेन भूरेः प्रभूतस्य धनस्य दातारौ इति **अश्रवम् हि** श्रुतवानहं खलु । **विजामातुः** विकलो जामाता कन्यालाभाय भूरिधनस्य दाता भवति, तस्मादप्यतिशयेन दारारौ, **उत वा** अपि च **स्यालात्** कन्याभ्रातुः सः भगिनीप्रीतये भूरि धनं ददाति, तस्मादप्यतिशयेन दाताराविन्द्राग्नी । घ पादपूरणः । **अथ** एवं श्रवणात्परं अहमपि अनर्घं सोमं स्तोमं च ददामि वामित्याह । **युवभ्याम्** युवाभ्यां **सोमस्य प्रयती** सोमस्य प्रदानेन सह **नव्यम् स्तोमम्** प्रत्यग्रं गानयोग्यं स्तोत्रं **जनयामि** निष्पादयामि ।

अश्रवम्–लङि उत्तमैकवचने विकरणस्य लुक् । भूरिदावत्तरा–ददातेः आतो मनिन्निति वनिप् । प्रयती–यम उपरमे ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**मा च्छेद्म रश्मीँरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः ।**
**इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उपस्थे ।। ३ ।।**

**मा । छेद्म । रश्मीन् । इति । नाधमानाः । पितॄणाम् । शक्तीः । अनुऽयच्छमानाः ।**
**इन्द्राग्निऽभ्याम् । कम् । वृषणः । मदन्ति । ता । हि । अद्री इति । धिषणायाः । उपस्थे ।।**

वाशब्दश्चार्थे । घशब्दः पदपूरणः । अपि च स्यालात् । स्यालो हि भगिनीप्रियचिकीर्षया भगिनीभर्त्रेऽतिशयेन बहु ददाति । ततोऽपि युवां बहुदातृतरौ । **अथ** एतस्मात् कारणात् । **सोमस्य** प्रयतां प्रयतिर्दानार्थः । सहयोगे चैषा तृतीया । सोमस्य प्रदानेन सह । **युवभ्याम्** युष्मदर्थं हे **इन्द्राग्नी! स्तोमम् जनयामि** स्तोमं च ददामि । स्तोमं च करोमीत्यर्थः । **नव्यम्** नवम् अव्यैरकृतपूर्वम् ।। २ ।।

**वेङ्कटमाधव–** अश्रौषं हि बहुदायितरौ **वाम् विजामातुः** असमाप्ताजामातुः । विजामातेति शश्वद् दाक्षिणात्याः क्रीतापतिमाचक्षते । असुसमाप्तगुण इव वरोऽभिप्रेतः (या.६,९) । अपि च **स्यालात्** स्यं शूर्पम्, तस्मात् यो लाजानावपति स स्यालः । स भगिनीप्रीत्यर्थं बहुतरं प्रयच्छति, तस्मादपि । **अथ सोमस्य** प्रदानेन युवाभ्याम् **इन्द्राग्नी! स्तोमम् जनयामि** नवतरम् ।। २ ।।

**मुद्गल–** हे **इन्द्राग्नी! वाम्** युवाम् **भूरिदावतरा** अतिशयेन धनस्य दाताराविति **अश्रवम् हि** अश्रौषं खलु । कस्मात्पुरुषात् । **विजामातुः** । श्रुताभिरूप्यादिभिर्विहीनो जामाता यथा कन्यावते बहुधनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः । **उत वा** अपि च **स्यालात्** स्यं शूर्पम्, तस्मात् लाजानावपति विवाहकाल इति स्यालः कन्याभ्राता । स यथा भगिनीप्रीत्यर्थं बहुधनं प्रयच्छति ततोऽप्यतिशयेन दाताराविन्द्राग्नी । **घ** पादपूरणः । तथा च सति **अथ** अनन्तरं हे **इन्द्राग्नी! युवभ्याम् सोमस्य प्रयती** अभिषुतस्य सोमस्य प्रदानेन सह **नव्यम्** नवतरं प्रत्यग्रम् **स्तोमम्** स्तोत्रम **जनयामि** निष्पादयामि ।। २ ।।

**सायण–** हे **इन्द्राग्नी! वां** युवां **भूरिदावत्तरा** अतिशयेन बहुधनस्य दाताराविति **अश्रवं** हि अश्रौषं खलु । कस्मात् पुरुषात् । **विजामातुः** । श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः । **उत वा** अपि च **स्यालात्** । स्यं शूर्पम् । तस्मात् लाजानावपति विवाहकाले इति स्यालः कन्याभ्राता । स यथा भगिनीप्रीत्यर्थं बहु धनं प्रयच्छति ततोऽप्यतिशयेन दाताराविन्द्राग्नी । **घ** इति पादपूरणः । तथा च सति **अथ** अनन्तरं हे **इन्द्राग्नी!** युवाभ्यां **सोमस्य प्रयती** अभिषुतस्य सोमस्य प्रदानेन सह **नव्यं** नवतरं प्रत्यग्रं **स्तोमं** स्तोत्रं **जनयामि** निष्पादयामि । अत्र निरुक्तम्– 'अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुः । विजामातेति

शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो जामाता जा अपत्यं तन्निर्माना । उत वा घा स्यालादपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः । स्याल्लाजानावपतीति वा । लाजा लाजतेः स्यं शूर्पं स्यतेः । शूर्पमशननपवनं शृणातेः शम्नातेर्वा । अथ सोमस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरम्' (निरु.६.९) इति ।

अश्रवम् । 'श्रु श्रवणे' । लङि उत्तमपुरुषैकवचने 'बहुलं छन्दसि' इति विकरणस्य लुक् । भूरिदावत्तरा । 'डुदाञ् दाने' । 'आतो मनिन्' इति वनिप् । अतिशयेन भूरिदावा भूरिदावत्तरः । 'भूरिदाव्नस्तुड्वक्तव्यः' (पा.सू.८.२.१७.२) इति तरपः तुट् । पदसंज्ञायां नलोपः । 'सुपां सुलुक्' इति विभक्तेराकारः । घ । 'ऋचि तुनुघ' इत्यादिना संहितायां दीर्घत्वम् । अथ । 'निपातस्य च' इति । प्रयती । 'यम उपरमे' । क्तिनि 'अनुदात्तोपदेशः' इत्यादिनानुनासिक-लोपः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । युवभ्याम् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'युष्मदस्मदोरनादेशे' इत्यात्वाभावः । 'शेषे लोपः' इति दकारलोपः ।। २ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! वाम्** युवां **भूरिदावत्तरा** अतिशयेन भूरेः प्रभूतस्य धनस्य दातारौ इति **अश्रवम् हि** श्रुतवानहं खलु । **विजामातुः** विकलो जामाता कन्यालाभाय भूरिधनस्य दाता भवति, तस्मादप्यतिशयेन दारारौ, **उत वा** अपि च **स्यालात्** कन्याभ्रातुः सः भगिनीप्रीतये भूरि धनं ददाति, तस्मादप्यतिशयेन दाताराविन्द्राग्नी । घ पादपूरणः । **अथ** एवं श्रवणात्परं अहमपि अनर्घं सोमं स्तोमं च ददामि वामित्याह । **युवभ्याम्** युवाभ्यां **सोमस्य प्रयती** सोमस्य प्रदानेन सह **नव्यम् स्तोमम्** प्रत्यग्रं गानयोग्यं स्तोत्रं **जनयामि** निष्पादयामि ।

अश्रवम्–लङि उत्तमैकवचने विकरणस्य लुक् । भूरिदावत्तरा–ददातेः आतो मनिन्निति वनिप् । प्रयती–यम उपरमे ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**मा च्छेद्म रश्मीँरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः ।**
**इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उपस्थे ।। ३ ।।**
**मा । छेद्म । रश्मीन् । इति । नाधमानाः । पितॄणाम् । शक्तीः । अनुऽयच्छमानाः ।**
**इन्द्राग्निऽभ्याम् । कम् । वृषणः । मदन्ति । ता । हि । अद्री इति । धिषणायाः । उपस्थे ।।**

**स्कन्द–** य एते सर्वयजमानानां यागनिष्पत्त्यर्थं प्रकाशं कुर्वन्ति एतान् **मा छेद्म** मा आत्मनि विच्छिदाम **रश्मीन्** । कः पुनः रश्मीनां विच्छेदः । यदर्थं ते प्रकाशं कुर्वन्ति तस्य यागस्य क्रियाघातं मा कार्ष्म । सततयागाद्वयं सुयागान् कुर्यामित्यर्थः । **इति नाधमानाः** इतिशब्द एवमित्यस्यार्थे । नाधतिर्याच्छार्थः । एवं याचमानाः । सर्वदा यागक्रियां प्रार्थयमाना इत्यर्थः । **पितॄणां शक्तीः** 'शक्तिः' (निघ.२,१) इति कर्मनाम । पितॄणां च सम्बन्धीनि प्रजोत्पत्त्यादीनि कर्माणि । **अनुयच्छमानाः** यमिर्बन्धनार्थः । अनुबन्धन्तः प्रजोत्पत्यादिकर्मसन्तानाविच्छेदार्थमित्यर्थः । किं कुर्वन्ति । उच्यते । **इन्द्राग्निभ्याम्** अर्थाय । **कम्** इति पदपूरणः । **वृषणः** वर्षितारः सोमस्य । इन्द्राग्निभ्याम् सोमस्य दातारः । **मदन्ति** 'मदति' (निघ.३,१४) इत्यर्चतिकर्मा । स्तुवन्तीन्द्राग्नी । किञ्च **ता** ताविन्द्राग्नी **अद्री** आदरयितारौ **धिषणायाः** स्तुतिलक्षणाया वाचः । तथा तथा स्तोतॄणामुपकुरुतो यथा यथा एनौ स्तोतार आद्रियन्त इत्यर्थः । क । **उपस्थे** । उपगम्य ब्राह्मणा देवा वा यत्र तिष्ठन्ति स उपस्थो यज्ञः ।। ३ ।।

**वेङ्कटमाधव–** **इन्द्राग्नी!** इत्थम् याचमानाः **पितॄणाम्** बलानि पितृपितामहादियदनुक्रमेण वयमपि नियच्छन्तः **रश्मीन्** पुत्रान् **मा छेद्म** इति पुत्रानाशास्ते । **इन्द्राग्निभ्याम्** अन्यम् **कम्** देवम् ग्रावाणः **मदन्ति** । **तौ हि** शत्रूणां मादयितारौ सोमाभिषवसाधनभूतायाः **धिषणायाः** समीपे भवतः । 'धिषणासि पर्वत्या ...... धिषणासि पार्वतेयी' (तै.१,९,६,१) इति यजुषी भवतः । हविर्यज्ञस्य सोमयज्ञसाम्यं ते सम्पादयतः । तयोर्दृष्टो धिषणाशब्दः । अपि वा कम् अन्यं यजमानाः स्तुवन्ति । तौ हि स्तुतेः समीपे भवत इति ।। ३ ।।

**मुद्गल–** **रश्मीन्** रश्मिशब्दो रज्जुवाची । यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति एवमविच्छिन्नान् पुत्रपौत्रादीन् **मा छेद्म** मा विच्छिन्नान् कुर्म इति बुद्ध्या **नाधमानाः** इन्द्राग्न्योः सकाशात् तथाविधान् पुत्रादीन् अनुवाचमानाः तदनन्तरम् **पितॄणां शक्तीः** शक्त्युत्पादकान् वीर्योत्पादकान् तान् **अनुयच्छमानाः** अनुक्रमेण नियतान् कुर्वन्तः । **वृषणः** सेक्तारः पुत्रोत्पादनसमर्थाः । सपत्नीका इत्यर्थः । एवम्भूता यजमानाः **इन्द्राग्निभ्याम् कम्** सुखं यथा भवति तथा **मदन्ति** स्तुवन्ति । **हि** यस्मात् **अद्री** शत्रूनादृणन्तौ हिंसन्तौ विदारयन्तौ ताविन्द्राग्नी **धिषणायाः** स्तुत्याः **उपस्थे** उपस्थाने समीपे भवतः । तस्मात् तत्सान्निध्याय स्तुवन्तीति भावः ।। ३ ।।

**सायण– रश्मीन्** । रश्मिशब्दो रज्जुवाची । यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति एवमविच्छिन्नान् पुत्रपौत्रादीन् **मा च्छेद्म** मा विच्छिन्नान् कुर्मेति बुद्ध्या **नाधमानाः** इन्द्राग्न्योः सकाशात् तथाविधान् पुत्रादीन् याचमानाः । तदनन्तरं **पितॄणां शक्तीः** शक्त्युत्पादकान् वीर्योत्पादकन् तान् पुत्रादीन् **अनुयच्छमानाः** अनुक्रमेण नियतान् कुर्वन्तः **वृषणः** सेक्तारः पुत्रोत्पादनसमर्थाः सपत्नीका इत्यर्थः । एवम्भूता यजमानाः **इन्द्राग्निभ्यां** कं सुखं यथा भवति तथा **मदन्ति** स्तुवन्ति । **हि** यस्मात् **अद्री** शत्रूनादृणन्तौ हिंसन्तौ विदारयन्तौ ताविन्द्राग्नी **धिषणायाः** स्तुत्याः **उपस्थे** उपस्थाने समीपे भवतः । तस्मात् तत्सांनिध्याय स्तुवन्तीति भावः । यद्वा । निपातानामनेकार्थत्वात् हिशब्दो यदेत्यर्थः । यदा ताविन्द्राग्नी उद्दिश्य अद्री अभिषव-साधनभूता ग्रावाणो धिषणाया उपस्थे । धिषणा अधिषवणचर्म । तस्योपरिष्टादिन्द्राग्न्यर्थं सोममभि-षुण्वन्ति । तदातदा यजमानाः स्तुवन्तीति योजनीयम् ।

छेद्म । 'छिदिर् द्वैधीकरणे' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्त्वाभावाल्लघूपधगुणः । 'न माङ्योगे' इत्यडभावः । रश्मीनन् । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति ईकारः सानुनासिकः । नाधमानाः । 'नाधृ याच्ञायाम्' । पितॄणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । मदन्ति । 'मदि स्तुतौ' । आगमानुशासनस्यानित्यत्वात् नुमभावः । व्यत्ययेन परस्मैपदम् ।। ३ ।।

**सिद्धाञ्जनम्– रश्मीन्** रश्मिः रज्जुपर्यायः, अस्माकं देवबन्धुत्वद्योतकान् बहोः कालात् परम्परागतान् रश्मीन् **मा छेद्म** मा विच्छिन्नान् कार्ष्म **इति नाधमानाः** इति प्रार्थयमानाः, **पितृणां** पूर्वेषामृषीणां **शक्तीः** असाधारणसामर्थ्यसम्पत्तीः **अनुयच्छमानाः** अनुक्रमेण स्वात्मसु नियताः धारिताः कुर्वन्तः **वृषणः** सेक्तारो बलाढ्याः यजमानाः **इन्द्राग्निभ्याम्** उभाभ्यां सकाशात् **कम्** सुखं यथा भवति तथा **मदन्ति** स्तुवन्ति । **हि** यस्मात् **ता** तौ इन्द्रोऽग्निश्च अद्री अत्तारौ हन्तारौ असुराणां, **धिषणायाः** स्तुतिनिष्पत्तिसाधनभूतायाः बुद्धेः **उपस्थे** उपस्थाने समीपे भवतः । अत्र अद्री इति सोमाभिषवग्रावाणौ कर्मणि प्रसिद्धौ । तर्हि, द्यावापृथिव्यौ तौ, पृथिव्यामग्निः दिवि इन्द्रः । एवमप्युपपद्यते अद्री इन्द्राग्नी इति ।

छेद्म–छिदिर् द्वैधीकरणे, लङि विकरणस्य लुक् । नाधमानाः–नाधृयाच्ञायाम् । मदन्ति–मद तृप्तियोगे ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**युवाभ्यां देवी धिषणा मदायेन्द्राग्नी सोममुशती सुनोति ।**
**तावश्विना भद्रहस्ता सुपाणी आ धावतं मधुना पृङ्क्तमप्सु ।। ४ ।।**
**युवाभ्याम् । देवी । धिषणा । मदाय । इन्द्राग्नी इति । सोमम् । उशती । सुनोति । तौ । अश्विना । भद्रऽहस्ता । सुपाणी इति सुऽपाणी । आ । धावतम् । मधुना । पृङ्क्तम् । अप्ऽसु ।। ४ ।।**

**स्कन्द– युवाभ्याम्** इति षष्ठ्यर्थे चतुर्थी । **मदाय** इत्येतेन चास्य सम्बन्धः । तावश्विना इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । युवयोर्मदार्थं **देवी धिषणा** दीव्यतिरत्र स्तुत्यर्थः । स्तोत्री अस्मदीया वाक् । हे **इन्द्राग्नी! सोमम् उशती** तांस्तानभिप्रेतानर्थान् कामयमाना **सुनोति** अभिषुणोति । यच्च देवनकामनाभिपदेषु आत्मनः कर्तृत्वं तदिदं कारणभूतायां वाच्युपचर्यते । ययोर्युवयोर्मदार्थमहं स्तुतिलक्षणया वाचा तांस्तानभिप्रेतान् उशन् सोममभिषुणोमीत्यर्थः । **तौ** हे **अश्विनौ!** अश्ववन्तौ । **भद्रहस्ता!** कल्याणहस्तौ! मङ्गल्यहस्तावित्यर्थः । **सुपाणी!** शोभनहस्तौ! । सुरूपहस्तावित्यर्थः । **आ धावतम्** 'धावति' (निघ.२,१४) इति गतिकर्मा । आगच्छतम् । आगत्य च **मधुना पृङ्क्तम्** मधुस्वादेन सोमेन सम्पर्चयतम् आत्मानम् । **अप्सु** तृतीयार्थे सप्तमी । तच्छ्रुतेश्च योग्यक्रियापदाध्याहारः । अद्भिः संस्कृतेन । मधुरं सोममद्भिः संस्कृतं पिबतमित्यर्थः ।। ४ ।।

**वेङ्कटमाधव– इन्द्राग्नी!** युवयोः **मदाय** श्रद्दधाना **धिषणा सोमम्** अभिषुणोति । **तौ** अश्ववन्तौ! भजनीयवाहू! कल्याणपाणी! भवदीयेन **मधुना** आगच्छतम् । तत् अस्मिन् अभिषूयमाणे सोमे सम्पर्चयतमिति ।। ४ ।।

**मुद्गल–** हे **इन्द्राग्नी! युवाभ्याम् मदाय** युवयोर्हर्षाय **देवी** द्योतमाना **उशती** युवां कामयमाना **धिषणा** मन्त्ररूपा वाक् **सोमं सुनोति** अभिषुणोति । यद्वा धिषणा अधिषवणचर्म । द्योतमानं तद्युवयोर्मदं कामयमानं सत् सोममभिषुणोति । ग्रावभिः स्वस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम् ।

**अश्विना!** अश्ववन्तौ! **भद्रहस्ता!** शाभेनदोर्दण्डौ! **सुपाणी!** मणिबन्धादूर्ध्वभागः पाणिः । शोभनपाणी! एवम्भूतौ हे **इन्द्राग्नी! तौ** युवाम् **आ धावतम्** शीघ्रमागच्छतम् । आगत्य च **अप्सु** उदकेषु वर्तमानेन **मधुना** माधुर्योपेतेन सारांशेन **पृङ्क्तम्** अस्मदीयं सोमं संयोजयतम् ।।

**सायण–** हे **इन्द्राग्नी! युवाभ्यां मदाय** युवयोर्हर्षाय **देवी** द्योतमाना **उशती** युवां कामयमाना **धिषणा** मन्त्ररूपा वाक् **सोमम्** अभिषुणोति । यद्वा । धिषणा अधिषवणचर्म । द्योतमानं तद्युवयोर्मदं कामयमानं सत् सोममभिषुणोति । ग्रावभिः तस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम् । **अश्विना** अश्ववन्तौ **भद्रहस्ता** शोभनदोर्दण्डौ **सुपाणी** । मणिबन्धादूर्ध्वभागः पाणिः । शोभनपाणी एवम्भूतौ हे इन्द्राग्नी! **तौ** युवाम् **आ धावतं** शीघ्रमागच्छतम् । आगत्य च **अप्सु** उदकेषु वर्तमानेन **मधुना** माधुर्योपेतेन सारांशेन **पृङ्क्तम्** अस्मदीयं सोमं संयोजयतम् । यद्वा । अप्सु वसतीवरीषु मधुना माधुर्यं संयोजयतम् । विभक्ति व्यत्ययः ।

युवाभ्याम् । षष्ठ्यर्थे चतुर्थी । उशती । 'वश कान्तौ' । उदादित्वात् शपो लुक् । ग्रहिज्यादिना सम्प्रसारणम् । 'उगितश्च' इति ङीप् । 'शतुरनुमः' इति नद्या उदात्तत्वम् । पृङ्क्तम् । 'पृची सम्पर्के' । रौधादिकः । लोटि थसस्तम् । 'श्नतोरल्लोपः' । अनुस्वारपरसवर्णौ । न च 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वं, 'न पदान्त' इत्यादिना निषेधात् ।। ४ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! युवाभ्याम् मदाय** युवयोर्हर्षाय **देवी** द्योतमाना **धिषणा** मन्त्रात्मिका वाक् **उशती** युवां कामयमाना सती **सोमम् सुनोति** अभिषुणोति । अश्विनोः कृत्यमपि इन्द्राग्नी निर्वहत इति अश्विनाविव इन्द्राग्नी सम्बोधयति । **अश्विना** अश्ववन्तौ बलवेगयुक्तौ, **भद्रहस्ता** कल्याणकारिभुजोपेतौ, **सुपाणी** शोभनपाणियुक्तौ एवम्भूतौ हे **इन्द्राग्नी! तौ** युवां **आधावतम्** शीघ्रमागच्छतम् । आगत्य च **अप्सु** उदकेषु ज्योतिर्बलादिलक्षणेषु वर्तमानेन **मधुना** सारांशेन आत्यन्तिकसुखेन **पृङ्क्तम्** संयोजयतं अस्मदीयं सोमम् ।

पृङ्क्तम्–पृची सम्पर्के, रौधादिकः, लोटि थसस्तम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**युवामिन्द्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।**
**तावासद्या बर्हिषि यज्ञे अस्मिन् प्र चर्षणी मादयेथां सुतस्य ।। ५ ।।**

**युवाम् । इन्द्राग्नी इति । वसुनः । विऽभागे । तवःऽतमा । शुश्रव । वृत्रऽहत्ये ।**
**तौ । आऽसद्य । बर्हिषि । यज्ञे । अस्मिन् । प्र । चर्षणी इति । मादयेथाम् । सुतस्य ।।**

**स्कन्द– युवाम्** हे **इन्द्राग्नी! वसुनः** धनस्य **विभागे तदस्तमा** 'तवः' (निघ.२,९) इति बलनाम । सामर्थ्याश्चात्रान्तर्णीतमत्वर्थः । बलवत्तमौ । **शुश्रव** श्रुतवानहम् । धनं स्तोतृभ्यो विभजतोर्युवयोर्ये प्रतिबन्धे वर्तन्ते तान् बलेन हन्तुमतिशयेन समर्थौ युवामहं शुश्रावेत्यर्थः । न च केवले वसुनो विभागे । किं तर्हि । **वृत्रहत्ये** वृत्रहनने । यावीदृशौ स्थः **तौ आसद्य** निषद्य **बर्हिषि यज्ञे अस्मिन्** अस्मदीये हे **चर्षणी!** मनुष्यनाम वा चर्षणीशब्दः (नि.२,३) । अथवा 'विचर्षणिः, विश्वचर्षणिः' (निघ.३,११) इति पश्यतिकर्मसु पाठात् द्रष्टृशब्दपर्यायः । मनुष्याकारौ द्रष्टारौ वा सर्वार्थानाम् । **प्र मादयेथाम्** प्रकर्षेण मादयेथां तर्पयेथाम् आत्मानम् । **सुतस्य** तृतीयार्थे षष्ठ्येषा । षष्ठीश्रुतेर्वैकदेशेनेति शेषः । सुतेन सोमेन सुतस्य सोमस्य वैकदेशेन स्वांशलक्षणेन ।। ५ ।।

**वेङ्कटमाधव– युवाम् इन्द्राग्नी!** सङ्ग्रामे बलवत्तमौ **वसुनः विभागे** उद्युक्तावहमश्रौषम् । **अस्मिन् यज्ञे तौ** स्तीर्णे **बर्हिषि आसद्य** द्रष्टारौ! प्रकर्षेण माद्यतं सोमेन ।। ५ ।।

**मुद्गल–** हे **इन्द्राग्नी! वसुनः** धनस्य **विभागे** स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ **युवाम् वृत्रहत्ये** वृत्रस्यासुरस्य हनने **तवस्तमा** अतिशयेन बलिनौ प्रवृद्धत्तमौ वा **शुश्रव** अश्रौषम् । हे **चर्षणी!** सर्वस्य द्रष्टाराविन्द्राग्नी! **तौ** युवाम् अस्मदीये **अस्मिन् यज्ञे बर्हिषि** वेद्यामास्तीर्णे दर्भे **आसद्य** उपविश्य **सुतस्य** अभिषुतस्य सोमस्य पानेन **प्र मादयेथाम्** प्रकर्षेण तृप्तौ भवतम् ।। ५ ।।

**सायण–** हे **इन्द्राग्नी! वसुनः** धनस्य **विभागे** स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ **युवां वृत्रहत्ये** वृत्रस्यासुरस्य हनने **तवस्तमा** अतिशयेन बलिनौ प्रवृद्धतमौ वा **शुश्रव** अश्रौषम् । हे **चर्षणी!** सर्वस्य द्रष्टाराविन्द्राग्नी **तौ** युवामस्मदीये **अस्मिन् यज्ञे बर्हिषि** वेद्यामास्तीर्णे दर्भे **आसद्य** उपविश्य **सुतस्य** अभिषुतस्य सोमस्य पानेन **प्र मादयेथां** प्रकर्षेण तृप्तौ भवतम् ।

विभागे । 'भज सेवायाम्' । भावे घञ् । 'चजोः कुधिण्ण्यतोः' इति कुत्वम् । थाथादिनोत्तरपदान्तोदात्तत्वम् । तवस्तमा । तव इति बलनाम । लुप्तमत्वर्थीयादेतस्मादातिशायनिक-

स्तमप् । यद्वा । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । तस्मादौणादिकः कर्तरि असिप्रत्ययः । 'सुपां सुलुक्' इति विभक्तेः पूर्वसवर्णदीर्घत्वम् । वृत्रहत्ये । 'हनस्त च' इति हन्तेर्भावे क्यप्, तत्संनियोगेन तकारान्तादेशश्च । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! वसुनः** दिव्यस्य धनस्य **विभागे** विभजने यथार्हं यजमानाय भागदाने वर्तमानौ **युवाम्** वृत्रहत्ये वृत्रवधे **तवस्तमा** अतिशयेन बलिनौ वां **शुश्रव** अश्रौषम् । हे **चर्षणी!** द्रष्टारौ सर्वस्य, **तौ** युवां **अस्मिन् यज्ञे** मदीये यजने **बर्हिषि** आस्तीर्णे आसने **आसद्य** उपविश्य **सुतस्य** अभिषुतस्य सोमस्य स्वीकरणेन **प्र मादयेथाम्** प्रकर्षेण तृप्तौ भवतम् ।

तवस्तमा–तव इति बलनाम, तस्मात् लुप्तमत्वर्थीयात्तमप् ।। ५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये अष्टाविंशो वर्गः ।।

## ।। अथ एकोनत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।**
**प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ।। ६ ।।**
**प्र । चर्षणिऽभ्यः । पृतनाऽहवेषु । प्र । पृथिव्याः । रिरिचाथे इति । दिवः । च । प्र । सिन्धुऽभ्यः । प्र । गिरिऽभ्यः । महिऽत्वा । प्र । इन्द्राग्नी इति । विश्वा । भुवना । अति । अन्या ।। ६ ।।**

**स्कन्द– प्र** इत्येषोऽतीत्येतस्य स्थाने । प्रतिशब्दं च **रिरिचाथे** इत्याख्यातमनुषक्तव्यम् । अतिरिच्येथे युवाम् । कुतः । **चर्षणिभ्यः** । क्व । **पृतनाहवेषु** सङ्ग्रामाह्वानेषु । केन । सामर्थ्याद् बलेन । किञ्च अतिरिच्येथे युवाम् **पृथिव्याः दिवः च** । न च केवलाभ्यां द्यावापृथिवीभ्याम् । किन्तर्हि । अतिरिच्येथे **सिन्धुभ्यः** नदीभ्योऽपि । अतिरिच्येथे **गिरभ्यः** पर्वतेभ्योऽपि । केन । **महित्वा** महत्त्वेन । किञ्च अतिरिच्येथे युवा हे **इन्द्राग्नी! विश्वा** भुवना **अति अन्या** विश्वा भुवनेति कर्मश्रुतेरतीति चोपसर्गाद्योग्यक्रियापदाध्याहारः । सर्वाणि भूतान्यतीत्यान्यानि । नान्यः कश्चिदतिरिच्यते यथा युवामित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** असुराणां सङ्ग्रामाह्वानेषु तत्रत्येभ्यः सर्वेभ्योऽपि मनुष्येभ्यः बलेन अतिरिक्तौ भवतः । एवं पृथिव्यादिभ्योऽपि युवयोर्बलमतिरिक्तं महत्त्वेन । **प्र रिरिचाथे इन्द्राग्नी!** सर्वाण्येवान्यानि भुवनानि । उक्तेभ्यो यद्यन्यानि सन्ति तानि चेति । समानार्थम् अतिं दृष्ट्वा **प्रो निवर्तत** इति ।। ६ ।।

**मुद्गल–** **पृतनाहवेषु** सङ्ग्रामेषु रक्षणार्थमाह्वानेषु सत्सु हे **इन्द्राग्नी!** आगतवन्तौ युवाम् **चर्षणिभ्यः** सर्वेभ्योऽपि मनुष्येभ्यः **महित्वा** महत्त्वेन **प्र रिरिचाथे** अतिरिच्येथे । सर्वाधिकौ भवथ इत्यर्थः । तथा **पृथिव्याः** सर्वस्या भूमेः प्र रिरिचाये । **दिवः** च प्र रिरिचाथे । **सिन्धुभ्यः** अपि प्र रिरिचाथे । एवं **गिरिभ्यः** प्र रिरिचाथे । सिन्धवः स्यन्दनशीला आपः । गिरयः पर्वताः । अपि च हे **इन्द्राग्नी! विश्वा** भुवना सर्वाणि भूतजातानि **अन्या** उक्तव्यतिरिक्तानि यानि सन्ति तानि **अति** अतीत्य प्र रिरिचाथे अधिकौ भवथः ।। ६ ।।

**सायण–** ऐन्द्राग्नस्य पशोर्हविषः 'प्र चर्षणिभ्यः' इत्येषा याज्या । 'प्रदानानाम्' इति खण्डे सूत्रितं– 'प्र चर्षणिभ्यः पृतनाहवेष्वा देवो यातु सविता सुरत्नः' (आश्व.श्रौ.३.७) इति ।

**पृतनाहवेषु** पृतनासु सङ्ग्रामेषु रक्षणार्थमाह्वानेषु सत्सु हे **इन्द्राग्नी!** आगतवन्तौ युवां **चर्षणिभ्यः** सर्वेभ्योऽपि मनुष्येभ्यः **महित्वा** महत्त्वेन **प्र रिरिचाथे** अतिरिच्येथे सर्वाधिकौ भवथ इत्यर्थः । अत्रोपसर्गवशाद्धातुः स्वाभिधेयविपरीतमर्थमाचष्टे यथा प्रस्मरणं प्रस्थानमिति । तथा **पृथिव्याः** सर्वस्या भूमेश्च **प्र रिरिचाथे** । एवं द्युप्रभृतिभ्योऽपि । सिन्धवः स्यन्दनशीला आपः । गिरयः पर्वताः । अपि च हे इन्द्राग्नी **विश्वा भुवना** सर्वाणि भूतजातानि **अन्या** उक्तव्यतिरिक्तानि यानि सन्ति तान्यतीत्य **प्र रिरिचाथे** अधिकौ भवथः ।

पृतनाहवेषु । पृतनासु हवः पृतनाहवः । ह्वेञः 'भावेऽनुपसर्गस्य' इति अप् संप्रसारणं च । व्यत्ययेन थाथादिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वम् । रिरिचाथे । 'रिचिर् विरेचने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । यद्वा । लट्येव 'बहुलं छन्दसि' इति विकरणस्य श्लुः । मङ्गित्वा । 'मह पूजायाम्' । औणादिक इन्प्रत्ययः । तस्य भावो महित्वम् । 'सुपां सुलुक्' इति तृतीयाया डादेशः ।। ६ ।।

**सिद्धाञ्जनम्–** हे **इन्द्राग्नी! पृतनाहवेषु** पृतनासु युद्धेषु हवेषु रक्षार्थं आह्वानेषु सत्सु,

युवां **महित्वा** स्वमहत्त्वेन **चर्षणिभ्यः** द्रष्टृभ्यः सर्वेभ्यः **प्र रिरिचाथे** प्रकर्षेण अतिरिच्येथे, रक्षणे सर्वाधिकौ भवथः । तथा रक्षणे विषये **पृथिव्याः प्र** विस्तीर्णाया भूमेः प्ररिरिचाथे अत्यधिकौ भवथ, **दिवश्च प्र** द्युलोकादप्यतिरिक्तौ युवां, **सिन्धुभ्यः प्र** स्यन्दमानाभ्यः अद्भ्यः अधिकौ, **गिरिभ्यः प्र** पर्वतेभ्यः चाधिकौ, **अन्या** अन्यानि अत्रानुक्तानि **विश्वा भुवना** सर्वाणि भूतजातानि, **अति** अतिरिक्तौ भवथः ।

रिरिचाथे–रिचिर् विरेचने, छन्दसि वर्तमाने लिट् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**आ भ॑रतं॒ शिक्ष॑तं वज्रबाहू अ॒स्माँ इ॑न्द्राग्नी अवतं॒ शची॑भिः ।**
**इ॒मे नु ते र॒श्मयः॒ सूर्य॑स्य॒ येभिः॑ सपि॒त्वं पि॒तरो॑ न॒ आस॑न् ।। ७ ।।**
**आ । भ॒र॒त॒म् । शिक्ष॑तम् । वज्र॑बाहू॒ इति॑ वज्र॑ऽबाहू । अ॒स्मान् । इ॒न्द्रा॒ग्नी॒ इति॑ । अ॒व॒त॒म् । शची॑भिः । इ॒मे । नु । ते । र॒श्मयः॑ । सूर्य॑स्य । येभिः॑ । स॒ऽपि॒त्वम् । पि॒तरः॑ । न॒ः । आस॑न् ।। ७ ।।**

**स्कन्द– आ भरतम्** धनानि । आहृत्य च **शिक्षतम्** दत्तमस्मभ्यम् । हे **वज्रबाहू!** वज्रसम्बन्धाद्धस्तावत्र बाहू उच्येते । वज्रहस्तौ! । किञ्च **अस्मान्** हे **इन्द्राग्नी! अवतम्** पालयतम् । **शचीभिः** स्वाभिः प्रज्ञाभिः कर्मभिर्वा पालनाख्यै । किञ्च **इमे नु ते** इत्यादि । इमे ते **रश्मयः सूर्यस्य** रश्मयः स्वभूताः । **येभिः सपित्वम्** सहपानं **पितरो नः** अस्माकं पितरोऽङ्गिरसः **आसन्** अस्तिरत्र प्राप्त्यर्थः । प्राप्ताः । दृश्यते ह्यस्तेः प्राप्तौ प्रयोगः । 'यं कामयेत राष्ट्रियमयं राष्ट्रं स्यादिति' (मै.७,३,३७) इति । अङ्गिरसो हि देवानां सखायः । तेषां सखित्वाद्रश्मिभिरन्यैश्च देवैः सहोपपन्नं सहपानम् । कथं पुनरस्यार्धर्चस्य पूर्वेण सहैकवाक्यता । अभिजन्मप्रदर्शनेन । एतदुक्तं भवति– ये रश्मिभिः सह सहपानं प्राप्ता अङ्गिरसस्ते नः पितरः । तेन विशिष्टाभिजनोपेतत्वादन्नदानपालनार्हा वयम् । अतोऽस्मभ्यं दत्तम्, पालयतं चास्मानिति ।। ७ ।।

**वेङ्कटमाधव– आ भरतम्** धनानि । आहृत्य च अस्मभ्यं प्रयच्छतम् । आयुधहस्तौ! अस्मान् **इन्द्राग्नी!** रक्षतं पालनाख्यैः कर्मभिः । **इमे** खलु **ते रश्मयः सूर्यस्य** यैरिन्द्राग्न्योः स्वभूतैरस्माकम् **पितरः** ऐक्यं गता अङ्गिरसः सूर्यरश्मिभिः आप्याययन्तीति ।। ७ ।।

**मुद्गल–** हे **वज्रबाहू! वज्रहस्तौ! इन्द्राग्नी! आ भरतम्** अस्मदर्थं धनमाहरतम् । आहृत्य च **शिक्षतम्** अस्मभ्यं दत्तम् । अपि च अस्मान् अनुष्ठातृन् **शचीभिः** आत्मीयैः कर्मभिः **नु** क्षिप्रम् **अवतम्** रक्षतम् । किञ्च **सूर्यस्य** सूर्यात्मन इन्द्रस्य **ते इमे रश्मयः येभिः** रश्मिभिः यैरर्चिर्भिः **नः** अस्माकम् **पितरः** पूर्वपुरुषाः **सपित्वम्** सहप्राप्तव्यं स्थानम् **आसन्** ब्रह्मलोकमगच्छन् ।। ७ ।।

**सायण–** पूर्वोक्त एव पशौ 'आ भरतम्' इत्येषा पुरोडाशस्यानुवाक्या । सूत्रितं च– 'आ भरतं शिक्षतं वज्रबाहू उभा वामिन्द्राग्नी आहुवध्यै' (आश्व.श्रौ.३.७) इति ।

हे **वज्रबाहू!** वज्रहन्तौ **इन्द्राग्नी आ भरतम्** अस्मदर्थं धनमाहरतम् । आहृत्य च **शिक्षतं** अस्मभ्यं दत्तम् । शिक्षतिर्दानकर्मा । अपि च **अस्मान्** अनुष्ठातृन् **शचीभिः** । कर्मनामैतत् । आत्मीयैः कर्मभिः **अवतं** रक्षतम् । किं च सूर्यात्मन इन्द्रस्य **येभिः** रश्मिभिः यैः अर्चिर्भिः **नः** अस्माकं **पितरः** पूर्वपुरुषाः **सपित्वं** सहप्राप्तव्यं स्थानम् **आसन्** ब्रह्मलोकमगच्छन् । अर्चिरादिमार्गेण हि ब्रह्मलोकमुपासका गच्छन्ति । तथा च श्रूयते– 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः' (छा.उ.५.१०.१) इति । यद्वा । येभिः रश्मिभिः सपित्वं समवेतत्वमध्यगच्छन् । **ते रश्मयः इमे नु** इदानीमस्माभिर्दृश्यमाना एत एव खलु । सूर्यात्मन इन्द्रस्य ये रश्मयस्त एवाग्नेरपि । तथा च श्रूयते– 'अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे' (तै.ब्रा.२.१.२.९) इति । तस्मात् सूर्यस्य रश्मीनां स्तवनेनेन्द्राग्न्योरुभयोरपि स्तुतिः सिद्धा ।

भरतम् । 'हृग्रहोर्भः' इति भत्वम् । शिक्षतम् । 'शिक्ष विद्योपादाने' । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम् । धातुस्वरः शिष्यते । तिङः परत्वान्निघाताभावः । सपित्वम् । 'आप्लृ व्याप्तौ' । अस्मात् सशब्दोपपदात् 'कृत्यार्थे तवैकेन्' इति त्वन्प्रत्ययः । पृषोदरादित्वात् धातोः पिभावः । यद्वा । 'पपसमवाये' । 'इन्सर्वधातुभ्यः' इति इन् । सपेर्भावः सपित्वम् । आसन् । 'अस गतिदीप्त्यादानेषु' लङि आडागम उदात्तः । 'यद्वृत्तान्नित्यम्' इति निघाताभावः ।। ७ ।।

**सिद्धाञ्जनम्–** हे **वज्रबाहू!** वज्रहस्तौ, **इन्द्राग्नी, आभरतम्** आहरतं सामर्थ्यात् ऋतसम्पदमिति शेषः, आहृत्य च **शचीभिः** शक्तिभिः **अस्मान् शिक्षतम्** शिक्षयतं, अन्तर्भावितण्यर्थः,

अवतम् वर्धयतम् अस्मान् । तादृशशिक्षणाय वयमिदानीमधिकारिणः संवृत्ता एवेत्याह । **इमे नु** अस्माकं प्रत्यक्षा एव **ते सूर्यस्य रश्मयः** ते ऋतसूर्यरश्मयः, **येभिः** रश्मिभिः **नः पितरः** अस्माकं पूर्वे पुरुषा ऋषयः **सपित्वम्** सहप्राप्तव्यं स्थानं **आसन्** गता आसन्, अगच्छन् ।

शिक्षतम्–शिक्ष विद्योपादाने । सपित्वम्–आप्लृ व्याप्तौ, अस्मात् सशब्दोपपदात् कृत्यार्थे त्वन्प्रत्ययः, धातोः पिभावः पृषोदरादित्वात् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। ८ ।।**
पुरम्ऽदरा । शिक्षतम् । वज्रऽहस्ता । अस्मान् । इन्द्राग्नी इति । अवतम् । भरेषु । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ।। ८ ।।

**स्कन्द–** हे **पुरन्दरा!** असुरपुराणां दारयितारौ! **शिक्षतम्** दत्तमस्मभ्यं हे **वज्रहस्ता!** किञ्च **अस्मान्** हे **इन्द्राग्नी! अवतम् भरेषु** सङ्ग्रामेषु । **तत् नः** इत्याद्युक्तार्थम् (ऋ १,१४,१६ द्र.) ।। ८ ।।

**वेङ्कटमाधव–** असुरपुराणां दारयितारौ! धनानि प्रयच्छतम् वज्रहस्तौ! **अस्मान् इन्द्राग्नी!** रजतं च सङ्ग्रामेषु । **तन्नः** इति ।। ८ ।।

**मुद्गल–** हे **वज्रहस्ता!** हस्तेन गृहीतवज्रौ! **पुरन्दरा!** असुरपुराणां दारयितारौ! **इन्द्राग्नी! शिक्षतम्** अस्मदपेक्षितं धनं प्रयच्छतम् । अपि च **भरेषु** सङ्ग्रामेषु **अस्मान् अवतम्** रक्षतम् । यदनेन सूक्तेन प्रार्थितं **तत्** अस्मदीयं मित्रादयः **ममहन्ताम्** पूजयन्तु ।। ८ ।।

**सायण–** हे **वज्रहस्ता!** हस्तेन गृहीतवज्रौ **पुरंदरा** असुरपुराणां दारयितारौ **इन्द्राग्नी शिक्षतम्** अस्मदपेक्षितं धनं प्रयच्छतम् । अपि च **भरेषु** सङ्ग्रामेषु **अस्मान् अवतं** रक्षतम् । यदनेन सूक्तेन प्रार्थितं **तत्** अस्मदीयं मित्रादयः **ममहन्तां** पूजयन्ताम् ।

पुरन्दरा । 'पूः सर्वयोर्दारिसहोः' (पा.सू.३.२.४१) इति खच् । 'वाचंयमपुरन्दरौ च' (पा.सू.६.३.६९) इति निपातनात् अम् । 'सुपां सुलुक्' इति विभक्तेः आकारः ।। ८ ।।

**सिद्धाञ्जनम्**– हे **वज्रहस्ता!** वज्रधरहस्तयुक्तौ, **पुरन्दरा** असुरपुराणां दारयितारौ, **इन्द्राग्नी, अस्मान् शिक्षतम्** शिक्षयतं, दिव्यरहस्यविद्यां ग्राहयतम् । **भरेष** सङ्ग्रामेषु **अवतम्** रक्षतम् । यज्ञयात्रायां सङ्ग्रामो भवतीति स्मार्यम् । तन्नो मित्र इत्यादि गतम् ।

पुरन्दरा–वाचंयमपुरन्दरौ चेति निपातनादम्, विभक्तेराकारः ।। ८ ।।

।। इति प्रथमाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः ।।

## ।। अथ त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ११०)

(९ कुत्स आङ्गिरसः । ऋभवः । जगती । ५,९ त्रिष्टुप्)

**त॒तं मे॒ अप॒स्तदु॑ तायते॒ पुनः॒ स्वादि॑ष्ठा धी॒तिरु॒चथा॑य शस्यते ।**
**अ॒यं स॑मु॒द्र इ॒ह वि॒श्वदे॑व्यः॒ स्वाहा॑कृतस्य॒ समु॑ तृप्णुत ऋभवः ।। १ ।।**

त॒तम् । मे॒ । अपः॑ । तत् । ऊँ॒ इति॑ । ता॒य॒ते॒ । पु॒न॒रिति॑ । स्वादि॑ष्ठा । धी॒तिः । उ॒चथा॑य । श॒स्य॒ते॒ । अ॒यम् । स॒मु॒द्रः । इ॒ह । वि॒श्वऽदे॑व्यः । स्वाहा॑ऽकृतस्य । सम् । ऊँ॒ इति॑ । तृ॒प्णु॒त॒ । ऋ॒भ॒वः॒ ।। १ ।।

**स्कन्द**– 'आर्भवे द्वे' । ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः बभूवुः (या.११,१६) । तेऽतिशयवद्भिः कर्मभिर्देवत्वमीयुः । तेऽत्र साहचर्यादन्यतमवचनेनाप्यृभुशब्देन सर्वे प्रतिपाद्यन्ते । तद्देवत्ये द्वे एते सूक्ते । **ततम्** पूर्वस्मिन् काले विततम् **मे** मम स्वभूतम् **अपः** यज्ञाख्यं कर्म । **तत् उ तायते पुनः** उकार एवार्थे । तदेवेदानीमपि पुनस्तायते । पूर्वस्मिंश्च काले इदानीं चाहं यष्टेत्यर्थः । किञ्च **स्वादिष्ठा** अतिशयेन स्वाद्वी । मनसः प्रीतिकरीत्यर्थः । **धीतिः** धीकर्मत्वात् स्तुत्यान् वा प्रति धीयमानत्वात् स्तुतिरत्र धीतिरुच्यते । **ऊचथाय** उचथः स्तुतिवचनार्हस्तस्मै । **शस्यते** । तस्मै स्तुतिरुच्यत इत्यर्थः । किञ्च **अयम् समुद्रः** समुद्रसदृशोऽत्यन्तप्रभूतः सोमः इह यज्ञे **विश्वदेव्यः** सर्वदेवयोग्यभूतः । सम्यक् स्तुतश्चेत्यर्थः । एतत् सर्वं ज्ञात्वा **स्वाहाकृतस्य** तृतीयार्थे षष्ठ्येषा । स्वाहाकृतेन सोमेनाहुतेनेत्यर्थः । **सम् उ तृप्णुत** सम्यक् तृप्यत । उकारस्तु पदपूरणः । हे ऋभवः! ।। १ ।।

**वेङ्कटमाधव–** **ततम्** मे कर्म । **तत्** एव पुनः **तायते** । स्वादुतमा स्तुतिश्च स्तुत्याय ऋभूणां गणाय **शस्यते** । अपि च **अयम्** समुद्रसदृशः **विश्वदेव्यः** सोमः इह सुतः । तेन हुतेन **ऋभवः!** सन्तृप्यत ।। १ ।।

**मुद्गल–** 'ततं मे' इति नवर्चं पञ्चमं सूक्तम् । कुत्स ऋषिः । पञ्चमीनवम्यौ त्रिष्टुभौ । शिष्टा जगत्यः । ऋभवो देवता ।।

हे **ऋभवः!** मे मया **अपः** अग्निष्टोमादिरूपं कर्म **ततम्** विस्तारितं बहुशः पूर्वमनुष्ठितम् । **तत्** उ तदेव पुनः **तायते** विस्तार्यते । अनुष्ठीयत इत्यर्थः । तत्र **स्वादिष्ठा** स्वादुतमा अतिशयेन प्रीतिकरी **धीतिः** स्तुतिश्च **उचथाय** स्तुत्याय **शस्यते** पठ्यते । अपि च **इह** अस्मिन् यागे **अयम्** समुद्रः समुन्दनशीलो यः सोमरसः **विश्वदेव्यः** सर्वेभ्यो देवेभ्यः पर्याप्तौ यथा भवति तथा सम्पादितः । तस्य **स्वाहाकृतस्य** स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन **सम्** उ **तृप्णुत** सम्यगेव तृप्ता भवत ।। १ ।।

**सायण–** 'ततं मे' इति नवर्चं पञ्चमं सूक्तं कुत्सस्यार्षं ऋभुदेवताकम् । पञ्चमीनवम्यौ त्रिष्टुभौ । शिष्टाः सप्त जगत्यः । तथा चानुक्रान्तं– 'ततं नवार्भवं तु पञ्चम्यन्त्ये त्रिष्टुभौ' इति । अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदमार्भवं निविद्धानम् । सूत्रितं च 'तृतीयस्य' इति खण्डे– 'ततं मे अप इति वैश्वदेवम्' (आश्व.श्रौ.७.७) इति ।

हे **ऋभवः! मे** मया **अपः** अग्निष्टोमादिरूपं कर्म **ततं** विस्तारितं बहुशः पूर्वमनुष्ठितम् । **तदु** तदेव **पुनः** **तायते** विस्तार्यते अनुष्ठीयते इत्यर्थः । तत्र **स्वादिष्ठा** स्वादुतमा अतिशयेन प्रीतिकरी **धीतिः** स्तुतिश्च **उचथाय** स्तुत्याय **शस्यते** पठ्यते । अपि च **इह** अस्मिन्यागे **समुद्रः** समुन्दनशीलः **अयं** सोमरसः **विश्वदेव्यः** सर्वेभ्यो देवेभ्यः पर्याप्तो यथा भवति तथा सम्पादितः । तस्य **स्वाहाकृतस्य** स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन **समु** **तृप्णुत** सम्यगेव तृप्ता भवत ।

ततम् । 'तनु विस्तारे' । निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । अपः । 'आप्लृ व्याप्तौ' । 'आपः कर्माख्यायां ह्रस्वो नुट्च वा' इति असुन् धातोर्ह्रस्वश्च । तायते । 'तनोतेर्यकि' (पा.सू.६.४.४४) इति आत्वम् । स्वादिष्ठा । स्वादुशब्दादातिशायनिक इष्ठन् । 'टेः' इति टिलोपः । उचथाय । 'वच परिभाषणे' ।

औणादिकः अथक्प्रत्ययः । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । समुद्रः । 'उन्दी क्लेदने' । 'स्फायितञ्चि' इत्यादिना रक् । 'अनिदिताम्' इति नलोपः । विश्वदेव्यः । देवार्हो भागो देव्यः । 'छन्दसि च' इति यप्रत्ययः । विश्वे सर्वे देव्या यस्मिन्सोमे । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेनासंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । स्वाहाकृतस्य । स्वाहाशब्दस्य ऊर्यादित्वेन गतित्वात् (पा.सू.१.४.६१) 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । तृष्णुत । 'तृप प्रीणने' । 'स्वादिभ्यः श्नुः' । ऋभव इत्यनेन संहितायाम् 'ऋत्यकः' इति प्रकृतिभावः ।। १ ।।

**सिद्धाञ्जनम्**– 'ततं म' इति नवर्चं पञ्चमं सूक्तं कुत्सस्यार्षं ऋभुदेवताकं, पञ्चमीनवम्यौ त्रिष्टुभौ, शिष्टा जगत्यः ।

मेधातिथेरार्भवसूक्तस्य व्याख्याने (२० सू.) ऋभूनधिकृत्योक्तं सर्वमिहावधेयम् । 'ऋभवो मनुष्याः सन्तस्तपसा देवत्वं प्राप्ताः' इत्यारभ्य 'साङ्केतिकं गूढार्थमन्तरेण प्रहेलिकाप्रायाणामेषा सूक्तानां ऋजुविवरणं न सिध्यतीत्यापाततोऽवलोकनादेव स्फुटं लक्ष्येत' इत्यादि हि तत्रोक्तम् ।

हे **ऋभवः! मे** मम सम्बन्धि **अपः** कर्म यजनात्मकं **ततम्** विस्तारितं, यथा यात्रारूपं यज्ञस्य, तथा तन्तुरूपमपि, प्रसिद्धम् । **तदु** तदेव **पुनस्तायते** विस्तार्यते । तत्र **स्वादिष्ठा** स्वादुतमा, अत्यन्तप्रीतिकरी **धीतिः** स्तुतिः **उचथाय** स्तुत्याय **शस्यते** कीर्त्यते । अपि च **इह** अस्मिन् यजने **समुद्रः** समुन्दनशीलः **अयम्** सोमरसः **विश्वदेव्यः** सर्वेभ्यो देवेभ्यः यथा अर्हः पर्याप्तस्तथा निष्पादितः । **स्वाहाकृतस्य** देवतृप्तिवाचकस्वाहाकारेणार्पितस्य तस्य सोमस्य पातेन **समु तृष्णुत** सम्यगेव तृप्ता भवत ।

उचथाय–वचेः सम्प्रसारणम्, औणादिकः अथक्प्रत्ययः । समुद्रः–उन्दी क्लेदने । विश्वदेव्यःदेवार्हो भागो देव्यः, छन्दसि चेति यः, विश्वे देव्या यस्मिन् स सोमः । तृष्णुत–तृष प्रीणने, स्वादिभ्यः श्नुः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**आभोगयं प्र यदिच्छन्त ऐतनापाकाः प्राञ्चो मम मे चिदापयः ।**
**सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम् ।। २ ।।**

**आऽभोगर्यम् । प्र । यत् । इच्छन्तः । ऐतन । अपाकाः । प्राञ्चः । मर्म । के । चित् । आपयः । सौधन्वनासः । चरितस्य । भूमना । अगच्छत । सवितुः । दाशुषः । गृहम् ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'ऋभवो यज्ञियत्वं प्रार्थयमानाः प्रजापतेः सकाशमगमन् । अथ प्रजापतिः सवितारमाहूयावोचत्, एतेऽपि यज्ञिया भवन्त्विति । तथेति सविता प्रतिपद्य तान् स्वगृहं नीत्वा द्वादश दिनान्यातिथ्यमेषाम् अकार्षीदिति । तदेतद् वामदेवो वक्ष्यति– 'द्वादश द्यून् यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः' (ऋ.४,३३,७) इति । तदेवेहाप्युच्यते– **आभोगयम्** इत्यादिना । आभोगः सम्भोग इति पर्यायौ । आभोग एवाभोगयः । स्वार्थिको यशब्द उपजनः । देवैस्सह सम्भोगम् **इच्छन्तः** । यज्ञियत्वं प्रार्थयमाना इत्यर्थः । **यत्** यदा यूयम् **प्र ऐतन** प्रशब्दोऽत्र धात्वर्थानुवादी । **लम्बते** प्रलम्बत इति यथा । प्रजापतेः सकाशं गताः स्थ । कीदृशाः । **अपाकाः** अपक्तव्यप्रज्ञाः । अत्यन्तपरिपक्वप्रज्ञा इत्यर्थः । **प्राञ्चः** 'अञ्चु गतिपूजनयोः' । प्रगन्तारो देवान् यज्ञान् वा प्रति, प्रकर्षेण वा पूजयितारो देवानाम्, स्वयं वा पूज्याः । मम **कुत्सस्य** । **के चित् आपयः** केचित् ज्ञातयः । कुत्सो ह्याङ्गिरसः । ऋभवोऽपि सुधन्वन आङ्गिरसस्य पुत्राः । अत आङ्गिरसत्वात् कुत्सस्य भवन्त्यृभयः केचित् ज्ञातयः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा हे **सौधन्वनासः!** सुधन्वनः पुत्राः! एकचमसस्य चतुष्टयकरणादेव स्वस्य **चरितस्य भूमना** माहात्म्येन **अगच्छत** गताः स्थ **सवितुः गृहम् दाशुषः** यज्ञियत्वमातिथ्यं वा युष्मभ्यं दत्तवतः ।। २ ।।

**वेङ्कटमाधव–** सुधन्वन आङ्गिरसस्य पुत्रत्वाद् ऋभव आङ्गिरसस्य कुत्सस्य पुरातनाः 'के चन' ज्ञातयो भवन्ति अपक्तव्यप्रज्ञाः । **आभोगयम्** आभोग्यम् । अकारलोपाभावश्छान्दसः । यज्ञे सोमम् **इच्छन्तः** तपश्चरणाय यदा यूयम् अपक्तव्यप्रज्ञाः गतवन्तः, तदा सुधन्वनः पुत्रा ऋभवः! तपश्चरणस्य महत्तया अमृतत्वप्रदातुः **सवितुः** तपसोऽन्ते देवैरमृतत्वमेषां प्रदातव्यमिति प्रार्थितस्य **गृहम् अगच्छत** ।। २ ।।

**मुद्गल–** हे **ऋभवः! अपाकाः** परिपक्वज्ञानाः **प्राञ्चः** पूर्वकालीनाः मम **आपयः** प्रापयितारो मदीया ज्ञातयः **के चित्** एवंभूताः ये केचन यूयम् **आभोगयम्** उपभोग्यं सोमम् **इच्छन्तः यत्** यदा **प्र ऐतन** तपश्चरितुमरण्यं गतवन्तः । ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः । हे **सौधन्वनासः!** सुधन्वनः पुत्राः! तदानीम् **चरितस्य** समुपार्जितस्य तपसः **भूमना** भूम्ना

महित्वेन **दाशुषः** हवींषि दत्तवतः **सवितुः** सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धि **गृहम्** यज्ञगृहम् **अगच्छत** तपसा लब्धसोमाः सन्तः कृतपाना यूयं गतवन्तः ॥ २ ॥

**सायण–** हे ऋभवः! **अपाकाः** परिपक्वज्ञाः **प्राञ्चः** पूर्वकालीनाः **मम आपयः** प्रापयितारो मदीया ज्ञातयः **के चित्** एवम्भूता ये केचन यूयम् **आभोगयम्** उपभोग्यं सोमम् **इच्छन्तः** **यत्** यदा **प्र ऐतन** तपश्चरितुमरण्यं गतवन्तः । ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः । तदुक्तं यास्केन– 'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' (निरु.११.१६) इति । कुत्सोऽप्याङ्गिरसः अतस्तेन मदीया ज्ञातय इत्युक्तम् । हे **सौधन्वनासः!** सुधन्वनः पुत्राः, तदानीं **चरितस्य** समुपार्जितस्य तपसः **भूमना** भूम्ना बहुत्वेन **दाशुषः** हवींषि दत्तवतः **सवितुः** सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धि यज्ञगृहम् **अगच्छत** तपसा लब्धसोमाः सन्तः कृतपानाः यूयं गतवन्तः । यद्वा । दाशुषः प्रातःसवनादिष्वग्न्यादिभिरपसारितेभ्यः ऋभुभ्यः सोमपानं दत्तवतः सवितुः गृहं निवासस्थानं तृतीयसवनाख्यमगच्छत प्राप्ताः । एतत्सर्वम् 'आर्भवं शंसति' (ऐ.ब्रा.३.३०) इत्यादौ विस्पष्टमाम्नातम् ।

आभोगयम् । आ समन्ताद्भोग आभोगः । तदर्हः आभोगः । 'छन्दसि च' इति यः । 'यस्य' इति लोपाभावश्छान्दसः । व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वम् । यद्वा । आङ्पूर्वाद्भुजे-रौणादिकः कर्मणि इप्रत्ययः कुत्वं च । अमि व्यत्ययेन गुणः । ऐतन । 'इण् गतौ' । लङि मध्यमबहुवचनस्य यस्य तादेशः । 'तप्तनप्तनथनाश्च' इति तस्य तनवादेशः । आडागमो वृद्धिश्च । आपयः । आप्नोतेरौणादिक इप्रत्ययः । भूमना । बहुशब्दात् पृथ्वादिलक्षण इमनिच् । 'बहोर्लोपो भू च बहोः' इति इकारलोपो बहोर्भूभावश्च । संज्ञापूर्वकस्य विधेरनित्यत्वात् अलोपाभावः ॥ २ ॥

**सिद्धाञ्जनम्–** हे ऋभवः! **अपाकाः** परिपक्वज्ञानाः **प्राञ्चः** पूर्वे **मम** सम्बन्धिनः **आपयः** आपयितारः बन्धवः **के चित्** ये केचन यूयं **आभोगयम्** समन्तादुपभोगयोग्यं सोम **इच्छन्दः** कामयमानाः **यत्** यदा **ऐतन** प्रयाणमकुरुत तदानीं हे **सौधन्वनासः** सुधन्वनः पुत्राः, **चरितस्य** अनुष्ठितस्य तपसः **भूमना** भूम्ना बहुत्वेन **सवितुः** सोमाभिषवं कर्तुः **दाशुषः** दत्तवतः यजमानस्य **गृहम्** निवासस्थानं शरीरं **अगच्छत** प्राप्ताः । ऋभवः सुतसोमानां अमृतत्वप्राप्तौ उपकुर्वन्तीति तत्त्वं प्रागुक्तम् ।

आभोगयम्–आ समन्तात् भोगः आभोगः तदर्हः आभोगयः, छन्दसि चेति यः, यस्येति लोपाभावश्छान्दसः । एतेन–इण गतौ, लङि थस्य तनबादेशः । भूमना–बहोर्भूभावः, अलोपाभावश्छान्दसः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**तत्स॑वि॒ता वो॑ऽमृत॒त्वमासु॑व॒दगो॑ह्यं॒ यच्छ्र॒वय॑न्त॒ ऐत॑न ।**
**त्यं चि॑च्चम॒सम॑सु॑रस्य॒ भक्ष॑ण॒मेकं॒ सन्त॑मकृणुता च॒तुर्व॑यम् ॥ ३ ॥**

तत् । स॒वि॒ता । वः॒ । अ॒मृ॒त॒ऽत्वम् । आ । अ॒सु॒व॒त् । अगो॑ह्यम् । यत् । श्र॒वय॑न्तः । ऐत॑न । त्यम् । चि॒त् । च॒म॒सम् । असु॑रस्य । भक्ष॑णम् । एक॑म् । सन्त॑म् । अ॒कृ॒णु॒त । च॒तुः॑ऽवयम् ॥ ३ ॥

**स्कन्द–** **तत्** तदा **सविता** **वः** युष्माकम् **अमृतत्वम्** देवत्वम् **आ** **असुवत्** अनुज्ञातवान् । अत्यन्ततेजस्वित्वात् गूहितुमशक्यं सवितारं प्रति **यत्** यदा **श्रवयन्तः** हविर्लक्षणमातिथ्यसम्बन्धि वा अन्नमिच्छन्तः **ऐतन** गताः स्थ । यदाऽऽतिथ्यमनुभवितुं सवितुर्गृहं गता इत्यर्थः । **त्यम् चित्** तं चित् । तच्छब्दसमानार्थत्यच्छब्दश्रुतेः 'एकं चमसं चतुरः कृणोतन' (ऋ.१,१६१,२) इत्यादिमन्त्रान्तरदृष्टार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । चिच्छब्दोऽपि चार्थे । यो देवैः प्रहितोऽग्निरेकं चमसं चतुर इत्येवमुपन्यस्तवान् तं **चमसम्** **असुरस्य** **भक्षणम्** 'असुरिति प्राणनाम' (या. ३,८) । तद्वानसुर । कोऽसौ । त्वष्टा । कुत एतत् । 'उत त्यं चमसम्' (ऋ.१,२०,६) इति मन्त्रान्तरदर्शनात् । प्राणवतस्त्वष्टुर्भक्षणम् **एकम्** **सन्तम्** **अकृणुत** कृतवन्तः स्थ । **चतुर्वयम्** वेतिर्गत्यर्थः (निघ.२,१४) । चतुर्गतिम् । एकस्माच्चमसात् तदविनाशेन चतुरश्चमसान् कृतवन्तः स्थेत्यर्थः ॥ ३ ॥

**वेङ्कटमाधव–** ततः कथमभूदित्याह– **तत्सविता** इत्यादि । तदा सविता युष्माकम् **अमृतत्वम्** प्रायच्छत्, यदा गूहितुम् अशक्यं सवितारम् अन्नम् इच्छन्तो गतवन्तः, तं च **चमसम्** सोमस्य **भक्षणम्** **एकं** **सन्तम्** **अकृणुत** चतुर्व्यूहम् ॥ ३ ॥

**मुद्गल–** हे **ऋभवः!** **तत्** तदानीम् **सविता** सर्वस्य प्रेरको देवः **वः** युष्माकम् **अमृतत्वम्** देवत्वम् **आ** **असुवत्** आभिमुख्येन प्रेरितवान् । दत्तवानित्यर्थः । **यत्** यदा यूयम् **अगोह्यम्**

गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारम् **श्रवयन्तः** अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः **ऐतन** आगच्छत । तदानीमिति पूर्वेणान्वयः । यस्मात् यूयं देवैराज्ञापिताः सन्तः **असुरस्य** त्वष्टुः सम्बन्धिनम् । तेन निर्मितमित्यर्थः । **भक्षणम्** सोमपानसाधनम् **त्यम्** तम् **चमसम् एकम् चित्** असहायमेव सन्तम् **चतुर्वयम्** चतुर्व्यूहम् **अकृणुत** कृतवन्तः । सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः ।। ३ ।।

**सायण–** हे ऋभवः! **तत्** तदानीं **सविता** सर्वस्य प्रेरको देवः **वः** युष्माकम् **अमृतत्वं** देवत्वम् **आसुवत्** आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः । **यत्** यदा यूयम् **अगोह्यं** गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं **श्रवयन्तः** अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः **ऐतन** आगच्छत । तदानीमिति पूर्वेणान्वयः । यस्मात् यूयं देवैराज्ञापिताः सन्तः **असुरस्य** त्वष्टुः सम्बन्धिनम् । तेन निर्मितमित्यर्थः । **भक्षणं** सोमपानसाधनं **त्यं** तं चमसम् **एकं चित्** असहायमेव सन्तं **चतुर्वयं** चतुर्व्यूहम् **अकृणुत** कृतवन्तः । सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमस-चतुष्टयरूपेण ऋभवः कृतवन्तः इत्यर्थः ।

असुवत् । 'षू प्रेरणे' । तौदादिकः । श्रवयन्तः । 'श्रु श्रवणे' । छान्दसो वृद्ध्यभावः । ऐतन । लङि मध्यमबहुवचनस्य तादेशे तप्तनप्तनथनाश्च' इति तनबादेशः । भक्षणम् । करणे ल्युट् । अकृणुत । 'कुवि हिंसाकरणयोश्च' । लङि मध्यमबहुवचने 'धिन्विकृण्व्योर च' इति उप्रत्ययः । चतुर्वयम् । वया अवयवाः । चत्वारोऽवयवा यस्य स तथोक्तः ।। ३ ।।

**सिद्धाञ्जनम्–** हे ऋभवः! **तत्** तदा **वः** युष्माकं **अमृतत्वम्** अमरणधर्मत्वं, देवत्वं **सविता** सर्वस्य प्रेरको देवः **आ असुवत्** प्रेरितवान्, देवभावं समपीपदत् । **यत्** यदा **अगोह्यम्** गूहितुं अशक्यं सत्यप्रकाशं **श्रवयन्तः** सवितुर्देवस्य श्रवणं प्रापयन्तः **एतेन** यूयमागच्छत, तदेति पूर्वेण सम्बन्धः । भूतपूर्वमनुष्याणां तपसा कर्मणा ज्ञानेन च देवत्वं प्राप्तानां ऋभूणां मनुष्योपकाराय देवकृत्यानि वर्ण्यन्ते वेदे । तत्रैकं तेषां कर्मेदं भवतित्वष्टुर्विश्वकर्मणः निर्माणे एकं शरीरं चमसपात्रेण सङ्केतितं सर्वस्यापि भूतजातस्येव यजमानस्यापि प्राकृतजन्मना वर्तते । तस्मिन् सोमपानयोग्ये शरीरपात्रे चत्वारोंऽशाः संमिश्रिताः न पृथग्व्यक्ता भवति । ते च अन्नमयः प्राणमयः मनोमयः, एषां त्रयाणां कारणभूतो दिव्योंऽशश्चेति चत्वारो भवन्ति, तेषां पृथक्करणेन एकं शरीरपात्रं चतुर्व्यूहात्मकं भवति । तेन अन्नमये जगति अन्नमयो देह इव प्राणमयादयश्च तत्तल्लोके

निष्पादितव्यक्तयः सिद्धव्यापाराश्च देवेषु साक्षाद्धीनाः दैव्यस्वीकाराय प्रभवन्ति । तदेवाह– **असुरस्य** महाबलस्य त्वष्टुर्देवस्य विश्वकर्मणः सम्बन्धिनं, तेन निर्मितमित्यर्थः नायं देवशत्रुरसुरः, वेदे देवोऽप्यसुर उच्यते ''महद्देवानामसुरत्वमेकम्'' इत्यादौ, **भक्षणम्** सोमपानसाधनभूतं **त्यम्** तं **चमसमेकम् चित्** एकमेव चमसं **सन्तम्, चतुर्वयम्** चतुर्व्यूहं, चत्वारो वयाः शाखाभूताः अवयवा यस्येति विग्रहः, **अकृणुत** कृतवन्तः ।

असुवत्–षू प्रेरणे, तुदादिः । श्रवयन्तः–छान्दसो वृद्ध्यभावः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।**
**सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ।। ४ ।।**
**विष्ट्वी । शमी । तरणिऽत्वेन । वाघतः । मर्तासः । सन्तः । अमृतत्वम् । आनशुः । सौधन्वनाः । ऋभवः । सूरऽचक्षसः । संवत्सरे । सम् । अपृच्यन्त । धीतिऽभिः ।। ४ ।।**

**स्कन्द– विष्ट्वि** इति न कर्मनाम शमी इत्यनेन पौनरुक्त्यप्रसङ्गात् । किं तर्हि । विषेर्व्याप्त्यर्थस्य क्रियाशब्दोऽयं विष्ट्वीति । विष्ट्वा व्याप्य । कृत्वेत्यर्थः । **शमी** कमनामैतत् (निघ.२,१) । एकचमसचतुष्टयकरणादीनि कर्माणि । **तरणित्वेन** 'तरणिः' (निघ.२,१७) इति क्षिप्रनाम । क्षिप्रत्वेन । शीघ्रमित्यर्थः । **वाघतः** ऋत्विङ्नामैतत् (निघ.३,१८) । सामर्थ्या-च्चेहान्तर्णीतमत्वर्थम् । ऋत्विग्वन्तः । यष्टार इत्यर्थः । मनुष्याः **सन्तः अमृतत्वम्** देवत्वम् **आनशुः** प्राप्ताः । के । उच्यते । **सौधन्वनाः** सुधन्वनः पुत्राः ऋगवः नाम । कीदृशाः । उच्यते । सूरचक्षसः सूर्यसमानदर्शनाः । सूर्यवत्तेजस्विनः प्रज्ञावन्तो वेत्यर्थः । प्राप्य च देवत्वं **संवत्सरे सम् अपृच्यन्त धीतिभि** धीतिशब्दः कर्मवचनः । संवत्सरे यावन्ति कर्माणि यज्ञाख्यानि तैः सर्वैः सम्पृक्ताः । सर्वयज्ञेषु भागार्हत्वं प्राप्ता इत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** कृत्वा कर्माणि क्षिप्रत्वेन वोढारः मरणधर्माणः **सन्तः अमृतत्वम्** आनशिरे । **सौधन्वनाः ऋभवः** सूक्ष्मदर्शनाः **संवत्सरे** देवैः सङ्गता आसन् चमसव्यूहादिभिः कर्मभिः । ऋभूणामादित्यरश्मिभिरैक्यम् 'अगोह्यस्य यदसस्तना' (ऋ.१,१६१,११) इत्यस्यामुक्तमिति ।।४।।

**मुद्गल– वाघतः** ऋत्विग्भिरुपेता ऋभवः **शमी** यागदानादिकर्माणि अन्यान्यपि 'एकं चमसं चतुरः कृणोतन' (ऋ१,१६१,२) इत्यादिना देवैरुक्तानि कर्माणि **तरणित्वेन** क्षिप्रत्वेन शीघ्रेण **विष्ट्वी** व्याप्य । कृत्वेत्यर्थः । एवं कर्माणि कृत्वा **मर्तासः** मनुष्या अपि **सन्तः अमृतत्वम्** देवत्वम् **आनशुः** आनशिरे । कृतैः कर्मभिर्लेभिरे । देवत्वं प्राप्य च **सौधन्वनाः** सुधन्वनः पुत्राः **सूरचक्षसः** सूर्यसमानप्रकाशाः ते ऋभवः **संवत्सरे** संवत्सरावयवभूते वसन्तादिकालेऽनुष्ठेयैः **धीतिभिः** अग्निष्टोमादिकर्मभिः **सम् अपृच्यन्त** संयुक्ता अभवन् । हविर्भागार्हा बभूवुरित्यर्थः ।।

**सायण– वाघतः** । ऋत्विङ्नामैतत् अत्र च सामर्थ्यात् तद्वन्तो लक्ष्यन्ते । ऋश्विग्भिरुपेता ऋभवः **शमी** । कर्मनामैतत् । यागदानादीनि कर्माणि अन्यान्यपि 'एकं चमसं चतुरः कृणोतन' (ऋ.सं.९.१६१,२) इत्यादिना देवैरुक्तानि कर्माणि **तरणित्वेन** । तरणिरिति क्षिप्रनाम । क्षिप्रत्वेन शैघ्र्येण **विष्ट्वी** । यद्यप्येतत्कर्मनाम तथाप्यत्र क्रियापरं व्याप्य कृत्वेत्यर्थः । एवं कर्माणि कृत्वा **मर्तासः** मनुष्या अपि **सन्तः अमृतत्वं** देवत्वम् **आनशुः** आनशिरे । कृतैः कर्मभिर्लेभिरे । देवत्वं प्राप्य च **सौधन्वनाः** सुधन्वनः पुत्राः **सूरचक्षसः** सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ते **ऋभवः संवत्सरे** संवत्सरावयवभूते वसन्तादिकालेऽनुष्ठेयैः **धीतिभिः** अग्निष्टोमादिकर्मभिः **समपृच्यन्त** संयुक्ता अभवन् हविर्भागार्हा बभूवुरित्यर्थः । अत्र निरुक्तं– 'कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' (निरु.११.१६) इति ।

विष्ट्वी । 'विष्लृ व्याप्तौ' । 'स्नात्व्यादयश्च' (पा.सू.७.१.४९) इति त्त्वाप्रत्ययस्य ईकारान्तादेशः । शमी । 'सुपां सुलुक्' इति शसो लुक् । आनशुः । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम्' । 'अश्नोतेश्च' इति अभ्यासादुत्तरस्य नुडागमः । अपृच्यन्त । 'पृची संपर्के' । कर्मणि लङ् ।। ४ ।।

**सिद्धाञ्जनम्– वाघतः** स्तोतार **ऋषयः शमी** कर्माणि, एकस्य चमसस्य चतुर्धा करणादीनि अन्यान्यपि **तरणित्वेन** तरणकौशलेन **विष्ट्वी** विष्ट्वा व्याप्य, व्याप्तिं कृत्वा **मर्तासः सन्तः** मनुष्याः सन्तोऽपि **अमृतत्वम्** देवत्वं **आनशुः** आनशिरे । तथा देवत्वं प्राप्य **सौधन्वताः** सुधन्वजाताः **सूरचक्षसः** सूर्यसदृशप्रकाशाः सूर्यसदृशज्ञानचक्षुषो वा, **संवत्सरे** परिपाक-

कालद्योतकोऽयं, पके काले इत्यर्थः **धीतिभिः** धारणसमर्थप्रज्ञावृत्तयो धीतयः, सामर्थ्यात्तद्विषय-भूताभिः दैव्याभिः सम्पद्भिः **समपृच्यन्त** सम्पृक्ताः संयुक्ता अभवन्, देवैः सह स्वाधिकारं प्राप्ता इति भावः ।

विष्ट्वी–विष्लृ व्याप्तौ । शमी–त्सो लुक् । अपृच्यन्त–कर्मणि लङ ।। ४ ।।

**नीतिमञ्जरी–** श्रुतिस्मृत्युक्ते कृते देवत्वं प्राप्नोतीत्याह–

**श्रुतिस्मृत्युक्त आचारः कर्तव्योऽमृतिमिच्छता ।**
**नरोऽमृतत्वमापन्ना ऋभवः कर्मणा तयोः ।। २९ ।।**

अमृतिम् अमरणं देवत्वमिच्छता पुंसा श्रुत्युक्तोऽग्निहोत्रादिः आचारः स्मृत्युक्तः शौचा-चमनाद्याचारः कर्तव्यः ऋभुवत् । यथा ऋभवो नरो मनुष्याः सन्तः तयोः श्रुतिस्मृत्योः कर्मणा अमृतत्वं देवत्वमापन्नाः ।

तदर्थेयमृक् (ऋ.१.११०.४)

**विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।**
**सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ।।**

कुत्सस्त्रिष्टुभा ऋभूंस्तुष्टाव । आभिप्लविके पञ्चमेऽहनि विनियुक्तम् । आयुः पञ्चमिति खण्डे 'ततं मे अपस्तदु तायते पुन'(ऋ.१.११०.१)रित्यार्भवम् (सां.श्रौ.सू.११५।४) ।

ऋचोऽयमर्थः । **वाघतः** ऋत्विग्रूपास्ते ऋभवः । **तरणित्वेन** क्षिप्रत्वेन **विष्ट्वी शमी** (निघण्टु २।१) एते कर्मनामनी । 'विष्लृ व्याप्तौ' 'स्नात्व्यादयश्च' (पा.७।१।४९) इति क्त्वा प्रत्ययस्य ईकारान्तादेशः । ते सर्वकर्माणि व्याप्य **मर्तासः** मनुष्याः **सन्तः अमृतत्वं** देवत्वम् **आनशुः** । कृतैः कर्मभिर्देवत्वमानशिरे । देवत्वं प्राप्य **सौधन्वनाः** सुधन्वन आङ्गिरसस्य त्रयः पुत्राः ऋभुर्विभ्वा वाज इति । एतेन **ऋभवः सूरचक्षसः** सूर्यसमानप्रकाशाः **संवत्सरे** संवत्सरायववभूते वसन्तादिकाले **धीतिभिः** अनुष्ठेयैर्ज्योतिष्टोमादिभिः कर्मभिः **समपृच्यन्त** संपृक्ता अभवत् । देवैः सह यज्ञभागार्हा बभूवुरित्यर्थः ।

अत्र निरुक्तम् (नि.११।१६) "कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तो अमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा, सूरप्रज्ञा वा, संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः" इति ।

अथा देवेष्वमृतत्वमानश (ऋ.४.३६.४) इति निगमः ।

ते शोभनकर्मकरणेन सुहस्ता उक्ताम् तद्यथा–

शं नं ऋभवः सुकृतः सुहस्ताः (ऋ.७.३५.१२)

गणं देवानामृभवः सुहस्ताः (ऋ.४.३५.३) । कर्मणा सुहस्ता निविशत्– इत्येवमादयः । तस्मादुक्तं देवत्वे हेतुरिति ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम् ।**
**उपस्तुता उपमं नाधमाना अमर्त्येषु श्रवं इच्छमानाः ।। ५ ।।**
**क्षेत्रम्ऽइव । वि । ममुः । तेजनेन । एकम् । पात्रम् । ऋभवः । जेहमानम् । उपऽस्तुताः । उपऽमम् । नाधमानाः । अमर्त्येषु । श्रवः । इच्छमाना ।। ५ ।।**

**स्कन्द– क्षेत्रमिव वि ममुः** । यथा कश्चिद्रज्ज्वा दण्डेन वा क्षेत्रं विमिमीते, तद्वद्विमितवन्त इत्यर्थः । कीदृशेन । **तेजनेन** 'तिज निशाने' । निशितेन । केन । सामर्थ्याद् व्यथनेन । तेन हि रथकारा विमिमते । अथवा तेजनशब्दः तेजःपर्यायः । स्वेन तेजसा । किं विममुः । **एकम्** चमसाख्यं **पात्रम्** । के । **ऋभवः** । **जेहमानम्** 'जेहते' (निघ.२,१४) इति गतिकर्मा । चतुर्धागतम् । चतुष्ट्वं प्रतिपद्यमानमित्यर्थः । कीदृशाः । **उपस्तुताः** उपेत्येतत् समित्येतस्य स्थाने । सर्वस्तोतृभिः संस्तुताः । **उपमं नाधमानाः** 'उपमे' (निघ.२,१६) इत्यन्तिकनाम । अन्तरेणापि भावप्रत्ययं सामर्थ्यादिहान्तिकत्वे द्रष्टव्यम् । नाधिर्याञ्चार्थः । सन्निकृष्टत्वं प्रार्थयमानाः । कस्य । सामर्थ्याद्देवानाम् । देवेष्वन्तर्गतिमिच्छन्त इत्यर्थः । न चान्तर्गतिमेव केवलाम् । **अमर्त्येषु** निर्धारणे चात्र सप्तमी । देवानां मध्ये । श्रवः इच्छमानाः । हविर्लक्षणमन्नमिच्छन्त इत्यर्थः ।।

**वेङ्कटमाधव–** मानदण्डेन भूमिम् इव शस्त्रेण विकर्तनार्थं हस्तात् हस्ते सञ्चरमाणम् **एकम् पात्रम्** विविधं कृतवन्तः, समीपस्तुता देवानां समीपं कामयमाना देवेषु सोमम् **इच्छमानाः** ।।

**मुद्गल– उपस्तुताः** समीपस्थैर्ऋषिभिः स्तुताः **ऋभवः जेहमानम्** होमक्रियां प्रति प्रयतमानम् **एकम्** असहायम् **पात्रम्** पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन **क्षेत्रमिव** भूमिमिव **तेजनेन** तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुम् **वि ममुः** विशेषेण मानं कृतवन्तः । किमिच्छन्तः । **उपमम्** सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नम् **नाधमानाः** भावमानाः । एतदेव विवृणोति । **अमर्त्येषु** मरणरहितेषु देवेषु मध्ये **श्रवः** हविर्लक्षणम् अन्नम् **इच्छमानाः** इच्छन्तः । देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुरश्चमसात् अकार्षुरित्यर्थः ॥ ५ ॥

**सायण– उपस्तुताः** समीपस्थैर्ऋषिभिः स्तुताः **ऋभवः जेहमानं** होमक्रियां प्रति प्रयतमानम् **एकम्** असहायं **पात्रं** पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन **क्षेत्रमिव** भूमिमिव **तेजनेन** तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुं **वि ममुः** विशेषेण मानं कृतवन्तः । किमिच्छन्तः । **उपमं** सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं **नाधमानाः** याचमानाः । एतदेव विवृणोति । **अमर्त्येषु** मरणरहितेषु देवेषु मध्ये **श्रवः** हविर्लक्षणमन्नम् **इच्छमानाः** इच्छन्तः । देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुरश्चमसानकार्षुरित्यर्थः ।

ममुः । 'माङ् माने शब्दे च' । व्यत्ययेन परस्मैपदम् । तेजनेन । 'अणोऽप्रगृह्यस्यानुनासिकः' (पा.सू.८.४.५७) इति अनवसाने व्यत्ययेन अकारस्य आनुनासिक्यम् । ईषाअक्षादित्वात् प्रकृतिभावः । जेहमानम् । 'वेहृ जेहृ बाहृ प्रयत्ने' । भौवादिकः । अनुदात्तत्त्वात् आत्मनेपदम् । उपस्तुताः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । उपमम् । 'माङ् माने' । 'आतश्चोपसर्गे' इति कप्रत्ययः । इच्छमानाः । व्यत्ययेन आत्मनेपदम् ॥ ५ ॥

**सिद्धाञ्जनम्– उपस्तुताः** ऋषिभिः समीपे स्तुताः **ऋभवः** उक्तस्वरूपाः **जेहमानम्** प्रयतमानं (वेह जेह बाह प्रयत्ने) चतुर्व्यूहतां प्राप्तुं शरीरलक्षणं सोमरसपात्रमेव प्रयतते । तथा यतमानं **एकम् पात्रम्** चमसं मानदण्डेन **क्षेत्रमिव** भूमिमिव **तेजनेन** निशातनेन चतुष्टयरूपेण कर्तुं **विममुः** विशेषेण मानं कृतवन्तः । किं कुर्वन्तः? **उपमम्** उपमानभूतं प्रशस्तं सोमं **नाधमानाः** याचमानाः, अपि च **अमर्त्येषु** देवेषु मध्ये **श्रवः** श्रवणं दैव्यवाच इति शेषः, **इच्छमानाः** इच्छन्दः । एकतः पक्वेभ्यो मनुष्येभ्यः सोममिच्छन्ति, अन्यतो देवेषु मध्ये श्रवणम् ।

ममुः–माङ माने, व्यत्ययेव परस्मैपदम् । अपमम्–माङ माने, आतश्चोपसर्गं इति कप्रत्ययः । इच्छमानाः–व्यत्ययेनात्मनेपदम् ॥ ५ ॥

॥ इति प्रथमाष्टके सप्तमाध्याये त्रिंशो वर्गः ॥

## ।। अथ एकत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना ।**
**तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन् दिवो रजः ।। ६ ।।**
**आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् । जुहवाम । विद्मना । तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजम् । अरुहन् । दिवः । रजः ।। ६ ।।**

**स्कन्द–** **आ** इत्यपसर्गो **जुहवाम** इत्याख्यातेन सम्बन्धयितव्यः । **मनीषाम्** स्तुतिम् अन्तरिक्षस्य षष्ठीश्रुतेरत्र योग्यां सदृशीं वेत्यध्याहर्तव्यम् । अतिमहतोऽन्तरिक्षस्यापि योग्यां सदृशीं वा । अत्यन्तमहतीमित्यर्थः । **नृभ्यः** मनुष्याणामृभूणामर्थाय । मनुष्यानृभून् स्तोतुमित्यर्थः । **स्रुचेव घृतम् आ जुहवाम** आकारोऽत्र मर्यादायाम् । यथा कश्चिदाहवनीयादौ स्रुचा घृतं मर्यादया प्रक्षिपेद् एवं प्रक्षिपामोच्चारयामेत्येतदाशास्महे । **विद्मना** स्वेन ज्ञानेन । ये ऋभवः किं कृतवन्तः । **तरणित्वा** क्षिप्रत्वेन **ये पितुः** सर्वप्राणिनां पितृभूतस्य पालयितुर्वा **अस्य** सवितुः स्वभूतम् **सश्चिरे** सश्चतिर्गतिकर्मा (निघ.२,१४) । सोपसर्गार्थेऽयं द्रष्टव्यः । अधिगतवन्तः । लब्धवन्त इत्यर्थः । **ऋभवः वाजम्** आतिथ्यसम्बन्धि अन्नम् **अरुहन्** आरूढवन्तश्च **दिवः** अवयवभूतम् **रजः** लोकम् । देवलोकं चारूढयन्त इत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** यथा **स्रुचा घृतम्** आजुह्वति एवं वयम् **अन्तरिक्षस्य** नेतृभ्यो मध्यमस्थानपठितेभ्यः स्तुतिं कुर्मः प्रज्ञानेन । क्षिप्रत्वेन **ये** पितृभूतस्य **अस्य** सवितुः अमृतम् आस्वादितवन्तः ते **दिवः** लोकाद् अन्नं सोमात्मकम् अधिष्ठितवन्तः । देवेभ्यः सोमपीथं प्राप्ता इति ।। ६ ।।

**मुद्गल–** **अन्तरिक्षस्य** अन्तरिक्षलोकस्य मध्यमस्थानस्य सम्बन्धिभ्यः **नृभ्यः** यज्ञस्य नेतृभ्यः ऋभुभ्यः ऋभवो हि यज्ञस्य नेतारः, तेन हि देवत्वं प्राप्ताः । **स्रुचेव** यथा स्रुसा जुह्वा **घृतम्** क्षरणशीलाज्योपेतं हविः **आ जुहवाम** यथाशास्त्रं प्रयच्छाम । एवमेव **मनीषाम्** स्तुतिम् **विद्मना** वेदनेन कुर्म इति शेषः । अपि च **ये** ऋभवः **पितुः** सर्वस्य जगतः पालकस्य **अस्य** **सूर्यस्य** **तरणित्वा** तरणित्वानि तरणकौशलानि **सश्चिरे** सूर्यरश्मिभूताः सन्तः प्रापुः । तदुक्तम्–

'आदित्यरश्मयोऽपि ऋभव उच्यन्ते' (या.११,१६) इति । ते **ऋभवः दिवः रजः** द्योतमानस्य स्वर्गलोकस्य सम्बन्धिनम् **वाजम्** सोमलक्षणमन्नम् **अरुहन्** यागदानादिभिः कर्मभिरन्यैश्च वेदोक्तैश्चमसचतुष्टयकरणादिकैः प्राप्नुवन् ॥ ६ ॥

**सायण– अन्तरिक्षस्य** अन्तरिक्षलोकस्य मध्यमस्थानस्य सम्बन्धिभ्यः **नृभ्यः** यज्ञस्य नेतृभ्य ऋभुभ्यः । ऋभवो हि यज्ञस्य नेतारः । तेन हि ते देवत्वं प्राप्ताः । यद्वा । अन्तरिक्षस्य लोकस्य नेतृभ्यः । मध्यमे स्थाने ह्येते पठ्यन्ते । तादृशेभ्यः **स्रुचेव** यथा स्रुचा जुह्वा **घृतं** क्षरणशीलाज्योपेतं हविः **आ जुहवाम** । मर्यादायामाकारः । यथाशास्त्रं प्रयच्छाम । एवमेव **मनीषां** स्तुतिं **विद्मना** वेदनेन ज्ञानेन कुर्मः इति शेषः । अपि च **ये ऋभवः पितुः** सर्वस्य जगतः पालकस्य **अस्य** सूर्यस्य **तरणित्वा** तरणित्वानि तरणकौशलानि **सश्चिरे** सूर्यरश्मिभूताः सन्तः प्रापुः । तदुक्तम्– 'आदित्यरश्मयोऽप्यृभव उच्यन्ते' इति । ते ऋभवः **दिवो रजः** । रजःशब्दो लोकवाची । द्योतमानस्य स्वर्गाख्यस्य लोकस्य सम्बन्धिनं **वाजं** सोमलक्षणमन्नम् **अरुहन्** यागदानादिभिः कर्मभिरन्यैश्च देवोक्तैः चमसचतुष्टयकरणादिकैः प्राप्नुवन् ।

स्रुचेव । 'सावेकाच' इति विभक्तेरुदात्तत्वम् । जुहवाम । 'हु दानादनयोः' । लोटि 'आडुत्तमस्य पिच्च' इति आडागमः । विद्मना । 'विद ज्ञाने' । औणादिको मनिः । 'न संयोगाद्वमन्तात्' इति कर्तरि अनिप्रत्ययः । तस्य भावस्तरणित्वम् । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । सश्चिरे । 'ग्लुञ्च षस्ज गतौ' इत्यत्र सश्चिमप्येके पठन्ति । व्यत्ययेन आत्मने-पदम् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' इति वचनात् द्विर्वचनाभावः । इरेचश्चित्त्वा-दन्तोदात्तत्वम् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । अरुहन् । 'रुह बीजजन्मनि प्रादुर्भावे च' । लुङि 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेः अङादेशः । दिवः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । रजः । 'रञ्ज रागे' । रजन्त्यस्मिन्निति रजो लोकः । तदुक्तं– 'लोका रजांस्युच्यन्ते' (निरु.४.१९) इति । औणादिकोऽधिकरणे असुन् । 'रजकरजनरजःसूपसङ्ख्यानम्' इति नलोपः । 'सुपां सुलुक्' इति षष्ठ्या लुक् ॥ ६ ॥

**सिद्धाञ्जनम्– अन्तरिक्षस्य** मध्यमस्थानस्य भुवर्लोकस्य सम्बन्धिभ्यः **नृभ्यः** नेतृभ्य ऋभुभ्यः, इतः प्रेत्य भुवर्लोकमार्गेणैव तृतीयं स्थानं प्राप्नुवन्ति कृतात्मानो मनुष्याः, तत्र ऋभव उपकारिणो भवन्ति । तस्मान्मध्यमस्थानसम्बन्धित्वमृभूणाम्, तेषां पदं तु उत्तमस्थानम् । तेभ्यः

**स्रुचेव घृतम्** जुह्वा आज्योपेतं हविः यथा **आजुहवाम** प्रयच्छाम, तथा **मनीषाम्** स्तुतिं **विद्मना** वेदनेन ज्ञानेन कुर्मः । **ये ऋभवः** देवभूताः पूर्वेऽस्मत्पितरः **अस्य** सर्वस्य जगतः **पितुः** पालकस्य सवितुः **तरणित्वा** तरणित्वानि तरणकौशलानि **सश्चिरे** प्रापुः, सावित्रान् विभवान् लब्धवन्त इत्यर्थः । अत एव **दिवः** द्योतमानस्य **रजः** रजसः स्वर्लोकस्य **वाजम्** समृद्धिं प्रति अरुहन् प्राप्नुवन् ।

जुहवाम– हु दानादनयोः । विद्मना–वेत्तेः, औणादिको मनिः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः ।**
**युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम् ।। ७ ।।**
**ऋभुः । नः । इन्द्रः । शवसा । नवीयान् । ऋभुः । वाजेभिः । वसुऽभिः । वसुः । ददिः । युष्माकम् । देवाः । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुतीः । असुन्वताम् ।। ७ ।।**

**स्कन्द– ऋभुः नः** अस्माकम् **इन्द्रः** च ऋभूणां सखित्वात् । अथवा इन्द्र इति ऋभोर्विशेषणम् । इन्द्रसदृशोऽत्यन्तेश्वरो वा । **शवसा** बलेन सामर्थ्यलक्षणेन । यदस्माकं स्तुतिकरणसामर्थ्यं तेन सर्वेण । **नवीयान्** अतिशयेन स्तुत्यः । किञ्च **ऋभुः वाजेभिः** अन्यतरवचनेनापि वाजशब्देनात्र साहचर्याद् वाजो विभ्वा चोच्येते । व्यत्ययेन च द्विवचनस्य स्थाने बहुवचनम् । वाजविभ्वाभ्यां **वसुभिः** च सह वसुः अन्तर्णीतमत्त्वर्थमेतत् । धनवान् । **ददिः** स्तोतृभ्यो यष्टृभ्यश्च साधुदाता । किम् । सामर्थ्यात् सर्वानभिप्रेतानर्थान् । अथवा वसुरिति व्यत्ययेन पुंल्लिङ्गता । वसु ददिः । धनं दातेत्यर्थः । आर्भवत्वाच्चास्य सूक्तस्य ऋभुविभ्वा-वाजानामेवात्र प्राधान्यं द्रष्टव्यं न सहयोगमात्रं निर्दिष्टानां वसूनामपि । परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । **युष्माकम्** हे **देवाः! अवसा** तर्पणेन हेतुना । युष्मान् सोमेन तर्पयन्त इत्यर्थः । क्व । **अहनि** यागदिवसे । **प्रिये** सर्वमनुष्याणाम् । **अभि तिष्ठेम** अभितिष्ठतिरत्र सामर्थ्याज्जयार्थः । जयेम वयम् । **पृत्सुतीः** पृत्सु तायन्ते विस्तीर्यन्त इति पृत्सुतयः सेनाः । **असुन्वताम्** सोमाभिषवमकुर्वतां शत्रूणां स्वभूताः । ये युष्मान्न यजन्ते ते अस्मच्छत्रवः, तेषां स्वभूता इत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** **ऋभुः** अस्मभ्यं बलेन सर्वदा नवतरो भवति । तथा वासयितृभिः **वाजेभिः** सह वसूनां दाता भवति । ऋभुर्विभ्वा वाज इति त्रय ऋभवः, तत्र प्रथमोत्तमाभ्यां बहुवत् निगमा भवन्ति (या.११,१६) । युष्माकम् ऋभवः! रक्षणेन प्रकाशकानां प्रियेऽस्मिन् दिवसे अयजमानानां सेना वयम् अभिभवेम ।। ७ ।।

**मुद्गल–** ऋभुर्विभ्वा वाज इति त्रय सुधन्वनः पुत्राः । तत्र **शवसा** बलेन **नवीयान्** नवतरः प्रशस्ततरः **ऋभुः नः** अस्माकम् **इन्द्रः** परमेश्वरः । अस्माकं रक्षक इत्यर्थः । अपि च **वाजेभिः** वाजैरस्मभ्यं दातव्यैरन्नैः **वसुभिः** निवासहेतुभिर्धनैश्च स ऋभुः वसुः अस्माकं निवासयिता । अत एव **ददिः** तेषामन्नानां धनानां दाता भवतु । परोऽर्धर्चः प्रत्यक्षकृतः । हे **देवाः!** दानादिगुणयुक्ता ऋभुप्रभृतयः! **युष्माकम्** सम्बन्धिना **अवसा** रक्षणेन युक्ते **प्रिये** अस्माकमनुकूले **अहनि** दिवसे वर्तमाना वयम् **असुन्वताम्** सुन्वद्यजमानविरोधिनां शत्रूणाम् **पृत्सुतीः** सेना **अभि तिष्ठेम** ।।

**सायण–** ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र **शवसा** बलेन **नवीयान्** नवतरः प्रशस्ततरः **ऋभुः नः** अस्माकम् **इन्द्रः** परमेश्वरः । अस्माकं रक्षक इत्यर्थः । यद्वा । इन्द्र एव प्रसङ्गात् उरुभातीति नैरुक्तव्युत्पत्त्या ऋभुरिति स्तूयते । अपि च **वाजेभिः** वाजैरस्मभ्यं दातव्यैरन्नैः **वसुभिः** निवासहेतुभिर्धनैश्च **ऋभुः वसुः** अस्माकं निवासयिता अत एव **ददिः** तेषामन्नानां धनानां च दाता भवतु । परोऽर्धर्चः प्रत्यक्षकृतः । हे **देवाः!** दानादिगुणयुक्ता ऋभुप्रभृतयः **युष्माकं** **सम्बन्धिना** **अवसा** रक्षणेन युक्ते **प्रिये** अस्माकमनुकूले **अहनि** दिवसे वर्तमाना वयम् **असुन्वतां** सुन्वद्यजमानविरोधिनां शत्रूणां **पृत्सुतीः** सेना **अभि तिष्ठेम** ।

नवीयान् । नवशब्दात् आतिशायनिक ईयसुन् । वाजेभिः । 'बहुलं छन्दसि' इति भिस ऐसभावः । वसुः । 'वस निवासे' । अस्मात् अन्तर्भावितण्यर्थात् 'शृस्वृस्निहि' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । ददिः । 'डुदाञ् दाने' । 'आदृगमहन' इति किप्रत्ययः । लिड्वद्भावात् द्विर्भावादि । 'आतो लोप इटि च' इति आकारलोपः ।। ७ ।।

**सिद्धाञ्जनम्–** ऋभुरिति सर्वेषामृभूणामुपलक्षणम्, **शवसा** ज्वलितेन बलेन **नवीयान्** नवतरः प्रशस्ततरः **ऋभुः नः** अस्माकं **इन्द्रः** देवराजः परम ईश्वरो भवति । अपि च, **वाजेभिः** समृद्धिभिः **वसुभिः** धनैश्च **ऋभुः** अस्माकं **वसुः** निवासयिता देवः अत एव **ददिः** दाता

चाभीष्टानाम् । परोर्धर्चः प्रत्यक्षकृतः । हे **देवाः!** ऋभवः, **युष्माकम् अवसा** युष्मत्कर्तृकरक्षणेन **प्रिये** अनुकूले पीतिप्रदे **अहनि** दिवसे सम्प्राप्ते **असुन्वताम्** अयजमानानां यज्ञविरोधिनां देवद्वेषिणां **पृत्सुतीः** सेनाः **अभितिष्ठेम** अभिभवेम ।

नवीयान्– नवशब्दादातिशायनिके ईयसुन् । ददिः–डुदाञ् दाने, आदृगमहन इति किप्रत्ययः, लिड्वद्भावाद् द्विर्भावादि, आतो लोप इटि चेत्याकारलोपः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः ।**
**सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन ।। ८ ।।**
**निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनरिति । सौधन्वनासः । सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ।। ८ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'ऋषेः कस्यचिदग्निहोत्रधेनुस्तरुणवत्सा ममार । तस्यां विकर्तितायाम् आरुदता वत्सेन उद्वेजित ऋभून् स्वपितरौ वृद्धौ पुनर्युवानौ कुर्वतो ददर्श । तानुवाच, ममाप्यग्निहोत्रधेनुं मृतां पुनर्जीवयतेति । तस्य स्वमाहात्म्येन तस्माच्चर्मणः तामेव गाम् अशेषावयवोपेतां चक्रुः' इति । तदेतदिहोच्यते– **निश्चर्मण** इत्यादिना । विकर्तिताया गोश्चर्मणः हे **ऋभवः!** यूयं तामेव **गाम् अपिंशत** 'पिशि अवयवे' । अवयववतीं कृतवन्तः। सर्वावयवोपेताम् उदपादयन्तेत्यर्थः । उत्पाद्य **च सम् वत्सेन असृजत** संसर्जितवन्तः सङ्गमितवन्तः स्थ तां गाम् **मातरं पुनः** । कदा । उच्यते । **सौधन्वनासः!** सुधन्वनः पुत्राः! यदा **स्वपस्यया** शोभनमपः कर्म यस्य स स्वपाः । तदिच्छा स्वपस्या तया । शोभनकर्मकारित्वनिमित्तयश-इच्छयेत्यर्थः । हे **नरः!** मनुष्याः! **जिव्री** जीर्णौ सन्तौ पुनः युवानौ स्वौ मातापितरौ **अकृणोतन** कृतवन्तः ।। ८ ।।

**वेङ्कटमाधव–** कस्यचित् ऋषेः धेन्वां मृतायां तस्याः चर्म स न्यदधात् । अथ वत्सं रुदन्तं दृष्ट्वा ऋभूनस्तौत् । अथ ते तच्चर्मादाय काञ्चन धेनुं शिल्पकौशलेन कृत्वा बहिश्चर्मणा सन्धाय तपोमाहात्म्येन तां सप्राणां चक्रुः । अथ तेन वत्सेन पुनः अपि ताम् मातरम् समसृजन् ।

निष्पिंशतिः सन्धानकर्मा । सौधन्वनाः! शोभनकर्मेच्छया नेतारः! जीर्णावात्मीयौ पितरौ युवानौ **अकृणोतन** ।। ८ ।।

**मुद्गल–** पुरा कस्यचित् ऋषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभुं तुष्टाव । ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय तेन वत्सेन समयोजयन्निति । अयमर्थः पूर्वार्धेन प्रतिपाद्यते । हे **ऋभवः!** यूयम् **चर्मणः** चर्मणा **गाम्** धेनुम् **निः अपिंशत** निःशेषेणाश्लिष्टां संयुक्ताम् अकुरुत । तदनन्तरम् **मातरम्** तां गाम् पुनः **वत्सेन सम् असृजत** संसृष्टामकुरुत समगमयतेति यावत् । अपि च हे **सौधन्वनासः!** सुधन्वनः आङ्गिरसस्य पुत्राः! **नरः!** यज्ञस्य नेतार ऋभवः! **स्वपस्यया** शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत् । **जिव्री** जीर्णौ वृद्धौ **पितरा** मातापितरौ **युवाना** पुनर्यौवनोपेतौ **अकुणोतन** यूयम् अकृद्वम् ।। ८ ।।

**सायण–** पुरा कस्यचिदृषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभुं तुष्टाव । ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय तेन वत्सेन समयोजयन्निति । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे **ऋभवः!** यूयं **चर्मणः** चर्मणा त्वचा । तृतीयार्थे षष्ठी । **गां** धेनुं **निः अपिंशत** निःशेषेणाश्लिष्टां संयुक्तामकुरुत । तदनन्तरं **मातरं** तां गां **पुनः वत्सेन सम् असृजत** संसृष्टामकुरुत समगमयतेति यावत् । अपि च हे **सौधन्वनासः!** सुधन्वनः आङ्गिरसस्य पुत्राः **नरः** यज्ञस्य नेतारः ऋभवः **स्वपस्यया** शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत् । **जिव्री** जीर्णौ वृद्धौ **पितरा** मातापितरौ **युवाना** पुनर्यौवनोपेतौ **अकृणोतन** यूयमकृद्वम् ।

अपिंशत । 'पिश अवयवे' । तौदादिकः । 'शेमुचादीनाम्' इति नुम् । सौधन्वनासः । सुधन्वनः पुत्राः सौधन्वनाः । 'अन्' (पा.सू.६.४.१६७) इति प्रकृतिभावः । 'आज्जसेरसुक्' । 'आमन्त्रितस्य च' इत्याद्युदात्तत्वम् । स्वपस्यया । शोभनमपः स्वपः । तदिच्छा स्वपस्या । 'सुप आत्मनः क्यच्' । 'अ प्रत्ययात्' इति भावे अकारप्रत्ययः । जिव्री । 'जॄष् वयोहानौ' । 'जॄशस्तॄजागृभ्यः क्विन्' (उ.सू.४.४९४) । 'ऋत इद्धातोः' इति इत्वम् । रेफवकारयोः स्थान-विपर्ययः । बहुलवचनात् 'हलि च' इति दीर्घाभावः । नित्त्वादाद्युदात्तत्वम् । युवाना । 'सुपां सुलुक्' इति विभक्तेः आकारः । पितरा । पिता च माता च पितरौ । 'पिता मात्रा' (पा.सू.१.२.७०) इति पिता शिष्यते । पूर्ववत् विभक्तेः आकारः । अकृणोतन । 'कृवि हिंसाकरणयोश्च' । इदित्त्वात् नुम् । 'धिन्विकृण्व्योर च' इति उप्रत्ययः, तत्संनियोगेन वकारस्य

च अकारः । अतो लोपे सति तस्य स्थानिवद्भावात् लघूपधगुणाभावः । लङ्मध्यमबहुवचनस्य तशब्दस्य 'तप्तनप्तनथनाश्च' इति तनबादेशः । तस्य पित्त्वेन ङित्त्वाभावाद्गुणः ।। ८ ।।

**सिद्धाञ्जनम्–** अस्यामृचि ऋभूणां अन्यत्कर्म वर्णितम् । अस्यास्तात्पर्यं कामपि कथामवलम्ब्याविष्कृतं सायणीये, तत्र नास्माकमादरः, । अस्मदीयं तात्पर्य तु (१.२०.३) तत्रोक्तम् । स एष सारांशः । ''गौरियं आदिमा प्रभा अदितिर्भवति । ऋभवः एनां आवृण्वत् चर्म अपोद्धार्य संस्कृतवन्तः'' इत्यन्यत्र प्रोक्तम् । 'निश्चर्मणो गामरिणीत धीतिभिः' (४.३६.४) एषा गौः, विश्वरूपेति चोक्तम् 'ये देनुं विश्वजुवं विश्वरूपाम्' (४.३३.८) । विश्वस्य प्रेरयित्री विश्वरूपा च अदितिरेव माता अखण्डप्रज्ञास्वरूपिणी भवति । तस्या एव पुत्री जीव आत्मा मनुष्यस्य । मातुर्विप्रयुक्तः प्रज्ञायाम् । तत्र आवरणं चर्म हेतुर्भवति । तच्च तमोभूतं प्रकृतिकार्यमेव लक्षणीयम् । तदपाये अखण्डप्रज्ञाया अदितेरमृतसुवो धेनोः स्वीयां वृत्तिं रूपीभवन्तीं मानुषे पुरुषे निष्पादयन्त्येत ऋभवः'' । अथ ऋचोऽक्षरार्थः तात्पर्यबोधाय भवति । हे **ऋभवः!** यूयं **चर्मणः** आवरकात् तमोरूपात् **गाम्** 'सर्वदुघां' धेनुं **निरपिंशत** निःशेषेण अश्लिष्टरूपां विश्लिष्टां अकुरुतेत्यर्थः । तथा कृत्वा **मातरम्** तां **वत्सेन पुनः समसृजत** वत्सेन पुनः समगमयत । अन्यदार्भवं कर्म परेणार्धर्चेनोच्यते । हे सौधन्वनासः सुधन्वजाताः ऋभवः, **नरः** नेतारो यजमानुयजमानपुरुषाणामूर्ध्वमिति शेषः, यूयं **स्वपस्यया** शोभनकर्मेच्छया **जिव्री** जीर्णौ वृद्धौ **पितरा युवाना** पुनर्यौवनोपेतौ **अकृणोतन** अकृढ्वम् । अत्र माता पृथिवी पिता द्यौः । सृष्टौ सिद्धयोः वृद्धयोः जगत्पित्रोः द्यावापृथिव्योः मानुषे यजमाने नवतां बलवतीमापादयन्ति ऋभव इत्युक्तं भवति ।

अपिंशत–पिश अवयवे, तुदादिः, शे मुचादीनामिति नुम् । युवाना पितरा–उभयत्र विभक्तेराकारः ।। ८ ।।

**नीतिमञ्जरी–** सन्त उपकारनिरता इत्याह–

**सन्तः प्रभुत्वमापन्ना नोपकारं त्यजन्ति हि ।**
**ऋभवः प्राप्य देवत्वमृषेर्वत्समजीवयन् ।। ३० ।।**

त एव सन्तो नान्ये ये प्रभुत्वमापन्नाः महत्त्वं प्राप्य उपकारं सत्कारं न त्यजन्ति । ऋभुवत् । यथा ऋभवो देवाः कर्मणा देवत्वं प्राप्य उपकारं न त्यजुः । कुतः । कस्यचिदृषेर्वत्सं मृतायाः अजीवयन् ।

तदाह– (ऋ.१.११०.८)

**निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः ।**
**सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराऽकृणोतन ।**

तत्रेतिहासः । पुरा कस्यचिदृषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दीनं दृष्ट्वा ऋभूंस्तुष्टाव । ऋभवस्तादृशीमन्यां धेनुं कृत्वा तदीयेन तर्मणा संवार्य तेन वत्सेन समयोजयन्निति । ऋष्यादि पूर्ववत् ।

ऋचोऽयमर्थः– हे **ऋभवः!** यूयं **चर्मणः** । तृतीयार्थे षष्ठी । चर्मणा त्वचा **गां** धेनुं **निरपिंशत** निःशेषेण संयुक्तामकुरुत तदनन्तरं **मातरं** गां पुनः **वत्सेन समसृजत** । संश्लिष्टा-मकुरुत । अपि च– हे **सौधन्वनासः!** सुधन्वनः पुत्राः **नरः** नेतारः **स्वपस्यया** शोभननं अपः कर्म स्वपः तदिच्छा स्वपस्या तया शोभनकर्मेच्छया । **जिव्री** जीर्णौ वृद्धौ **पितरा** मातापितरौ **युवाना** पुनः यौवनोपेतौ **अकृणोतन** । तप्तनप्तेति (पा.७।१।४५) तनवादेशः । यूयमकृढ्वम् ।

तथा निगमाः ।

निश्चर्मणो गामरिणीत धीतिभिः (ऋ.१.१६१.७)

यया धिया गामरिणीत चर्मणः (ऋ.३.६०.२) । इत्येवमादयः । पुनर्– वारपुनः पुनरिति (ऋ.प्रा.१।११७) रेफः । असृजता मातरम्– (ऋ.प्रा.८।३१) इति पूर्वपदान्तदीर्घः । इति ऋभुभिर्देवत्वेपि उपकारो न त्यक्त इत्युक्तम् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**वाजेभिर्नो वाजसातावविड्ढ्यृभुमाँ इन्द्र चित्रमा दर्षि राधः ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ९ ॥**
**वाजेभिः । नः । वाजऽसातौ । अविड्ढि । ऋभुऽमान् । इन्द्र । चित्रम् । आ । दर्षि । राधः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ९ ॥**

**स्कन्द– वाजेभिः** इत्यन्यतरवचनेनापि वाजशब्देन साहचर्यात् त्रयोऽपि ऋभव उच्यन्ते । वाजप्रभृतिभिः ऋभुभिः सह **नः** अस्मान् **वाजसातौ** सङ्ग्रामे **अविड्ढि** अवपालय । किञ्च **ऋभुमान्** ऋभुभिः संयुक्तः सन् । ऋभुभिः सहेत्यर्थः । हे **इन्द्र!** चित्रम् विचित्रं पूज्यं वा **आ दर्षि** आदारय । देह्यस्मभ्यमित्यर्थः । किम् । **राधः** धनम् । आर्भवत्वाच्च सूक्तस्य उपसर्जनतयापि निर्दिष्टानामृभूणामेवात्र प्राधान्यं द्रष्टव्यम् । इन्द्रस्य तत्सखत्वात् गुणभावेनोपादानम् । **तत् नः** इत्याद्युक्तार्थम् (ऋ.१,९४,१६ द्र.) ।। ९ ।।

**वेङ्कटमाधव–**वाजेन भ्रात्रा सहितैः भवद्भिः सह अस्मान् सङ्ग्रामे रक्ष । ऋभुभिः सहितस्त्वम् चित्रम् धनम् **इन्द्र!** शत्रूणाम् आदारयेति । साहचर्यादिन्द्रस्य स्तुतिः ।। ९ ।।

**मुद्गल–** हे **इन्द्र! ऋभुमान्** ऋभुर्विभ्वा वाज इति त्रयोऽप्यृभुशब्देनोपचारादुच्यन्ते । तैर्युक्तस्त्वम् **वाजसातौ** वाजस्यान्नस्य सम्भजने निमित्तभूते सति **वाजेभिः** अन्नैः नः **अविड्ढि** अस्मान् व्याप्नुहि । अपि च **चित्रम्** चायनीयम् **राधः** धनम् **आ दर्षि** अस्मभ्यं दातुम् आद्रियस्व । तृतीयसवने ऋभुभिः सहेन्द्रस्यावस्थानात् प्रसङ्गादत्रेन्द्रस्तुतिः । यदेतदस्माभिः प्रार्थितम् अस्मदीयम् **तत्** मित्रादयः **ममहन्ताम्** पूजयन्तु ।। ९ ।।

**सायण–** हे **इन्द्र! ऋभुमान्** । ऋभुर्विभ्वा वाज इति त्रयोऽपि ऋभुशब्देनोपचारादत्रोच्यन्ते । तैर्युक्तस्त्वं **वाजसातौ** वाजस्यान्नस्य सम्भजने निमित्तभूते सति **वाजेभिः** अन्नैः **अविड्ढि** अस्मान् व्याप्नुहि । यद्वा । वाजसातिरिति सङ्ग्रामनाम । वाजसातौ सङ्ग्रामे वाजेभिर्वेजनयुक्तैरश्वैरविड्ढि अस्मान् रक्ष । अपि च **चित्रं** चायनीयं **राधः** धनम् **आ दर्षि** अस्माभ्यं दातुमाद्रियस्व । तृतीयसवने ऋभुभिः सहेन्द्रस्यावस्थानात् प्रसङ्गादत्रेन्द्रस्तुतिः । यदेतदस्माभिः प्रार्थितमस्मदीयं **तत्** मित्रादयः **ममहन्तां** पूजयन्ताम् ।

वाजसातौ । 'वन षण सम्भक्तौ' । भावे क्तिन् । 'जनसनखनां सञ्झलोः' इति आत्वम् । वाजानां सातिर्यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अविड्ढि । 'विष्लृ व्याप्तौ' । लोटो हिः । 'बहुलं छन्दसि' इति शपो लुक् । 'हुझल्भ्यो हेर्धिः' । ष्टुत्वजश्त्वे । 'छन्दस्यपि दृश्यते' (पा.सू.६.४.७३) इति दृशिग्रहणात् लोटि अडागमः । यद्वा । अवतेर्लोटि 'सिब्बहुलं लेटि' इति बहुलवचनात् विकरणः सिप् । तस्यार्धधातुकत्वात् इट् । 'आदेशप्रत्यययोः' इति षत्वम् ।

धित्वादि पूर्ववत् । ऋभुमान् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । दर्षि । 'दृङ् आदरे' । लोटि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति विकरणस्य लुक् ।। ९ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र!** ऋभूणामिन्द्रेण सहैकभावं गतत्वादेवं सम्बोधनम् । **ऋभुमान्** ऋभुभिर्युक्तः त्वं **वाजसातौ** समृद्धिप्राप्तौ, निमित्तसप्तमी, **वाजेभिः** समृद्धिभिः, त्वदीयाभिः **नः** अस्मान् **अविड्ढि** व्याप्नुहि । तथा व्याप्य **चित्रम्** अद्भुतमुत्तमं **राधः** धनं **आदर्षि** आद्रियस्व अस्मत्कृते । तन्नो मित्र इत्यादि गतम् ।

अविड्ढि–विष्लृ व्याप्तौ, लोटो हिः, शपो लुक्, छन्दस्यपि दृश्यते इति दृशिग्रहणात् लोट्यडागमः । दर्षि–दृङ आदरे, लोट्, व्यत्ययेन परस्मैपदम्, विकरणस्य लुक् ।। ९ ।।

।। इति प्रथमाष्टके सप्तमाध्याये एकत्रिंशो वर्गः ।।

## ।। अथ द्वात्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् १११)

(५ कुत्स आङ्गिरसः । ऋभवः । जगती । ५ त्रिष्टुप्)

**तक्ष॒न् रथं॑ सु॒वृतं॑ विद्म॒नाप॑स॒स्तक्ष॒न् हरी॑ इन्द्र॒वाहा॒ वृष॑ण्वसू ।**
**तक्ष॑न् पि॒तृभ्या॑मृ॒भवो॒ युव॒द् वय॒स्तक्ष॑न् व॒त्साय॑ मा॒तरं॑ सचा॒भुव॑म् ।। १ ।।**
तक्ष॑न् । रथ॑म् । सु॒ऽवृत॑म् । वि॒द्म॒नाऽअ॑पसः । तक्ष॑न् । हरी॒ इति॑ । इ॒न्द्र॒ऽवाहा॑ । वृष॑ण्वसू॒ इति॒ वृष॑ण्ऽवसू । तक्ष॑न् । पि॒तृऽभ्या॑म् । ऋ॒भवः॑ । युव॑त् । वयः॑ । तक्ष॑त् । व॒त्साय॑ । मा॒तर॑म् । स॒चा॒ऽभुव॑म् ।। १ ।।

**स्कन्द–** ऋभवः **तक्षन्** 'तक्षतिः करोतिकर्मा' (या.४,१९) । कृतवन्तो रथम् । कस्मै । अश्विभ्याम् । कुत एतत् । 'तक्षन्नासत्याभ्याम्' (ऋ.१,२७,३) इति मन्त्रान्तरदर्शनात् । कीदृशम् । **सुवृतम्** । सुगमनमित्यर्थः । कीदृशाः । **विद्मनापसः** अत्यन्तोत्कृष्टकर्मत्वा-द्वेदितव्यकर्माणः । किञ्च **तक्षन् हरी इन्द्रवाहा** इन्द्रस्य वोढारौ **वृषण्वम्** वृष्टिधनौ वर्षितारौ वा धनानाम् । धनानां दातारावित्यर्थः । किञ्च **तक्षन्** स्वाभ्याम् **पितृभ्याम् ऋभवः युवत्** यौवनलक्षणम् वयः । किञ्च **तक्षन् वत्साय मातरम् सचाभुवम्** सहभाविनीम् । मृतां सतीं

चर्मण उत्पाद्य वत्सेन सह संयोजितवन्त इत्यर्थः । तदेतत् पूर्वमप्युक्तम्– 'निश्चर्मणः' (ऋ.१,११०,८) इति ॥ १ ॥

**वेङ्कटमाधव– तक्षन्** अकुर्वन् **रथम्** सुवर्तनं ज्ञानशिल्पकर्माणोऽश्विभ्याम् । **तक्षन्** अश्वौ इन्द्रस्य वोढारौ प्रदीयमानधनौ । **तक्षन्** पितृभ्याम् **ऋभवः** युवत्वयुक्तम् **वयः** । **तक्षन्** च **वत्साय मातरम्** सहजातामात्मीयामिति । कर्ममात्रसमुद्देशः सूक्ते ॥ १ ॥

**मुद्गल–** 'तक्षन्' इति पञ्चर्चं षष्ठं सूक्तम् । कुत्स ऋषिः । पञ्चमी त्रिष्टुप् । शिष्टा जगत्यः । ऋभवो देवता ।

**विद्मनापसः** उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माण ऋभवः **रथम्** अश्विनोरारोहणार्थम् **सुवृतम्** शोभनवर्तनम् **तक्षन्** अकुर्वन् । तथा **इन्द्रवाहा** इन्द्रस्य वाहनभूतौ **हरी** हरणशीलावेतत्संज्ञकाश्वौ **तक्षन्** कृतवन्तः । कीदृशौ । **वृष्णवसू** सेचनसमर्थेन दृढतरेण धनेन युक्तौ । अपि च **पितृभ्याम्** स्वकीयाभ्यां मातापितृभ्यां वृद्धाभ्याम् **युवत्** यौवनोपेतम् **वयः** आयुः **ऋभवः तक्षन्** कृतवन्तः । तथा **वत्साय मातरम्** गाम् **सचाभुवन्** सहभुवं सहवर्तमानाम् **तक्षन्** अकुर्वन् ॥ १ ॥

**सायण–** 'तक्षन्' इति पञ्चर्चं षष्ठं सूक्तं कुत्सस्यार्षमार्भवम् । पञ्चमी त्रिष्टुप् । शिष्टाश्चतस्रो जगत्यः । तथा चानुक्रान्तं– 'तक्षन्पञ्चान्त्या त्रिष्टुप्' इति । अग्निष्टोमे वैश्वदेवशस्त्रे इदं सूक्तमार्भवं निविद्धानम् । सूत्रितं च– 'तक्षन्रथमयं वेनश्चोदयत्पृश्निगर्भाः' (आश्व.श्रौ.५.१८) इति ।

**विद्मनापसः** उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माणो लाभवत्कर्माणः वा ऋभवः **रथम्** अश्विनोः आरोहणार्थं **सुवृतं** शोभनवर्तनं सुचक्रं वा **तक्षन्** अकुर्वन् । तथा **इन्द्रवाहा** इन्द्रस्य वाहनभूतौ **हरी** हरणशीलावेतत्संज्ञकावश्वौ **तक्षन्** कृतवन्तः । कीदृशौ । **वृषण्वसू** सेचनसमर्थेन दृढतरेण धनेन बलेन वा युक्तौ । अपि च **पितृभ्यां** स्वकीयाभ्यां मातापितृभ्यां वृद्धाभ्यां **युवत्** यौवनोपेतं **वयः** आयुः **ऋभवः तक्षन्** कृतवन्तः । तथा **वत्साय मातरं** गां **सचाभुवं** सहभुवं सहवर्तमानां **तक्षन्** अकुर्वन् ।

तक्षन् । 'तक्षु त्वक्षू तनूकरण' । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । सुवृतम् । शोभनं वर्तने इति सुवृत् । 'वृतु वर्तने' । 'क्विप् च' इति क्विप् । विद्मनाषसः ।

'विद ज्ञाने' । 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणात् भावे मनिन् । संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावः । बहुलवचनात् अलुक् । यद्वा । 'विद्लृ लाभे' । औणादिको भावे भक् । ततः पामादिलक्षणो नप्रत्ययः । विद्मनं लाभवत् अपः कर्म येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । छान्दसः पूर्वसवर्णदीर्घः । इन्द्रवाहा । इन्द्रं वहतः इतीन्द्रवाहौ । 'वहश्च' इति ण्विप्रत्ययः । 'अत उपधायाः' इति वृद्धिः । 'सुपां सुलुक्' इति विभक्तेः आकारः । वृषण्वसू । 'वृष सेचने' । 'कनिन्युवृषितक्षि' इत्यादिना कनिन् । नित्त्वादाद्युदात्तत्वम् । 'वृषण्वस्वश्वयोरुपसंख्यानम्' (पा.सू. १.४.१८.४) इति वसुशब्दे उत्तरपदे वृषण्भावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । युवत् । अत्र युवञ्शब्दः सामर्थ्यात् प्रवृत्तिनिमित्तं युवत्वमात्रमाचष्टे । 'तदस्मिन्नस्ति' इति युवत् । छान्दसो वर्णलोपः ।। १ ।।

**सिद्धाञ्जनम्–** 'तक्षन्नि'ति पञ्चर्चं षष्ठं सूक्तं कुत्सस्यार्षं आर्भवं, पञ्चमी त्रिष्टुप्, शिष्टाश्चस्रो जगत्यः ।

मनुष्याणामुद्धाराय, यजमानं प्रति इन्द्रस्यागमनाय, ऋभवः इन्द्ररथाऽऽश्विनाश्वतक्षणादि कुर्वन्ति । इदमप्यार्भवं कर्म प्राक् सङ्क्षेपेणोक्तम् (१.२० सू.) । **विद्मनापसः** विद्मना ज्ञाने-नोत्कृष्टेन निष्पाद्यानि अपांसि कर्माणि, आर्भवमन्त्रवर्णोरावेदितानि, येषां ते **ऋभवः रथम्** अश्विनोरारोहणार्थं **सुवृतम्** शोभनवर्तनं **तक्षन्** अकुर्वन् । तथा **इन्द्रवाहा** इन्द्रस्य वाहनभूतौ **वृषण्वसू** वर्षितृ वसु धनं ययोस्तौ, अभीष्टवर्षणसमर्थधनयुक्तौ, **हरी** अश्वौ **तक्षन्** अकुर्वन् । अपि च **पितृभ्याम्** माता पितृभ्यां, द्यावापृथिवीभ्यां वृद्धाभ्यां **युवत्** यौवनोपेतं नवं **वयः** आयुः **ऋभवः तक्षन्** कृतवन्तः । तथा **वत्साय मातरम्** गां **सचाभुवम्** सहभुवं सह वर्तमानां वत्सेन संयुक्तां **तक्षन्** अकुर्वन् । अत्र रहस्यं सर्वं पूर्वस्यां उक्तम् ।

सुवृतम्–शोभनं वर्तत इति सुवृत्, क्विप् । वृषण्वसू–वृषण्वस्वश्वयोरुपसङ्ख्यानमिति वसुशब्दे उत्तरपदे वृषण्भावः । युवत्–अत्र युवन्शब्दः युवत्वमाचष्टे, तदस्मिन्नस्तीति युवत्, छान्दसो वर्णलोपः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**आ नो॑ य॒ज्ञाय॑ तक्षत ऋभु॒मद्वय॒ः क्रत्वे॒ दक्षा॑य सुप्र॒जाव॑तीमि॒षम् ।**
**यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्न॒ः शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम् ।। २ ।।**
**आ । न॒ः । य॒ज्ञाय॑ । त॒क्ष॒त । ऋ॒भु॒ऽमत् । वय॑ः । क्रत्वे॑ । दक्षा॑य । सु॒ऽप्र॒जाव॑तीम् । इ॒षम् । यथा॑ । क्षया॑म । सर्व॑ऽवीरया । वि॒शा । तत् । न॒ः । शर्धा॑य । धा॒स॒थ॒ । सु । इ॒न्द्रि॒यम् ।। २ ।।**

**स्कन्द– नः** अस्माकम् **यज्ञाय** यज्ञार्थम् **आ तक्षत** आभिमुख्येन कुरुत । अस्मभ्यं दत्तेत्यर्थः । कीदृशम् । **ऋभुमत्** ऋभवो यष्टव्यत्वेन सम्बन्धिनो यस्य सन्ति तद् ऋभुमत् । युष्माकमेव ऋभूणां योग्यमित्यर्थः । किं तत् । **वयः** अन्नम् । न च केवलाय यज्ञाय । **क्रत्वे** भोजनाच्छादनादिकर्मणे च । **दक्षाय** बलाय । न च केवलमन्नम् । **सुप्रजावतीम् इषम्** शोभनया प्रजया संयुक्तम् अन्नम् । शोभनया प्रजया सहितमन्नं दत्त, मा केवलमित्यर्थः । किञ्च **यथा क्षयाम** स्वस्मिन् स्थाने वयं निवसेम । न च केवलाः । **सर्ववीरया विशा** सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेतया परिचारकमनुष्यजात्या सह । **तत्** शुद्धोऽप्ययं तच्छब्दः थाल्प्रत्ययान्तो द्रष्टव्यः । तथा **नः** अस्मभ्यम् **शर्धाय** उत्साहाय बलाय वा **धासथ सु** सुष्ठु दत्त **इन्द्रियम्** धनं वीर्यं वा ।। २ ।।

**वेङ्कटमाधव– आ** कुरुत अस्माकं यज्ञकरणाय दीप्तम् आयुः कर्मणे वृद्धये च । शोभनप्रजायुक्तम् अन्नं च । यथा निवसेम सर्वैर्वीरैर्युक्तया **विशा** तादृशं धनम् अस्मभ्यं सुष्ठु दत्त बलाय ।। २ ।।

**मुद्गल–** हे ऋभवः! **नः** अस्माकम् **यज्ञाय** यज्ञार्थम् **ऋभुमत्** उरुभासनयुक्तम् **वयः** हविर्लक्षणमन्नम् **आ तक्षत** आ समन्तात् उत्पादयत । एतदेव विव्रियते । **क्रत्वे** क्रतवेऽस्मदीयाय कर्मणे **दक्षाय** च बलाय च एतदुभयार्थम् **सुप्रजावतीम्** शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्ताम् **इषम्** अन्नम् आ तक्षतेति शेषः । अपि च **सर्ववीरया** सर्वैर्वीरैः पुत्रादिभिरुपेतया **विशा** प्रजया सह **यथा** येन **क्षयाम** सुखेन निवसाम **तत्** तादृशम् **इन्द्रियम्** धनम् **नः** अस्मभ्यम् **शर्धाय** बलार्थम् **सु धासथ** सुष्ठु धत्त । प्रयच्छतेत्यर्थः ।। २ ।।

**सायण–** हे ऋभवः! **नः** अस्माकं **यज्ञाय** यज्ञार्थं ऋभुमत् उरुभासनयुक्तं **वयः** हविर्लक्षणमन्नम् **आ तक्षत** आ समन्तादुत्पादयत । एतदेव विव्रियते । **ऋत्वे** ऋतवेऽस्मदीयाय कर्मणे **दक्षाय** बलाय च । तादर्थ्ये चतुर्थी । एतदुभयार्थं **सुप्रजावतीं** शोभनाभिः पुत्रपौत्रादि-लक्षणाभिः प्रजाभिर्युक्ताम् **इषम्** अन्नम् आ तक्षत इति शेषः । अपि च **सर्ववीरया** सर्वैर्वीरैः पुत्रादिभिरुपेतया **विशा** प्रजया सह **यथा** येन प्रकारेण **क्षयाम** सुखेन निवसाम **तत्** तादृशम् इन्द्रियम् । धननामैतम् । धनं **नः** अस्मभ्यं **शर्धाय** बलार्थं **सु धासथ** सुष्ठु धत्त प्रयच्छतेत्यर्थः ।

ऋभुमत् । 'उरु भाति' इति नैरुक्तव्युत्पत्त्या (निरु.११.१५) ऋभुशब्दः प्रकाशमात्रवाची । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । ऋत्वे । 'जसादिषु च्छन्दसि वावचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । क्षयाम । 'क्षि निवासगत्योः' । व्यत्ययेन शप् । धासथ । धात्रो लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** हे ऋभवः! **नः** अस्माकं **यज्ञाय** यजनस्य सम्यङ्निर्वाहाय **ऋभुमत्** युष्मद्विभवोपेतं **वयः** ज्ञानं **आतक्षत** समन्तान्निष्पादयत । **ऋत्वे** क्रतवे, प्राज्ञाय कर्मणे **दक्षाय** युक्तायुक्तविवेचनबलाय **सुप्रजावतीम्** शोभनसन्तानोपेतां **इषम्** एषणां, प्रेरणाशक्तिं च आतक्षतेति सम्बन्धः । **सर्ववीरया** सर्वविधवीर्योपेतया **विशा** प्रजया युक्ताः **यथा क्षयास** येन प्रकारेण सुखं निवसाम **तत्** तादृशं **इन्द्रियम्** इन्द्रिलिङ्गं बलं **नः शर्धाय** अस्माकं बलाय **सुधासथ** सुष्ठु धत्त, अस्मासु धारयत ।

धासथ–धात्रो लेट्यडागमः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**आ तक्षत सातिमस्मभ्यमृभवः सातिं रथाय सातिमर्वते नरः ।**
**सातिं नो जैत्रीं सं महेत विश्वहा जामिमजामिं पृतनासु सक्षणिम् ।। ३ ।।**
आ । तक्षत । सातिम् । अस्मभ्यम् । ऋभवः । सातिम् । रथाय । सातिम् । अर्वते । नरः । सातिम् । नः । जैत्रीम् । सम् । महेत । विश्वहा । जामिम् । अजामिम् । पृतनासु । सक्षणिम् ।। ३ ।।

**स्कन्द– आ तक्षत** आभिमुख्येन कुरुत **सातिम्** 'षणु दाने' । दानम् अस्मभ्यम् हे **ऋभवः!** कस्य दानम् । सामर्थ्याद्धनानाम् । न च केवलानां धनानाम् । **सातिम् रथाय** षष्ठ्यर्थे चतुर्थ्येषा । बहुवचनस्य स्थाने एकवचनम् । रथानाम् । **सातिम् अर्वते** अश्वानां च हे **नरः!** मनुष्याः! । किञ्च युष्मत्प्रसादात् **सातिम्** दानम् **नः** अस्माकं सम्बन्धिनीं सारवत्तया प्राभूत्येन च दानान्तराणां **जैत्रीम् सम् महेत** मह पूजायाम् । सर्वलोकः सम्पूजयेदित्याशास्महे सर्वदा । तादृशीं नः सातिं दत्त यादृशीं सर्वो जनः सर्वदा पूजयतीत्यर्थः । **जामिम् अजामिम्** समानजातीयामसमानजातीयां च । अयोग्यां चास्माकं योग्यां चात्यन्तोकृष्टामित्यर्थः । अथवा जामिमजामिमिति पूजयितुरयं निर्देशः । द्वितीया च प्रथमार्थे । समानजातीयोऽसमानजातीयश्च पूजयेदित्यर्थः । **पृतनासु** सङ्ग्रामेषु **सक्षणिम्** 'क्षणु हिंसायाम्' । हिंसया सह सक्षणिः, तां सक्षणिम् । शत्रुहिंसासमर्थामित्यर्थः ।। ३ ।।

**वेङ्कटमाधव– आ** कुरुत घनम् अस्मभ्यम् **ऋभवः!** धनम् **रथाय**, धनम् **अर्वते** नेतारः! । सर्वो लोको भवदीयाम् अस्मद्विषयाम् **सातिम्** शत्रूणां जयशीलां सर्वदा सम्पूजयेत् । ज्ञातिमज्ञातिश्च युद्धेषु सहमानाम् ।। ३ ।।

**मुद्गल**– हे **नरः!** यज्ञस्य नेतारः! **ऋभवः! अस्मभ्यम्** अनुष्ठातृभ्यः **सातिम्** भजनीयमन्नम् **आ तक्षत** आ समन्तात् कुरुत । तथाऽस्मदीयाय **रथाय** रंहणशीलाय पुत्रादये रथायैव वा **सातिम्** सम्भजनीयं घनम् आतक्षत । तथा **अर्वते** अश्वाय **सातिम्** सम्भजनीयम् अन्नम् अदनयोग्यम् आतक्षतेत्येव । किञ्च **विश्वहा** सर्वेषु अहस्सु **नः** अस्माकम् **जैत्रीम्** जयशीलाम् अपरिमितत्त्वेन सर्वाधिकाम् **सातिम्** सम्भजनीयं धनम् **सम् महेत** सर्वो जनः सम्यक् पूजयतु । वयं च **पृतनासु** सङ्ग्रामेषु **जामिम्** सहजातम् **अजामिम्** असहजातं शत्रुम् **सक्षणिम्** अस्मान् अभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः ।। ३ ।।

**सायण– हे नरः!** यज्ञस्य नेतारः **ऋभवः अस्मभ्यम्** अनुष्ठातृभ्यः **सातिं** सम्भजनीयमन्नं धनं वा **आ तक्षत** । आ समन्तात्कुरुत । तथा अस्मदीयाय **रथाय** रंहणशीलाय पुत्रादये रथायैव वा **सातिं** सम्भजनीयं धनम् आ तक्षत । तथा **अर्वते** अश्वाय **सातिं** सम्भजनीयमन्नं धनं वा अश्वयोग्यम् आ तक्षतेत्येव । किं च **विश्वहा** सर्वेष्वहःसु **नः** अस्माकं **जैत्रीं** जयशीलामपरिमितत्वेन सर्वाधिकां **सातिं** सम्भजनीयं धनं **सं महेत** । सर्वो जनः सम्यक् पूजयतु ।

वयं च **पृतनासु** सङ्ग्रामेषु **जामिं** सहजातम् **अजामिं** सहानुत्पन्नं शत्रुं वा **सक्षणिम्** अस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः ।

सातिम् । 'ऊतियूतिजूतिसाति' इत्यादिना क्तिन उदात्तत्वम् । महेत । 'मह पूजायाम्' । सक्षणिम् । 'षह अभिभवे' । औणादिकः सनिप्रत्ययः । ढत्वकत्वषत्वानि ॥ ३ ॥

**सिद्धाञ्जनम्–** हे **नरः!** नेतारो यज्ञस्य, **ऋभवः, अस्मभ्यम्** अस्मत्कृते **सातिम्** सम्भजनीयं बलं (धनमिति सायणः) **आतक्षत** समन्तात् कुरुत । तथा **रथाय** रंहणशीलाय अस्माकमूर्ध्वयानाय **सातिम्** आतक्षत । तथा **अर्वते** अश्वाय **सातिम्** आतक्षत । किञ्च, **विश्वहा** सर्वेष्वहस्सु **नः** अस्माकं **जैत्रीम्** जयशीलां **सातिम्** सम्भजनीयां शक्तिं, सर्वाधिकबलं **सं महेत** सर्वोऽपि सम्यक् पूजयतु । वयं च **पृतनासु** सङ्ग्रामेषु **जामिम्** सहजातं बन्धुं **अजामिम्** तदितरं वा शत्रुं **सक्षणिम्** अस्मानभिभवन्तं, युष्मदनुग्रहादभिभवेम ।

महेत–मह पूजायाम् । सक्षणिम्–सह अभिभवे, औणादिकः सनिप्रत्ययः, ढत्वं, तथा कत्वषत्वे ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**ऋभुक्षणमिन्द्रमा हुव ऊतयं ऋभून् वाजान् मरुतः सोमपीतये ।**
**उभा मित्रावरुणा नूनमश्विना ते नो हिन्वन्तु सातये धिये जिषे ॥ ४ ॥**
**ऋभुक्षणम् । इन्द्रम् । आ । हुवे । ऊतये । ऋभून् । वाजान् । मरुतः । सोमऽपीतये ।**
**उभा । मित्रावरुणा । नूनम् । अश्विना । ते । नः । हिन्वन्तु । सातये । धिये । जिषे ॥**

**स्कन्द–** ऋभुभिः सह क्षिणोति हिनस्ति शत्रूनिति ऋभुक्षाः, तम् **ऋभुक्षणम्** । अथवा 'ऋभुक्षाः' (निघ.३,३) इति महन्नाम । महान्तम् **इन्द्रम्** ऋभुसखत्वादृभूणां वा प्रियचिकीर्षया **आ हुवे** आह्वयामि । **ऊतये** पुरोडाशादिहविस्तर्पणाय । न च केवलमिन्द्रम् । **ऋभून्** अपि स्वयम् **वाजान्** वाजप्रभृतींस्त्रीनपि **मरुतः** च तत्सखान् । न च केवलाय पुरोडाशादिह-विस्तर्पणाय । **सोमपीतये** सोमपानाय च । उभौ च मित्रावरुणौ **अश्विना** च । **नूनम्** इति पदपूरणः क्षिप्रार्थो वा । क्षिप्रमाह्वयामीति । आहूताश्च सन्तः **ते नः हिन्वन्तु** । 'हि गतौ वृद्धौ च' । अस्मान् प्रति गच्छन्तु । वृद्ध्यर्थो वा हिनोतिः सामर्थ्याच्चान्तर्णीतण्यर्थः । अस्मान्

वर्धयन्तु । किमर्थम् । **सातये** 'षणु दाने' । दानेन चात्र तत्पूर्वको लाभो लक्ष्यते । लाभाय । **धिये** प्रज्ञायै कर्मणे वा यागाख्याय । **जिषे** जेतुं च शत्रून् । जयाय च शत्रूणामित्यर्थः । आर्भवत्वाच्चास्य सूक्तस्य ऋभूणामेवात्र प्राधान्यम् इन्द्रादीनां तु तत्सखत्वात् गुणभावेनोपादानम् ॥

**वेङ्कटमाधव–** महान्तम् **इन्द्रम्** रक्षणार्थम् आह्वयामि । एवम् **ऋभून्** वाजेन युक्तान् **मरुतः** च सोमपानायाह्वयामि । तथा उभौ मित्रावरुणौ अश्विनौ च । ते अस्मान् प्रेरयन्तु धनाय कर्मणे जयाय चेति ॥ ४ ॥

**मुद्गल–** **ऋभुक्षणम्** महान्तम् **इन्द्रम् आ हुवे** आह्वयामि । किमर्थम् । **ऊतये** रक्षणार्थम् । तथा **ऋभून् वाजान्** ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते । ततः शब्दद्वयेन त्रयोऽप्युच्यन्ते । एवंविधान् **ऋभून् मरुतः** च **सोमपीतये** सोमपानाय आह्वयामि । तथा **उभा** युगलरूपेण संहत्य वर्तमानौ द्वौ **मित्रावरुणा** मित्रावरुणौ **अश्विना** अश्विनौ च **नूनम्** अवश्यं सोमपानाय आह्वयामीति शेषः । अपि च आहूताश्च ते इन्द्रादयः **नः** अस्मान् **हिन्वन्तु** प्रेरयन्तु । गमयन्त्वित्यर्थः । किमर्थम् । **सातये** सम्भजनीयाय धनाय **धिये** धनसाध्याय कर्मणे **जिषे** जेतुं शत्रणां जयार्थश्च ॥ ४ ॥

**सायण–** **ऋभुक्षणम्** । महन्नामैतत् । महान्तम् **इन्द्रम् आ हुवे** आह्वयामि । किमर्थम् । **ऊतये** रक्षणार्थम् । तथा **ऋभून्वाजान्** । ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते । अतः शब्दद्वयेन त्रयोऽप्युच्यन्ते । तदुक्तं यास्केन– 'प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन' (निरु.११.१६) इति । एवंविधानृभून् मरुतः च सोमपीतये सोमपानायाह्वयामि । तथा **उभा** युगलरूपेण संहत्य वर्तमानौ द्वौ मित्रावरुणावश्विनौ च **नूनम्** अवश्यं सोमपानायाह्वयामीति शेषः । अपि च आहूताश्चेन्द्रादयः **नः** अस्मान् **हिन्वन्तु** प्रेरयन्तु गमयन्त्वित्यर्थः । किमर्थम् । **सातये** सम्भजनीयाय धनाय **धिये** धनसाध्याय कर्मणे **जिषे** जेतुं शत्रूणां जयार्थं च ।

ऋभुक्षणम् । उरुभासमाने स्थाने क्षियति निवसतीति ऋभुक्षाः । उरुपूर्वाद्भातेः 'मृगय्वादयश्च' (उ.सू.१.३७) इति कुप्रत्ययः । 'आतो लोप इटि च' इति आकारलोपः पूर्वपदस्य ऋभावश्च । ऋभुशब्दोपपदात् 'क्षि निवासगत्योः' इत्यस्मात् 'पतेस्थ च' इति विधीयमान इनिप्रत्ययो

बहुलवचनात् भवति । टिलोपः । 'इतोऽत्सर्वनामस्थाने' (पा.सू.७.१.८६) इति अत्वम् इकारस्य । 'वा षपूर्वस्य निगमे' इति विकल्पनात् उपधादीर्घाभावः । यद्वा । अर्तेः भुक्षिनक् । कित्त्वाद्गुणाभावः । अत एव न अवगृह्यते । सोमपीतये । 'पा पाने' । 'स्थागापापचो भावे' इति भावे क्तिन् । 'घुमास्था' इति ईत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । हिन्वन्तु । 'हि गतौ वृद्धौ च' । अस्मात् अन्तर्भावितण्यर्थात् लोटि स्वादित्वात् श्नुः । जिषे । 'जि जये' । 'तुमर्थे सेसेन्' इति क्सेप्रत्ययः ॥ ४ ॥

**सिद्धाञ्जनम्– ऋभुक्षणम्** ऋभुषु क्षियति निवसतीति ऋभुक्षाः, तं **इन्द्रम् आहुवे** आह्वयामि किमर्थम्? ऊतये उत्तराभिवृद्धये । तथा **ऋभून्** ऋभुर्विभ्वा वाज इति त्रयो भ्रातरः, एकैकोऽपि गणरूपः, तस्मादृभूनिति बहुवचनम् । तथा **वाजान् मरुतः** एतानपि **सोमपीतये** सोमपानाय आह्वयामि । तथा **उभा** उभौ द्वन्द्वरूपेणावस्थितौ **मित्रावरुणा** एतौ **अश्विना** अश्विनौ च **नूनम्** अवश्यं आह्वयामि । **ते** आहूता इन्द्रादयः **नः** अस्मान् **हिन्वन्तु** प्रेरयन्तु । किमर्थम्? **सातये** सम्भजनीयायोत्तमधनाय **धिये** शोभनायै बुद्धये **जिषे** जयार्थं च ।

हिन्वन्तु–हि गतिवृद्ध्योः, स्वादित्वात् श्नुः, अन्तर्भावितण्यर्थः । जिषे–जि जये, तुमर्थे क्सेप्रत्ययः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**ऋ॒भुर्भ॒राय॒ सं शि॑शातु सा॒तिं स॑मर्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ५ ॥**
**ऋ॒भुः । भ॒राय॑ । सम् । शि॒शा॒तु॒ । सा॒तिम् । स॒म॒र्य॒ऽजित् । वाजः॑ । अ॒स्मान् । अ॒वि॒ष्टु॒ ।**
**तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥**

**स्कन्द– ऋभुः भराय** सङ्ग्रामाय **सम् शिशातु** अत्यर्थं पुनःपुनः वा संस्करोतु । **सातिम्** दानम् । सङ्ग्रामार्थं यदस्माकं दित्सितं तदत्यर्थं पुनःपुनः वा संस्करोत्वित्यर्थः । **समर्थजित्** 'समर्यः' (निघ. २,१७) इति सङ्ग्रामनाम । सङ्ग्रामाणां जेता **वाजः** अपि **अस्मान् अविष्टु** पालयतु । **तत् नः** इत्याद्युक्तार्थम् (ऋ.१,९४,१६ द्र.) ॥ ५ ॥

**वेङ्कटमाधव– ऋभुः** सङ्ग्रामाय धनं तीक्ष्णीकरोतु । सङ्ग्रामजित् **वाजः** च **अस्मान्** अवतु ॥

**मुद्गल–** **ऋभुः** प्रथमः अस्माकम् **सातिम्** सम्भजनीयं धनम् **भराय** सङ्ग्रामार्थम् **सम् शिशातु** सम्यक् तीक्ष्णीकरोतु । सङ्ग्रामोचितं धनम् अस्मभ्यं प्रयच्छत्वित्यर्थः । तथा **समर्यजित्** मर्या मनुष्याः तैः सह वर्तत इति समर्थः सङ्ग्रामः, तत्र शत्रूणां जेता **वाजः** एतत्संज्ञः तृतीयश्च **अस्मान्** स्तोतॄन् **अविष्टु** अवतु । सङ्ग्रामाद्रक्षत्वित्यर्थः । यदनेन सूक्तेन प्रार्थितम् अस्मदीयम् **तत्** मित्रादयः **ममहन्ताम्** पूजयन्तु ।। ५ ।।

**सायण–** **ऋभुः** प्रथमोऽस्माकं **सातिं** सम्भजनीयं धनं **भराय** सङ्ग्रामार्थं **सं शिशातु** सम्यक् तीक्ष्णीकरोतु । सङ्ग्रामोचितं धनमस्मभ्यं प्रयच्छत्वित्यर्थः । तथा **समर्यजित्** । मर्या मनुष्याः । तैः सह वर्तते इति समर्थः सङ्ग्रामः । तत्र शत्रूणां जेता **वाजः** एतत्संज्ञस्तृतीयश्च **अस्मान्** स्तोतॄन् **अविष्टु** अवतु सङ्ग्रामाद्रक्षत्वित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयं **तत्** मित्रादयः **ममहन्तां** पूजयन्तु ।

शिशातु । 'शो तनूकरणे' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'आदेचः' इति आत्वम् । द्विर्भावः । ह्रस्वत्वे 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । अविष्टु । अवतेर्लोटि 'सिब्बहुलं लेटि' इति बहुलग्रहणात् सिप् । इडागमः । षत्वष्टुत्वे ।। ५ ।।

**सिद्धाञ्जनम्–** **ऋभुः** प्रथम ऋभूणां अस्माकं **सातिम्** सम्भजनीयां सम्पदं **भराय** सङ्ग्रामार्थं **सम् शिशातु** सम्यक् तीक्ष्णीकरोतु । **समर्यजित्** मर्यैः मनुष्यैः सह वर्तत इति समर्यः संग्रामः तत्र शत्रूणां जेता **वाजः** तृतीया ऋभुगणः **अस्मान् अविष्टु** अवतु । तन्नो मित्र इत्यादि व्याख्यातम् ।

शिशातु–शो तनूकरणे, लोट् द्विर्भावादिश्छान्दसः । अविष्टु–अवतेर्लोट्, इडागमः छान्दसः, तथा सिप् च ।। ५ ।।

।। इति प्रथमाष्टके सप्तमाध्याये द्वात्रिंशो वर्गः ।।

## ।। अथ त्रयस्त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ११२)

(२५ कुत्स आङ्गिरसः । १ (आद्यपादस्य) द्यावापृथिव्यौ, १ (द्वितीयपादस्य) अग्निः, १ (उत्तरार्धस्य) अश्विनौ । २-२५ अश्विनौ । जगती । २४-२५ त्रिष्टुप्)

**ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।**
**याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ।। १ ।।**
ईळे । द्यावापृथिवी इति । पूर्वऽचित्तये । अग्निम् । घर्मम् । सुऽरुचम् । यामन् । इष्टये । याभिः । भरे । कारम् । अंशाय । जिन्वथः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १ ।।

**स्कन्द–** 'अथाऽऽश्विनम्' । आर्भवाभ्यामनन्तरमिदमाश्विनं सूक्तम् । तत्र 'ईळे द्यावापृथिवीयो ह पादः पादोऽग्नय आश्विनं तु सूक्तम्' (षड्गुरुशिष्यः ऋ.अ.२,१,११२) । ईळ इत्ययं पादो गुणवृत्त्या द्यावापृथिवीयः । परः पादो गुणवृत्त्यैवाऽऽग्नेयो भवति । कृत्स्नमेव तु सूक्तमाश्विनम् । **ईळे** स्तौमि द्यावापृथिव्यौ **पूर्वचित्तये** पूर्वज्ञानाय । यद्युवयोरश्विनोः स्तुतिकरणसमर्थं पूर्वं ज्ञानं मम तदर्थमित्यर्थः । न च केवले द्यावापृथिव्यौ । **अग्निम्** च **घर्मम्** 'घृ क्षरणदीप्त्योः' । दीप्तम् । **सुरुचम्** सुदीप्तम् । क्व । **यामन्** यान्त्यस्मिन् देवता द्विजातयश्चेति यामा यज्ञस्तत्र । किमर्थम् । **इष्टये** यागाय । युवामश्विनौ यक्ष्यतीत्यैवमर्थमित्यर्थः । किञ्च **याभिः भरे** इत्यादि । अत्रेतिहासमाचक्षते– 'अंशनामानम् आदित्यानामन्यतमं पर्यटन्तमसुरा जगृहुः । सोऽश्विनावाजुहाव । तमश्विनौ शङ्खमापूरयन्तावाजग्मतुः । तस्माच्छङ्खशब्दादेव बिभ्यतोऽसुरा नेशुः' इति । तदेतदिहोच्यते । **याभिः** इत्ययम् **ऊतिभिः** इत्येतेन समानाधिकरणः । ऊतिशब्दश्च गमनवचनः । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । यैर्गमनैर्गत्वा **भरे** असुरैः सह सङ्ग्रामे । **कारम्** कारशब्दोऽत्र शङ्खवचनः । 'काराधुनीव' (ऋ.१,१८०,८) इति यथा । शङ्खम् **अंशाय जिन्वथः** प्रीणितवन्तौ आपूरितवन्तौ स्थः । अथवा क्रियत इति कारः शब्द इहोच्यते । 'भगो न कारे' (ऋ.३,४९,३) इति यथा । शब्दं प्रीणितवन्तौ । महान्तं शङ्खशब्दं कृतवन्तौ स्थ इत्यर्थः । **ताभिः** उ इति एवार्थे । ताभिरेव वा ऊतिभिः गमनैः हे अश्विनौ! **सु आ गतम्** शोभनं यथा भवति तथा आगच्छतम् अस्मानेव प्रति । अप्यर्थे

वाऽयम् उ इति निपातः । ताभिरपि गमनैः अन्यैश्च वक्ष्यमाणैः । अथवा यैर्गमनैरंशं प्रति गतवन्तौ स्थः कृपालुतया अस्मानपि ताभिरिति । यैर्गमनैर्गत्वा अंशस्यार्थाय असुराञ्जेतुमसुरजैत्रं शङ्खमापूरयन्तौ महान्तं वा शङ्खशब्दं कृतवन्तौ स्थः, तैरेवास्मान् प्रति शोभनमागच्छतमिति समस्तार्थः ॥ १ ॥

**वेङ्कटमाधव–** स्तौमि द्यावापृथिव्यौ यजमानाय पूर्वं मुख्यमस्य कर्म **अग्निम्** । घर्म आदित्यः । तं च सुदीप्तिं यज्ञे अभिलषितसिद्ध्यर्थम् । **याभिः** सङ्ग्रामे शङ्खम् **अंशाय** ऋषये शब्देन पूरयामासथुः । तैः परिरक्षणैः अस्मान् अपि सुष्ठु आगच्छतम् अश्विनौ ॥ १ ॥

**मुद्गल–** 'ईळे' इति पञ्चविंशत्यृचं सप्तमं सूक्तम् । आङ्गिरसः कुत्स ऋषिः । चतुर्विंशी-पञ्चविंश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । आद्यः पादो द्यावापृथिव्यः । द्वितीय आग्नेयः । शिष्टं सूक्तम् आश्विनम् ।

अहम् **द्यावापृथिवी** द्यावापृथिव्यौ **ईळे** स्तौमि । किमर्थम् । **पूर्वचित्तये** पूर्वमेवाश्विनोः प्रज्ञापनाय । ते हि अश्विनोः प्रत्यासन्ने । अपि च **यामन्** यामनि अश्विनोरागमने सति **इष्टये** तदीययागार्थम् आहवनीयरूपेण स्थापितम् अग्निम् स्तौमीति शेषः । कीदृशमग्निम् । **घर्मम्** प्रवृञ्जनेन दीप्तम् **सुरुचम्** अत एव शोभनकान्तियुक्तम् । हे **अश्विना!** अश्विनौ! **भरे** सङ्ग्रामे **अंशाय** युष्मदीयभागाय जयप्राप्त्यर्थम् **याभिः** ऊतिभिः पालनैः सहागत्य **कारम्** शब्दकारिणं शङ्खम् **जिन्वथः** मुखेनापूरयथः **ताभिः** तादृशैः **ऊतिभिः** पालनैः सह । **उ** समुच्चये । अस्मानपि **सुष्ठु आ गतम्** आगच्छतम् ॥ १ ॥

**सायण–** 'ईळे' इति पञ्चविंशत्यृचं सप्तमं सूक्तम् । आङ्गिरसस्य कुत्सस्यार्षम् । चतुर्विंशीपञ्चविंश्यौ त्रिष्टुभौ शिष्टास्त्रयोविंशतिर्जगत्यः । आद्यः पादो द्यावापृथिव्यः । द्वितीय आग्नेयः । शिष्टं सूक्तमाश्विनम् । तथा चानुक्रान्तम्– 'ईळे पञ्चाधिकाश्विनमाद्यौ पादौ लिङ्गोक्त-देवतावन्त्ये त्रिष्टुभौ' इति । प्रवर्ग्ये अभिष्टवेऽप्येतत्सूक्तम् । सूत्रितं च– 'ग्रावाणेवेळे द्यावापृथिवी इति' (आश्व.श्रौ.४.६) इति । प्रातरनुवाके चाश्विने क्रतौ जागते छन्दस्येतत्सूक्तम् । सूत्रितं च– 'अगन्म महातारिष्मेळे द्यावापृथिवी इति जागतम्' (आश्व.श्रौ.४.१५) इति । आश्विन-शस्त्रेऽप्येतत् 'प्रातरनुवाकन्यायेन' (आश्व.श्रौ.६.५) इति अतिदेशात् । तथा अप्तोर्यामे सन्ति

चत्वार्यतिरिक्तोक्थानि । तत्राच्छावाकातिरिक्तोदये एतत्सूक्तम् । 'यस्य पशवः' इति खण्डे सूत्रितम्– 'ईळे द्यावापृथिवी उभा उ नूनम्' (आश्व.श्रौ.९.११) इति ।

अहं **द्यावापृथिवी** द्यावापृथिव्यौ **ईळे** स्तौमि । किमर्थम् । **पूर्वचित्तये** पूर्वमेवाश्विनोः प्रज्ञापनाय । ते ह्यश्विनोः प्रत्यासन्ने । यद्वा । द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय । तथा चोक्तं– 'तत्कावश्विनौ द्यावापृथिव्यावित्येके' (निरु.१२.१) इति । अपि च **यामन्** यामनि अश्विनोरागमने सति **इष्टये** तदीययागार्थमाहवनीयरूपेण स्थापितम् **अग्निं** स्तौमीति शेषः । कीदृशमग्निम् । सङ्ग्रामे **अंशाय** युष्मदीयभागाय जयप्राप्त्यर्थं **याभिः** ऊतिभिः पालनैः सहागत्य **कारम्** । कारशब्दः शङ्खवाचीत्यभियुक्ताः सङ्गिरन्ते । कारं शब्दकारिणं शङ्खं **जिन्वथः** मुखेनापूरयथः **ताभिः** तादृशैः **ऊतिभिः** पालनैः सह । उ इति समुच्चये । अस्मानपि सुष्ठु आ गतम् । आगच्छतम् ।

ईळे । 'ईड स्तुतौ' । उत्तमैकवचनम् इट् । अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । द्यावापृथिवी । द्यौश्च पृथिवी च । 'दिवो द्यावा' इति द्यावादेश आद्युदात्तो निपातितः । पृथिवीशब्दो ङीषन्तः अन्तोदात्तः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् । 'अपृथिवी' इति पर्युदासात् 'नोत्तरपदेऽनुदात्तादौ' इति निषेधाभावः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । पूर्वचित्तये । 'चिती संज्ञाने' । अस्मात् अन्तर्भावितण्यर्थात् भावे क्तिन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । सुरुत्वम् । 'रुच दीप्तावभिप्रीत्यां च' सम्पदादिलक्षणो भावे क्विप् । शोभना रुग्यस्य । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यामन् । 'या प्रापणे' । 'आतो मनिन्' इति 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् भावे मनिन् । कारम् । क्रियतेऽनेनेति कारः । करणे घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । जिन्वथः । 'जिविप्रीणनार्थः' । अत्र प्रीणनहेतुभूतमापूरणं लक्ष्यते । धनेनापूरितो हि पुरुषः प्रीतो भवति । इदित्त्वात् नुम् । भौवादिकः । शपः पित्त्वादनुदात्तत्वम् । तिङः अदुपदेशात् लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । तत्र हि व्यवहितेऽपि कार्यमिष्यते (का.८.१.६६) इत्युक्तम् । ऊ षु । 'इकः सुञि' इति दीर्घत्वम् । 'सुञः' इति षत्वम् । ईषाअक्षादित्वात् सुञ उकारस्य प्रकृतिभावः । ऊतिभिः । अवतेर्भावे क्तिन् । 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । 'ऊतियूति' इत्यादिना निपातनात् क्तिन् उदात्तत्वम् ।

गतम् । गमेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः ।। १ ।।

**सिद्धाञ्जनम्–** 'ईळे' इति पञ्चविंशत्यृचं पञ्चमं सूक्तं आङ्गिरसस्य कुत्सस्यार्षम् । चतुर्विंशीपञ्चविंश्यौ त्रिष्टुभौ, शिष्टा जगत्यः । आद्यः पादो द्यावापृथिव्यः, द्वितीय आग्नेयः, शिष्टं सूक्तं आग्नेयम् ।

**द्यावापृथिवी** द्यावापृथिव्यौ, ऊर्ध्वा चितिः **द्यौः**, अधरा चितिः पृथिवी, इमे उभे च **पूर्वचित्तये** पूर्वज्ञानाय प्रथममेव तयोः चित्प्रसादलाभायेत्यर्थः **ईळे** अध्येषे, याचामि । अथ **अग्निम्** ईळे । कीदृशम्? **घर्मम्** दीप्तं अत एव **सुरुचम्** शोभनकान्तियुक्तम् । किमर्थम्? **यामन्** यामनि गमने, प्रकृते अश्विनोरागमने **इष्टये** यजनाय । दीप्तस्याग्नेः प्रभावादाश्विनमार्गः प्रकाशो भवति यज्ञयात्रायाः, तत्र ऊर्ध्वमधश्च चित्प्रसादः प्रथमा प्रतिष्ठा स्यादिति रोदस्योरीळनं आदौ प्रस्तुतम् । हे **अश्विना!** अश्विनौ, **याभिः** ऊतिभिः **भरे** सङ्ग्रामलक्षणे यज्ञे **अंशाय** भागाय स्वकीयाय **कारम्** कर्तारं यज्ञस्य स्तोत्रस्य वा **जिन्वथः** प्रीणयथः **ताभिः उ** उ इति पादपूरणः **ऊतिभिः** रक्षाभिः सह अस्मान् **सु आगतम्** सुष्ठु आगच्छतम् । अत्र सायणः 'कारशब्दः शङ्खवाची तेन ह्यभियुक्ताः सङ्गिरन्ते, कारं शब्दकारिणं शङ्खं जिन्वथः मुखेन पूरयथः' (इति व्याचष्टे । स एव 'कारं कर्तारं' इति इतरत्र आह, 'कारं कर्तारमभिमतस्य प्रयोजनस्य' (४.१.१४) 'कारं न स्वामिनः कर्मकारमिव' (५.२९.८) 'कार इत् शत्रुजयकर्तैव' (१०.५३.११) ।

जिन्वथः–जिविः प्रीणनार्थः, अत्र प्रीणनहेतुभूतं आपूरणं लक्ष्यत इति सायणः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।**
**याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ।। २ ।।**

**युवोः । दानाय । सुऽभराः । असश्चतः । रथम् । आ । तस्थुः । वचसम् । न । मन्तवे । याभिः । धियः । अवथः कर्मन् । इष्टये । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। २ ।।**

**स्कन्द– युवोः** युवयोः स्वभूतम् **दानाय** स्तोतृभ्यो दानार्थम् **सुभराः** सुपूर्णाः । केन । सामर्थ्याद्युष्मद्गुणैः । काः पुनरेताः । सामर्थ्यात् स्तुतयः । **असश्चतः** सश्चतिर्गतिकर्मा (निघ. २,१४) । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । छान्दसत्वाच्चात्र स्त्रीप्रत्ययाभावः । असंसज्चत्यः असज्जन्त्यमानाः । असंयुक्ता इत्यर्थः । **रथम् आ तस्थुः** आतिष्ठन्ति । **वचसम् न** वाच्यमिवार्थं शब्दः । **मन्तवे** । तुमर्थे चायं तवेन् प्रत्ययः । युवां स्तोतुम् । यथा वाच्यमर्थं शब्दः सर्वं आतिष्ठति एवं युष्मदीयं रथं स्तोतृभ्यो दानार्थं युष्मत्स्तुतयो युवां स्तोतुं सर्वदाऽऽतिष्ठन्तीत्यर्थः । **याभिः धियः** अन्येषां यजमानानां स्वभूतानि यागलक्षणानि कर्माणि प्रति अवथः अवतिर्गत्यर्थः । (निघ.२,१४) । युवां गच्छथः । ममापि स्वभूते **कर्मन्** कर्मणि यागलक्षणे **इष्टये** यागायात्मनः । **ताभिः** ॥ २ ॥

**वेङ्कटमाधव–** युवयोः स्तोतृभ्यः **दानाय** सुनिर्भराः असक्तारो ये **रथम्** आतिष्ठन्ति । यथा शब्दं परप्रत्यायनार्था अभिधेया आतिष्ठन्ति । **याभिः** स्तोत्राणि **अवथः** यजमानानाम् कर्मणि अभिलषिताय क्रियमाणानीति ॥ २ ॥

**मुद्गल– सुभराः** शोभनस्तोत्रभरणाः **असश्चतः** अन्यत्रानासक्ताः स्तोतारः हे अश्विनौ! **युवोः** युवयोः **रथम् आ तस्थुः** आतिष्ठन्ति प्राप्नुवन्ति । किमर्थम् । **दानाय** युष्मत्कर्तृ-कदानार्थम् । धनलाभायेत्यर्थः । दृष्टान्तः । **वचसम् न** यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितम् **मन्तवे** बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत् । अपि च **कर्मन्** कर्मणि **इष्टये** यागार्थं प्रवृत्तान् **धियः** ध्यातॄन् विशिष्टज्ञानोपेतान् **याभिः** ऊतिभिः पालनैः युवाम् **अवथः** रक्षथः । **ताभिः** इत्यादि पूर्ववत् ॥ २ ॥

**सायण– सुभराः** शोभनस्तोत्रभरणाः **असश्चतः** अन्यत्रानासक्ताः स्तोतारो हे अश्विनौ! **युवोः** युवयोः **रथम् आ तस्थुः** आतिष्ठन्ति । किमर्थम् । **दानाय** युष्मत्कर्तृकदानार्थम् । धनलाभायेत्यर्थः । तत्र दृष्टान्तः । **वचसं न** यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं **मन्तवे** बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत् । अपि च **कर्मन्** कर्मणि **इष्टये** यागार्थं प्रवृत्तान् **धियः** ध्यातॄन् विशिष्टज्ञानोपेतान् **याभिः ऊतिभिः** पालनैः **अवथः** युवां रक्षथः । ताभिरित्यादि पूर्ववत् ।

वचसम् । अर्शआदित्वात् मत्वर्थीयः अच् । मन्तवे । 'मन ज्ञाने' । 'कमिमनिजनि' इत्यादिना तुप्रत्ययः । धियः । ध्यायन्तीति धियः स्तोतारः । 'ध्यै चिन्तायाम्' । 'क्विप् च' इति क्विप् । चशब्देन दृशिग्रहणानुकर्षणात् सम्प्रसारणम् । कर्मन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः ।। २ ।।

**सिद्धाञ्जनम्– सुभराः** सुखेन बिभ्रतः देवताप्रसादमिति शेषः **असश्चतः** असङ्गाः स्तोतारः, निस्सङ्गतया आश्विनं तेजोबलादिकं सुखेन भर्तुं शक्नुवन्ति स्तोतारः । ते **युवोः** युवयोः **रथमातस्थुः** रथं आतिष्ठति प्राप्नुवन्ति । किमर्थम्? **दानाय** युष्मत्कर्तृकाय प्रसादाय । तत्र दृष्टान्तः– **वचसम् न मन्तवे** वचोयुक्तं विपश्चितं ज्ञानाय यथा ज्ञानेच्छवः उपासते तद्वत् । अपि च **इष्टये** यजनाय **कर्मन्** कर्मणि **याभिः** ऊतिभिः **धियः** ध्यानभरिता बुद्धीः स्तुतीर्वा **अवथः** रक्षथः, ताभिरित्यादि पूर्ववत् ।

वचसम्– अर्शआदित्वादच् मत्वर्थीयः । मन्तवे–मन ज्ञाने, कमिमनीत्यादिना तुप्रत्ययः ।।

## ऋक्संहिता पदपाठसहिता

**युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।**
**याभिर्धेनुमस्वं१पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ।। ३ ।।**
युवम् । तासाम् । दिव्यस्य । प्रऽशासने । विशाम् । क्षयथः । अमृतस्य । मज्मना । याभिः । धेनुम् । अस्वम् । पिन्वथः । नरा । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। ३ ।।

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । याः स्तोतुं यष्टुं चेच्छन्ति **युवम्** युवां **तासाम् विशाम्** मनुष्याणाम् **प्रशासने** प्रेत्येषोऽन्वित्येतस्य स्थाने । अनुशासने वचने । **क्षयथः** निवसथः । ता विशो यत्र ब्रुवन्तीह युवाभ्यां व्यवस्थातव्यमिति तत्रैव व्यवतिष्ठेथे इत्यर्थः । केन । उच्यते । **दिव्यस्य अमृतस्य मज्मना** दिव्यशब्दोऽत्रात्यन्तोत्कृष्टवचनः । अमृतशब्दोऽप्यन्तरेणापि भावप्रत्ययममृतत्ववचनः । 'मज्मना' (निघ.२,९) इत्यपि बलनाम । अत्यन्तोत्कृष्टस्य देवत्वस्य बलेनेत्यर्थः । अथवा 'दध्यङ् ह यत्' (ऋ.१,११६,१२), 'आथर्वणायाश्विना' (ऋ.१,११७,२२) इति मन्त्रान्तरदृष्टज्ञानमत्रामृतसादृश्यादमृतमित्युच्यते । अत्यन्तोत्कृष्ट-

स्यामृतसदृशस्य ज्ञानस्य बलेनेत्यर्थः । किञ्च **गाभिः धेनुम्** इत्यादि । अत्रेतिहासमाचक्षते– 'शयुर्नाम राजर्षिः । सोऽश्विनौ परिचर्यया तुष्टावुवाच, मम गौरधेनुर्निवृत्तप्रसवा वृद्धा च, तां मे धेनुं कुरुतमिति । तामस्मै अश्विनौ धेनुं चक्रतुः' इति । तदेतत् कक्षीवान् वक्ष्यति 'युवं धेनुम्' (ऋ.१,११८,८), 'अधेनुं दस्रा' (१,११७,२०) इति च । तदेवेहोच्यते । याभिर्गत्वा शयोः स्वभूतां धेनुम् **अस्वम्** न सूयत इत्यसूः, ताम् अस्वम् । निवृत्तप्रसवामित्यर्थः । **पिन्वथः** 'पिवि मिवि सेचने' । पयः सेचितवन्तौ स्थः । दोहप्रदानसमर्थौ कृतवन्तौ स्थ इत्यर्थः । **नरा!** मनुष्याकारौ! अस्माकमभिलषितार्थसिद्धयेऽस्मानपि प्रति **ताभिः** ।। ३ ।।

**वेङ्कटमाधव– युवम् तासाम् विशाम्** मनुष्याणाम् दिव्यस्य च देवगणस्य प्रशासने वर्तेथे **अमृतस्य** बलेन । यैः पालनैः निवृत्तप्रसवाम् धेनुम् शयवे **पिन्वथः** नेतारौ! ।। ३ ।।

**मुद्गल–** हे **नरा!** नेतारौ! अश्विनौ! **दिव्यस्य** दिवि भवस्य स्वर्गसमुत्पन्नस्य **अमृतस्य** सोमस्य पानेनोत्पन्नेन **मज्मना** बलेन युक्तौ **युवम्** युवाम् **तासाम्** यास्त्रिषु लोकेषु वर्तन्ते तासां सर्वासाम् **विशाम्** प्रजानाम् **प्रशासने** प्रकृष्टानुशासने शिक्षणे **क्षयथः** ईशाथे समर्थौ भवथः । अपि च **याभिः** उतिभिः **अस्वम्** प्रसवासमर्थाम् **धेनुम्** मां शयुनाम्ने ऋषये **पिन्वथः** सिञ्चथः । पयसा पूरितवन्तावित्यर्थः । **ताभिः ऊतिभिः** इत्यादि पूर्ववत् ।। ३ ।।

**सायण–** हे **नरा!** नेतारावश्विनौ **दिव्यस्य** दिवि भवस्य स्वर्गसमुत्पन्नस्य **अमृतस्य** सोमस्य पानेनोत्पन्नेन **मज्मना** बलेन युक्तौ **युवं** युवां **तासां** यास्त्रिषु लोकेषु वर्तन्ते तासां सर्वासां **विशां** प्रजानां प्रशासने प्रकृष्टानुशासने शिक्षणे **क्षयथः** । ऐश्वर्यकर्मायम् । ईशाथे समर्थौ भवथः । यद्वा । मज्मना अन्येषामसाधारणेन बलेन विशां प्रजानां दिविभवस्यामृतस्य वृष्ट्युदकस्य **प्रशासने** प्रदाने क्षयथः ईश्वरौ भवथः । अपि च **याभिः ऊतिभिः** रक्षाभिः **अस्वं** प्रसवासमर्थां **धेनुं** गां शयुनाम्ने ऋषये **पिन्वथः** सिञ्चथः पयसा पूरितवन्तावित्यर्थः । ताभिरूतिभिरित्यादि पूर्ववत् ।

अस्वम् । 'षूङ् प्राणिगर्भविमोचने' । सवनं सूः । सम्पदादिलक्षणो भावे क्विप् । नास्ति सूः यस्याम् इति असूः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अभि 'ओः सुपि' इति यणादेशः । 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । पिन्वथः । 'पिवि सेचने' । इदित्त्वात् नुम् । भौवादिकः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **नरा** नेतारावश्विनौ, **दिव्यस्य** दिवि भवस्य **अमृतस्य** मरणरहितस्य सर्वधारकस्य सोमस्य रसस्य **मज्मना** बलेन युक्तौ **युवम्** युवां **तासाम्** प्रसिद्धानां सर्वासां **विशाम्** प्रजानां **प्रशासने** प्रकृष्टे अनुशासने शिक्षणे **क्षयथः** ऐश्वर्यकर्माऽयं, ईशाथे, शक्तौ भवथः । अपि च **याभिः** ऊतिभिः **अस्वम्** असुवं अप्रसवां प्रसवासमर्थां **धेनुम्** गां **पिन्वथः** सिञ्चथः, अमृतरसलक्षणं क्षीरं स्वात्मनो दोग्धुमसमर्थां चिद्रश्मिलक्षणां गां तादृशप्रसवसमर्थां अश्विनौ स्वीयेन दिव्येन भैषज्येन कुरुत इत्यर्थः । सायणस्तु शंयोर्नाम ऋषेः काचन गौः प्रसवासमर्थाऽभूत्, तां प्रसवसमर्थामकुरुतामश्विनाविति कथां ब्रूते । ताभिरिति पूर्ववत् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।**
**याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ।। ४ ।।**
**याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति ।**
**याभिः । त्रिऽमन्तुः । अभवत् । विऽचक्षणः । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।**
**अश्विना । आ । गतम् ।। ४ ।।**

**स्कन्द– याभिः** अत्यन्तशीघ्राभिः ऊतिभिः **परिज्मा** सर्वतोगामी वायुः **तनयस्य** अपत्यभूतस्य प्राणिजातस्य । षष्ठीश्रुतेरर्थायेति शेषः । **मज्मना** स्वेन बलेन **द्विमाता** द्वयोः प्राणिजातयोः निर्माता । अथवा उत्पादिके प्रकृती मातराविहोच्येते । ते द्वे यस्य एका ब्राह्म्यां सृष्टौ अन्या देवसृष्टौ स द्विमाता । **तूर्षु तरणिः** त्वरन्तीति तुरः क्षिप्रा उच्यन्ते । निर्धारणे चैषा सप्तमी । 'तरणिः' (निघ.२,१५) इत्यपि क्षिप्रनाम । क्षिप्राणां मध्ये क्षिप्रः । अत्यन्तशीघ्र इत्यर्थः । **विभूषति** भवतिरत्र प्राप्त्यर्थः । विविधं प्राप्नोति । यत्रयत्र गन्तव्यं तत्रतत्र गच्छतीत्यर्थः । अथवा तूर्षु इत्येतद्विभूषतीत्येतेन सम्बध्यते । तूर्षु इत्येतत्तूर्वतेर्हिंसार्थस्य रूपम् । हिंस्येषु प्राप्नोति हिंस्यानसुरादीन् प्रति गच्छतीत्यर्थः । **याभिः** इत्यत्रेतिहासमाचक्षते– 'कक्षीवान्ना-मर्षिरत्यन्तमूढो वभूव । सोऽतीतानगतवर्तमानेषु त्रिष्वप्यप्रतिहतं ज्ञानमर्थयमानः अश्विनावियाज तुष्टाव च । तस्मै अश्विनौ त्रिकालविषयं ज्ञानं सर्वार्थविषयं च ददतुः' इति । तदेतत् कक्षीवानेव वक्ष्यति– 'युवन्नरा स्तुवते पज्रियाय' (ऋ.१,११६,७) इति । तदेवेहाप्युच्यते । याभिरिति हेतौ तृतीया । याभिश्च युष्मदीयाभिः **ऊतिभिः** हेतुभूताभिः **त्रिमन्तुः** 'मन ज्ञाने' ।

त्रयाणामतीतानागतवर्तमानानां ज्ञाता कक्षीवान् **अभवत्** । **विचक्षणः** विद्रष्टा । सर्वार्थानां च ज्ञातेत्यर्थः । पण्डितवचनो वा विचक्षणशब्दः । पण्डितश्चाभवत् । याभिश्च युवामेव गत्वा त्रिकालविषयज्ञानोपेतं सर्वार्थविषयज्ञानोपेतं च कक्षीवन्तं चक्रथुः । अस्मानपि प्रति **ताभिः** ।।

**वेङ्कटमाधव– याभिः** परितो गन्ता वायुः आत्मपुत्रस्य अग्नेः बलार्थं द्वयोर्लोकयोः निर्माता क्षिप्राणाम् अपि मध्ये अतिशयेन क्षिप्रो विविधशरीरो भवति । **याभिः** च कक्षीवान् **अभवत्** विद्वान् त्रैकाल्यज्ञानात् **त्रिमन्तुः** ।। ४ ।।

**मुद्गल– परिज्मा** परितो गन्ता वायुः **तनयस्य** आत्मीयस्य पुत्रस्याग्नेः । अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते । एवं स्वपुत्रस्याग्नेः **मज्मना** बलेन युक्तः सन् **द्विमाता** द्वयोर्लोकयोः निर्माता । अग्निः पृथिवीस्थानो वायुरन्तरिक्षस्थान उभयोर्मिलित-योरुभयनिर्मातृत्वमुपपन्नम् । एवम्भूतो वायुः हे अश्विनौ! **याभिः** ऊतिभिर्हेतुभूतैः पालनैः **तूर्षु** तरीतृषु धावत्सु मध्ये **तरणिः** अतिशयेन तरिता शीघ्रगामी **विभूषति** विभवति व्याप्तौ भवति । अपि च **त्रिमन्तुः** त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहविर्यज्ञसोमयज्ञेषु आसादितज्ञानः कक्षीवान् **याभिः** युष्मदीयाभिरूतिभिः **विचक्षणः** विशिष्टज्ञानयुक्तः **अभवत्, ताभिः** ।। ४ ।।

**सायण– परिज्मा** परितो गन्ता वायुः **तनयस्य** आत्मीयस्य पुत्रस्याग्नेः । अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते । तथा च श्रूयते– 'अथ यः प्राणापानयोः सन्धिः स व्यानः । अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति' (छा.उ.१.३.३,५) इति । यद्वा । सृष्ट्यादौ वायुसकाशादुत्पन्नत्वादग्नेः पुत्रत्वम् । आम्नायते च– 'वायोरग्निः' (तै.आ.८.१) इति । एवं स्वपुत्रस्याग्नेः **मज्मना** बलेन युक्तः सन् **द्विमाता** द्वयोर्लोकयोः निर्माता । अग्निः पृथिवीस्थानो वायुरन्तरिक्षस्थानः । उभयोर्मिलितयोः उभयनिर्मातृत्वमुपपन्नम् । यद्वा । द्विमातेति तनयस्य विशेषणम् । 'सुपां सुलुक्' इति षष्ठ्याः सुः । द्विमातृकस्य द्वाभ्यामरणिभ्यां जातस्य । एवम्भूतो वायुर्हे अश्विनौ **याभिः** ऊतिभिः हेतुभूतैः पालनैः **तूर्षु** तरीतृषु धावत्सु मध्ये **तरणिः** अतिशयेन तरीता शीघ्रगामी **विभूषति** विभवति व्याप्तो भवति । यद्वा । विशेषेण सर्वमलङ्करोति । अपि च **त्रिमन्तुः** त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहविर्यमसोमयज्ञेष्वासादितज्ञानः कक्षीवान् **याभिः** युष्मदीयाभिरूतिभिः **विचक्षणः** विशिष्टज्ञानयुक्तः **अभवत्** । **ताभिः** सर्वाभिः **ऊतिभिः** अस्मानागच्छतम् ।

परिज्मा । परिपूर्वात् 'अजगतिक्षेपणयोः' इत्यस्मात् 'श्वन्नुक्षन्' इत्यादौ निपात्यते । तूर्षु । 'तृ प्लवनतरणयोः' । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । यद्वा । त्वरतेः क्विप् । 'ज्वरत्वर' इत्यादिना वकारोपधयोः ऊट् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । विभूषति । भवतेर्लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । यद्वा । 'भूष अलङ्कारे' । भौवादिकः । विचक्षणः । 'अनुदात्तेतश्च हलादेः' इति युच् ।। ४ ।।

**सिद्धाञ्जनम्– याभिः** ऊतिभिः **परिज्मा** परितो गन्ता मातरिश्वा **तनयस्य** स्वीयसन्तानस्य अग्नेः 'वायोरग्निः' इत्यौपनिषदाः, सृष्टावपि भुवर्लोकात्परमेव भूलोकस्यावस्थानम्, यस्याग्निर्देवता । तस्य अग्नेः **मज्मना** बलेन **द्विमाता** द्वयोः द्यावापृथिव्योः माता निर्माता, क्रियादक्षत्वात् प्राणात्मकस्य मातरिश्वनः । तथाभूतः **तूर्षु** तरीतृषु त्वरितगमनेषु मध्ये **तरणिः** अतिशयेन तरीता सत्वरगामी **विभूषति** विभवति, व्याप्तो भवति । अपि च **याभिः** ऊतिभिः **त्रिमन्तुः** त्रयाणां मन्ता ज्ञाता, आसादितत्रिलोकज्ञानः, एतन्नामा ऋषिर्वा **विचक्षणः** विशिष्टज्ञानयुक्तः **अभवत्** भवतीति लडर्थे । ताभिरित्यादि पूर्ववत् । अत्र सायणः- त्रिमन्तुः कक्षीवानृषिरित्याह । स्यान्नाम । सूक्तेऽस्मिन् ऐतिहासिकपुरुषाणां आश्विनानुग्रहपात्रभूतानां नामानि श्रूयन्ते, तत्र धात्वर्थानुगमेन रहस्यार्थप्रतिपत्तिः सिध्यतीति बोध्यम् । तावता ऋषीणां ऐतिहासिकत्वं न बाधितं भवति, यथा कुत्सादेः । इदं च प्राक् प्रस्तुतं विवृतं च ।

तूर्षु–तृ प्लवनतरणयोः, बहुलं छन्दसीत्युत्वं, यद्वा त्वरतेः क्विप् । विभूषति–भवतेर्लेट्यडागमः, सिप् लेटि बहुलम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**याभी रेभं निवृतं सितमद्भ्य उद् वन्दनमैरयतं स्वर्दृशे ।**
**याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। ५ ।।**
याभिः । रेभम् । निऽवृतम् । सितम् । अत्ऽभ्यः । उत् । वन्दनम् । ऐरयतम् । स्वः । दृशे । याभिः । कण्वम् । प्र । सिसासन्तम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। ५ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'रेभमृषिं सन्ध्याकाले स्नात्वा ह्रदादुत्तीर्णम् अग्निहोत्रं होतुं

स्वाश्रमम् आगच्छन्तमसुरा ददृशुः । ते देवानामयं यष्टा स्तोता चेति ज्ञात्वा सङ्क्रुद्धास्तं ताडयित्वा बद्ध्वा च तस्मिन् ह्रदे प्रक्षिप्य दशरात्रं धारयाञ्चक्रुः' इति । तदपि कक्षीवानेव वक्ष्यति– 'दश रात्रीः' (ऋ.१,११६,२४), 'अश्वं न गूळ्हम्' (ऋ.१,११७,४) इति । स तत्र मृतकल्पोऽश्विनावाजुहाव । आहूयमानावश्विनौ तं समाजग्मतुः' इति । तदपि कक्षीवानेव वक्ष्यति– 'सं तं रिणीथः' (ऋ.१,११७,४) इति । आगत्य चोत्तारयाञ्चक्रतुः' इति । तदपि कक्षीवानेव वक्ष्यति– 'विप्रुतं रेभम्' (ऋ.१,११६,२४) इति । घोषाऽपि वक्ष्यति– 'युवं ह रेभम्' (ऋ.१०,३९,९) इति । तथापरमितिहासमाचक्षते– 'वन्दन ऋषिर्जरया परीतः कूपसमीपे गच्छन् कूपे पपात । स तत्रस्थोऽश्विनौ तुष्टाव । तमश्विनावागत्योत्तारयाञ्चक्रतुः' इति । तदेतद् घोषा वक्ष्यति– 'युवं वन्दनमृश्यदात्' (ऋ.१७,३९,५) इति । कक्षीवानपि वक्ष्यति– 'तद् वां नरा शंस्यम्' (ऋ.१,११६,११), 'सुषुप्वांसम्' (ऋ.१,११७,५) इति । 'उत्तार्य च जरामस्यापनीतवन्तौ दीर्घं चायुरस्मै दत्तवन्तौ' इति । तदेतद् द्वयमपि कक्षीवानेव वक्ष्यति– 'युवं वन्दनं निर्ऋतम्' (ऋ.१,११९,७), 'प्र दीर्घेण वन्दनः' (ऋ.१,११९,६) इति च । तदितिहासद्वयमिहोच्यते । **याभी रेभम्** इत्यादिना । **याभिः** ऊतिभिर्गत्वा **रेभम्** ऋषिम् **निवृतम्** 'वृङ् सम्भक्तौ' । नीचैः सम्भक्तम् । निमग्नमित्यर्थः । **सितम्** 'षिञ् बन्धने' । बद्धं च । **अद्भ्यः** ह्रदोदकात् । न च केवलं रेभम् । किं तर्हि । **वन्दनम्** च ऋषिं कूपात् । **उत् ऐरयतम्** 'ईर गतौ' । ऊर्ध्वं गमितवन्तौ स्थः । उत्तारितवन्तावित्यर्थः । **स्वर्दृशे** सर्वं द्रष्टुम् । सर्वजीवलोकं पुनःपुनरनुभवितुमित्यर्थः । **याभिः** च **कण्वम्** । अत्रापीतिहासमाचक्षते– 'कण्व ऋषिरन्धो बभूव । स चक्षुष्कामोऽश्विनौ तुष्टाव । तस्मै अश्विनौ चक्षुर्ददतुः' इति । तदेतत् कक्षीवान् वक्ष्यति– 'युवं कण्वाय' (ऋ१,११८,७) इति । तदेवेहाप्युच्यते । याभिश्चोतिभिः कण्वं **प्र सिषासन्तम्** स्तुतिभिः सम्भक्तुमिच्छन्तम् । स्तुवन्तमित्यर्थः । **प्र आवतम्** । अवतिरत्र गत्यर्थः । चक्षुःप्रदानार्थं प्रकर्षेण गतवन्तौ स्थः । अस्मानपि प्रति **ताभिः** ।। ५ ।।

**वेङ्कटमाधव– रेभम्** स्नात्वा अग्निहोत्रार्थं गच्छन्तम् असुरा बद्ध्वा ह्रदे प्रचिक्षिपुः । तत्र निभृतं तिरोहितं दश रात्रीः धारयाञ्चक्रुः । वन्दनः च जीर्णः कूपसमीपेन गच्छन् कूपे पपात । ताविमाश्विभ्याम् आदित्यं द्रष्टुमुदकादुत्तारितौ । **याभिः** च **कण्वम्** वां सम्भक्तुम् इच्छन्तं प्रररक्षथुः ।। ५ ।।

**मुद्गल–** हे अश्विनौ! **याभिः** ऊतिभिः **रेभम्** एतत्संज्ञम् ऋषिभिः **निवृतम्** असुरः कूपेऽप्सु निवारितम् **सितम्** तदीयैः पाशैर्बद्धम् । एवम्भृतम् ऋषिम् **अद्भ्यः** सकाशात् **उत् ऐरयतम्** उदगमयतम् । तथा **वन्दनम्** एतत्संज्ञम् ऋषिं च तथाभूतमुदैरयतम् । किमर्थम् । स्वः **दृशे** द्रष्टुम् अपि च **कण्वम्** असुरैरन्धकारे प्रक्षिप्तम् **सिषासन्तम्** आलोकं सम्भक्तुमिच्छन्तम् **याभिः** ऊतिभिः **प्र आवतम्** प्रकर्षेणारक्षतम् । **ताभिः** इत्यादि समानम् ।। ५ ।।

**सायण–** हे अश्विनौ! **याभिः ऊतिभिः रेभम्** एतत्संज्ञम् ऋषिं **निवृतम्** असुरैः कूपे अप्सु निवारितं **सितं** तदीयैः पाशैर्बद्धमेवम्भूतमृषिम् **उद्भ्यः** सकाशात् **उत् ऐरयतम्** उदगमयतम् । तथा **वन्दनम्** एतत्संज्ञमृषिं च तथाभूतमुदैरयतम् । किमर्थम् । **स्वः** आदित्यं **दृशे** द्रष्टुम् । अपि च **कण्वम्** असुरैः अन्धकारे प्रक्षिप्तं **सिषासन्तम्** आलोकं सम्भक्तुमिच्छन्तं **याभिः** ऊतिभिः **प्र आवतं** प्रकर्षेण अरक्षतम् । ताभिरित्यादि समानम् ।

रेभम् । 'रेभृ शब्दे' । रेभते स्तौतीति रेभः । पचाद्यच् । निवृतम् । 'वृञ् वरणे' । अस्मात् अन्तर्भावितण्यर्थात् कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सितम् । 'षिञ् बन्धने' । अद्भ्यः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । वन्दनम् । 'वदि अभिवादनस्तुत्योः' । वन्दते स्तौतीति वन्दनः । नन्द्यादिलक्षणो ल्युः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । स्वरित्येतद्दिवश्चादित्यस्य च साधारणनामधेयम् । तदुक्तं यास्केन– 'स्वरादित्यो भवति सु अरणः सु ईरणः' (निरु.२.१४) इति । 'स्वरादिनिपातम्' (पा.सू. १.१.३७) इति अव्ययत्वात् सुपो लुक् । दृशे । 'दृशे विख्ये च' इति दृशेः तुमर्थे केप्रत्ययान्तो निपात्यते । सिपासन्तम् । 'वन षण सम्भक्तौ' । सनि 'सनीवन्तर्ध' इत्यादिना विकल्पनात् इडभावः । 'जनसनखनां सञ्झलोः' इति आत्वम् । द्विर्भावे अभ्यासस्य ह्रस्वत्वम् । 'सन्यतः' इति इत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **अश्विनौ! याभिः** ऊतिभिः **रेभम्** एतत्संज्ञकं रेभतिः स्तुतिकर्मा, स्तुत्याख्यातमृषिं निवृतम् निवारितं (अन्तर्भावितण्यर्थः) पापैर्देवविरोधिभिरिति शेषः, तथा **सितम्** बद्धं अज्ञानमयान्धकूपे पतितं तत्र आसुरशक्तिरज्जभिर्बद्धं च ऋषिं **अद्भ्यः** उक्तलक्षणकूपाद्भ्यः सकाशात् **उदैरयतम्** उदगमयतं, तथा **वन्दनम्** एतत्संज्ञकमृषिं च उदैरयतम् । किमर्थम्? **स्वः दृशे** सौरस्य ज्योतिषः दर्शनाय । अपि च **कण्वम्** मेधाविनं एतत्संज्ञकं वा ऋषिं अन्धकारे

प्रक्षिप्तं **सिषासन्तम्** सम्भक्तुमिच्छन्तं सौरप्रकाशमिति शेषः, **याभिः** ऊतिभिः **प्रावतम्** प्रकर्षेणारक्षतम् । ताभिरित्यादि समानम् ।

सितम्–षिञ् बन्धने । अन्ये गताः ॥ ५ ॥

॥ इति **प्रथमाष्टके सप्तमाध्याये त्रयस्त्रिंशो** वर्गः ॥

## ॥ अथ चतुस्त्रिंशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

**याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।**
**याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥ ६ ॥**
**याभिः । अन्तकम् । जसमानम् । आऽअरणे । भुज्युम् । याभिः । अव्यथिऽभिः । जिजिन्वथुः । याभिः । कर्कन्धुम् । वय्यम् । च । जिन्वथः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ६ ॥**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'अन्तको नाम राजा नद्याः स्रोतसि तपश्चचार । तं वृष्ट्या प्रवृद्धजलानद्युवाह । स उह्यमानस्तपःक्षामतया बाहुभ्यां तां नदीं तरितुमशक्नुवन् मृतकल्पोऽश्विनौ दध्यौ । तं ध्यातमात्रावश्विनौ अद्भ्यः उत्तारयाञ्चक्रतुः' इति । तथा अपरमितिहासमाचक्षते– 'भुज्युं नाम राजानं समुद्रमध्ये विपन्ननावं सखायः तत्यजुः' इति । तदेतद्वसिष्ठो वक्ष्यति– 'उत त्यं' (ऋ.७,६८,७) इति । स सखिभिः त्यक्तोऽश्विनौ तुष्टाव । तमश्विनावागत्य नौभी रथैरश्वैरुत्तारितवन्तौ' इति । तदेतत् कक्षीवान् वक्ष्यति– 'तुग्रो ह भुज्युम्' (ऋ.१,११६,३-५) इत्यादितृचेन । तदेतदितिहासद्वयमिहोच्यते । **याभिः** ऊतिभिः गत्वा **अन्तकम्** राजानम् **जसमानम्** । जसु मोक्षणेऽन्यत्र । इह तु सामर्थ्यात् निमज्जनार्थः । निमज्जन्तम् । क । उच्यते । **आरणे** आरणशब्दोऽत्रागाधवचनः । 'यो गाधेषु य आरणेषु' (ऋ.८,७०,८) इति यथा । अगाधे अनादेये उदके । **भुज्युम्** च **याभिः** ऊतिभिर्गत्वा **अव्यथिभिः** 'व्यथ अयचलनयोः' । अभयरूपाभिर्भयव्यावर्तिनीभिरूपिभिः । नौभिर्वा सामर्थ्यात् । **जिजिन्वथुः** समुद्रादुद्धारणेन प्रीणितवन्तौ स्थः । **याभिः** च । अत्रापीतिहासमाचक्षते– 'कर्कन्धुं वय्यश्च राजर्षी अतिक्षामौ तपस्तप्यमानौ यदृच्छया पर्यटन्तावश्विनौ ददृशतुः । दृष्ट्वा च तावमृतेनाप्याय-

याश्चक्रतुः इति । तदेतदिहोच्यते । याभिश्चोतिभिर्गत्वा **कर्कन्धुम् वय्यम्** च **जिन्वथः** अमृतेन तर्पितवन्तौ स्थः, अस्मानपि प्रति **ताभिः** ॥ ६ ॥

**वेङ्कटमाधव– याभिः अन्तकम्** ऋषिम् अगाधे निमज्जन्तम्, **भुज्युम्** च **याभिः** अकम्पिताभिः ररक्षथुः । **याभिः** च **कर्कन्धुम् वय्यम्** तुर्वीतिम् च ॥ ६ ॥

**मुद्गल– आरणे** आरणम् अगाधं कूपादि, तत्रासुरैः प्रक्षिप्तम् **जसमानम्** तैर्हिंस्यमानम् **अन्तकम्** । शत्रूणामन्तकरम् एतत्संज्ञं राजऋषिं हे **अश्विना!** अश्विनौ! **याभिः** ऊतिभिः अवथः रक्षथः । तथा **भुज्यम्** सर्वस्य पालकम् एतत्संज्ञं समुद्रमध्ये निमग्नं तुग्रस्य पुत्रं राजर्षिम् **याभिः** ऊतिभिः रक्षणहेतुभूताभिः **अव्यथिभिः** व्यथारहिताभिर्नौभिः **जिजिन्वथुः** युवाम् अतर्पयतम् । अपि च **कर्कन्धुम् वय्यम्** च एतत्संज्ञकौ चासुरैः पीड्यमानौ **याभिः** ऊतिभिः **जिन्वथः** प्रीणयथः । गतमन्यत् ॥ ६ ॥

**सायण–** आरणम् अगाधं कूपादि । तत्रासुरैः प्रक्षिप्तं **जसमानं** तैर्हिंस्यमानम् **अन्तकं** शत्रूणामन्तकरम् एतत्संज्ञं राजर्षिं हे अश्विनौ! **याभिः ऊतिभिः** अवथः रक्षथः । तथा **भुज्युं** सर्वस्य पालकमेतत्संज्ञं समुद्रमध्ये निमग्नं तुग्रं तुग्रस्य पुत्रं राजर्षिं **याभिः** ऊतिभिः रक्षणहेतुभूताभिः **अव्यथिभिः** व्यथारहिताभिर्नौभिः **जिजिन्वथुः** युवामतर्पयतम् । एतच्च मन्त्रान्तरे 'तुग्रो ह भुज्युमश्विनोदमेघे' (ऋ.सं.१.११६.३) इत्यादिके विस्पष्टयिष्यते । अपि च **कर्कन्धुं वय्यं च** एतत्संज्ञकौ चासुरैः पीड्यमानौ **याभिः** ऊतिभिः **जिन्वथः** प्रीणयथः । गतमन्यत् ।

जसमानम् । 'जसु हिंसायाम्' । यकि प्राप्ते व्यत्ययेन शप् । आरणे । आङ्पूर्वात् अर्तेः ल्युट् । जिजिन्वथुः । जिविः प्रीणनार्थः । लिटि अथुसि रूपम् ॥ ६ ॥

**सिद्धाञ्जनम्– आरणे** आ समन्तात् अरणं सोद्यमगमनं तत्र, सप्रयासोद्यम् इत्यर्थः **जसमानम्** हिंस्यमानं शत्रुभिः पापैः **अन्तकम्** एतत्संज्ञकं राजर्षिं, शत्रूणामन्तकरं वा ऋषिं **याभिः** ऊतिभिः **अवथः** रक्षथः तथा **भुज्युम्** पालकं एतत्संज्ञकं, काक्षीवते आश्विने सूक्ते चोपन्यस्यते भुज्युः राजर्षिः, तं **याभिः** ऊतिभिः **अव्यथिभिः** व्यथारहिताभिः सुखोपायभूताभिः रक्षाभिः **जिजिन्वथुः** अतर्पयतम् । तथा **कर्कन्धुम्** अविदितमस्य स्वरूपं सकृत्प्रयोगात् **वय्यम् च** एतत्संज्ञकं च, अस्य स्वरूपं प्रागुक्तम् (१.५४.६) **याभिः** ऊतिभिः **जिन्वथः** प्रीणयथः । गतमन्यत् ।

जसमानम्–जसि हिंसायाम्, यकि प्राप्ते व्यत्ययेन शप् । जिजिन्वथुः–जिविः प्रीणनार्थः, लिटि रूपम् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।**
**याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ७ ॥**
**याभिः । शुचन्तिम् । धनऽसाम् । सुऽसंसदम् । तप्तम् । घर्मम् । ओम्याऽवन्तम् । अत्रये । याभिः । पृश्निऽगुम् । पुरुऽकुत्सम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ७ ॥**

**स्कन्द–** अत्रापीतिहासमाचक्षते– 'शुचन्तिर्नाम राजा राजयक्ष्मणा गृहीतस्तद्व्यावृत्तये सर्वस्वं ब्राह्मणेभ्यो ददौ । अश्विनौ च तुष्टाव । तमश्विनावागत्य स्वैर्भेषजैर्नीरुजं चक्रतुः' इति । तथा अपरमितिहासमाचक्षते– 'अत्रिर्नामर्षिः । तमसुरा अग्निकूटे प्रचिक्षिपुः । सोऽश्विनौ तुष्टाव । तमश्विनावागत्य वृष्ट्या निशमय्याग्निं तत उज्जह्रतुः । बलं चासुरप्रतिबन्धसमर्थमस्मै सहान्नेन ददतुः' इति । तदेतत् कक्षीवान् वक्ष्यति 'हिमेनाग्निम्' (ऋ.१,११६,८) इति 'युवमत्रयेऽवनीताय' (ऋ १,११८,७) इत्यादिभिश्च । तदेतदितिहासद्वयमिहोच्यते । **याभिः** ऊतिभिर्गत्वा **शुचन्तिम्** राजानं प्रति । कीदृशम् । **धनसाम्** । 'षणु दाने' । धनानां दातारम् । **सुषंसदम्** संसत् सभोच्यते । शोभनसभम् । **तप्तम्** चाग्निं प्रति । कीदृशम् । **घर्मम्** 'घृ क्षरणदीप्त्योः' । दीप्तम् । भवति हि किञ्चित् तप्तं न तु दीप्तं यथा निदाघे पांसवः । भवति च किञ्चिद्दीप्तं न तु तप्तं यथा माणिक्यादिरत्नम् । अत उभयेनाग्निर्विशेष्यते तप्तं घर्ममिति । **ओम्यावन्तम्** अवतेः पालनार्थस्येदं रूपम् । पालनवन्तं युष्मत्प्रसादात् शीतीभूतम् । अदाहकमित्यर्थः । **अत्रये** अत्रेरर्थाय । **याभिः** च । यत्रापीतिहासमाचक्षते– 'पुरुकुत्सः पुत्रकामो महत् तपश्चचाराश्विनौ तुष्टाव च । तस्मै अश्विनौ पुत्रं ददतुः' इति । तदेतदुच्यते । **याभिः** च ऊतिभिः **पृश्निगुम्** पृश्निशब्दो व्याघ्रसरूपवर्णवचनः । पृश्नयो गावो यस्य स पृश्निगुः । तं **पृश्निगुम्** पुरुकुत्सम् प्रति **आवतम्** अवतिरत्र सामर्थ्यात् गत्यर्थः । गतवन्तौ स्थः । पालनार्थं एव वा अवतिः । याभिरूतिभिर्गत्वा शुचन्त्यादीन् राजयक्ष्मापनयनादिभिः पालितवन्तौ स्थ इत्यर्थः । अस्मानपि प्रति **ताभिः** ॥ ७ ॥

**वेङ्कटमाधव–** राजयक्ष्मणा गृहीतं ब्राह्मणेभ्यः सर्वस्वस्य दातारं स्तोत्रैः शोभनसहासनम् **शुचन्तिम्** नीरुजं चक्रथुः । अत्रिमृषिम् असुरैः अग्नौ प्रक्षिप्तम् अग्निम् उदकेन संशमय्य पालनवन्तम् अस्मै चक्रथुः । याभिः च **पृश्निगुम् पुरुकुत्सम्** च ररक्षथुः ।। ७ ।।

**मुद्गल–** हे अश्विनौ! **धनसाम्** धनस्य सम्भक्तारम् **शुचन्तिम्** एतन्नामानम् **सुषंसदम्** संसद् गृहम् शोभनसंसदम् **याभिः ऊतिभिः** अकुरुतम् तथा **अत्रये** याभिश्चोतिभिः **तप्तम्** प्रवृञ्जनेन सन्तप्तम् **घर्मम्** महावीरम् **ओम्यावन्तम्** सुखयुक्तं सुखेन स्प्रष्टुं शक्यम् अकुरुतम् । यथाऽस्मै सुखं भवति तथा हिमेनोदकेन तमग्निम् वारयेथाम् । अपि च **याभिः** ऊतिभिः **पृश्निगुम् पुरुकुत्सम्** च **आवतम्** अरक्षतम् **ताभिः** सर्वाभिः ।। ७ ।।

**सायण–** हे अश्विनौ! **धनसां** धनस्य सम्भक्तारं **शुचन्तिम्** एतन्नामानं **सुषंसदम्** । संसीदन्त्यस्मिन्निति संसत् गृहम् । शोभनसंसदं **याभिः** ऊतिभिरकुरुतम् । तथा **अत्रये** याभिश्चोतिभिः **तप्तं** प्रवृञ्जनेन सन्तप्तं **घर्मं** महावीरम् **ओम्यावन्तं** सुखयुक्तं सुखेन स्प्रष्टुं शक्यमकुरुतम् । यद्वा । शतद्वारे यन्त्रगृहे असुरैः पीड्यमानाय घर्मं दीप्तं पीडासाधनमग्निं तप्तं तापकारिणम् ओम्यावन्तं सुखवन्तम् अकुरुतम् । यथा अस्मै सुखं भवति तथा हिमेनोदकेन तमग्निमवारयेथाम् । यास्कपक्षे तु अत्रये हविषामत्त्रेऽग्नये हविरुत्पत्त्यर्थं सूर्यकिरणसन्तप्तं घर्मं- नैदाघम् अहः ओम्यावन्तं तृप्तिहेतुवृष्ट्युदकोपेतं कृतवन्तौ इति योज्यम् । अपि च **याभिः** ऊतिभिः **पृश्निगुं पुरुकुत्सं** च **आवृतम्** अरक्षतम् । **ताभिः** सर्वाभिः **ऊतिभिः** अस्मानागच्छतम् ।

शुचन्तिम् । 'शुच दीप्तौ' । औणादिको झिच् । धनसाम् । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । सुषंसदम् । शोभना संसद्यस्य । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ओम्यावन्तम् । अवतेः 'अन्येऽभ्योऽपि दृश्यन्ते' इति मनिन् । 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । गुणः । 'छन्दसि च' इत्यर्हार्थे यप्रत्ययः । 'नस्तद्धिते' इति टिलोपः । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते । पृश्निगुम् । पृश्नयो नानावर्णा गावो यस्य स तथोक्तः । 'गोस्त्रियोरुपसर्जनस्य' (पा.सू.१.२.४८) इति गोशब्दस्य ह्रस्वत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **धनसाम्** दिव्यस्य धनस्य सम्भक्तारं **शुचन्तिम्** दीप्यमानमृषिं,

एतत्संज्ञकं **सुषंसदम्** शोभनावासगृहयुक्तं **याभिः** ऊतिभिः अकुरुतम्, तथा **अत्रये** एतत्संज्ञकाय ऋषये **तप्तम्** तपसा परिपक्वं **घर्मम्** दीप्तियुक्तं महावीरसङ्केतकं शरीरं **ओम्यावन्तम्** रक्षासुखयुक्तं याभिरूतिभिः अकुरुतम् । अपि च **याभिः** ऊतिभिः **पृश्निगुम्** पृश्नयश्चित्रवर्णाः गावः चिद्रश्मि-लक्षणाः यस्य तं, एतत्संज्ञकं **पुरुकुत्सम्** एतं ऋषिं च **आवतम्** अरक्षतम् । ताभिरिति गतम् ।

शुचन्तिम्–शुच दीप्तौ । सुषंसदम्–सीदतेः । ओम्यावन्तम्–अवतेः मनिन्, ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊठ्, गुणः, अर्हार्थे यप्रत्ययः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।**
**याभिर्वर्तिकां ग्रसिताममुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ।। ८ ।।**
**याभिः । शचीभिः । वृषणा । पराऽवृजम् । प्र । अन्धम् । श्रोणम् । चक्षसे । एतवे । कृथः । याभिः । वर्तिकाम् । ग्रसिताम् । अमुञ्चतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। ८ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'घोरो नामाग्नेः पुत्रः । योऽथर्वाङ्गिरसो ब्रह्मदण्डः पठ्यते, तस्य ज्येष्ठः पुत्रः कुष्ठी श्याववर्णः गमनासमर्थो बभूव । सोऽश्विनौ तुष्टाव । तमश्विनौ विकृत्य जङ्घयोर्मध्ये शिरसि छित्त्वा पुनश्च सन्धाय गमनसमर्थं हिरण्यत्वचं च पुनरुज्जीवयाञ्चक्रतुः' इति । तदेतत् कक्षीवान् वक्ष्यति– 'युवं श्यावाय' (ऋ १,११७,८) इति । 'त्रिधा ह श्यावम्' (त्रा.१,११७,२४) इति च । तथापरमितिहासमाचक्षते– 'वार्षागिरः ऋज्राश्वो नाम राजा । तमश्विनोः स्वभूता कशा वृकी भूत्वोपतस्थौ । स तां दिव्येन चक्षुषा ज्ञात्वा अहन्यहनि विश्वस्य मेषशतं तस्यै आहारं कल्पयाञ्चकार । तत् ज्ञात्वा सा तस्मै चुकोप । सा तं शापेनान्धं चकार । अथ मृते वृषागिरि ऋज्राश्वमन्धं ज्ञात्वा तच्छत्रवः तत्पुरमुपरुरुधुः । तान्निष्क्रम्य सा वृकी बभञ्ज । भग्नेषु शत्रुषु पुनरप्युपरोधमाशङ्कमान ऋज्राश्वोऽश्विनौ तुष्टाव तस्मै आश्वागत्याश्विनौ अक्षिणी ददतुः' इति । तदेतत् कक्षीवान् वक्ष्यति– 'शतं मेशान्' (ऋ १,११६,१६,११७,१७) इति । 'अगच्छतं कृपमाणम्' (ऋ १,११९,८) इत्यादिभिश्च । तथापरमितिहासमाचक्षते– 'नार्षद ऋषिर्बधिरो बभूव । सोऽश्विनौ तुष्टाव । तस्मै अश्विनौ श्रोत्रं ददतुरिति' । तदेतत् कक्षीवान् वक्ष्यति– 'प्रवाच्यं तत्' (ऋ.१,११७,८) इति । तदेतदितिहासत्रयमिहोच्यते । **याभिः**

ऊतिभिर्गत्वा **शचीभिः** देवतामाहाभाग्यादतिशयवतीभिः प्रज्ञाभिः कर्मभिर्वा । **वृषणा!** हे वर्षितारौ! **परावृजम्** परावर्जितम् । केन । सामर्थ्यात् प्राणैः जङ्घादिभिर्वा अवयवैः । मृतं छिन्नजङ्घं वा सन्तं घोरस्य ज्येष्ठं पुत्रमित्यर्थः । **अन्धम्** च ऋज्राश्वम् । **श्रोणम्** बधिरं च नार्षदम् । **चक्षसे** दर्शनाय **एतवे** गमनाय च । साकाङ्क्षत्वात् श्रवणाय चेति वाक्यशेषः । पूर्वैश्च सह योग्यतयैषां सम्बन्धः । चक्षसे अन्धमृज्राश्वम् एतवे परावृजं घोरस्य ज्येष्ठं पुत्रं श्रवणाय नार्षदम् **प्र कृथः** प्रकर्षेण कृतवन्तौ स्थः । याभिश्च । अत्रापीतिहासमाचक्षते– 'वर्तिका नाम चटकजातिः शीघ्रगतिः श्रमवर्जिता च । चवट्ट इत्यपभ्रंशेन या लोके प्रसिद्धा । अस्या गच्छन्त्याः समुद्रमध्येऽपि शब्दः श्रूयते इति नाविका आचक्षते । तां शीघ्रगतित्वाच्च श्रमवर्जितत्वाच्च दूत्येन केचिद् ऋषयः प्रेषयामासुः । ताम् गच्छन्तीं वृको जग्राह । साऽश्विनावाजुहाव । तामश्विनौ मोचयाञ्चक्रतुः' इति । तदेतत् कक्षीवान् वक्ष्यति– अजोहवीदश्विना' (ऋ १,११७,१६) इति । तदेवेहाप्युच्यते । **याभिः** चोतिभिर्गत्वा **वर्तिकाम् ग्रसिताम्** वृकेण ग्रस्तां सतीम् अमुञ्चतम् । मुचिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । अमोचयतम् । मोचितवन्तौ स्थ इत्यर्थः । **ताभिः** ॥ ८ ॥

**वेङ्कटमाधव–** यैः कर्मभिः वर्षितारौ! **परावृजम्** नाम ऋषिम् **अन्धम्** पङ्गुं च दर्शनाय गमनाय च प्रचक्रथुः । **याभिः** वृकेण ग्रस्ताम् **वर्तिकाम्** अमुञ्चतम् वृकाऽऽस्यात् ॥ ८ ॥

**मुद्गल–** हे **वृषणा!** कामानां वर्षितारौ! **अश्विना!** अश्विनौ! **याभिः शचीभिः** कर्मभिः **परावृजम्** एतन्नामकमृषिम् षङ्गुं सन्तम् अपङ्गुम् अकुरुतम् । तथा **अन्धम्** दृष्टिरहितं सन्तम् ऋज्राश्वमृषिम् **चक्षसे** प्रकाशाय सम्यक् चक्षुषा दर्शनाय **याभिः** ऊतिभिः **प्र कृथः** प्रकर्षेण कुरुथः । याभिश्च **श्रोणं** विगुणजानुकम् एवं सन्तम् ऋषिम् **एतवे** गन्तुं **प्रकृथः** प्रकर्षेण कृतवन्तौ । अपि च **याभिः** ऊतिभिः **वर्तिकाम्** चटकसदृशस्य पक्षिणः स्त्रियम् **ग्रसिताम्** वृकेण ग्रस्ताम् **अमुञ्चतम्** वृकाऽऽस्यात् निर्मुक्ताम् अकुरुतम् । **ताभिः** ॥ ८ ॥

**सायण–** हे **वृषणा!** कामानां वर्षितारावश्विनौ **याभिः शचीभिः** कर्मभिः प्रज्ञाभिर्वा **परावृजम्** एतन्नामकमृषिं पङ्गुं सन्तमपङ्गुमकुरुतम् । तथा **अन्धं** दृष्टिरहितं सन्तमृज्राश्वमृषिं **चक्षसे** प्रकाशाय सम्यक् चक्षुषा दर्शनाय याभिरूतिभिः **प्र कृथः** प्रकर्षेण कुरुथः । याभिश्च **श्रोणं** विगुणजानुकमेव सन्तमृषिम् **एतवे** गन्तुं प्र कृथः प्रकर्षेण कृतवन्तौ । अपि च **याभिः** ऊतिभिः **वर्तिकां** चटकसदृशस्य पक्षिणः स्त्रियं **ग्रसितां** वृकेण ग्रस्ताम् **अमुञ्चतं**

वृकास्यान्निर्मुक्तामकुरुतम् । यास्कपक्षे तु वृकेण निवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतम् इति योज्यम् । **ताभिः** सर्वाभिः **ऊतिभिः** अस्मानप्यागच्छतम् ।

वृषणा । 'वृषसेचने' । 'कनिन्युवृषि' इत्यादिना कनिन् । परावृजम् । 'वृजी वर्जने' । परावृणक्ति तपसा पापं विनाशयतीति परावृक् । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । एतवे । 'तुमर्थे सेसेन्' इत्येतेः तवेन्प्रत्ययः । कृथः । 'डुकृञ् करणे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **वृषणा** वर्षितारौ अश्विनौ, **याभिः** शचीभिः शक्तिभिः क्रियाभिः प्रज्ञाभिर्वा **परावृजम्** एतत्संज्ञकं, परावृणक्ति तपसा पापं प्रध्वंसयति इति परावृक् तमृषिं 'पङ्गुं अपङ्गुं अकुरुतम्' इति सायणः, क्वेयं पुराणकथेति न ज्ञायते । **अन्धम्** दृष्टिरहितं 'ऋज्राश्वमृषिम्' इति सायणः, **चक्षसे** चक्षुषा सम्यग्दर्शनाय याभिरूतिभिः **प्रकृथः** प्रकर्षेण कुरुथः । **श्रोणम्** एतत्संज्ञकं 'विगुणजानुकमेव सन्त'मिति सायणः, **एतवे** गन्तुं प्रकृथः प्रकर्षेण कृतवन्तौ, **वर्तिकाम्** चटकसदृशस्य पक्षिणः स्त्रियमिति सायणः, **ग्रसिताम्** वृकेण ग्रस्तां इति सायणः **याभिः** ऊतिभिः **अमुञ्चतम्** निर्मुक्तामकुरुतम् । ताभिरिति गतम् । अत्रेदं चिन्त्यम् । अस्यामृचि उत्तरासु च अश्विनोरनुग्रहप्रभावो वर्ण्यते, पादहीनस्य गमनसामर्थ्यं अन्धस्य प्रकाशदानमित्यादि तत्र निदर्शनम् । एतेषां वादानां ऐतिहासिकत्वेऽपि अन्तरर्थस्य न क्षतिः, स्तोत्रात्मकत्वात्तेषाम्, अन्यथा च अन्धादीनां सत्यप्रकाशनिर्मूढत्वादि विवक्षितम् ।

अत्र वर्तिकाकथासारस्तु विचेयः । काचन चटकपक्षिस्त्री वृकेण ग्रस्ताऽभूत्, तां निर्मुक्तामकुरुतामश्विनौ इति भूतार्थं मन्यमान इव कथयति कथाम् । यास्कस्तु वृकेण विवृतज्योतिष्केण सूर्येण ग्रस्तामुषसं निर्मुक्तामकुरुतामिति कथां लाक्षणिकीं मन्यते । नव्यास्तु रात्र्या ग्रस्ता उषा वर्तिकेति विभावयन्ति, एवं बहवो वादा ऊहमात्राधाराः विप्रतिपद्यन्ते । सायणं विना सर्वेऽपि गौणत्वमाश्रित्यैव प्रवर्तन्ते । अस्माकमपि गौणत्वाश्रयणेनैव सङ्केतार्थः प्रवर्तते । तर्हि ब्रूमः– वर्तिका न चटकपक्षिस्त्री, अन्येयं भीरुत्वेन ख्याता ''श्येनावपातचकिता वनवर्तिकेव'' इत्येवमादिप्रयोगे अतिभीरुत्वमस्याः द्योतितम् । बलहीनतामवद्योतयति स्त्रीत्वम् । अन्तः ऊर्ध्वगमनायोद्यतो जीवन् योगी पक्षिणोपमीयते । असति दूरोत्पतनसामर्थ्ये, ऊर्ध्वं जिगमिषोर्योगिनः

असुरेभ्यः भयं नित्यसिद्धम् । एवं वर्तिकास्थानीयं भीरुं योगिनमृषिं वृकेण छेदकेनासुरेण ग्रस्तं अश्विनौ निर्मुक्तमकुरुताम् ।

एतवे–एतेः तुमर्थे तवेन्प्रत्ययः । कृथः–करोतेः, विकरणस्य लुक् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।**
**याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। ९ ।।**

**याभिः । सिन्धुम् । मधुऽमन्तम् । असश्चतम् । वसिष्ठम् । याभिः । अजरौ । अजिन्वतम् । याभिः । कुत्सम् । श्रुतर्यम् । नर्यम् । आवतम् । ताभिः । ऊँ इति । ऊतिऽभिः । अश्विना । आ । गतम् ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'विश्वामित्रो वसिष्ठं जिघांसुः सरस्वतीमाहूयोवाच । मत्समीपं वसिष्ठं शीघ्रमानयेति । सा तच्छ्रुत्वा विश्वामित्रादपि वसिष्ठादपि शापात् बिभ्यती किञ्चिदप्य-प्रतिपद्यमाना चिन्ताकृशा विवर्णा बभूव । अथैनामेवंरूपां ज्ञात्वा कृपाशीलतया वसिष्ठ उवाच । 'रक्षात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनि । विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम्' (म.भा.१८,४२,२४) इति । अथ तं स्वकूले जपन्तं सरस्वती महता जलौघेन विश्वामित्राश्रमं प्रत्युवाह । ऊढ्वा च विश्वामित्राय निवेदयामास । निवेद्य च प्रहरणान्वेषणव्याकुले विश्वामित्रे कृतं मया स्वकार्यमिति मन्यमाना ब्रह्महत्याभयात् सरस्वती वसिष्ठं ततो दूरमपोवाह । अथ तत् ज्ञात्वा विश्वामित्रः क्रुद्धः सरस्वतीं शशाप शोणितं वहेति । सा शोणितमुवाह । 'अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा । सरस्वतीं तदा दृष्ट्वा बभूवुर्दुःखिता भृशम् ।। शात्वा तदश्विनौ तस्याः तं शापमपनिन्यतुः । ततः सरस्वती जाता प्रसन्नसलिला शिवा' ।। (म.भा.१८, ४२,४०) इति । भारते तु ऋषयः शापात्सरस्वतीं मोचयामासुरित्याख्यानं तदश्विनोः प्रसादेनेति वर्णयितव्यम् । इतिहासान्तरं वा पर्येष्यम् । तथाऽपरमितिहासमाचक्षते– 'वसिष्ठो हतपुत्रः पुत्रार्थी अश्विनावियाज । तस्मै अश्विनौ पुत्रं ददतुः' इति । तदेतद् वसिष्ठ एव दर्शयिष्यति– 'अविष्टं धीषु' (ऋ.७,६७,६) इत्यादिना । तदेतदितिहासद्वयमिहोच्यते । **याभिः** ऊतिभिः गत्वा **सिन्धुम्** 'सिन्धवः' (निघ.१,४) इति नदीनाम । नदीं सरस्वत्याख्याम् । **मधुमन्तम्**

'मधु' (निघ.१,१२) इत्युदकनाम । व्यत्ययेन चात्र पुंल्लिङ्गत्वम् । उदकवतीम् । **असश्चतम्** सश्चतिरत्रोपक्षये । अक्षयोदकाम् । **वसिष्ठम् च याभिः** ऊतिभिर्गत्वा **अजरौ** जरावर्जितौ **अजिन्वतम्** जिन्वतिः प्रीतिकर्मा (निघ.४,३) । लोहितवहनशापापनयनेन पुत्रप्रदानेन च प्रीणितवन्तौ स्थः । **याभिः कुत्सम्** । अत्रापीतिहासमाचक्षते– 'कुत्स इयेष अपि नाम साक्षाद्रूपेणाश्विनौ पश्येयमिति । तस्य परया भक्त्या स्तुतिभिश्चाऽऽराधितावश्विनौ दर्शनमुपाजग्मतुः' इति । तदेतदिहोच्यते । **याभिः** चोतिभिर्मामेव **कुत्सम्** प्रति । कीदृशम् । **श्रुतर्यम्** शृणोतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । छान्दसत्वाच्च गुणाभावः । यशब्दश्च प्रत्यय उपजनः । श्रावयितारं स्तुतीनाम् । स्तोतारमित्यर्थः । **नर्यम्** नरेषु भवम् । मनुष्यलोके एव व्यवस्थितं सन्तम् **आवतम्** अवतिरत्र गत्यर्थः । दर्शनं दातुं पूर्वमागतवन्तौ स्थः । इदानीमपि **ताभिः** ।। ९ ।।

**वेङ्कटमाधव– याभिः सिन्धुम्** उदकवन्तं पीतोदकं चक्रथुः । देवानां पणीन् प्रति गन्तुं रसां नदीम् **वसिष्ठम् च याभिः** पुत्रप्रदानेन **अजरौ** ररक्षथुः । **याभिः** च कुत्सादीन् त्रीन् **आवतम्** ।। ९ ।।

**मुद्गल–** हे अश्विनौ! **सिन्धुम्** स्यन्दनशीलां नदीम् **मधुमन्तम्** मधुसदृशेनोदकेन पूर्णाम् **याभिः** ऊतिभिः **असश्चतम्** अगमयतम् । प्रावाहयतमित्यर्थः । हे **अजरौ!** जरारहितावश्विनौ! **वसिष्ठम्** ऋषिम् **याभिः** ऊतिभिः **अजिन्वतम्** अप्रीणयतम् । **याभिः** च कुत्सादीन् त्रीन् ऋषीन् **आवतम्** । अरक्षतम् **ताभिः** सर्पाभिः ।। ९ ।।

**सायण–** हे अश्विनौ! **सिन्धुं** स्यन्दनशीलां नदीं **मधुमन्तं** मधुसदृशेनोदकेन पूर्णां **याभिः** ऊतिभिः **असश्चतम्** अगमयतं प्रावाहयतमित्यर्थः । हे **अजरौ!** जरारहितावश्विनौ, **वसिष्ठम्** ऋषिं **याभिः** ऊतिभिः **अजिन्वतम्** अप्रीणयतम् । **याभिः** च कुत्सादीन् त्रीन् ऋषीन् **आवतम्** अरक्षतम् । **ताभिः** सर्वाभिः **ऊतिभिः** अस्मानपि सुष्ठ्वागच्छतम् ।

मधुमन्तम् । मधुशब्दात् भूम्नि मतुप् । लिङ्गव्यत्ययः । असश्चतम् । सश्चतिर्गतिकर्मा । अस्मात् अन्तर्भावितण्यर्थात् लुङ् ।। ९ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **सिन्धुम्** स्यन्दनशीलां तेजोबलादिवाहिनीं **मधुमन्तम्** रसभरितां **याभिः** ऊतिभिः **असश्चतम्** अगमयतं (सश्चतिर्गतिकर्मा, अन्तर्भावितण्यर्थः) । हे **अजरौ!**

जरारहितौ **वसिष्ठम्** ऋषिं **याभिः** ऊतिभिः **अजिन्वतम्** अप्रीणयतं, **याभिः कुत्सं श्रुतर्यं नर्यं** एतान् ऋषीन् **आवतम्** अरक्षतम् ताभिरिति गतम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम् ।**
**याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। १० ।।**
याभिः । विश्पलाम् । धनऽसाम् । अथर्व्यम् । सहस्रऽमीळ्हे । आजौ । अजिन्वतम् । याभिः । वशम् । अश्व्यम् । प्रेणिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १० ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– ''अगस्त्यपुरोहितः ऐळो नाम राजा बभूव । तस्य सेनायां योद्ध्री विश्पला नाम स्त्री । तस्या अन्नार्थं धनार्थं च युध्यमानायाः शत्रवो जङ्घां चिच्छिदुः । तदपि कक्षीवान् वक्ष्यति– 'चरित्रं हि वेरिव' (ऋ. १,११६,१५) इति ।'तस्याश्छिन्नां जङ्घां ज्ञात्वा पुरोहितोऽगस्त्योऽश्विनौ तुष्टाव । तौ विश्पलां प्रति जग्मतुः । तदेतत् कक्षीवानपि वक्ष्यति- 'सूनोर्मानेन'(ऋ १,११७,११)इति । आगत्य च सद्यो लोहमयीं जङ्घां विश्पलायाश्चक्रतुः । तदेतत् कक्षीवानेव वक्ष्यति– 'सद्यो जङ्घाम्' (ऋ१.११६.१५), 'प्रति जङ्घाम्' (ऋ.१, ११८,८) इति च । तदेवेहाप्युच्यते । **याभिः** ऊतिभिः गत्वा **विश्पलाम्** नाम योद्ध्रीं स्त्रियम् । **धनसाम्** 'वन षण सम्भक्तौ' इत्यस्यैतद्रूपम् । सङ्ग्रामनिमित्तभूतस्य धनस्य सम्भक्त्रीम् । **अथर्व्यम्** थर्वतिश्चरतिकर्मा । अचरन्तीम् । छिन्नजङ्घत्वात् गन्तुमसमर्थामित्यर्थः । **सहस्रमीळ्हे** 'सहस्रम्' (निघ.३,१) इति बहुनाम । बहूनि धनानि निमित्तभूतानि यस्य स सहस्रमीळ्हः, तस्मिन् सहस्रमीळ्हे । बहुधनप्राप्त्यर्थमित्यर्थः । **आजौ** सङ्ग्रामे **अजिन्वतम्** लोहमयजङ्घाकरणेन प्रीणितवन्तौ स्थः । **याभिः** च **वशम्** । अत्रापीतिहासमाचक्षते– 'वशो नाम राजा अश्वप्राय-बलः । स हस्तिबलैः शत्रुभिः पराजीयमानः साहाय्यं कर्तुमश्विनौ स्तुत्वाऽऽजुहाव । तं प्रति तस्मिन्नेवाहनि अश्विनावाजग्मतुः' इति । तदेतत् कक्षीवान् वक्ष्यति– 'एकस्या वस्तोः' (ऋ.१, ११६,२१) इति । तदेवेहाप्युच्यते । याभिश्चोतिभिर्वशं राजानम् । कीदृशम् । अश्व्यम् । समूहेऽयं यत् प्रत्ययः अन्तर्णीतमत्वर्थश्च । अश्वसमूहवन्तम् । **प्रेणिम्** 'प्रीञ् तर्पणे' । तर्पयितारं च स्तुतिभिः हविर्भिश्च देवानाम् । **आवतम्** आगतवन्तौ स्थः । अस्मानपि प्रति **ताभिः** ।।

**वेङ्कटमाधव–** यैः पालनैः **विश्पलाम्** नाम स्त्रियमैलस्यार्थाय तस्य शत्रुभिः सह युध्यमानां शत्रुभिः छिन्नजङ्घाम् अगन्त्रीं सहस्रधननिमित्ते सङ्ग्राम ऐलस्य पुरीहितेन अगस्त्येन स्तुतौ अश्विनौ लोहमयजङ्घाप्रतिसन्धानात् ररक्षथुः । **याभिः** अश्वस्य पुत्रम् वशम् नाम राजानं स्तोत्रैः तर्पयितारं हस्तिबलैः शत्रुभिरभिभूयमानं ररक्षथुः ।। १० ।।

**मुद्गल–** हे **अश्विना!** अश्विनौ! **धनसाम्** धनं सम्भजमानाम् **अथर्व्यम्** अगच्छन्तीं छिन्नजङ्घात्वेन गन्तुमसमर्थाम् **विश्पलाम्** एतत्संज्ञाम् अगस्त्यपुरोहितस्य खेलस्य सम्बन्धिनीम् **सहस्रमीळ्हे** बहुधनोपेते **आजौ** सङ्ग्रामे **याभिः** ऊतिभिः **अजिन्वतम्** गन्तुं समर्थाम् अकुरुतम् । **याभिः च अश्व्यम्** अश्वाख्यस्य पुत्रम् **प्रेणिम्** स्तुतेः प्रेरयितारम् **वशम्** एतत्संज्ञमृषिम् **आवतम्** अरक्षतम् । **ताभिः** सर्वाभिः ।। १० ।।

**सायण–** हे अश्विनौ! **धनसां** धनं सम्भजमानाम् **अथर्व्यम्** अगच्छन्तीं छिन्नजङ्घात्वेन गन्तुमसमर्थाम् । थर्वतिर्गतिकर्मा । **विश्पलाम्** एतत्संज्ञामगस्त्यपुरोहितस्य खेलस्य सम्बन्धिनीं **सहस्रमीळ्हे** । मीळ्हमिति धननाम । बहुधनोपेते **आजौ** सङ्ग्रामे **याभिः** ऊतिभिः **अजिन्वतं** गन्तुं समर्थामकुरुतम् । एतच्च 'चरित्रं हि वेरिवाच्छेदि पर्णम्' (ऋ.सं.१.११६.१५) इत्यत्र विस्पष्टयिष्यते । **याभिः** च **अश्व्यम्** अश्वाख्यस्य पुत्रं **प्रेणिं** स्तुतेः प्रेरयितारं **वशम्** एतत्संज्ञम् ऋषिम् **आवतम्** अरक्षतम् **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानप्यागच्छताम् ।

प्रेणिम् । 'प्रेणृ गतिप्रेरणश्लेषणेषु' । औणादिक इप्रत्ययः ।। १० ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **याभिः** ऊतिभिः **धनसाम्** दिव्यं धनं सम्भजमानां **अथर्व्यम्** थर्वतिर्गतिकर्मा, गमनरहितां (लिङ्गव्यत्ययः) स्थिरां दृढस्थितिकामित्यर्थः **विश्पलाम्** विशां पालयित्रीं ऋषिकां (अगस्त्यपुरोहितस्य खेलस्य सम्बन्धिनी पत्नी वेति इतिहासः) **सहस्रमीळ्हे** सहस्रदिव्यधनवृष्टियुक्ते (मीळ्हं धननाम स्थूले, वर्षणमपि स्यात्) **आजौ** असुरैः सह युद्धे **अजिन्वतम्** अप्रीणयतम् । **याभिः वशम्** (वष्टेः) एतत्संज्ञकमृषिं **अश्व्यम्** अश्वाख्यस्यर्षेः प्राणसमृद्धस्य पुत्रं **प्रेणिम्** प्रेरयितारं यजनस्य स्तुतेर्वा ऋषिं **आवतम्** अरक्षतम् । ताभिरिति गतम् ।

प्रेणिम्–प्रेण् गतिप्रेरणश्लेषणेषु, औणादिक इप्रत्ययः ।। १० ।।

**।। इति प्रथमाष्टके सप्तमाध्याये चतुस्त्रिंशो वर्गः ।।**

## ।। अथ पञ्चत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**याभिः सुदान् औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।**
**कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। ११ ।।**
याभिः । सुदानू इति सुऽदानू । औशिजाय । वणिजे । दीर्घऽश्रवसे । मधु । कोशः । अक्षरत् । कक्षीवन्तम् । स्तोतारम् । याभिः । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। ११ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'दीर्घश्रवा ऋषिः परिक्षीणवृत्तिर्वैश्यजीविकां वणिग्वृत्तिमास्थितः । अन्यथा जीवन् मधु विचिक्रीषमाणः तदर्थमश्विनौ तुष्टाव । तावागत्यास्य मेघात् मधु क्षारयाञ्चक्रतुः' इति । तदेतदिहोच्यते । **याभिः** ऊतिभिर्हेतुभूताभिः हे **सुदान्!** शोभनदानौ! । औशिजायेत्यादि सर्वत्र तादर्थ्ये चतुर्थी । उशिजः पुत्रस्य वणिजः दीर्घश्रवसः ऋषेरर्थाय । **मधु कोशः** मेघः **अक्षरत्** । **कक्षीवन्तम्** च **स्तोतारम्** प्रति **याभिः** ऊतिभिः **आवतम्** अवतिरत्र गत्यर्थः पालनार्थो वा । त्रिकालविषयसर्वार्थविषयज्ञानप्रदानेन वा पालितवन्तौ स्थ इत्यर्थः । तदेतत् पुरस्तादप्युक्तम्– 'याभिस्त्रिमन्तुः' (ऋ १,११२,४) इति । अस्मानपि प्रति । **ताभिः** ।। ११ ।।

**वेङ्कटमाधव– याभिः** शोभनदानौ! कक्षीवते वणिग्वृत्तये पर्वतमध्ये गताय **दीर्घश्रवसे** जलं मेघः **अक्षरत्** इति एतदेवाह– **कक्षीवन्तम्** इति ।। ११ ।।

**मुद्गल–** उशिक्संज्ञा दीर्घतमसः पत्नी । तस्याः पुत्रः दीर्घश्रवा नाम कश्चिदृषिरनावृष्ट्या **जीवनार्थम्** अकरोद्वाणिज्यम् । स च वर्षणार्थम् अश्विनौ तुष्टाव । तौ च अश्विनौ मेघं प्रेरितवन्तौ । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे **सुदान्!** शोभनदानावश्विनौ! **औशिजाय** उशिक्पुत्राय **वणिजे** वाणिज्यं कुर्वते **दीर्घश्रवसे** एतत्संज्ञाय ऋषये **याभिः** युष्मदीयाभिः ऊतिभिः हेतुभूताभिः **कोशः** मेघः **मधु** माधुर्योपेतं वृष्टिजलम् **अक्षरत्** असिञ्चत् । युष्मत्प्रसादादपेक्षिता वृष्टिर्जातित्यर्थः । अपि च उशिजः पुत्रम् **स्तोतारम् कक्षीवन्तम्** एतत्संज्ञमृषिम् **याभिः** ऊतिभिः **आवतम्** अरक्षतम् **ताभिः** सर्वाभिः । कक्ष्या रज्जुरश्वस्य तया युक्तः कक्षीवान् ।। ११ ।।

**सायण–** उशिक्संज्ञा दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरनावृष्ट्यां जीवनार्थमकरोत् वाणिज्यम् । स च वर्षणार्थमश्विनौ तुष्टाव । तौ च अश्विनौ मेघं प्रेरितवन्तौ । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे **सुदानू!** शोभनदानावश्विनौ, **औशिजाय** उशिक्पुत्राय **वणिजे** वाणिज्यं कुर्वते **दीर्घश्रवसे** एतत्संज्ञाय ऋषये **याभिः** युष्मदीयाभिः **ऊतिभिः** हेतुभूताभिः **कोशः** मेघः **मधु** माधुर्योपेतं वृष्टिजलम् **अक्षरत्** असिश्चत् युष्मत्प्रसादादपेक्षिता वृष्टिर्जातेत्यर्थः । अपि च उशिजः पुत्रं **स्तोतारं कक्षीवन्तम्** एतत्संज्ञमृषिं **याभिः** ऊतिभिः **आवतम्** अरक्षतम् । **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानप्यागच्छतम् ।

कक्षीवन्तम् । कक्ष्या रज्जुरश्वस्य । तया युक्तः कक्षीवान् । 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्' इति निपातनात् मतुपो वत्वम् । सम्प्रसारणम् ।। ११ ।।

**सिद्धाञ्जनम्–** हे **सुदान्!** शोभनदानौ अश्विनौ, **औशिजाय** उशिक्पुत्राय, अस्य स्वरूपं प्रागुक्तम् (१.१८.१) **वणिजे** वाणिज्यं कुर्वते फलप्रतिफलबुद्धिचोदनया यत् क्रियते तत्र वाणिज्यगन्धो वर्तत एव, तदिह विवक्षितं बोध्यम्, तथाभूताय **दीर्घश्रवसे** सुदूरदिव्यश्रवणशालिने ऋषये **याभिः** युष्मदीयाभिरूतिभिः हेतुभूताभिः **कोशः** दिव्यधनसमृद्धिनिधानभूतः **मधुः** मधुरं मदकरं रसभरितं **अक्षरत्** अवर्षत् । दीर्घतमसः पत्न्या उशिजः पुत्रो दीर्घश्रवाः अनावृष्टेर्वाणिज्यवृत्तिमवललम्बे इति कथमुदाहरन्ति, स एव कक्षीवानित्येके । अपि च **स्तोतारम् कक्षीवन्तम्** एतमृषिं (१.१८.१) **याभिः आवतम्** अरक्षतम् । ताभिरिति गतम् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।**
**याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम् ।। १२ ।।**

याभिः । रसाम् । क्षोदसा । उद्नः । पिपिन्वथुः । अनश्वम् । याभिः । रथम् । आवतम् । जिषे । याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजत । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १२ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'पणिभिरसुरैरपह्रियमाणा गा अनुगच्छन्तो देवगोपाला रसां नामान्तरिक्षनदीमगाधोदकां नोत्तरितुं शेकुः । तत् ज्ञात्वा देवाः सङ्क्रुद्धा रसां शेपुः, निरुदका

भवेति । सा प्रत्यानीतासु गोष्वश्विनौ परिचचार । तामश्विनौ गत्वा पुनरगाधोदकां चक्रतुः' इति । तदेतदिहोच्यते । **याभिः** ऊतिभिर्गत्वा **रसाम्** नामान्तरिक्षनदीम् **क्षोदसा** 'क्षोदः' (निघ. १,१२) इत्युदकनाम । तृतीयानिर्देशाच्च रहितामिति वाक्यशेषः । देवशापादुदकेन रहिताम् । **उद्नः पिपिन्वथुः** पिन्वतिरत्र सामर्थ्यात् पूरणार्थः । उदकेन पूरितवन्तौ स्थः । **अनश्वम्** अश्ववियुक्तं च **रथम्** । कस्य । स्वभूतमश्विनोरेव । कुत एतत् । 'अश्विनोरसनं रथम्' (ऋ. १,१२०,१०) इति मन्त्रान्तरे दर्शनात् । **याभिः** ऊतिभिः **आवतम्** अवतिरत्र गत्यर्थः । सामर्थ्याच्चान्तणीतण्यर्थो द्रष्टव्यः । लडर्थे लङ् 'छन्दसि लुङ्लङ्लिटः' (पा.३,४,६) इति । आवयथः । शत्रून् प्रति गमयथ इत्यर्थः । अथवा आवतमिति अवतिः शुद्ध एव प्रकृत्यर्थे वर्तते । अनश्वं रथमिति तृतीयार्थे द्वितीया । अनश्वेन च रथेन याभिरूतिभिः शत्रून् प्रति गच्छथ इत्यर्थः । **जिषे** जेतुं शत्रून् । **याभिः** च **त्रिशोकः** अत्रापीतिहासमाचक्षते– 'त्रिशोको नाम राजर्षिः आत्मीयाभिः गोभिः सह स्वर्गं गच्छेयमिति कामयमानोऽश्विनौ तुष्टाव । तस्यागत्याश्विनौ स्वर्गं गा निन्यतुः' इति । तदेतदिहोच्यते । याभिश्च युष्मदूतिभिः हेतुभूताभिः त्रिशोक ऋषिः **उस्रियाः** गाः **उदाजत** 'अज गतिक्षेपणयोः' । उत्क्षिप्तवान् । स्वर्गं गमितवानित्यर्थः । अस्मानपि प्रति । **ताभिः** ।। १२ ।।

**वेङ्कटमाधव–** पणिभिरपहृतासु गोषु तत्र गमनार्थं रसाया एव नद्या उदकं प्रथममास्येन अश्विनौ पपतुः । अथ कार्ये समाप्ते प्रागुदकेन यः क्षुण्णो मार्गं आस्यात्मकः, तेनैव पुनरपि अश्विनौ पूरितवन्ताविति । तथाऽनश्वः च कदाचित् अश्विनो रथः अभूत् युद्धे तं जयाय युद्धमध्ये ररक्षतुः । **त्रिशोकः** आत्मीयाभिः गोभिः सह स्वर्गं जिगमिषुः स्वर्गे गा **उदाजत** इति ।।

**मुद्गल–** हे **अश्विना! याभिः** ऊतिभिः हेतुभूताभिः **रसाम्** नदीम् अनावृष्ट्या जलरहिताम् **क्षोदसा** कूलानि सम्पिंषता **उद्नः** उदकेन **पिपिन्वथुः** युवां पूरितवन्तौ । यथा **अनश्वम्** अश्वैर्वियुक्तम् आत्मीयम् **रथम् जिषे** जेतुम् **याभिः** ऊतिभिः **आवतम्** अगमयतम् । अपि च **याभिः** ऊतिभिः कण्वपुत्रः **त्रिशोकः** ऋषिः **उस्रियाः** अपहृता गाः **उदाजत** उदगमयत् असुरसकाशात् लेभे । **ताभिः** सर्वाभिः ।। १२ ।।

**सायण–** 'रसा नदी भवति रसतेः शब्दकर्मणः' (निरु.११.२५) इति यास्कः । हे अश्विनौ! **याभिः** ऊतिभिः हेतुभूताभिः **रसां** नदीमनावृष्ट्या जलरहितां **क्षोदसा** कूलानि संपिंषता

**उद्नः** उदकेन **पिपिन्वथुः** युवां पूरितवन्तौ । तथा **अनश्वम्** अश्वैर्वियुक्तमात्मीयं **रथं जिषे** जेतुं **याभिः** ऊतिभिः **आवतम्** अगमयतम् । अपि च **याभिः** ऊतिभिः कण्वपुत्रः **त्रिशोकः** ऋषिः **उस्रियाः** अपहृताः गाः **उदाजत** उदगमयत् असुरसकाशात् लेभे । **ताभिः** सर्वाभिः **ऊतिभिः** सह अस्मानप्यागच्छतम् ।

क्षोदसा । 'क्षुदिर् सम्पेषणे' । औणादिकः असुन् । उद्नः । तृतीयैकवचनस्य 'सुपां सुपो भवन्ति' इति शसादेशः । 'पद्दन्' इत्यादिना उदकशब्दस्य उदन्भावः । भसंज्ञायाम् 'अल्लोपोऽनः' इति अकारलोपः । पिपिन्वथुः । 'पिवि सेचने' । इदित्त्वात् नुम् । जिषे । 'जि जये' । 'तुमर्थे सेसेन्' इति क्सेप्रत्ययः । उदाजत । 'अज गतिक्षेपणयोः' ।। १२ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **याभिः** ऊतिभिः **रसाम्** ऊर्ध्वं दिव्यभूमिगां रसमयीं नदीं **क्षोदसा** सम्पिषता कूलानीति शेषः, **उद्नः** उदकेन, तृतीयायाः द्वितीयाबहुवचनविपर्ययः **पिपिन्वथुः** पूरितवन्तौ युवाम् । **रथम्** रंहणशीलं आत्मीयं गतिवेगं **अनश्वम्** अश्विनौ सन्तावपि अश्वं विनैव **जिषे** जेतुं **याभिः** ऊतिभिः **आवतम्** अरक्षतम्, युष्मदीयवेगः अश्वनिरपेक्षं प्रवर्तत इति भावः । **याभिः** ऊतिभिः **त्रिशोकः** त्रिषु स्थानेषु अन्तर्बहिश्च, शोकः दीप्तिर्यस्यासौ (शुच दीप्तौ, अस्मात् शोकः) **उस्रियाः** गाः चिद्रश्मिलक्षणाः उदाजत उदगमयत्, अन्धकारे जडे तमसि या गावः निलीनास्ता इत्यर्थः । ताभिरिति गतम् ।

क्षोदसा–क्षुदिर् सम्पेषणे, औणादिकोऽसुन्प्रत्ययः । जिषे–तुमर्थे क्सेप्रत्ययः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।**
**याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। १३ ।।**
याभिः । सूर्यम् । परिऽयाथः । पराऽवति । मन्धातारम् । क्षैत्रऽपत्येषु । आवतम् । याभिः । विप्रम् । प्र । भरत्ऽवाजम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १३ ।।

**स्कन्द–** **याभिः** ऊतिभिः **सूर्यम्** आदित्यम् **परियाथः** परिप्राप्नुथः । **परावति** दूरे स्थितम् । केन पुनर्दूरे स्थितमश्विनौ! परिप्राप्नुथः । स्वरथचक्रेण । कुत एतत् । 'न्यघ्नस्य मूर्धनि'

(ऋ.१,३०,१९) इति मन्त्रान्तरे दर्शनात् । **मन्धातारम्** मान्धातारं च राजानं प्रति याभिरूतिभिः । **क्षैत्रपत्येषु** 'निमित्तात् कर्मसंयोगे' (पा.वा.२,३,३६) इत्येषा सप्तमी 'चर्मणि द्वीपिनं हन्ति' इति यथा । क्षेत्रपतित्वार्थम् । शत्रुणाऽऽक्रान्तस्य स्वस्य विषयस्य पुनरपि स्वामिनं कर्तुमित्यर्थः । **आवतम्** आगतवन्तौ स्थः । अत्रेतिहासमाचक्षते– 'मान्धातुर्विषयभूमिमनन्तरो राजा आचक्राम । स तं स्वबलेन निग्रहीतुमशक्नुवन् अश्विनौ तुष्टाव । आगत्य च तस्याश्विनौ शत्रून् निगृह्य विषयं प्रत्यर्पयाञ्चक्रतुः' इति । तदेतदुक्तं मन्धातारमिति । **याभिः** च । अत्रापीतिहासमाचक्षते– 'भरद्वाज ऋषिर्धनकामोऽश्विनौ तुष्टाव । तस्य स्वरथेनानीयाश्विनौ प्रभूतं धनं ददतुः' इति उदेतत् कक्षीवान् दर्शयिष्यति– ''यदयातं दिवोदासाय' (ऋ.१,११६,१८) इति । तदेवेहाप्युच्यते । याभिश्च ऊतिभिः **विप्रम्** मेधाविनम् **भरद्वाजम्** प्रभूतधनदानार्थं प्रकर्षेण गतवन्तौ स्थः । अस्मानपि प्रति । **ताभिः** ।। १३ ।।

**वेङ्कटमाधव– याभिः सूर्यम्** परिगच्छथः दूरे । 'न्यघ्नस्य मूर्धनि' इति मन्त्रः । **मन्धातारम्** च शत्रुभ्यस्तेषुतेषु **क्षैत्रपत्येषु** सप्तद्वीपविषयेषु ररक्षथुः । **याभिः** च मेधाविनम् **भरद्वाजम् प्र आवतम्** ।। १३ ।।

**मुद्गल–** हे अश्विनौ! **परावति** दूरदेशे स्थितम् **सूर्यम्** तमोरूपेण स्वर्भानुनाऽऽवृतमादित्यं तस्मात् तमसो मोचयितुम् **याभिः** ऊतिभिः **परियाथः** युवां परितो गच्छथः । तया **मन्धातारम्** ऋषिम् **क्षैत्रपत्येषु** क्षेत्राणां पतिरधिपातिः क्षेत्रपतिः, तत्सम्बन्धिषु कर्मसु **आवतम्** अरक्षतम् । अपि च **याभिः** ऊतिभिः **विप्रम्** मेधाविनम् **भरद्वाजम्** ऋषिम् अन्नप्रदानेन **प्र आवतम्** प्रकर्षेण अरक्षतम् । **ताभिः** सर्वाभिः ।। १३ ।।

**सायण–** हे अश्विनौ! **परावति** दूरदेशे स्थितं **सूर्यं** तमोरूपेण स्वर्भानुनावृतमादित्यं तस्मात्तमसो मोचयितुं **याभिः** ऊतिभिः **परियाथः** युवां परितो गच्छथः । तथा **मन्धातारम्** ऋषिं **क्षैत्रपत्येषु** । क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः । तत्सम्बन्धिषु कर्मसु **आवतम्** अरक्षतम् । अपि च **याभिः** ऊतिभिः **विप्रं** मेधाविनं **भरद्वाजम्** ऋषिमन्नप्रदानेन **प्र आवतं** प्रकर्षेणारक्षतम् । **ताभिः** सर्वाभिः **ऊतिभिः** सह रक्षणार्थमस्मानप्यागच्छतम् ।

क्षैत्रपत्येषु । ब्राह्मणादेराकृतिगणत्वात् कर्मण्यर्थे ष्यञ् ।। १३ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **परावति** त्रैलोक्यात् परस्तात् दूरस्थाने **सूर्यम्** ऋतज्योतिःस्वरूपं **याभिः** ऊतिभिः **परियाथः** परितो गच्छथः । तथा **मन्धातारम्** मेधाविनामेदं, मनसो धातारं, एतमृषिं **क्षैत्रपत्येषु** क्षेत्राणां त्रिलोकवर्तिनां पतिः क्षेत्रपतिः तत्सम्बन्धिषु कर्मसु **आवतम्** अरक्षतम् । **याभिः** ऊतिभिः **विप्रम्** विपश्चितं **भरद्वाजम्** समृद्धिभरितं एतमृषिं **प्रावतम्** प्रकर्षेणारक्षतम् । ताभिरिति गतम् ।

क्षैत्रपत्येषु–ब्राह्मणादेराकृतिगणत्वात् कर्मण्यर्थे ष्यञ् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।**
**याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। १४ ।।**
**याभिः । महाम् । अतिथिऽग्वम् । कशःऽजुवम् । दिवःऽदासम् । शम्बरऽहत्ये । आवतम् । याभिः । पूःऽभिद्ये । त्रसदस्युम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १४ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते–'दिवोदासो नाम राजा शम्बरनाम्नाऽसुरेण युयुत्समानोऽश्विनौ स्तुत्वा सहायावाजुहाव । तस्याऽऽगत्याश्विनौ सहायौ बभूवतुः' इति । तदेतदिहोच्यते । **याभिः** ऊतिभिः **महाम्** वीर्यतः प्रभावतो वा महान्तम् । अतिथीन् प्रति परिचारकतया गच्छति इत्यतिथिग्वस्तम् **अतिथिग्वम्** । अतिथीनां परिचारकमित्यर्थः । **कशोजुवम्** कशशब्दः कशापर्यायः । 'कशा'(निघ १.११) इति वाङ्नाम । जवतिर्गत्यर्थः । स्तुतिलक्षणया वाचा युवां प्रति गन्तारम् । युवयोरेव स्तोतारमित्यर्थः । **दिवोदासम्** राजानं प्रति शम्बरनाम्नोऽसुरस्य वधे साहाय्यं कर्तुमागतवन्तौ स्थः । **याभिः** च । अत्रापीतिहासमाचक्षते- 'त्रसदस्यो राज्ञः पुरमुपरुध्य बलात् शत्रवो ग्रहीतुमारेभिरे । सोऽश्विनौ तुष्टाव । तस्याऽऽगत्याश्विनौ शत्रून् बभञ्जतुः' इति । तदेतत् सध्वंसो दर्शयिष्यति- 'याभिर्नरा त्रसदस्युम्' (ऋ ८,८,२१) इति । तदेतदिहाप्युच्यते । **याभिः** चोतिभिः **पूर्भिद्ये** पूर्नगरम्, सा भिद्यते येन यस्मिन् वा सङ्ग्रामे स पूर्भिद्यः, तस्मिन् पूर्भिद्ये । त्रसदस्युम् आवतम् त्रसदस्युं राजानं प्रति यतवन्तौ स्थः । अस्मानपि प्रति **ताभिः** ।। १४ ।।

**वेङ्कटमाधव– याभिः** महान्तम् अतिथीन् प्रति गन्तारं तान् परिचरन्तं शम्बरभयाद्ध्रदं प्रति गच्छन्तं **दिवोदासम्** शम्बरहनने ररक्षथुः । **याभिः** च पुरो भेदने **त्रसदस्युम् आवतम्** ।।

**मुद्गल–** हे अश्विनौ! **महाम्** महान्तम् **अतिथिग्वम्** अतिथिभिर्गन्तव्यम् **कशोजुवम्** असुरभीत्या उदकं प्रवेष्टुं गन्तारम् एवं भूतम् **दिवोदासम्** एतत्संज्ञकं राजर्षिम् **शम्बरहत्ये** शम्ब आयुधम्, तद्युक्तः शम्बरोऽसुरः, तस्य हनने विषयभूते सति **याभिः** ऊतिभिः **आवतम्** अरक्षतम् । अपि च **याभिः** ऊतिभिः **पूर्भिद्ये** पुराणि नगराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः सङ्ग्रामस्तस्मिन् **त्रसदस्युम्** एतत्संज्ञकमृषिं पुरुकुत्सपुत्रम् **आवतम्** अरक्षतम् । ताभिरित्यादि पूर्ववत् ।।१४।।

**सायण–** हे अश्विनौ! **महां** महान्तम् **अतिथिग्वम्** अतिथिभिर्गन्तव्यं **कशोजुवम्** असुरभीत्या उदकं प्रवेष्टुं गन्तारम् एवम्भूतं **दिवोदासम्** एतत्संज्ञकं राजर्षिं **शम्बरहत्ये** । शम्ब आयुधम् । तद्युक्तः शम्बरोऽसुरः । तस्य हनने विषयभूते सति **याभिः** ऊतिभिः **आवतम्** अरक्षतम् । अपि च **याभिः** ऊतिभिः **पूर्भिद्ये** पुराणि नगराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः सङ्ग्रामः । तस्मिन् **त्रसदस्युम्** एतत्संज्ञकम् ऋषिं पुरुकुत्सपुत्रम् **आवतम्** अरक्षतम् । ताभिरित्यादि पूर्ववत् ।

महाम् । महान्तमित्यस्य छान्दसो वर्णलोपः । कशोजुवम् । कशः इत्युदकनाम । 'कश गतिशासनयोः' । असुन् । कशांस्युदकानि जवतीति कशोजूः । जु इति सौत्रो धातुर्गत्यर्थः । 'क्विब्वचि' (उ.सू.२.२१५) इत्यादिना क्विब्दीर्घौ । दिवोदासम् । 'दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः' (का.६.३.२१.५) इति अलुक् । 'दिवोदासादीनां छन्दस्युपसङ्ख्यानम्' (पा.सू. ६.२.९१.१) इति पूर्वपदाद्युदात्तत्वम् । शम्बरहत्ये । 'हनस्त च' इति हन्तेर्भावे क्यप्; तत्संनियोगेन तकारान्तादेशश्च । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। १४ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **महाम्** महान्तं **अतिथिग्वम्** अतिथिभिर्गन्तव्यं **कशोजुवम्** कश इत्युदकनाम, कशांसि उदकानि ज्योतिर्बलादिभरितानि जवते गच्छतीति कशोजूः तं एवम्भूतं **दिवोदासम्** दिव्यकिङ्करं, एतं राजर्षिं **शम्बरहत्ये** शंबरस्यासुरस्य हनने **याभिः** ऊतिभिः **आवतम्** अरक्षतम् । **याभिः** ऊतिभिः **पूर्भिद्ये** पुराणि आसुराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः सङ्ग्रामः तस्मिन् **त्रसदस्युम्** दस्यूनां त्रासकरं ऋषिं पुरुकुत्सपुत्रमित्याहुः **आवतम्** अरक्षतम् । ताभिरिति गतम् ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।**
**याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। १५ ।।**
**याभिः । वम्रम् । विऽपिपानम् । उपऽस्तुतम् । कलिम् । याभिः । वित्तऽजानिम् । दुवस्यथः । याभिः । विःऽअश्वम् । उत । पृथिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १५ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'वम्र ऋषिर्ग्रीष्मे तपस्यन् अत्यन्ततृषितो बभूव । स उदकार्थम् अश्विनौ तुष्टाव । तस्मै आगत्याश्विनावनभ्रे नभसि वृष्टिं चक्रतुः' इति । तथापरमितिहासमाचक्षते 'कलिर्नाम ऋषिर्जरया परीतस्तरुणीं भार्यां लेभे । स तत्प्रीत्यै पुनर्यौवनमात्मन इच्छन् अश्विनौ तुष्टाव । तमागत्याश्विनौ पुनर्यौवनं चक्रतुः' इति । तदेतत् घोषा वक्ष्यति– 'युवं विप्रस्य' (ऋ.३९,८) इति । तदेतदितिहासद्वयमिहोच्यते । **याभिः** चोतिभिः **वम्रम्** ऋषिम् **विपिपानम्** 'पा पाने' । सामर्थ्याच्चान्तर्णीतसनर्थो द्रष्टव्यः । विविधं पिपासन्तम् । अत्यन्ततृषितमित्यर्थः । **उपस्तुतम्** कर्तर्ययं क्तप्रत्ययश्छान्दसत्वात् । उपस्तोतारम् । **कलिम्** च **याभिः** उतिभिः **वित्तजानिम्** वित्तशब्दो विन्दतेर्लाभार्थस्य द्रष्टव्यः । वित्ता जाया येन स वित्तजानिः लब्धभार्यकः तं वित्तजानिम् । **दुवस्यथः** 'दुवस्यति' (निघ.३,५) इति परिचरणकर्मा । वृष्टिप्रदानेन पुनर्यौवन-करणेन च परिचरितवन्तौ स्थः । **याभिः** च अत्रापीतिहासमाचक्षते– 'ऋषयः क्वचित् समेताः कोऽस्मास्वश्विनौ सम्यग्यजत इति जिज्ञासमाना ऊचुः । सर्वेऽश्विनौ स्वयज्ञेषु सहाह्वयामः । तद्यस्य न आहूतावश्विनौ स्वरूपेणागमिष्यतः स सम्यग्यजत इति । तत्राश्विनावाहूतौ कक्षीवतो व्यश्वस्य दीर्घतमसः पृथेश्च यज्ञे स्वरूपेणाजग्मतुः' इति । तदेतच्छशकर्णो वक्ष्यति यद्वा कक्षीवाँ उत (ऋ.८,९,१०) । इति । तदेवेहोच्यते । **याभिः** चोतिभिः **व्यश्वम्** ऋषिम् प्रति **उत पृथिम्** प्रति **आवतम्** गतवन्तौ स्थः । अस्मानपि प्रति । **ताभिः** ।। १५ ।।

**वेङ्कटमाधव– याभिः** वम्रर्दीस्त्रीन् ररक्षथुः । कलिर्नाम वृद्धः सन् तरुणीं जायां वित्त्वा पुनर्यौवनम् अलभत । दुवस्यतिः प्रीणनार्थः । **याभिः** च अङ्गिरसम् **व्यश्वम्** अपि च **पृथिम् आवतम्** ।। १५ ।।

**मुद्गल–** हे अश्विनौ! **वम्रम्** विखनसः पुत्रम् एतत्संज्ञम् ऋषिम् **विपिपानम्** विशेषेण पार्थिवं रसं पिबन्तम् **याभिः** ऊतिभिः अरक्षतम् । कीदृशम् । **उपस्तुतम्** समीपस्थैः सम्यक् स्तुतमिति स्तूयमानम् । **वित्तजानिम्** लब्धभार्यम् **कलिम्** एतत्संज्ञकमृषिम् **याभिः** ऊतिभिः **दुवस्यथः** रक्षथः । **उत** अपि **च** **व्यश्वम्** विगताश्वम् **पृथिम्** एतत्संज्ञं वैनं राजर्षिम् **याभिः** ऊतिभिः **आवतम्** अरक्षतम् । अन्यत् पूर्ववत् ।। १५ ।।

**सायण–** हे अश्विनौ! **वम्रं** विखनसः पुत्रमेतत्संज्ञमृषिं **विपिपानं** विशेषेण पार्थिवं रसं पिबन्तं **याभिः** ऊतिभिः अरक्षतम् । कीदृशम् । **उपस्तुतं** समीपस्थैः सम्यक् स्तुतमिति स्तूयमानम् । तथा **वित्तजानिं** लब्धभार्यं **कलिम्** एतत्संज्ञमृषिं **याभिः** ऊतिभिः **दुवस्यथः** रक्षथः । **उत** अपि च **व्यश्वं** विगताश्वं **पृथिम्** एतत्संज्ञं वैनं राजर्षिं **याभिः** ऊतिभिः **आवतम्** अरक्षतम् । अन्यत् पूर्ववत् ।

विपिपानम् । 'पा पाने' । ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । उपस्तुतम् । स्तौतेः कर्मणि निष्ठा । प्रवृद्धादित्वादुत्तरपदान्तोदात्तत्वम् (पा.सू.६.२.१४७) । वित्तजानिम् । वित्ता लब्धा जाया येन स तथोक्तः । 'जायाया निङ्' (पा.सू.५.४.१३४) इति समासान्तो निङादेशः । 'लोपो व्योर्वलि' इति वलिलोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । व्यश्वम् । विगतोऽश्वो यस्मात्स तथोक्तः । बहुव्रीहिस्वरेण पूर्वपदस्योदात्तत्वे 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् ।।१५।।

**सिद्धाञ्जनम्– याभिः** ऊतिभिः **वम्रम्** ऋषिं विखनसः पुत्रमिति प्राहुः, **विपिपानम्** विशेषेण रसं पिबन्तं अरक्षतम् । तथा **उपस्तुतम्** समीपस्थैः स्तुतं एतमृषिं, **वित्तजानिम्** वित्ता लब्धा जाया येन तं **कलिम्** कलयन्तं प्रेरयन्तं यजनायान्यानिति शेषः, एतमृषिं **याभिः** ऊतिभिः **दुवस्यथः** परिचरथः रक्षथ इत्यर्थः । **याभिः** ऊतिभिः **व्यश्वम्** विगताश्वं ऋषिं **उत** अपि च **पृथिम्** पृथुलं, एतमृषिं **आवतम्** अरक्षतम् । ताभिरिति गतम् ।

वित्तजानिम्–समासान्तो निङादेशः ।। १५ ।।

**।। इति प्रथमाष्टके सप्तमाध्याये पञ्चविंशो वर्गः ।।**

## ।। अथ षट्त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।**
**याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ।। १६ ।।**

याभिः । नरा । शयवे । याभिः । अत्रये । याभिः । पुरा । मनवे । गातुम् । ईषथुः ।
याभिः । शारीः । आजतम् । स्यूमऽरश्मये । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतम् ।। १६ ।।

**स्कन्द– याभिः नरा** मनुष्याकारौ! हे अश्विनौ! **शयवे** शयोरर्थाय । शयोर्गाम् अधेनुं निवृत्तप्रसवां वृद्धां च धेनुं कर्तुमित्यर्थः । तदेतत्पुरस्तादप्युक्तम्– 'याभिर्धेनुम्' (ऋ.१,११२,३) इति । **याभिः च अत्रये** अत्रेरर्थाय । अत्रिमसुरैरग्निकूटे प्रक्षिप्तमुद्धर्तुं बलं चासुरप्रतिबन्धसमर्थं सहान्नेनास्मै दातुमित्यर्थः । तदेतत् पुरस्तादप्युक्तम्– 'तप्तं घर्मम्' (ऋ.१,११२,७) इति । **याभिः च पुरा मनवे** अत्रेतिहासमाचक्षते– 'मनुर्नाम राजा । स महत्यामनावृष्टौ व्यतीतायाम् अन्नक्षयात् प्रजासु कर्षितुमशक्नुवतीष्वन्नक्षयेण च बाध्यमानास्वन्नकामोऽश्विनौ तुष्टाव । तस्मै आगत्याश्विनौ हलेन कर्षयित्वा यवान्नं ददतुः' इति । तदेतत् कक्षीवात् वक्ष्यति– 'युवं वृकेण' (ऋ.१,११७,२१) इति । सौभरिरपि वक्ष्यति– 'दशस्यन्ता मनवे' (ऋ.८,२२,६) इति । तदेवेहाप्युच्यते । **याभिः** ऊतिभिः **पुरा** पूर्वस्मिन् काले **मनवे** मनोरर्थाय । हलेन कर्षयित्वा मनवेऽन्नं दातुमित्यर्थः । **गातुम्** गमनम् **ईषथुः** इच्छयाऽत्र तत्पूर्वकमनुष्ठानं लक्ष्यते । गमनम् अनुष्ठितवन्तौ स्थः । अथवाऽत्र इषतिगातुशब्दयोर्द्वयोरपि गमनवचनत्वात् तस्य च तदेव प्रति करणत्वासम्भवात् सामान्यविशेषभेदेन गातेरिषतेश्च क्रियासाधनभावः समर्थयितव्यः । गोपोषं पुष्यति, ओदनपाकं पचति, उष्ट्रासिका आस्यते, हतशायिकाः शय्यन्त इति यथा । 'याभिः च शारीः' इत्यादि । अत्रापीतिहासमाचक्षते– 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् । सालावृका मर्कटा उच्यन्ते । तेषामद्यमानानां स्यूमरश्मिर्ऋषिरश्विनौ तुष्टाव । तं प्रत्यागत्याश्विनाविषुभिः सालावृकान् निरुरुधुः' इति । तदेतदुच्यते । याभिश्चोतिभिर्गत्वा **शारीः** शरमयीरिषूः **आजतम्** 'अज गतिक्षेपणयोः' । सालावृकान् प्रति क्षिप्तवन्तौ स्थः । स्यूमरश्मये स्यूमरश्मेर्ऋषेरर्थाय । अस्मानपि प्रति । **ताभिः** ।। १६ ।।

**वेङ्कटमाधव–** अधेनोः धेनूकरणार्थम् अग्निप्रशमनार्थं च शयुम् अत्रिं च प्रति गमनेच्छां चक्रतुः । **याभिः** च **पुरा मनवे** राज्ञे अनावृष्ट्या अनडुत्सु परिक्षीणेषु कर्षणविमुखे राष्ट्रे ररक्षतुः । इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् । तेषां स्यूमरश्मिरश्विनौ तुष्टाव । स वृकेभ्योऽश्विभ्यां शरमयीः इषूः वृकवधार्थं विसृज्य रक्षितः ।। १६ ।।

**मुद्गल–** हे **नरा!** नेतारावश्विनौ! **पुरा** पूर्वस्मिन् काले **शयवे** एतत्संज्ञकाय ऋषये **गातुम्,** दुःखात् निर्गमलक्षणं मार्गम् **याभिः** ऊतिभिः **ईषथुः** युवां वाञ्छितवन्तौ । कृतवन्तावित्यर्थः । किं तत् । सामर्थ्यात् 'शयवे चिन्नासत्या शचीभिः' (ऋ.१,११६,२२) इत्यस्याम् ऋचि प्रतिपादितम् । तथा **अत्रये** ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय सन्तापकारिणोऽग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गम् **याभिः** ऊतिभिः युवाम् इष्टवन्तौ । एतच्च 'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ.१,११६,८) इत्यादौ प्रसिद्धम् । तथा **मनवे** एतन्नाम्ने राजर्षये **याभिः** ऊतिभिः यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवन्तौ । अपि च **स्यूमरश्मये** स्यूमा स्यूतः सम्बद्धो रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये **याभिः** ऊतिभिः **शारीः** शरो नाम वेणुविशेषः, तद्विकारभूता इषूः **आजतम्** शत्रून् प्रति प्रेरयतम् । **ताभिः** इत्यादि समानम् ।। १६ ।।

**सायण–** हे **नरा!** नेतारावश्विनौ **पुरा** पूर्वस्मिन्काले **शयवे** एतत्संज्ञकाय ऋषये **गातुं** दुःखान्निर्गमनलक्षणं मार्गं **याभिः** ऊतिभिः **ईषथुः** युवां वाञ्छितवन्तौ कृतवन्तावित्यर्थः । किं तत् । सामर्थ्यात् 'शयवे चिन्नासत्या शचीभिः' (ऋ.सं.१.११६.२२) इत्यस्यामृचि प्रतिपादितम् । तथा **अत्रये** ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय सन्तापकारिणः अग्ने शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गं **याभिः** ऊतिभिर्युवामिष्टवन्तौ । एतच्च 'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ.सं.१.११६.८) इत्यादौ प्रसिद्धम् । तथा **मनवे** एतन्नाम्ने राजर्षये **याभिः** ऊतिभिः यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवन्तौ । तथा च मन्त्रान्तरं– 'यवं वृकेणाश्विना वपन्ता' (ऋ.सं.१.११७.२१) इति । अपि च **स्यूमरश्मये** स्यूतः सम्बद्धः रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये **याभिः** ऊतिभिः **शारीः** । शरो नाम वेणुविशेषः । तद्विकारभूता इषूः **आजतं** शत्रून्प्रति प्रेरयतम् । ताभिरूतिभिरित्यादि पूर्ववत् ।

नरा । 'नृ नये' । 'ऋदोरप्' । 'सुपां सुलुक्' इति विभक्तेः आकारः । शयवे । 'शीङ् स्वप्ने' । 'भृमृशीतृचरि' (उ.सू.१.७) इत्यादिना उप्रत्ययः । ईषथुः । 'इषु इच्छायाम्' । लिटि अथुसि 'असवर्णे' (पा.सू.६.४.७८) इति पर्युदासात् अभ्यासस्य इयङादेशाभावे सवर्णदीर्घः । शारीः । विकारार्थे शरशब्दात् 'अनुदात्तादेश्च' इति अञ् । 'टिड्ढाणञ्' इति ङीष् । स्यूमरश्मये । 'षिवु तन्तुसन्ताने' । सिवेः औणादिको मन्प्रत्ययः । 'च्छ्वोः शूठ्' इति ऊठ् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। १६ ।।

**सिद्धाञ्जनम्–** हे **नरा!** नेतारौ अश्विनौ, **पुरा** पूर्वं याभिः ऊतिभिः **शयवे** शेते दैव्यभूमौ शयुः, तस्मै ऋषये **गातुम्** शोभनं पन्थानम् **ईषथुः** वाञ्छितवन्तौ युवाम् । तथा **याभिः अत्रये** ऋषये **मनवे** मन्त्रे ऋषये च **याभिः** ईषथुर्गातुम् । **याभिः** ऊतिभिः **स्यूमरश्मये** स्यूतः सम्बद्धो रश्मिर्ज्ञानकिरणो यस्य तस्मै ऋषये **शारीः** शरैर्वेणुविशेषैर्निष्पादिता इषूः **आजतम्** असुरान् प्रति प्रैरयतम् । ताभिरिति गतम् ।

ईषथुः–इष इच्छायाम्, लिट् । शारीः–शरशब्दाद्विकारार्थे अञ्प्रत्ययः । स्यूमरश्मये–षिवु तन्तुसन्ताने, सिवेरौणादिको मन्प्रत्ययः ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।**
**याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ।। १७ ।।**
**याभिः । पठर्वा । जठरस्य । मज्मना । अग्निः । न । अदीदेत् । चितः । इद्धः । अज्मन् । आ । याभिः । शर्यातम् । अवथः । महाऽधने । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। १७ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'पठर्वा नाम ऋषिरामयावी कृशो विवर्णो बभूव । सोऽश्विनौ तुष्टाव । तमश्विनौ दीप्ताग्निम् इव बलवन्तमतितेजस्विनं चक्रतुः' इति । तदेतदिहोच्यते । **याभिः** युष्मदूतिभिः हेतुभूताभिः । **पठर्वा** नाम ऋषिः । **जठरस्य मज्मन्** तात्स्थ्याच्चात्र ताच्छब्द्यम् । 'मज्मना (निघ.२,९) इति बलनाम । जाठरस्याग्नेः प्रवृद्धयेत्यर्थः । **अग्निः न अदीदेत्** अग्निरिव अदीप्यत । कतमोऽग्निः । **चितः** चयनेन संस्कृतः । **इद्धः** आहुतिसमूहेन दीप्तः । **अज्मन्**

**आ** 'अज्मा (निघ,३,४) इति गृहनाम । आकारोऽध्यर्थे । **गृहेऽधि** गृहस्योपरि । यज्ञगृहे इत्यर्थः । याभिः च शर्यातम् अत्रापीतिहासमाचक्षते– 'शर्यातो नाम राजा सङ्ग्रामे भग्नबलो नश्यन् शत्रुभिरवगम्यमानोऽश्विनौ तुष्टाव । तस्यागत्याश्विनौ शत्रून् प्रतिबभञ्जतुः' इति । तदेतदिहोच्यते । **याभिः** च ऊतिभिर्गत्वा **शर्यातम्** नाम राजानम् **अवथः** पालितवन्तौ स्थः । **महाधने** सङ्ग्रामे । अस्मानपि प्रति **ताभिः** ।। १७ ।।

**वेङ्कटमाधव– पठर्वा** नाम सत्रजाठराग्निः पश्चात् प्रवृद्धग्नेः जठरस्य दीप्तिबलेन गृहे यजमानैः होमार्थं सज्जितः काष्ठैः **समिद्धः** इव अग्निः प्रजज्वाल । **याभिः** च **शर्यातम् अवथः** सङ्ग्रामे ।।

**मुद्गल–** हे अश्विनौ! **जठरस्य** जठरोपलक्षितस्य शरीरस्य **मज्मना** बलेन युक्तः सन् **पठर्वा** एतत्संज्ञो राजर्षिः **अज्मन्** अज्मनि सङ्ग्रामे **याभिः** युष्मदीयाभिरूतिभिः **आ** समन्तात् **अदीदेत्** अदीप्यत । दृष्टान्तः । **चितः** काष्ठैरभिचितः **इद्धः** यज्ञगृहे ऋत्विग्भिः प्रज्वालितः **अग्निः न** यथा अग्निः प्रकाशते तद्वदित्यर्थः । अपि च **शर्यातम्** मानवम् इन्द्रेण सह स्पर्धमानम् **महाधने** महता धनेनोपेते सङ्ग्रामे **याभिः** ऊतिभिः **अवथः** रक्षथः । **ताभिः** इत्यादि गतम् ।।

**सायण–** हे अश्विनौ! **जठरस्य** । 'जठरमुदरं भवति जग्धमस्मिन्ध्रियते' (निरु.४.७) इति यास्कः । जठरोपलक्षितस्य शरीरस्य मज्मना बलेन युक्तः सन् **पठर्वा** एतत्संज्ञो राजर्षिः **अज्मन्** । संग्रामनामैतत् । अज्मनि सङ्ग्रामे युष्मदीयाभिः **याभिः** ऊतिभिः **आ समन्तात्** अदीदेत् अदीप्यत । तत्र दृष्टान्तः । **चितः** काष्ठैरभिचितः **इद्धः** यज्ञगृहे ऋत्विग्भिः प्रज्वालितः **अग्निर्न** । यथा अग्निः प्रकाशते तद्वदित्यर्थः । अपि च **शर्यातं** मानवमिन्द्रेण सह स्पर्धमानं **महाधने** । सङ्ग्रामनामैतत् । महता धनेनोपेते सङ्ग्रामे **याभिः** ऊतिभिः **अवथः** रक्षथः । ताभिरित्यादि गतम् ।

अदीदेत् । दीदेतिश्छान्दसो दीप्तिकर्मा । अज्मन् । 'अज गतिक्षेपणयोः' । अजन्ति क्षिपन्त्यस्मिन्बाणानिति अधिकरणे औणादिको मनिन् । 'वलादावार्धधातुके विकल्प इष्यते' (का.२.४.५६.२) इति वचनात् वीभावाभावः । 'सुपां सुलुक्' इति सप्तम्या लुक् । महाधने । 'आन्महतः' इति आत्वम् ।। १७ ।।

**सिद्धाञ्जनम्– पठर्वा** अविदितमस्य स्वरूपं, एष ऋषिः **जठरस्य** उदरोपलक्षितस्य शरीरस्य

मज्मना बलेन, अन्तःशरीरबलेनेत्यर्थः । **चितः** काष्ठैरभिचितः **इद्धः** प्रदीपितः **अग्निर्न** अग्निरिव **अज्मन्** अज्मनि संग्रामे **अदीदेत्** अदिप्यत, तपोबलेन तेजोमयमभूच्छरीरमृषेः, तेन श्रमेण विना असुरान् युद्धे पराजितानकरोत् । एवं हे अश्विनौ, **याभिः** ऊतिभिः हेतुभूताभिः ऋषिः **आ** समन्तात् दीदेत् । अपि च **शर्यातम्** एतं मानवं **महाधने** महति सङ्ग्रामे **याभिः अवथः** रक्षथः । ताभिरिति पूर्ववत् ।

अदीदेत्–दीदेतिः छान्दसो दीप्तिकर्मा ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।**
**याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। १८ ।।**
**याभिः । अङ्गिरः । मनसा । निऽरण्यथः । अग्रम् । गच्छथः । विऽवरे । गोऽअर्णसः ।**
**याभिः । मनुम् । शूरम् । इषा । सम्ऽआवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।**
**अश्विना । आ । गतम् ।। १८ ।।**

**स्कन्द– याभिः** ऊतिभिर्गत्वा स्तोतॄन् प्रति हे **अङ्गिरः!** सोऽयमित्यभिसम्बन्धात् अङ्गिरश्शब्देन अत्राङ्गिरसम्बद्धावश्विनौ उच्येते । व्यत्ययेन च द्विवचनस्य स्थाने एकवचनम् । अङ्गिरःसम्बद्धौ । कः पुनरङ्गिरसोऽश्विनोश्च सम्बन्धः । स्तोतृस्तुत्यलक्षणः । अस्मत्पितुरङ्गिरसः स्तुत्यावित्यर्थः । **मनसा** स्वेन चित्तेन । **निरण्यथः** निशब्दोऽत्र प्रकर्षे । निरुक्तं निशुष्कमिति यथा । रण्यथ इत्यपि रमेर्वा छान्दसं णत्वम् । रणिर्वा रमेरर्थे द्रष्टव्यः । अत्यन्तं रमेथे । याभिश्च **अग्रम्** उपरिभागम् **गच्छथः** । किमर्थम् । उच्यते । **विवरे** 'निमित्तात् कर्मसंयोगे' (यावा २,३,३६) इत्येवं सप्तमी, 'चर्मणि द्वीपिनं हन्ति' इति यथा । विवरार्थम् । विवरं कर्तुमित्यर्थः । कस्य । **गोअर्णसः** गोशब्दोऽत्र गमेः क्रियाशब्दः गमनार्हवचनः । 'अर्णः' (निघ.१,१२) इत्युदकनाम । प्राभूत्यात् सस्यसम्पत्तिकरत्वाच्च गमनार्हमुदकं यस्य स गोअर्णा मेघस्तस्य । **याभिः** च गत्वा **मनुम्** राजानम् **शूरम् इषा** स्वयं हलकर्षितेनान्नेन **सम् आवतम्** अवतिरत्र गत्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । समगमयतम् । हलेन कर्षित्वा अन्नं मनवे दत्तमित्यर्थः । तदेतत् पुरस्तादप्युक्तम् । 'याभिः पुरा मनवे' (ऋ.१,११२,१६) इति । अस्मानपि **ताभिः** ।। १८ ।।

**वेङ्कटमाधव– याभिः** गमनशीलौ! स्तोतॄन् धनैः निरमेथे बुद्धिपूर्वम् । **याभिः** च असुरैः अपहृताभिः गोभिः युक्तस्य पर्वतस्य विवरे प्रवेशे युद्धार्थं गतानाम् देवानाम् अग्रम् अगच्छतम् । **याभिः** च **मनुम्** राजानम् **शूरम्** स्वयं हलकर्षितेन अन्नेन प्रावतम् ।। १८ ।।

**मुद्गल–** अङ्गिर इति आमन्त्रितं वाक्याद् बहिर्भूतम् तेन चात्मानं सम्बोध्य स्तुतौ ऋषिः प्रेरयति । हे **अङ्गिरः!** अङ्गिरसां गोत्रज! त्वम् अश्विनौ स्तुहि । हे **अश्विना!** अश्विनौ । **मनसा** मननीयेन स्तोत्रेण प्रीतौ सन्तौ युवाम् **याभिः** ऊतिभिः **निरण्यथः** स्तोतॄन् नितरां रमयथः । तथा **गोअर्णसः** गोरूपस्यारणीयस्य धनस्य पणिभिः गुहायां निहितस्य **विवरे** विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति **याभिः** ऊतिभिः सह युवाम् **अग्रम्** सर्वेभ्यो देवेभ्यः पुरस्तात् **गच्छथः** । अपि च **शूरम्** वीर्यवन्तम् **मनुम् इषा** पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन **याभिः** ऊतिभिः **सम् आयतम्** सम्यगरक्षतम् । **ताभिः** सर्वाभिः ।। १८ ।।

**सायण–** अङ्गिरः इत्येतदामन्त्रितं वाक्यात् बहिर्भूतम् । तेन चात्मानं सम्बोध्य स्तुतावृषिं प्रेरयति । हे **अङ्गिरः!** अङ्गिरसां गोत्रज त्वमश्विनौ स्तुहि । हे अश्विनौ! **मनसा** मननीयेन स्तोत्रेण प्रीतौ सन्तौ युवां **याभिः** ऊतिभिः **निरण्यथः** स्तोतॄन् नितरां रमयथः । यद्वा । मनसैव करणभूतेन रमयथः । तथा **गोअर्णसः** गोरूपस्यारणीयस्य धनस्य पणिभिर्गुहायां निहितस्य **विवरे** विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिः ऊतिभिः सह युवाम् **अग्रं** सर्वेभ्यो देवेभ्यः पुरस्तात् **गच्छथः** । अपि च **शूरं** वीर्यवन्तं **मनुम् इषा** पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन **याभिः** ऊतिभिः **समावतं** सम्यगरक्षतम् । **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानप्यागच्छतम् ।

निरण्यथः । निरमयथ इत्यस्य वर्णव्यापत्त्या एतद्रूपम् । विवरे । 'ग्रहवृदृनिश्चिगमश्च' इति भावे अप् । थाथादिना उत्तरपदान्तोदात्तत्वम् ।। १८ ।।

**सिद्धाञ्जनम्–** हे **अङ्गिरः!** ऋषेरात्मन एवामन्त्रणमिति सायणः, अश्विनोरेव सम्बोधनमित्येके, वचनव्यत्ययः साधारणश्छान्दसः । हे अश्विनौ, युवां **मनसा** मनसैव करणभूतेन निरण्यथः नितरा रमयथः स्तोतॄन् । तथा **गोअर्णसः** चिद्रश्मिलक्षणानां गवां अर्णसः ज्योतिर्बलादिलक्षणानामपां च लाभे अङ्गिरोमुख्यैर्ऋषिभिः सहायैरिन्द्रेण प्राप्ये प्रसक्ते सति, **विवरे**

बलाद्यसुरनिलयगुहाबिले **याभिः** ऊतिभिः सह **अग्रम्** पुरः **गच्छथः** । अपि च **याभिः शूरम्** पराक्रमशालिनं **मनुम्** ऋषिं **इषा** प्रेरणाशक्त्या **समावतम्** सम्यगरक्षतम् । ताभिरिति गतम् ।

निरण्यथः–वर्णव्यापत्त्या निरमयथ इत्यस्य रूपम् ।। १८ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् ।**
**याभिः सुदास ऊहथुः सुदेव्यं१ ताभिरू षु ऊतिभिरश्विना गतम् ।। १९ ।।**
याभिः । पत्नीः । विऽमदाय । निऽऊहथुः । आ । घ । वा । याभिः । अरुणीः । अशिक्षतम् । याभिः । सुऽदासे । ऊहथुः । सुऽदेव्यम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'विमद ऋषिः परिणीय महत्या विभूत्या भार्यां स्वगृहं निनीषन् अश्विनौ तुष्टाव । तस्यागत्याश्विनौ भार्यां स्वसेनापरिवृतेन रथेन निन्यतुः । गाश्चास्मै प्रभूता ददतुः' इति । तदेतत् कक्षीवान् वक्ष्यति– 'यावर्भगाय' (ऋ.११६,१) इति । घोषाऽपि वक्ष्यति– 'युवं रथेन' (ऋ.१०,२९,७) इति । तदेवेहाप्युच्यते । **याभिः** ऊतिभिर्गत्वा **पत्नीः** व्यत्ययेनेदमेकवचनस्य स्थाने बहुवचनम् । पत्नीम् । **विमदाय** विमदस्यर्षेरर्थाय **न्यूहथुः** रथेनोढवन्तौ स्थः । **आ घ वा** आ इत्येषोऽपीत्येतस्य स्थाने । घ इति पदपूरणः । वाशब्दश्चार्थे । अपि च **याभिः** ऊतिभिर्गत्वा **अरुणीः** अरुणवर्णा गाः **अशिक्षतम्** दत्तवन्तौ स्थः । कस्मै । प्रकृतत्वात् विमदायैव । याभिश्च सुदासे इत्यादि । अत्रापीतिहासमाचक्षते– 'सुदा नाम पैजवनो राजा । यस्य विश्वामित्रः पुरोहितो बभूव । स यष्टुकामः सारवत् प्रभूतं धनमश्विनौ ययाचे । तस्मै रथेनानीयाश्विनौ ददतुः' इति । तदेतत् प्रस्कण्वेनोक्तम्– 'सुदासे दस्रा' (ऋ १,४७,६) इति । तदेवेहाप्युच्यते । **याभिः** चोतिभिः **सुदासे** सुदासो राज्ञोऽर्थाय **ऊहथुः** रथेनानीतवन्तौ स्थः । **सुदेव्यम्** शोभनं देवयोग्यं च । किं तत् । 'सुदासे दस्रा' (ऋ १,४७,६) इति मन्त्रान्तरे दर्शनात् धनमन्नं च । अस्मानपि प्रति **ताभिः** ।। १९ ।।

**वेङ्कटमाधव– विमदाय** परिणीतां भार्यां **याभिः** स्वगृहं प्रत्यूहथुः । **याभिः** विमदाय **अरुणीः** गाः च **अशिक्षतम्** । **याभिः सुदासे** राज्ञे धनम् **ऊहथुः** ।। १९ ।।

**मुद्गल–** हे **अश्विना!** अश्विनौ! **विमदाय** एतन्नाम्ने ऋषये **याभिः** ऊतिभिः **पत्नीः** भार्याः पुरुमित्रस्य दुहितरम् **न्यूहथुः** नितरां युवां प्रापितवन्तौ । घ वा पूरणौ । तथा **याभिः** ऊतिभिः **अरुणीः** अरुणवर्णा आरोचमाना गाः **आ** आभिमुख्येन **अशिक्षतम्** अदत्तम् । तथा पिजवनपुत्राय **सुदासे** कल्याणदानाय राज्ञे **सुदेव्यम्** प्रशस्तं धनम् **याभिः** ऊतिभिः **ऊहथुः** प्रापितवन्तौ । **ताभिः** इत्यादि गतम् ।। १९ ।।

**सायण–** हे अश्विनौ! **विमदाय** एतन्नाम्ने ऋषये **याभिः** युष्मदीयाभिः ऊतिभिः **पत्नीः** भार्याः पुरुमित्रस्य दुहितरं **न्यूहथुः** नितरां युवां प्रापितवन्तौ । **घ** इति पादपूरणः । तथा **याभिः** ऊतिभिः **अरुणीः** अरुणवर्णाः आरोचमाना गाः **आ** आभिमुख्येन **अशिक्षतम्** अदत्तम् । तथा पिजवनपुत्राय **सुदासे** कल्याणदानाय राज्ञे **सुदेव्यं** प्रशस्तं धनं **याभिः** ऊतिभिः **ऊहथुः** प्रापितवन्तौ । ताभिरित्यादि गतम् ।

पत्नीः । अमो व्यत्ययेन शसादेशः । न्यूहथुः । 'वह प्रापणे' । अथुसि यजादित्वात् सम्प्रसारणम् । द्विर्वचनादि । सुदासे । शोभनं ददातीति सुदाः । असुन् । सुदेष्यम् । दिगादित्वाद्यत् (पा.सू.४.३.५४) । 'तित्स्वरितम्' इति स्वरितत्वम् ।। १९ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **याभिः** ऊतिभिः **विमदाय** ऋषये **पत्नीः** जायां, वचनव्यत्ययः, **न्यूहथुः वा** नितरां वा प्रापितवन्तौ युवां, **घ** पदपूरणः, तथा **याभिः** ऊतिभिः **अरुणीः** अरुणवर्णा आरोचमाना गाः चिन्मरीचीः **आ अशिक्षतम्** आभिमुख्येन अदत्तम् तथा **याभिः** ऊतिभिः **सुदासे** राजर्षये **सुदेव्यम्** प्रशस्तं धनं इति सायणः सुतरां देवार्हं धनं **ऊहथुः** प्रापितवन्तौ युवाम् । ताभिरिति गतम् ।

सुदेव्यम्–दिगादित्वाद्यत् ।। १९ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।**
**ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ।। २० ।।**
याभिः । शन्ताती इति शम्ऽताती । भवथः । ददाशुषे । भुज्युम् । याभिः । अवथः ।

**याभिः । अध्रिऽगुम् । ओम्याऽवतीम् । सुऽभराम् । ऋतऽस्तुभम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥**

**स्कन्द– याभिः** ऊतिभिर्गत्वा **शन्ताती** 'शिवशमरिष्टस्य करे' (पा.४,४,१४३) इत्येवमयं शंशब्दात् कर्तरि तातिल् प्रत्ययः । सुखकरौ युवाम् **भवथः** । **ददाशुषे** सर्वस्मै यजमानाय । **भुज्युम्** समुद्रे विपन्ननावं सखिभिश्च त्यक्तम् **याभिः** ऊतिभिर्गत्वा **अवथः** व्यत्ययेनायं भूते लट्प्रत्ययः । नौभिरश्वैः रथैश्चोत्तारणेन पालितवन्तौ स्थः । **याभिः अध्रिगुम्** । अत्रेतिहासमाचक्षते– 'नमुचौ हते सुरमणीयं मधु अश्विभ्यां सह पिबन्तमिन्द्रं प्रमत्त इति ज्ञात्वासुरा हन्तुमीषुः । तमश्विनावजानन्तमेव पालयाञ्चक्रतुः' इति । तदेतत् काक्षीवतः सुकीर्तिर्वक्ष्यति– 'युवं सुरामम्' (ऋ.१०,१३१,४) इति । तदेवेहाप्युच्यते । अध्रिगुशब्देन ह्यत्र गवे अधृतत्वादिन्द्र उच्यते । 'ऋचीषमायाध्रिगवे' (ऋ १,६१,१) इति यथा । अत्रापीतिहासमाचक्षते– 'देवाः सर्वे इन्द्रं ब्रह्माणं वव्रुः । सोऽब्रवीत्– अधृतोऽहं गव इति । अनूबन्ध्यादिगोयागवर्जमहं ब्रह्मत्वं करोमीति । गोयागे त्वहमधृतः इति । तस्माद् गवे अधृतत्वादुपपन्नम् इन्द्रस्याध्रिगुत्वम् । अधृतगमनत्वात् वा । **ओम्यावतीम्** अवतेः पालनार्थस्येदं रूपम् । फलकृतेन पालनेन तद्वतीम् । अस्मत्पालनफलामित्यर्थः । **सुभराम्** युष्मद्गुणैः सम्पूर्णाम् । **ऋतस्तुभम्** 'ऋतम्' (निघ.३,१०) इति सत्यनाम । स्तोभतिरर्चतिकर्मा (निघ.३,१४) । सत्यस्तुतिम् । इमाम् अस्मदीयां प्रति **ताभिः** ॥ २० ॥

**वेङ्कटमाधव– याभिः** शङ्करौ **भवथः** यजमानाय । **भुज्युम्** च समुद्रमध्ये विपन्ननावम् **याभिः अवथः** । **याभिः** च अधृतगमनम् इन्द्रम् । 'युवं सुरामश्विना' (ऋ.१०,१३१,४) इति मन्त्रः । पालनवर्ती धनपूर्णामिमां सत्यां स्तुतिम् **ताभिः आ गतम्** इति ॥ २० ॥

**मुद्गल–** हे **अश्विना!** अश्विनौ! **ददाशुषे** हवींषि दत्तवते यजमानाय **याभिः** ऊतिभिः **शंतती** सुखस्य कर्तारौ **भवथः** । **याभिः** च ऊतिभिः **भुज्युम्** तुग्रस्य पुत्रम् **अवथः** । **याभिः** च **अध्रिगुम्** अध्रिगुर्देवानां शमिता । अपि च **ऋतस्तुभम्** ऋतं सत्यं स्तोभति उच्चारयतीति ऋतस्तुप् । एतत्संज्ञमृषिम् । **ओम्यावतीम्** ओम्येति सुखनाम तद्युक्ताम् । **सुभराम्** सुखेन भरणीयाम् इषम् **याभिः** ऊतिभिः प्रापयथः । **ताभिः** सर्वाभिः ॥ २० ॥

**सायण–** हे अश्विनौ! **ददाशुषे** हवींषि दत्तवते यजमानाय **याभिः** ऊतिभिः **शंताती** सुखस्य कर्तारौ **भवथः** । **याभिः** च ऊतिभिः **भुज्युं** तुग्रस्य पुत्रम् **अवथः** । **याभिः** च **अध्रिगुम्** । अध्रिगुर्देवानां शमिता । 'अध्रिगुश्चापापश्च उभौ देवानां शमितारौ' (तै.ब्रा.३.६.६.४) इति श्रुतेः । अपि च **ऋतस्तुभम्** । इतं सत्यं स्तोभत्युच्चारयतीति ऋतस्तुप् । एतत्संज्ञमृषिम् **ओम्यावतीम्** । ओम्या इति सुखनाम । तद्युक्तां **सुभरां** सुखेन भरणीयाम् इषं याभिः ऊतिभिः प्रापयथः । **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानप्यागच्छतम् ।

शंताती । 'शिवशमरिष्टस्य करे' (पा.सू.४.४.१४३) इति तातिल्प्रत्ययः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । ददाशुषे । 'दाशृ दाने' । लिटः क्वसुः । 'वसोः संप्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ।। २० ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **ददाशुषे** दत्तवते यजमानाय **याभिः** ऊतिभिः **शन्ताती** शं सुखं तनुतः, सुखस्य कर्तारौ **भवथः**, **याभिः** ऊतिभिः **भुज्युम्** प्रसिद्धमेतं **अवथः** रक्षथः । **याभिः अध्रिगुम्** एतं प्रागुक्तलक्षणं अवथः । **याभिः** ऊतिभिः **ऋतस्तुभम्** ऋतं सत्यं स्तोभत्युच्चारयति ऋतस्तुप्, एतमृषिं **ओम्यावतीम्** ओम्या रक्षासुखं तद्युक्तां **सुभराम्** सुखेन भरणीयां सम्पदं प्रापयथः, ताभिरिति गतम् ।

ददाशुषे–दाशृ दाने, लिटः क्वसुः ।। २० ।।

।। इति प्रथमाष्टके सप्तमाध्याये षट्त्रिंशो वर्गः ।।

## ।। अथ सप्तत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।**
**मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ।। २१ ।।**

याभिः । कृशानुम् । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वन्तम् । आवतम् । मधु । प्रियम् । भरथः । यत् । सरट्ऽभ्यः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। २१ ।।

**स्कन्द–** अत्रेतिहासमाचक्ष्यते– 'कृशानुर्नाम सोमपालः । तं सोममपजिहीर्षन्तोऽसुरा अभिदुद्रुवुः । स तान् हन्तुमिषूंश्चिक्षेप' । तदेतद्वामदेवो दर्शयिष्यति– 'सृजद्यदस्मा अव ह' (ऋ.४,२७,३) इति । 'तस्मै इषूंश्चिक्षिप्सतेऽश्विनावमोघानिषून् ददतुः' इति । तथापरमितिहासमाचक्षते– 'शर्यातस्य राज्ञो मृगयायां महता वेगेन मृगमनुधावन्नश्वो भृगुमाप । तमश्विनौ वारयाञ्चक्रतुः' इति । तदेतदितिहासद्वयमिहोच्यते । **याभिः** ऊतिभिः गत्वा **कृशानुम्** सोमपालम् **असने** 'असु क्षेपणे' । असुरान् हन्तुमिषूणां क्षेपणकाले **दुवस्यथः** दुवस्यति परिचरणकर्मा (निघ.३,५) । परिचरितवन्तौ स्थः अमोघानामिषूणां प्रदानेन । **जवे** वेगे महति । सप्तमीश्रुतेर्वर्तमानमिति वाक्यशेषः । **याभिः यूनः** तरुणस्य शर्यातस्य राज्ञः स्वभूतम् **अर्वन्तम्** अश्वं भृगुप्रपाताद्रक्षितवन्तौ स्थः । **मधुप्रियम्** अत्रापीतिहासमाचक्षते– 'सरडा नाम मधुकर्यः मक्षिकाः । ताः कस्यांचिदनावृष्ट्यां शुष्कासु सर्वासु पुष्पजातिषु क्षुधा बाध्यमाना मध्वर्थिन्योऽश्विनावाजुहुवुः । ताभ्य उपगम्याश्विनौ मधु ददतुः । तत् ताः पपुः' इति । तदेतत् कक्षीवान् वक्ष्यति– 'उत स्या वां मधुमत्' (ऋ १,११९,९) इति । घोषापि वक्ष्यति– 'युवोर्ह मक्षा' (ऋ १०,४०,६) इति । तदेवेहाप्युच्यते । मधु प्रियमित्यादिना । **मधु प्रियम्** इष्टम् **भरथः** हरतेरिदं रूपम् । भत्वं 'हृग्रहोर्भछन्दसि' (पा.वा, ८,२,३२) । व्यत्ययेन भूते लट् । आहरतं प्रापव्रतम् । दत्तवन्तौ स्थ इत्यर्थः । **यत्** तृतीयाबहुवचनस्यात्र लुक् । **याभिः सरड्भ्यः** सरडाख्या मधुकर्यः, ताभ्यो मक्षिकाभ्यः । अस्मानपि प्रति **ताभिः** ।। २१ ।।

**वेङ्कटमाधव– याभिः** कृशानुम् नाम सोमपालमसुरैः सोममपजिहीर्षद्भिः सह युध्यन्तं क्षीणशरम् इषुप्रदानेन ररक्षथुः इषुक्षेपणकाले । मृगयाम् अटतः शार्यातस्य च राज्ञः **यूनः** । अश्वः प्रमादात् तपस्यन्तं स्थाणुभूतं भृगुं प्रति पपात । तम् अतिजवे वर्तमानम् अश्विनौ निवारयामासतुः । चिन्तितमात्रौ तौ युवां वृष्ट्यभावात् हीनेषु पुष्पेषु मधु आहृतवन्तौ यद् हितम् **सरड्भ्यः** ।। २१ ।।

**मुद्गल–** स्वानादिषु सोमपालेषु मध्ये कृशानुरेकः सोमपालः । तम् **कृशानुम् असने** इषवोऽस्यन्ते अस्मिन्निति असनः सङ्ग्रामः, तस्मिन् सङ्ग्रामे हे अश्विनौ! **याभिः** ऊतिभिः **दुवस्यथः** रक्षथः । तथा **याभिः** च **जवे** वेगे प्रवृत्तम् **यूनः** तरुणस्य पुरुकुत्सस्य **अर्वन्तम्** अश्वम् **आवतम्** रक्षतम् । अपि च **यत् मधु** क्षौद्रम् **प्रियम्** सर्वेषामनुकूलवेद्यं तत् **सरड्भ्यः** मधुमक्षिकाभ्यः याभिश्चोतिभिः **भरथः** सम्पादयथः । **ताभिः** सर्वाभिः ।। २१ ।।

**सायण–** स्वानादिषु सोमपालेषु मध्ये कृशानुरेकः सोमपालः । तथा च तैत्तिरीयकं– 'हस्त सुहस्त कृशानवेते वः सोमक्रयणाः' (तै.सं.१.२.७) इति । तं **कृशानुम् असने** । इषवोऽस्यन्तेऽस्मिन्नित्यसनः सङ्ग्रामः । तस्मिन् हे अश्विनौ! **याभिः** ऊतिभिः **दुवस्यथः** रक्षथः । तथा **याभिः** च **जवे** वेगे प्रवृत्तं **यूनः** तरुणस्य पुरुकुत्सस्य **अर्वन्तम्** अश्वम् **आवतम्** अरक्षतम् । अपि च **यत् मधु** क्षौद्रं **प्रियं** सर्वेषामनुकूलवेद्यं तत् **सरड्भ्यः** मधुमक्षिकाभ्यः याभिः च ऊतिभिः **भरथः** सम्पादयथः । **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानप्यागच्छतम् ।

असने । 'असु क्षेपणे' । 'करणाधिकरणयोश्च' इति अधिकरणे ल्युट् । सरट्भ्यः । 'सृ गतौ' । सर्तेरटिः ।। २१ ।।

**सिद्धाञ्जनम्– याभिः** ऊतिभिः **कृशानुम्** सोमपालं अग्निं **असने** इषुक्षेपणे **दुवस्यथः** परिचरथः, रक्षथः, सोमं देवेभ्यो दीयमानं देवद्वेषिलोकालभ्यं इषुप्रयोगेण पालयन्तमग्निं दुवस्यथ इत्यर्थः, इष्वसनं लाक्षणिकमेव, असुराणां दूरादेव क्षेपणमभिप्रेतम् । **याभिः** ऊतिभिः **यूनः** तरुणस्य, पुरुकुत्सस्येत्याहुः, **अर्वन्तम्** अश्वं प्राणोपलक्षणं, **जवे** वेगे प्रवृत्तं **आवतम्** अरक्षतम् । **यत् मधु** क्षौद्रं **प्रियम्** सर्वेषां भोग्यं भवति, तत् मधुरं मधु **सरड्भ्यः** मधुमक्षिकाभ्यः **भरथः** सम्पादयथः । मधुमक्षिकास्थानीयेभ्यः यजमानेभ्यो देवभक्तेभ्यः सर्वेषामुपभोगक्षमं रसं सोमं सम्पादयथ इति लाक्षणिकोऽर्थः । ताभिरिति गतम् ।

असने–असु क्षेपणे, करणे ल्युट् । सरड्भ्यः–सृ गतौ, सर्तैरटिः ।। २१ ।।

## ऋक्संहिता पदपाठसहिता

**याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।**
**याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ।। २२ ।।**
याभिः । नरम् । गोषुऽयुधम् । नृऽसह्ये । क्षेत्रस्य । साता । तनयस्य । जिन्वथः ।
याभिः । रथान् । अवथः । याभिः । अर्वतः । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतम् ।। २२ ।।

**स्कन्द– याभिः** ऊतिभिर्गत्वा **नरम्** सर्वमनुष्यं स्तोतारं यष्टारं च । **गोषुयुधम्** गोष्वपहियमाणासु तद्रक्षार्थं यो युध्यते स गोषुयुत् तं गोषुयुधम् । **नृषाह्ये** नरो यत्राभिभूयन्ते

प्रतियोद्धृभिः स नृषाह्यः सङ्ग्रामः, तस्मिन् । चोरैः सह सङ्ग्रामे । **क्षेत्रस्य** च **साता** सातौ लाभे **तनयस्य** अपत्यस्य च **जिन्वथः** 'जिन्वतिः प्रीतिकर्मा' (या.६,२२) । जयकरणेन क्षेत्रापत्यदानेन च प्रीणयथः । **याभिः** च **रथान्** स्तोतुः स्वभूतान् **अवथः** रक्षथः । **याभिः** चाश्वान् । अस्मानपि प्रति **ताभिः** ।। २२ ।।

**वेङ्कटमाधव–** **याभिः** भरद्वाजम् **नरम्** गोनिमित्तं युध्यन्तं युद्धे **क्षेत्रस्य तनयस्य** च अजतनिमित्तं युध्यन्तं **जिन्वथः** । **याभिः** च तस्य **रथान्** अश्वांश्च **अवथः** ।। २२ ।।

**मुद्गल–** हे **अश्विना**! अश्विनौ! **गोषुयुधम्** गोविषयं युद्धं कुर्वन्तम् **नरम्** यज्ञस्य नेतारं यजमानम् **याभिः** ऊतिभिः **नृषाह्ये** नृभिः सोढव्ये सङ्ग्रामे **जिन्वथः** प्रीणयथः । रक्षथ इत्यर्थः । तथा **क्षेत्रस्य** गृहादिरूपस्य **तनयस्य** धनस्य च **साता** सातये सम्भजनार्थम् **याभिः** ऊतिभिः । यजमानं रक्षथः । **याभिः** च यजमानानां **रथान्** रक्षथः । तथा **याभिः** ऊतिभिः **अर्वतः** तदीयान् अश्वांश्च **अवथः** रक्षथः । **ताभिः** सर्वाभिः ।। २२ ।।

**सायण–** हे अश्विनौ! **गोषुयुधं** गोविषयं युद्धं कुर्वन्तं **नरं** यज्ञस्य नेतारं यजमानं **याभिः** ऊतिभिः **नृषाह्ये** नृभिः सोढव्ये सङ्ग्रामे **जिन्वथः** प्रीणयथः रक्षथः इत्यर्थः । तथा **क्षेत्रस्य** गृहादिरूपस्य । तनयशब्दो धनवाची । **तनयस्य** धनस्य च **साता** सातये सम्भजनार्थं **याभिः** ऊतिभिः यजमानं रक्षथः । **याभिः** च यजमानानां **रथान्** रक्षथः । तदीयान् **अर्वतः** अश्वांश्च याभिः **अवथः** । **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानप्यागच्छतम् ।

गोषुयुधम् । 'युध संप्रहारे' । गोषु युध्यते इति गोषुयुत् । 'तत्पुरुषे कृति बहुलम्' इति अलुक् । नृषाह्ये । 'षह मर्षणे' । 'शकिसहोश्च' इति यत् । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् । साता । 'वन षण सम्भक्तौ' । भावे क्तिन् । 'जनसनखनां सञ्झलोः' इति आत्वम् । 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वं निपातितम् । 'सुपां सुलुक्' इति चतुर्थ्या डादेशः । जिन्वथः । जिविः प्रीणनार्थः । भौवादिकः । इदित्त्वात् नुम् । रथान् । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः ।। २२ ।।

**सिद्धाञ्जनम्–** **याभिः** ऊतिभिः **गोषुयुधम्** चिद्रश्मिलक्षणासु गोषु जेतव्यासु विषये युध्यत

इति गोषुयुत् तं **नरम्** नेतारं यजमानं **नृषाह्ये** नृभिः सोढव्ये युद्धे **जिन्वथः** प्रीणयथः, तथा **क्षेत्रस्य** उपभोगक्षमस्य वासगृहादेः **तनयस्य** सन्ततेः, विस्तारस्य **साता** सम्भजने जिन्वथः । अत्र चित्प्रवृत्तेराधारभूतं सर्वं भूम्यादिकं क्षेत्रं बोध्यम् । **याभिः रथान्** गमनसाधनभूतान् **अवथः** रक्षथः **याभिः अर्वतः** तदीयानश्वान् अवथः, ताभिरिति गतम् ।। २२ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।**
**याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ।। २३ ।।**

**याभिः । कुत्सम् । आर्जुनेयम् । शतक्रतू इति शतऽक्रतू । प्र । तुर्वीतिम् । प्र । च । दभीतिम् । आवतम् । याभिः । ध्वसन्तिम् । पुरुऽसन्तिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ।। २३ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'कुत्सस्तुर्वीतिर्दभीतिश्चेषुः' अपि नामाश्विनौ साक्षाद्रूपेण पश्येयमिति । तेषां परया भक्त्याऽराधितावश्विनौ दर्शनमुपजग्मतुः' इति । तदेतदिहोच्यते । पुरस्तादप्युक्तम् । 'याभिः कुत्सम्' (ऋ.१,११२,९) इति । **याभिः** ऊतिभिः पालनैः पूर्वं मामेव **कुत्सम्** प्रति । कतमम् । **आर्जुनेयम्** अर्जुनी नाम कुत्सस्य माता, तस्या अपत्यम् । हे **शतक्रतू!** बहुकर्माणौ! बहुप्रज्ञौ! वा । न च केवलं कुत्सम् । किं तर्हि । **प्र तुर्वीतिम् प्र च दभीतिम् आवतम्** प्रेत्येष उपेत्यस्य स्थाने । चशब्दश्च दभीतिमित्यस्मात् परो द्रष्टव्यः । अवतिरपि गत्यर्थः । तुर्वीतिं दभीतिं च दर्शनार्थमुपगतवन्तौ स्थः । **याभिः ध्वसन्तिम्** इत्यादि । अत्रापीतिहासमाचक्षते– 'ध्वसन्तिर्नाम वेश्या तथा पुरुषन्ति । ते उपहासकुशले इति श्रुत्वाऽश्विनौ सम्भोगार्थमुपजग्मतुः' इति । तदेतदिहोच्यते । **याभिः** च **ध्वसन्तिम्** वेश्याम् **पुरुषन्तिम्** च **आवतम्** सम्भोगार्थमुपगतवन्तौ स्थः । अस्मानपि प्रति **ताभिः ऊ सु ऊतिभिः अश्विना! आ गतम्** ।। २३ ।।

**वेङ्कटमाधव– याभिः कुत्सम्** अर्जुन्याः पुत्रं मां शतकर्माणौ **प्र आवतम्, तुर्वीतिम् दभीतिम्** च । ध्वस्रो नाम राजा ध्वसन्तिरुच्यते । तस्य भार्या पुरुषन्तिः । 'ध्वस्रयोः पुरुषन्त्योः' (ऋ.९,५८,३) इति मन्त्रः ।। २३ ।।

**मुद्गल–** हे **शतक्रतू!** बहुविधकर्माणावश्विनौ! **आर्जुनेयम्** अर्जुन इतीन्द्रस्य नाम तस्य पुत्रम् **कुत्सम् याभिः** ऊतिभिः **प्र आवतम्** प्रकर्षेण अरक्षतम् । तथा **तुर्वीतिम् दभीतिम्** च याभिरूतिभिः प्र आवतम् । अपि च **याभिः ध्वसन्तिम्** एतत्संज्ञम् **पुरुषन्तिम्** एतन्नामानं च ऋषिम् **आवतम्** अरक्षतम् । **ताभिः** सर्वाभिः ।। २३ ।।

**सायण–** हे **शतक्रतू!** बहुविधकर्माणावश्विनौ **आर्जुनेयम्** । अर्जुन इतीन्द्रस्य नाम । तथा च वाजसनेयकम्– 'एतद्वा इन्द्रस्य गुह्यं नाम यदर्जुनः' इति । तस्य पुत्रं **कुत्सं याभिः** ऊतिभिः **प्र आवतं** प्रकर्षेणारक्षतम् । तथा **तुर्वीतिं दभीतिं च** याभिः ऊतिभिः **प्र आवतम्** । अपि च **याभिः ध्वसन्तिम्** एतत्संज्ञं **पुरुषन्तिम्** एतन्नामानं च ऋषिम् **आवतम्** अरक्षतम् । **ताभिः** सर्वाभिः **ऊतिभिः** सहास्मानपि सुष्ठ्वागच्छतम् ।

आर्जुनेयम् । 'शुभ्रादिभ्यश्च' (पा.सू.४.१.१२३) इति चशब्दोऽनुक्तसमुच्चयार्थ इत्युक्तत्वात् ढक् । तुर्वीतिम् । 'तुर्वी हिंसार्थः' । शत्रूंस्तुर्वतीति तुर्वीतिः । औणादिक ईतिप्रत्ययः । दभीतिम् । 'दम्भु दम्भे' । औणादिकः कीतिप्रत्ययः । ध्वसन्तिम् । 'ध्वंसु गतौ च' । औणादिको झिङ्-प्रत्ययः । 'अनिदिताम्' इति नलोपः । 'झोऽन्तः' । पुरुषन्तिम् । पुरु सनोति ददातीति पुरुषन्तिः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'न क्तिचि दीर्घश्च' इति अनुनासिकलोपोपधादीर्घयोर्निषेदः ।।

**सिद्धाञ्जनम्–** हे **शतक्रतू!** बहुकर्माणौ अश्विनौ, **आर्जुनेयम्** अर्जुनो धवलः शुद्धसत्व-मनःप्रधान इन्द्र उच्यते तस्य पुत्र इव सम्बन्धी कुत्सः उभयोः श्रीकृष्णपाण्डवार्जुनयोरिव सख्यं प्रागुपन्यस्तम् । तं **कुत्सम् याभिः** ऊतिभिः **प्रावतम्** प्रकर्षेणारक्षतम् । तथा **तुर्वीतिम्** तुर्वति हिनस्ति शत्रूनिति तुर्वीतिः तं **दभीतिम् च** दभ्नोतेः, शत्रूणां दमयितारं च **याभिः प्रावतम्** प्रकर्षेणारक्षतम् । **ध्वसन्तिम्** गतिमन्तं (ध्वंसु गतौ च) एतं **पुरुषन्तिम्** पुरु बहु सनोति ददातीति पुरुषन्तिर्बहुदाता तं आवतम् अरक्षतम् । ताभिरिति गतम् ।। २३ ।।

## ऋक्संहिता पदपाठसहिता

**अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।**
**अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ।। २४ ।।**
**अप्नस्वतीम् । अश्विना । वाचम् । अस्मे इति । कृतम् । नः । दस्रा । वृषणा । मनीषाम् ।**
**अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजऽसातौ ।।**

**स्कन्द–** **अप्नस्वतीम्** 'अप्नः' (निघ.२,१) इति कर्मनाम । यागकर्मणा तद्वतीम् । हे अश्विनौ! **वाचम्** इमाम् **अस्मे** अस्माकं स्वभूताम् **कृतम्** कुरुतम् । न च केवलां वाचम् । किं तर्हि । **नः** अस्माकं स्वभूता हे **दस्रा!** दस्रनामानौ । अन्यतरनाम्नापि चेदं साहचर्यादुभयोरभिधानम् । क्रियाशब्दो वा । दंसेर्दर्शनार्थस्य दस्यतेर्वोपक्षयार्थस्य दस्रशब्दः । दर्शनीयावुपक्षपयितारौ वा शत्रूणाम् । **वृषणा!** वर्षितारौ । **मनीषाम्** प्रज्ञामपि । चित्तमप्यस्माकं यागपरं कुरुतमित्यर्थः । कथं पुनरिदम् उभयं भवति । उच्यते । यद्यश्विनावागच्छतः । आगतयोर्हि तयोर्यागः क्रियते । तेन क्रियमाणेन कर्मवत्यौ वाक्प्रज्ञे भवतः । अथवा वाक्प्रज्ञाकरणेन तद्धेतुभूतमागमनमेव प्रतिपाद्यते । यागार्थमागच्छतमित्यर्थः । कस्मात् । उच्यते । यस्मात् **अद्यूत्ये** **अवसे** दीव्यतिर्विजिगीषार्थः । **देवनं** द्यूतम्, विजिगीषा यस्मिन् नास्ति तदद्यूतम् अविजिगीषम् । अद्यूतमेवा अद्यूत्यम् । स्वार्थिको यत्प्रत्ययः, छान्दसत्वात् चतुर्थ्यर्थे च । अवस्तर्पणम् । यद्युवयोरेव योग्यत्वादन्यया देवतया विजिगीषितुमशक्यं सोमतर्पणं तदर्थम् **नि ह्वये** नियमेन आह्वये **वाम्** युवाम् । किञ्च **वृधे** वर्धनाय च सर्वदा **नः** अस्माकम् **भवतम्** **वाजसातौ** सङ्ग्रामे ।।

**वेङ्कटमाधव–** कर्मवतीम् अश्विनौ! **वाचम्** अस्माकं कुरुतं दर्शनीयौ! वर्षितरौ! प्रज्ञया । **नः** इति पूरणम् । **अद्यूत्ये** बलाभावाद् युद्धवर्जिते सङ्ग्रामे रक्षणाय **वाम् नि ह्वये** । तथा सति अस्मिन् सङ्ग्रामे वर्धनाय च **भवतम्** । **अप्नस्वतीम्** वाचं च कुरुतमिति ।। २४ ।।

**मुद्गल–** हे अश्विनौ! **अस्मे** अस्माकम् **वाचम् अप्नस्वतीम्** 'अप्नः' (निघ.२,१) इति कर्मनाम । विहितैः कर्मभिः संयुक्ताम् **कृतम्** कुरुतम् । तथा **नः** अस्माकम् **मनीषाम्** बुद्धिं हे **वृषणा!** कामानां वर्षकौ! **दस्रा!** शत्रूणाम् उपक्षपयितारौ! अश्विनौ! वेदार्थज्ञानसमर्थां कुरुतम् । अपि च यस्मात् युवाम् एवंगुणविशिष्टौ तस्मात् **वाम्** युवाम् **अवसे** रक्षणाय **नि ह्वये** नितराम् आह्वय । कदा । **अद्यूत्ये** द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे । तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते । आहूतौ च युवाम् **वाजसातौ** वाजस्यान्नस्य सम्भजने **नः** अस्माकम् **वृधे** वर्धनाय **भवतम्** ।। २४ ।।

**सायण–** हे **अश्विनौ! अस्मे** अस्माकं **वाचम् अप्नस्वतीम्** । अप्न इति कर्मनाम । विहितैः कर्मभिः संयुक्तां **कृतं** कुरुतम् । तथा **नः** अस्माकं **मनीषां** बुद्धिं हे **वृषणा!** कामानां वर्षकौ **दस्रा** शत्रूणामुपक्षपयितारावश्विनौ वेदार्थमानसमर्था कुरुतम् । अपि च यस्मात्

युवामेवंगुणविशिष्टौ तस्मात् **वां** युवाम् **अवसे** रक्षणाय **नि ह्वये** नितरामाह्वये । कदा । **अद्यूत्ये** द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे । तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते । आहूतौ **च** युवां **वाजसातौ** वाजस्यान्नस्य सम्भजने । यद्वा । सङ्ग्रामनामैतत् । सङ्ग्रामे **नः** अस्माकं **वृधे** वर्धनाय **भवतम्** ।

अप्नस्वतीम् । 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' इति असुन् नुडागमश्च । 'तदस्यास्ति' इति मतुप् । 'मादुपधायाः' इति मतुपो वत्वम् । 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । अस्मे । 'सुपां सुलुक्' इति षष्ठ्याः शेआदेशः । कृतम् । करोतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । अद्यूत्ये । 'द्युत दीप्तौ' । 'ऋहलोर्ण्यत्' इति भावे ण्यत् । वर्णव्यापत्त्या ऊकारः । द्यूत्यं प्रकाशनमस्मिन्नास्तीति बहुव्रीहौ व्यत्ययेनान्तस्वरितत्वम् । नि ह्वये । 'निसमुपविभ्यो ह्वः' इति आत्मनेपदम् । वृधे । 'वृधु वृद्धौ' । सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।। २४ ।।

**सिद्धाञ्जनम्–** हे **अश्विना!** अश्विनौ, **अस्मे** अस्माकं **वाचम् अप्नस्वतीम्** अप्नः कर्मनाम, कर्मयुक्तां, वीर्यवतीमित्यर्थः **कृतम्** कुरुतम् । तथा **नः** अस्माकं **मनीषाम्** बुद्धिं ''अप्नस्वतीं कृतम्'' । हे **दस्रा!** दस्रौ शत्रूणामुपक्षपयितारौ, **वृषणा** वर्षितारावभीष्टानां, **अद्यूत्ये** द्यूतरहिते साधुवृत्ते कर्मणि **अवसे** रक्षणाय **वाम्** युवां **नि ह्वये** नितरामाह्वयामि । **वाजसातौ** वाजस्य समृद्धेः सातौ लाभे निमित्ते **नः** अस्माकं **वृधे च** वर्धनाय च भवतम् । अत्र ''अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे'' इति सायणः ।। २४ ।।

## ऋक्संहिता पदपाठसहिता

**द्युभि॑र॒क्तुभिः॒ परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ।। २५ ।।**
द्युऽभिः॑ । अ॒क्तुऽभिः॑ । परि॑ । पा॒त॒म् । अ॒स्मान् । अरि॑ष्टेभिः । अ॒श्वि॒ना॒ । सौभ॑गेभिः ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ।।

**स्कन्द–** 'द्युः' (निघ.१,९) इति अह्नो नामधेयम् । अक्तुः इति रात्रेः (निघ.१,७) । सप्तम्यर्थे च तृतीया । अहस्सु रात्रिषु च । **परि पातम्** पालयतम् **अस्मान्** । किञ्च **अरिष्टेभिः**

अहिंसितैः हे अश्विनौ! **सौभगेभिः** 'भगः' (निघ.२,१०) इति धननाम । शोभनानि धनानि सुभगानि सुभगान्येव सौभगानि तैः सौभगेभिः । तृतीयाश्रुतेः साकाङ्क्षत्वात् संयाजयतमिति वाक्यशेषः । अहिंसितानि च शोभनानि च धनान्यस्मभ्यं दत्तमित्यर्थः । **तत् नः मित्रः** इत्याद्युक्तार्थम् (ऋ.१,९४,१६ द्र.) ।। २५ ।।

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ।।

**।। इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये सप्तमोऽध्यायः ।।**

**वेङ्कटमाधव–** अहोरत्रैः अस्मान् परिरक्षतम् । अपि वा अहोरात्रेभ्यः अनुपहिंसितैः भवदीयैः कल्याणैः । इतिहासा विस्पष्टा भविष्यन्ति । 'नासत्याभ्याम्' (ऋ.१,११६,१-२५) इत्यादिषु । बहुज्ञैः सूक्तं निरूपणीयमिति ।। २५ ।।

इत्थं सप्तममध्यायं व्याकरोत् प्रथमेऽष्टके ।
यो जातो गोपनकुले माधवो वेङ्कटात्मजः ।।

**।। इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने प्रथमाष्टके सप्तमोऽध्यायः ।।**

**मुद्गल–** हे **अश्विना!** अश्विनौ! **द्युभिः** दिवसैः **अक्तुभिः** रात्रिभिश्च **अस्मान्** स्तोतॄन् **परि पातम्** परितो रक्षतम् । सर्वदा अस्मान् रक्षतमित्यर्थः । तथा **अरिष्टेभिः** अहिंसितैः **सौभगेभिः** सुभगत्वैः सुभगत्वापादकैर्धनैरस्मान् रक्षतम् । यदस्माभिः प्रार्थितम् **नः** अस्मदीयम् **तत्** मित्रादयः षड्देवताः **ममहन्ताम्** पूजयन्ताम् । उतशब्दः समुच्चये ।। २५ ।।

**सायण–** हे अश्विनौ! **द्युभिः** दिवसैः **अक्तुभिः** रात्रिभिश्च **अस्मान्** स्तोतॄन् **परि पातं** परितो रक्षतं सर्वदास्मान् रक्षतमित्यर्थः । तथा **अरिष्टेभिः** अहिंसितैः **सौभगेभिः** सुभगत्वैः सुभगवापादकैर्धनैः अस्मान् **रक्षतम्** । यदस्माभिः प्रार्थितं नः अरमदीये तत् मित्रादयः षड्देवताः **ममहन्तां** पूजयन्तु । उतशब्दः समुच्चये ।

द्युभिः । 'दिव उत्' इति उत्वम् । 'दिवो झल्' (पा.सू.६.१.१८३) इति 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य प्रतिषेधः । अरिष्टेभिः । 'रिप हिंसायाम्' । 'निष्ठा' इति क्तः ।

नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'बहुलं छन्दसि' इति भिसः ऐसभावः । अश्विना । 'सुपां सुलुक्' इति विभक्तेः आकारः । 'आमन्त्रितस्य च' इति सर्वानुदात्तत्वम् । सौभगेभिः । शोभनो भगः श्रीर्यस्यासौ सुभगः । तस्य भावः सौभगम् । 'सुभगान्मन्त्रे' इत्युद्गात्रादिषु पाठात् अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति उभयपदवृद्धिर्न भवति, तस्य 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विकल्पितत्वात् । पूर्ववत् ऐसभावः । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् ।। २५ ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।<br>पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

**।। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके सप्तमोऽध्यायः समाप्तः ।।**

**सिद्धाञ्जनम्**– हे **अश्विना**! अश्विनौ, **द्युभिः** दिवसैः **अक्तुभिः** रात्रिभिश्च सर्वदा **अस्मान् परिपातम्** परितो रक्षतम् । तथा **अरिष्टेभिः** अहिंसितैः अक्षपितैः **सौभगेभिः** सुभगत्वैः सौभाग्यैः अस्मान् रक्षतम् । यदस्माभिः प्रार्थितं **तत्** मित्रादयः षट् देवताः **ममहन्ताम्** पूजयन्तु ।। २५ ।।

**।। इति प्रथमस्य सप्तमे सप्तत्रिंशो वर्गः ।।**

**।। इति ऋग्वेदे सभाष्ये प्रथमाष्टके सप्तमोऽध्यायः ।।**

'यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् ।

॥ ಶ್ರೀವೇಂಕಟೇಶಾಯ ನಮಃ ॥

# ಶ್ರೀವೇಂಕಟೇಶ ಮಾಹಾತ್ಮ್ಯೆ

## ೧ನೆಯ ಅಧ್ಯಾಯ

ಶ್ರಿಯಃ ಕಾಂತಾಯ ಕಲ್ಯಾಣನಿಧಯೇ ನಿಧಯೇಽರ್ಥಿನಾಂ
ಶ್ರೀವೇಂಕಟನಿವಾಸಾಯ ಶ್ರೀನಿವಾಸಾಯ ಮಂಗಲಂ ॥

ಬ್ರಹ್ಮರುದ್ರಾದಿಯರಿಂದ ಪೂಜಿತನೂ ವೇಂಕಟಾಚಲಪತಿಯೂ ಆದ ನಿನ್ನನ್ನು, ಹೇ ರಮಾರಮಣನೇ, ಶ್ರೀ ಶ್ರೀನಿವಾಸನೇ, ನಾನು ಸೇವಿಸುತ್ತೇನೆ; ನನ್ನ ಇಹಪರಗಳಲ್ಲಿಯ ಕಷ್ಟಗಳನ್ನು ಕಳೆದು ಇಷ್ಟವೆಲ್ಲವನ್ನೂ ನನಗೆ ದಯಪಾಲಿಸು.

ಶೌನಕಾದಿ ಮುನಿಗಳು ಸೂತಪುರಾಣಿಕರನ್ನು ಕುರಿತು ಮಾತನಾಡುತ್ತಾರೆ :— 'ಹೇ ಸೂತರೆ, ನಾವು ತಮ್ಮಿಂದ ಒಡ್ಡಿ ಕ್ಷೇತ್ರದ ಶ್ರೀರಂಗನಾಥನ, ಕಾಳಹಸ್ತಿಪತಿಯಾದ ರುದ್ರದೇವರ, ಜಗನ್ನಾಥಸ್ವಾಮಿಯಾದ ಶ್ರೀವಿಷ್ಣುವಿನ ಅಸದೃಶವಾದ ಮಹಿಮೆಯನ್ನು ಕೇಳಿದೆವು. ಈಗ, ಇನ್ನು, ವೇಂಕಟಗಿರೀಶನಾದ ಶ್ರೀ ಶ್ರೀನಿವಾಸನ ಮಹಿಮೆಯನ್ನು ಕೇಳಬಯಸುವೆವು.' ಹೀಗೆಂದೊಡನೆಯೆ ಸೂತರು :— 'ಬ್ರಾಹ್ಮಣವರ್ಯರೇ, ನೀವು ವೇಂಕಟಾಚಲಪತಿಯ ಚರಿತೆಯನ್ನು ಕೇಳಬಯಸಿದುದು ಸಂತೋಷಕರವು. ಈ ಚರಿತೆಯನ್ನು ನಾನು ಈ ಮುಂಚೆ ಪರಮತೇಜಸ್ವಿಗಳಾದ ಶ್ರೀಬಾದರಾಯಣಮುನಿಗಳಿಂದ ಕೇಳಿ ತಿಳಿದಿದ್ದೇನೆ. ಅದನ್ನೇ ಧ್ಯಾನಕ್ಕೆ ತಂದು ನಾನು ನಿಮಗೆ ವಿವರಿಸಿ ಹೇಳುವೆನು; ಚಿತ್ತಗೊಟ್ಟು ಕೇಳಿರಿ.'

ಸೂತರು ಅನ್ನುತ್ತಾರೆ — ಪೂರ್ವದಲ್ಲಿ ಪರಮಧಾರ್ಮಿಕನಾದ ಜನಕನೆಂಬ ಅರಸನಿದ್ದನು. ಅಹಂಕಾರ ಮಮಕಾರಗಳಿಲ್ಲದೆ, ಸದಾ ತೃಪ್ತನಾಗಿದ್ದು, ಶ್ರೀವಿಷ್ಣುಸರ್ವೋತ್ತಮಜ್ಞಾನವುಳ್ಳವನಾಗಿ, ಶ್ರೀವಾಸುದೇವನ ಅನುಗ್ರಹಕ್ಕೆ ಆತನು ಮುಖ್ಯ ಪಾತ್ರನಾಗಿದ್ದನು. ಆತನಿಗೆ ಶ್ರೀಹರಿಭಕ್ತನಾದ ಕುಶಧ್ವಜನೆಂಬ ತಮ್ಮನಿದ್ದನು. ಅಣ್ಣನ ಅಪ್ಪಣೆಯಂತೆ ಈತನು ರಾಜ್ಯಕಾರಭಾರದಲ್ಲಿ ದಕ್ಷನಾಗಿದ್ದನು. ಜನಕರಾಜನಿಗೆ ಜಾನಕಿ